# अष्टाङ्गहृदयम्।

( सूत्र-शारीर-निदान-चिकित्सा-कल्प-उत्तरस्थानात्मकम् )

महामतिश्रीमद्वाग्भटविरचितम्।

श्रीमदरुणदत्तकृतया सर्व्वाङ्गसुन्दराख्यया
टीकया च समेतम्।

चरक-संहिता-सुश्रुत-संहिता-भावप्रकाश-चक्रदत्तादि-
ग्रन्थ सम्पादकानुवादकेनायुर्व्वेद-संग्रहायुर्व्वेद-
प्रदीपद्रव्यगुणादिग्रन्थकारेण

श्रीदेवेन्द्रनाथ सेन गुप्त कविराजेन
श्रीउपेन्द्रनाथ सेन गुप्त कविराजेन च

संशोधितमनूदितं प्रकाशितञ्च।

कलिकाताराजधान्यां,
सप्ततिसंख्यककलूटोलाष्ट्रीट्भवनस्थ-धन्वन्तरि-ष्टीम-मेसिनयन्त्र
श्रीदीननाथ देवेन मुद्रितम्।

शाकः १८३२।

मूल्यं षण्मुद्राः।

# भूमिका।

इह खलु विघ्नबहुले जगति शुभकार्य्याणि सर्व्वथाशुभशत-व्याप्तानोति यत् प्रतिपदं प्रतीयते प्रारब्धकर्म्मभिः कर्म्मिभिस्तत् सर्व्वाङ्गसुन्दराख्यटीकासहितस्य अष्टाङ्गहृदय-संग्रहस्य सर्व्वाङ्ग-सुन्दरं संस्करणं चिकीर्षुभिरस्माभिर्नितरामिवानुभूतम्। चरक-संहितायाः सुश्रुतसंहितायाश्च संस्करणात् परमेवास्य सम्पादने प्रवृत्तानामस्माकं विशुद्धपुस्तकाभावेन नित्यकर्म्मबहुलतया समयाभावेन संसारिजनसुलभरोगशोकाद्यभिभूततया च बहूनि किल दिनानि व्यतीतानि। परन्तु बहुविधविघ्नैः परिभूयमाणा अपि कर्त्तव्यपथादविचलित-हृदया वयमुन्नतिकांक्षया आयु-र्व्वेदस्य पुनरप्यस्मिन् विषये प्रवर्त्तामहे।

इह खलु वेदभूमौ भारते वर्षे सर्व्वायुर्व्वेदवाङ्मयपयोधेः सारभूतं रत्नमिव अष्टाङ्गात्मकशरीरस्य प्रधान-भूतं हृदयमिवै-तदष्टाङ्ग-हृदयं नामाष्टाङ्गायुर्व्वेदस्य हृदयं विदुषां विशेषेणादरणीयम्। ग्रन्थोऽयमतीव समीचीनतया परम-प्रामाणिकतया ऐकान्तिकदोषरहिततया सर्व्वोत्कृष्टतया च सर्व्वत्र प्रचलतीति सतां सिद्धेरलमत्र तत्प्रतिपादनप्रयत्नेन।

साम्प्रतमस्मद्देशे आत्रेयसम्प्रदाय-धन्वन्तरिसम्प्रदायभेदेन द्विविधश्चिकित्सक-सम्प्रदायः वर्त्तते। तत्रात्रेयसम्प्रदाय-वर्त्तिनां कायचिकित्सा-प्रधानानि धन्वन्तरि-सम्प्रदायभूतानां शल्यतन्त्रप्रधानानि च बहूनि खलु तन्त्राणि देशेऽस्मिन् प्रचलन्ति। किन्तु मतद्वयावलम्बी कश्चिद् ग्रन्थश्चरक-सुश्रुतयोरधस्तनकाले नावर्त्तत। इममेवाभावं दूरीकर्त्तुं परम-कुशलेन सिंहगुप्तसूनुनाचार्य्यवाग्भटेन सम्प्रदायद्वयस्याति-

विप्रकीर्णेभ्यो नानातन्त्रेभ्योऽयं नातिसंक्षेपविस्तरः सारतरोच्चयः संग्रहः प्राणायि। ग्रन्थकारेणैवं परामृष्टं यत्—

"यदि चरकमधीते तद्ध्रुवं सुश्रुतादि-
प्रणिगदितगदानां नाममात्रेऽपि बाह्यः।
अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिव खलु करोतु व्याधितानां वराकः॥

वाग्भट उः तः ४० अः।

तेनैव हेतुना अत्र ग्रन्थे शारीरभेषजतत्त्वादीनि शस्त्रयन्त्रादि-विवरणानि चायुर्व्वेदस्य सर्व्वविधान्येव ज्ञातव्यानि चिकित्सिताङ्गानि सुकौशलेन समं विवृतानि। अस्य भाषा प्राञ्जला विशुद्धा च, रचनारीतिश्च सुमार्ज्जिता। सर्व्वथा दुर्लभः खलु अष्टाङ्गहृदयसदृशो ग्रन्थ आयुर्व्वेदतन्त्रे। केवलमस्यैव ग्रन्थस्य पाठेन चरकसुश्रुतसंहितयोरुभययोरपि ग्रन्थयोर्मर्म्मावगम्यते।

यदुच्यते "निदाने माधवः श्रेष्ठः सूत्रस्थाने च वाग्भटः" इति तत् सर्व्वथा सत्यमेव प्रतीयते पण्डितैः। अष्टाङ्गहृदयस्य सूत्रस्थानानुरूपं नानाविषयपूर्णं सुविन्यस्तं सूत्रस्थानं कस्यापि तन्त्रस्य नोपलभ्यते। अतो विद्यार्थिभिरवश्यमेव पाठ्यमेतत्।

केचित्तु तं कलियुगस्य प्रधानऋषिं मन्यमाना आहुः—अत्रिः कृतयुगे चैव द्वापरे सुश्रुतो मतः। कलौ वाग्भटनामा चेत्यादि। एतेनास्यातीव प्रामाण्यमङ्गीकृतम्। एवं किल किंवदन्ती कथयति यदयं वाग्भटः सिन्धुदेशवासी ब्राह्मणः वैदिकाचारपरायण आसीत्, पश्चात् कमपि बौद्धाचार्य्यं गुरुत्वेनाङ्गीकृत्य बौद्धधर्म्मं जग्राह। काश्मीरराजतरङ्गिणीमतेनायं काश्मीरपतिजयसिंहस्य सामसमयिकः। तत्तु अष्टशतवर्षमतीतम्। इत्यलं परचर्च्चया। वाग्भटः स्वनाम्नाऽलङ्कारादि-नानाशास्त्रं प्रणीतवान्। परन्तु अष्टाङ्गहृदयेनैकेनैव तस्य

प्रतिष्ठा जगति समजनि। भाग्यवशेनैव ईदृशस्य ग्रन्थरत्नस्य अरुणदत्तनामा मृगाङ्कदत्तपुत्रः टीकाकारः सञ्जातः। अयन्तु मणिकाञ्चनसंयोग इव सदैव स्पृहणीयः सताम्। आयुर्व्वेद-पारदर्शी निपुणः सुधीररुणदत्तस्तु सर्व्वाङ्गसुन्दराख्यया टीकया ग्रन्थरत्नमेनमुज्ज्वलीकृत्य लोकलोचनानामतीव लोभनीयत्व-मलभत।

एतादृशग्रन्थस्याप्रकाशनेऽस्माकमायुर्व्वेदोन्नतिव्रतमसम्पूर्ण-मेव स्यादिति मनसि कृत्वा वयं कायिकेन मानसिकेन आर्थिकेन च बहुपरिश्रमेणैनं विशोध्य सर्व्वाङ्गसुन्दराख्यया टीकया वङ्गभाषानुवादेन च सह मुद्रयित्वा प्रकाशयामः। ग्रन्थस्यास्य प्रचलितसंस्करणे यत् दूषणं परिलक्ष्यते तदत्र नास्ति। आशास्महे यथास्माकं सर्व्वे एव ग्रन्थाः सुधीजनानां चित्ततोषमुत्पादयन्ति तथाऽयमपि सर्व्वेषां हृदयग्राही भविष्यतीति।

उपसंहारसमये वक्तव्यमस्याष्टाङ्गहृदयस्य संस्करणे विशोधने च अस्मदायुर्व्वेदविद्यालयाध्यापकेन आयुर्व्वेदविशारदेन काव्य-तीर्थोपाधिकभक्तिभाजनश्रीचन्द्रशेखरशर्म्मकविरत्नेन असाधारणो यत्नः श्रमश्च कृतः, अतो वयं तत्समीपे चिरकृतज्ञतापाशेन बद्धाः स्मः। सुहृद्वरचिकित्सकश्रीकार्त्तिकचन्द्र-गुप्त-कविभूषणेन तथा विद्यालयस्यास्य कृतविद्यच्छात्रेण कविराज-श्रीश्यामनोरद-सेनगुप्त-वैद्यरत्नेनात्र महान् श्रमः कृतः, अतस्तयोरपि समीपे चिरकृतज्ञाः स्मः। इति

शकः १८३२।
भाद्र
आयुर्व्वेदविद्यालयः।

श्रीदेवेन्द्रनाथ सेन कविराजः।
श्रीउपेन्द्रनाथ सेन कविराजः।

# अष्टांगहृदयस्य सूचीपत्रम् ।

## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

## षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः।

## अष्टमोऽध्यायः।

## एकादशोऽध्यायः ।

## पञ्चदशोऽध्यायः।



## षोड़शोऽध्यायः।

## सप्तदशोऽध्यायः।



## अष्टादशोऽध्यायः।

## सप्तविंशतितमोऽध्यायः।

## अष्टाविंशोऽध्यायः ।

इति सूत्रस्थानम्।

# शारीरस्थानम्।

## प्रथमोऽध्यायः।

## द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः।

# सूचीपत्रम् ।



## चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः।

## षष्ठोऽध्यायः।

# निदानस्थानम्।

## प्रथमोऽध्यायः।



## द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः ।

## षष्ठोऽध्यायः ।



## सप्तमोऽध्यायः ।

## पञ्चदशोऽध्यायः।

## षोड़शोऽध्यायः ।

# चिकित्सास्थानम् ।

## प्रथमोऽध्यायः ।

## द्वितीयोऽध्याय:।



## तृतीयोऽध्याय:।

## सप्तमोऽध्यायः।



## अष्टमोऽध्यायः।

## नवमोऽध्यायः।

# कल्पस्थानम् ।

## प्रथमोऽध्यायः ।

## पञ्चमोऽध्यायः ।



## षष्ठोऽध्यायः ।

# उत्तरस्थानम् ।

## प्रथमोऽध्यायः ।



## द्वितीयोऽध्यायः ।

## एकादशोऽध्यायः।



## द्वादशोऽध्यायः।

## त्रयोदशोऽध्यायः।

## द्वाविंशोऽध्यायः।

२॥/०



## त्रयोविंशोऽध्यायः ।



## चतुर्विंशोऽध्यायः ।

## एकोनत्रिंशोऽध्यायः ।



## त्रिंशोऽध्यायः ।



## एकत्रिंशोऽध्यायः ।

## द्वात्रिंशोऽध्यायः।



## त्रयस्त्रिंशोऽध्यायः।

## सप्तत्रिंशोऽध्याय: ।

---

## अष्टत्रिंशोऽध्यायः ।

सूचीपत्रं समाप्तम्।

श्रीगणेशाय नमः ।

# अष्टाङ्गहृदयम् ।

## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

रागादिरोगान् सततानुषक्तानशेषकायप्रसृतानशेषान् ।
औत्सुक्यमोहारतिदान् जघान योऽपूर्व्ववैद्याय नमोऽस्तु तस्मै ॥१॥

---

दीप्तप्रा यस्येन्द्रनीलोपलशकलरुजोनीलया नीलिताभा
लक्ष्मीमुत्तप्तभास्वत्कनकरुचिमपि स्वर्शरीमाचिताङ्गीम् ।
कालीत्याशङ्कमानः स्फुरदधरपुटश्चक्रपाणिः किलाभूद
भर्ता लोकस्य शश्वत् स भवतु भवतां भूतये पद्मनाभः ॥
को मत्सरिणि लोकेऽस्मिन्विद्वान् किञ्चिच्चिकीर्षति ।
किन्तु कश्चिन्नवेत्साधुस्ततोऽयं मत्परिश्रमः ॥
श्रीमन्मृगाङ्कतनयष्टीकामष्टाङ्गहृदयस्य ।
श्रीमानरुणः कुरुते सम्यग् द्रष्टुः पदार्थबोधाय ।

इह हि शास्त्रारम्भे शास्त्रपरिसमाप्तये सर्व एव सभाभूषणभूता निखिलजनजनित-प्रमोदसन्दोहा रुचिररुचिरचितवचनचन्दनचर्चितप्रबन्धाः प्रबन्धविरचनप्रवरा इष्टदेवता नमस्कारं तन्त्रकारा विदधुः । तदयमपि तन्त्रकारोऽभीष्टदेवतानमस्कारपुरःसरं तन्त्र-मारिरिप्सुरिदमाह ।—रागादीति । राग आदिर्येषां ते रागादयः । आदिशब्देन द्वेषलोभादिपरिग्रहः । रुजन्तीति रोगा देहमनसी सन्तापयन्तीत्यर्थः । ननु मनःस्थित-त्वान्मन एव ते रुजन्तीति वक्तुं युक्तम् ? नैवम् । देहमनोलक्षणयोर्वस्तुनोराधाराधेय-

अथात आयुष्कामीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ २ ॥

भावेन स्थितत्वाद्द्वयोरपि सन्तापो युक्तः । यथा ;—आधेयेनायोगोलकेन सन्तप्तेन तदाधारस्य कटाहादेः सन्तापः । आधारेण च कटाहादिना सन्तप्तेन आधेयस्य घृतादेः सन्तापः । तद्वेवं रागादयो द्वयं रुजन्तीति न्याय्यमेतत् । तथा सततानुषक्ताः सर्वकालं प्रसृताः सहजा इत्यर्थः । अशेषकायप्रसृता अशेषश्चासौ कायश्चाशेषकायः ; तत्र प्रसृता अनुगताः । यद्वा अशेषाश्च ते कायाश्चाशेषकायाः, सर्वाणि शरीराणि मनतुरगोरगादिसम्बन्धीनि तानि प्रकर्षेण सृता गताः । तथा अशेषाः, न विद्यते शेषो येषां तेऽशेषाः ; सर्वे समूलाः सबीजा इत्यर्थः । तथा औत्सुक्यमोहारतिदाः, औत्सुक्यं विषयोत्कण्ठागतोऽभिलाषः ; मोहः कार्यानभिज्ञत्वम् ; अरतिरनवस्थितिः स्थानासनादिषु ; औत्सुक्यं च मोहश्चारतिश्च ता ददति ये रागादयस्त एवम् । तानेवंविधान् यो भगवान् जघान तस्मै तथाभूतायापूर्ववैद्याय नमोऽस्तु, तं पूजयामीत्यर्थः । अतएवासावपूर्वं आश्चर्यभूतो वैद्यः ; अन्यो हि यो वैद्यः स ज्वरादीनप्यचिरोत्थितान् रोगानेतद्विशेषणैरपरामृष्टान् न तथा हर्तुं समर्थः ; किमुत रागादीनसाध्यलक्षणलक्षितान् । तथाचासाध्यलक्षणम् ;—'अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये । औत्सुक्यमोहारतिकृत्'—इति । यद्वा न विद्यते पूर्वो यस्मादसावपूर्वः पूर्वेभ्यः प्रथम इत्यर्थः । अपूर्वश्चासौ वैद्योऽपूर्ववैद्य इत्यर्थः । एवंविधं चाभिमतनमस्कारश्लोकं विरचयन् ग्रन्थकृद् ग्रन्थस्य रोगोपशान्तिः प्रयोजनमिति प्रतिपादयति । यथा चाह चरकमुनिः—"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्"—इति । एवञ्च धातुसाम्याख्येन प्रयोजनेन प्रयोजनवदिदं तन्त्रम् । तथा तत्पाठात्तदर्थावबोधात्तदुक्तविध्यनुष्ठानाच्च आरोग्याख्यस्योपेयस्य तथाभिमतस्यायुषः परस्य पुरुषार्थस्य मोक्षाख्यस्य च परमार्थत इदमेव तन्त्रमुपायः । अस्माच्चोपायोपेयलक्षणसम्बन्धात् सम्बन्धवच्च ; हेतुलिङ्गौषध्याख्यस्कन्धत्रयमस्याभिधेयं तेनाभिधेयेनाभिधेयवत्तन्त्रम् । एवञ्च ग्रन्थकृताथ प्रयोजनसम्बन्धाभिधेया युक्त्यैवोक्ताः । इन्द्रवज्रोपेन्द्रवज्राविरचितत्वादुपजातिवृत्तम् । "अनन्तरापादितलक्ष्मशोभौ पादौ भवेतां विविधैर्विकल्पैः । यासामिमावन्यतिप्रपञ्चौ स्मृताः स्मृतिज्ञै रुपजातयस्ताः ॥" सर्वत्रैव चात्र तन्त्रे अनुष्टुभा जातिः समानी प्रमाणी वितानादिभेदभिन्नतया विरचनम् ; यत् पुनरवसरान्तरे वृत्तान्तरविरचनमिह तत्सलक्षणं व्यञ्जयिष्यामः ॥ १ ॥

इदानीमिष्टदेवतां नमस्कृत्य शास्त्रकारस्तन्त्रमारिरिप्सुरिदमाह।—अथात इत्यादि । अथशब्दोऽस्मिन्मङ्गलाधिकारानन्तर्येषु द्रष्टव्यः । मङ्गलादीनां हि शास्त्राणां तदध्येतृणां निष्प्रतिबन्धा प्रवृत्तिरभिप्रेतार्थसाधनाय जायते । अथशब्दश्चायं मङ्गलार्थः । तथा चोक्तम् —"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । (१) कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ"—इति । अतोऽधिकारे । आयुष्कामीयं शास्त्रमधिक्रियते यावदतऊर्ध्वं प्रत-

(१) गर्भं भित्वा विनिर्यातौ तेनेमौ मङ्गलौ स्मृताविति वा पाठः ।

अत आतन्त्रपरिसमाप्तेस्तत्सर्वमायुष्कामीयं वेदितव्यम् । अत आनन्तर्य्ये च । नमस्कारादनन्तरमायुष्कामहितं व्याख्यास्याम इति । कथं पुनरेकस्यैव तन्त्रकारस्य व्याख्यास्याम इति बहुवचनं युज्यते ? ब्रूमः ।—'अस्मदो द्वयोश्च'—इत्येकत्वेऽपि बहुवचनविधानादभिवदन्ति । युक्तमेवात्रैकस्मिन्नपि बहुवचनम् । आयुः शरीरेन्द्रियसत्त्वात्मसंयोगः । यथाच मुनिः—'शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम् । नित्यगश्चानुबन्धश्च पर्य्यायैरायुरुच्यते ॥' एतीत्यायुः, सन्ततं यातीत्यर्थः । एवंविधं गत्वरस्वभावमपि हिताहारविहारसेवादिभिरहितवर्जनेन च कथमेतत् स्थिरीभवेदित्येवं कामयन्ते ये ते आयुष्कामाः । तेभ्यो हितः आयुष्कामीयः । स पुनरायुर्वेदागमादिप्रकरणसमुदाय आयुष्कामयमानेनेत्यादिकः । आयुष्कामीय इति 'ङसुसोः सामर्थ्ये'—इति षादेशः । 'तस्मै हितम्'—इति छः । आयुष्कामीयशब्दोऽध्यायविशेषणार्थो नीलोत्पलदलवत् । बहुष्वध्यायेषु सत्सु कतममध्यायं व्याख्यास्याम आयुष्कामीयमिति । अधिकृतोऽध्ययमायेत्यध्यायस्तं व्याख्यास्यामः । विविधप्रकारेण विशेषेण वा कथयिष्यामः । आयुष्कामैः पूर्वं दृष्टत्वादस्याध्यायस्यायुष्काम इति संज्ञा । अर्थगतिमविकृत्याध्याय इति नाम । तथा चोक्तम् ;—'अविकृत्येयमध्यायनामसंज्ञा प्रतिष्ठिता'—इति । तत्र पदसमुदायो वाक्यं, वाक्यसमुदायः प्रकरणं, प्रकरणसमुदायो यः सोऽध्यायः, अध्यायसमुदायः स्थानं, स्थानसमुदायस्तन्त्रमिति वि शब्दो नानार्थः । आङभिविधौ । उत्तराख्यश्चायमलङ्कारः । तस्य हि लक्षणम् ;—'उत्तरवचनश्रवणादुन्नयनं यत्र पूर्ववचनानां क्रियते तदुत्तरं स्यात्'—इत्यादि । ततोऽनेन वाक्येन शिष्यवचनमीदृशमुन्नीयते । संसारेऽस्मिन्नमी प्राणिनो नानारोगानीकाभिभूतास्त्रातारमलभमानाश्चतुर्वर्गाद (१) भ्रश्यन्ते । तत् को नु भगवन्नत्रोपायः स्यादिति कृतप्रश्नो गुरुः प्रतिजज्ञे । अथ शिष्यवचनानन्तरमतो द्वितीयं स्यादयं शिष्यः श्रुतकुलशीलादिसम्पन्नो धीमेधागुणभूषणभूतः विविधैः प्रकारैराशिष्यबोधोत्पत्तेरायुष्कामीयमध्यायं व्याख्यास्यामो वर्णयिष्यामः । ननु कीदृशं तद्विविधप्रकारमाख्यानम् ? ब्रूमः ।—पदतस्तदर्थतः प्रयोजनतश्चोद्यतः परिहारतः सम्बन्धाभिधेयतश्च । पदतो यथायुरितीदं पदम् । तदर्थतो यथेतीत्यायुः । प्रयोजनतो यथात्रैव धर्मार्थसुखसाधनम् । चोद्यतो यथा, कथमेतत्केवलं धर्मार्थसुखसाधनमिति वक्तुं पार्य्यते ? यतोऽस्यायुषः कर्मैव केवलं धर्मसाधनमिति वक्तुं नो पार्य्यते,—यतोऽस्यायुषः परिपालनार्थं विशस्ताः काकगृध्रभासादयो राजयक्ष्मचिकित्सिते भोज्या इत्युक्तम् ; अभक्ष्याश्चैते, श्रुतिस्मृत्योरभक्ष्यत्वेनोक्तत्वात् । एवमभक्ष्यभक्षणाद्धिंसया च पापयोगस्तद्योगाच्चाधर्मसाधनं न धर्मसाधनमिति । परिहारतो यथा, अत्रैवं परिहारो यज्ञाधिकारिशरीरनिमित्तं काकादीनां विशसनं भक्षणं विधीयमानं नाधर्म्माय । इतरथा क्रीड़ार्थं क्रियमाणमधर्मायैव । तथा च काकादयोऽपि तत्साधनोपयोगाद्धर्मेण तत्फलेन सम्बध्यन्ते, यज्ञिया इव पशवः, तदेवमायुषो धर्मसाधनत्वं स्थितम् । सम्बन्धाभिधेयौ तूक्तावेव । ननु सन्त्येवान्यान्यपि महर्षिप्रणीतान्यायुर्व्वेदतन्त्राणि किमनेन तन्त्रेण कृतेनेति ? अत्र ब्रूमः । अपरतन्त्राणां सावद्य-

---

(१) त्रिवर्गादिति क्वापि ।

त्वादिदमुच्यते। अन्यानि हि तन्त्राणि सदोषाणि। तथाहि।—यदेतत्तावद्भगवता चरकमुनिना प्रणीतं तन्त्रं रत्नाकर इव गाम्भीर्यातिशययोगाद् दुर्बोधम्। तस्यापि सदोषतां प्रकटयन्ति वाचाटाः। तथा ह्यादौ तत् सूत्रम्;—"अथातो दीर्घञ्जीवितीय-मध्यायं व्याख्यास्यामः" इति। अत्र दीर्घञ्जीवितीय इति शास्त्रादावयुक्तम्। यतो दीर्घञ्जीवितमन्विच्छन्नित्यस्यानुकरणं दीर्घञ्जीवितमिति। सोऽस्मिन्नध्यायेऽस्तीति छः। तस्याध्यायानुवाकयोर्लुकि सति दीर्घञ्जीवितमिति प्राप्नोति। तदिदमविदितपरमार्थ-शब्दस्वरूपाणां वचनम्। तथाहि। अध्यायानुवाकयोरित्यादौ सूत्रे विकल्पेन चायं लुगिष्यत इति जगाद जयादित्यः। तेन लुकः पाक्षिकत्वादत्र लुक् न भवतीत्येवं युक्तमुक्तमिदम्। दीर्घशब्देन गुणोऽभिधीयते, जीवितशब्देनापि गुण एव; तस्माद् द्वयोरपि गुणत्वादाधाराधेयभावो न युक्तो यतो गुणाश्रयो गुणो नोक्त इति। तथा च वशेषिकाः;—"निर्गुणा गुणाः" इति। अथ कालशब्दं लुप्तस्वरूपं निर्दिश्य दीर्घजीवितीयशब्दो निर्दिश्यते तदा युक्तमेवैतत्। इन्द्रियोपक्रमणीयेऽध्याये छ-प्रत्ययोत्पत्तिः, कथमेवं विधीयतां यतोऽस्मिन्नध्याये इन्द्रियोपक्रमणशब्दो नास्त्येव। एवमपामार्गतण्डुलीयेऽपामार्गतण्डुलशब्दस्याभावाच्छप्रत्ययोत्पत्तिर्दुर्लभा। तथा दिव्या-म्भसो गाङ्गसमुद्रभेदः परीक्षा च नोक्ता। प्रत्युत तत्र पठ्यते—'जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात्। तत्पतत्पतितञ्चैव देशकालावपेक्षते' इति। तथा नारिकेलोदकस्य गुणा नोक्ताः। तथाऽपक्वक्वथितक्षीरस्य स्वरूपविशेषो नोक्तः। तथा कषाये कियदौषधं किमवशेषं क्वाथनीयमित्यादि च नोक्तम्। मिश्रके स्नेह एवमभ्यधा-दसौ;—"त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम्। चतुर्गुणं जलं दत्त्वा" इत्यादि। तदेषामौषधानां कियन्मानमपि सलिलेनतावता कीदृशं किमुत क्वाथनिर्यासाविति। तथा क्वथितशीततोयमपि कियता पाकेन पथ्यं भवतीति नोक्तम्। मुद्गो ग्राहीति च नोक्तम्। तथाच तत्पाठः—'कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः। विशदः श्लेष्मपित्तघ्नो मुद्गः सूप्योत्तमो मतः'—इति। तथा वास्तुकादीनां लवुत्वं नोक्तम्। तथा च तत्पाठः—'पाठा सुषाशठीशाक वास्तुकं सुनिषण्णकम्। विद्याद् ग्राहि त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकम्' इति। तथेक्षुवर्गे—शैत्यात्प्रसादान्माधुर्यात्पौण्ड्रका-द्वांशिको वरः' इत्यसावभ्यधात्। पौण्ड्रकस्य वांशिकाद्वर इति सुप्रसिद्धमेतत्। अत्र मतिविभ्रमाद् भट्टारकहरिचन्द्रो व्याख्याविशेषमवोचताम्। तथा पौण्ड्रकाद्वंशिकोऽवर इति। एवञ्चैतदुपपन्नमेव। तदेवमात्रेयस्यापि तन्त्रे यतो बह्वो दोषा उद्भाव्यन्ते, ततः का गणना तन्त्रान्तराणाम्? तथा वेदोत्पत्तिरिति संज्ञा तन्त्रेऽस्मिन् सदोषत्वान्न कृता। तथा हि। आयुषो वेद आयुर्वेदः, तस्योत्पत्तिरायुर्वेदोत्पत्तिरिति भवितव्यम्। अत्र केचिदाहुः;—आयुःशब्दलोपं कृत्वेह निर्देशः कृतः। एवमपि सति लोपस्तावदमङ्गलः; सोऽप्यायुषः; स च शास्त्रादावित्यनत्यर्थ्यैवैषा संज्ञा। किञ्च, वेदोत्पत्तिरित्येतदपि तावद्वक्तुं न युज्यते, नित्यत्वादस्य वेदस्य। नित्यो ह्ययमायुर्वेदः, आयुःसन्तानादि-नित्यत्वात्। तथा ह्यायुःसन्तानः सर्वप्राणिसंवेद्यशरीरापरशरीरगो मनःप्रबन्धनित्यतया नित्यः। अस्य नित्यत्वादायुर्वेदोऽपि नित्यः। नित्यत्वाच्चास्योत्पत्तिमत्त्वं वक्तुमयुक्तम्। न चास्योपदेशाभ्यासोत्पत्तिरस्योपलभ्यते। यतः प्रागुपदेशान्नासावुपलभ्यते। अत

आयुः कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ २ ॥

---

उपदेशानन्तरमुपदेशद्वारेणोपलभ्यते । तस्मादवबोधोपदेशावस्थोत्पत्तिकारणत्वेन कल्पयित्वोत्पत्तिमत्त्वमस्योच्यत इति कैश्चिदूचे । नैतद् युक्तम् । यतः सतो बोधोपदेशौ स्तः, नासतः । तथा चाचष्टे लोकः ;—"अमुना गुरुणा छात्रायोपदिष्टं शास्त्रमिदम्"—इति । सत एवोपदेशावबोधौ स्तः । तस्मान्नावबोधोपदेशावस्थोत्पत्तिकारणमितरतोऽपि हेतोर्वेदोत्पत्तिसंज्ञे तत्रयुक्ता । इति संज्ञानां सावद्यत्वं निरूप्य निरवद्यायुष्कामीयसंज्ञा हि तन्त्रे कृता । ययोच्चारितमात्रयैवाशेषस्तन्त्रार्थः प्रकाश्यते । प्रतिस्थानं च योऽध्यायः प्रथमस्तत्संज्ञया स्थानार्थः । अन्ये च येऽध्यायास्तन्त्रेऽस्मिंस्तत्संज्ञाभिर्यथास्वतन्त्रमर्थजातं प्रकाशयन्त इति ।

इदमिदानीं पृच्छ्यते तन्त्रकारः । यदस्मिंस्तन्त्रे किञ्चिदुच्यते स्म भवद्भिः तत् स्वबुद्धिपरिकल्पितमुत नेत्याह ।—इति हेति । इति शब्द एवमर्थे । यथा इति ह स्म, तानाह । ह शब्दोऽनुकम्पायाम् । ब्रूञ्धातोः स्म उपपदे "भूतानद्यतनपरोक्षे "लट् स्मे" इति लट्, आहादेशः । अत्रेरपत्यमात्रेयः । 'इतश्चानिञः' इति ढक् । आत्रेय आदिर्येषां धन्वन्तरिप्रभृतीनां त एवम् । महान्तश्च ते ऋषयश्च महर्षयः । महत्त्वं तज्ज्ञानातिशययोगात् । तेनायमर्थोऽनेन कारणेनानुकम्पया न तु फलाकाङ्क्षया । भगवन्त आत्रेयादयो महर्षयोऽब्रुवन् नास्माभिः स्वमतिपरिकल्पितं किञ्चिदप्युक्तम् । केवलं दूतसन्देशवचनन्यायेन युगानुरूपः क्रममात्रोऽन्यथा कृत इत्यर्थः । तथा चास्यैव संग्रहे ।—"न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितम् । तेऽर्थाः स ग्रन्थसन्दर्भः संक्षेपाय क्रमोऽन्यथा" इति । तदेवमागमप्रामाण्यमस्य तन्त्रस्येत्युक्तं भवति ॥ २ ॥

आयुरिति । आयुर्वेदयति ज्ञापयति प्रकृतिज्ञानरसायनदूतारिष्टाद्युपदेशादित्यायुर्वेदः । तस्योपदेशाः आयुर्वेदोपदेशाः ; उपदिश्यन्त आयुर्वेदार्था उपपत्तिभिरित्युपदेशा आयुर्वेदतन्त्राणि । तेषु परमादरः पाठावबोधानुष्ठानरूप उत्कृष्टो यत्नः कार्य्यः । आयुर्वेदोपदेशेष्विति बहुवचननिर्देशादयमर्थो द्योत्यते बहुष्वायुर्वेदतन्त्रेषु यत्नः कार्योऽनेकायुर्वेदावलोकनाद्धि चिकित्सायां वैदग्ध्यं न मनागपि सन्देहो जायते । किङ्कुर्वता पुरुषेण ? आयुः कामयमानेन जीवितमभिलषता । किम्भूतमायुः ? धर्मार्थेत्यादि । ध्रियते लोकोऽनेनेति धर्मः । अर्थ्यते याच्यत इत्यर्थः । सुखं द्विविधम् ; तादात्विकमात्यन्तिकञ्च । तादात्विकं कियत्कालान्तरास्थायित्वात् सुखावभासं न परमार्थतः सुखम् । तथाचोक्तम् ;—'तादात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते'—इति । तदेतत् संज्ञामात्रेण सुखं न त्वत्यन्तमिति प्रदर्शयितुं सुखसंज्ञेष्विति मुनिनोक्तम् । आत्यन्तिकं सुखं मोक्षाख्यं यत्र न दुःखानां लेशः । तेषां साधनमुपायो धर्मार्थसुखसाधनम् ॥ २ ॥

ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत्।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान्मुनीन्।
तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे ॥ ४ ॥
तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः।
क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम् ॥ ५ ॥

---

अथास्यायुर्वेदस्य गौरवोत्पादनायागमशुद्धिं दर्शयति।—ब्रह्मेत्यादि। ब्रह्मा आयुषो वेदं स्मृत्वा प्रजापतिं दक्षमजिग्रहद् अवाबोधयत्। स्मृत्वेत्यनेनैतद्गमयति ब्रह्मणः अर्त्तृत्वमेवात न कर्त्तृत्वम्। नित्यत्वादायुर्वेदस्य। नित्यत्वं चास्य प्राकुप्रत्यपादि। ग्रहेर्ण्यन्तस्यात्र बुद्ध्यर्थत्वात् प्रजापतिशब्दस्य गतिबुद्धीत्यादिना कर्म्मसंज्ञा। स प्रजापतिरश्विनावजिग्रहत्। तौ सहस्राक्षमिन्द्रमजिग्रहतामिति वचनविपरिणामेन सम्बन्धः। शक्रोऽत्रिपुत्रादिकान् मुनीन् बोधयामास। अत्रिपुत्र आत्रेय आदिर्येषां धन्वन्तरिनिमिकाश्यपादीनां त एवं ते चात्रेयादयोऽग्निवेशादिकानजिग्रहन्। ते त्वग्नि-वेशादयः षट् पृथक् प्रत्येकं तन्त्राणि शास्त्राणि अग्निवेशभेड़जातूकर्णपराशरहारीत-क्षारपाणिनामाभिधेयानि तन्त्राणि तेनिरे विस्तारितवन्तश्चक्रुः। तन्त्र्यन्ते धार्यन्त आयुर्वेदार्था एभिरिति तन्त्राणि ॥ ४ ॥

ननु यदि तस्तन्त्राणि पुनर्युगानुरूपसन्दर्भैः सङ्गृहीतानि, तत्किमिदानीमनेन शास्त्रेण कृतेनेत्याह।—तेभ्य इत्यादि। तेभ्यो ग्रन्थेभ्योऽतिविप्रकीर्णेभ्यो विक्षिप्तेभ्य उक्ता-यचोक्तार्थतयैवेतश्च तश्च गतेभ्योऽतएव कश्चिदेवार्थः कस्मादेव तन्त्रान्तराद् ज्ञायते। यथा शल्यचिकित्सा सुश्रुतप्रणीतात् तन्त्रादेवावगम्यते न तथाग्निवेशादिकात्। ऊर्द्ध्वाङ्ग-चिकित्सा च जनकप्रणीतात्तन्त्राद्यथावगम्यते न तथा सुश्रुतप्रणीतात्। अतः प्रायो-बाहुल्येन सारतरोच्चयः क्रियते। उच्चीयन्ते सङ्गृह्यन्ते विक्षिप्ताः पदार्था अनेनेत्युच्चयः। यथा वा यवादीनां बहुक्षेत्रजातानामेकस्मिन् स्थान उच्चयो राशीकृत्य स्थापनं विधीयते तथेह सारतराणामुच्चयः। सारतरग्रहणेनैतद् द्योतयति सङ्ग्रहेणैव साराणामुच्चयः कृतः। अनेन तथा सारतराणां प्रदेशानामुच्चयः क्रियते इति। किन्नाम? अष्टाङ्ग-हृदयम्। एतच्च सान्वयार्थमस्य नाम; यथा शरीरस्य सर्वावयवेभ्यः प्रधानमेवो हि हृदयं तथेदमष्टाङ्गायुर्वेदस्य प्रधानभूतत्वाद्धृदयमिव हृदयम्। तथा च तन्त्रान्ते वक्ष्यति।—'हृदयमिव हृदयमेतत्'—इत्यादि। अष्टौ च तान्यङ्गान्यष्टाङ्गानि तेषां प्रत्येकं हृदयं सारतरसंग्रहणात्। कीदृशमष्टाङ्गहृदयम्? नातिसंक्षेपविस्तरम् संक्षेपश्च विस्तरश्च संक्षेपविस्तरौ, अतिशयेन संक्षेपविस्तरौ यत्र न तन्नातिसंक्षेपविस्तरम्। अति-शब्दस्यात्र प्रत्येकं सम्बन्धः। अतिसंक्षेपं किञ्चित्तन्त्रं यथा सिद्धसारादि; किञ्चिदा-तिविस्तरं यथा सङ्ग्रहादि। इदन्तु तन्त्रं नातिसंक्षेपविस्तरम्। अतिसंक्षेपोक्तं स्वल्प-धियां नोपकृतये। तेषां हि यथोक्तागममात्रं श्रेयः, न तु वाक्यार्थपर्यालोचनादधिकः

कायबालग्रहोर्द्धाङ्गशल्यदंष्ट्राजरावृषान् ।
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ॥ ६ ॥

---

परामर्शः । अतिविस्तीर्णन्तु पाठावबोधानुष्ठानेष्वेषा दुःशक्यं स्यात् । तस्मादस्य-मध्योत्कृष्टबुद्धिशिष्यहितार्थं तन्त्रमेतदुद्दिष्टम् ॥ ५ ॥

कानि पुनस्तान्यष्टाङ्गानीत्याह ।—कायेति । कायश्च बालश्च ग्रहश्चोर्द्ध्वाङ्गञ्च शल्यञ्च दंष्ट्रा च जरा च वृषश्चेतीतरेतरद्वन्दः । ननु सर्वस्याः चिकित्सायाः कायाश्रितत्वात् कायशब्दोऽर्थादाक्षिप्त एव ; तत् किमर्थं कायशब्द उपादीयते ? ब्रूमः ।—प्रकर्षो यथा पुरुषाय अभिरूपाय कन्या देयेत्यत्राभिरूपग्रहणादभिरूपतमायेति प्रतिपाद्यते । तथेहापि प्रकृष्टो यः कायः सम्पूर्णधातुः प्रकृष्टा च याऽवस्था तया युक्तस्तत्संग्रहार्थः कायशब्द उपात्तः । तथा "चिञ् चयने" इत्यस्माद्धातोर्व्युत्पादितः कायशब्दः । चीयते प्रशस्तदोषधातुमलैरिति कायः । तदेवं सर्वशरीरोपतापकानामामपक्वाशयस्थानोद्भवानां ज्वररक्तपित्तातिसारादीनां रोगाणां यत्रोपशमयोगो निगद्यते तत् कायचिकित्सा-नामाङ्गम् । वलसत्त्वसम्पूर्णधातुत्वाद् यौवनावस्थकायस्य प्रथमनिर्द्देशः । बालदेहेऽस-म्पूर्णबलधातुत्वादप्रकृष्टवयोऽवस्थाप्रभावात् तच्चिकित्साङ्गं पृथङ्निर्द्दिष्टम् । तथा बालोपयिकभेषजं धात्रीदुग्धलक्षणं दुग्धोद्भवव्याधिप्रशमादिनिर्देशाच्च । नन्वेवं वृद्धस्य प्रकृष्टवयोऽवस्थाया अभावात्तद्देहे कायचिकित्सेति कथं व्यपदेशः स्यात् ? अत्र ब्रूमः ।—भूतपूर्वगत्या वृद्धदेहेन हि प्रकृष्टतयावस्था पूर्वमनुभूता । अतो भूतपूर्वगत्या तत्र कायचिकित्सोपदेशो युक्तः । एवं ग्रहचिकित्सा नाम, यत्र देवादिग्रहगृहीतानां प्राणिनां शान्तिकर्म्म विधीयते । यत्रोर्द्ध्वजत्रुगतानां रोगाणां नेत्रकर्णघ्राणादिसंश्रिता-नामाश्च्योतनशलाकादिनोपशमो वर्ण्यते तदूर्द्ध्वाङ्गचिकित्सानामाङ्गम् । अत्र च जन्मनः प्रभृति विचारोपदेशाद्बालचिकित्सैव प्राग्वक्तुं युक्ता । किन्तु कायचिकित्सा प्राधा-न्यात्प्रागुपन्यस्ता । ततोऽनन्तरं बालचिकित्सा । बालस्य च ग्रहसम्बन्धाद् ग्रहचिकित्सा । ततः शरीरस्य मूलत्वार्थमूर्द्धाङ्गचिकित्सा शालाक्यं नाम । ततः शस्त्रसाधनसामा-न्येन शल्यचिकित्सा । पीड़ाकरणसमानत्वात् दंष्ट्राचिकित्सा । दंष्ट्रा विषात्मिका । विषेणाशु च मरणे सम्भाव्यमाने रसायनोपयोगो युक्त इति रसायनचिकित्सा । अथवा विषस्य रसायनजेयत्वाद्रसायनकथनप्रस्तावः । ततोऽनन्तरं वाजीकरणस्य भरणेन प्रस्तावः । तथा चाधीते ग्रन्थकृत् ;—'वाजीकरणमन्विच्छेत् सततं विषयी पुमान्' इति । रसाय-नस्य पश्चादित्यर्थः । यत्राल्पदुष्टरेतसां तदाप्यायनप्रसादोपजननरूपा चिकित्सा क्रियते तद्वाजीकरणम् । एवमेतानि कायादीनि तस्यायुर्वेदस्याष्टावङ्गान्याहुर्वदन्ति । ब्रह्मा-त्रेयादय इति शेषः । येषु कायादिषु चिकित्सा संश्रिता व्यवस्थिता । "चतुर्णां भिषगादीनां शस्तानां धातुवैकृते । प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते" इति मुनिप्रोक्तलक्षणं नेह तन्त्रकृद्व्यधत्त । चिकित्साशब्दादेवार्थस्य लब्धत्वात् । तथा च निर्देष्टुमाह ;—"निन्दाक्षमाव्याधिप्रतिकारविचारणासु सा निष्पद्यते" इति । कितेर्धातोर्व्याधिप्रतिकारएवास्य व्युत्पादितत्वात् ॥ ६ ॥

वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः * ।
विकृताऽविकृता देहं घ्नन्ति ते वर्तयन्ति च ॥ ७ ॥

कायस्य दोषधातुमलसमुदायत्वात्तानेव दोषादीन् निर्दिदिक्षुराह वायुरिति। च समुच्चये। कफो दोषमध्ये समुच्चीयते। इत्यनेन प्रकारेण समासतः संक्षेपात् त्रयो दोषाः। ननु प्रस्तुतत्वादिह धातुसंज्ञया वातादयो निर्देष्टुं न्याय्या, न दोषसंज्ञया। सत्यमेवैतत्; किन्तु रसादिदूषणपूर्वकमेषां विकारकरणे सामर्थ्यमिति प्रदर्शनार्थं दोषसंज्ञया ते निर्दिष्टाः, न धातुसंज्ञया। न ह्येते धातुरूपा जातु विरुद्धत्वं कुर्वते देहधारणवर्द्धकत्वात्। एते मुनिनापि चरकेण पूर्वं दोषसंज्ञयैव निर्दिष्टाः। तथा च तद्ग्रन्थः;—"वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः" इति। "वातपित्तकफा दोषास्त्रय एव समासतः" इत्येवं निर्देशे कर्त्तव्ये यदेषां पृथगविभक्त्या निर्देशः कृतः, स प्रधानत्वख्यापनार्थः। बहुवचनादेव त्रित्वे लब्धे त्रिग्रहणं नियमार्थम्, त्रय एव दोषा न चतुर्थोऽस्तीति। तन्त्रान्तरीया हि चतुर्थं दोषमीहन्ते तेषां ह्ययमभिप्रायो यथा दोषाणां स्थानलक्षणकार्यविकारचिकित्साद्युपदेशस्तथा रक्तस्यापि। तत्र स्थानम्;—सर्वदेहव्यापित्वेऽपि प्लीहयकृती। लक्षणं च;—पद्मेन्द्रगोपहेमादीत्यादि। कार्यम्;—देहस्योत्पत्तिस्थिती। विकारः;—विसर्पप्लीहादि। चिकित्सा;—शिराव्यधादिकं कर्मेति। तदेतदसारम्। वातादयो ह्यस्य दूष्यस्य सतः कथं दोषत्वं कर्त्तुं पारयन्ति। यतः प्राधान्यादन्वर्थनामत्वाच्च वातादीनामेव दोषत्वं न रसादीनाम्। वातादयो हि स्वातन्त्र्यात् प्रधानाः। दूषयन्तीति दोषा इति तेषामेव चानुगतार्था संज्ञा प्रवृत्ता। रसाद्यास्तु पारतन्त्र्यादप्रधानाः। ते च वातादिभिर्दूष्यन्त इति दूष्याः। तस्माद्रक्तस्य दूष्यत्वं, न दोषत्वम्। यद्येवं वातादीनामप्यन्योऽन्यदूषणाद् दूष्यत्वं स्यात्। पित्तेन हि श्लेष्मा दूष्यत इति दृश्यते। यथा पाण्डुरोगनिदाने;—"पित्तप्रधाना" इत्यारभ्य 'यावत् श्लेष्मत्वग्रक्तमांसानि प्रदूष्य इत्यादि। तदत्र श्लेष्मा पित्तेन दूष्यते। तथा श्लेष्मवद्रक्तस्यापि दोषत्वप्रसङ्ग इति यो मन्येत, तं प्रति ब्रूमः;—विषम उपन्यासः। वातादयो हि सर्वदैव रसादीन् दूषयन्ति, न तु रसादयः कदाचिदपि वातादीन् दूषयन्ति; वातादीनां तु मध्याद्यदि कश्चिद् दूष्यते, स तेषामन्यतमेन। तथा च प्रकृतिलक्षणे वातप्रकृतेः पित्तप्रकृतेः श्लेष्मप्रकृतेश्च यथा लक्षणं दृश्यते, नैवं रक्तप्रकृतेः। तथा च सन्त्रकारेण ज्वरादयो वातादिविशेषणविशिष्टा एवोक्ताः। यथा वातज्वरोऽयं पित्तज्वरोऽयं श्लेष्मज्वरोऽयम्; न तु रक्तज्वरोऽयमिति निर्दिष्टः। येऽपि रक्तजा विकारा विसर्पादयस्तेष्वपि घृतदग्धन्यायेन व्यपदेशो बोध्यः। यथा घृतस्यान्तर्हितेनाग्निना दग्धो घृतदग्धइत्युच्यते, तद्वद्रक्तस्थैर्वातादिभिर्दोषैर्जातो रक्तजोऽयमित्युच्यते। यत्र क्वचिद्रक्तस्य दोषसंज्ञा कुष्ठचिकित्सितादौ दृश्यते, सा संज्ञामात्रेणैव; नासावनुगतार्था।

* प्रत्येकं ते त्रिधा वृद्धि-चय-साम्य-विभेदतः। उत्कृष्टमध्याल्पतया त्रिधा वृद्धिचयावपि ॥ अधिकोऽयं पाठः क्वचित्।

ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्ध संश्रयाः।
वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ॥ ८ ॥

---

तस्य दूष्यत्वेनेव प्रवृत्तेः। तथा चैवं पुरीषादीनामपि संज्ञामात्रेण व्यवहारो दृश्यते यथा ;—"न घृतं बहुदोषाय देयं यन्न विरेचनम्। तेन दोषाः" इत्यादि। अत्र पुरीषस्य दोषत्वमुक्तम्। तथोदरचिकित्सिते चरकस्य ज्वरचिकित्सिते वा वाग्भटस्य "आमेन भस्मनेवाग्नौ छन्ने ऽन्नं न विपच्यते। तस्मादादौषपचनात् ज्वरितानुपवासयेत्" इति। तदेवं वातादयस्त्रय एव दोषा न रक्तमिति स्थितमेतत्। समासतः संक्षेपतः ; विस्तरतस्तु संसर्गसन्निपातचयप्रमतादिभेदभिन्नास्तारतम्यपरिकल्पनया च कल्प्यमाना आनन्त्यं यान्ति। विकृतेति।—विकृताः स्वभावप्रच्युताः ; देहं घ्नन्ति। देहपदमत्र जीवितोपलक्षणार्थम्। जीवितेन विना कुर्वन्तीत्यर्थः। अविकृताः पुनर्देहं वर्तयन्ति यापयन्ति। विकृतानां दोषाणां प्रागुपन्यासः, तेषां प्रकृत्यवस्थाने नित्यं भिषजा यत्नवता भाव्यमिति सूचनार्थम्। अन्यथा महान् प्रत्यवायः स्यात् ॥ ७ ॥

इदानीमेषां व्यापिनामपि विशिष्टस्थानं विवक्षुराह ;—ते व्यापिन इत्यादि। अधश्च मध्यश्च ऊर्ध्वश्च अधोमध्योर्द्धानि, तानि संश्रय आश्रयो येषां ते अधोमध्योर्द्धसंश्रयाः। हृच्च नाभिश्च हृन्नाभी, तयोर्हृन्नाभ्योः। ते वातादयो व्यापिनोऽपि सर्वशरीरचरा अपि हृन्नाभ्योरधोमध्योर्द्धसंश्रयाः विशेषेणेति वाक्यशेषः। किमिदं वाक्यशेषत्वं नाम ? उच्यते ;—"यस्मिन् खलु पदेऽनुच्चार्यमाणेऽर्थगतिं पश्यन्त्याचार्यास्तच्छेषमिति" उच्चारणकाले तेन विना अभिधेयसिद्धेः ; व्याख्याकाले तु मन्दबुद्धिव्युत्पत्तये व्याचक्षते। तत्र नाभेरधो वायोः स्थानम्। हृन्नाभ्योर्मध्ये पित्तस्य। हृदयादूर्ध्वं कफस्य। ननु हृन्नाभ्योरिति कथं निर्देशो यावता प्राण्यङ्गत्वादेकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे हृन्नाभि इति प्राप्नोति। अत्र ब्रूमः। प्राण्यङ्गानां समाहार एव द्वन्द्व इतरस्य प्रायिकत्वान्नकवद्भावस्तदभावाच्च तदाश्रयौ नपुंसकपुंसौ न भवतः। तथाचोक्तम् ; "सर्वत्र द्वन्द्वो विभाषयैकवद्भवति" इति दृश्यते चाऽन्यत्रापि। तथा च रुद्रभट्टः ;—"कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते" इत्यादि। तथाऽस्यैव ग्रन्थकृतः—"शिरःपृष्ठोरसां भूमिः" इति तथा "जानुजङ्घोरुकक्ष्यं सहस्तपादाङ्गसन्धिषु"। तथा "वायुः सन्ध्यस्थिमज्जसु" इत्यादि। तस्माद्धृन्नाभ्योरिति प्रयोगो न्याय्य एव। अथैषां सकलकालव्यापिनामपि नियतकालत्वं दर्शयन्नाह ;—वय इत्यादि। वयश्च अहश्च रात्रिश्च भुक्तञ्च वयोऽहोरात्रिभुक्तानि, तेषां क्रमाद्यथासंख्यं ते वातादयोऽन्तमध्यादिगा भवन्ति। अन्तश्च मध्यश्च आदिश्च अन्तमध्यादयस्तेषु गच्छन्तीत्यन्तमध्यादिगाः। "अन्येष्वपि दृश्यते" इति डः। तेनायमर्थो वयसः पुरुषायुषः अन्तः पश्चिमो भागो वायोः कोपकालः। मध्यो भागः पित्तस्य। आद्यो भागः कफस्य। एवमह्नो रात्रेश्च योज्यम्। भुक्तमाहारः, तस्यान्ते जठराग्निसंयोगवशाद्रसानां जीर्णप्रायावस्था, वायोः कोपकालः। मध्यो विदाहावस्था पित्तस्य। आद्यावस्था तु यस्यां मधुरीभाव आहारस्य, तत्र कफस्य कोपकालः। यद्यपि चाहारस्य जठराग्निसंयोग-

तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः।
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि * ॥ ९ ॥

यद्यप्यन्योऽपि सूक्ष्मा अवस्थाः सम्भाव्यन्ते तथाप्येतासामेव सुतरामुपयोगित्वादिह निर्देशः। यथा हि एता एव तिस्रोऽवस्थाः स्वकर्म्म दर्शयन्ति। वक्ष्यति हि;—"आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत्। फेनीभूतं कफं यातं विदाहादम्लतां ततः। पित्तमामाशयात् कुर्याच्च्यवमानं च्युतं पुनः। अग्निना शोषितं पक्वं पिण्डितं कटु मारुतम्" इति ॥ ८ ॥

अधुनाऽग्निस्वरूपं प्रस्तौति;—तैरिति। तैश्च वातादिभिः पुंसो यथाक्रमेणाग्निर्विषमस्तीक्ष्णो मन्दश्च भवेत्। वातादयश्च समुदिता एव शरीरजनने समर्थाः, इतरथाऽवश्यं सर्वैरेव भवितव्यम्। इह तु य एव व्यपदेशस्तेनोत्कर्षो द्रष्टव्यः। वातोत्कर्षेण विषमः, पित्तोत्कर्षेण तीक्ष्णः, कफोत्कर्षेण मन्द इति। समैर्हीनातिरिक्तोत्कर्षवर्जितैः समः। लक्षणमेषामङ्गविभागे शारीरे वक्ष्यति;—"यः पचेत्सम्यगेवान्नमितिप्रारभ्य यावच्चिरात्पचेत्" इति। यत्र तु द्वयोर्दोषयोरुत्कर्षः, तत्र सद्दैद्येन स्वधिया कल्प्यः। यथा वातपित्तयोरुत्कर्षे वायोर्योगवाहित्वात्तीक्ष्णः। एवं वातकफयोरुत्कर्षे मन्दः। कफपित्तयोस्तूत्कर्षे आहारविशेषवशात्कदाचित्तीक्ष्णः कदाचित् मन्द इति। अग्निचातुर्विध्यमुक्त्वा तदाश्रयस्य कोष्ठस्य चातुर्विध्यं विवक्षुराह;—कोष्ठइति। तैर्वातादिभिर्यथाक्रमं क्रूरमृदुमध्यलक्षणः कोष्ठो भवति। वातोत्कर्षेण क्रूरः। पित्तोत्कर्षेण मृदुः। कफोत्कर्षेण मध्यः। समैः पुनरेतैर्हीनातिरिक्तोत्कर्षवर्जितैर्मध्य एव कोष्ठः। क्रूरादीनां तु लक्षणं वमनविरेचनविधौ वक्ष्यति। ननु समैर्वातादिभिः कथं मध्यकोष्ठता स्यादिति? ब्रूमः;—समानां वातादीनां मध्ये द्वयोर्वातपित्तयोः स्वं स्वं क्रूरकोष्ठत्वमृदुकोष्ठत्वलक्षणाख्यं च विरुद्धं कर्म्म युगपत् कर्तुं न घटते। तृतीयस्तु सम एव कफः, सोऽनयोर्मध्ये मध्यमां वृत्तिमाश्रित्य स्थितो नैकेनापि सह विरुध्यते। अतएव तत्कार्यं मध्यकोष्ठतालक्षणं ते वातपित्ते निषेद्धुं नैव घटेते। एवं च तेनावश्यमात्मीयं मध्यकोष्ठतालक्षणं कर्म्म कर्त्तव्यम्; यतो वातकर्म्मणः क्रूरकोष्ठतालक्षणस्य पित्तकर्म्मणो मृदुकोष्ठतालक्षणस्य च विरुद्धत्वात् (१) अतो मध्यकोष्ठतैव समैर्वातादिभिर्न्याय्या। अयांस्तु विशेषः;—पूर्वो यो मध्यकोष्ठः सोऽवश्यं प्रमाणाधिकेन कफेन जन्यते, 'मध्यः स्यात्तैः समैरपि'। इति समग्रहणलिङ्गात् इतरस्तु मध्यकोष्ठः, समदोषमध्यस्थितेन समेनैव स्वप्रमाणस्थितेन श्लेष्मणा भवतीत्यनया गीत्या हेतुभेदादन्यत्वम्। तथा मध्यकोष्ठयोर्लक्षणभेदोऽपि दृश्यते। यथा;—"श्लेष्माधिकश्छर्दयते हि दुःखं, विरिच्यते मन्दकफस्तु सम्यक्" इति। तदयमत्रार्थः श्लेष्माधिके मध्यकोष्ठे न सम्यग् विरेचित्वं समकफे तु मध्यकोष्ठे सुविरेचित्वमिति ॥ ९ ॥

* कोष्ठः क्रूरो मृदुर्मन्दः मध्यः स्यात्तैः समैरपि—इति पाठान्तरम्।

(१) विरुद्धं पित्तकर्म्म मृदुकोष्ठतालक्षणमिति पाठान्तरम्।

शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः।
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक्।
समधातुः समस्तासु * श्रेष्ठा निन्द्या द्विदोषजाः॥ १०॥
तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः।
पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम्॥ ११॥

---

इदानीं प्रकृतिस्वरूपं प्रस्तौति;—शुक्रार्त्तवस्थैरिति। तैश्च वातादिभिस्त्रिधः प्रकृतयः पृथग् भवेयुर्हीनमध्योत्तमाः। प्रकृतिः शरीरस्वरूपम्। शुक्रार्तवस्थैरिति शुक्रं पितुर्हि त्रिबिन्दुकावस्थं रेतः; ऋतौ भवमार्त्तवम्, मातुर्हि विबिन्दुकावस्थं शोणितम्; शुक्रं चार्तवं च शुक्रार्त्तवम्; तत्र तिष्ठन्तीति शुक्रार्तवस्थाः तैस्तथाविधैः जन्मादौ गर्भाधानकाले, जन्मप्रारम्भे गर्भादावित्यर्थः। ननु यदा वातादयोऽधिका शुक्रार्तवे तिष्ठन्ति, तदा कुतः शरीरस्य निष्पत्तिर्भवतीति? ततश्च यो दोषाणामधिको भावः सैव विकृतिः; तत्कथं दोषा आधिक्यं प्राप्ताः प्रकृतेः कारणतामुत्सहन्ते? विकृतत्वात्, न हि विकृतिः कदाचित्प्रकृतेः कारणमिति वक्तुं युज्यते कारणसदृशेन च कार्येण भवितव्यम्; इत्याशङ्क्य सपरिहारं दृष्टान्तमाह;—विषेणेव विषक्रिमेरिति। यथा विषेण जीवितनाशहेतुनास्य विषक्रिमेर्जन्म प्रकृतेः सम्भवो दृश्यते, तथा एतैर्दूषणस्वभावैरपि प्रमाणाधिकैर्दोषैः शुक्रार्त्तवस्थैरेव जन्मादौ शरीरस्य निष्पत्तिर्भवतीति। वातोत्कर्षेण हीना, पित्तोत्कर्षेण मध्यमा, कफोत्कर्षेणोत्तमा। सर्वासु प्रकृतिषु मध्ये या समधातुः प्रकृतिः, सा समा श्रेष्ठोत्तमा चतुर्थी। समा धातवो यस्याः। धातुशब्दो दोषपर्यायः "धारणाद्धातवः प्रोक्ताः" इति वचनात्। या मिश्रदोषजास्त्रिधः प्रकृतयस्ता निन्द्याः, गर्हणीया अनारोग्यप्रदत्वात्, वातपित्तजा वातश्लेष्मजाः पित्तश्लेष्मजा इति॥ १०॥

तत्रेत्यादि। तत्रेति निर्द्धारणे। तत्र तेषु दोषेषु मध्येऽनिलो वायू रूक्षः, लघुः, शीतः, खरोऽमृदुः सूक्ष्मः सौक्ष्म्यप्रवेशित्वात्, चलो गमनशीलः, नैकत्र तिष्ठतीति। नन्वनुष्णाशीतो वायुः काणादैः वैशेषिकैः पठितः, इहापि योगवाह्यनुष्णानादनुष्णाशीत एवेष्यत इति। तथाच वक्ष्यति;—"योगवाहः परं वायुः संयोगादुभयार्थकृत्। दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात्" इति। तथा;—"पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत्। दाहः पित्तयुते" इति। उच्यते;—सत्यमेतदनुष्णाशीत एव वायुः। तस्य योगवाहित्वेऽपि तावन्मात्राद्दाहोदयाच्छैत्यं स्वाभाविकं न विनश्यति। शीतगुणव्यावर्णने चेदं प्रयोजनम्; उष्णेनायमुपशाम्यति प्रतिपत्त्यर्थम्। पित्तमित्यादि। सस्नेहमीषत् स्निग्धं सशब्द ईषदर्थे; यथा, 'सतिक्ता यासशर्करा'। एवमीषत्स्नेहो यस्य तत् सस्नेहम्। तीक्ष्णं शीघ्रकारि मन्दविपरीतं सूचीव भिनत्ति। उष्णं च

---

* 'समधातु समैस्तासुः'—इति पाठान्तरम्।

स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः।
संसर्गः सन्निपातश्च तद् द्वित्रिक्षयकोपतः॥ १२॥
रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः।
सप्त दूष्या मला मूत्रशकृत्स्वेदादयोऽपि च॥ १३॥

---

विस्रं दुर्गन्धि मत्स्यामगन्धि, सरं व्याप्तिशीलं सरणशीलमूर्द्ध्वाधः प्रवर्त्तते न स्थिरमास्ते, शक्तद्विस्रंसि वा, द्रवं च॥ ११॥

स्निग्धइति।—स्नेहगुणयोगात् स्निग्धः; शीतोऽनुष्णः; गुरुर्लघुर्न भवति। मन्दस्थिरकारी, तीक्ष्णविपरीतः। श्लक्ष्णोऽपरुषः। मृत्स्नो मृद्यमानोऽङ्गुलिग्राही पिच्छिलगुणयुक्तः चकचकायमानः। स्थिरोऽव्याप्तिशीलः; एवं तद्गुणयोगात्तद्गुणगुणिनोरभेदोपचाराद्वातादयो गुणतो निर्दिष्टाः। एषां च मिश्रीभूतानां तन्त्रव्यवहारार्थं संज्ञाद्वयमाह;—संसर्ग इति। एतदुक्तं भवति;—द्वयोः स्वप्रमाणाधिकयोः क्षीणयोर्वा संयोगः संसर्गः। त्रयाणां दोषाणां वृद्धानां क्षीणानां वा संयोगः सन्निपातः॥ १२॥

दोषानुक्त्वा धातव उच्यन्ते;—रसेति। रसादयः सप्त धातुसंज्ञाः शरीरधारणाद्धातवः ते च दूष्याः, वातादिभिर्दूष्यन्त इति दूष्याः। यस्माद्वातादीनां दूषणस्वभावत्वाद्दोषसंज्ञा सान्वर्थसंज्ञा। दूषयन्तीति दोषाः। अतोऽवश्यं ते दूष्यमपेक्षन्ते। कर्म्म विना कर्त्तुः क्रियाया असम्भवात्। कर्त्तारं विना कर्म्मणो न कर्म्मत्वम्। एवं दोषैर्विना रसादीनां दूष्यनाम न घटते। तैर्विनापि वातादीनां दोषनाम। तस्मात्परस्परापेक्षत्वादनयोर्दूष्यदोषयोर्दूष्यत्वेन दोषत्वेन च संज्ञालाभः। मूत्रशकृदादयो मला उच्यन्ते। अपिचेति शब्दाद् दूष्याश्चेति। न केवलं रसादय एव दूष्या यावन्मलास्तेऽपि वातादिभिर्दूष्यन्त इति। एवं च रसादीनां दूष्यसंज्ञा धातुसंज्ञा च; तथा विण्मूत्रादीनां मलसंज्ञा दूष्यसंज्ञा च। इति दोषधातुमलनिर्देशेन देहो व्याख्यातः। तथा चोक्तरग्रन्थे "दोषधातुमला मूलं सदा देहस्य" इति। तस्य च देहस्य यथा सन्ततं केनचिदुपायेन परिपालनं निष्पद्यते तमुपायं दर्शयितुमाह;—वृद्धिरिति। सर्व्वेषां दोषधातुमलादीनां शरीराश्रितानां समानैस्तुल्यसद्भावैर्वृद्धिः स्वप्रमाणाधिक्यम्। विपरीतैर्विशिष्टतया व्यवस्थितैर्विपर्य्ययः क्षयः, अयनं अयः गतिः; विपरीता गतिर्विपर्य्ययोऽपचयः। सामान्यविशेषैर्द्रव्यगुणकर्म्मभेदेन त्रिप्रकारोऽधिगच्छति। तथा चाहुः;—"सर्व्वेषां सर्व्वदा वृद्धिस्तुल्यद्रव्यगुणक्रियैः। भावैर्भवति भावानां विपरीतैर्विपर्य्ययः॥" द्रव्यतो यथोक्तम्। रक्तमाप्यायते रक्तेन, मांसं मांसेन, मेदो मेदसा, अस्थि अस्थ्ना, मज्जा मज्जया, शुक्रं शुक्रेण, तथा गर्भश्चामगर्भेण। तत्र रक्तेन रक्तमितुभयमप्योदकम्; मांसेन मांसमिति पार्थिवम्। तथा सलिलात्मकं पयस्तदात्मकमेव श्लेष्माणमभिवर्द्धयति। तद्वत् क्षीरजातं घृतं शुक्रम्। तथा जीवन्तीकाकोल्यादयः सोमात्मानो द्रव्यविशेषाः सौम्यधात्वेककारणानि स्नेहबलपुंस्त्वौजांसि। मरीचपञ्चकोलभल्लातकादयो बुद्धिमेधाग्न्यादीन् संवर्द्धयन्ति। गुणतः;—चोष्णमोष-

वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ॥ १३ ॥
रसाः स्वाद्वम्ललवण-तिक्तोषणकषायकाः ।
षट् द्रव्यमाश्रितास्ते तु यथापूर्वं बलावहाः ॥ १४ ॥
तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥ १५ ॥

---

खर्जूराणि पार्थिवानि द्रव्यतो निर्दिष्टान्यपि श्लेष्माणमुदकात्मकमभिवर्द्धयन्ति, स्निग्ध-गुरुशीतादिगुणसामान्यात् । कर्मापि त्रिविधं, कायवाङ्मनोव्यापारात्मकम् । तत्र कायिकानि धावनलङ्घनप्लवनादीनि, चलत्वसामान्याद्वायोर्वृद्धये । वाचिकानि भाष्या-ध्ययनगेयादीनि मानसं मनोव्यापारश्चिन्ताकामशोकभयानि । तान्यपि मनसः चोभण-हेतुत्वाद्वायोर्वृद्धिकराणि । यथा सन्तापकत्वसामान्यात् क्रोधेर्ष्यादि पित्तस्य । स्वप्ना-स्यशय्यासुखादीनि स्थैर्य्यसामान्यात् कफस्येति । विशेषस्तु चयाय । यथाह,—"द्रव्यतो गवेधुकान्नं कर्शनीयानां" तत्र वाय्वात्मिकया गवेधुकया पार्थिवानां मांसादीनां कृशिमा क्रियते । तथा तैजसेन चारेण श्लेष्मणः । गुणतो यथा,—आरनालमौदकं श्लेष्माणं तद्विपरीतैर्लघुरूक्षोष्णतीक्ष्णविशदगुणैः चपयति । कर्मतः,—निद्रालस्यसौम-नस्यानि सपरिस्पन्दं वातमपरिस्पन्दस्वभावतयाऽपचिन्वन्ति । तथा परिस्पन्दरूपाश्चिन्ता-व्यवायव्यायामा मन्दपरिस्पन्दवैपरीत्यात् कफमिति ॥ १३ ॥

वर्णितमेव वृद्धिः समानैः चयो विपरीतैरिति । तौ तु वृद्धिचयौ यतो वाय्वादीनां भवतस्तत्प्रख्यापनार्थमाह,—रसा इति । स्वाद्वादयः षड्रसाः; रसनेन्द्रियग्राह्यत्वाद्रसाः; ते च रसा द्रव्यं पञ्चभूतात्मकमाश्रिता यथापूर्वं च बलावहाः । यो यः पूर्वो यथापूर्वं बलावहा बलप्रापकाः । बलमावहन्ति प्रापयन्तीति यावत् । तस्मात्सर्वेभ्यो मधुरो रसः प्रकर्षेण देहिनां बलकरः । कषायस्तु सर्वेभ्यो जघन्यबलावहः । तत्र स्वादुर्मधुरो घृतगुड़ादिः । अम्लोऽम्लिकामातुलुङ्गादिः । लवणः सैन्धवादिः । तिक्तो निम्बादिः । ऊषणः कटुको मरीचादिः । कषायो हरीतक्यादिः । स्वादुर्मधुरपर्यायः । ऊषणः कटुकपर्यायः । यथा त्र्यूषणं त्रिकटुकमुच्यते । कषाय एव कषायको यथा कटुरेव कटुकः । षड़िति षड़ेव न न्यूनाः समा अधिका वा । यद्यपि ते रसा गुणाः स्वाद्वादिभेदतस्तथा संसर्गतस्तथाऽनुरसतस्तारतम्यपरिकल्पनावशतोऽपि भिद्यमानरूपा अपि षट्त्वं नातिवर्त्तन्ते ॥ १४ ॥

तत्रेति । तत्र तेषु रसेषु मध्ये आद्यास्त्रयः स्वाद्वम्ललवणा मारुतं घ्नन्ति प्रशमयन्ति । अन्ये तु तिक्तोषणकषायास्तमेव चानिलं कुर्वते कोपयन्ति । तिक्तादयस्त्रयस्तिक्तोषण-कषायाः कफं घ्नन्ति प्रशमयन्ति । अन्ये मधुराम्ललवणास्तमेव कफं कुर्वते । कषाय-तिक्तमधुराः पित्तं घ्नन्ति । अन्ये त्वम्ललवणकटुकास्तदेव पित्तं कुर्वते । तेनेदमुक्तं भवति,—मधुरो वातपित्तघ्नः श्लेष्मकरः । अम्लो वातं हन्ति कफपित्ते जनयति । लवणो मारुतं हन्ति कफपित्ते तु कुरुते । तिक्तः कफपित्ते नाशयति वातं तु जनयति । ऊषणः कफं नाशयति वातपित्ते तु जनयति । कषायः कफपित्ते हन्ति वातं तु करोतीति ॥ १५ ॥

शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा।
उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम्।
त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः॥ १६॥
गुरुमन्दहिमस्निग्ध-श्लक्ष्णसान्द्रमृदुस्थिराः।

---

एषां च रसानामाश्रयो द्रव्यं; तच्च त्रिप्रकारमित्याह,—शमनमिति। द्रव्यमनेन प्रकारेण शमनादिभेदेन त्रिधा त्रिप्रकारं द्रव्यम्। अन्येन प्रकारेण द्विधा अथवा अनेकधा। इतिशब्दः प्रकारार्थेऽभिहितः। यत् कुपितान् दोषान् शमयति तच्छमनम्। यथा,—तैलं घृतं माक्षिकम्। तत्र तैलं स्नेहौष्ण्यगौरवयोगाद्वातं तद्विपरीतगुणं शमयति। सर्पिर्माधुर्यशैत्यमार्दवगुणयोगात्तद्विपरीतगुणं पित्तम्। मधु च रौक्ष्यतैक्ष्ण्यकषाययोगात्तद्विपरीतगुणं कफम्। यद्‌ वातादीन् दोषान् रसादीन् धातून् मूत्रादीन् मलांश्च कोपयति तत् कोपनम्। यथा यवक-पटल-माष-मत्स्याममूलक-सर्षप-मण्डक-दधि-किलाट-विरुद्धमत्स्यपयःप्रभृति। दोषादीनां मलपर्यन्तानां स्वप्रमाणस्थितानां साम्यानुवृत्तिहेतुर्यद्द्रव्यं तत् स्वस्थेभ्यो हितम्; यच्च स्वास्थ्यानुवृत्तिं करोति ऋतुचर्याध्याये सेव्यत्वेनोक्तम्; तथा मात्राशितीयाध्याये रक्तशालिषष्टिकयवगोधूमजाङ्गलमांसजीवन्तीशाकदिव्योदकक्षीरादि; तथा यदूर्जस्करं रसायनवाजीकरणं सर्वदा शीलनीयत्वेन निर्दिष्टम्। तस्य वीर्यमाह;—उष्ण इति। तत्र तस्मिन् द्रव्ये वीर्यं द्विविधम्। विंशतेर्गुणानां मध्याद्द्वावुष्णशीतौ तदुत्कर्षाद्वीर्यमिति सर्वायुर्वेदप्रसिद्धौ, द्वावेव गुणौ शीतोष्णौ वीर्यकरणहेतू। वीर्यं शक्तिः। उष्णगुणोत्कर्ष उष्णगुणातिशय एव कश्चिदुष्णवीर्याख्यां लभते। तथा शीतगुणोत्कर्षः शीतगुणातिशय एव शीतवीर्याख्याम्। यद्यपि नानात्मकमपि द्रव्यं तथाप्यग्नीषोमात्मकत्वाज्जगतो द्विधैव वीर्यम्। द्रव्यविपाकमाह;—त्रिधेति। विपाकस्त्रिविधः; सर्वद्रव्याणां परिणामकालभावी कार्यानुमेयो जाठराग्निसम्बन्धाद्रसस्य स्वरूपान्तरप्रादुर्भावः। स त्रिधैव। रसषट्त्वेऽपि न षोढा। तेन किञ्चित् स्वादुविपाकं किञ्चिदम्लविपाकं किञ्चित् कटुविपाकं द्रव्यम्। तत्र मधुरलवणयोर्मधुरो विपाकः; अम्लस्याम्लः; तिक्तकटुकषायाणां कटुकः। स च कार्यानुमेयः। तथा च वक्ष्यति;—'जाठरेणाग्निना योगाद्‌ यदुदेति रसान्तरम्। रसानां परिणामान्ते स विपाक इति स्मृतः"। अतएव सोपसर्गः पाकशब्द उपात्तः। विशिष्टः पाको विपाकः; न पाकमात्रस्वरूपः। तथाच भट्टारकचरकमुनिः;—"रसो निपाते द्रव्याणां विपाकः कर्म्मनिष्ठया। वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते"। एवं कर्म्मनिष्ठानुमित एकरूपावस्थो जाठराग्निसंयोगाद्‌ यो रसानां रसान्तरोद्भवः, स एव विपाको, न यो जाठराग्निसंयोगमात्राद्रसानामनेकावस्थः, प्राङ् मधुरोऽनन्तरं स एव पच्यमानोऽम्लत्वो विपच्यमानः स एव कटुविपाकः॥ १६॥

द्रव्यस्य गुणानाह;—गुर्विति। तत्र द्रव्ये गुर्वादयो दश गुणाः सविपर्यया विंशतिर्ज्ञेयाः। एषां क्रमाद्विपरीता लघुतीक्ष्णोष्णरूक्षखरद्रवकठिनसरस्थूलपिच्छिलाः। गुरुस्तद्विपर्ययो लघुः। मन्दस्तद्विपर्ययस्तीक्ष्णः। हिमस्तद्विपर्यय उष्णः। स्निग्धस-

गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः * ॥ १७ ॥
कालार्थकर्मणां योगा हीनमिथ्यातिमात्रकाः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १८ ॥
रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।
निजागन्तुविभागेन तत्र रोगा द्विधा स्मृताः ॥ १९ ॥

---

द्विपर्ययो रूक्षः । श्लक्ष्णस्तद्विपर्ययः खरः । सान्द्रस्तद्विपर्ययो द्रवः । मृदुस्तद्विपर्ययः कठिनः । स्थिरस्तद्विपर्ययः सरः । सूक्ष्मस्तद्विपर्ययः स्थूलः । विशदस्तद्विपर्ययः पिच्छिलः ॥ १७ ॥

रोगकारणमाह ;—काल इति । कालः शीतोष्णवर्षलक्षणस्त्रिविधः । अर्थाः शब्दस्पर्शरसरूपगन्धा महाभूतगुणाः । तथा चागमः ;—"अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः" । कर्म्म क्रिया, कायवाङ्मनश्चेष्टा । कालश्चार्थश्च कर्म्म च तानि कालार्थकर्म्माणि ; तेषां योगाः सम्बन्धाः, कालार्थकर्म्मणां योगाः ; किम्भूताः ? हीनमिथ्यातिमात्रकास्तथा सम्यग्योगश्चेति । ये कालादीनां योगा हीनमिथ्यातिमात्रकाः, ते रोगैककारणम् । तेषामेव यः सम्यग्योगः स आरोग्यैककारणं, प्रधानकारणमिति । एकशब्दः प्रधानवचनो यथा ;—"एकः पार्थो धनुर्द्धरः" । कालस्य हीनयोगः स्वरूपहानिः । मिथ्यायोगः स्वरूपाद्विपरीत्यम् । अतियोगः स्वरूपातिशयः । यथा,—हीनशीतता, हीनोष्णता, हीनवर्षता, हीनयोगे । शीतकालावसरेऽत्यौष्ण्यमुष्णकालावसरे शीतं वर्षाकालेऽवृष्टिर्मिथ्यायोगे । अतिशैत्यमतग्रौष्ण्यमतिवर्षणमतियोगे । एतद्योगत्रयं रोगकारणम् । सम्यग्योगो यथास्वरूपस्थितिरारोग्यकारणम् । अर्थानां पुनः स्वेन स्वेनार्थेनेन्द्रियस्य हीनः संयोगो हीनयोगः । पुरुषानभिमतादिनार्थजातेनेन्द्रियस्य योगो मिथ्यायोगः । अत्यन्तसंयोगोऽतियोगः । एते त्रयो रोगकारणम् । यथास्वं सम्यग्योग आरोग्यकारणम् । कायादिकर्म्मणो हीनप्रवृत्तिर्हीनयोगः । वेगोदीरणादिकं सामिभुक्तभाषणादिकं रागद्वेषादिकं च यथास्वमुत्तरत्र वक्ष्यमाणं मिथ्यायोगः । अतिप्रवृत्तिरतियोगः । सर्वेषां समा प्रवृत्तिः समयोगः । तेन हीनादयो योगास्त्रयो रोगकारणम् । सम्यग्योगस्त्वारोग्यकारणम् ॥ १८ ॥

रोगारोग्ये के उच्येते इत्याह ;—रोग इति । दोषाणां वातादीनां स्वप्रमाणादेकस्य द्वयोस्त्रयाणां वा वृद्धिः क्षयो वा रुजाकरत्वाद्रोग एव । वैषम्यं विषमता, स्वरूपाच्च्युतिः । ततः कार्य्यकारणयोरभेदेन पठितो रोग इति । दोषाणां साम्यं स्वरूपादप्रच्युतिः, समभावोऽरोगता, आरोग्यं, स्वास्थ्यमिति यावत् । तत्र तयो रोगारोग्ययो रोगा द्विधा निजागन्तुभेदेन । निजा वातादिदोषजन्मानः । आगन्तवो बाह्यहेतवः । तथा चाचार्य-

---

* इन्द्रियार्थव्यवायी च विकाशी चापरे गुणाः । व्यवायी देहमखिलं व्याप्य पाकाय कल्पते ॥ विकाशी विकशन् धातून् सन्धिबन्धान् विमुञ्चति । सरतीक्ष्णप्रकर्षौ तु केषाञ्चित् परिकल्पितौ । सत्त्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः । इत्यधिकः पाठः ।

तेषां कायमनोभेदादधिष्ठानमपि द्विधा।
रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ॥ २० ॥
दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम्।
रोगं निदानप्राग्रूप-लक्षणोपशयाप्तिभिः ॥ २१ ॥

---

वचनम् ;—"निजास्त्रिदोषोत्था बाह्यहेतुजास्त्वागन्तवः"। अनयोरियान्विशेषः ;—निजे रोगे वातादयः पूर्वं वैषम्यं गत्वा पश्चाद्व्यथामभिनिर्वर्तयन्ति। आगन्तवः पुनः व्यथापूर्वमेवोत्पद्यन्ते ; अनन्तरं तत्र वातादयः कुप्यन्तीति। अनेनोभयस्य निजागन्तुभेदभिन्नस्य व्याधेश्चेतःसन्तापकत्वं बोद्धव्यम् ॥ १९ ॥

यत एव देहमनसी रोगाधिष्ठानत्वेन स्थिते ; न केवलो देहो नापि केवलं मनः ; तस्मादतोऽनन्तरमिदमाह ;—तेषामिति। तेषां निजागन्तुकानां विकाराणां रोगाणां, कायमनोभेदेन द्विविधमधिष्ठानं स्थानम्। ज्वरास्रपित्तकासादीनां कायः, मदमूर्च्छायसन्न्यासग्रहभूतोन्मादापस्माररागद्वेषादीनां मनः। अधितिष्ठन्त्यस्मिन्नितिअधिष्ठानम्। कायः शरीरम्। मनश्चेतः। ननु कायिकानां रोगाणामुत्पत्तौ हेतवो वातादयो दोषाः प्रकुपिता उक्ताः, मानसानां च रोगाणां को हेतुः ? तदर्थमाह ;—रज इति। मनश्चेतस्तस्य रजस्तमसी दोषावुपप्लवावविद्यासम्भवौ। अत्र च प्राधान्यादादौ रजो निक्षिप्तम्। चशब्दः पवनादीनामप्युपसंग्रहार्थः। यस्मात्तेऽपि मनः संश्रितत्र विकुर्वते। समये हि षड् उन्मादा भवन्ति वातपित्तकफसन्निपाताधिविषनिमित्ताः। उदाहृताविति,—उदाहरणमात्रमुद्देशमात्रं वचनमात्रमवायुर्वेदशास्त्रे। रजस्तमसोर्न साकल्येन व्याकरणमनिलादोनामिव। ते खल्वत्र स्वभावस्थानादिभिः प्रकारैरशेषमुक्ता न तु रजस्तमसी ॥ २० ॥

रोगोपहतशरीरज्ञानोपायमाह ;—दर्शन इति। रोगोऽस्यास्तीति रोगी व्याधितः, तं दर्शनादिभिः परीक्षेत। दर्शनेन दृष्ट्या कासमेहाद्यार्तेषु पीतशुक्लवर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दितादिकम्। स्पर्शनेन हस्तकायस्पर्शेन ज्वरगुल्मविद्रध्याद्यार्त्तेषु, तथा शीतोष्णश्लक्ष्णस्पन्दे स्नक्ष्णखरस्पर्शादिकञ्च। प्रश्नेन पृच्छया शूलारोचकच्छर्दिहृद्दर्दत्वं सुच्छन्ददुश्छन्दत्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्रद्विष्टेष्टसुखदुःखानि चैतत्प्रातुरमुखात्परीक्षेत। रोगविशेषाधिगमोपायमाह ;—रोगमिति। रोगं निदानादिभिः पञ्चभिः परीक्षेत। निदानं कारणं हेतुरित्यनर्थान्तरम्। तच्चासन्नविप्रकृष्टभेदेन द्विधा। आसन्नमपि द्विविधम्,—आसन्नातत्रासन्नभेदेन। आसन्नं रूक्षलघुशीतादिद्रव्योपयोगः। अत्रासन्नं तु यतः समनन्तरमेव रोगोत्पत्तिः। यथा,—वातादयो दोषाः क्रुद्धाः। विप्रकृष्टं यदादिकाले ( रुद्रकोपादि ) ज्वरादीनाम् तथा हविःप्राश्यादि मेहकुष्ठादीनाम्। तेनैवंविधमर्थजातमेवंविधस्य गदस्य हेतुत्वेनोपदिष्टम्, एवंविधश्चोत्पन्नोऽतो निदानाज्ज्ञायते रोगः। प्राग्रूपं पूर्वरूपं भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठितस्य लक्षणमुद्वेगभूयुज्वरादिरामयो वातादिदोषविशेषेणालिङ्गितरूपाभासो येनावभासते, यथायथमल्पत्वाद्व्यक्तमस्फुट

भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ॥ २२ ॥
जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्वणम्।
साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥ २३ ॥
क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत्।
शोधनं शमनं चेति समासादौषधं द्विधा ॥ २४ ॥

---

लिङ्गं तत्प्राग्रूपम्। लक्षणं पुनस्तदेव प्राग्रूपादिलक्षणम्, येन सकलदोषविशेषालिङ्गितः स्फुटलिङ्गी व्याधिर्दृश्यते लक्ष्यते। उपशयः सुखानुबन्ध्याहारादुप्रयोगः। एवं-विधेनाहारादिकेन हि तस्य पीड़ा नाभूत् एवंविधेन चाभूत्, अत उपशयाज्ज्ञायतेऽयं रोग इति। स व्याधिसात्म्यः स्वास्थ्यहेतुः सुखावहः। आप्तिर्निर्वृत्तिः सम्प्राप्तिराग-तिर्जातिरित्यनर्थान्तरम्। एवं दुष्टेनैवं स्थानस्थितेनैवमनुगतेनानया कल्पनयैवंमार्गेण दोषेणेति परिकल्पनम्, अत आप्त्या ज्ञायतेऽयं रोग इति ॥ २१ ॥

उपशयादिप्रसङ्गे च देशकालावप्युपयुज्येते अतस्तावपि पठति;—भूमीति। इहा-स्मिन्नायुर्वेदशास्त्रे आचार्या द्विविधं द्विप्रकारं देशमाहुः कथयन्ति। भूमिभेदेन देहभेदेन च। देहदेशः शिरःपाण्यादिलक्षणः प्रसिद्धः ॥ २२ ॥

भूमिदेश उच्यते। जाङ्गलमिति। भूदेशं पुनस्त्रिधा त्रिप्रकारमादिशेत् वदेत्। तत्र जाङ्गलो देशोऽल्पोदकतरुपर्वतत्वेन वक्ष्यमाणलक्षणः, वातभूयिष्ठो वातप्रचुरः। तत्र जातौषधिखगपुरुषमृगादयो वातप्रधाना भवन्ति। प्रचुरोदकवृक्षो यो निर्वातो दुर्लभातपः सोऽनूप इति। स च कफप्रधानः। तज्जाश्चौषध्यादयः स्निग्धा भवन्ति। साधारणः पुनरुभयलक्षणो मध्यपतितो व्यामिश्ररूपः, स च सममलो वातादिसमदोषः। अत्र दोषा एव मलशब्देनोक्ताः। वक्ष्यति;—"देहस्य मलिनीकरणादाहारमलजाच्च मलाः" ॥ २३ ॥

भेषजस्य सम्यग्योगहेतुकालमाह;—क्षणादीति। कालो द्विविधः, क्षणादिलक्षणो व्याध्यवस्थालक्षणश्च। भेषजस्यौषधस्य योगं करोति, तदर्थसम्पादनसामर्थ्यं करोती-त्यर्थः। भेषजस्य योगो भेषजयोगः, तं करोति। क्षणादिः प्रसिद्धः। आदि-ग्रहणाल्लवत्रुटिमुहूर्तयामाहोरात्रपक्षमासर्त्वयनसंवत्सराणां परिग्रहः। क्षणादिकाल-स्योदाहरणम्। यथा,—"पूर्वाह्णे वमनं देयं मध्याह्ने तु विरेचनम्। मध्याह्ने किञ्चिदावृत्ते वस्तिं दद्याद्विचक्षणः"। व्याध्यवस्था सामनिरामम्रदुमध्यतीक्ष्णत्वेन; तद्योग्यौषधविस्पष्टिर्यथा;—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः। मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा" ॥ तथा;—"ज्वरे पेयां कषायांश्च सर्पिः क्षीरं विरेचनम्। षड़हं षड़हं युञ्ज्याद्वीक्ष्य दोषबलाबलम्"। तथा;—"मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा॥ अचिरज्वरितस्यापि भेषजं योजयेत्तदा"। असामावस्थायां तच्चौषधं द्विप्रकारमाह;—शोधनमिति। समासा-त्संक्षेपतो, यत्किञ्चिज्जगत्यौषधं सम्भवति, तदनेकप्रकारं सम्भवदपि देहस्थानतिक्रमात्सं-

शरीरजानां दोषाणां क्रमेण परमौषधम्।
वस्तिर्विरेको वमनं तथा तैलं घृतं मधु॥ २५॥
धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम्॥ २६॥
भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।
चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम्॥ २७॥
दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक्।

---

धगशमनलक्षणात् द्विधैवोक्तम्। एकं शोधनरूपमपरं शमनरूपमिति। शोधनं यत् कुपितान् दोषान् बहिर्निःसार्य रोगोपशमनं करोति। शमनं यत् स्वस्थानस्थितानामेव साम्यहेतुः॥ २४॥

औषधमुक्तं, तस्य विषयमाह;—शरीरेति। शरीरजानां वातादीनां क्रमेण यथासंख्येन परिपाठ्योद्देशनिर्देशेन, परमौषधं प्रधानौषधं वस्त्यादिवमनान्तं शोधनरूपं, तैलादि मध्वन्तं शमनरूपम्। तेन वातस्य वस्तिर्गुदप्रणिधेयस्नेहक्वाथादि परमौषधम्। पित्तस्य विरेको मुखपीतं गुदमार्गेणान्तःस्थितस्य निःसारणं परमौषधम्। कफस्य वमनं मुखेन पीतं तेनैव दोषस्य निःसारणं परमौषधम् इति शोधनरूपेण दोषाणामौषधम्। तैलादि तु शमनस्वरूपेणौषधम्। तथेति,—क्रमेणैव वातस्य तैलं, पित्तस्य घृतं, कफस्य माक्षिकं परमौषधं प्रधानमौषधमिति यावत्॥ २५॥

कायादिदेशमाश्रिता सर्वत्र सर्वमेव शरीरजातानां दोषाणां क्रमेण परमौषधमुक्तम्; अथ मानसयोर्दोषयोः किं तत्परमौषधं स्यादिति तदर्थमाह;—धीत्यादि। मनो-दोषयो रजस्तमसोः रोगविघ्नकारि धीधैर्यादिकं परमौषधम्। धीश्च धैर्यं चात्मादिविज्ञानं च तत्तथाविधम्। तत्र धीर्बुद्धिर्बाह्याध्यात्मिकानां भावानां हिताहितपरिच्छेदविभाग-कारिणी। धैर्यं धृतिश्चेतसः स्थिरत्वमचापलम्। येन प्रतिषिद्धेषु न प्रवर्त्तते, हितेषु च न सीदति। आत्मविज्ञानं योगाभ्याससमाधिना परमात्मस्वरूपविज्ञानम्। आदि-ग्रहणाज्ज्ञानविज्ञानस्मृतिदेशकालादीनां परिग्रहः। मनोदोषसमुत्थकामादिजरोगार्थः परशब्दो विशेषणत्वेन निर्दिष्टः॥ २६॥

एवं तावदनेन सकलचिकित्सितमुक्तं, तच्च पादचतुष्टययुक्तं कार्यकरं, तदर्थमाह;—भिषगिति। चिकित्सितस्य रोगोपशमलक्षणस्य पादचतुष्टयमङ्गचतुष्टयमुक्तम्, प्रत्येकं तच्चतुर्गुणम्, एवं षोडशगुणं चिकित्सितं भेषजं भिषजो भाषन्ते। भिषग्वैद्यः। तस्य च प्राधान्यादग्रे निर्देशः। तथा चागमः;—"योक्ता प्रयोक्ता शास्ता च प्रधानो भिषगत्र तु"। तथा सङ्ग्रहेऽपि। "वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थकाः। स्यादहीनानप्यात्तान् गुणवान् यत्र यापयेत्। चिकित्सायास्तसेवातः प्रधानं कारणं द्विदुः"॥ द्रव्याण्यौषधानि। उपस्थाता परिचारकः। रोगी आतुरः। एतत्पाद-चतुष्टयं निर्दिष्टमाचार्येण॥ २७॥

तेषां गुणानाह;—दक्ष इति। दक्षः कर्म्मणि चतुरः। तीर्थादुपाध्यायाद्विदिता-र्थशास्त्रो गृहीतः शास्त्रार्थो येन स तीर्थात्तशास्त्रार्थः, आगमप्रामाण्यस्वरूपः।

बहुकल्पं बहुगुणं सम्पन्नं योग्यमौषधम् ॥ २८ ॥
अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः।
आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ॥ २९ ॥
सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः।
अमर्म्मगोऽल्पहेत्वग्र-रूपरूपोऽनुपद्रवः ॥ ३० ॥

---

बहुशो दृष्टं कर्म्म येन चिकित्सालक्षणं स दृष्टकर्म्मा, अभ्यस्तकर्म्मा शतशश्चिकित्सितरोगः। शुचिः कायवाङ्मनोव्यापारैर्म्मलीमसैरपरामृष्टोऽलिप्सावान् अर्थोपजीविकाहेतोर्न करोति परं धर्म्मोपार्जनेनेति शुचिः। औषधमपि चतुर्व्विधम्;—बहुकल्पमिति। बहवः कल्पा यस्मिन् भवन्ति स्वरसक्वाथचूर्णाद्यास्तद्बहुकल्पं, व्याधीनां निवारणक्षमं न तु लवणवदेक-वाच्यम्। तद्धि सुखमुपयुज्यते। नानाशक्तयो हि सत्त्वाः। बह्वो गुणा यस्य गुरु-मन्दादयस्तद्बहुगुणम्। अथवा यदनेकरोगविनाशनसमर्थम्। सम्पन्नं सम्पत्तियुक्तं न विपन्नं प्रशस्तभूमिदेशजातम्। तथा च ग्रन्थः;—"धन्वसाधारणे देशे समे सुमृत्तिके शुचौ। श्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते" इति। प्रशस्तभूमिदेशजातादिगुणयुक्तम्। अथवा पाकसंस्कारादियुक्तम्। योग्यं दातुं यद्यत्रार्हति तच्च योग्यम्। व्याधिदेशकाल-दोषदूष्यदेहवयोबलादीन् ज्ञात्वा युज्यते दीयत इति तद्योग्यं रोगस्य रोगिणश्च ॥ २८ ॥

उपस्थातापि चतुर्विधः;—अनुरक्त इति। अनुरक्तो दृढ़भक्त आतुरस्य। शुचिः कायवाङ्मनोव्यापारैर्दुष्टैरपरामृष्टः। दक्षः सर्वचेष्टासु चतुरः। बुद्धिमान् विशिष्टया बुद्ध्या युक्तः, प्रवीण इति यावत्। रोगी अपि चतुर्विधः;—आढ्य इति। आढ्यो धनवान्। भिषग्वश्यो वैद्यायत्तस्तदुक्तकारी, ज्ञापको निदानादीनामावेदकः; वर्य्य रोगाहारविहारादीनामन्वयव्यतिरेकं बोधयितुं समर्थः। सत्त्ववान् धैर्य्ययुतो मोह-वर्जितः। धैर्य्येण प्रायश्चित्तवच्चिकित्सां करोति। अपि सम्भावनार्थे ॥ २९ ॥

सुखसाध्यादिकस्य व्याधिचतुष्टयस्य लक्षणमुच्यते;—सर्वाविति। सर्वौषधक्षमे देहे उत्पन्नो व्याधिः सुखसाध्यः सुखोपायः। तथा च ग्रन्थः;—"सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते"। सर्वाण्यौषधानि यः क्षमते सहते तीक्ष्णमध्यमृदुरूपाणि नाना-देशजानि शमनानि तथा शोधनरूपाणि तथा विषक्षारादीनि। यूनः वयःस्थस्य तरुणस्ये-त्यर्थः। पुंसो न स्त्रियः। पुंग्रहणं स्त्रीनिवृत्त्यर्थम्। यतस्तस्याः सर्वदा भीरुत्वमबुद्धिमत्त्वं च, अतो यथोक्तानुरूपगुणाभावः। सा तु यस्मात्तीक्ष्णौषधानि न सहते सौकुमार्य्यादि-योगात्। जितात्मनः अलोलुपस्य; जित आत्मा येन; विषयाभिलाषं परिहरतः। अमर्म्मगोऽमर्म्मस्थः। मर्म्माणि शिरोहृदयवस्तिप्रभृतीनि, तेषु गच्छतीति मर्म्मगः, न मर्म्मगोऽमर्म्मगः, हृत्कण्ठादिपीड़ाकरणासमर्थः। अल्पहेत्वग्ररूपरूप इति,—हेतुश्चाग्र-रूपं च रूपं च, तानि हेत्वग्ररूपरूपाणि, अल्पानि हेत्वग्ररूपरूपाणि यस्य स तथा-विधः। हेतुर्निदानम्। अग्ररूपं पूर्व्वरूपम्। रूपं लक्षणम्। एतानि अल्पानि यस्य। अनुपद्रव इति,—न विद्यते उपद्रवो यस्य, उत्पन्नस्य व्याधेरनन्तरं जायते योऽन्यो

अतुल्यदूष्यदेशर्त्तुप्रकृतिः पादसम्पदि।
ग्रहेष्वनुगुणेष्वेक-दोषमार्गो नवः सुखः ॥ ३१ ॥
शस्त्रादिसाधनः कृच्छ्रः सङ्करे च ततो गदः।

व्याधिः, तल्लक्षणभूतोऽप्रधानः, न यथास्वलक्षणस्तदुपक्रमनिरोधकः स उपद्रवः। तथा चागमः,—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः। उपक्रमविघाती च स ह्युपद्रव उच्यते"। अतुल्यदूष्यदेशर्त्तु प्रकृतिरिति,—दूष्यश्च देशश्च ऋतुश्च प्रकृतिश्च ता दूष्यदेशर्त्तु प्रकृतयः; अतुल्या दूष्यदेशर्त्तु प्रकृतयो यस्य। अतुल्या न सदृशाः। यथा दूष्य मेदोमज्जादौ, अनूपे देशे शीतर्त्तौ, आतुरो वातप्रकृतिस्तस्य कुपितं पित्तं सुखसाध्यमिति। अतुल्यदूष्यो यथा,—श्लेष्मणा शीतेन रक्तमुष्णं दूषितम्। अतुल्यदेशो व्याधिर्यथा,—अनूपदेशे पित्तसम्भूतः। अतुल्यर्तुर्यथा,—शरदि कफोद्भवः। अतुल्यप्रकृतिर्यथा,—पित्तप्रकृतेः श्लेष्मोद्भवो व्याधिः। नन्वतुल्यदूष्यदेशर्तु प्रकृतित्वादसौ कृच्छ्रसाध्यो याप्यो वा प्राप्तः, न सुखसाध्यः, अनेकसुखोपक्रमसाध्यत्वात्। यतो दूष्यादीनामतुल्यत्वात्परस्परमन्य एवोपक्रमः। एकसुखोपक्रमः सुखसाध्यो व्याधिः। अतएव साध्ययाप्यपरित्याज्या मेहाः श्लेष्मपित्तवातोत्थाः समासमक्रियतया महात्ययवत्तयापि चेत्येवं निर्दिशति। अत्रोच्यते। तथाप्रभावत्वात्प्रमेहाख्यस्य व्याधेर्यदुत श्लेष्ममेहः समक्रियत्वात्साध्यः, पित्तप्रमेहो विषमक्रियत्वाद्याप्यः, महात्ययत्वाच्च वातप्रमेहः प्रत्याख्येयः। किञ्चातुल्यदूष्यदेशर्तु प्रकृतित्वान्महारम्भो निष्प्रत्यनीको व्याधिर्जायतेऽतोऽसौ न सुखसाध्यः। कुत्रचिद्व्याधौ तुल्यदूष्यादिरपि सुखसाध्यत्वेन ज्यायान्। तथा च ग्रन्थः,—"ज्वरे तुल्यर्तु दोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः"। पादसम्पदि भिषगादीनां चतुर्णां पादानां सम्पत्सम्पद्धिस्तस्यां सत्यामङ्गचतुष्टये परिपूर्णे सति। ग्रहेष्वनुगुणेष्विति,—ग्रहाः सूर्यादयस्तेष्वनुगुणेष्वनुकूलराशिस्थितेषु शोभनस्थानगतेषु सत्सु। एकदोषमार्ग इति,—दोषश्च मार्गश्च दोषमार्गम्। एकं दोषमार्गं यस्य स तथोक्तः। दोषो वातादिः; मार्गस्त्रिविधः; शाखादिर्वक्ष्यमाणो वाह्याभ्यन्तरमध्यभेदेन। तेनैकेन वातादीनामन्यतमेन दोषेण यो जातो न द्वाभ्यां त्रिभिर्वा, तथैकेनापि मार्गेण वाह्येन मध्येनाभ्यन्तरेण वा जातो नवो न जरठः अचिरोत्पन्न इत्यर्थः। यस्माद्वत्सरातीता व्याधयोऽसाध्याः। स तथाविधो व्याधिः सुखेन साध्यते। तथा च ग्रन्थः—"सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते" ॥ ३०।३१ ॥

कृच्छ्रसाध्यं व्याधिमाह,—शस्त्रादीति। यो गदो रोगः शस्त्रादिसाधनः शस्त्रादिभिः साध्यते, स कृच्छ्रसाध्यः कृच्छ्रप्रतीकारो महद्भिरुपायैः साध्यते तथा चिरेण। तथा च ग्रन्थः,—"कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च"। आदिग्रहणेन क्षाराग्निकर्म्मविषलेपादयो गृह्यन्ते। तथा सङ्करे च ततः पूर्वोक्तात् साध्यलिङ्गात् सङ्कीर्णत्वे सति यो गद उत्पन्नः सोऽपि कृच्छ्रसाध्यः। च शब्दः समुच्चये। ततस्तस्मादुक्तसाध्यलक्षणाद् यः सङ्करे द्वित्रिविपर्य्यये सति स्थितः। तथा च युवा आतुरः किन्तु न विजितात्मा।

शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्यये ॥ ३२ ॥
अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये।
औत्सुक्यमोहारतिकृद् दृष्टरिष्टोऽक्षनाशनः ॥ ३३ ॥
त्यजेदार्त्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम्।
हीनोपकरणं व्यग्रमविधेयं गतायुषम्।

---

विजितात्मा वा किन्तु रोगी मर्म्मस्थानगः। सर्वौषधक्षमे देहे जातः किन्तु वृद्धः। कदाचिद् युवा न सर्वौषधक्षमो देहः। एवमनया दिशा सर्वमपूह्यम्। याप्योऽत उच्यते,—शेषत्वादिति। बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थः, पथ्यैराहारविहारैर्याप्यो यापनीयः, नासौ प्रत्याख्येयः। एतावानेवास्य प्रत्याख्येयाद्व्याधेर्विशेषः, यदायुःशेषत्वं याप्यस्य व्याधेरायुःशेषमात्रं वर्जयित्वा, यदन्यत्तत्सर्वं समानं, प्रायेणास्य च प्रत्याख्येयस्य व्याधेः। कस्य विपर्यये सति? प्रकृतत्वात् सुखसाध्यस्य। पथ्यैराहारविहारैः, अभ्यसनमभ्यासः, पुनः पुनः करणम्, तस्माद्धिताहारविहारसेवनाद्याप्यः, स च चिकित्सायामल्पं सुखं दत्त्वा पुनः सोऽल्पेनैव हेतुना प्रतन्यते। तथा च ग्रन्थ,—"दत्त्वाल्पं सुखमल्पेन हेतुना स प्रतन्यते। याति नाशेषतो रोगः कर्म्मजो नियतायुषः। प्रपतन्निव विष्कम्भैर्वार्यस्तत्रातुरो हितैः" ॥ ३२ ॥

प्रत्याख्येय उच्यते,—अनुपक्रम इति। न विद्यते उपक्रमः प्रतीकारो यस्यासावनुपक्रमोऽचिकित्स्यः प्रत्याख्येय इति यावत्। कोऽसावनुपक्रमः? योऽत्यन्तविपर्यये स्थितः। यो गदो (१) याप्यलक्षणादवशिष्टायुःशेषरूपादत्यन्तविपर्यये स्थितः, सर्वक्रियापथातिक्रान्तः, मज्जशुक्रादिगम्भीरधातुगतः, मर्म्मसन्धिसमाश्रितः, सोऽनुपक्रम एवाचिकित्स्यः, साधयितुमशक्यत्वात्। तथा औत्सुक्यादिकृदपि। औत्सुक्यं च मोहश्चारतिश्च ताः करोतीत्यौत्सुक्यमोहारतिकृत्। औत्सुक्यं गर्वादिविषयोत्कण्ठा, मोहो वैचित्यं चित्तनाशोऽज्ञानम्; अरतिरसुखं न कुत्रचिदवस्थितिः स्थानासनादिष्वनिर्वृतिश्चेतसः। एतावतो यः करोति सोऽनुपक्रमः। तथा दृष्टरिष्टोऽक्षनाशनः, दृष्टं रिष्टं मरणचिह्नं यस्मिन् स दृष्टरिष्टः; तथाऽक्षनाशन इति,—अक्षाणीन्द्रियाण्युच्यन्ते,—चक्षुरादीन्यपि नाशयति सोऽक्षनाशन इन्द्रियोपरोधो रोगोऽनुपक्रमो यः शीघ्रमिन्द्रियविघातकृत्। एवं पुरा परीक्ष्य व्याधिचिकित्सामारभेत। अन्यथाऽवश्यं स्वार्थादिहानिमवाप्नुयाद्वैद्यः। तथा च ग्रन्थः;—"व्याधिं पुरा परीक्ष्यैवमारभेत ततः क्रियाम्। स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्" ॥ ३३ ॥

साध्यलक्षणयुक्तोऽप्याऽऽतुरो नोपक्रमणीय इति दर्शयति,—त्यजेदिति। एवंविधमार्तमातुरमुपक्रम्यमपि त्यजेत् परिहरेत्। भिषग्भूपैर्द्विष्टं भिषग्भिस्तथा भूपै राजभिर्द्विष्टम्। वैद्या राजानश्च यं द्विषन्ति। तथा तेषां द्विषं शत्रुं भिषग्भूपान् यो द्वेष्टि

---

(१) अर्थात्—इति पाठान्तरम्।

चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ॥ ३४ ॥
तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसङ्ग्रहः ।
आयुष्कामदिनर्त्वीहा-रोगानुत्पादनद्रवाः ॥ ३५ ॥
अन्नज्ञानान्नसंरक्षा-मात्राद्रव्यरसाश्रयाः ।
दोषादिज्ञानतद्भेद-तच्चिकित्साद्युपक्रमः ॥ ३६ ॥
शुद्ध्यादिस्नेहनस्वेद-वम्यास्थापननावनम् ।
धूमगण्डूषदृक्सेक-तृप्तियन्त्रकशस्त्रकम् ॥ ३७ ॥
शिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः ।
सूत्रस्थानमिमेऽध्यायास्त्रिंशत् शारीरमुच्यते ॥ ३८ ॥
गर्भावक्रान्ति तद्व्यापदङ्गमर्मविभागिकम् ।

---

तमपि तत्त्यजेत्। द्विषं शत्रुं चात्मनः। हीनोपकरणमिति,—उपकरणविकलं हीनचिकित्साङ्गम्। व्यग्रं कार्यबहुलमन्यकार्यापेक्षिणं कार्यान्तरासक्तचेतसम्। अविधेयं भिषजः; तदाज्ञां यो न करोति तमपि तत्त्यजेत्। गतायुषं परिक्षीणजीवितम्। चण्डं सहसापकारकरणबुद्धिं क्रूरकर्म्माणम्। शोकातुरं स्त्र्यादिविरहोत्थेन शोकेन शुचार्त्तम्। भीरुं सभयम्। कृतघ्नं यः कृतोपकारोऽप्यपकारं करोति। वैद्यमानिनं अवैद्योऽपि यो वैद्यमिवात्मानं मन्यते, नैवौषधं (१) करोति मूढस्तमपि तत्त्यजेत् ॥ ३४ ॥

एवं च प्रथमेऽध्याये सकलतन्त्रार्णवस्य तात्पर्यं व्याख्यातम्, अनन्तरं सुखस्मरणार्थमध्यायनामसंग्रह उच्यते,—तन्त्रस्येति। तन्त्र्यन्ते धार्यन्तेऽनेनायुर्वेदार्था इति तन्त्र अध्यायानां संग्रहः संक्षेप एकत्रराशीकरणम् अतोऽनन्तरं सुखस्मरणाय मया वक्ष्यते;—आयुरिति। इमे पूर्वोक्तास्त्रिंशदध्यायाः सूत्रस्थानमुक्तम्। आयुष्कामश्च दिनर्त्वीहे च रोगानुत्पादनं च द्रवश्चेति द्वन्द्वः। ईहा चर्या चेष्टेत्येकोऽर्थः। तेन आयुष्कामीयो दिनचर्या ऋतुचर्या रोगानुत्पादनीयो द्रवद्रव्यविज्ञानीयोऽन्नस्वरूपविज्ञानीयोऽन्नसंरक्षामात्राशितीयो द्रव्यादिविज्ञानीयो रसभेदीयो दोषादिविज्ञानीयो दोषभेदीयो दोषोपक्रमणीयो द्विविधोपक्रमणीयः शोधनादिगणसंग्रहः स्नेहविधिः स्वेदविधिर्वमनविरेचनविधिर्वस्तिविधिर्नस्यविधिर्धूम-विधिर्गण्डूषविधिराश्चोतनाञ्जन-विधिस्तर्पणपुटपाकविधिर्यन्त्रविधिः शस्त्रविधिः शिराव्यधविधिः शल्याहरणविधिः शस्त्रकर्म्मविधिः क्षाराग्निकर्म्मविधिः। सूचनात् सूत्रम्। सूच्यतेऽनेन सकलस्तन्त्रार्थं इति सूत्रस्थानम्, सकलस्य तन्त्रस्य शिरःस्थानीयम्। अधुना शारीरमुच्यते, शारीरं शारीरस्थानम् ॥ ३५—३८ ॥

किन्नाम स्थानम्? अध्यायसंग्रहः। के पुनस्ते? तानाह,—गर्भेति। तत्र गर्भावक्रान्ति शारीरम्। तस्य व्यापत् तद्व्यापत्, तस्येति गर्भस्य परामर्शः, गर्भव्याप-

---

(१) स्वमतेनैवौषधम्—इति पाठान्तरम्।

विकृतिर्दूतजं षष्ठं निदानं सार्वरोगिकम् ॥ ३९ ॥
ज्वरासृक्कास्श्वासयक्ष्मादि-मदाद्यर्शोऽतिसारिणाम् ।
मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ।
पाण्डुकुष्ठानिलार्त्तानां वातास्रस्य च षोड़श ॥ ४० ॥
चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ।
वमौ मदात्ययेऽर्शःसु विशि द्वौ द्वौ च मूत्रिते ॥
विद्रधौ गुल्मजठर-पाण्डुशोफविसर्पिषु ।
कुष्ठश्वित्रानिलव्याधि-वातास्रेषु चिकित्सितम् ॥
द्वाविंशतिरिमेऽध्यायाः कल्पसिद्धिरतःपरम् ॥ ४१—४३ ॥
कल्पो वमेर्विरेकस्य तत्सिद्धिर्वस्तिकल्पना ।
सिद्धिर्वस्त्यापदां षष्ठो द्रव्यकल्पोऽत उत्तरम् ॥ ४४ ॥

---

च्छारीरम्। अङ्गविभागं शारीरम्। मर्मविभागं शारीरम्। विकृतिविज्ञानीयं शारीरम्। दूतविज्ञानीयं शारीरम्। एवमेते षड़ध्यायाः शारीरस्थानम्। निदानमुच्यते,—निदानमिति। सर्वरोगनिदानम्। ज्वरनिदानम्। रक्तपित्तकासनिदानम्। श्वासहिक्कानिदानम्। राजयक्ष्मादिनिदानम्। मदात्ययादिनिदानम्। अर्शोनिदानम्। अतिसारग्रहणीदोषनिदानम्। मूत्राघातनिदानम्। प्रमेहनिदानम्। विद्रधिवृद्धिगुल्मनिदानम्। उदरनिदानम्। पाण्डुशोफविसर्पनिदानम्। कुष्ठश्वित्रक्रिमिनिदानम्। वातव्याधिनिदानम्। वातशोणितनिदानम्। इत्येवं षोड़शाध्याया निदानस्थानम् ॥ ३९। ४० ॥

चिकित्सितमुच्यते,—चिकित्सितमिति। चिकित्सितस्थानं द्वाविंशतिरध्यायाः। ज्वरचिकित्सितम्। रक्तपित्तचिकित्सितम्। कासचिकित्सितम्। श्वासहिक्काचिकित्सितम्। राजयक्ष्मचिकित्सितम्। छर्दिहृद्रोगतृष्णाचिकित्सितम्। मदात्ययचिकित्सितम्। अर्शश्चिकित्सितम्। अतीसारचिकित्सितम्। ग्रहणीचिकित्सितम्। मूत्राघातचिकित्सितम्। प्रमेहचिकित्सितम्। विद्रधिवृद्धिचिकित्सितम्। गुल्मचिकित्सितम्। उदरचिकित्सितम्। पाण्डुरोगचिकित्सितम्। श्वयथुचिकित्सितम्। विसर्पचिकित्सितम्। कुष्ठचिकित्सितम्। श्वित्रक्रिमिचिकित्सितम्। वातव्याधिचिकित्सितम्। वातशोणितचिकित्सितम्। इमे द्वाविंशतिरध्यायाश्चिकित्सितस्थानम्। अतऊर्द्ध्वं कल्पस्थानम् ॥ ४१—४३ ॥

कल्प इति। अत्र कल्पे वमनकल्पः। विरेचनकल्पः। वमनविरेचनव्यापत्सिद्धिः। वस्तिकल्पः। वस्तिव्यापत्सिद्धिः। षष्ठो भेषजकल्पः। इत्येवं षड़ध्यायाः कल्पसिद्धिस्थानम्। अत उत्तरं अतोऽस्मात्कल्पसिद्धिस्थानादूर्द्ध्वमुत्तरतन्त्रम् ॥ ४४ ॥

बालोपचारे तद्बाधौ तद्ग्रहे द्वौ च भूतगौ।
उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु सन्धिषु ॥ ४५ ॥
दृक्तमोलिङ्गनाशेषु त्रयो द्वौ द्वौ च सर्वगौ।
कर्णनासामुखशिरो-व्रणे भग्ने भगन्दरे ॥ ४६ ॥
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग् द्वयम्।
विषे भुजङ्गे कीटेषु मूषकेषु रसायने ॥ ४७ ॥
चत्वारिंशोऽनपत्यानामध्यायो बीजपोषणः।
इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम् ॥ ४८ ॥

इत्यष्टाङ्गहृदयेसूत्रस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

बालोपचार इत्यादि। बालोपचरणीयः। बालामयप्रतिषेधः। बालग्रहप्रतिषेधः। भूतविज्ञानीयः। भूतप्रतिषेधः। उन्मादप्रतिषेधः। अपस्मारप्रतिषेधः। वर्त्मरोगविज्ञानीयः। वर्त्मरोगप्रतिषेधः। सन्धिसितासितरोगविज्ञानीयः। सन्धिसितासितरोगप्रतिषेधः। दृष्टिरोगविज्ञानीयः। तिमिरप्रतिषेधः। लिङ्गनाशप्रतिषेधः। सर्वाक्षिरोगविज्ञानीयः। सर्वाक्षिरोगप्रतिषेधः। कर्णरोगविज्ञानीयः। कर्णरोगप्रतिषेधः। नासारोगविज्ञानीयः। नासारोगप्रतिषेधः। मुखरोगविज्ञानीयः। मुखरोगप्रतिषेधः। शिरोरोगविज्ञानीयः। शिरोरोगप्रतिषेधः। व्रणविज्ञानीयप्रतिषेधः। सद्योव्रणप्रतिषेधः। भग्नप्रतिषेधः। भगन्दरप्रतिषेधः। ग्रन्थ्यर्बुदश्लीपदापचीनाड़ीविज्ञानीयः। ग्रन्थ्यर्बुदश्लीपदापचिनाड़ीप्रतिषेधः। क्षुद्ररोगविज्ञानीयः। क्षुद्ररोगप्रतिषेधः। गुह्यरोगविज्ञानीयः। गुह्यरोगप्रतिषेधः। विषप्रतिषेधः। सर्पविषप्रतिषेधः। कीटलूतादिविषप्रतिषेधः। मूषिकालर्कविषप्रतिषेधः। रसायनाध्यायः। वाजीकरणाध्यायः। इति एवमेते चत्वारिंशदध्यायाः उत्तरतन्त्रम्। तदिति बालस्य परामर्शः। द्वौद्वाविति। वर्त्मनि द्वौ सन्धौ द्वौ यथासङ्ख्येन। त्रय इति। दृक्तमोलिङ्गनाशेषु प्रत्येकमेकैकः (१)। ग्रन्थ्यादिक्षुद्ररोगगुह्यरोगेषु पृथक् द्वयं प्रत्येकं द्वौ द्वौ। अनपत्यानामप्रजानां पुंसां चत्वारिंशोऽध्यायो बीजपोषणः शुक्रवृद्धिहेतुरिति। इत्येवमनेन प्रकारेण सविंशमध्यायशतं षड्भिः स्थानैः सूत्रशारीरनिदानचिकित्साकल्पसिद्ध्युत्तरतन्त्रैरुदीरितमुक्तमिति ॥ ४५—४८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने आयुष्कामीयोऽध्यायः प्रथमः ॥ १ ॥

---

(१) तमस्तिमिरम्; लिङ्गनाशः पटलम्; द्वौ द्वाविति सर्वाक्षिरोगात् प्रभृति व्रणपर्य्यन्तेषु द्वौ द्वौ विज्ञेयौ; भग्नभगन्दरयोरेकैकः।

# अथ द्वितीयोऽध्यायः ।

अथातो दिनचर्याध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥ २ ॥
अर्कन्यग्रोधखदिर-करञ्जककुभादिकम् ।
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥

---

अथात इति । अथेति सर्वेष्वध्यायेषु मङ्गलार्थः । तथा अत इत्यानन्तर्ये प्रस्तुताभिसम्बन्धे वा । अथेत्यादिशब्दानां पूर्वाध्याये वर्णित एवार्थः । माङ्गलिको ह्याचार्यः प्रत्यध्यायारम्भे मङ्गलार्थमथशब्दं प्रयुङ्क्ते । दिने दिने चर्या, दिनचर्या ; दिनस्य वा चर्या दिनचर्या । चरणं चर्या, उभयलोकहितमाहारविहारचेष्टितमिति यावत् ; प्रतिदिनं यत् कर्त्तव्यम् । दिनचर्या यस्मिन्नध्यायेऽस्तीति पूर्ववत् छप्रत्ययमुत्पाद्य तल्लोपे प्रकृतिभावस्य प्रतिपाद्य दिनचर्येति निष्पाद्यते । तमध्यायं व्याख्यास्यामः । प्रस्तुतादायुष्कामीयादध्यायादनन्तरम् । कोऽस्य सम्बन्धः ? उच्यते ;—यस्मादायुष्कामेन पुरुषेण यत् प्रधानमायुष्यं तदासेव्यं प्रथमतस्तदनु अन्यानि यान्यायुष्याणि । अतः प्रथमं तावदाचारप्रधानेन भवितव्यम् । यत आचारादायुर्लभत इत्याचार्याः । यद्यप्यत्र रात्रिचर्यापि विहिता तथापि प्राधान्याद्दिनचर्याऽस्मिन्नध्याये निर्दिष्टा । अतो दिनचर्याध्यायोऽयमुच्यते ॥ १ ॥

अस्मिंस्तन्त्रे आयुःपालनं प्रकृतम् । तद् द्विविधम् । स्वस्थवृत्तमातुरवृत्तं च । तत्र मङ्गल्यत्वात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते ;—ब्राह्मे इत्यादि । रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्तः, विषुवति समरात्रिन्दिवे काले द्विघटिकालक्षणः । मुहूर्तस्य चेह द्विघटिकोपलक्षणार्थत्वात् सर्वस्मिन् काले रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति स्थितम् । स्वस्थो नीरोगकल्पः स आयुषो यथोपचरितस्य जीवितस्य रक्षार्थं ब्राह्मे मुहूर्त्ते उत्तिष्ठेदभ्युत्थानं कुर्यात् । मुहूर्तो नाड़िकाद्वयम् । ब्रह्म ज्ञानं, तदर्थमध्ययनाद्यपि ब्रह्म ; तस्य योग्यो मुहूर्तो ब्राह्मः पश्चिमयामस्य नाड़िकाद्वयम्, तस्मिन् ब्राह्मे मुहूर्ते उत्तिष्ठेत् । किम्भूतः ? स्वस्थोऽनातुरः । "समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते" इति स्वस्थलक्षणम् । किमर्थमुत्तिष्ठेत् ? रक्षार्थमायुषो जीवितस्य । तदा ह्युत्तिष्ठतो व्याध्यलक्षणाद्यभावे एवायुषो रक्षा भवति । आतुरेण धातुसाम्यार्थं स्वप्तव्यमेव । शरीरस्य चिन्ता शरीरचिन्ता, जीर्णाजीर्णनिरूपणादिका, तां निर्वर्त्य ततो मूत्रपुरीषादेः कृतशौचविधानः, ततोऽनन्तरं दन्तपवनमर्कादिकं भक्षयेत् । संग्रहेऽप्युक्तम् ;—"ब्राह्मे मुहूर्तउत्तिष्ठेज्जीर्णाजीर्णे निरूपयन्" इत्यादि ।

भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥ ३ ॥
नाद्यादजीर्णवमथु-श्वासकासज्वरार्दिती।
तृष्णास्यपाकहृन्नेत्र-शिरःकर्णामयी च तत् ॥ ४ ॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् *।
चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मणो भयम्।
योजयेत् सप्तरात्रेऽस्मात् स्रावणार्थं रसाञ्जनम् ॥ ५ ॥
ततो नावनगण्डूष-धूमताम्बूलभाग् भवेत् ॥ ६ ॥

---

अर्कः सूर्याह्वः। न्यग्रोधो यक्षावासः। खदिरो गायत्री। करञ्जश्चिरिबिल्वः। ककुभोऽर्जुनः। आदिग्रहणेन मालतीकरवीरादिग्रहः। कथं भक्षयेत्? दन्तानां मांसान्यबाधयन्नपीडयन्। प्रातः प्रत्युषसि, भुक्त्वा च आहारं भक्षयित्वा च। मृद्वग्रं कूर्चिताग्रम्। तथा कषायकटुतिक्तकम्। रसत्रयेण ह्यनेन मुखवैशद्यारोचकश्लेष्मापनयाः सम्यक् सम्पद्यन्ते। अर्कादुग्रपादानादेव कषायादित्वे लब्धे, कषायादिग्रहणं संग्रहादिगृहीतस्य संग्रहार्थं स्पष्टार्थं च। अर्कादिग्रहणमुदाहरणार्थं ज्ञेयम्। संक्षेपविवक्षया न दन्तधावनस्य गुणसंग्रहः। द्वादशाद्यङ्गुलप्रमाणत्वं श्लेष्मातकाद्यनिष्टदन्तपवननिषेधश्च तन्त्रान्तरोक्तमपि नेहोक्तम्। सुश्रुतेनोक्तम्;—"अजग्धमनुपक्लिष्टं यदृष्टद्वादशाङ्गुलम्। प्रदेशिनीमुखसमं मृदु स्याद्दन्तधावनम्" ॥ २।३ ॥

नाद्यादिति। अजीर्णादीनां द्वन्द्वः। एतानि विद्यन्ते यस्येति "अत इनिठनौ" इति इनिः। एवं तृष्णास्येत्यादौ द्वन्द्वादिनिश्च। तद्दन्तपवनमजीर्णी न भक्षयेत्। एवं वमथ्वादीनां मत्वर्थीयान्तानां सम्बन्धो योज्यः ॥ ४ ॥

सौवीरेति। ततो दन्तधावनभक्षणानन्तरं सौवीराख्यमञ्जनं नित्यं भजेत्। कस्मात्? यतो हितमक्ष्णोः। अस्मात् कारणात् स्रावणार्थे सप्तरात्रे सति रसाञ्जनं दार्वीक्वाथसमुद्भवाख्यं योजयेत्। यस्माच्चक्षुस्तेजोमयमाग्नेयम्। यद्यपि पञ्चमहाभूतात्मकं सर्वमपि तथापि बाहुल्येन व्यपदेशात् तेजोमयमुच्यते। अतएव तद्रूपाख्यालोचयति। तथा च लोके कश्चिदाह;—"नरपतिरिति" इति न चासौ नराणामेव प्रतिः, किं तर्हि? नारीणामपीति। तस्य चक्षुषो वातपित्ताभ्यामपि भयमस्ति, विशेषेण तु कफाद्भयम्, ततो रसाञ्जनं योजयेत् ॥ ५ ॥

तत इति। नावनादीनां नस्यादिविधिषु गुणा वक्ष्यमाणा विधानं च। ताम्बूलस्य तु वैशद्यारुचिहरत्वसौगन्ध्यादिगुणाः प्रसिद्धा एव। नावनादीनां ताम्बूलान्तानां द्वन्द्वः। ततोऽञ्जनादनन्तरं नावनगण्डूषधूमताम्बूलानि भजते यः, स एवंविधो भवेत्। "भजो ण्विः" इति ण्विः ॥ ६ ॥

---

* लोचने भवतस्तेन सुस्निग्धघनपक्ष्मणी। व्यक्तत्रिवर्णे विमले मनोज्ञे सूक्ष्मदर्शने ॥
इत्यधिकः पाठः।

ताम्बूलं क्षतपित्तास्र-रूक्षोत्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्त्तानामपथ्यं शोषिणामपि ॥ ७ ॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ।
दृष्टिप्रसादपुष्ट्यायु:स्वप्नसुत्वक्त्वदार्ढ्यकृत् ॥ ८ ॥
शिर:श्रवणपादेषु तं विशेषेण शीलयेत् । *
वर्ज्योऽभ्यङ्ग: कफग्रस्त-कृतसंशुद्ध्यजीर्णिभि: ॥ ९ ॥
लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदस: क्षय: ।
विभक्तघनगात्रत्वं व्यायामादुपजायते ॥ १० ॥
वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ।
अर्धशक्त्या निषेव्यस्तु बलिभि: स्निग्धभोजिभि: ॥ ११ ॥

येषां तु ताम्बूलमपथ्यं तानाह,—ताम्बूलमिति । क्षतं विद्यते येषां ते क्षता: । अर्शआदित्वादच् । एवं पित्तास्रा: । उत्कुपितमभिष्यन्नं चक्षुरेकं द्वे वा येषां ते । ये च (१) क्षताश्च पित्तास्राश्च रूक्षाश्चोत्कुपितचक्षुषश्च तेषामपथ्यमहितम् । तथा विषार्त्तानां मूर्च्छार्त्तानां मदार्त्तानां शोषिणां च, इत्यत्रापिशब्दस्यार्थ: । शोषिणो राजयक्ष्मिण: ॥ ७ ॥

तदेतत् सर्वं विधाय भोजनासन्ने कालेऽभ्यङ्ग आचरणीय इत्याह,—अभ्यङ्गेति । अभ्यङ्गं नित्यं सततमाचरेत् । नित्यग्रहणं चोपलक्षणार्थम् । एकद्वित्रिदिनान्तरमपि यथोचितमाचरतोऽपि न दोष: । सोऽभ्यङ्ग आचर्यमाण: जरा च श्रमश्च वातश्च तान् हन्तीति क्विप् । तथा दृष्टीत्यादि । दृष्टे: प्रसादो वैमल्यं दृष्टिप्रसाद: । शोभना चासौ त्वक्, तस्या भाव: सुत्वक्त्वम् । दृढस्य भावो दार्ढ्यम् । दृढादिभ्य: ष्यञ् । दृष्टिप्रसादादीनां द्वन्द्व: । तानि करोति योऽभ्यङ्ग: स एवम् । शिर इति । तमभ्यङ्गं शिर:श्रवणपादेषु विशेषेणातिशयेन शीलयेदभ्यसेदिति वचनाच्चावश्यं न तथा सर्वशरीरेऽभ्यङ्ग: कार्य:, यथैतेषु शिर:श्रवणपादेषु । अत्र च पूर्ववदेकत्वाभाव: । अथैतदपवादमाह,—वर्ज्य इति । अभ्यङ्गो वर्ज्यो वर्जनीय: । कफग्रस्तेन कृतसंशुद्धिना अजीर्णिना च ॥ ८।९ ॥

लाघवमिति । शरीरायासजननं कर्म व्यायाम: । तस्मात् पञ्च गुणा लाघवादयो निष्पद्यन्ते । विभक्तानि विभागेन स्थितानि घनानि गात्राणि यस्य स विभक्तघनगात्रस्तस्य भावस्तत्त्वमिति ॥ १० ॥

इदानीं येनासौ न कार्यस्तं दर्शयति,—वातेति । वातपित्तामयी बाल आषोड़शाद्वर्षात्, वृद्ध: सप्ततेरूर्द्ध्वम्, अजीर्णी च तं जह्यात् । तु: अवधारणे । बलवद्भि:

* स केश: कथितो मूर्ध्नि कपालेन्द्रियतर्पण: ।—इति क्वचिदधिक: पाठ: ।

(१) एवं—इति पाठान्तरम् ।

शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ।
तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः ॥ १२ ॥
तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ १३ ॥
व्यायामजागराध्वस्त्री-हास्यभाष्यादिसाहसम् ।
गजं सिंह इवाकर्षन् भजन्नति विनश्यति ॥ १४ ॥
उद्वर्तनं कफहरं मेदसः प्रविलापनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥ १५ ॥
दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ।
कण्डूमलश्रमस्वेद-तन्द्रातृड्दाहपाप्मजित् ॥ १६ ॥

---

पुरुषैः स्निग्धभोजिभिरर्द्धशक्त्यैव निषेव्यो व्यायामः । प्राक् श्रमाद् व्यायामवर्जनं कार्यमित्यर्थः ॥ ११ ॥

कदासौ विधातव्य इत्याह,—शीतेति । हेमन्ते शिशिरे, वसन्ते च सेव्यः । शीतवसन्ताभ्यामन्यदा मन्दमेव सेव्यः । मन्दमिति क्रियाविशेषणम् । क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्तव्येति । तं व्यायामं कृत्वा अनुसुखं यथा शरीरे बाधा न स्यात् तथा देहं मर्दयेत् । समन्ततः परितः ॥ १२ ॥

तृष्णेति । अतिव्यायामतस्तृष्णादयो भवन्ति । तृष्णेति पृथक् पदम् ॥ १३ ॥

अतिव्यायामप्रसङ्गेनातिजागरादीनामपि व्यापदो दर्शयति,—व्यायामेति । व्यायामादीनां भाष्यान्तानां द्वन्द्वः । तान्यादिर्यस्य साहसस्य धनुराकर्षणादेस्तद्देवम् । अयथा-बलमारम्भः साहसम्, तद्भजन् सेवमानो विनश्यति । क इव ? सिंह इव गजमति महाबलमाकर्षन्नाक्रामन् यथा विनश्यति तथा अयथाबलमारम्भेण व्यायामादिना नरो म्रियत इति ॥ १४ ॥

उद्वर्त्तनमिति । उद्वर्त्तनस्य कफहरादयश्चत्वारो गुणाः ॥ १५ ॥

दीपनमिति । स्नानं दीपनं वृष्यमायुष्यं च भवति । ऊर्जा उत्साहः । प्राणनम् । एते प्रददाति करोतीति यत्तदेवम् । कण्डूतृडादि—कण्ड्वादीनां द्वन्द्वः । एतान् जयति । स्नानस्य प्रभावादायुष्यत्ववृष्यत्वदीपनत्वानि बोद्धव्यानि । अथवा स्नानेन प्रहर्षो भवति । हर्षणत्वाच्च वृष्यत्वम् । तथा च वक्ष्यति ;—"यत् किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्द्धनम् । मनसो हर्षणं यच्च तत् सर्वं वृष्यमुच्यते" इति । तथा स्नानं जाठराग्नेर्बहिर्निर्गतानि रोमकूपाश्रितान्यर्चींषि रुद्ध्वाऽन्तर्नयति, ततश्चाग्निः प्रबलत्वं कुर्वन् दीपनं सम्पद्यते । यथा शीतकाले शीतानिलस्पर्शसंरुद्धस्य जाठराग्नेः प्रबलत्वम् । बालादितन्त्रेऽप्युक्तम् ;—"स्नानेन भ्राजकाख्यं त्वगाश्रितं पित्तमन्तः प्रविश्योष्माणं संवर्द्धयति तेन तद्दीपनम्" । अतएव परिषेके जलमुष्णमिष्यते ।

उष्णाम्बुनाधःकायस्य परिषेको बलावहः ।
तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषाम् ॥ १७ ॥
स्नानमर्द्दितनेत्रास्यकर्णरोगातिसारिषु ।
आध्मानपीनसाजीर्ण-भुक्तवत्सु च गर्हितम् ॥ १८ ॥
जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्बलात् ।
न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयम् ॥ १९ ॥
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
सुखं च न विना धर्मात् तस्माद्धर्मपरो भवेत् ॥ २० ॥

---

यस्माच्छीतं निर्वापयति तेजो न देहस्यान्तः प्रवेशयति । शीतकाले यच्छीतानिलस्पर्श-संरुद्धस्याग्नेः प्रबलत्वं तत्काल एव तस्मिन्, कालस्वाभाव्यादिति बोद्धव्यम् । तथा चान्यर्त्तौ शीते सति मन्दाग्नित्वमेव दृश्यते । यथा वर्षास्वग्निमान्द्यादेवान्तर्बहिर्वह्नि-सन्धुक्षणं भोजनं समुपदिष्टम् । तथा च मुनिः ;—"व्यक्ताम्ललवणस्नेहं वातवर्षा-कुलेऽहनि । विशेषशीते" इत्यादि ॥ १६ ॥

उष्णाम्बुनेति । उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः प्राणकृत् । तेनैवोष्णो-दकेनैवोत्तमाङ्गस्य शिरसः परिषेको विधीयमानः केशचक्षुषां बलहृत् । प्राण्यङ्गानां समाहार एव द्वन्द्व इत्यस्य प्रायिकत्वात् केशचक्षुषामित्युपपन्नमेव ॥ १७ ॥

स्नानं येषामपथ्यं तान् दर्शयितुमाह,—स्नानमिति । नेत्रे चास्यं च कर्णौ च तत्र रोगाः । अर्द्दितं च नेत्रास्यकर्णरोगाश्चातिसारश्च ते विद्यन्ते येषां ते एवम् । अर्द्दितेषु गर्हितमहितम् । एवं शेषेषु योज्यम् । अर्द्दितादीनां द्वन्द्वस्ततो मतुप् । तेनार्द्दितादिमत्सु गर्हितमिति योज्यम् । एवं शेषेष्वपि ॥ १८ ॥

जीर्ण इति । जीर्णे सम्यक्परिणते पूर्व्वं आहारे अद्यात् भुञ्जीत । किमद्यात् ? हितं पथ्यम् । मितं मात्रया युक्तम् । पथ्यमपि ह्यतिमात्रं हीनमात्रं वा भुक्तं दोषाय स्यादतो मितम् । न वेगानित्यादि । वातविण्मूत्रादीनां सम्बन्धिनो वेगानुन्मुखी-भूतानपि बलान्नेरयेन्न प्रवर्त्तयेत् । नवेगित इत्यादि । सञ्जातवातविण्मूत्रवेगस्तमकृत्वा नान्यकार्यः स्यात् । नान्यत् कार्यं कुर्यादित्यर्थः । नाजित्वेत्यादि । साधयितुं शक्यः साध्यस्तं रोगमजित्वा नान्यकार्यः स्यादिति योज्यम् । स ह्युपेक्षितो दुःसाध्योऽसाध्यो वा स्यात् । साध्यशब्दोपादानादसाध्यामयं प्रति यत्नो न कार्यश्चिकित्सानैष्फल्यादिति द्योतयति ॥ १९ ॥

सुखार्था इति । सर्वभूतानामशेषप्राणिनां यस्मात् सुखार्थाः प्रवृत्तयः कर्म्माणि मता अभिप्रेताः । सुखं च शर्म्माख्यं धर्म्माद्विना न भवति, तस्मात् कारणाद्धर्म्मपरो धर्म्मप्रधानः स्यात् । धर्म्मादिति पृथग्विनेति पञ्चमी ॥ २० ॥

भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ॥ २१ ॥
हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ॥
सम्भिन्नालापव्यापादमभिध्यादृग्विपर्ययम् ।
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ २२ ॥
अवृत्तिव्याधिशोकार्त्ताननुवर्त्तेत शक्तितः ।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥ २३ ॥
अर्चयेद्देवगोविप्र-वृद्धवैद्यनृपातिथीन् ।
विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत् ॥ २४ ॥
उपकारप्रधानः स्यादपकारपरेऽप्यरौ ।

---

भक्त्येत्यादि । कल्याणे शुभकर्म्मणि मित्राणि सहायाः उपदेशादिना कल्याणमित्राणि, तानि भक्त्या अदम्भमतिः सन् भजेत् । इतराणि कल्याणमित्रापेक्षया इतराणि पापमित्राणि, तेभ्यो दूरगस्तद्वर्जनपरः । तत्सङ्गो हि दृष्टादृष्टानर्थकरः । दूरग इत्यस्माद् दूरे स्थितः । हिंसा प्राण्युपघातः । स्तेयं चौर्यम् । अन्यथाकामो निषिद्धकामसेवा गुरुदारगमनादि । एतत् त्रिविधं कायिकं पापं कर्म्म । पैशुन्यं परेषां भेदलङ्घनम् । परुषममृदुवचनम् । अनृतमसत्यवचनम् । सम्भिन्नालापोऽसम्बद्धप्रलपनम् । चतुर्विधमेतद्वाचिकम् । व्यापादः प्राण्युपघातचिन्ता । अभिध्या परगुणाद्यसहिष्णुता । दृग्विपर्ययं शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वादिति । त्रिविधमेतन्मानसम् । तदेतद्धिंसादि दशधा पापं कर्म्म कायवाङ्मानसैस्त्यजेन्न कुर्यादित्यर्थः ॥ २१।२२ ॥

अवृत्तीति । न विद्यते वृत्तिर्येषां तानवृत्तीन् । शक्त्या यथासामर्थ्यमनुगच्छेत् । तथा व्याधिना शोकेन चार्त्तांश्च । कीटान् पिपीलिकांश्चात्मवत् पश्येत्, स्वशरीरतुल्यानित्यर्थः । किमु सतोऽमानुषान् वा—कीटपिपीलिकमप्यात्मवत् पश्येदित्यपिशब्दस्यार्थः । कीटपिपीलिकमिति "क्षुद्रजन्तवः" इत्येकत्वम् ॥ २३ ॥

अर्चयेदिति । देवादीनां द्वन्द्वः । देवादीनर्चयेत् । वृद्धाः ज्ञानवृद्धाः शीलतपोवृद्धाश्च । नृपो राजा । अतिथिरसमानग्रामी वैश्वदेवान्ते समुपस्थितः । अर्थिनो याचकान् प्रत्याख्यानेन विमुखान्न कुर्यात् । नावमन्येत । नावमानयेन्न च परुषवचनादिना आक्षिपेत् परिभवेत् ॥ २४ ॥

उपकारेति । अरौ शत्रावपकारपरेऽपि सत्युपकारप्रधानः स्यात् । ननु रिपुरपकारक एव, तत् किमपकारक इति विशेषणेन ? तथा च भावः ;—"उपकर्त्तारिणा सन्धिर्न मित्रेणापकारिणा । उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" । न हि सर्वदैवारिरपकारं कर्त्तुं शक्तः स्यात्, किं तर्हि ? कदाचिदेव । हेत्वधीनत्वादपकारकारित्वस्य । वातादिदोषवत् । यथा वातादयो दोषा दूषणस्वभावा अपि सन्तः, कदाचिद्विकारकत्वे समर्था भवन्ति कदाचिन्नैव । दोषत्वं सर्वदैव तेषाम् ।

सम्पद्विपत्स्वेकमना हेतावीर्ष्येत् फले न तु ॥ २५ ॥
काले हितं मितं ब्रूयादविसंवादि पेशलम् ।
पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः ॥ २६ ॥
नैकः सुखी न सर्वत्र विश्रब्धो न च शङ्कितः ॥ २७ ॥
न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ।
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः ॥ २८ ॥
जनस्याशयमालक्ष्य यो यथा परितुष्यति ।
तं तथैवानुवर्तेत पराराधनपण्डितः ॥ २९ ॥
न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ।
त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ॥ ३० ॥

---

तस्मादपकार इति युक्तं विशेषणम् । अपकारिष्वुपकारकः स्यात्, किं पुनरुपकारकष्वत्रापि शब्दार्थः । सम्पत्सु विपत्सु चैकमनाः समचित्तः । सम्पत्सु विपत्तेन, विपत्सु विषादिना न भाव्यमित्यर्थः । हेतावित्यादि । हेतौ कारणे ईर्ष्येत् । यथा । अयमेवं श्रुतत्यागादिगुणवान्, कस्मादहमप्येवं न भवेयम् ? फले न तु परकीये शोभने फले वस्त्रालङ्कारादिके नेर्ष्येत् ॥ २५ ॥

काल इति । काले प्रस्तावे । हितं पथ्यम् । मितं न बहु । अविसंवादि सत्यम् । पेशलं मनोज्ञं ब्रूयात् । पूर्वाभिभाषी पूर्वालापी स्यात् । सुमुखो गतभ्रुकुटिः । सुशीलः शोभनप्रकृतिः । तथा करुणया मृदुरार्द्रचित्तः मातेव पुत्रे ॥ २६ ॥

एक इति । एकोऽद्वितीयः सन् सुखी न स्यात् । तथा सर्वत्र सर्वस्मिन् जने विश्रब्धो विश्वस्तो न स्यात् । तथा च भगवान् व्यासः ;—"मायाचारे मायया वर्तितव्यः" इति । तथा सर्वत्र मित्रस्वजनादिष्वपि शङ्कितोऽविश्वस्तो न स्यात् तेषां वैमुख्यदोषप्रसङ्गभयात् ॥ २७ ॥

नेति । आत्मनः शत्रुं कञ्चिदपि न प्रकाशयेत् । तत्प्रकाशनाद्धि भेदः स्यात् । नात्मानं कस्यचिद्रिपुं प्रकाशयेत् । पूर्वोक्तादेव हेतोः । अपमानमसत्कारं कस्यचिन्न प्रकाशयेत् । प्रभोः स्वामिनः सम्बन्धिनीं निःस्नेहतां न प्रकाशयेत् । तत्प्रकाशनादसौ प्रभुर्जातावसरैर्भेदकैः सुतरां निःस्नेहीक्रियते ॥ २८ ॥

जनस्येति । जनस्याशयमालक्ष्य लोकस्य प्रकृतिं बुद्ध्वा परिच्छिद्य यो जनो यथा परितुष्यति, तथा तेनैव प्रकारेण दानप्रियवचनादिना तमनुवर्त्ताराधयेत् । कीदृशो भूत्वा ? पराराधने पण्डितस्तज्ज्ञः ॥ २९ ॥

नेति । इन्द्रियाणि रसनादीनि, कदन्नाशनादिना न पीडयेन्न निगृह्णीयात् । न चैतानीन्द्रियाण्यतिलालयेदतिशयेन विलासयेत् । त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्ग-

अनुयायात् प्रतिपदं सर्वधर्मेषु मध्यमाम्।
नीचरोमनखश्मश्रुर्निर्मलाऽङ्घ्रिमलायनः॥ ३१॥
स्नानशीलः सुसुरभिः सुवेषोऽनुल्वणोज्ज्वलः।
धारयेत् सततं रत्नसिद्धमन्त्रमहौषधीः॥ ३२॥
सातपत्रपदत्राणो विचरेद्युगमात्रदृक्।
निशि चात्ययिके कार्ये दण्डी मौली सहायवान्॥ ३३॥

---

स्तेन शून्यं रहितमारम्भमुद्यमं न भजेन्न कुर्यात्। कथं भजेत्? तं च त्रिवर्गमविरोधयन् परस्परमविरोधयन्॥ ३०॥

अन्विति। सर्व्वधर्मेषु मध्यमां प्रतिपदं प्रतिपत्तिमनुयायात्, सर्वेष्वाचारेषु मध्यमं मार्गमनुवर्त्तेत। नैकत्रासक्तिं कुर्यादित्यर्थः। नीचान्यदीर्घाणि लोमनखश्मश्रूणि यस्य स एवम्भूतो भवेत्। लोमानि बाहूरुप्रभृतिषु रोमाणि केशाश्चोच्यन्ते। तथा च "हर्षेर्लोमसु" इत्यत्र सूत्रे विवृतम्;—'लोमानि मूर्द्धजान्यङ्गजानि चेह गृह्यन्ते' इति। नीचलोमादिकफलं च मुनिनोक्तम्;—"पौष्टिकं धन्यमायुष्यं शुचि रूपविराजनम्। केशलोमनखादीनां कर्त्तनं सम्प्रसाधनम्" इति। तथाङ्घ्री पादौ। मलायनानि घ्राण-कर्णादीनि। निर्मलान्यङ्घ्रिमलायनानि यस्य स एवम्। अस्य च फलम्;—"मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम्। पादयोर्मलमार्गाणां शौचादानमभीक्ष्णशः" ॥ ३१॥

स्नानेति। स्नानं शीलयति स्नानशीलो नित्यस्नायी स्यात्। तथा सुसुरभिः सुगन्धिः। शोभनो जीर्णमलिनवस्त्रादिविवर्जितो वेषो यस्य स सुवेषः। अनुल्वणोऽनुद्धतः, स चासावुज्ज्वलश्चानुल्वणोज्ज्वलः। अनुद्धतवेषः स्यादुज्ज्वलश्चेत्यर्थः। धारयेदित्यादि। रत्नानि मणयो वज्रपद्मरागादयः। सिद्धमन्त्रोऽपराजितादिः। महौषधिः सहदेवादिका। रत्नादीनां द्वन्द्वः। रत्नादि बाहुग्रीवादिषु सततं सदैव धारयेत्॥ ३२॥

सातेति। युगमात्रदृग्विचरेद् भ्रमेत्। युगं हस्तचतुष्टयं तत् पश्यति यः स एवम्। एवम् कुर्वन् संमुखमागच्छद्भिर्गवाश्वादिभिर्नोपद्रूयते। तथा सहातपत्रेण छत्रेण पदत्राणेन पदाधारपर्यायेण यो वर्तते स एवम्। पादत्रच्छत्रयोश्च गुणा उक्ताः;— "मारुतस्यानुलोम्याय खुड्स्तम्भश्रमापहम्। अन्वर्थसंज्ञं पादत्रं बलहृक्शुक्ररक्षणम्। वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहम्" इति। रात्रौ चात्ययिके कार्ये दण्डी सन् विचरेत्। दण्डेन सर्पादीनामुत्त्रासनमपि चोक्तम्;—"स्खलतः सम्प्रतिष्ठानं शत्रूणां च निषेधनम्। अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम्" इति। मौली शिरोवेष्टनयुक्तः। अनेनोपरिपततां पतङ्गकीटादिमूत्रपुरीषादीनां रक्षा। तथा सहायवान्। अनेनापि चित्तावष्टम्भः। दण्डशब्दात् "अतइनिठनौ" इति इनिः, मौलिशब्दाच्च व्रीह्यादित्वात् तस्य चाकृतिगणत्वमिति केचित्। आत्ययिक इति। अत्ययः कृच्छ्रं तस्मिन् भवमित्यध्यात्मादित्वाट्ठञ्॥ ३३॥

चैत्यपूज्यध्वजाशस्त-च्छायाभस्मतुषाशुचीन् ।
नाक्रामेच्छर्करालोष्ट-बलिस्नानभुवोऽपि च ॥ ३४ ॥
नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् ।
सन्दिग्धनावं वृक्षं च नारोहेद् दुष्टयानवत् ॥ ३५ ॥
नासंवृतमुखः कुर्यात् क्षुतिहास्यविजृम्भणम् ।
नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद् भुवम् ॥ ३६ ॥
नाङ्गैश्चेष्टेत विगुणं नासीतोत्कटकस्थितः ।
देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्त्तयेत् ॥ ३७ ॥
नोर्द्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमम् ।
तथा चत्वरचैत्यान्तश्चतुष्पथसुरालयान् ॥ ३८ ॥

---

चैत्येति । चैत्यस्तु विशिष्टदेवताधिष्ठितो लोकप्रसिद्धो वृक्षविशेषः ; बुद्धालय इत्यन्ये । पूज्यो गुरुपुत्रादिः । ध्वजश्चिह्नम् । अशस्तायण्डालादयः । एषां छायाः । तथा भस्म भूतिः । तुषो धान्यादित्वक् । अशुचिर्विट् । यद्वा उच्छिष्टं वस्तु । तदेतन्ना-क्रामेत् । शर्करा सूक्ष्मपाषाणाकृतिमृत्खण्डिका । तथा लोष्टं मृत्पिण्डादिखण्डः । बलिर्देवताद्यर्चनम् । स्नानं प्रसिद्धम् । बलिश्च स्नानं च बलिस्नाने तयोर्भुवौ बलिस्नानभुवौ । शर्करा च लोष्टं च बलिस्नानभुवौ च ता नाक्रामेत् ॥ ३४ ॥

नदीमिति । नदीं तरङ्गिणीं दोर्भ्यां न तरेत् । अग्निस्कन्धमभि अग्निराशेरभिमुखं न व्रजेत् । सन्दिग्धा चासौ नौश्च तां नारोहेन्नोच्चलेत् । सन्दिग्धायाः शिथिलबन्धन-त्वाज्जर्जरत्वादतिभाराक्रान्तत्वात् पारगमनं प्रति सन्देहः । चेति समुच्चये । वृक्षं च नारोहेत् । कथम् ? दुष्टयानवत् । यथा दुष्टयानमश्वादिकं नारोहेत् तथेति । दुष्टयानारोहणमपि चोक्त्यानया निषिद्धम् ॥ ३५ ॥

नासंवृतेति । नासंवृतास्यः क्षुतादीन् कुर्यात् । हस्तादिना मुखं पिधाय कुर्यादित्यर्थः । क्षुतिश्छिक्का । हास्यं हसनम् । विजृम्भणं जृम्भिका । एषां समाहार-द्वन्द्वः । नासां न विकर्षेत् । मलोत्सारणमात्रं तु कार्यमेवेति विशब्देन द्योतयति । अकस्मात् कारणं विना भुवं पृथ्वीं न विलिखेन्नोत्कर्षेत् ॥ ३६ ॥

नाङ्गैरिति । अङ्गैर्हस्तपादादिभिर्विगुणं अननुगुणं यथा भवति तथा न चेष्टेत न व्याप्रियेत । उत्कटकं स्थितमवस्थानं यस्य स एवम्भूतो नासीत । चिरं न तिष्ठेदित्यर्थः ; अशोरोगाद्युत्पत्तेः । देहादीनां द्वन्द्वः । एषां सम्बन्धिनीश्चेष्टाः क्रियाः श्रमात् खेदात् पूर्वं विनिवर्त्तयेत् । तावद्धनुराकर्षणादि कुर्याद यावन्नातीव श्रमः स्यादित्यर्थः ॥ ३७ ॥

नोर्द्ध्वेति । तथा ऊर्द्ध्वे जानुनी यस्य स ऊर्द्ध्वजानुश्चिरं नासीत । नक्तं रात्रौ द्रुमं तरुं न सेवेत । तदाश्रितकीटमूत्रशकृदादिपातरक्षार्थम् । चत्वरं त्रिपथम् । अन्येत्वाहुः ;—"यत्र प्रदेशे नगरनिवासिनो याम्या वा समेत्य नानाविधाः कथाः

सूनाटवीशून्यगृह-श्मशानानि दिवापि न ।
सर्व्वथेक्षेत नादित्यं न भारं शिरसा वहेत् ॥ ३९ ॥
नेक्षेत प्रततं सूक्ष्म-दीप्तामेध्याप्रियाणि च ।
मद्यविक्रयसन्धान-दानादानानि नाचरेत् ॥ ४० ॥
पुरोवातातपरजस्तुषारपरुषानिलान् ।
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् * ॥
कूलच्छायानृपद्विष्ट-व्यालदंष्ट्रिविषाणिनः ।
हीनानार्य्यातिनिपुणसेवां विग्रहमुत्तमैः ॥

---

कुर्व्वन्ति स चत्वर उच्यते"। चैत्यान्तश्चैत्यसमीपः। चतुष्पथं मार्गचतुष्टयसङ्गमः। सुरालयो देवगृहम्। एतांश्च नक्तं न सेवेत ॥ ३८ ॥

सूनेति। सूना वध्यस्थानम्। अटवी निर्जनो देशः। शून्यगृहमुज्झट (जनशून्य) भवनम्। श्मशानं पितृवनम्। एतानि दिवापि न सेवेत। अपि शब्देन रात्रौ नितरामसेवनलाभः। आदित्यं सर्व्वथा उद्यन्तमस्तं यान्तं जलादर्शादिषु प्रतिविम्बितं प्रतिमागतं उपरक्तं राहुग्रस्तं वा नेक्षेत। तथा भारं शिरसा न च वहेन्न नयेत् ॥ ३९ ॥

नेक्षेतेति। प्रततमविरतं सूक्ष्मं वस्तु नेक्षेत। दीप्तं चामेध्यं चाप्रियं चातिप्रततं नेक्षेत। ननु तर्हि सर्व्वथा नेक्षेतेत्यनेन कोऽर्थः ? यतो रविरपि दीप्तो, दीप्तग्रहणेनैवास्य दर्शननिषेधः सिद्धः। अस्त्येवैतत्; किन्तु सर्व्वप्रकारमादित्यं नेक्षेत, दीप्तं त्वनवरतं नेक्षेतेति। विक्रयो विनिमयः, इयत्प्रमाणमधुनेदं दीयत इति सन्धीयते येन तत् सन्धानम्—अनेकद्रव्यसम्भारो येन तत्—मद्यं यथावत्प्रमाणेन सन्धीयते। दानं यथाशास्त्र स्वत्वनिवृत्तिः परस्वत्वापादानम् आदानं च यथाशास्त्रमेव परस्माद् ग्रहणम्, एतेषां द्वन्द्वः; ततो मद्यशब्देन षष्ठीसमासः; मद्यविक्रयादीनि नाचरेत्। द्विजविषयं चैतद्वाक्यमिति बोध्यम्। सर्व्वस्य तु निषेधात् क्रयादिव्यवहारोच्छेदः स्यात् ॥ ४० ॥

पुरोवातेत्यादि। त्यजेदिति क्रिया वक्ष्यमाणा पुरःशब्दस्य वातातपाभ्यां प्रत्येकं सम्बन्धः। पुरोवातः पूर्व्वदिगागतो वातः। पुर आतपः पूर्व्वातपः। पुरोवातादीन् पञ्च त्यजेत्। अनृजुर्विषमस्थितशरीरः, क्षवथ्वादीन् षट् त्यजेत्। अनृज्विति क्रियाविशेषणमिति केचिद्व्याचक्षते। अन्नमत्र शाल्यादि। कूलं वप्रस्तच्छायां त्यजेत्। तत्र हि तिष्ठतस्तत्पाताद्भयं स्यात्। नृपद्विष्टं राज्ञोऽप्रियं त्यजेत्। व्यालो दुष्टहस्त्यादिः। दंष्ट्रिणः सर्पाद्याः। विषाणिनो गवाद्यास्तांस्त्यजेत्। हीनाः कुलशीलवित्तादिभिर्न्यूनाः, अनार्य्या असाधवः, अतिनिपुणा अतिगणनापराः; तेषां सेवां त्यजेत्। उत्तमैरिति

---

* श्वासकासान्नमैथुनम्—इति पाठान्तरम्।

सन्ध्यास्वभ्यवहारस्त्री-स्वप्नाध्ययनचिन्तनम्।
शत्रुसत्त्रगणाकीर्ण-गणिकापणिकाशनम्॥
गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम्।
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयं॥
मद्यातिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत्॥ ४१—४४॥
आचार्यः सर्वचेष्टासु लोक एव हि धीमतः।
अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः॥ ४५॥
आर्द्रसन्तानता त्यागः कायवाक्चेतसां दमः।
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम्॥ ४६॥
नक्तन्दिनानि मे यान्ति कथम्भूतस्य सम्प्रति।

---

सहार्थे गम्यमाने तृतीया। उत्तमैः सह विग्रहं त्यजेत्। सन्ध्यास्वभ्यवहारादीन् पञ्च त्यजेत्। शत्रुसत्त्रेत्यादि। शत्रुशनं त्यजेत्। सत्त्रं यज्ञस्तस्याशनं त्यजेत्। ऋत्विगादीन् वर्जयित्वाऽन्यस्य हि तदशनं निषेधति। तथाहि;—"यज्ञान्ते तदुद्भूतपापोपशमनाय प्रायश्चित्तं श्रूयते। गणाः कथकचारणादयस्तैराकीर्णं व्याप्तमशनं त्यजेत्। गणिका वेश्या, तस्याः सम्बन्ध्यशनं त्यजेत्। तदशनाद्धि तत्पापसङ्क्रमणं स्यात्। पणिकः पणोपजीवी इतरवणिगित्यर्थः। पणिक इति "नौ द्व्यचः" इति ठन्। पणिको हि पापीयान्निन्दितपण्यादिविक्रीणानः प्रशंसतीत्यादिहेतोः। गात्रेत्यादि। गात्राण्यङ्गानि तैस्तथा वक्त्रेण नखैश्च वाद्यं त्यजेत्। हस्तावधूननं केशावधूननं च त्यजेत्। अवधूननं कम्पनम्। तोयेत्यादि। मध्यशब्दः प्रत्येकं युज्यते। तोययोर्द्वयोर्मध्येन यानं त्यजेन्न यायादित्यर्थः। एवमग्न्योर्मध्येन। तथा पूज्ययोर्मध्येन। समासकरणात्तोयाग्न्योस्तोयपूज्ययोरग्निपूज्ययोरपि मध्येन न यायादिति बोद्धव्यम्। तथा धूमं शवाश्रयं शवोद्भूतं त्यजेत्। मद्येत्यादि। मद्येऽतिसक्तिरतिसेवा तां त्यजेत्। स्त्रीषु योषासु विश्रम्भं विश्वासं स्वातन्त्र्यं च त्यजेत्॥ ४१—४४॥

आचार्य इति। हि यस्माद्धीमतो बुद्धियुक्तस्य सर्वचेष्टासु निःशेषव्यापारेषु लोक एवाचार्य उपदेष्टाऽतोऽस्माद्धेतोस्तमेव लोकं लौकिकेऽर्थे परीक्षकः पुरुषोऽनुकुर्यात्। यथा लोको व्यवहरति तथा व्यवक्रियादित्यर्थः॥ ४५॥

आर्द्रेति। आर्द्रसन्तानता सर्वसत्त्वेषु कृपालुत्वम्। त्यागो दानम्। कायवाक्चेतसां त्रयाणां दम उपशमः। परार्थेषु परप्रयोजनेषु स्वार्थबुद्धिः। यथायमेव स्वार्थः, अयमेव परार्थः; इत्युभयलोकहितत्वम् इत्येवम्प्रकारं सद्व्रतं पर्याप्तं समाप्तमित्यर्थः। सत् शोभनं च तद्व्रतंच सद्व्रतम्॥ ४६॥

नक्तमित्यादि। नक्तन्दिनानि रात्रिदिनानि, सम्प्रति इदानीं, कथम्भूतस्य

दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ॥ ४७ ॥
इत्याचारः समासेन यम्प्राप्नोति समाचरन्।
आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ॥ ४८ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने द्वितीयोऽध्यायः। २

## अथ तृतीयोऽध्यायः।

अथात ऋतुचर्याध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
मासैर्द्विसङ्ख्यैर्माघाद्यैः क्रमात् षड् ऋतवः स्मृताः।
शिशिरोऽथ वसन्तश्च ग्रीष्मवर्षाशरद्धिमाः ॥ २ ॥

---

कौटुम्बस्य सती मे मम यान्ति। एवं नित्यं सन्निहितस्मृतिः सन् पुमान् दुःखभाक् न भवति ॥ ४७ ॥

इत्याचार इति। इति समाप्तौ। समासेन संक्षेपेण तावदयमाचारः पूर्वोक्तः, यं समाचरन्ननुतिष्ठन्नायुरादीन् प्राप्नोति। तथा लोकान् भूर्भुवःस्वःप्रभृतीन्, शाश्वतान्नित्यान्। ननु शाश्वतशब्दो न युक्तः। यतः शश्वच्छब्दस्य कालवाचित्वात् "कालाट्ठञ्" इति ठञ् प्राप्नोति। तथा "अव्ययानां च सायम्प्रातिकाद्यर्थमुपसङ्ख्यानम्" इति टिलोपश्च प्राप्नोति। नैतदस्ति। "नस्तद्धिते" इत्यत्र सूत्रे उक्तम्;—"शाश्वत इत्यादौ तु टिलोपो नेष्यते। कालादिति योगविभागाच्चाण्" इति तस्माच्छाश्वतशब्दो न्याय्य एवेति ॥ ४८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

दिनचर्याध्यायादनन्तरमृतुचर्याया उपोद्घातः। पूर्वेऽध्याये सामान्येन ऋतुचर्योपदिष्टा। ऋतुविशेषवशाच्चाहारविहारसेवनप्रतिपादनार्थमृतुचर्याया आरम्भ इत्याह।— अथात इति। पूर्ववद्व्याख्येयम् ॥ १ ॥

मासैरिति। मासैरित्यादिना कालोपवर्णनमाह। ननु कालोपवर्णनं दिनचर्यायां कस्मान्न कृतम्? उच्यते;—ऋतुगौरवोद्भावनार्थम्। ऋतवो हि विशेषेणोपयोगिनो विप्रतिपत्तेश्च। यथैके चातुर्मासिकमृतुं कृत्वा शीतोष्णवर्षलक्षणान् हेमन्तग्रीष्मवर्षाख्यांस्त्रीन् ऋतूनिच्छन्ति। अपरे तु द्विमासिकान् शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तलक्षणान् षडृतूनिति। द्वे सङ्ख्ये येषां ते द्विसङ्ख्यास्तैर्द्विसङ्ख्यैः। माघ आद्यो येषां फाल्गुनादीनां त एवम्। तैर्द्विसङ्ख्यैर्माघाद्यैर्मासैः क्रमात् परिपाट्या षडृतवः स्मृताः।

शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।
आदानञ्च तदादत्ते नृणां प्रतिदिनं बलम् ॥ ३ ॥
तस्मिन् ह्यत्यर्थतीक्ष्णोष्ण-रूक्षा मार्गस्वभावतः ।
आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः ॥ ४ ॥
तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।
तस्मादादानमाग्नेयं ऋतवो दक्षिणायनम् ।
वर्षादयो विसर्गश्च यद्बलं विसृजत्ययम् ॥ ५ ॥
सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ।
मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले ।

---

के ते इत्याह ;—शिशिराद्याः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः । उपचारादेव षट्त्वे लब्धे षड्ग्रहणं परमतवेपार्थम् । तथा केचित् त्रय एव ऋतव इति मन्यन्ते ॥ २ ॥

शिशिरेति । तैस्तु ऋतुभिस्त्रिभिः शिशिरादिभिरुत्तरायणं विद्याज्जानीयात् । आदान-अयनमुत्तरं सवितुरुत्तरमार्गप्रतिपत्तिः ; उत्तरायणम् आदानं तु जानीयात् । आदानमिति चान्वर्थमिति प्रतिपादयति । तदा तस्मिन् काले नृणां प्रतिदिनमन्वहं बलमादत्ते सारं गृह्णाति । कोऽसौ ? प्रकृतत्वादादित्यः ॥ ३ ॥

कया युक्त्या बलमादत्त इत्याह ;—तस्मिन्निति । आदित्यश्च पवनाश्च आदित्यपवनास्ते, तस्मिन् काले यस्मात्सौम्यान् गुणान् भुवः सम्बन्धिनः क्षपयन्ति विनाशयन्ति । कथा-कीदृशास्ते ? अत्यर्थमतिशयेन तीक्ष्णाश्चोष्णाश्च रूक्षाश्चात्यर्थतीक्ष्णोष्णरूक्षाः । देवंविधास्ते ? इत्याह—मार्गस्वभावतो वर्त्मस्वाभाव्यात् । न च स्वभावः पर्यनुयोगमर्हति । मार्ग उष्णांशोरुत्तरदिग्गमनम् ॥ ४ ॥

तिक्त इति । यतश्चादित्यपवना रूक्षास्ततस्तिक्तादयो रसा बलिनो भवन्ति । क्रमादित्यनेन यथासंख्यमत्र बोधयति । तेन तिक्तः शिशिरे, वसन्ते कषायो, ग्रीष्मे कटुको व्यवतिष्ठते, न सर्वे तिक्तादय एकैकस्मिन्नृताविति । तिक्त इत्याद्यसमास-करणं ज्ञापनार्थम् । तिक्तादिरेकैको बली भवति, द्वौ तु स्वप्रमाणावस्थितौ । नैव-ऋतौ पृथगसूय तिक्तादेर्बलवत्त्वमित्यर्थः । तस्मादिति । यत एवं सूर्यः सौम्यगुण-हानिर्वर्द्धनं च रूक्षाणां रसानां, तस्मात्कारणादादानमाग्नेयम् । ऋतव इति । त्रयो वर्षादय ऋतवो दक्षिणायनं, भगवतो दिवाकरस्य दक्षिणदिग्गमनम् । स च कालो विसर्गाख्यः । यद्यस्माद्बलमयं कालो विसृजति ददाति दक्षिणायनाख्यस्तस्माद्विसर्गोऽन्वर्थ-संज्ञः कालः ॥ ५ ॥

सौम्यत्वादिति । हि यस्मादत्र विसर्गाख्ये काले सौम्यत्वात् सोमभूयिष्ठत्वात् सोमो बलवान् ; तदाश्रितराभिवृद्धिदर्शनात् । हीयते रविस्तदाश्रितानहानुपशम्य हीनशक्तिः सम्पद्यते । कदा ? महीतले भूपृष्ठे शान्ततापे सति । कैः ? मेघवृष्ट्य

स्निग्धाश्चेहाम्ललवण-मधुरा बलिनो रसाः ॥ ६ ॥
शीतेऽग्र्यं वृष्टिघर्म्मेऽल्पं बलं मध्यन्तु शेषयोः ॥ ७ ॥
बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ।
भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ॥ ८ ॥

---

निलैः शीतैः । शीतैरित्युपलक्षणार्थं; विसर्गकालत्वान्मृदुभिः स्निग्धैरपीति । अतएव स्निग्धा रसा अम्ललवणमधुरा बलिनो भवन्ति । अत्रापि क्रमादित्यनुवर्त्तते । पूर्व्ववच्च व्याख्येयम् ॥ ६ ॥

शीत इति । शीतस्वभावकाले हेमन्तशिशिराख्ये नृणामग्र्यं बलं भवति । वृष्टिश्च घर्म्मश्च तस्मिन् वृष्टिघर्म्मे वर्षाग्रीष्माख्ये कालेऽल्पम् । तुरवधारणे । शेषयोः शरद्वसन्त-ऋत्वोर्म्मध्यमेव बलम् । ननु वसन्ते आदानकालत्वादत्यर्थतीक्ष्णोष्णरूक्षे रादित्यपवनैः शोष्यमाणेषु बलवृद्धिहेतुषु भुवः सौम्येषु गुणेषु कथं मध्यबलत्वमिति ? ब्रूमः । वर्षादिषु त्रिषु ऋतुषु बलमुपचितं क्रमेणैवापचीयते । यथा कृष्णपक्षे चन्द्रः । तस्माद्दीर्घकालानु-वृत्तं बलं वसन्ते क्रमेणैवापचीयत इति मध्यबलत्वं युक्तम् । अनेनैव हेतुना शिशिरे-ऽग्र्यबलत्वम् । यतः सकलेन विसर्गेण कालेन यदुपचितमतिशयेन बलं, तत् शिशिरे क्रमाच्च मात्रादानकालेऽपचीयमानमपि बलं न लक्ष्यते । यथा कृष्णपक्षादौ चन्द्रः क्षीयमाण इति युक्तमुक्तम् । शीतेऽग्र्यं बलं वसन्ते च मध्यं बलमित्यवददिह शास्त्रकृत् ॥ ७ ॥

बलिन इति । किल विसर्गाभिवर्द्धितबलत्वात् पुमान् बली भवति । तस्य बलिनः पुंसो हेमन्ते काले शीतसंरोधाद्धेतोरनलोऽग्निर्बली भवति । यतः सर्वतः शीतेरोधाज्जाठरोऽग्निरान्तरैरेव स्वैरर्चिभिरभिवर्द्धते । वर्द्धितश्चासौ युक्तमाहारं सम्यक् पचति । पक्वाच्चाहाराद्बलमभ्यधिकं जायते । हेमन्ते हेमन्तर्त्तौ द्योतयति । अस्मिन्नेव काले शीतसंरोधात् । तथाह्यन्यर्त्तुजेन शीतेनाग्निसादो भवति । यथा वर्षासु । तत्र हि वृष्टिवाताभ्यां भवति शीतं न चाग्निदीप्तिः । तथा चाष्टाङ्गसंग्रहे ;—"वृष्टिवाताकुले त्वह्नि भोजनं क्लेदवातजित् । परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेत्" इति । इह पुनरनेकरूपगौरवयुक्तं भोजनं शस्यते । वक्ष्यति हि,—"अतो हिमेऽस्मिन्" इत्यारभ्य यावत् "रसान् स्निग्धान् बलं पुष्टम्" इत्यादि । तथोक्तम्,—"ऊष्मा वहिः प्रतिहतो हिमशीतवातैरन्तःशरीरविवरं प्रतिपद्यमानः । स्वस्थान-पिण्डितवपुर्भवति प्रचण्डः शीतेऽनिलानलहरो विविरिष्यतेऽतः" इति । तथा यद्यपि तत्र सर्वशरीरेत्यारभ्य यावत्तयोर्जस्करयोगजमित्यादिना ग्रन्थेनाहारो युक्तिजस्यैकस्यैव बलस्य हेतुरित्युक्तो ग्रन्थकृता, तथापि युक्त्या निरूप्यमाणः सहजकालजयोरपि बलयोरा-हार एव हेतुत्वात्तया ह्याहारं विना शरीरमेव न स्यात् । तदनया युक्त्या त्रिविधमपि बलमाहारजमपि बोद्धव्यम् । ननु यदि प्रबलोऽनलो भवति ततः किम् ? इत्याह,—अल्पेन्धन इत्यादि । अल्पमिन्धनमाहाराख्यं यस्य सोऽल्पेन्धनः सन् सोऽनलो धातून् रसादीन् पचेत् । कीदृशः ? वायुनेरितः वातोद्दीपितः ॥ ८ ॥

अतो हिमेऽस्मिन् सेवेत स्वाद्वम्ललवणान् रसान्॥ ९॥
दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः।
अवश्यकार्यं सम्भाव्य यथोक्तं शीलयेदनु॥ १०॥
वातघ्नतैलैरभ्यङ्गं मूर्ध्नि तैलं विमर्दनम्।
नियुद्धं कुशलैः सार्द्धं पादाघातं च युक्तितः॥ ११॥

---

अत इति। अस्मादनन्तरोक्ताद्धेतोरल्पेन्धनत्वे सति धातुपाकाख्यात्, अस्मिन् हिमे शीते स्वाद्वम्ललवणाख्यान् रसान् सेवेत। नान्यर्त्तुसम्भवे हिमे इत्यस्यार्थस्य द्योतनाय हिम इत्युक्तम्॥ ९॥

दैर्घ्यादिति। एतर्हि एतस्मिन् काले बुभुक्षितः प्रातरेव प्रत्युषसि नान्यकाले, अन्यकाले हि यत्किञ्चिद्दिनातिक्रान्तौ सत्याम्, अवश्यं कार्य्यं मूत्रोत्सर्गादिकं दिनचर्य्योक्तं च सम्भाव्य सम्पाद्य यथोक्तं यथानिर्दिष्टमनुपश्चाद्वातघ्नतैलाभ्यङ्गादिकं शीलयेत्। यद्यपि बुभुक्षितः "अवश्यकार्य्यं सम्भाव्य यथोक्तं शीलयेदनु" इत्युक्तं तथापि बुभुक्षितेन न तथान्यत्कार्य्यं यथा भोजनम्। तथाचोक्तम्,—"आहारकाले सम्प्राप्ते यो न भुङ्क्ते बुभुक्षितः। तस्य सीदति कायाग्निर्निरिन्धन इवानलः" इति। तस्मादौचित्याद्द बुभुक्षितेनाहारः कार्य्य इति वेद्यम्। ननु अन्यस्मिन्नपि काले बुभुक्षितस्यैवाहारानुज्ञानाद्द बुभुक्षितग्रहणं न कार्य्यम्। युक्तमाह भगवान्। किन्तु अस्मिन् काले जाठराग्निरत्यग्निच्छायानुकारी भवति। ततोऽस्य जाठराग्नेरत्यग्नेरिवोपचारो युक्तः। यथा,—"मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्। निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत्" इति। अबुभुक्षितस्यैव भोजनाविकारित्वमिति भ्रान्तिनिरासायेह न बुभुक्षितग्रहणम्। निशानां दैर्घ्यादिति विशिष्टकालोपलक्षणार्थं कृतम्। यदात्र हेमन्ते शर्वर्य्यो दीर्घा जायन्ते तदैष विधिः सर्वोऽनुष्ठेयो न प्रारब्धमात्र एवास्मिन्निति। नन्वत्र सेवेत शीलयेद्व्रजेदित्येककार्य्याभिधायीनि बहूनि क्रियापदानि किं निर्दिष्टानि? एकेनैवार्थाधिगतेः। अत्र ब्रूमः,—कार्य्यान्तरसूचनार्थमेतत्पदत्रयम्। तथाहि,—अतोहिमेऽस्मिन् सेवेतेत्यत्र यः सेवेतशब्दः स इदं द्योतयति,—स्वाद्वम्ललवणरसाः पवनविजयार्थमस्मिन् काले नितरामुपयोक्तव्याः। न कादाचित्क एषामस्मिन् ऋतावुपयोगो विधेय इति। अतएव वातघ्नतैलाभ्यङ्गादेः पृथगेषां रसानामुपन्यासः। यथोक्तं शीलयेदित्यत्र यः शीलयेदित्येष शब्दः स वातघ्नतैलादेः सर्वस्य तुल्यकक्षतां द्योतयति। तथा प्रावाराजिनेत्यादौ यो भजेच्छब्दः स सकलस्याहारविहारशीलनस्य शयनविधेश्च तुल्यतां प्रथयति। तथा च वक्ष्यति,—"आहारशयनब्रह्मचर्य्यैर्युक्त्या प्रयोजितैः। शरीरं धार्य्यते नित्यमागारमिव धारणैः" इति॥ १०॥

वातघ्नेति। वातघ्नतैलैरभ्यङ्गं शीलयेत्। तैलस्य सर्वस्यैव वातघ्नत्वाद्वातघ्नेति विशेषणमतिशयप्रतिपादनार्थम्। तेन बलातैलादिभिरिति बोध्यम्। मूर्ध्नि तैलं शिरोऽभ्यङ्गादि। विमर्दनं शरीरसंवाहनम् एतदौचित्यादभ्यक्तः सन् शीलयेत्।

कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।
कुङ्कुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ १२ ॥
रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम् ।
गोधूमपिष्टमाषेक्षु-क्षीरोत्थविकृतीः शुभाः ॥ १३ ॥
नवमन्नं वसां तैलं शौचकार्य्ये सुखोदकम् ।
प्रावाराजिनकौशेय-प्रवेणीकौचवास्तृतम् * ॥ १४ ॥
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ।
युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा ॥ १५ ॥

---

कुशलैस्तद्विद्भिः सार्द्धं नियुद्धं बाहुयुद्धं शीलयेत् । पादाघातं पादविमर्दनम् । युक्तितः इत्यनेनार्धशक्त्यैव शीलनं द्योतयति । बाहुयुद्धपादाघातयोर्यानभक्तास्यैव शीलनं युक्तम् ॥ ११ ॥

कषायेति । कषायेण रोध्रादिनाऽपहृतोऽपनीतः स्नेहो यस्य स एवम् । ततोऽनन्तरं यथाविधि शास्त्रोदितेन विधानेन स्नातः । कुङ्कुमेन काश्मीरेण प्रदिग्धोऽनुलिप्तः । दर्पः कस्तूरिका तेन सह वर्त्तते यत् कुङ्कुमं तदेवम् । तथाऽगुरुणा जोंगकेन धूपितः ॥ १२ ॥

रसानिति । रसान् मांसरसान् स्निग्धान् भजेत् । मांसरसानां स्निग्धत्वेऽपि स्निग्धानिति विशेषणमतिशयद्योतनार्थम् । पलं मांसं पुष्टं मेदुरं भजेत् । तथा गुडस्येदं गौडं तन्मद्यम् । तथाऽच्छसुरां सुरामण्डं, सुरां मदिरां च भजेत् । अन्नेन कषायद्रव्यैश्च या क्रियते सा सुरा भण्यते । ननु द्विधैव सुरा सेव्यत्वेनेहाभीष्टा, तत् सुराशब्द एव निर्देष्टुं न्याय्यः । तस्मिन् हि सामान्यपदे निर्दिष्टे द्विधैव सुरा निर्दिष्टा भवति । सत्यमेतत् । किन्त्वच्छसुरां नितरां भजेन्न तथा सुरामिति ज्ञापनार्थं द्वयोरुपादानम् । अतएवाच्छसुरामिति पूर्वं निर्दिष्टम् । गोधूमेत्यादि । गोधूमस्य पिष्टञ्च माषश्च इक्षुश्च क्षीरञ्च तान्येवम् । गोधूमपिष्टमाषेक्षुक्षीरेभ्य उत्थानं यासां विकृतीनां ता एवम् । उत्पूर्वात्तिष्ठतेः सुपीति योगविभागाद्भावे कः । उदः स्थास्तम्भोः पूर्वस्येति रुस्य तकारः । गोधूमपिष्टमाषेक्षुक्षीरोत्थाश्च ता विकृतयश्च ताः शुभा रम्या भजेत् । तथा नवमपुराणमन्नं, तथा वसां भजेत् भक्षयेत् । "शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता" । तथा तैलं भजेत् भक्षयेत् । अभ्यङ्गस्तु प्रागनुज्ञात एव । शौचकार्य्ये शौचक्रियायां सुखोदकमुष्णोदकं भजेत् । प्रावारः कार्पासो रोमवान् घनः पटस्थूलपटकादिः । अजिनं सुखस्पर्शरोमचर्म्म । कौशेयं पट्टवसनम् । प्रवेणी सूचीवाणाख्यो वस्तुविशेषः । कौचवं राङ्कववस्त्रभेदः । तंवरक इत्यन्ये । एभिरास्तृतं दत्तपरिच्छदपटं शयनं भजेत् । कीदृक् शयनं भजेत् ? उष्णस्वभावैरौर्णिकारल्लिकाप्रायैः प्रावृतः प्रकर्षेणाच्छादितः ।

---

* "कुथकास्तृतम्" इति वा पाठः । कुथकः कम्बलः ।

पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ।
हरन्ति शीतमुष्णाङ्ग्यो धूपकुङ्कुमयौवनैः ॥ १६ ॥
अङ्गारतापसंतप्त-गर्भभूवेश्मचारिणः ।
शीतपारुष्यजनितो न दोषो जातु जायते ॥ १७ ॥
अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः ।
तदा हि शीतमधिकं रौक्ष्यं चादानकालजम् ॥ १८ ॥

---

तथा अर्ककिरणान् भजेत् । कथम् ? युक्त्या सम्यग्योगलक्षणया । अतिसेविता हि ग्लान्यादीन् कुर्युः । तथा स्वेदं भजेत् । युक्त्येवेतत्रापि योज्यम् । अतिसेवितो हि स्वेदो ग्लान्यादीन् जनयेत् । पादत्राणञ्च पादुकादिकं सर्वदा भजेत् ॥ १३—१५ ॥

पीवरेति । ऊरू च स्तनौ च श्रोणिश्च ऊरुस्तनश्रोणि । पीवरं पीनमूरुस्तनश्रोणि यासां ता एवम्भूताः प्रमदा विलासिन्यः शीतं हरन्ति नुदन्ति । पीनत्वेनातिकार्श्यमत्र निषिध्यते । तथा चाह ग्राम्यधर्माधिकारे,—"त्यजेदतिकृशाम्" इति । किम्भूताः ? सह मदेन यौवनोद्भूतेन सुरादिपानजेन कामोद्रेककारिणा वा वर्त्तन्ते, समदाः प्रमदाः । तथा प्रिया वल्लभाः शीतं हरन्ति । किम्भूताः ? उष्णाङ्ग्यो धूपकुङ्कुमयौवनैः,—अगुर्वादिधूपेनोष्णाङ्ग्यः तथा कुङ्कुमानुलेपनेनोष्णाङ्ग्यः, तथा यौवनोष्मणा सहजेनोष्णाङ्ग्य इति योज्यम् ॥ १६ ॥

अङ्गारेति । अङ्गाराणां तापोऽङ्गारतापस्तेन सन्तप्तं च तद्गर्भेऽभ्यन्तरे भूवेश्म च तत्तस्मिंश्चरति नित्यं यस्तस्याङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः पुंसो यतः शीतपारुष्यजनितो दोषो दुःखं न जातु कदाचिज्जायते, ततोऽङ्गारतापसन्तप्तगर्भभूवेश्मचारी स्यादिति भावः ॥ १७ ॥

अयमिति । अयमेव हैमन्तो विधिः पूर्वोक्तः शिशिरे च विशेषतोऽतिशयेन कार्य्यः । कुतः ? इत्याह,—यस्मात्तस्मिन् काले शीतमधिकं भवति, कालस्वाभाव्यात् । तथा आदानकालाज्जातमादानकालजञ्च रौक्ष्यं भवति । ततो हेतुद्वयाद्विशेषेण हैमन्तिको विधिः सेव्यः । हेमन्ते रसान् स्निग्धान् शीलयेदित्युक्तम् । शिशिरे तानतिशयेन शीलयेत् । एवं सर्वेष्वपि हैमन्तिको विधिर्योजनीयः । आदानकालजमित्यनेन एतद् द्योतयति आदानकाल एव रौक्ष्यस्य कारणं नान्यत् । अतएव हेमन्ते शीतेऽपि रौक्ष्यं नास्त्येवेति । आदानस्य च प्रारम्भमात्रत्वम् । एवं शिशिरस्य सम्भव इति शिशिरे किञ्चिदेव रौक्ष्यं वेद्यम् । ननु यथा रौक्ष्यमादानकालजं तथौष्ण्यमपि । यथाचोक्तम्,—"तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षाः" इति । एवञ्चौष्ण्यसद्भावाच्छीतस्य हैमन्तती हानिः प्राप्ता न त्वाधिक्यम् । कथं तदा हि शीतमधिकमिति ? ब्रूमः,— रौक्ष्यस्य द्वौ हेतू । एकस्तावद्भगवद्दिवाकरकरैर्जगतः स्नेहादानम् । द्वितीयस्त्वाग्नेयः कालः । तदेव रौक्ष्येणोभयहेतुजेन शिशिरे काले वाताः शीतस्वभावा आहिताधिकयत्नाद्यो जायन्ते हैमन्तेभ्यो मारुतेभ्यः । तथाविधायोगेनादानकालप्राधान्याद-

कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः।
हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥ १९ ॥
तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः।
व्यायामोद्वर्त्तनाघातैर्जित्वा श्लेष्माणमुल्वणम् ॥ २० ॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः।
पुराणयवगोधूम-क्षौद्रजाङ्गलशूल्यभुक् ॥ २१ ॥
सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान्।
प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान् ॥ २२ ॥
सौमनस्यकृतो हृद्यान्वयस्यैः सहितः पिबेत्।
निर्गदानासवारिष्ट-सीधुमार्द्वीकमाधवान् ॥ २३ ॥

---

प्राप्तबलेन शिशिरेनाभिभूयन्ते। अनभिभूताश्च शीतस्वभावत्वाच्च शीतमेव वर्द्धयन्ति। अतो युक्तं शीताधिक्यं शिशिर इति ॥ १८ ॥

सम्प्रति वसन्तचर्य्यां विवक्षुरिदमाह,—कफ इति। यस्मात् शिशिरे मधुरस्निग्धादिनाऽऽहारेण कालस्वाभाव्याच्च श्लेष्मा सञ्चितोऽतिशयेन स्त्यानत्वादतिकुपितो वसन्ते ऋतावर्कांशुतापितः सूर्य्यप्रभाभिर्विलायितो द्रवस्वरूपत्वाज्जलमिव विपरीतं जाठराग्निं हत्वा हि यस्माद्रोगान् विकारान् कुरुते जनयति, अतोऽस्मात् कारणात्तं कफं त्वरया शीघ्रमेव जयेत्। दोषानिति केचित्पठन्ति। अर्कतापित इत्यनेनैव सिद्धे अंशुशब्दोऽत्ररश्मीनां पटिमानं सूचयति न तथा शीते। तत्र हि धूमधूसरजोमन्दा इति। तान् रोगान् कैर्जयेत् (१)? इत्यत आह,—तीक्ष्णैरिति। तीक्ष्णैर्वमननस्यविरेकादिभिरुपक्रमेत्। तथा लघूनि रूक्षाणि च यानि भोजनानि तैश्च। तथा व्यायामश्चोद्वर्त्तनं च आघातश्च तैश्च कफं जयेदिति। चशब्दो लुप्तनिर्दिष्टः। जित्वेति। ततः कफमुल्वणमुद्धतं जित्वाऽनन्तरं स्नातोऽनुलिप्तः समालब्धः कर्पूरचन्दनागुरुकुङ्कुमैस्तथा पुराणं च तद्यवगोधूमं च तथा क्षौद्रं माक्षिकं तथा जाङ्गलं च तत् शूल्यं भटित्रं तत्तानि भुङ्क्ते पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक्। शूल्य इति शूलात्पाक इति यः। एवंविधः सन् वयस्यैर्मित्रैः सहित आसवादीन् पिबेत्। किं भूतान्? निर्गदान् निर्दोषान्। पिबेदिति वक्ष्यमाणेन सम्बन्धोऽत्र दीपकत्वात्। आसवो यो द्रव्याण्यासुत्य मेलयित्वा क्रियते। उक्तञ्च—"यथाकाराधिकद्रव्यमदिराद्यैः कृतस्तु यः। सोऽरिष्टः स्यादासवस्तु द्रव्याण्यासुत्य यः कृतः" इति। सीधुरिक्षुरसोद्भवः। मार्द्वीकं मृद्वीकारसोद्भवम्। माधवो मधुना संस्कृतः। किम्भूतानासवादीन्? सहकाररसोन्मिश्रान्, तथा प्रियया दयितया आस्वाद्य किञ्चित्पीत्वा अर्पितान्

---

(१) इत्यत्रिरोगकैर्श्चंजये्त् इति वा पाठः।

शृङ्गवेराम्बु साराम्बु मध्वम्बु जलदाम्बु वा ॥ २४ ॥

दक्षिणानिलशीतेषु परितो जलवाहिषु ।

अदृष्टनष्टसूर्येषु मणिकुट्टिमकान्तिषु ।

परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु ॥ २५ ॥

विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।

गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ २६ ॥

गुरुशीतदिवास्वप्न-स्निग्धाम्लमधुरांस्त्यजेत् ॥ २७ ॥

---

द्दौकितान् । तथा प्रियास्यसङ्गेन सुरभीन् सुगन्धीन् । तथा प्रियानेत्राख्यैवोत्पलानि तैरङ्कितान् सञ्जातशोभान् । तथा सौमनस्यकृतश्चित्तप्रसादकृतः । तथा हृद्यान् हृदयाय हितान् । तथा शृङ्गवेराम्बु शुण्ठीक्वथितजलं पिबेत् । तथा सारः आसनचन्दनादिजस्तेन क्वथितमम्बु पिबेत् । तथा मधुना युक्तमम्बु मध्वम्बु जलदेन मुस्तया च क्वथितमम्बु पिबेत् । वेति समुच्चये ॥ १९—२४ ॥

दक्षिणेति । काननेषूपवनेषु स्थितो मध्याह्नं गमयेदतिवाहयेत् । अह्नो मध्यो मध्याह्नः । संख्याविसायेतद्यादिज्ञापकात् पूर्वपरेत्यादिना एकदेशिसमासः । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । कथम् ? गोष्ठ्यां क्रीडायां कथा गोष्ठीकथास्ताभिश्चित्राभिः कमनीयाभिर्व्यवहारसम्बन्धिनीभिरित्यर्थः । कीदृशः सन् ? सुखी रागद्वेषादिरहितः । किम्भूतेषु ? काननेषु । दक्षिणदिक्प्रवृत्तैरनिलैः शीतानि तेषु दक्षिणानिलशीतेषु । तथा परितः समन्ताज्जलं नित्यं वहन्ति यानि तेषु । आभीक्ष्ण्ये णिनिः । तथा क्वचित्प्रदेशेऽदृष्ट ईषद्दृष्टः क्वचिदतिवनत्वान्नष्टो न दृश्यते सूर्यो येषूपवनेषु तान्येवं तेषु । तथा मणीनां वज्रमरकतादीनां कुट्टिमानि विशिष्टा भूमयस्ताभिः कान्तिः शोभा येषां तान्येवं तेषु । तथा परपुष्टैः कोकिलैर्विघुष्टेषु कृतशब्देषु । तथा कामस्य कर्मान्ताः कामकर्मान्ता मदनव्यापाराः । अन्तशब्दोऽत्र प्रशंसावचने । यथोद्भटस्य वचनम्— "वनान्त देवता वेश्य" इति । कामकर्मान्तनिमित्तं भूमयो येषां वनानां तान्येवं तेषु । विचित्राणि नानारूपाणि पुष्पाणि येषां ते तथाविधा वृक्षा येषां तान्येवं तेषु । सुष्ठु गन्धो येषां तेषु । गन्धस्येदितीत्समासान्तः । अस्मिन् काले कफोपचयदोषभयात् ॥ २५—२६ ॥

गुर्विति । गुरुशीतादीन् त्यजेत् । ननु लवणमपि श्लेष्माणं करोति तत्कस्मादिह न निषिद्धम् ? अतो ब्रूमः । लवणः पूर्वं कफमम्लमधुराविव न करोति, किं तर्हि ? निधने चिरन्तनसञ्चितं स्रुतिरूपं श्लेष्माणं निधत्ते विष्यन्दित्वात् । न च लवणस्य मधुरादेरिव बहुतरस्य प्रयोगः प्रसिद्धः । किं तर्हि ? अल्पस्यैव । तस्माल्लवणस्यानिषेध एव न्याय्यः ॥ २७ ॥

तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ।
प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्द्धते ॥ २८ ॥
अतोऽस्मिन् पटुकट्वम्ल-व्यायामार्ककरांस्त्यजेत् ।
भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ॥ २९ ॥
सुशीततोयसिक्ताङ्गो लिह्यात् सक्तून् सशर्करान् ॥ ३० ॥
मद्यं न पेयं पेयं वा स्वल्पं सुबहुवारि वा ॥ ३१ ॥
अन्यथा शोफशैथिल्य-दाहमोहान् करोति तत् ॥ ३२ ॥
कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ॥ ३३ ॥

---

अधुना ग्रीष्मचर्य्यामुपदिदिक्षुराह,—तीक्ष्णांशुरिति । यद्यस्मात्तीक्ष्णांशुर्भास्करोऽतितीक्ष्णा अंशवः करा यस्य स एवंभूतः सन् ग्रीष्मे संक्षिपतीव जगत्स्नेहमित्यत्राचानुक्तमप्यर्थाल्लभ्यते । केचित्तु "स्नेहमर्कोऽतितीक्ष्णांशुः" इति पठन्ति । स्नेहस्तेजो बलं सारमित्येकोऽर्थः । तं स्नेहमर्कः संक्षिपतीव यत् सम्बन्धः संहरतीव पिबतीव । इव शब्देनैतत् सूचयति—हेतुप्रत्ययपरतन्त्रेषु सर्वभावेषु न कश्चित् क्वचित् तद्बुद्धिपूर्वकं संहरति । परमार्थतो बलहानिकृत्त्वादेषाम् ॥ २८ ॥

अत इति । अतोऽस्मात् कारणादस्मिन् ग्रीष्मकाले पट्वादींस्त्यजेत् । किमत्र सेव्यमित्याह ;—भजेदिति । मधुरमेवान्नं भजेत् । बाहुल्येन मधुरमन्नं सेव्यं न तत्राऽन्यरसजातमित्येवकाराल्लभ्यते । तथा लघु स्निग्धं हिमं द्रवं चेति । च शब्दो लुप्तनिर्दिष्टो द्रष्टव्यः ॥ २९ ॥

सामान्येन भोजनमुक्त्वा विशेषेणाह ;—सुशीतेति । सक्तून् सशर्करान् लिह्यात् । सुष्ठु शीतं सुशीतं च तत्तोयं च तेन सिक्तमाप्लुतमङ्गं कायो यस्य स एवम्भूतः सन् ॥ ३० ॥

मद्यमिति । अस्मिन् काले मद्यं न पेयम् । पेयं वा स्वल्पमिति । वातश्लेष्मप्रकृतिना वातक्षयार्थमन्यर्त्तुवद्बहु न पेयं, किं तर्हि ? स्वल्पमेव पातव्यं । सुबहुवारि वेति ।—पित्तश्लेष्मप्रकृतिना मद्योचितेन श्लेष्मप्रतिक्रियार्थं पित्तप्रतिकारमपीच्छता सुबहुवारि तन्मद्यं पेयमित्यत्रानुक्तोऽप्येवमर्थाद्विषयविभागो बोध्यः । अन्यथा निषेधविध्योर्विरोधः स्यात् ॥ ३१ ॥

उक्तविध्यतिक्रमे दोषमाह ;—अन्यथेति । तन्मद्यमन्येन प्रकारेण पीतं सत् शोफादीन् करोति । शोफः श्वयथुः । शैथिल्यमङ्गानामनैष्ठुर्य्यम् । दाहः सर्वाङ्गीणस्तापः । मोहोऽज्ञानं जन्तोः ॥ ३२ ॥

कुन्देन्द्विति । कुन्दः पुष्पविशेषः, इन्दुश्चन्द्रः, तयोर्द्वन्द्वः, कुन्देन्दुवत् धवलं शुक्लं शालिं जाङ्गलैः पलैर्मांसैः सहाश्नीयादद्यात् । "दुग्धःसितः कृतः शाली रक्तो व्रीहिरदाकृतः" ॥ ३३ ॥

पिबेद्रसं नातिघनं रसालां रागखाण्डवौ ।
पानकं पञ्चसारं वा नवमृद्भाजनस्थितम् ॥ ३४ ॥
मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ।
पाटलावासितं चाम्भः सकर्पूरं सुशीतलम् ॥ ३५ ॥
शशाङ्ककिरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत् ।
ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम् ॥ ३६ ॥
अभ्रङ्कषमहाशाल-तालरुद्धोष्णरश्मिषु ।

पिबेदिति । रसं नातिघनं पिबेत् । रसशब्देनादिलीपाख्यया तन्त्रदुक्त्या मांसरस उच्यते । तथा रसालां मार्जिकाख्यां पिबेत् । तथा रागखाण्डवौ पानकं च पञ्चसाराख्यम् । एतेषां च लक्षणं तन्त्रान्तरे उक्तम् । यथा ;—"सितामध्वादिमधुरा रागास्तत्राच्छकाल्पयः । ते साम्लाः खाण्डवा लेह्याः पेयाश्चांशुकगालिताः ॥ खादम्लपटुकट्वाद्याः प्रलेहास्तत्र खाण्डवाः । गुडदाडिमसांसाद्या रागाश्चांशुकगालिताः । हृद्या हृद्या रुचिकरा ग्राहिणी रागखाण्डवा" इति । तथा,—"द्राक्षामधूकखर्जूरकाश्मर्यैः सपरूषकैः । तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् । पानकं पञ्चसाराख्यं दाहतृष्णानिवर्त्तकम्" ॥ अन्यत्र चोक्तम् । यथा,—"गुडदाडिमादियुक्ता विज्ञेया रागखाण्डवाः । चिञ्चातन्तरिचाद्यैस्तु संस्कृताः पानकादयः" इति । कीदृशं पानकं पिबेदित्याह,—नवं च यन्मृद्भाजनं तत्र स्थितम् । तथा मोचं कदलीफलं, चोचं पनसफलं, तयोर्दलानि तैर्युक्तम् । तथा साम्लम् तिन्तिडिकादियोगात् खाण्डवरसानुगतम् । केचित्तु क्षीरं घृतपिप्पलीशशिमाचिकशर्करोपेतं पञ्चसारं पानकमित्याहुः । केन पिबेदित्याह,—मृन्मयशुक्तिभिः । पाटलेति । पाटलया वासितं सुरभीकृतं तथा सकर्पूरं सुशीतलं चाम्भः पिबेत् । मृण्मयशुक्तिभिरित्यत्रापि योज्यम् । सुश्रुते चोक्तम्,—"परिपेलवया तुल्या गुडगुग्गुलुमुस्तकाः । चूर्णिताः शशिनीपेता नवभाजनधूपनम् । कुष्ठमुस्तकसंयुक्ताः पेलवोशीरवालकैः । मृदिता मृत्सुपिष्टैस्तैः खदिराङ्गारपाचिताः । सहकाररसाभ्यक्ताश्चम्पकोत्पलवालकैः । पद्मकुम्भकक्रुद्देश यथालाभाधिवासिताः । श्रेष्ठः सलिलवासोऽयं स्मृतः सर्वर्त्तुको बुधैः" ॥ ३४।३५ ॥

शशाङ्केति । माहिषं क्षीरं ससितं सशर्करं रजन्यां रात्रौ पिबेत् । किम्भूतम् ? चन्द्रेण नक्षत्रैश्च शीतलम् । रजन्यां रात्रावकाशे शैत्यार्थं स्थापितमित्यर्थः । किं कुर्वन् पिबेत् ? भक्ष्यान् भक्षयन् भुञ्जन् । कीदृशान् ? शशाङ्ककिरणान् कर्पूरनाडिकाख्यान् (१) ॥ ३६ ॥

अभ्रमिति । अभ्रमाकाशं कषन्ति उल्लिखन्ति अत्युच्चतयाऽभ्रङ्कषाः, महान्तश्च ते शालाश्च तालाश्च महाशालतालाः । अभ्रङ्कषाश्च ते महाशालतालाश्च तैरुद्धः स्थगित

(१) "तालीशचूर्णवटकाः सकर्पूरसितोपलाः । शशाङ्ककिरणाख्यास्तु रुच्या रुचिकराः परम्" ॥ इत्यधिकः पाठः ।

वनेषु माधवीश्लिष्ट-द्राक्षास्तवकशालिषु ॥ ३७ ॥
सुगन्धिहिमपानीय-सिच्यमानपटालिके ।
कायमाने चिते चूतप्रवालफललुम्बिभिः ॥ ३८ ॥
कदलीदलकह्लार-मृणालकमलोत्पलैः ।
कल्पिते कोमलैस्तल्पे हसत्कुसुमपल्लवे ॥ ३९ ॥
मध्यन्दिनेऽर्कतापार्त्तः स्वप्याद्धारागृहेऽथवा ।
पुस्तस्त्रीस्तनहस्तास्यैः प्रवृत्तोशीरवारिणि ॥ ४० ॥
निशाकरकराकीर्णे सौधपृष्ठे निशासु च ।
आसना स्वस्थचित्तस्य चन्दनार्द्रस्य मालिनः ॥
निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः ।
जलार्द्रास्तालवृन्तानि विस्तृताः पद्मिनीपुटाः ॥

---

उग्ररश्मिर्दिनकरो येषु वनेषु तेषु मध्यन्दिने मध्याह्ने अर्कतापार्त्तः सन् स्वप्याच्छयीत । वनेष्विति । माधव्यो लताविशेषा अतिमुक्तकाख्यास्तासु श्लिष्टा माधवीश्लिष्टाः । द्राक्षायाः स्तवका गुच्छका द्राक्षास्तवकाः । माधवीश्लिष्टाश्च ते द्राक्षास्तवकाश्च तैः शालितुं शाल्वितुं शीलं येषां वनानां तानि माधवीश्लिष्टद्राक्षास्तवकशालीनि तेषु वनेषु । कस्मिन् स्वप्यात् ? इत्याह ;—सुगन्धीति । कायमाने वेखादिनिष्पादिते गृहविशेषे । कीदृशे ? सुगन्धि च तद्धिमं च तत्पानीयं च तत्सुगन्धिहिमपानीयम् । पटानां वस्त्राणामालिः पङ्क्तिः पटालिः । सुगन्धिहिमपानीयेन सिच्यमाना पटालिर्यस्मिन्नसौ सुगन्धिहिमपानीयसिच्यमानपटालिकस्तस्मिंस्तथाविधे कायमाने । तथा,—प्रवालाः किसलयानि ; फलानां लुम्बयः स्तवकाः ; प्रवालाश्च फललुम्बयश्च प्रवालफललुम्बयः । चूतानां प्रवालफललुम्बयस्ताभिश्चिते परितो व्याप्ते । ईदृशे कायमाने स्थितो यादृशे शयने शयीत तन्निरूपयन्नाह ;—कदलीति । तल्पे शयने कल्पिते । कैः ? कदलीदलादिभिः । कदल्या रम्भाया दलानि पत्राणि । कह्लारं सौगन्धिकं, मृणालं बिसम्, कमलं पद्मम्, उत्पलं कुमुदम्, एतेषां द्वन्द्वः । तैः कदलीदलादिभिः कोमलैः सुकुमारस्पर्शैः कल्पिते रचिते । किम्भूते ? कुसुमानि च पल्लवाश्च कुसुमपल्लवाः । हसन्त इव कुसुमपल्लवा यत्र तस्मिन् धारागृहे, अथवा स्वप्यादित्यनुवर्त्तते धारागृहमविरतं जलधारा पतन्ति यत्र । किंभूते ? पुस्तस्त्रीस्तनहस्तास्यैः प्रवृत्तमुशीरवारि यत्र तस्मिन् । पुस्तो दार्वादिमय्याः स्त्र्याद्याकृतेरुपादानकारणं यद्वस्तु तदुच्यते ॥ ३७—४० ॥

निशेति । निशासु च रात्रिषु सौधपृष्ठे हर्म्यतले आसना स्थितिः कार्य्येत्यध्याहार्य्यम् । तत्रासीत इत्यर्थः । किम्भूते सौधपृष्ठे ? निशाकरः शीतांशुस्तस्य कराः गभस्तयस्तैराकीर्णे व्याप्ते । स्वस्थेति । स्वस्थचित्तस्य रागाद्यनुपहतमनसो जलार्द्राः शाटिकाः

उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः।
कर्पूरमल्लिकामाला हाराः सहरिचन्दनाः॥
मनोहरकलालापाः शिशवः सारिकाः शुकाः।
मृणालवलयाः कान्ताः प्रोत्फुल्लकमलोज्ज्वलाः॥
जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम्॥ ४१। ४५॥
आदानग्लानवपुषामग्निः सन्नोऽपि सीदति।
वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे॥ ४६॥

---

क्लमं हरन्ति। एवं तालवृन्तादयो योज्याः। अन्तर्दीपकत्वादस्य। तस्य च कीदृशस्य? चन्दनार्द्रस्य चन्दनेनानुलिप्तस्य, तथा मालिनः स्रग्विणः, तथा निवृत्तं कामतन्त्रं पुष्पधन्वपरिच्छदो यस्य, तथा सुष्ठु सूक्ष्मे तनुनी स्वच्छे वाससी यस्य स एवम्। जलार्द्राः पानीयक्लृताः शाटिकाः। तालवृन्तानि मयूरपिच्छादिकृतानि तालवृन्ताकृतीनि व्यजनानि। तथा विस्तृता महान्तः पद्मिनीपुटाः नलिनीपत्राणि वीजनार्थम्। तथोत्क्षेपाः मयूरपिच्छादिकृता व्यजनविशेषाः। ते च किम्भूताः? मृदुरुत्क्षेपो येषु ते मृदूत्क्षेपाः। जलवर्षी हिमोऽनिलो येषु मृदूत्क्षेपेषु ते जलवर्षिहिमानिलाः। शीतजलाभ्युक्षितैरेतैर्वातः कार्य्य इत्यर्थः। कर्पूरेत्यादि। मालाशब्दः प्रत्येकं प्रयुज्यते। स्फटिककर्पूरग्रथिता माला मल्लिकामालाश्चेत्यर्थः। तथा हारा मुक्तादामानि। किम्भूताः? सह हरिचन्दनेन सहरिचन्दनाः। यच्छेदे लोहितमतिसुगन्धि सुष्ठु-शीतवीर्य्यञ्च तद्धरिचन्दनमुच्यते। मनोहरेत्यादि। मनोहरो रम्यः कलो मधुर आलापो येषां ते मनोहरकलालापाः। शिशवो बालकाः। तथा सारिकाः शरारयः। शुकाः कीराः। मृणालेत्यादि। मृणालान्यतिकोमलानि विसानि वलया कटकानि यासान्ता दयिता योषितः। किम्भूताः? कान्ता रम्याः, तथा प्रफुल्लैर्विकसितैः कमलैरुज्ज्वलाः शोभिता एवम्भूताश्च। उत्प्रेक्ष्यन्ते,—जङ्गमाः सञ्चारिण्य इव पद्मिन्यः। क्लमं हरन्तीति योज्यम्। स्वस्थचित्तस्येति प्राधान्यख्यापनार्थं प्रागुपात्तम्। स्वस्थचित्तस्यैव ते जलार्द्रादयः क्लमं हरन्ति न तद्योपतप्तमनसः। चित्तायत्ता हि सर्वभावानां शुभाशुभप्रवृत्तयः। तथा च स्निग्धमधुरोऽप्याहार उपयुक्तः, सुखशय्यादिरपि विहारः सेवितः शोकाविष्टचेतसो न तथा शरीरस्य पुष्टिमादधाति। अतएव "शोकः शोषणानाम्" इत्यष्टाङ्गसंग्रहे प्रोक्तम्। तथा रूक्षोऽप्याहारस्तथाविधो विहारश्च सेवितो निवृत्तमनसः पुष्टिमेवादधाति न कार्श्यम्। तथाचोक्तम्,—"निवृत्तिः पुष्टिहेतूनाम्" इति। सुश्रुते च क्लमस्य लक्षणमुक्तम्,—"योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः॥" इति॥ ४१—४५॥

इदानीं वर्षाचर्य्यां निर्दिदिक्षुरिदमाह,—आदानेति। आदानमुक्तम्। तेनादानाख्येन कालेन ग्लानं सक्लमं वपुः शरीरं येषां पुरुषाणां ते आदानग्लानवपुषः, तेषामपचितधातूनामग्निरप्यपचितः सन्नो मन्दः सन् पुनर्वर्षासु सीदति ह्रानिं याति।

सतुषारेण मरुता सहसा शीतलेन च।
भूवाष्पेणाम्लपाकेन मलिनेन च वारिणा ॥ ४७ ॥
वह्निनैव च मन्देन तेष्वित्यन्योऽन्यदूषिषु।
भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत् ॥ ४८ ॥
आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान्।

अपिशब्दः पुनरर्थे। अनेकार्थत्वान्निपातानाम्। वर्षास्विति नितरबहुत्वाद्बहुवचनम्। केन सीदतीत्याह ;—कालस्वभावाद्दौर्बल्यैर्वातपित्तश्लेष्मभिः, दुष्टैरित्यनुक्तमप्यर्थाद्गम्यते। यतोऽग्निसादहेतुत्वमदुष्टानां तेषां न सम्भवति। तस्माद्दुष्टैर्दोषैरग्निः सीदतीत्यर्थः। ननु कथं वर्षासु दोषाणां दुष्टत्वं स्यात् ? इत्याह ;—दुष्यन्तीति। ते दोषा उक्तरूपाः। कदा ? अम्बरे वियति अम्बुलम्बाम्बुदे अम्बुना लम्बा अतिनिर्भरत्वात् अम्बुलम्बाः ईदृशा अम्बुदा मेघा यस्मिन्नेवंविधे। अनेन च विशेषणेनास्य कालस्य स्वरूपमुपलक्षयत्याचार्यः यदेवंविधो वर्षाकालः सम्पद्यते तदैवैते दोषा दुष्यन्ति स्वकर्मण्ययोग्याः सम्पद्यन्ते, न वर्षाकालभावेऽनासादितस्वरूपे। तथा सतुषारेण सजलकणेन मरुता पवनेन तथा सहसा ग्रीष्मतापसन्तापादनन्तरमेव शीतलेनाभ्यन्तरो वायुर्दुष्यति। तथा भुवो वाष्प ऊष्मा भूवाष्पस्तेन। तथा कालस्वाभाव्यादम्लपाकेन वारिणा पित्तं दुष्यति। तथा मलिनेन वारिणा लूतादितन्तुविण्मूत्रादिकलुषेण वर्षाजलेन कालस्वाभाव्यादतिशयेन मन्दत्वं गतेनाग्निना श्लेष्मा दुष्यति। तदेतदेकस्मिन्काले वातपित्तश्लेष्माणो युगपत्कालस्वाभाव्याद्दुष्यन्ति। नन्विह त्रयाणामपि दोषाणां कोपोऽनुज्ञायते। वक्ष्यति तु "चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु" इति। तदिमे वचसी परस्परं व्याहन्येते। अत्रोच्यते। नानयोर्वाक्ययोर्मिथो विरोधः समाप्यते। यस्मादिह दुष्यन्तीत्यनया स्वस्थानस्था एव दुष्टिं प्राप्ता विषादिस्पृष्टद्रव्यवत् कार्यकरणेऽसमर्था जायन्त इत्युक्तम्। चयप्रकोपप्रशमा इत्यत्र च प्रकर्षेण कोपः स्थानान्तरगतिलक्षणो गदितः। तदेवमस्मिन् काले वायोः कदाचिद् दुष्टत्वं स्यात् कदाचित्कोप इति वचनाभ्यामेताभ्यां प्रत्यपादि। पित्तश्लेष्मणोऽस्तु दुष्टत्वमात्रमेवेति न किञ्चिदत्रासमञ्जसम्। तेष्वित्यादि। इति प्रकारे। अन्योऽन्यं दूषयितुं शीलं येषां वातादीनां त एवं, तेष्वनेन प्रकारेण परस्परं दूषणस्वभावेषु सत्सु, भजेत् साधारणं सर्वं यत्किञ्चिद्वातादीनां युगपत् प्रशमनं तत्सर्वं सेवेत। यच्चोष्मणो जाठराग्नेस्तेजनमुद्दीपनं तद्भजेत्। ऊष्मणस्तेजनस्याव चशब्दयुक्तस्योपादानं प्राधान्यख्यापनार्थम्। अग्निर्हि सर्वभावानां प्रधानम्। तथा च वक्ष्यति,—"शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः। रोगी स्यात् विकृते मूलमग्निस्तस्मान्निरुच्यते" इति। तस्मादग्न्युत्तेजनार्थं यत्नः कार्य इति भावः। भजेदिति क्रियादिदीपकत्वात् "भोजनं त्वतिदुर्दिने" इति यावत् सर्वेषु योज्यम् ॥ ४६—४८ ॥

किं तत्साधारणमित्यत तदुदाहरणार्थमाह,—आस्थापनमिति। शुद्धा तनुर्यस्य स एवम्भूतः कृतविरेकादिः सन् आस्थापनं निरूहं भजेत्। तथा जीर्णं धान्यं

जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम् ॥ ४९ ॥
मस्तु सौवर्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।
दिव्यं कौपं शृतं चाम्भो भोजनं त्वतिदुर्दिने ।
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ॥ ५० ॥
अपादचारी सुरभिः सततं धूपिताम्बरः ।
हर्म्यपृष्ठे वसेद्बाष्प-शीतशीकरवर्जिते ॥ ५१ ॥
नदीजलोदमन्थाहः-स्वप्नायासातपांस्त्यजेत् ॥ ५२ ॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।

---

पुराणयवगोधूमादिकम्। तथा रसान् मांसरसान्। किम्भूतान्? क्षतान् स्नेह-
मुण्ठ्यादियुतान्। तथा जाङ्गलं पिशितं हरिणादिकं मांसम्। तथा यूषान्
मुद्गदाड़िमादिकृतान्। तथा मधु मार्द्वीकमरिष्टं द्वयमप्येतच्चिरन्तनं पुराणं न तु
नवमग्निमान्द्यभयात्। मस्तु सौवर्चलाढ्यमचलवणसंयुक्तम्। चेति समुच्चये। किं भूतं
मस्तु? पिप्पली-पिप्पलीमूल-चव्यचित्रकनागराः पञ्चकोलं, तेनावचूर्णितम्। तथा
दिव्यमाकाशजं तथा कौपं तथा शृतं क्वथितं चाम्भः पिबेत्। च समुच्चये। दिविभवं
दिव्यम्। दिगादित्वात् यत्। कूपे भवं कौपम्। प्राग्दीव्यतोऽण्। अतिदुर्दिने
वातवर्षाकुलेऽहनि। व्यक्ताः प्रधाना अम्ललवणस्नेहा यत्र तद्भोजनं भजेत्। तथा
संशुष्कं शुष्कप्रायम्। तथा क्षौद्रवत् समाक्षिकम्। तथा लघु। ननु वातलं मध्विति
वक्ष्यति; पवनश्चात्र कुप्यतीत्युक्तम्; अतो माक्षिकस्यात्रोपयोगो न युक्तः। अत्रोच्यते,—
देहवातदोऽस्मिन् काले क्लेदमुपयान्ति। ततश्च क्लेदसंरक्षण एवोपक्षीणप्रभावत्वान्मधु
मरुत्कोपं विधातुमसमर्थम्। तस्मात् मधूपयोगो न्याय्य एव ॥ ४९। ५० ॥
अथात्र काले यादृशः पुरुषः स्यात् तं दर्शयति,—अपादचारीति। पादाभ्यां
चरति नित्यं पादचारी नैव यः सोऽपादचारी यानयायी स्यात्। तथा सुरभिः शोभन-
गन्धयोगात् स्नानशीलः। ससुरभिरित्यनेनैवास्य उक्तत्वात् सुरभिग्रहणमतिशयार्थम्।
तथा सततमविरतं धूपितेऽम्बरे यस्य स एवम्। तथा हर्म्यपृष्ठे धवलगृहतले वसेत्
तिष्ठेत्। कीदृशे? बाष्पश्च शीतं च शीकरश्च तैर्वर्जिते ॥ ५१ ॥
नदीति। तथा नदीजलादीन् पञ्च त्यजेत्। उदकालोड़िताः सक्तवः ससर्पिष्का
उदमन्थवाच्या जलावचारीसंज्ञाः। तदत्र काले सात्म्यत्वात् सक्तवस्तक्रादिसंयोगात्
नात्यन्तमनिष्टाः। पानीयसंयोगात्तु वातलाः प्रकृष्टवातले काले नाभीष्टा एव।
मुनिना तु एवमुक्तम्,—"उदमन्थं दिवास्वप्नमवश्यायं नदीजलम्। व्यायाममातपं चैवं
व्यवायं चात्र वर्जयेत्" इति ॥ ५२ ॥
अधुना शरच्चर्य्यां विवक्षुराह;—वर्षेति। वर्षासु शीतं वर्षाशीतं वर्षाशीतमुचितं
सात्म्यं यस्य तदेवंविधमङ्ग वपुर्येषां ते वर्षाशीतोचिताङ्गा नरास्तेषां सहसैव झटित्येव

तप्तानां सञ्चितं वृष्टौ पित्तं शरदि कुप्यति।
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ॥ ५३ ॥
तिक्तं स्वादु कषायञ्च क्षुधितोऽन्नं भजेल्लघु।
शालिमुद्गसिताधात्री-पटोलमधुजाङ्गलम् ॥ ५४ ॥
तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ॥
समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ॥ ५५ ॥

---

शरदि जातायामर्करश्मिभिर्भानुभाभिस्तप्तानां सतां पित्तं कुप्यति। किं भूतम्? वृष्टौ सञ्चितं वर्षासु वृद्धिं गतम्। यतश्चैवं ततश्च तज्जयाय तिक्तं घृतं कुष्ठचिकित्सितोक्तं योज्यमिति वाक्यशेषः। यदि वा तिक्तैर्द्रव्यैः साधितम्। तथा विरेको योज्यः। तथा रक्तमोक्षणं च। सर्वोपक्रमेभ्यः पित्ते विरेकस्य ज्यायस्त्वादिह पूर्वमुपन्यासः। तथा ह्याह,—"विरेचनं पित्तहराणाम्" इति। ततो रक्तमोक्षणं पित्ताधारत्वान् रक्तस्य। विरेचनाङ्गत्वात् च तज्जयाय घृतं तिक्तमिति घृतस्य पूर्वमुपन्यासः। न हि अस्निग्धस्य विरेचनप्राप्तिरस्ति। तथा च वक्ष्यति,—"स्नेहस्वेदावनभ्यस्य कुर्य्यात् संशोधनं तु यः। दारु शुष्कमिवानामे शरीरं तस्य दीर्य्यते" इति। तथा विरिक्तस्य स्रुतरक्तस्य च पवनप्रकोपभयम्। कालस्वाभाव्याच्च पित्तकोपभयम्। तदेतत्परिहर्तुं तथा पुष्ट्यर्थमग्निसन्धुक्षणार्थं च तिक्तघृतोपयोगः कार्य्यः। इत्यनेन कार्य्यकारणत्वेन प्राधान्याच्च तिक्तघृतस्य पूर्वमुपन्यासः। असमासकरणं च ज्ञापनार्थम्। नैतानि सर्वाणि अवश्यं तिक्तघृतादीनि तदा कार्य्याणि,—किं तर्हि? देशाद्यनुरोधात् कदाचित् पित्तविजयाय तिक्तं घृतं, कदाचिद्विरेकः, कदाचित् रक्तमोक्षः, कदाचिद्द्वयं, कदाचित् सकलान्येवेति। विरेकस्तु पित्तविजयार्थमवश्यं शरदि कार्य्यः। यथा वसन्ते श्लेष्मविजयाय वमनम्। वर्षासु च पवनविजयाय वस्तिः। अतएव प्राङ्निर्दिष्टं वसन्ते च वमनं वर्षासु चास्थापनम्। शरदि विरेक इति ॥ ५३ ॥

तिक्तमिति। क्षुधितोऽन्नं भोजनं तिक्तादिगुणयुक्तं भजेत्। क्षुधितग्रहणमिति बुभुक्षितप्रतिपादनार्थम्। अक्षुधितस्य भोजनाविकाराभावात्; किं तत् तिक्तादिगुणयुक्तमित्याह शालीत्यादि। शाल्यादीन् सप्त भजेत् ॥ ५४ ॥

तप्तमिति। समन्तात् सर्वतः सूर्य्यप्रभाभिरहनि तप्त क्वथित च चन्द्रकिरणैर्निशि शीतीकृतम्। तथा अगस्त्योदयेन निर्विषीकृतम्। तथा शुचि पवित्रम्। वर्षासु ह्यशुचीभूतम्। तच्च हंसोपभोग्यतया हंसवद्रतिनैर्मल्याद्धंसोदकं नाम तन्त्रकारैरायुर्वेदशास्त्रे संज्ञितम्। तथा निर्मलमकलुषम्। तथा मलान् वातपित्तश्लेष्माणो (१) जयतीति मलजित्। अगस्त्योदयनिर्विषशब्देन विशेषणेन तत् प्रतिपादयति;—यथा यदन्तरिक्षप्रभव सरस्तडागादिस्थं जलं तदेव प्रायेण शरद्येवंगुणं वेद्यं न कूपादिप्रभवम्; तस्य सदा निर्विषत्वात्।

---

(१) अमलत्वात् पित्तश्लेष्माणौ जयतीति। इति पाठान्तरम्।

शुचि हंसोदकं नाम निर्मलं मलजिज्जलम्।
नाभिष्यन्दि न वा रूक्षं पानादिष्वमृतोपमम्॥ ५६॥
चन्दनोशीरकर्पूर-मुक्तास्रग्वसनोज्ज्वलः।
सौधेषु सौधधवलां चन्द्रिकां रजनीमुखे॥ ५७॥
तुषारक्षारसौहित्य-दधितैलवसातपान्।
तीक्ष्णमद्यदिवास्वप्न-पुरोवातान् परित्यजेत्॥ ५८॥
शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत्।
स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान्॥ ५९॥

---

तथा चान्तरिक्षप्रभवमेव पठ्यते। "लूतादितन्तुविण्मूत्र-विषसंश्लेषदूषितम्" इति; तच्च नाभिष्यन्दि न खु तिरूपश्लेष्मकारि न वा रूक्षं न वातप्रकोपकारि। वाशब्दः चशब्दस्यार्थेऽत्र। यतस्तप्तांशुकिरणैस्तप्तम्। यतश्च शीतांशुतारकाकरैः शीतं प्रह्लादितम्। इत्थ स्नेहरूक्षयोरन्तरे वर्त्तमानं पानादिषु अमृतोपमम्। आदिशब्देन स्नानावगाहयोर्ग्रहः। कुपितदोषशमनादकुपितदोषसाम्यानुवृत्तिहेतुत्वात् चामृततुल्यमेतज्जलं; भजेदिति योज्यम्। अत्रोष्णांशुग्रहणमग्नितापनिवृत्त्यै। किरणग्रहणं साक्षात् तत्स्पर्शसम्भावनार्थम्। धवपलाशादिभिरावृतमपि रविस्तापयति न तु तत् तथा गुणवत्। अतः किरणग्रहणेन तदव्यवधानतुप्रदासं करोति;—ननु सर्वं दिनं सूर्यकिरणैस्तापः सम्भवति। चन्द्रकरैस्तु सर्वां रात्रिं कथमिव स्यात्? यतः सकलचन्द्रमसः पौर्णमास्यामेव सर्वस्यां रात्र्यां सम्भवो नान्यत्र। तस्माच्छीतं चन्द्रकिरणैरावृत्रामिति नैतद्युक्तम्। अत्रोच्यते,—विमले व्योमनि यथैव रविचन्द्रौ यथाकालमव्याहतस्वरूपप्राप्तौ पश्यतां जलस्यापादयतस्तद्वत् नक्षत्राण्यपि। तस्मान्नक्षत्रैरपि शीतं चन्द्रेणैव श्रेष्ठमेव भवत्युदकम्। एवं च तदवगच्छेत्। अन्यथैतद्वाक्यमयुक्तमेव स्यात्। चरकमुनिनाप्यनेनैवाभिप्रायेण नक्षत्रग्रहणं नाकारि। यथा—"दिवा सूर्य्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम्" इति। अष्टाङ्गसंग्रहेऽप्युक्तम्,—"दिवा दिवाकरकरैर्निशाकरकरैर्निशि" इति। अत्र सकलस्याहोरात्रस्य रविशशियोगाय दिवानिशाग्रहणमन्यथैतदनर्थकं स्यादव्यभिचारभावात्॥ ५४—५६॥

चन्दनेति। चन्दनं च उशीरं च कर्पूरश्च मुक्ताश्च स्रजश्च वसनानि च तैरुज्ज्वलः शोभनः सन् सौधेषु धवलगृहपृष्ठेषु चन्द्रिकां ज्योत्स्नां भजेत्। रजनीमुखे प्रदोषे परतस्तु निदाघ इव न सेव्या। अवश्यायभयात्। अवश्यायो हि अत्र परिहार्यः। तथाचाह;—तुषारेति। तुषारादीन् दश परित्यजेत्। तुषारः अवश्यायः। पुरीचारो यवक्षारादिः। सौहित्यं तृप्तिः। तीक्ष्णं च तन्मद्यं च तीक्ष्णमद्यम्। पुरोवातः पूर्वदिग्गतो वातः॥ ५७। ५८॥

व्यासेन ऋतुचर्य्यामुक्त्वा समासेनाह;—शीत इति। शीते हेमन्तशिशिरयोर्वर्षास्वाद्यांस्त्रीन् स्वाद्वम्ललवणाख्यान् रसान् भजेत्। वसन्ते चान्त्यांस्त्रीन् तिक्तकटुकषायान्

शरद्वसन्तयोरूक्षं शीतं घर्मघनान्तयोः ।
अन्नपानं समासेन विपरीतमतोऽन्यदा ॥ ६० ॥
नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ ६१ ॥
ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः ।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥ ६२ ॥
असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात् ॥ ६३ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

भजेत् । स्वादु निदाघे, ग्रीष्मे मधुरं भजेत् । शरदि स्वादुतिक्तकषायान् भजेत् । शरदिति । शरद्वसन्तयो रूक्षमन्नपानं समासेन भजेत् । अतो विपरीतं स्निग्धमन्यदा हेमन्तशिशिरग्रीष्मवर्षासु । शीतमन्नपानं घर्म्मघनान्तयोर्भजेत् । अतो विपरीतमुष्ण-मन्नपानमन्यदा हेमन्तशिशिरवर्षावसन्ताख्ये काले भजेत् ॥ ५९—६० ॥

सम्प्रति सेव्यत्वेनोपदिष्टस्याहारस्यापवादमाह ;—नित्यमिति । नित्यं सर्वदा सर्व्वेषां षण्णामपि रसानामभ्यासः शीलनं कार्य्यमिति वाक्यशेषः । सर्वरसाभ्यासो बलकराणामिति वचनात् । नन्वेवं सति यदृतुसेव्यत्वेन रसनियमो यः पूर्वं कृतः स विरुद्धः ? नेत्याह ;—स्वस्वेत्यादि । ऋतावृताविति वीप्सायां द्वित्वम् । स्वं च स्वं च स्वस्व तस्याधिक्यं भूयस्त्वं कार्य्यमिति शेषः । यथा शीते वर्षासु चाद्यांस्त्रीनित्युक्तम् । तदेतेषु ऋतुषु एते रसा भूयसोपयोक्तव्याः । न तु एत एवेत्यर्थः तथा समधातुं प्रति समे देशे वैषम्यनियमो वेद्यः । अन्यत्र तु जाङ्गलेऽनूपे देशे विषमधातोश्च धातुसाम्यो-त्पादनार्थं देशदेहानुगुणमन्यदृतुविधानमन्यस्मिन्नपि ऋतावनुष्ठेयमेव ॥ ६१ ॥

किमन्यस्मिन् ऋतौ प्राप्ते पूर्वर्तुचर्य्या सहसैव त्याज्या अन्या च सेव्या ? नेत्याह ;—ऋत्वोरिति । ऋत्वोः शिशिरवसन्तयोर्ग्रीष्मप्रावृषोरित्यादिकयोरन्त्यश्चादिश्च अन्त्यादी यौ सप्ताहौ तावृतुसन्धिरिति स्मृत उच्यते । तत्र सप्ताहद्वयलक्षणे ऋतुसन्धौ पूर्वः पूर्वर्तुसम्बन्धी विधिस्त्याज्यः । अपर एष्यदृतुसम्बन्धी सेवनीयः । कथम् ? क्रमात् क्रमेण, "पादेना-पथ्यमभ्यस्तम्" इत्यादिना । सप्तानामह्नां समाहारः सप्ताहः । सप्ताहश्च सप्ताहश्च सप्ताहौ । राजाहःसखिभ्यष्टजिति टच् समासान्तः । न संख्यादेः समाहार इत्यह्नादेश-निषेधः ॥ ६२ ॥

ननु किमेवं त्यागः सेवनं च क्रियत इत्याह ;—असात्म्येति । यस्मात् सहसा-त्यागशीलनादसात्म्यादनुचिताज्जाता असात्म्यजा रोगाः स्युः, ततः सहसा त्यागशीलनं न कार्य्यमिति भावः ॥ ६३ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायां तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

# चतुर्थोऽध्यायः ।

अथातो रोगानुत्पादनीयाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
वेगान्न धारयेद्वात-विण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वास-जृम्भाश्रुच्छर्दिरेतसाम् ॥ २ ॥
अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ।
वातमूत्रशकृत्सङ्ग-दृष्ट्यग्निवधहृद्गदाः ॥ ३ ॥
स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ।
पानानि बस्तयश्चैव शस्तं वातानुलोमनम् ॥ ४ ॥
शकृतः पिण्डिकोद्वेष्ट-प्रतिश्यायशिरोरुजः ।
ऊर्द्ध्ववायुः परीकर्त्तो हृदयस्योपरोधनम् ॥

---

स्वस्थवृत्तिप्रवृत्तस्य वेगाधारणशीलस्य च स्वास्थ्यसम्भवः, अतो वेगधारणप्रतिषेधेन या
रोगानुत्पत्तिस्तामधिकृतयाध्याय आरभ्यते । अथात इति । व्याख्यात्र प्रथमाध्याय-
वद्बोद्धव्या । रोगाणामनुत्पादोऽनुत्पादनं तस्मै हितो रोगानुत्पादनीयः । उपदर्शनमिदं
निदर्शनाख्यम् । तन्त्रयुक्त्या चोत्पन्नरोगोपशमप्रदर्शनात् रोगोपशमनीयोऽपि वातादि-
रोधोत्थानां रोगाणामुपशमस्याप्युपदेशात् । तथा च वक्ष्यति । "अनुत्पत्त्यै समासेन
विधिरेष प्रदर्शितः । निजागन्तुविकाराणामुत्पन्नानां च शान्तये" इति ॥ १ ॥
वेगानिति । वातादीनां वेगान् न धारयेत् । सर्वत्र द्वन्द्वसमासः । क्षवश्छिक्का ।
श्रमेण श्वासः श्रमश्वासः ॥ २ ॥
वातस्य प्राधान्यात् तत् रोधजान् रोगान् पूर्वं निदर्शयन्नाह ;—अध इति ।
अधो वातस्य रोधेन गुल्मादयो जायन्ते । ऊर्द्ध्ववातस्योद्गाररूपस्य रोधात् सुखसाध्या
अरुच्यादयः । अतएवाधोवातरोधाद्ये रोगा अतिप्रत्ययायरूपा गुल्मादयोऽत्र ते पूर्वं
निर्दिष्टाः । उदावर्त्तोऽर्शो-निदाने वक्ष्यते । रुक् पीड़ा । क्लमो ग्लानिः ।
वातमूत्रशकृत्सङ्गो वातादीनामप्रवृत्तिः । दृष्टेरग्नेश्च वधो नाशः । हृद्गदो हृद्रोगः ॥ ३ ॥
स्नेहेति । तत्र वातोत्थे विकारे स्नेहः कर्त्तव्यः । स्वेदः कर्त्तव्यः । वर्तयः
फलवर्त्तयः कार्य्याः । वातहराणि भोजनानि कार्य्याणि । पानानि सुखोष्णोदक-
पानानि कार्य्याणि । बस्तयश्च कार्य्याः । यत्किञ्चिद्वातानुलोमनं तच्छस्तम् ॥ ४ ॥
शकृत इति । शकृत रोधेन पिण्डिकोद्वेष्टादयो जायन्ते । उद्वेष्टनमिवोद्वेष्टः
पिण्डिकयोरुद्वेष्टः पिण्डिकोद्वेष्टः । पिण्डिका जङ्घाकाण्डस्य पश्चिमे भागे पिण्डाकृति

सुखेन विट्प्रवृत्तिश्च पूर्वे चाप्यामयाः स्मृताः ॥ ५ ॥
अङ्गभङ्गाश्मरीबस्ति-मेढ्रवंक्षणवेदनाः।
मूत्रस्य रोधात्पूर्वे च प्रायो रोगास्तदौषधम्।
वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च ॥ ६ ॥
अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ॥ ७ ॥
मूत्रजेषु च पाने च प्राग्भक्तं शस्यते घृतम्।
जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्।
अवपीडकमेतच्च संज्ञितं धारणात् पुनः ॥ ८ ॥

---

कठिनं मांसम्। तच्चोद्वेष्टनेनेव लभ्यवतीत्यर्थः। प्रतिश्यायः पीनसः, चः समुच्चये। न केवलमितएव यावत् पूर्वोक्ता गुल्मादयश्च स्मृताः ॥ ५ ॥

अङ्गेति। मूत्रस्य रोधादङ्गभङ्गादयो जायन्ते। अङ्गानां भङ्गः स्फोटनमिवाङ्गभङ्गः। वस्त्यादीनां वेदनया सम्बन्धः। मेढ्रं शिश्नम्। पूर्वे च प्रायो रोगा अधोवातशकृद्रोधजास्तेऽपि मूत्रस्य रोधाज्जायन्ते। प्रायो ग्रहणाद्वातादिरोधजाः केचिदेवोत्पद्यन्ते केचिन्नेति बोधयति। तदौषधं तेषां वातादिरोधजानां रोगाणामौषधं चिकित्सितं भवति। किं तत्? इत्याह,—वर्त्तीति। वर्त्तिर्मदनफलादिकृता फलवर्त्तिसंज्ञा। अभ्यङ्गोऽभ्यञ्जनम्। अवगाहो वातहरद्रव्यसाधिते द्रवे द्रोण्यां निहिते पायुदेशस्यावस्थापनम्; स्वेदनं स्वेदः, वस्तिकर्म मलप्रवृत्तये बस्तिविधौ वक्ष्यमाणम् ॥ ६ ॥

पुरीषरोधोत्थेषु अन्यमपि असाधारणमुपक्रममाह;—अन्नपानमिति। पुरीषवेगधारणजेषु यक्ष्मसु रोगेषु विशः पुरीषस्य भेदि भेदकमन्नपानं यावकमस्तुवास्तुकादिकमौषधं; च शब्दात्पूर्वोक्तं वर्त्यादि च ॥ ७ ॥

मूत्रजेष्विति। मूत्ररोधजेषु पुनः प्राग्भक्तं भोजनात्पूर्वं घृतं पाने शस्यते। जीर्णान्तिकं घृतं च शस्यते। कथम्? उत्तमया मात्रया अहोरात्रजरणलक्षणया। योजनाद्वयमितच्चावपीडकमुच्यते। योजनयोर्द्वयं योजनाद्वयं, प्राग्भक्तस्नेहयोजना जीर्णान्तिकस्नेहयोजना च। तत्र प्राग्भक्तं,—यत्र घृतपानसमनन्तरं भक्तं भुज्यते। जीर्णान्तिकं,—यत् भुक्तेऽन्ने जीर्णे घृतं प्रयुज्यते। प्रदेशान्तरेषु अवपीड़कशब्देन योजनाद्वयमितदभिहितं वेद्यम्। तथा च वक्ष्यति, "रसैः कौचैश्च सर्पिर्भिरवपीड़कयोजितैः" तथाऽष्टाङ्गावतारे मूत्रोदावर्त्तचिकित्सायाम्, "अवपीड़कसर्पिश्च विशेषात् मूत्रजे गदे" इति। ननु वेगधारणेन बाहुल्येन मरुत एव कोपः। तथा च वक्ष्यति, "ततय नैकधा प्रायः पवनो यत्प्रकुप्यति।" पवनविजये च तैलं यथा वरं न तथा घृतम्, अतस्तैलस्यैवावपीड़कयोजनमत्रोचितं न सर्पिषः। अत्रोच्यते। तैलस्य वातजितोऽपि बद्धविट्काल्यमूत्रस्वभावत्वादत्रायोग्यं पानम्। तथा च, तैलं स्वयोनि-

उद्गारस्यारुचि: कम्पो विबन्धो हृदयोरसो: ।
आध्मानकासहिक्काश्च हिक्कावत्तत्र भेषजम् ॥ ९ ॥
शिरोऽर्त्तीन्द्रियदौर्बल्य-मन्यास्तम्भार्दितं क्षुतेः ॥ १० ॥
तीक्ष्णधूमाञ्जनाघ्राण-नावनार्कविलोकनैः ।
प्रवर्त्तयेत् क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत् ॥ ११ ॥

---

वदित्यारभ्य यावद्वत्वड्विट्कमिति । खयोनिवदित्युक्तेऽशाल्पमूत्रत्वम् । तथा च वक्ष्यति, "उष्णस्त्वच्यो हिमस्पर्शः केश्यो बल्यस्तिलो गुरुः । अल्पमूत्र" इति । तदेवं तैलस्य बड्विट्काल्पमूत्रस्वभावतया तदीयोऽवपीड़को मूत्ररोधोत्थेषु रोगेषु औषधत्वेन युक्तोऽपि न सर्पिष इव युक्तः । धारणादिति । पुनरतिव्यतिरेके । उद्गारस्य धारणादरुच्यादयो भवन्ति । उरो वक्षस्तस्याधो हृदयं तयोर्विबन्धोऽन्तस्तम्भ इव । तत्र तेषु रोगेषु हिक्कावद्भेषजम् । श्वासहिक्काचिकित्सिते हिक्कायाश्चिकित्सितं वक्ष्यति ॥ ८ । ९ ॥

शिरोर्त्तीति । क्षुतेः क्षवथोर्धारणाच्छिरोर्त्यादयः स्युः । दुर्बलस्य भावो दौर्बल्यम् । गुणवचनेत्यादिनाष्यञ् । इन्द्रियाणां दर्शनादीनां दौर्बल्यं विषयग्रहणाशक्तित्वमिन्द्रिय-दौर्बल्यम् । ननु पूरणगुणेत्यादिना समासप्रतिषेधेन भवितव्यम् ? अत्रोच्यते । य एव गुणशब्दा गुणिनावच्छिन्ना गुणमात्रे वर्त्तन्ते कदाचिद्गुणिन्यपि त एव प्रतिषेधस्य विषयाः । यथा पटस्य शुक्लो गुड़स्य मधुर इत्यादयः । ये तु गुणमात्र एव वर्त्तन्ते न गुणिनि ते समासस्य । यथा पटहशब्दः पुत्रस्पर्शः कन्यारूपं द्राक्षारसचन्दनगन्ध इत्यादयः । तथेन्द्रियदौर्बल्यमित्यादावपि भावप्रत्ययान्तस्य सदा व्यतिरेककारणत्वाद्-गुणाभिधायित्वमेव । तस्मादेवमादौ "तत्स्थेश्च गुणैः षष्ठी समस्यते" इति समासः । तस्यायमर्थः । तेषु गुणेषु एव तिष्ठन्तीति तत्स्थाः । एतदुक्तं भवति । गुणा एव ये गुणा वर्त्तन्ते न द्रव्यात्मनि तैः सह षष्ठी समस्यते । शुक्लादिशब्दानां तु कदाचिद् द्रव्यवृत्तित्वात् सामानाधिकरण्येनापि वृत्तिर्दृष्टा । तथा शुक्लः पट इति । गुणवृत्तित्वात् वैयधिकरण्येनापि । यथा पटस्य शुक्ल इति । तदेषां प्रतिषेधविषयत्वम् । पटहशब्दादीनां तु तत्स्थत्वात् समासविषयत्वमिति स्थितम् । नन्वेवं सति वलाकायाः शौक्लमित्यत्रापि पूर्वोक्तात् न्यायात् समासः प्राप्नुयात् । अत्रोच्यते, भाष्यकारवचनात्र भविष्यति । सहि गुणवचनग्रहणमेव कस्मान् न क्रियत इत्युक्त्वाऽभ्यधात् । वलाकायाः शौक्ल्यमित्यत्रापि यथा स्यादिति । समासस्याभावः । अर्दितं वातव्याधिनिदाने ॥ १० ॥

तीक्ष्णेति । क्षुतिं सक्तामप्रवर्त्तमानां तीक्ष्णधूमादिभिः प्रवर्त्तयेत् । तीक्ष्णधूमो धूमपानविधौ वक्ष्यते । तीक्ष्णं चाञ्जनमक्षिरोगेषु । तीक्ष्णाघ्राणं यन्नासया मरीचादि-ग्रहणम् । तीक्ष्णं नावनं तस्य विधौ वक्ष्यति । स्नेहय स्वेदय तौ च शीलयेदभ्यसेत् । क्षुतिं क्षुतम् । सुश्रुते चोक्तम्,—"प्राणापानौ समौ स्यातां मूर्ध्नि स्रोतःपथे स्थितौ । नस्तः प्रवर्तते शब्दः क्षुतं तत्र विनिर्दिशेत्" ॥ ११ ॥

शोषाङ्गसादबाधिर्य-सम्मोहभ्रमहृद्गदाः ।
तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः ॥ १२ ॥
अङ्गभङ्गारुचिग्लानि-कार्श्यशूलभ्रमाः क्षुधः ।
तत्र योज्यं लघु स्निग्धमुष्णमल्पञ्च भोजनम् * ॥ १३ ॥
निद्राया मोहमूर्द्धाक्षि-गौरवालस्यजृम्भिकाः ।
जाड्यग्लानिभ्रमापक्ति-तन्द्रारोगाश्च वातजाः ।
अङ्गमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ॥ १४ ॥
कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ।
शोषो हिक्का च कार्योऽत्र कासहा सुतरां विधिः ॥ १५ ॥
गुल्महृद्रोगसम्मोहाः श्रमश्वासाद्विधारितात् ।
हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ॥ १६ ॥
जृम्भायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ॥ १७ ॥
पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः ।

---

शोषेति । तृष्णाया निग्रहान्निरोधाच्छोषादयो भवन्ति । तत्र तृष्णाया रोधजेषु विकारेषु सर्वः शीतो विधिः स्नानान्नपानादिको हितः ॥ १२ ॥

अङ्गेत्यादि । क्षुध इति निग्रहादित्यनुवृत्तिः । निग्रहापेक्षया षष्ठी । एवं निद्राया इत्यत्रापि योज्यम् । क्षुधो बुभुक्षाया निग्रहादङ्गभङ्गादयः षट् भवन्ति । सामान्येनापि शूलशब्दनिर्देशे पक्वाशयगतः शूलो गृह्यते । क्षुद्वेगनिग्रहेण निरावरणः प्रभञ्जनः कुप्यति । तस्यावस्थानं पक्वाशये ; वक्ष्यति हि, पक्वाशयकटीत्यादारभ्य यावत्पक्वाधानं विशेषत इति । तत्र क्षुधो निग्रहे भोजनं लघु स्निग्धमुष्णमल्पं च योज्यम् ॥ १३ ॥

निद्राया इति । निद्राया निग्रहान्मोहादयो भवन्ति तत्र निद्रावेगरोधोत्थे विकारे स्वप्न इष्टः । सम्बाहनानि स्वल्पानि मर्दनानि च । कासस्येति । कासस्य कासवेगस्य रोधात्तद्वृद्धिः तस्य कासस्य वृद्धिराधिक्यं स्यात् । तथा श्वासादयः । तत्र कासचिकित्सितोक्तः सुतरामतिशयेन विधिः कार्य्यः । गुल्मेति । श्रमेणाध्वव्यायामादिना साहसेन सद्यो जातः श्वासः श्रमश्वासः । तस्माद्विधारिताद्वेगरोधाद्गुल्मादयः स्युः । तत्र विश्रमणं हितम् । वातघ्नश्च क्रियाक्रमो हितः । जृम्भाया इति । जृम्भाया रोधात् क्षुतिवद्रोगाः । तत्र सर्वा च वातघ्नक्रिया हितेति शेषः । जृम्भा मुखविकाशी गात्रविनामः । पीनसेति । बाष्पतोऽश्रुणो विधारितात् पीनसादयो

---

* वैवर्ण्यं चक्षुषस्तत्र स्निग्धोष्णं लघु भोजनम् । इति पाठान्तरम् ।

सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥ १८ ॥
विसर्पकोठकुष्ठाक्षि-कण्डूपाण्ड्वामयज्वराः ।
सकासश्वासहृल्लास-व्यङ्गश्वयथवो वमेः ॥ १९ ॥
गण्डूषधूमानाहारान् रूक्षं भुक्त्वा तदुद्वमः ।
व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ।
सक्षारलवणं तैलमभ्यङ्गार्थं च शस्यते ॥ २० ॥
शुक्रात्तत्स्रवणं गुह्य-वेदना श्वयथुर्ज्वरः ।
हृद्व्यथामूत्रसङ्गाङ्ग-भङ्गवृद्ध्यश्मषण्डताः ॥ २१ ॥
ताम्रचूडसुराशालि-बस्त्यभ्यङ्गावगाहनम् ।
बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः ॥ २२ ॥
तृट्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम् ॥ २३ ॥
रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।

---

भवन्ति । पीनसो नासास्रावः । अक्षिशिरोहृदां रुजा सम्बन्धः । सशब्दश्चार्थे गुल्मार्थे-त्यर्थः । तत्र स्वप्नादिका चिकित्सा ॥ १४—१८ ॥

विसर्पेति । वमेश्छर्द्दिषो विधारिताया विसर्पादयः स्युः । कोठो लोहितं कठिनञ्च मण्डलम् । अक्षिकण्ड्वादीनामासमयेन सम्बन्धः । गण्डूषेति । तत्र गण्डूषादयः शस्ताः । अनाहारोऽभोजनम् । एतेषां द्वन्द्वः । तथा रूक्षं भुक्त्वा तस्य रूक्षस्योद्वमश्छर्दनम् । एवं प्राणो वायुः स्वमार्गं प्रत्येति ततो व्यायामाद्यत्र शस्तम् । तथा क्षारलवणाभ्यां युक्तं तैलमभ्यङ्गार्थे शस्यते हितं भवति ॥ १९।२० ॥

शुक्रादिति । शुक्राद्विधारितात्तस्य शुक्रस्य स्रवणम् । तथा गुह्यवेदना पायुवेदना वृषणशूलम् । तथा श्वयथुः प्रक्रान्तत्वाद् गुह्य एवेति योज्यम् । अश्मशब्देनाश्मरी कथ्यते । वृद्धिर्वर्ध्म । षण्डता स्त्रीगमनाशक्तित्वम् । ताम्रेति । तत्र ताम्रचूडादिकं भजेत् । तथा बस्तिशुद्धिकरैः कुष्माण्डादिभिः सिद्धं क्षीरं भजेत् । प्रियाश्च कान्ताः प्रियत्वेन हिता इति शेषः । निरनुबन्धः न रभसेन प्रवर्त्तते शुक्रम् ॥ २१।२२ ॥

वेगरोधिनो येन चिकित्स्यास्तान् दर्शयन्नाह, तृडिति । तृट् च शूलं च ताभ्यामार्त्तं-मतिपीड़ितं तथा क्षीणं क्षीणदेहं वेगरोधिनं च त्यजेन्न चिकित्सेत् । तथा विशं यो वमति तं च वेगरोधिनं त्यजेत् ॥ २३ ॥

अथ किमेते रोगा वेगोदीरणधारणाद्भवन्ति नेत्याह ;—रोगा इति । सर्वेऽपि रोगा जायन्ते न केवलं पूर्वोक्ता एव । वेगानां पुरीषादिसम्बन्धिनां यान्युदीरणान्यना-गतानां प्रवर्तनानि तैः । तथा तेषामेवागतानां यानि विधारणान्यनुत्सर्गलक्षणानि तैः । श्चवेयं युक्तिः । वेगोदीरणधारणं नाम वायोः कर्म्म तस्य क्रियावत्त्वात् । तेन च वेगोदी-

निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥ २४ ॥
ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति।
अन्नपानौषधं तत्र युञ्जीतातोऽनुलोमनम् ॥ २५ ॥
धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च।
लोभेर्ष्याद्वेषमात्सर्य-रागादीनां जितेन्द्रियः ॥ २६ ॥
यतेत च यथाकालं मलानां शोधनं प्रति।

---

रणधारणलक्षणेन स्वकर्म्मणा स एव वायुः कोप्यते। स कुपितः सर्वानेव विकारान् जनयति। तथाचोक्तम्, "शाखागताः कोष्ठगताश्च रोगा मर्मोर्द्ध्वसर्वावयवाङ्गजाश्च। ये सन्ति तेषां नतु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति। विट्श्लेष्मपित्तादिमलायनानां विक्षेपसंहारकरः स यस्मात्"इति। निर्दिष्टमिति। तत्र तेषु वेगोदीरणधारणोत्थेषु सर्व्वेषु रोगेषु मध्याद ये तु भूयिष्ठं बाहुल्येन भवन्ति गुल्मोदावर्त्तादयस्तान् प्रति वर्त्यभ्यङ्गेत्यादिना साधनं निर्द्दिष्टं चिकित्सोक्ता। ततश्च वेगोदीरणधारणादनेकधा वायुर्यस्मात् कुप्यति। अतोऽस्माद्धेतोस्तस्यानुलोमनं मार्गयोजकमन्नपानौषधं युञ्जीत। यद्यपि वेगोदीरणधारणात् सर्वे रोगाजायन्त इत्युक्तम्। तथापि यथा वेगधारणाच्चिरकालभाविनः सप्रत्यया रोगा भवन्ति न तथोदीरणात्। अतएव तन्त्रकारोऽधोवातस्य रोधेनापि रोगा भवन्ति। शकृतो रोधादमी भवन्तीत्युवाच न तु तदुदीरणादमी रोगा भवन्तीति। प्रायोग्रहणं क्वचित् कफादेरपि प्रकोप इति समापादयति। तथा च वमिनिग्रह उक्तम्। विसर्पकोठकुष्ठाचीत्यादि। तत्र गण्डूषधूमानाहार इत्यादिचिकित्सा। न चैवंरूपो विधिर्वायावुपदिश्यते तस्मात् प्रायो ग्रहणम् ॥ २४। २५ ॥

यदि वेगरोधात् रोगा जायन्ते तर्हि लोभादीनामपि नरकादिहेतूनां वेगा न धार्य्या इति प्राप्ते सतीदमाह;—धारयेदिति। तुशब्दोऽवधारणे। सदा सर्वकालं लोभेर्ष्यादीन् वेगान् धारयेदेवं हितैषी यः पुरुषः स्वहितमिच्छन्। क्व ? प्रेत्य चेह च परलोके तथेह लोके च। किं भूतः सन् ? जितानि दान्तानीन्द्रियाणि मनः-षष्ठानि चक्षुरादीनि विषयाणामनभिलाषुकतया येन स जितेन्द्रियः। जितेन्द्रिय-शब्देन लोभादिवेगविधारण उपायं दर्शयति। जितेन्द्रिय एवैतान् धारयितुं शक्तो नान्य इत्यर्थः। द्वेषो वैरम्। मात्सर्य्यं परगुणासहिष्णुत्वम्। रागः प्रीतिः। आदिशब्देनाभिध्यादिपरिग्रहः। प्रेत्येहचेति कर्तव्ये द्विवकारकरणं रागादीनां वेग-विधारणेन प्रेत्येह वाऽस्मिन् लोके तुल्यकत्वज्ञापनार्थम्। अन्यथा प्रेत्येत्यस्य पूर्व-निर्देशाद्भूयसैषां रागादीनां विधारणं प्रेत्य न तथेह लोके, पश्चान्निर्दिष्टत्वात् ॥ २६ ॥

अन्यच्च हितैषी किं कुर्यादित्याह;—यतेत इति। मलानां वातपित्तश्लेष्मपुरीषादीनां यथाकालं शोधनं प्रति यतेत यत्नं कुर्यात्। यो यस्य मलस्य शोधनकालः स तस्मिन् काले शोधनीय इत्यर्थः। किमर्थं मलानां शोधनं कार्य्यमित्याह,—अत्यर्थेत्यादि यस्मात् ते मला अत्यर्थसञ्चिता अतिशयेन स्वस्थाने वृद्धिङ्गताः कुतोऽप्याहारविहाररूपात्

अत्यर्थसञ्चितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः ॥ २७॥

दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ।
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ २८ ॥

यथाक्रमं यथायोगमत ऊर्द्ध्वं प्रयोजयेत् ।
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥ २९ ॥

भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ।
शालिषष्टिकगोधूम-मुद्गमांसघृतादिभिः ॥ ३० ॥

---

कोपहेतीः क्रुद्धाः कुपिताः सन्तः कदाचिज्जीवितच्छिदः स्युर्भवेयुः । तस्मात्ते शोधनीयाः । अत्यर्थसञ्चितग्रहणेनैतद् द्योतयति । यदि ते मला अत्यर्थसञ्चिताः स्युस्तदैव तेषामन्योपक्रमेभ्यः शोधनाख्य उपक्रमो ज्यायान् । लङ्घनपाचने तूपक्रमभावे ॥ २७ ॥

तदेवैतच्चेतसि कृत्वा दोषा इत्यादिग्रन्थं ग्रन्थकृदुवाच,—दोषा इति । दोषा वातादयो लङ्घनपाचनैर्जिताः सन्तः प्रकृतिं प्रापिताः कदाचित् कस्मिन्नपि काले कुप्यन्ति । ये पुनः संशोधनैः शुद्धास्तेषां न पुनरुद्भव उत्थानं भवति ॥ २८ ॥

यथेति । कालविद् यो वैद्यः सोऽतः संशोधनपूर्व्वं रसायनानि प्रयोजयेत् । कालशब्दो देशबलशरीराहारसात्म्यसत्वप्रकृतीनामुपलक्षणार्थः । न हि कालमात्रविद्रसायनप्रयोगं सम्यग्विधापयितुं शक्तः । किम्भूतानि रसायनानि ? सिद्धानि बहुशो दृष्टप्रत्ययानि ब्राह्मवासिष्टादीनि । कथं योजयेत् इत्याह, यथाक्रममिति । यथाक्रमं यथायोगमित्यनेन रसायनं वाजीकरणोक्तं स्मारयति । तत्रैष रसायनक्रमः । हरीतकीमामलकं सैन्धवं नागरं वचामित्यारभ्य यावदित्थं संस्नुतकोष्ठस्य रसायनमुपाचरेत् । एतदुक्तं भवति । यद्यप्येवं वमनविरेचनास्थापनानुवासननावनैः पञ्चभिरपि कर्म्मभिः संस्नुतोर्ध्वाधःसकलकायस्तथाप्येष रसायनीयो भूयः शरीरसंस्कारः करणीयस्तत्पूर्वकत्वात् । अतएव संशुद्धदेहोऽयमिति कृत्वा त्रिवृद्दन्त्यादीन् विरेचनात्मकानुपदिशति । तथा वाजीकरणेऽप्याह,—"अथ स्निग्धविशुद्धानां निरूहान् सानुवासनान् । घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् । योगविद् योजयेत् पूर्वं क्षीरसंसरसाशिनम् । ततो वाजीकरान् योगान्" इति । तथा यथायोगं यो यस्य युज्यते दातुमित्यर्थः । यथेदं रसायनं वातप्रकृतेर्योग्यमिदं पित्तप्रकृतेरिदं श्लेष्मप्रकृतेरित्यादि । तथाऽमुष्मिन् देशेऽमुष्मिन् काले वाऽमुष्मिन् वयस्यमुष्मिन् देहे रसायनं योग्यमिदमिति यथायोगार्थः । एव वृष्ययोगेऽपि योज्यम् । अत्र च रसायनानि वातातपिकानि योजयेत् न कुटीप्रावेशिकानि । स्वस्थवृत्ताविकारत्वात् तद्विधानस्य ॥ २९ ॥

भेषजेति । भेषजेन क्षपिते नरे शोधनकर्षिते सत्याहारैर्भोज्यैर्बृंहणं हितं; क्रमात् सहसैव । कैराहारैः ? इत्याह,—शाल्यादिभिः । किम्भूतैः ? हृद्यानि च तानि दीपनानि भेषज्यानि औषधानि च शुण्ठीपिप्पल्यार्द्रकलशीलादीनि तैः संयोगो मिश्रित-

हृद्यदीपनभैषज्य-संयोगाद्रुचिपक्तिदैः।
साभ्यङ्गोद्वर्त्तनस्नान-निरूहस्नेहबस्तिभिः ॥ ३१ ॥
तथा स लभते शर्म्म सर्वपावकपाटवम्।
धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घमायुषः ॥ ३२ ॥
ये भूतविषवाय्वग्नि-क्षतभङ्गादिसम्भवाः।
रागक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ॥ ३३ ॥
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्त्तनम् ॥ ३४ ॥

---

तस्मात् हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्ती ददतश्चाभिलाषपाकानुत्पादयन्ति ये शाल्यादयस्तैरुचिपक्तिदैराहारैर्बृंहणं भेषजक्षपिते पथ्यम्। किम्भूतैराहारैः? साभ्यङ्गेत्यादि। सहाभ्यङ्गादिभिर्वर्त्तन्त इति साभ्यङ्गादिभिश्चेत्यर्थः। स्नेहबस्तिरनुवासनम् ॥ ३० । ३१ ॥

एवं कृते पुरुषः किं प्राप्नोतीत्याह,—तथेति। तथा तेन प्रकारेण पूर्व्वं शोधनं ततो बृंहणं ततो रसायनप्रयोग इत्येवं रूपेण संशोधनादिसेवी पुरुषः शर्म्म स्वास्थ्यं लभते। तथा सर्वेत्यादि। सर्वे च ते पावकाश्च सर्वपावकास्तेषां पाटवं शक्तिं लभते। तत्र "भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" इति। पञ्चमहाभूताग्नयो धात्वग्नयः सप्त त्रयोदशो जाठराग्निरिति। धीवर्णेत्यादि। धीवर्णयोश्चक्षुरादीन्द्रियाणां च वैमल्यं लभते। तथा वृषतां स्त्रीगमनसामर्थ्यं लभते। तथा दैर्घ्यमायुषो जीवितस्याधिक्यं लभते ॥ ३२ ॥

अधुना आगन्तुरोगान् सोपक्रमान्निर्दिशति;—य इति। भूतानि च विषं च वायुश्चाग्निश्च क्षतं च भङ्गश्चेति द्वन्द्वः। ते आदिर्येषामागन्तुकरोगहेतूनां त एवं, तेभ्यः सम्भवो येषामागन्तुकगदानां ज्वरादीनां ते भूतादिसम्भवा आगन्तवो रोगाः स्युः। आगन्तुहेतुप्रभवत्वादागन्तवो गदा उच्यन्त इत्यर्थः। न केवलमेतएव गदा रागद्वेषभयाद्याश्चागन्तवो गदाः स्युः ॥ ३३ ॥

अधुना एषां चिकित्सां निर्दिशति;—त्याग इति। प्रज्ञाया अपराधा असाध्याचरणानि तेषां त्यागः, तथेन्द्रियाणां चक्षुरादीनामुपशमो रूपादिविषयेऽतिप्रवृत्तानां संयमनम् अशुभरूपे वा विषये प्रवृत्तानां संयमनम् अलोलुपतेत्यर्थः। तथा स्मृतिरतीतार्थानुस्मरणम्। देशेत्यादि। तथा देशादीनां विज्ञानम्। देशो जाङ्गलादिः। कालः शीतादिः। आत्मा च वातप्रकृत्यादिः। एषां विज्ञानमवबोधः। तथा च सतां वृत्तं चरितं सद्वृत्तं तस्यानुवर्त्तनमनुष्ठानम्। निजानामागन्तूनां च विकाराणामनुत्पत्त्यै रोगाणामनुत्पादनाय समासेन सङ्क्षेपेण विधिरेष त्यागः प्रज्ञापराधानामित्यादिसद्वृत्तस्यानुवर्त्तनमित्येवमन्तः प्रदर्शितः सम्यगुक्तः। उत्पन्नानामित्यादि। चः

अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः।
निजागन्तुविकाराणामुत्पन्नानां च शान्तये ॥ ३५ ॥
शीतोद्भवं दोषचयं वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले।
घनात्यये वार्षिकमाशु सम्यक्प्राप्नोति रोगानृतुजान्न जातु ॥३६॥
नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥ ३७ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

---

न्तये। न केवलं निजागन्तूनां रोगाणामनुत्पत्त्यै विधिरेष प्रोक्तः, यावदुत्पन्नानां जातानां च शान्तये विधिः प्रोक्तः ॥ ३४—३५ ॥

अथ मलानां शोधनकालानाह ;—शीतोद्भवमिति। शीतशब्देन हेमन्तशिशिरा-ख्यादृतू द्वावपि गृह्णीते। तन्नोद्भवो जन्म यस्य दोषचयस्यासौ शीतोद्भवो दोषचयः। तं वसन्ते विशोधयन्निर्हरन्, ग्रीष्मजमभ्रकाले वर्षाकाले दोषचयं विशोधयन्, तथा वार्षिकं घनात्यये शरदि च आशु यथोक्तं कालमनुल्लङ्घयन्, सम्यग्यथावच्चिविधमपि दोषचयं विशोधयन्नृतुजान् रोगान् न जातु कदाचित्प्राप्नोतप्रासादयति। वसन्ते विशोधयन्नित्यत्र वसन्तप्रारम्भ एव चैत्रे नाsसि विशोधयन्निति बोध्यम्। प्रत्यवायभयात्। तथाहि। ऋतुद्वयसञ्चितस्य दोषचयस्य विशोधनमक्रियमाणं रोगानीकं कुर्यात्। घनात्यये वार्षिकमित्यत्र अत्यन्तवनविनाशि शरत्पश्चिमे भागे विशोधयेदिति बोध्यम्। वार्षिको हि दोषचय एकर्तुज एव। तस्मादिग्रम्भं कृत्वा साधारणे कार्त्तिके मासि स विशोधयितुं युक्तः। अपि च उग्रहेमन्तशिशिरकालजौ दोषचयौ वसन्ते शोधयितव्यः। तस्मादाश्वयुजे मासि वार्षिकौ दोषचयौ यदि विशोध्येत तदानीमतितरां बहुरग्रे दोषचयः स्यात् कालस्य बहुत्वात्। ग्रीष्मजमभ्रकाल इत्यत्र च कालग्रहणेन वर्षाप्रारम्भ-मात्र एवेति बोध्यम्। तथा च शास्त्रकारो वक्ष्यति,—"श्रावणे कार्त्तिके चैत्रे मासि साधारणे क्रमात्। ग्रीष्मवर्षाहिमचितान्वाय्वादीनाशु निर्हरेत्" ॥ ३६ ॥

नित्यमिति। नित्यं सदैव हिताहारविहारौ सेवते तच्छीलो यः स एवम्भूतो नरः। तथा समीक्ष्यकारी विमृश्यविधायी। इदं कृत्वेदं सम्पद्यत इदं च कृत्वे-दं सम्पद्यते, एवं बुद्धा शुभं करोत्यशुभं वर्जयति। तथा विषयेषु शब्दादिषु असक्तोऽलो-लुपः। तथा दाता त्यागी त्यागवान्। तथा समः सर्वेषु भूतेषु समचित्तः। तथा सत्यपरोऽवितथवाक्। तथा क्षमावान्। यः शक्तोऽपि कृतापराधं दण्डेनानुरूपेण न योजयति। तथाऽऽप्तानुपसेवते तच्छीलो यः स आप्तोपसेवी चारोगी भवति। न केवलं प्राक्तनविध्यनुष्ठानेनारोगः सम्पद्यते यावदाप्तोपसेवी चेति च शब्दार्थः। "येषां त्रिकाल-

# पञ्चमोऽध्यायः ।

अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।

---

ममलं ज्ञानमव्याहतं सदा । आप्ताः शिष्टाश्च विबुधास्तेषां वाक्यमसंशयम्" इत्याप्त-लक्षणमिति । उपजातिर्वृत्तम् (१) ॥ ३७ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायां चतुर्थोऽध्यायः ।

---

अथ द्रवद्रव्यविज्ञानीयस्तस्यायं सम्बन्धः । नित्यं हिताहारविहारसेवीत्युक्तम् । तौ चाहारविहारौ दिनचर्य्यर्तुचर्य्ययोर्यद्यपि नियमितौ तथापि न भवत्यलं हिताहितस्वरूप-विज्ञानम् । एवं हि तत्रावादीत् । "गुरुशीतदिवास्वप्न-स्निग्धाम्लमधुरांस्त्यजेत्" । तथा, "व्यक्ताम्ललवणस्नेहं संशुष्कं चौद्रवल्लघु" । तथा अनन्तरातीतेऽपि अध्याये जगाद, अन्नपानं च विड्भेदीति । तदियता वाक्येन न तज्ज्ञायते किं पुनस्तद्गुरुशीतं किं लघु किं स्निग्धाम्लं किं शकृद्भेदनमिति; तस्मादाहारद्रवद्रव्यस्वरूपमतःपरं प्रतन्यते । तत्रापि पञ्चवर्गस्वभावत्वेनाल्पवक्तव्यत्वात्प्राग्द्रवद्रव्यविज्ञानीय-स्वरूपं निर्देष्टुं युक्तमन्न-स्याद्रवस्वभावत्वेन भूयस्त्वादित्याह,—अथेति । अपामेवायं स्वाभाविको गुणो यत् द्रवत्वम् । अतो यानि कानिचिद्द्रवरूपाणि द्रव्याणि तानि सर्वाणि अन्यान्येव चीरदध्यादीनि तदर्थं द्रवद्रव्यशब्दः सामान्येन सर्वद्रवव्यक्तिपरिग्रहार्थः शास्त्रकृता प्रयुक्तः । द्रवाणि च तानि द्रव्याणि च द्रवद्रव्याणि तेषां विज्ञानमवबोधस्तस्मै हितो द्रवद्रव्यविज्ञानीयोऽध्यायस्तं व्याख्यास्यामः प्रथयिष्यामः ॥ १ ॥

प्राधान्याच्च पानीयस्य प्रागुपदेशः । तथा चाष्टाङ्गसंग्रहेऽन्नपानप्रकरणेऽध्यगीष्ट । अन्नपाने तु सलिलमेव श्रेष्ठम् । सर्वरसयोनित्वात्सर्वभूतसात्म्यात्जीवनादिगुणयोगाच्च । तथावैवाध्यैष्ट । "पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम्" इत्यादि । तथा-चावैवाग्रसंग्रहेऽपि तदेव प्रागुपनीतं श्रेष्ठमुदकमाश्वासनस्तम्भनक्लेदनानासिति । बहु-गुणत्वात् चान्तरिचस्यजलस्य प्रागुपन्यासो युक्त इत्याह,—जीवनमिति । जीवन-

---

(१) अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमुपायवत्सु ।
जितेन्द्रियं नानुतपन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥
कालोऽनुकूलो विषया मनोज्ञा धर्म्याः क्रियाः कर्म सुखानुबन्धि ।
सत्त्वं विधेयं विशदा च बुद्धिर्भवन्ति धीरस्य सदा सुखाय ॥
इत्यधिकः पाठो दृश्यते क्वचित् ।

तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥ २ ॥
गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः।
हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ ३ ॥
येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम्।
अक्लिन्नमविवर्णं च तत्पेयं गाङ्गमन्यथा।

---

मोजोविवृद्धिकरणम्। सौम्यधातुवर्धनमित्यन्ये। तर्पणं क्लमहृत्। हृद्यं हृदयाय हितं न तु हृदयस्य प्रियमिति हृद्यमिति व्याख्येयम्। एवं हि व्याख्यायमानेऽस्मिन् हृद्यानामिन्तरगुणानां मध्ये तत्पाठं मुनिर्नैवाकरिष्यत्। यस्मात्किञ्चिद्द्रव्यं कस्यचित्प्रियं भवति न सर्वं सर्वस्य, तस्माद्धृदयाय हितं हृद्यमिति बोध्यम्। तथा ह्लादि आह्लादकरम्। तथा बुद्धेः प्रबोधनम्। यावन्मात्रा यस्य धिषणा सा तस्य स्फुटप्रतिभासा तद्योगाद्गङ्गावतीत्यर्थः। तनु स्वच्छम्। अव्यक्तरसमनभिव्यक्तषड्रसमित्यर्थः। मृष्टमित्यास्वादसुखम्। सन्ति हि भूरिरसशर्कराक्वाथचूर्णवटकादीनि अव्यक्तरसानि न तु कार्त्स्न्येन तानीन्द्रियप्रसादप्रीतिकराणि। तथा अनुरसबाहुल्यात् पृथगपि द्रव्याण्यभयामलकादीन्यव्यक्तरसानि न तु पुनस्तानि तथा मनः प्रीणयन्ति। पानीयञ्चाव्यक्तरसस्याप्याश्रयवशात् कषायत्वस्वादुत्वादि भवत्येव। तथा चाष्टाङ्गसंग्रहेऽपठत्। "श्वेते कषायं तत्स्वादु कृष्णे तिक्तं च पाण्डुरम्" इत्यादि। मृष्टं शुद्धमिति न व्याख्येयम्। तथा च मुनिः। शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम्। प्रकृत्या दिव्यमुदकमिति। अत्र हि मृष्टविमलयोर्द्वयोरुपादाने पौनरुक्त्यं स्यात्। तस्मान्मृष्टशब्दोऽत्र मनःप्रीणनार्थः। तथा शीतं वीर्येण स्पर्शेन च। तथा लघु लघुगुणयुक्तम्। तथा अमृतोपमम्। यथा किलामृतं निर्दोषप्रबलधातुसाम्यक्षत्त्वविषार्तिजित्वादिगुणैरशेषैर्युक्तं तथैतज्जलमपीत्यर्थः। तथा चोक्तं संग्रहे। "सूर्येन्दुपवनप्रयुक्तत्वाल्लघु वातकफापहम्। शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्त्तिजित्" इति। तथा नभसो भ्रष्टमन्तरिक्षात्पतितमात्रं वस्त्रादिगृहीतं गाङ्गं जलमीदृग्गुणं भवति। तुः पुनरर्थे। रविचन्द्रानिलैः स्पृष्टं सम्बद्धं सत् पुनः पथ्यापथ्यत्वे देशकालावपेक्षते। देशो विषयः पात्रमाश्रय इति पर्यायाः। तत्र किमनूपदेशे जाङ्गले वा तत्पतितं तथा किमसितश्वेतायन्यतमे वेति देशानुवर्त्तनम्। तथा शीते किं वा उष्णेऽथवा वर्षास्वे पतितमिति कालानुवर्त्तनम्। रविचन्द्रानिलैरिति समस्तनिर्देशो यदा समस्तैरेतैः स्पृष्टं न तु व्यस्तैस्तदा हिताहितत्वे देशाद्यपेक्षत इति द्योतयति। सद्यो वस्त्रादिगृहीतस्य जलस्य तु न सर्वैरेतैर्योगः सम्भवतीति तत्प्रायेण हितमेव ॥ २।३ ॥

ननु आकाशात्पततस्तल्लक्षणमन्तरेण गाङ्गमिदमिति न ज्ञायत इत्याह। येनेति। येनाम्बुनाऽभिवृष्टमाभिमुख्यतः सिक्तं शाल्यन्नं राजतस्थितमक्लिन्नमक्लेदयुतमविवर्णं च भवति तद्गाङ्गं जलं पेयम्। पेयमित्युपलक्षणार्थम्, स्नानावगाहयोरपि तत्पथ्यमेव। रजतस्य रूप्यस्य विकारो राजतम्। प्राणिरजतादिभ्योऽञ्। अन्यथा सामुद्रमिति।

सामुद्रं तन्न पातव्यं मासादाश्वयुजादिना ॥ ४ ॥
ऐन्द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत्।
तदभावे च भूयिष्ठमान्तरीक्षानुकारि यत्।
शुचिपृथ्व्यसितश्वेते देशेऽर्कपवनाहतम् ॥ ५ ॥
न पिबेत्पङ्कशैवाल-तृणपर्णाविलास्तृतम्।
सूर्येन्दुपवनादृष्ट-मभिवृष्टं घनं गुरु।

---

सामुद्रमिति। एतल्लक्षणविपर्ययेण येनाऽम्बुना सिक्तं शाल्यन्नं विवर्णं मलिनं क्लिन्नं भवेत् तत्सामुद्रं तच्च न पातव्यम्। अत्रापि पाननिषेध उपलक्षणार्थः। स्नानावगाहावपि ह्यनेन न कार्यौ। समुद्रस्य क्षारान्वयत्वात् क्लेदनादियोगः। ननु सामुद्रमित्ययुक्तम्। यतः समुद्रशब्दस्य धूमादिपाठात् धूमादिभ्यश्चेति वुञा भवितव्यमिति केचित्। नैवम्। धूमादिभ्यश्चेत्यत्रैव गणे पठ्यते समुद्रान्नावि मनुष्ये च वुञ्। सामुद्रिकी नौः सामुद्रिको मनुष्यः। अन्यत्र लगेव, सामुद्रं जलमिति। तस्मान्न्याय्यमेवैतत्। एवं सामुद्रो मणिरित्यादयो वेद्याः। अथ किं सदैवैतन्न पातव्यं ? नेत्याह,—मासादित्यादि। आश्वयुजमन्तरेणैतन्न पातव्यम्। आश्वयुजे तु मासि कालस्वाभाव्यात् पथ्यमेवेति भावः। सुश्रुतस्त्वधीते। गाङ्गमाश्वयुजे मासि प्रायो वर्षति माधवः। तदुपाददीतेत्यादि ॥ ४ ॥

ऐन्द्रमित्यादि। ऐन्द्रमान्तरीक्षं जलं गाङ्गं सुपात्रस्थं शोभने भाजने रजतादौ स्थितमविपन्नमदूषितमविनष्टं पिबेत्। न मलिनाशुचिजुगुप्सितपात्रस्थम्। तदभावे तस्यैन्द्रस्याभावे भूयिष्ठं बाहुल्येनान्तरीक्षमैन्द्रं जलं यदनुकरोति स्वच्छादिगुणैः सदृशं तत् पिबेत्। तदेवाह,—शुचीत्यादि। शुचिश्चासौ पृथ्व्यसितश्चेतश्च तस्मिन् देशे यज्जलं स्थितम्। तथा अर्कपवनाभ्यामाहतमासमन्तात् क्रान्तमीदृशमान्तरीक्षानुकारि स्यादिति भावः ॥ ५ ॥

इदानीं यादृशं जलं न पेयं तद्दर्शयति न पिबेदिति। पङ्कः कर्दमः। शैवालः शैवालम्। तृणं खड़ः। पर्णं पत्रम्। आविलं च आस्तृतं च आविलास्तृतं पङ्कादिभिराविलास्तृतं पङ्काद्याविलास्तृतम्। यथासम्भवमत्र सम्बन्धः। तेन पङ्केनाविलं कलुषं शैवलादिभिरास्तृतं संच्छादितमिति बोध्यम्। तथा सूर्येन्दुपवनैरदृष्टमनासेवितं न पिबेत्। तथा अभिवृष्टं तत्कालपतितान्यवर्षमिश्रीभूतं कालान्तराविश्रान्तम्। खरनादे चैवमुक्तम्। "वार्षिकं तदहर्वृष्टं भूमिस्थमहितं जलम्। व्युष्टं त्रिरात्रं (१) तच्चैव प्रसन्नमस्तृतोपमम्" इति। तथा घनमस्वच्छम्। तथा गुरु तथा फेनिलं फेनवत्। तथा जन्तुमत् कीटयुक्तम्। तथा तप्तमुष्णम्। तथा अतिशैत्यतो अतिजाड्याद्दन्त-

---

(१) द्विरात्रमिति पाठान्तरम्।

फेनिलं जन्तुमत्तप्तं दन्तग्राह्यतिशैत्यतः ॥ ६ ॥
अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ।
लूतादितन्तुविण्मूत्र-विषसंश्लेषदूषितम् ॥ ७ ॥
पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ।
पथ्याः समासात्ता नद्यो विपरीतास्त्वतोऽन्यथा ॥ ८ ॥
उपलास्फालनाक्षेप-विच्छेदैः खेदितोदकाः ।

---

याहि दन्तान् गृह्णाति कार्य्याचमान् करोति तच्छीतम् । न पिबेदिति प्रतिपदं योज्यम् । इत्ययं प्रायो भूमिस्थतोयस्य निषेधः ॥ ६ ॥

अधुना आन्तरिक्षं यन्न पेयं तदाह,—यद्दिव्यं जलमार्त्तवं न भवति तच्च न पिबेत् । ननु सर्व्वमेव दिव्यं जलमार्त्तवम् ! कालस्य ऋतुरूपत्वात्; ऋतौ च भवमार्त्तवम् । एवं च न किञ्चिदनार्त्तवं सम्भवति । उच्यते । अनार्त्तवं न पिबेत् । अर्थादार्त्तवं पिबेदित्युक्तं भवति । तदत्र सामान्योक्तावपि विशिष्टौ दिव्यस्य जलस्य ऋतुर्बोध्यो वर्षाख्यो यस्मिन् काले दिव्यं जलं पेयत्वेनाभ्यनुज्ञायते । यथा वर्षासु दिव्यनादेये-त्यादि । अन्यर्त्तुभवं त्वनार्त्तवत्वात् न पेयम् । अत्र च वर्षाख्य ऋतुश्चातुर्मासि-कोऽभिप्रेतः । अतएवाश्वयुजे मासि दिव्यं जलं पेयत्वेनानुजज्ञे । अन्यथा ह्यनार्त्तव-त्वात् तदपेयमेव स्यात् । आर्त्तवं प्रथमं च यत्, न केवलमनार्त्तवं न पिबेत् यावदार्त्तव-मपि प्रथमं न पिबेत् । कुतो हेतोरित्याह,—लूतादीत्यादि । लूता आदिर्येषां ते लूतादयः क्षुद्रजन्तवः प्राणिविशेषास्तेषां तन्तुविण्मूत्रविषाणि; तन्तुः सूत्राकारविशेषो लालेत्यन्ये; तेषां लूतादितन्तुविण्मूत्रविषाणां संश्लेषः सम्पर्कस्तेन दूषितं यतस्ततस्त-दार्त्तवमपि न पेयम् । केचित्त्वेवं व्याख्यानयन्ति । आर्त्तवं प्रथमं च यत्तत् न पेयं लूतादितन्त्वादिदूषितं च न पेयमिति । संग्रहे चाध्यगीष्ट । "घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् । व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः ॥ पर्णीमूलबिसग्रन्थि-मुक्ताकतकशैवलैः । वस्त्रगोमेदकाभ्यां वा कारयेत् तत् प्रसादनम् । पाटलाकरवी-रादिकुसुमैर्गन्धनाशनम्" इति ॥ ७ ॥

इदानीं नदीर्निरूपयन्नाह,—पश्चिमेति । नद्यः समासात् संक्षेपतः पथ्या हिताः । का इत्याह,—याः पश्चिममुदधिं समुद्रं गच्छन्तीति पश्चिमोदधिगाः । अन्येभ्योऽपि दृश्यत इति डः । तथा शीघ्रवहाः वेगवत्यः । तथा अमलोदका निर्म्मलसलिलाः । एवं त्रिविशेषणविशिष्टाः पथ्याः । अतोऽन्यथा पुनरन्यथा विपरीतलक्षणास्ता विपरीता अपथ्याः ॥ ८ ॥

उपलेति । हिमवांश्च मलयश्च हिमवन्मलयौ ताभ्यामुद्भूताः सञ्जाताः पथ्याः । किं सर्वा एव ? नेत्याह,—उपलेत्यादि । उपलानामास्फालनमुपलास्फालनं, तेनाक्षेपः क्षोभस्तेन विच्छेदा विश्लेषा उपलास्फालनाक्षेपविच्छेदास्तैः खेदितं जातक्षोभमुदकं यासां ताः खेदितोदका या हिमवन्मलयोद्भूतास्ता एव पथ्याः । यास्त्वेवम्भूता न भवन्ति ता

हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः।
कृमिश्लीपदहृत्कण्ठ-शिरोरोगान् प्रकुर्व्वते ॥ ९ ॥
प्राच्याऽऽवन्त्यापरान्तोत्था दुर्नामानि महेन्द्रजाः।
उदरश्लीपदातङ्कान् सह्यविन्ध्योद्भवाः पुनः ॥ १० ॥
कुष्ठपाण्डुशिरोरोगान् दोषघ्नाः पारियात्रजाः।
बलपौरुषकारिण्यः सागराम्भस्त्रिदोषकृत् ॥ ११ ॥
विद्यात्कूपतड़ागादीन् जाङ्गलानूपशैलतः ॥ १२ ॥
नाम्बु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः।
पाण्डूदरातिसारार्शोग्रहणीदोषशोथिभिः।

अपथ्याः। स्थिरा इति। ता एवावहन्त्यः सत्यः कृम्यादीन् कुर्वते। हृच्च कण्ठश्च शिरश्च तेषां रोगाः। कृमयश्च श्लीपदं च हृत्कण्ठशिरोरोगाश्चेति द्वन्द्वः। मुनिरपि हिमवत् प्रभवानां पथ्यत्वमाह। कृणात्रेयसुश्रुतौ त्वपथ्यत्वमाहतुः। अतएवायं ग्रन्थकारो युक्त्या मतद्वयमपि सङ्गिरमाणो विशेषणमुपन्यस्तवान् उपलास्फालनाक्षेपविच्छेदैः खेदितोदका इति। तेन या एवंविधा न भवन्ति ता न पथ्या इति ॥ ९ ॥

प्राच्येति। प्राच्यादिजा नद्यो दुर्नामान्यर्शांसि कुर्वते। प्राच्या गौड़ाः। आवन्त्यो मालवाः। अपरान्ताः कोङ्कणाः। महेन्द्रजा नद्य उदरादीन् कुर्वते। सह्यविन्ध्यपर्वतोत्थाश्च पुनः कुष्ठादीन् कुर्वते। पारियात्रे जाता दोषघ्न्यो भवन्ति ॥ १०।११ ॥

विद्यादिति। आदिशब्देन संग्रहोक्ता गृह्यन्ते। यथा,—"कौपसारसताडागचौण्ड्यप्रास्रवणौद्भिदम्। वापी नदी तोयमिति तत्पुनः स्मृतमष्टधा ॥ कौपं स्वादु त्रिदोषघ्नं लघु पथ्यं च सर्वदा। चारं तु कफवातघ्नं दीपनं पित्तकृत्परम् ॥ कषायबहुलं श्लेष्मपित्तघ्नं वातकृच्च तत्। तद्वाद्यं सारसं बल्यं कषायमधुरं लघु ॥ औद्भिदं स्वादु पित्तघ्नं दीपनं गुरु किञ्चन। सक्षारं कटु वाप्यम्बु पित्तघ्नं कफवातजित् ॥ लघ्वल्पदोषं सुस्वादु नववापीष्ववार्षिकम्। अनभिष्यन्दि नादेयं कटुकं कफपित्तजित्। विशदं वातलं रूक्षमनवस्थितजावनम्" ॥ सुश्रुते चैषां लक्षणमुक्तम्। यथा,—"भूम्युत्खातसमुद्भूतमिन्द्रनीलसमप्रभम्। विमलं मधुरास्वादं कौपं जलमुदाहृतम् ॥ नद्याः शैलवराद्वापि स्रुतमेकान्तसंस्थितम्। कुमुदाम्भोजसंछन्नं वारि सारसमुच्यते ॥ प्रशस्तभूमिभागस्थं नैकसंवत्सरोषितम्। कषायमधुरास्वादं ताड़ागं सलिलं स्मृतम् ॥ स्वयं शीर्णशिलाश्वभ्रे नीलोत्पलनिभं जलम्। लतावितानसञ्छन्नं बुधैश्चौण्ड्यमुच्यते ॥ शैलसानुसमुद्भूतं स्पृष्टं वातहिमातपैः। लघु शीतामलं स्वादु स्मृतं प्रास्रवणं जलम् ॥ विदार्य्य भूमिमुद्भूतं महत्या धारया स्रवेत्। यज्जलं वेदितव्यं तदौद्भिदं स्वादुशीतलम् ॥ पाषाणैरिष्टकाभिर्वा बद्धा स्वाद्या तु कूपवत्। वापी सा खलु विज्ञेया कृतसोपानपङ्क्तिका ॥ नद्यां शैलप्रसूतायां गोमेदकमणिप्रभम्। प्रशस्तभूमिभागस्थं जलं नादेयमुच्यते" इति ॥ "पौषादि-

ऋते शरन्निदाघाभ्यां पिबेत् स्वस्थोऽपि चाल्पशः ॥ १३ ॥
समस्थूलकृशा भक्त-मध्यान्तप्रथमाम्बुपाः ॥ १४ ॥
शीतं मदात्ययग्लानि-मूर्च्छाच्छर्दिश्रमभ्रमान्।
तृष्णोष्णदाहपित्तास्र-विषाण्यम्बु नियच्छति ॥ १५ ॥
दीपनं पाचनं रुच्यं * लघूष्णं बस्तिशोधनम्।

इतयेश्चिष्टं विशेषेण क्रमाज्जलम्। सरस्तड़ागयोः कूपचुण्ड्योः प्रस्रवणौद्भिदोः॥ कूपेन्द्रयोः कूपचुण्ड्योः सर्वं पथ्यं ततः परम्"। तदेतान् कूपादीन् जाङ्गलानूपशैलान् समाश्रितत्र जातान् विद्यात्, जाङ्गलादिदेशजान् यथायोगं लघून् गुरूंश्च जानीयादित्यर्थः। तत्र जाङ्गलदेशे कूपादीनां सप्तानां बहूदकसम्बन्धाभावाल्लघुत्वं वेद्यम्। आनूपे तु बहूदकसम्बन्धाद्गुरुत्वं वेद्यम्। शैले तूदकाल्पतया लघुतरत्वं वेद्यम्। तथा च संग्रहे,—"धन्वानूपमहीप्राणां सामीप्याद्गुरुलाघवम्" इति ॥ १२ ॥

इदानीं केषाञ्चिज्जलपाननिषेधमाह,—नाम्बु पेयमिति। अल्पाऽग्न्यादिभिरम्बु न पेयम्। सर्व्वथैषां जलपाननिषेधप्रत्यवायमाशङ्कमान इदमाह,—अशक्त्या वा पिपासामसहिष्णुभिरत्यल्पं स्वल्पं पेयम्। यावन्मात्रेण प्रत्यवायो न भवति तावदेव पेयमित्यर्थः। अल्पाग्नयश्च गुल्मिनश्चे ति द्वन्द्वः। पाण्ड्वादीनां षण्णां द्वन्द्वः, ततो मत्वर्थीय इनिः। शरन्निदाघाभ्यामन्तरेण स्वस्थोऽप्यल्पशः पिबेत् किं पुनरातुरः। संग्रहे त्वेवमुवाच,—"काममल्पमशक्तौ तु पेयमौषधसंस्कृतम्। पाषाणरूप्यमृद्भेमजाततापार्कतापितम्। पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित्" इति ॥ १३ ॥

समेति। समाश्च स्थूलाश्च कृशाश्च समस्थूलकृशाः। मध्यं च अन्तश्च प्रथमश्च मध्यान्तप्रथमाः। भक्तस्य मध्यान्तप्रथमा भक्तमध्यान्तप्रथमाः। तेषु कालेषु येऽम्बु पिबन्ति ते भक्तमध्यान्तप्रथमाम्बुपाः, यथाक्रमं समाः स्थूलाः कृशाश्च भवन्तीत्यर्थः। भक्तमध्येऽम्बु पीतं धातुसाम्यं समानतां करोति। भक्तान्ते तु पीतमामाशये कफवृद्धिं विदधत् स्थौल्यमाधत्ते। भक्तादौ च पीतं निरिन्धनमग्निं तेजःप्रतिपक्षतयावश्यमवसादयति। मन्दोऽग्निश्च सम्यगाहारं पक्तुमशक्तो भवति। आहारस्य च सम्यगपाकान्न तथा पुष्टिरिति कृशत्वे युक्तिः। तथा च संग्रहे,—"भक्तस्यादौ जलं पीतमग्निसादं कृशाङ्गताम्। अन्ते करोति स्थूलत्वमूर्द्ध्वमामाशयात् कफम्। मध्ये मध्याङ्गतां साम्यं धातूनां जरणं सुखम्" ॥ १४ ॥

शीतमिति। शीतमम्बु मदात्ययादीन् नियच्छति पराकरोति। मदात्ययो मद्योत्थो रोगः। ग्लानिः क्लान्तिः। मूर्च्छा मोहः। छर्द्दिर्वमिः। श्रमः खेदः। भ्रमोऽनवस्थितिः तथा तृष्णादीनि नियच्छति। एवं गुणमप्यामे क्वचिन् नेष्यते। तथाचोक्तं संग्रहे,—"अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च। नाल्पमप्यामसुदकं हितं तद्धि त्रिदोषकृत्" ॥ १५ ॥

अधुना उष्णाम्बुगुणानाह,—दीपनमिति। दीपनादिगुणयुक्तमुष्णमम्बु भवति।

* कण्ठ्यमिति वा पाठः।

हिक्काध्मानानिलश्लेष्म-सद्यःशुद्धे नवज्वरे।
कासामपीनसश्वास-पार्श्वरुक्षु च शस्यते ॥ १६ ॥
अनभिष्यन्दि लघु च तोयं क्वथितशीतलम्।
संसर्गे पित्तकफयोः सन्निपाते च पूजितम्।

बस्तिशब्देन तात्स्थ्यान्मूत्रं गृह्यते। तेन मूत्रशोधनमित्यचार्यो बोध्यः। हिक्काध्मानादिषु च शस्यते। कासश्च आमश्च पीनसश्च श्वासश्च पार्श्वरुक् च तासु च शस्यते। आमोऽपक्व आहार इत्यर्थः। केचित्त्वामपीनस इति पीनसविशेषणमामशब्दमाहुः। तैरजीर्णे उष्णाम्बु नोक्तं स्यात्। अजीर्णे चालसकादिरूपे जलमुष्णमिष्यत एव ॥ १६ ॥

अधुना क्वथितशीतलं निर्दिदिक्षुराह,—अनभिष्यन्दीति। अनभिष्यन्दि न श्लेष्मकारि। लघुगुणयोगोऽम्भसीऽस्त्येव, पुनर्लघुत्वकथनमग्निसंस्कारवशाल्लघुतरत्वप्रतिपत्त्यर्थम्। अथवा आधारवशादक्वथितमम्भो लघ्वपि यद्गुरु सम्पन्नं तदपि क्वथितशीतलं लघु भवति। शीतलत्वादभिष्यन्दित्वं यत्तोयस्य प्राप्तं तत्क्वथितशीतलत्वे चास्य निषिद्धम्। मदात्ययादिहन्तृत्वं तु यच्छीतलत्वसामान्यात्तदस्यास्त्येव, न केनचिन्निषेद्धुं सम्भाव्यते। पित्तयुक्त इत्येकवचनमविवक्षितम्। तेन वातपित्ते पित्तश्लेष्मणि सन्निपाते च यत्र पित्तयोगो दृश्यते पित्ताधिकत्वं तत्रैव क्वथितशीतलं हितम्। संग्रहोक्तं च क्वथनलक्षणं सङ्क्षेपाभिप्रायेणेह नोक्तम्। यथा—"चोथपादत्रिभागार्द्ध देशर्तुगुरुलाघवात्। क्वथितं फेनरहितमवेगममलं हितम्" इति। अस्यार्थः शिष्यव्युत्पत्त्यै दर्श्यते। धन्वसाधारणानूपेषु देशेषु क्रमशः क्षपितचतुर्भागत्रिभागार्द्धसलिलमविश्रयेत्। जाङ्गलो हि देशोऽनिलानलाभ्यां भूयिष्ठमधिष्ठितस्तेनात्र तोयं लाघवादाशु विशुद्धिं प्राप्नोति। आनूपस्तु भूमिसोमगुणबहुलस्तेन गुरुत्वादिगुणयोगाच्चिरेण विशुद्धिमश्नुते। एवं साधारणो देशश्चिन्त्यः। तथा ऋतुष्वपि यथायोगमयमेव क्रमो बोध्यः। सुश्रुतेनोक्तम्,—"यत्क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु। चतुर्भागावशिष्टं तु तत्तोयं कफरोगनुत्। तत्पादहीनं पित्तघ्नं हीनमर्द्धेन वातनुत्" इति संग्रहोक्तमेव ग्रन्थमिमं केचिदत्रापि पठन्ति। यथा,—"पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे। अजीर्णे क्वथितं चामे पक्वे जीर्णेऽपि नेतरत्। शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत्। अतियोगेण सलिलं तृष्यतोऽपि प्रयोजितम्। प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः" इति। अन्यप्रदेशजे पानीये अजीर्णे पानीयं जलं न पानीयं न पेयम्। एतदुक्तं भवति। पानीये पीते तज्जरणान्तं यावत् विजातीयं जलं न पेयमिति। अन्यप्रदेशजे इति कोऽर्थः? कौपे पीते ताड़ागं न पेयम्, ताड़ागे पीते कौपं न पेयम्, एवं सर्वत्र चिन्त्यम्। तथा आमे अपक्वे जले अजीर्णे क्वथितं च जलं न पेयम्। पक्वे क्वथिते पीते जीर्णेऽपि नेतरत् नाम जलम्। यावन्न भुङ्क्ते तावत् सजातीयमपि न पेयमित्यर्थः। शीते विधिरयम्। क्वथितशीते एतद्विधानमित्यर्थः। तुरवधारणे। तप्तेऽजीर्णे एव शिशिरं त्यजेत्। जीर्णे तु शीतं पिबेदित्यर्थः। अतियोगेनातिबाहुल्येन तृष्यतस्तृष्णावतोऽपि प्रयोजितमुपयुक्तं सर्वस्यापि नरस्य श्लेष्मपित्ततां याति; ज्वरितस्य विशेषतः; यत आमेनाग्नौ बहिष्कृते ज्वरस्योत्पत्तिः।

पित्तयुक्ते हितं दोषे व्युषितं तत्त्रिदोषकृत् † ॥ १७ ॥
नारिकेलोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥ १८ ॥
वर्षासु दिव्यनादेये परं तोये वरावरे ॥१९॥ इति तोयवर्गः ।
स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्द्धनम् ।
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ॥ २० ॥

---

आमस्य च पानीयं वर्द्धकमिति। सङ्क्षेपतया अल्पयोगित्वाच्च अवश्यायादिगुणा ग्रन्थकृता नोक्ताः। तांश्चात्र शिष्यहिताय ब्रूमः। "रूक्षस्तनुरवश्यायः शीतो वातास्र-कोपनः। पानतृड्दाहपित्तास्रकुष्ठोरुस्तम्भमेहजित्॥ ग्रीष्मे तु सर्वजन्तूनां स्पर्शनादपि शस्यते। पश्चिन्यम्बु च पित्तघ्नं कफकृद्विरसं गुरु॥ हिमं तु शीतलं रूक्षं दारुणं सूक्ष्ममेव च। कफं न सन्दूषयति न पित्तं न च मारुतम्॥ तथाप्रवर्षप्रलये हिमाद-त्यान्तरं गुणैः। चराचराणामहितं तुषारं त्वग्निनाशनम्॥ वकरं लघु सक्षारं श्लेष्मघ्नं वह्निदीपनम्। केदारं मधुरं प्रोक्तं विपाके गुरु दोषलम्॥ तद्वत्ताल्लमुद्दिष्टं विपाके दोषलं तु तत्। अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितम्॥ एभिर्दोषैरसंयुक्तं निरवद्यं तु जाङ्गलम्। पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम्॥ दीपनं स्वादु शीतं च तोयं साधारणं लघु। चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम्। रत्नाकरसमुत्थं च सर्वदोषकरं मतम्" इति ॥ १७ ॥

नारिकेलेति। नारिकेलान्तःस्थितमुदकं स्निग्धं स्वादु वृष्यं हिमं च भवति। एवम्भू-तमपि प्रभावाल्लघु भवति। तथा तृष्णादिहरं दीपनं मूत्रशोधनं च भवति। इदानीं युक्त्याग्रसंग्रहं निर्दिशति,—वर्षास्विति। प्राबष्यान्तरिचं जलं परमत्यन्तं पथ्यम्; नदीसम्भवं त्वपथ्यमिति तोयवर्गः ॥ १८। १९ ॥

परिशिष्टेभ्यो वर्गेभ्यः प्राग्बहुजनोपयोगितयोपकारित्वेनाजन्मसात्म्येन प्राधान्यात् पयःसंज्ञासामान्यात् पयस इव जीवनादिगुणयोगाच्च तोयवर्गादनु क्षीरवर्गः प्रक्रम्यते। तत्रापि दध्यादीनां मूलकारणत्वात् क्षीरस्य प्रागुपादानम्। तथा जीवनीयानां रसायनानाञ्चाग्रेसरत्वात्। तथाचाष्टाङ्गसंग्रहे,—"क्षीरं जीवनीयानाम्," "क्षीरघृता-भ्यासो रसायनानाम्" इत्यादि। स्वाद्विति। पयः क्षीरं प्रायः स्वादुपाकरसादियुक्तं भवति। पाकश्च रसश्च पाकरसौ। स्वादू पाकरसौ यस्य तदेवम्। ओजसे हित-मोजस्यम्। धातून् वर्द्धयति धातुवर्द्धनम्। वृष्यं शुक्राकरमतिशयेनेति बोध्यम्।

---

† पानीयं प्राणिनां प्राणाः विश्वमेव च तन्मयम्।
अतोऽत्यन्तनिषेधेन न क्वचित् वारि वार्य्यते॥
आस्यशोषाङ्गसादाद्या मृत्युर्वा तदलाभतः।
नहि तोयाद् विना वृत्तिः स्वस्थस्य व्याधितस्य वा॥ इत्यधिकः पाठः।

प्रायः पयोऽत्र गव्यं तु जीवनीयं रसायनम्।
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम्॥ २१॥
श्रमभ्रमपदालक्ष्मी-श्वासकासातितृट्क्षुधः।

---

धातुवर्द्धनत्वादेव शुक्रकरत्वमात्रस्य सिद्धेः प्रायोग्रहणात् कदाचित् क्षीरं नैवं भवति। तथा चौष्ट्री-क्षीरमीषद्रूक्षोष्णलवणं पठ्यते। अजाक्षीरञ्च लघु। आविकमुष्णमैकशफमुष्णं साम्ललवणञ्चेति। तस्मात् प्रायोग्रहणं कृतम्। स्वादुपाकरसत्वादेव क्षीरस्य स्निग्धश्लक्ष्णा-दयो गुणा लब्धा एव किं पुनरेते उद्दिष्टैरिति केचित्। तान् ब्रूमहे। मधुररसादिकेभ्योऽपरे स्निग्धश्लक्ष्णादयो गुणा बहुतराः क्षीरस्य विद्यन्त इति ज्ञापनार्यैते स्निग्धादयो गुणाः पुनरुद्दिष्टाः। महाभूतानां हि संयोगादिविशेषात् कदाचिद्रससहचरिता एव गुणा द्रव्यमभिनिविशन्ते ये रसे समाधाय वर्त्तन्ते। यथा मधुरे आयुष्यादिगुणाः। अम्ले ऽग्निदीप्तिक्लेदादयः। केचिच्च रसमनपेक्ष्यैव द्रव्ये निविशन्ते। यथा मधुररसद्रव्ये मकुष्टतण्डुलीयादौ रूक्षादयो गुणाः। तथाहि स्निग्धादीनां तत्रोपलम्भः प्राप्तो मधुर-रसाश्लिष्टत्वात्। तस्मात् मकुष्टादिद्रव्यं मधुररससहचरीक्तेन गुणौघेन संयुक्तं वक्तुं युक्तम्। अन्यथा तु कृतं षड्रसगुणस्वरूपवर्णनमनर्थकमेव स्यात्। तस्मादयमत्र विषय-विभागो ज्ञेयः। केचिद्गुणा रससहचरिता द्रव्ये निवसन्ति। यद्वशात्तद् द्रव्यं रसगुणाननुवर्त्तते ईदृशञ्च विशेषमुद्दिश्य तन्त्रकृद्भिर्मधुरादिरसानां स्निग्धादिगुणा वर्णिता वेद्याः। केचित्तु रसनिरपेक्षा एव द्रव्ये निवसन्ति। अतएव तद्द्रव्यं रसगुणा-न्नानुवर्त्तते। अस्मिंस्तु विषये रसगुणवर्णनं नोक्तमेव वेद्यम्। तस्मात् क्षीरस्य स्निग्धादि-योगात् स्वादुपाकरसत्वे सत्यपि स्निग्धादिगुणवर्णनम्। एवञ्चोभयथा क्षीरस्य स्निग्धादि-गुणयोगादधिकाः स्निग्धादयो ये गुणास्तेऽस्य सन्तीत्यवगच्छ। अयमेव च व्यवहारोऽन्य-त्राप्येवंविधे शाल्यादौ द्रव्ये विज्ञेयः। ननु "स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः" इति वक्ष्यते; ततश्च स्वादुरसत्वादेव स्वादुपाकत्वं लब्धं तत् किं पाकग्रहणेन ? भणामः। "शालिपिष्टमयं सर्वं गुरुभावाद्विदह्यते" इत्युक्तं तदेव क्षीरं गुरुगुणयुक्तमपि विदाहाव-स्थायां चिरं न तिष्ठति। प्रागेव स्वादुपाकतां यातीतीममर्थं ज्ञापयितुं पाकग्रहणम्। स्त्रीणां चाहाररस एवापत्यस्नेहात् क्षीराय सम्पद्यते। तथा च दारुवाहिः। "स्त्रीणाम-पत्यजाद्धर्षाद्रसः क्षीराय कल्पते। स्नेहाद्रसः क्षरत्येवं हृदयात् क्षीरमित्यतः" इति। गव्यस्य च पूर्वतरमुपादानं सर्वक्षीरेभ्यो न्यायस्त्वात् तथा माहिषमपि। तक्रादि गोरसशब्देन प्रथितमिति। एषु क्षीरेषु मध्ये गव्यं पुनः क्षीरं जीवनीयमतिशयेनेति बोद्धव्यम्। जीवनीयमात्रस्य ओजस्यमितरनेनैव क्षीरसामान्यलक्षणेनोक्तत्वात्। ओजस्यं हि जीवनीयमुच्यते। तथाह्योजःक्षये जीवनीयानामौषधानामुपयोगो निर्दिष्टः। यथा, ओजः क्षीयेत कोपादिभिरित्युक्त्वाऽनन्तरमुवाच। "जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम्" इति। अत्र च क्षीरं जीवनीयत्वेन गृहीतमपि पुनरुक्तं प्राधान्यख्यापनार्थम्। तथा च मुनिः। "प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम्" इति। रसवीर्य्यविपाकानां श्रेष्ठानां लाभोपायो रसायनम्। तथाचोक्तम्,—"लाभोपायो हि शस्तानां रसादीनां

जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तञ्च नाशयेत् ॥ २२ ॥
हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ॥ २३ ॥
अल्पाम्बुपानव्यायाम-कटुतिक्ताशनैर्लघु ।
आजं शोषज्वरश्वास-रक्तपित्तातिसारजित् ॥ २४ ॥
ईषद्रूक्षोष्णलवणमौष्ट्रिकं दीपनं लघु ।
शस्तं वातकफानाह-कृमिशोफोदरार्शसाम् ॥ २५ ॥

---

रसायनम्" इति । तथा चतचीणहितम् । चताय हितम्, चीणाय हितम् । चीण: चीणधातु: । तथा मेवा धारणाशक्तिस्तस्यै हितं मेध्यम् । उगवादिभ्यो यदिति यत् । एवं वल्यम् । तथा स्तन्यकरम् । कृञो हेतुताच्छील्येति हेतौ ट: । स्त्रीणां स्तन्यकरणे हेतुरित्यर्थ: । तथा सरम् । श्रमादीं श्चैकादश नाशयेत् ॥ २०—२२ ॥

हितमिति । महिष्या इदं माहिषं चीरमत्यग्निभ्योऽनिद्रेभ्यश्च हितम् । तथा गरीयो गुरुतरम् । तथा हिमं शीतवीर्य्यं । मुनिरप्याह,—"महिषीणां गुरुतरं गव्याच्छीततरं पय: । स्नेहादूनमनिद्राय हितमत्यग्नये च तत्" इति । खरनादे चोक्तम्,—"गव्यं स्नेहोत्तमं चीरं गव्याच्च पयस: पय: । यथोत्तरं स्नेहहीनमौरभ्रच्छाग-माहिषम् ॥ जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् । पयो गुरुतरं वत्सो यथा तासां प्रवर्द्धते" इति । "गुरु शीततरं गव्यान्माहिषं स्वप्नलं पय: । चतुर्थभागस्नेहोनं पित्त-घ्नञ्च विशेषत:" इति । यच्च रविगुप्त: सिद्धसारे व्यध्यगोष्ट "गव्यात् स्निग्धं गुरुतरं माहिषं स्वप्नकृत्पय:" इति तद्बुधैश्चिन्त्यम्, सर्वमतविरुद्धत्वात् ॥ २३ ॥

अल्पेति । आजं छागलं चीरं लघु भवति, अल्पाम्बुपानादिभिर्हेतुभूतै: । स्वल्पाम्बु-पानादित्वञ्चाजानां स्वभाव: अन्यासान्तु देशसात्म्यापेचया । यद्येवं स्वभावादेवमल्पाम्बु-पानादेर्गम्यमानत्वादेतदुपन्यासो व्यर्थ एव । अत्रोच्यते । ज्ञापनार्थमिदम् ज्ञापयति । यदा अजा अप्यव्यायामा गुर्वशनादि कुर्य्युस्तदा तासामप्यन्यथा चीरं भवेत् । एवञ्च गवादीनामप्याहारादिवशाद् गुरुत्वलघुत्वं चिन्त्यमिति ; तेन प्रदोषेऽपराह्णे यद् गृहीतं पयस्तदपेचयौषसं प्रभाते यद् गृहीतं तद्गुरु, चेष्टारहितत्वात् । रात्रौ हि प्राणिनां न कदाचिच्चेष्टा भवति, अत औषसं गुरु । दिवा च धावनप्लवनादिकया चेष्टया प्रादोषं लघु । अनया च दिशा सर्वमपि चिन्त्यम् । अतएव संग्रहे यदुक्तम् "पिण्याकाम्लाग्नि-नीनान्तु गुर्वभिष्यन्दि तद् भृशम्" इति तदेतेनैवोक्तप्रायत्वान्नोक्तम् । शोषेत्यादि । शोषादीनां द्वन्द्व: । तान् जयतीति क्विप् । शोषजित् । एवं ज्वरजिदित्यादि ॥ २४ ॥

ईषदिति । औष्ट्रकमुष्ट्राणां चीरं लघु, तथा ईषन्मनाग्रूचोष्णलवणं, तथा दीपनं भवति । तथा वातादीनां शस्तम् वातादिषु पथ्यमित्यर्थ: । औष्ट्रकमित्युष्ट्राद् वुञिति वुञ् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्युष्ट्रीशब्दादपि । मानुष-मिति । मानुषीणां चीरं वातपित्तासृगभिघाताचिरोगजिद्भवति । वातश्च पित्तञ्च

मानुषं वातपित्तासृगभिघाताक्षिरोगजित्।
तर्पणाश्च्योतनैर्नस्यैरहृद्यं तूष्णमाविकम्।
वातव्याधिहरं हिक्काश्वासपित्तकफप्रदम्॥ २६॥
हस्तिन्याः स्थैर्यकृद् बाढमुष्णं त्वैकशफं लघु।
शाखावातहरं साम्ल-लवणं जड़ताकरम्॥ २७॥
पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा।
भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम्॥ २८॥
अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित्।

---

असृक् च अभिघातश्चेति द्वन्द्वः। तैरक्षिरोगस्तं जयति यत्तदेवम्। केन प्रयोगेणेत्याह,—तर्पणेत्यादि। नवस्थवहारादिना। तर्पणादीनि स्वे स्वेऽध्याये वक्ष्यमाणानि। अहृद्यमिति। आविकं क्षीरमुष्णवीर्यं भवति, तथा अहृद्यं हृदयायाहितं भवति, तथा वातव्याधिहरम्, तथा हिक्कादिप्रदम्। आविकमित्यविशब्दात् स्वार्थे कप्रत्ययात्तस्येदमित्यण्॥२५—२६॥

हस्तिन्या इति। हस्तिन्याः क्षीरं स्थैर्यकृद्भवति। बाढ़मिति। एकः शफो नखो यासां वड़वादीनां ता एकशफास्तासामिदमैकशफं क्षीरं बाढ़मतिशयेनोष्णं भवति। तथा शाखासु बाहुप्रभृतिषु यो वातस्तं हरतीति शाखावातहरम्। हरतेरनुद्यमनेजित्यच्। तथा साम्ललवणमीषदम्लमीषल्लवणं च। तथा जड़ताकरमङ्गजाड्यकरणहेतुः। कृञो हेत्वित्यादिना हेतौ टः॥ २७॥

पय इति। आममक्वथितं पयोऽभिष्यन्दि श्लेष्मप्रकोपि तथा गुरु भवति। अत आमादन्यथा विपरीतं युक्त्या शृतं भवति। अनभिष्यन्दि लघु च पूर्वावस्थापेक्षयोच्यते। युक्तिर्योग उपायः। खरनादे च क्षीरस्य श्रपणे युक्तिः स्पष्टं कृत्वा निर्दर्शिता। "विना तु वनितास्तन्यमाममेव हितं पयः। अर्द्धोदकं क्षीरशिष्टमामाल्लघुतरं शृतम्" इति। भवेदिति। अतिशयेन क्वथितं कवलभोज्यमिव सञ्जातं गरीयो गुरुतरं भवेत्। खरनादे चोक्तम्,—"स्यान्निर्जलं शृत विनिचतुरष्टांशशेषितम्। तथा शृततमं सारं गुरु वल्यतमं पयः"। सुश्रुते चोक्तम्,—"शृतशीतं तु पित्तघ्नं शृतोष्णं कफवातजित्। त्यजेद्विवर्णं ग्रथितं विगन्धं विरसं पटु। रक्तपित्तप्रशमनी वृष्या सन्तानिका गुरुः" इति। खरनादे चोक्तम्,—"धारोष्णात् सर्वशः क्षीरात् शृतं गुरुतरं भवेत्" इति। धारोष्णममृतोपमं निर्दोषत्वात्॥ २८॥

अधुना दधिगुणान्निरूपयति अम्लेति। अम्लौ पाकरसौ यस्य तदेवम्भूतं दधि भवति। तथा ग्राहि स्तम्भनम्। तथाचोक्तम्,—"भेदि तत्पिण्डितान् भावान् शकृदादीन् भिनत्ति यत्। विपरीतमतो ग्राहि तच्च स्तम्भनमुच्यते" इति। तथा गुरूष्णं वातजिच्च। मेद आदीनां द्वन्द्वः। तान् करोति यत्तदेवम्। रोचत इति रोचिष्णु।

मेदःशुक्रबलश्लेष्म-पित्तरक्ताग्निशोफकृत् ॥ २९ ॥
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ।
पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ॥ ३० ॥

---

न रोचत एव केवलम् अरोचकमपि व्यावर्तयतीति शस्तमरुचौ । रोचते हि घृतपूरादि-वत् तदहर्निं जयति । अरुचिघ्न पटोलपत्रं तन्न रोचते । तथा ह्यत्रैव पठिष्यति । "तिक्तः स्वयमरोचिष्णुररुचिम्" इत्यादि । रोचिष्णुत्वादेवोच्चावचव्यञ्जनपरिहार्चैर्मांसमण्डकादि-भिरपि सुहितस्यापि दध्यभिलाष उत्पद्यत एव । अतएव चैतदाहारान्तेऽभ्यवहरन्ति । शीतक इति विषमज्वरविशेषणम् । शीतकारित्वन्तु वाते श्लेष्मणि तत्संसर्गे च यद्यपि चितये सम्भवति तथापि वातजिद्वातज एव विषमज्वरे दधि प्रयोज्यं संसर्गे वा वातोल्वणे । तथा हि । शीतज्वर एवोक्तम् । "अग्न्यनग्निकृतात् स्वेदात् स्वेदि भेषजभोजनम्" इति । पीनसे शस्तमिति कथमविशेषेणोक्तं यतश्चत्वारः पीनसा वातपित्तकफसन्निपातजा इति वक्ष्यते । तत्र दध्नो वाताधिक एव युक्तत्वं न शेषेषु । अत्र सच्चक्ष्महे । परिपाकात्पीन-सस्योपशान्तिः परिपाककरत्वं दध्युष्णत्वात् । अथवा पूर्ववत् सामान्योक्तावपि यत्र योग्यतास्य वातिके तेनैतदुपकल्प्यतां ; अनुक्तोऽपि हि सामान्योपक्रमो वस्तुवशाद्विशेष्वेव विपरिणमति । तथा ह्यत्रैवोपरिष्टाद्दुग्धकर्मसु व्यतीतम् । "श्रमभ्रममदालक्ष्मीश्वास-कासातितृट्क्षुधः । जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तञ्च नाशयेत्" । सदेतन्न च सर्वेष्वेव कासश्वासकृच्छ्राखपित्तेषु पयः कार्मुकमिति । तथा ग्रहणीरोगे तक्रं शस्तम् । अनेन च हेतुना दध्नः प्रकृतिस्थस्य स्निग्धत्वं युक्त्यैवोक्तम् । यतो ग्रहण्यां रूक्षमद्धृतसारमुद्दिष्टम् । नैवेति । निशि नैव कदाचिदद्यात् । नैवाद्यान्निशि नैवोष्णमित्येवकाराच्चात्यन्तिक-निषेधाद्दिवा भुञ्जीतेत्यर्थादवगम्यते । नैवोष्णमग्न्यादितापात्तप्तं, तथा वसन्तग्रीष्मशरत्सु न भोज्यम् । अन्यतमेऽप्यन्यत्रावपि मुद्गसूपादीनामन्यतमेन रहितं न भोज्यम् । तत्र घृतसितोपलयोः समासेनैतयोरेव योगेन पथ्यत्वमिच्छन्ति । मुद्गसूपादीनां तु मिश्री-भावो दध्ना जन्यमानस्य दोषस्य प्रतिबन्धार्थं कल्प्यते रक्तपित्तवत् । तथा समीरणोल्बणे ऽसपित्ते तित्तिर्यादीनामौष्ण्यमुदुम्बरादिरसेन प्रतिबध्यते । नित्यमिति । यद्युपशेते शरीरस्थं तथापि सुदर्करोगावहत्वान्न शीलनीयम् । अतएवान्नपानविधावतिदोषशीलत्वा-दस्य निषेधं करोति । तथा च वक्ष्यति । किलाटदधिकूर्चिकेत्यादि । नो मन्दमिति । दुग्धावस्थां व्यतीत्य दध्यवस्थामसम्प्राप्तमन्तरावर्त्ति मन्दकमित्युच्यते । तस्मिन् सत्यपि स्नेहे परिणतिविशेषेण कालात्मना स्रोतसामत्यन्तोपलेपकृतो दोषत्रयकोपोऽपि भव-तीत्यतीव वर्जनीयमेव । मन्दकनिषेधश्चोपलक्षणार्थः । तेन मद्यादीनप्यप्राप्तरसा-न्नोपभुञ्जीतेत्यवगन्तव्यम् । चान्यथेत्यादि । प्रशब्द एवं द्योतयति । विधिभ्रष्टं दधि निषेव्यमाणं प्रकर्षेण ज्वरासृक्पित्तादीन् प्रददाति । ननु शुक्रकृत्त्वबलवर्द्धनत्वाद्दीपनत्व-मनुपपन्नम् । शुक्रकृद्बलवर्द्धनानि हि द्रव्याणि प्रायेण गुरूणि भवन्ति । अतो दध्येवं गुणं सत्कथमग्निकृत् स्यात् । अत्राचक्ष्महे । अम्लत्वादुष्णवीर्य्यत्वाच्च युक्तमेव । यतो रसविपाकाभ्यामम्लं वीर्येणोष्णं च दधि अतोऽग्निकृत्त्वमस्मिन्नुपपन्नमिति । ननु शुक्रकरत्वं

नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न ।
नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम् * ॥ २१ ॥
न चानामलकं नापि नित्यं नो मन्दमन्यथा ।

---

दध्नो न युक्तम् । यत: "अम्लपाकरसं दधि" इत्यधीतमाचार्येण ; अम्लस्य शुक्रनाशनत्वात्तस्माच्छुक्रकृत्त्वमयुक्तम् । अत्राचक्ष्महे । स्निग्धत्वबृंहणत्ववातघ्नत्वबल्यत्वै: शुक्रकृत्त्वमुपपन्नमेव । तथा च वक्ष्यति । "किञ्चिद्रसेन कुरुते कर्म पाकेन चापरम् । गुणान्तरेण वीर्येण प्रभावेणैव किञ्चन" इति । वातजिदित्यनेन नार्थ: । यानि खलु द्रव्याणि बल्यस्निग्धगुरूष्णयुक्तानि तानि वातघ्नान्येव दृष्टानि तस्माद्वातजिदिति न वाच्यम् । नैवम् । सक्तुमद्यसूर्य्यतापमन्दकादिषु व्यभिचारात् । तथा हि,—सक्तवो वातला वृष्या रूक्षा बलकराश्च ; मार्द्वीकादिमद्यं हर्षणत्वाद्वृष्यं वातलञ्च । तथा च वक्ष्यति,—"मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते" इति । मद्यञ्च मात्रापीतं हर्षणं भवति । तथा च मुनि: । "हर्षमूर्ज्जप्रदं पुष्टिमारोग्यं पौरुषं परम् । युक्त्या पीतं करोत्याशु मद्यम्" इति । सूर्य्यतापशोषणोऽपि सन् मारुतस्य वृद्धये । तथाच मुनि: । "कटुतिक्तातिरूक्षशीतललघूनि" इत्यारभ्य यावत् "वातातपौ भयं शोकौ हेतुर्वातार्शसाम्" इति । मन्दकञ्च स्निग्धाम्लगुरुगुणयुक्तमपि त्रिदोषकरम् । तथा च मुनि: । "त्रिदोषं मन्दकम्" इति । त्रिषु च दोषेष्वन्तर्भूत: पवन इति चैवं व्यभिचारदर्शनाद्वातजिदित्युक्तम् । क्षीरस्य च दध्यात्मना परिणमतोऽनभिव्यक्ताम्लाभिव्यक्ताम्लात्यम्ललक्षणास्तिस्रोऽवस्था: सम्पद्यन्ते । तत्र मन्दजातमनभिव्यक्ताम्लम् । सम्यग्जातमभिव्यक्ताम्लम् । अतिजातमत्यम्लम् । तत्र मन्दजातं त्रिदोषकृत्त्वान्निषिद्धम् । सम्यग्जातस्यैते पूर्वोक्ता गुणा: । किञ्चिद्धीनाश्चात्यम्लस्य । तथा सुजातेऽत्यम्ले च दध्नि सरमण्डौ स्त: । तत्र दध्न उपरिभाग: सर: । अधो मण्ड: । एतद्गुणाश्च लाघविकत्वान्नोक्ता: । मुनिना च दर्शिता: । "त्रिदोषं मन्दकं जातं वातघ्नं दधि शुक्रलम् । सर: श्लेष्मानिलघ्नस्तु मण्ड: स्रोतोविशोधन:" । श्लेष्मपित्तरक्तकृत्त्वं चाम्लपाकरसोष्णवीर्यत्वादेवावगम्यते । यत्तु साक्षादेतेषामुपादानं तत्प्रकर्षार्थम् । अन्येभ्योऽम्लद्रव्येभ्यो दध्येतान्यतिशयेन करोतीति । नैवाद्यान्निशीत्यादौ ग्रन्थे चैकस्मिन्नकारे कर्त्तव्ये यदनेकनकारकरणं तच्छास्त्रनिषिद्धदधिभक्षणादतिप्रत्यवायज्ञापनार्थम् । चरकोक्तमङ्गल्यगुणो नेहोक्तश्चिकित्सायामनुपयोगित्वात् । अतएव सर्पिरादीनां मङ्गल्यानामपि चरकेऽपि मङ्गलत्वं नावादीति । सुश्रुते तु दध्नो विशेषगुणा उक्ता: । यथा, "दध्याजं कफपित्तघ्नं लघु पाके विषापहम् । दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥ विपाके मधुरं वृष्यं रक्तपित्तप्रणाशनम् ॥ बलासवर्द्धनं स्निग्धं विशेषाद्दधि माहिषम् । विपाके कटुकं चाम्लं मेदौष्ट्रकं दधि । वातार्शांसि च कुष्ठानि कृमीन् हन्त्युदराणि च । वातघ्नं कफकृत् स्निग्धं विशेषान्नृच पित्तकृत् । कुर्य्याद्भक्ताभिलाषञ्च दधिमस्तु परिस्रुतम् । शृतक्षीराच्च यज्जातं गुणवद्दधि

---

* "शरद्ग्रीष्मवसन्तेषु नाद्यान्नोष्णं न रात्रिषु" । इति पाठान्तरम् ।

ज्वरासृक्पित्तवीसर्प-कुष्ठपाण्डुभ्रमप्रदम् ॥ ३२ ॥
तक्रं लघु कषायाम्लं दीपनं कफवातजित् ।
शोफोदरार्शोग्रहणी-दोषमूत्रग्रहारुचीः ।
प्लीहगुल्मघृतव्यापद्गरपाण्ड्वामयान् जयेत् ॥ ३३ ॥
तद्वन्मस्तु सरं स्रोतःशोधि विष्टम्भजिल्लघु ॥ ३४ ॥
नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ।
संग्राहि वातपित्तासृक्-क्षयार्शोऽर्दितकासजित् * ।
क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित् ॥ ३५ ॥

---

त् स्मृतम् । वातपित्तहरं रुच्यं धात्वग्निबलवर्द्धनम् । दधित्वसारं रुचं तु ग्राहि विष्टम्भि वातलम् । दीपनीयं विशेषेण सकषायं रुचिप्रदम्" इति ॥ केवलमपि स्वल्पं कदाचिद्दधि भुञ्जीतेत्यर्थादवगम्यते । अन्यथा केवलस्य गुणकथनं निष्फलमेव स्यादिति केचिदाहुः ॥ २९—३२ ॥

तक्रमिति । तक्रं लघु कषायाम्लं दीपनं कफवातजिच्च भवति । तथा शोफादीनेकादश जयेत् । घृतस्यातिपानाद्व्यापद्रोगो घृतव्यापत् । गरः कृत्रिमो विषविशेषः । सुश्रुते चोक्तम्,—"नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च । मार्गे विरोधे दुष्टे च वायौ तक्रं प्रशस्यते" ॥ तथोक्तम्,—"तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ सिद्धमेवोपयोजयेत्" इति । "मन्दजातं मरुत्कोपि रुचाभिष्यन्दि दुर्जरम् । अतिजातं भृशाम्लीभूतं त्वग्रात् पित्तकरं परम् ॥ दोषघ्नमुद्धृतस्नेहं सस्नेहमपि शोफजित् । वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् । हितं पथ्यं कफे साम्लं व्योषसौवर्चलान्वितम् । वक्राल्लघुतरो मण्डो दुर्जरा तक्रकूर्चिका" इति ॥ ३३ ॥

तदिति । मस्तु तद्वत् तक्रवद्गुणैर्ज्ञेयम् । तथा सरं तथा स्रोतःशोधि तथा विष्टम्भजित् । सुश्रुते चोक्तम् । "क्लमतृष्णाहरं मस्तु लघु स्रोतो-विशोधनम् । अम्लं कषायानुरसमवृष्यं कफवातजित् ॥ आह्लादनं प्रीणनं च भिनत्त्याशु मलं च तत् । बलमावहति क्षिप्रं तथा भक्तस्य रोचनम्" ॥ ३४ ॥

नवनीतमिति । नवनीतं नवं नवोद्धृतं लघु वृष्यं च तथा शीतं शीतवीर्य्यं बलवर्णाग्निकरं तथा संग्राहि वातादिजिच्च । संग्रहे चोक्तम् । 'शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतम्" इत्यादि । क्षीरोद्भवमिति । क्षीरोद्भवं तु क्षीरादेव जातं मथित्वा तन्नवनीतं संग्राहि रक्तपित्ताक्षिरोगजिच्च भवति ॥ ३५ ॥

---

* चक्षुष्यं बालवृद्धानां प्रशस्तं सौकुमार्य्यकृत् । इत्यधिकः पाठः ।

शस्तं धीस्मृतिमेधाग्नि-बलायुःशुक्रचक्षुषाम् ।
बालवृद्धप्रजाकान्ति-सौकुमार्य्यस्वरार्थिनाम् ॥ ३६ ॥
क्षतक्षीणपरीसर्प-शस्त्राग्निग्लपितात्मनाम् ।
वातपित्तविषोन्माद-शोषालक्ष्मीज्वरापहम् ॥ ३७ ॥
स्नेहानामुत्तमं शीतं वयसः स्थापनं परम् ।
सहस्रवीर्य्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥ ३८ ॥
मदापस्मारमूर्च्छाय-शिरःकर्णाक्षियोनिजान् ।
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥ ३९ ॥
बल्याः किलाटपीयूष-कूर्चिकामोरणादयः ।

शस्तमिति । घृतं धीप्रभृतीनामग्निग्लपितात्मान्तानां शस्तम् । धीर्वस्तुग्रहणशक्तिः । स्मृतिरतीतविचारशक्तिः । प्रजार्थिनां शस्तम् । प्रजाऽपत्यं तदर्थिनाम् । शुक्रस्य सफलताकरमित्यर्थः । तथा वातादिघ्नम् । तथा स्नेहानां तैलादीनामुत्तमं श्रेष्ठम् । तथा शीतम् । वयसः स्थापनं जरया विना वयसः स्थापनमित्यर्थः । सहस्रवीर्य्यमिति । सहस्रशब्दोऽनेकार्थः । अनेकशक्तीत्यर्थः । कथ विधिभिर्योगसंस्कारादिभिर्घृतमनेकशक्ति सम्पद्यते । येन द्रव्येण प्रयुज्यते संस्क्रियते वा तच्छक्तिमेवानुरुद्ध्यते । अथवा तत्संयोगाच्छक्त्यन्तरमन्यदारोहति । अतएव हेतोः सहस्रशब्दोऽनेकार्थः । अन्यथा द्रव्याणामानन्त्यात्कथं दशशतवाची सहस्रशब्द उपपद्यते । अन्ये त्वेवं व्याचक्षते । सहस्रशब्दो दशशतसंख्यावाच्येव । सहस्रपाक्यं हि सर्पिरुक्तं न सहस्रपाक्यात्परेण । तत्र चेदं सहस्रपाक्यत्वे प्रयोजनम् । पाकसहस्रं यावदस्य संस्कारोऽनुवर्त्तते नातःपरम् । अन्यथा सहस्रपाकात्परेण किमिति पाको नोक्तः । तस्मादासहस्रं पाकानां शक्त्यन्तराण्यारोहन्ति पाका न ततः परेणेति । तथा कर्मसहस्रकृत् अनेककार्य्यकृत् ॥ ३६—३८ ॥

मदेत्यादि । पुराणमिति च बहुकालं पञ्चदशादिवर्षस्थितं घृतं मदादीन् व्याधीन् जयति । व्रणानां पैच्छिल्यादीन् (१) शोधयति । तथा व्रणान् रोपयति । संग्रहे चैवमभ्यधायि । "व्रणशोधनरोपणम् । पूर्वोक्ताञ्चाधिकान् कुर्य्याद् गुणांस्तद्वस्तोपमम् । तद्वच्च घृतमण्डोऽपि रूक्षतीक्ष्णस्तनुस्तु सः" इति ॥ ३९ ॥

बल्या इति । किलाटादयो बल्यास्तथा शुक्रादिकरास्तथा विष्टम्भिनो गुरवो दोषलाश्च सुः । आदिग्रहणात् तक्रपिण्डकक्षीरशाकयोर्ग्रहणम् । वह्निनाशकत्वं चैषां बल्यत्वेन शुक्रकृत्त्वेन विष्टम्भिदोषलत्वेनावगतमेवेति । वह्निनाशना इति ग्रन्थकृता नेह कृतम् । संग्रहे तु स्पष्टार्थं कृतमेव । तत्र किलाटोऽल्पक्षीरो बहुना तक्रेण कृतः । पीयूषः

(१) ग्रैथिल्यादीन् इति वा पाठः ।

शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषला: ॥ ४० ॥
गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसम्भवे ॥ ४१ ॥
इति क्षीरवर्ग: ।
इक्षो रसो गुरु: स्निग्धो बृंहण: कफमूत्रकृत् ।
वृष्य: शीतोऽस्रपित्तघ्न: स्वादुपाकरस: सर: ।
सोऽग्रे सलवणो दन्तपीड़ित: शर्करासम: ॥ ४२ ॥
मूलाग्रजन्तुजग्धादि-पीड़नान्मलसङ्करात् ।

---

सद्य:प्रसूताया: क्षीरकृत: । कूर्चिका दधितक्रकृता किलाटिका । मोरण: क्षीरसदृश: किलाटिकापीडन उत्तरापथे प्रसिद्ध: ॥ ४० ॥

गव्य इति । गोसम्भवे क्षीरघृते श्रेष्ठे । आविके च निन्दिते गर्हिते । घृतस्य च क्षीरविकारोपलक्षणार्थत्वात् दधितक्रमस्त्वादीनामपि गव्यानां श्रेष्ठत्वमेव वेद्यम् । अतएवाविसम्भवानां दधितक्रादीनामधमत्वमेव वेद्यं न क्षीरघृतयोरेव । अतएव संग्रहे सुस्पष्टं कृत्वोक्तम् । "विद्याद्दधिघृतादीनां गुणदोषान् यथा पय:" । अस्य ह्ययमर्थ: । घृतादीनां पयोगुणानतिक्रमेण गुणान् विद्यात् । यथाशब्दस्य पदार्थानतिवृत्त्यर्थेऽव्ययीभाव: । तेनैतदुक्तं भवति । यथा स्वादुपाकरसमित्यादिना सामान्येन क्षीरगुणा उक्तास्तद्वद्दध्यादीनामपि सामान्येनैव गुणा उक्ता: । विशेषाभिलाषे तु दध्यादीनां सत्स्वपि सामान्यगुणेषु प्रकृतिभूतं यत्क्षीरं तत्गुणोच्चयोऽपि ग्राह्य इति । खरनादेतूक्तम् । "दध्यादीनां तु तज्जानां सामान्ये गुणकर्मणी । तथा स्वात्स्वादपि क्षीराद्दध्यादीनां विशेषणम्" । गव्यमिति, गोपयसोर्यदिति यत् । बाहुल्येन क्षीरनिर्देशात् क्षीरवर्गोऽयम् । दधिनवनीतादीनां तु तद्विकारभूतत्वादिति क्षीरवर्ग: ॥४१॥

क्षीरवर्गादनन्तरमिक्षुवर्ग आरभ्यते गुणक्रियातुल्यत्वात् । तथा हि इक्षुरपि क्षीरवत्सरगुरुस्निग्धबृंहणादिगुणकर्मा । इक्षोरिति इक्षो रस: सरत्वादिगुणयुक्त: । तथा कफमूत्रकृत् । सर: शकृद्भेदी कथ्यते । तथा गुर्वी सरा च पालङ्क्येत्युक्त्वानन्तरमुक्तवान् । "पालङ्क्यावत् स्मृतश्चञ्चु: स तु संग्रहणात्मक:" इति । चञ्चुशाकस्य संग्रहणेन गुणेन सरत्वं बाधितमिति । अत्र स्निग्धबृंहणवृष्यमधुरादिगुणेन युक्तं च द्रव्यं प्राय: पवनहन्तृ दृष्टम् । अतोऽस्यापि इक्षुरसस्य मारुतजित्त्वं वेद्यम् । यन्त्रकृता तु स्पष्टं कृत्वा नोक्तम् । भुक्ते हि समीरणकृत्त्वमस्य दृष्टम् । तथा संग्रहे । "वृष्य: शीत: पवनजिद्भुक्ते वातप्रकोपन:" इति । खरनादेऽप्युक्तम् । "मारुताध्मानजननश्चक्षुष्यो बृंहणो रस:" इति । स च रसोऽग्रे इक्षुप्रान्ते जात: सलवण: । सुश्रुते चोक्तम् । "अतीव मधुरो मूले मध्ये मधुर एव च । अग्रे त्वक्षिपु विज्ञेय इक्षूणां लवणो रस:" इति । पाषाणादिसंक्षुण्णस्येक्षो: सद्य एव यो रस उत्पद्यते तस्यैते यथोक्ता गुणा वेद्या:, नान्यथा पीडितस्येक्षुरसस्य यन्त्रदन्तादिपीड़ितस्यान्यथा शास्त्रकृता गुणो निर्दिश्यते । दन्तपीड़ित: शर्करासम इति ॥४२॥

यान्त्रिकस्त्वन्यगुण एवेत्याह ;—मूलेत्यादि । मूलञ्चाग्रञ्च जन्तुजग्धादयश्च मूलाग्रजन्तुदग्धादयस्तेषां तथाविधानामिक्षूणां पीड़नं तस्मान्मूलाग्रजन्तुजग्धादिपीड़नात्, तथा

किञ्चित्कालं विधृत्या च विकृतिं याति यान्त्रिकः ॥ ४३ ॥
विदाही गुरुविष्टम्भी तेनासौ तत्र पौण्ड्रकः ।
शैत्यप्रसादमाधुर्य्यैर्वरस्तमनु वांशिकः ॥ ४४ ॥
शातपर्वककान्तार-नैपालाद्यास्ततः क्रमात् ।
सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ॥ ४५ ॥
फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ॥ ४६ ॥
नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ।
प्रभूतक्रिमिमज्जासृङ्मेदोमांसकफोऽपरः ॥ ४७ ॥

---

मलसङ्करान्मलमिश्रणात् तथा किञ्चित्कालं विधृत्या च। यान्त्रिके रसे स्वल्पकालं विधृतिर्विलम्बश्च दृष्टः। तदेतैः कारणैर्यान्त्रिको रसो विकृतिं याति स्वभावान्यथात्वं प्राप्नोति। तथा गुरुरधिकं गुरुः सम्पद्यते। अविदाही विदाही अविष्टम्भी विष्टम्भीत्येवंविधास्य विकृतिः। यान्त्रिकस्य च रसस्य बाहुल्येन लोके मूलादिसहितस्य पीड़नात् कालविलम्बोपलम्भेश्च ग्रन्थकृदेवं समधीचत्। अतएव हेतुनिर्देशोऽत्र कृतो हेत्वभावात् कार्य्याभावप्रतिपत्तिज्ञापनार्थमिति। तेन यदि निपुणधीभिर्मूलादिरहितः पीड्यते तदा विकृतिं न यात्येवेत्यर्थः। विदाहीत्यादि। यतो विकृतिं याति तेन हेतुनासौ यान्त्रिको विदाह्यादिगुणः सम्पद्यते। विदाहिजाठराग्निसंयोगाद् यः पाकं गच्छन्नम्लतायामिवावस्थायां विदह्यमानः पित्तं कुर्वंश्चिरकालमवतिष्ठते न द्रागेव जरां याति गुरुत्वादथवा वस्तुस्वभावात् स विदाहगुणयुक्तोऽत्र वितन्यते। तस्माद्गुरुस्वाभाव्याद्विदाही कथितः। तथा चोक्तं धान्वन्तरे। "शालिपिष्टमयं सर्वं गुरुभावाद्विदह्यते" इति। तत्र तेषु रसेषु मध्ये पौण्ड्रको रसो वरः सर्वेक्षुरसेभ्यः श्रेष्ठः। कथं? शैत्यादिभिर्हेतुभूतैः। शीतस्य भावः शैत्यम्। गुणवचनेत्यादिना ष्यञ्। प्रसादः प्रसन्नत्वम्। माधुर्यं स्वादुता। तमनु वांशिकः। हीनार्थेऽनुशब्दस्य कर्मप्रवचनीययुक्ते इति द्वितीया। शैत्यादिभिः पौण्ड्रकाद्धीनो वांशिक इत्यर्थः॥ ४३। ४४॥

शातपर्वकेति। शातपर्वकादयस्ततो वांशिकात् क्रमादुत्तरोत्तरं शैत्यादिभिर्हीनाः। ते च शातपर्वकादय ईषत्क्षारत्वेन युक्ता ईषत्कषायरसा ईषदुष्णाः किञ्चिद्विदाहिनश्च। फाणितमिति। फाणितं क्षुद्रगुड़ीभूत इक्षुरसो गुरुः। अतिशयेनेत्यर्थादियम्। गुरुत्वमात्रस्येक्षुरसेष्युक्तत्वात्। अभिष्यन्दि तथा चयकृत् त्रिदोषकरं मूत्रशोधनं मूत्रमतिवाहयति। तन्त्रान्तरे चोक्तम्। "रुच्यं मधूकपुष्पोत्थं फाणितं वातपित्तकृत्। कफघ्नं मधुरं पाके कषायं बस्तिदूषणम्"। नातीति। गुड़ो धौतः सक्षारवशान्निर्मलो नातिश्लेष्मकरः किञ्चित् कफकर इत्यर्थः। मूत्रञ्च शकृच्च मूत्रशकृत् सृष्टं बहिःक्षिप्तं मूत्रशकृद्येन स एवम्। अपर इति धौताद्विशुद्धादन्यः समल इति यावत्। प्रभूताः क्रिमिमज्जासृङ्मेदोमांसकफा यस्य स एवम्। कारणे कार्य्योपचाराद् गुड़ोऽप्येवमुक्तः।

हृद्य: पुराण: पथ्यश्च नव: श्लेष्माग्निसादकृत् ॥ ४८ ॥
वृष्या: क्षतक्षीणहिता रक्तपित्तानिलापहा: ।
मत्स्यण्डिकाखण्डसिता: क्रमेण गुणवत्तमा: ॥ ४९ ॥
तद्गुणा तिक्तमधुरा कषाया यासशर्करा ॥ ५० ॥
दाहतृट्छर्दिमूर्च्छासृक्-पित्तघ्नाः सर्वशर्करा: ॥ ५१ ॥
शर्करेक्षुविकाराणां फाणितञ्च वरावरे ॥ ५२ ॥
चक्षुष्यं छेदि तृट्श्लेष्म-विषहिक्कास्रपित्तनुत् ।
मेहकुष्ठकृमिच्छर्दि-श्वासकासातिसारनुत् ॥ ५३ ॥

---

यथानूपोदकं पादरोग इति । प्रभूतक्रिम्यादीन् करोतीत्यर्थ: । हृद्य इति । गुड़ इत्यनुवर्त्तते । पुराणो गुड़ो हृदयाय हित: । तथा पथ्य: । अन्तर्मध्यवहिर्मार्गाय हित: । नवो गुड़: श्लेष्माणमग्निसादं करोति ॥ ४५—४८ ॥

वृष्या इति । मत्स्यण्डिकादयस्त्रयो वृष्यास्तथा क्षीणक्षतहिता रक्तपित्तानिलापहाश्च तथा क्रमेण गुणवत्तमा: । धौतगुड़ादपि मत्स्यण्डिका गुणकरी निर्मलतरत्वात् । ततोऽपि खण्डो गुणवत्तर: । खण्डादपि शर्करा गुणवत्तमा निर्मलतमत्वात् । गुणवत्तमेति गुणवतीशब्दस्य तमप्रत्यये पुंवद्भावोऽच पदे च वक्तव्य इति पुंवद्भाव: । तद्गुणेति । शर्करासमा यासशर्करा यवासशर्करेति या लोके प्रसिद्धा । तिक्तमधुरकषायरसा च । केचित्त्वाचक्षते दुरालभारसेन या क्रियते । दाहेति । इत्येताश्चान्याश्च दाहादिनाशना: । ग्रन्थान्तरे चोक्तम् । 'यथा यथाऽऽसां वैमल्यं मधुरत्वं यथा यथा । स्नेहलाघवशैत्यादिसारत्वञ्च तथा तथा" इति । अधुना वरावरत्वं निर्द्धारयति—शर्करेति । इक्षुविकाराणां मध्ये शर्करा फाणितञ्च क्रमेण वरावरे भवत: । शर्करा श्रेष्ठा फाणितमवरम् ॥ ४९—५२ ॥

शर्करायोनिप्रसङ्गेन मधुनोऽपि गुणानाह—चक्षुष्यमिति । मधु चक्षुषे हितम् । तथा छेदि । उभयथा आश्चोतन-व्रणलेपादावुपयुक्तम् । तथाऽभ्यवहारविषयेऽपि । तैक्ष्ण्याद् यो देहे पिण्डितान् भावान् छिनत्ति विभजति स छेदीति कथ्यते । तथा तृड़ादिनुत्, मेहादिजिदिति च । प्रायेणाभ्यवहारविषय एव । व्रणानां शोधनं सन्धानं रोपणञ्च । शोधनं यत् पूयपैच्छिल्यादिप्रेरकम् । सन्धानं यद् द्वौ व्रणौ चैकीकरोति । रोपणं सुप्रसिद्धम् । एतच्च कार्यं बाह्यविषयमेवास्य वेद्यम् । तथा बलमेतच्चास्य बाह्योपयोगेनाभ्यन्तरोपयोगेन च । अन्ते व्यस्तश्रुतत्वात् । चक्षुष्यं छेदीत्यादिनास्य मधुन: कर्मनिर्देश: । रूक्षं कषायमधुरमित्यनेनास्य स्वरूपनिर्देश: । लाघवाच्चात्र ग्रन्थकारेणैतद्वेदादिनोक्तम् । तथा ह्ययमेव तन्त्रकार: संग्रहे मधुनो भेदानाख्यत् । यथा । "भ्रामरं पौत्तिकं क्षौद्रं माक्षिकं तत् यथोत्तरम् । तत्र स्याद् भ्रामरं शुक्लं घृतवर्णन्तु पौत्तिकम् । क्षौद्रं तु कपिलं विद्यात्तैलाभं माक्षिकं मतम् । भ्रामरं तर्पणं स्वादु त्रिदोषं

व्रणशोधनसन्धान-रोपणं वातलं मधु।
रूक्षं कषायमधुरं तत् तुल्या मधुशर्करा ॥ ५४ ॥
उष्णमुष्णार्त्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ॥ ५५ ॥
प्रच्छर्द्दने निरूहे च मधूष्णं न निवार्य्यते।
अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ॥ ५६ ॥
इतीक्षुवर्गः।

---

पौत्तिकं विदुः। वरञ्च गुर्वभिष्यन्दि चौद्रं रूक्षं मनाग्गुरु। माक्षिकं लघुपवनं मधुरं शस्यते व्रणे। गरीयः स्वाद्वभिष्यन्दि नवं जीर्णमतोऽन्यथा। मरुङः पुराणान्मधुनस्तीक्ष्णो रूक्षो लघुस्तनुः" इति ॥ तथा संग्रहे कटुपाकित्वगुरुत्वशैत्यविषान्वयत्वविरुद्धोपक्रमत्वयोगवाहित्वादीन् गुणानवोचत्। योगवाहित्वञ्च विवदन्ते बहुविदः। तत्र केचिदेवं समगिरन्त। यद्द्रव्यं द्रव्यान्तरेण संयुज्यात्मीयं स्वभावं हित्वा संयुक्तद्रव्यस्वभावमेवानुवर्त्तते तद्योगवाहीति। नचैतत् युक्तम्। यतो यद्येवं योगवाहिता निश्चीयते तदानीं योगवाहिद्रव्योपयोगो निरर्थकः स्यात्। तथाहि। योगवाहिद्रव्यमन्तरेणापि यत्स्वभावं द्रव्यं प्रागासीत् तत्स्वभावमेव योगवाहिद्रव्ये युक्तमपि। तस्मादसदेतद्योगवाहिलक्षणमिति। केचित्त्वेवं प्रतिजानते। यद्द्रव्यं द्रव्यान्तरेण युक्तमन्यस्य द्रव्यस्य शक्त्युत्कर्षमुत्पादयति तद्योगवाहीति। तदप्यसम्यक्। यस्मादेवमभ्युपगम्यमाने न बहूनि द्रव्याणि योगवाहीनि स्युः। तथाच मध्वादेरपि द्रव्यस्य किञ्चिद्द्रव्यं समानगुणस्य शक्त्युत्कर्षं कुर्वदेव दृष्टम्; तत्कथं मध्वादेरेव योगवाहित्वमुच्यते नापरस्येति। तदेतदपि लक्षणमसङ्गतत्वादलक्षणम्। अपरे त्वेवमाहुः—यद्द्रव्यं द्रव्यान्तरेण तुल्यगुणेनापि युक्तं सत्तद्गुणाननुवर्त्तते स्वं च कार्य्यं तदविरुद्धं किञ्चित् करोति तद्योगवाहि द्रव्यम् भृत्यवत्। तथा भृत्यः स्वामिकार्य्यमत्यजन् स्वकार्य्यमपि शरीरयात्रादिकं स्वाम्यविरुद्धं करोति तथैव मधुमदनफलसंयुक्तं वमनकार्य्यं करोति न तु वमननिवारणं मधुकार्य्यम्। एवं मधु हरीतकीसंयोगाद्विरेचनकार्य्यमेव करोति न मधुकार्य्यं स्तम्भनरूपमिति। ये तत्रैवं प्रतिपन्ना मदनफलादेः शक्त्युत्कर्षस्तथाविधोऽस्ति येन मधुसम्बन्धि कार्य्यमवधूय स्वं कार्य्यं करोति, ते चैवं नोदयन्तो भवन्तीति वक्तव्यनीयाः। यतः स्तम्भनद्रव्येणान्येन येन केनचित् संयुक्तस्य सुधाक्षीरस्यापि शक्तिः किञ्चिदपहीयमाना दृष्टा मधुनापि स्तम्भनस्वभावेनाप्यस्य नापहीयते मनागपि। अतो मध्वादेरेव योगवाहित्वं नान्यस्य। अपिच यन्यदा योगवाहिद्रव्यन्त्रिवृदादिमदनफलेन युक्तं सद्विरेचनं वमनं चोभयकार्य्यं कुर्वद्दृष्टं न केवलं वमनमेव न विरेचनमेव तस्मान्मध्वादेरेव योगवाहित्वमिति स्थितमेतत्। तत्तुल्येति। मधुसमा गुणैर्मधुशर्करा ॥ ५३। ५४ ॥

उष्णमिति। तन्मधु उष्णमुपयुक्तं सन्निहन्ति मारयति तथोष्णार्त्तं प्रतप्तं पुरुषं निहन्ति। उष्णे च काले देशे चोपयुक्तमुष्णैराहारादिभिश्च युक्तं सन्निहन्ति। प्रच्छर्दन इति। तच्च मधु प्रच्छर्दने वमने तथा निरूहे च उष्णं न निवार्य्यते न

तलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।
त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥ ५७ ॥
कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।

---

निषिच्यते । तस्मात्कारणात्तयोर्वेमिनिद्रहयोरलसपाकमपक्वमेवाशु निवर्त्तते पुनरागच्छति । इतीक्षुवर्गः ॥ ५५।५६ ॥

सर्पिषोऽनन्तरं स्नेहसामान्यात्तैलवर्गो वक्तव्ये गुड़स्य समानरसवीर्य्यविपाककर्मत्वात् प्रायेण चाहारद्रव्येषु भक्ष्यभोज्येष्वस्यैव तैलेभ्यः सारभोजनादिक्षुवर्गान्तरा निर्दिष्टः । भूरिभोजनोपयोगितया च मद्यात् प्राक् तैलवर्गो वक्तव्य इत्याह,—तैलमिति । सर्वं तलं स्वकारणसमगुणं भवति । यतो यदभिनिर्वृत्तं तत्स्वरूपमेवमित्यर्थः । तत्र तलेषु मध्ये मुख्यं तिलोद्भवं यत्तैलं तत्तीक्ष्णं मन्दविपरीतम् ; तथा व्यवायि व्याप्तिशीलम् ; तथा त्वग्दोषकृत् पानाभ्यासेन त्वचं दूषयति ; अचक्षुष्यं चक्षुषे हितं न भवति ; सूक्ष्मं सूक्ष्मस्रोतोगामि; उष्णमुष्णवीर्य्यम् ; स्वयोनिवदित्यतिदेशात् कफकृत्त्वं प्राप्तमित्याह,—कफकृन्न च । कफं न करोति । संग्रहेऽप्युक्तम्,—"मेध्यस्तिलः स्पर्शशीतो मेध्यं तैलं खलो हिमः । तस्यैव स्निग्धकर्त्तृत्वं न तैलस्य खलस्य च" इति । पानकस्त्वायुर्वेदावतारेऽधिजगौ । "विपाके कटुकं तैलं वातघ्नं कफपित्तकृत्" इति । ननु तैलमिति कथमस्य मुख्यं नाम ? यतो यथा तिलस्य विकारः स्नेहस्तैलमित्युच्यते । तथैरण्डादीनामपि यो विकारः स्नेहः सोऽपि तैलमित्युच्यते । मुनिरप्याह । "अतैलमपि तैलमेव कृत्वोपदिश्यते तैलप्राधान्यात्" स्नेहप्राधान्यात् इति यावत् । सामानाधिकरण्यप्रयोग एवोपपन्नः । यथा कौसुम्भं तैलमैरण्डमिति । अत्रोच्यते । तिलस्येदं वस्तु तैलमित्यन्वर्थता तिलोद्भवस्यैव तैलस्य सम्भवति न कौसुम्भादीनाम् । अपि च कौसुम्भं तैलमित्यादौ तैलशब्दः काण्डादिव्यवच्छेदपरः सम्भाव्यते । यथा कौसुम्भं तैलं न पत्रं काण्डञ्चेति । इदं तैलं तैलमित्यत्र तु सामानाधिकरण्येन यदि तैलशब्दो निर्दिश्यते ततः पूर्वस्मात्तैलशब्दात् स्नेहाभिधायिनोऽधिकमर्थान्तरं न वक्ति । ननु अत्रापि तैलशब्दः कस्मात् काण्डादिव्यवच्छेदपरो न भवतीति चेत् ? वयं ब्रूमः । रूढ़िरूपत्वात्तैलशब्दस्य स्नेहविषय एव तैलशब्दो रूढ़ो न काण्डपत्रादिविषये । तिलस्य हि काण्डं पत्रं वा न तैलमित्युच्यते । किं तर्हि ? तिलपत्रं तिलकाण्डमिति । अतएव तैलशब्दोच्चारणस्य समनन्तरं स्नेहविषयैव धीर्जायते न पत्रकाण्डादिविषया । तस्मादस्यैवेतन्मुख्यं नामेत्युक्तम् । संस्कारानुवर्त्तित्वेन सर्वरोगजित्वाच्चास्य मुख्यत्वम् । तथाचोक्तम् । "संस्कारात् सर्वरोगजित्" इति । कुसुम्भादीनां तिलशब्दस्य च स्नेहनार्थवाच्ये विकारे स्नेहने तैलजिति तैलच्प्रत्यये सति कुसुम्भतैलमैरण्डतैलं तिलतैलमितिरूपं भवति ॥ ५७ ॥

कृशानामिति । कृशानां पुंसां बृंहणाय बृंहत्त्वायालं पर्य्याप्तं, स्थूलानां च कर्शनायालम् ? ननु कथमेकस्माद्वस्तुनो विरुद्धकार्य्यद्वयं कृशत्वबृंहणत्वरूपं स्यादिति ? ब्रूमः । कृशाना तावत् स्रोतांसि सङ्कोचमायान्ति सङ्कुचितस्रोतसां च नराणां तैलमन्तरेणान्यानि द्रव्याणि बृंहणगुणयुक्तान्यपि न तथा प्रवेष्टुं समर्थानि भवन्ति । तैलं पुनः सङ्कुचितानि

बद्धविट्कं कृमिघ्नञ्च संस्कारात् सर्वदोषजित् ॥ ५८ ॥
सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु ।
वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ।
रुक्शोफौ च कटीगुह्य-कोष्ठपृष्ठाश्रयौ जयेत् ॥ ५९ ॥
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ॥ ६० ॥
कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ।
लघु पित्तास्रकृत् कोठ-कुष्ठार्शोव्रणजन्तुजित् ॥ ६१ ॥
आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ॥ ६२ ॥
नात्युष्णं निम्बजं तिक्तं कृमिकुष्ठकफप्रणुत् ॥ ६३ ॥
उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत् ॥ ६४ ॥
वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ।

---

स्रोतांसि तीक्ष्णादिभिर्गुणैर्झटित्येव प्रविश्य शोधयति; स्रोतःशुद्धया च शरीरपुष्टिः। तथा च वक्ष्यति। "स्रोतःसु तत्र शुद्धेषु रसो धातूनुपैति यः। तेन तुष्टिर्बलं वर्णः परं पुष्टिश्च जायते" इति॥ तस्मात् कृशानां बृंहणायालमित्युपपन्नम्। तथा स्थूलानां सूक्ष्मस्रोतोगामित्वात्सर्वस्रोतःसु तैलं प्रविश्य तीक्ष्णोष्णादिगुणयोगात् मेदः क्षपयति तत्-क्षपणाच्च कर्शनं सम्पद्यते इति स्थूलानां कर्शनाय चेत्युपपन्नम्। स्नेहादिगुणयोगा-त्तैजस्य बृंहणत्वशामत्वे सिद्धे सति कृशानां बृंहणायालं स्थूलानां कर्शनाय चेत्युक्तं ज्ञापनार्थम्। यदित्थंभूत तीक्ष्णादिगुणयुक्तमन्यदपि तत्कृशानां बृंहणायालं स्थूलानां कर्शनाय चेति। बद्धेत्यादि। बद्धा विट् येन तद्बद्धविट्कम्। कप्समासान्तः। ग्रथितपुरीषमित्यर्थः। तथा कृमिघ्नम्। संस्कारादित्यादि। विशिष्टद्रव्यकृतसंस्कार-मात्रित्याशेषरोगजित् ॥ ५८ ॥

सतिक्तेति। एरण्डतैलमीषत्तिक्तं कटु भवति तथा स्वादु मधुरं; तथा सरं गुरु च। वर्ध्मेत्यादि। वर्ध्मादीन् जयेत्। कटीगुह्यकोष्ठपृष्ठस्थितौ रुक्शोफौ जयेत्। तीक्ष्णेति। तच्च तीक्ष्णोष्णपिच्छिलं विस्रञ्च भवति। लोहितैरण्डतैलं त्वतिशयेन तीक्ष्णादि-युक्तम्। कटूष्णमिति। सर्षपाणामिदं सार्षपं तैलं कटूष्णञ्च भवति। तथा तीक्ष्णं कफशुक्रानिलापहञ्च। अपपूर्वाद्धन्तेरन्येष्वपि दृश्यत इति डः। तथा च लघुपित्तास्रञ्च करोति; तथा कोठादीन् जयति। आक्षमिति। अक्षाणां बिभीतकानामिदमाक्षं तैलं मधुरादिगुणयुक्तं पित्तानिलघ्नञ्च। नात्युष्णमिति। निम्बोद्भव तैलमतिशयेनोष्णं न भवति, तथा तिक्तं, तथा कृमिकुष्ठकफनाशनमतिशयेन। उमेति। अतसीज कुसुम्भजञ्च तैलमुष्णवीर्यं भवति तथा त्वग्दोषकफपित्तानि करोति ॥ ५९—६४ ॥

स्नेहप्रसङ्गादिदमप्याह,—वसेति। वसातु रूपेण शुद्धमांसस्य स्नेहः। मज्जा धातुः। तौ वातनाशनौ, तथा मांसानुगस्वरूपौ, यस्य प्राणिनः सम्बन्धि मांसं तत्सदृशरूपौ।

मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ॥ ६५ ॥

इति तैलवर्गः ।

दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ।
सस्वादुतिक्तकटुक-मम्लपाकरसं सरम् ॥ ६६ ॥
सकषायं स्वरारोग्य-प्रतिभावर्णकृल्लघु ।
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ॥ ६७ ॥
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ।
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥ ६८ ॥

---

मेदोऽपि ताविव वसामज्जासदृशस्वरूपं विद्यात् । सङ्क्षेपतया चायं तैलवर्ग इहोक्तः । तथा च संग्रहेऽधिकमप्युक्तम् । "दन्तीमूलकरञ्जाम्र करञ्जारिष्टशिग्रुजम् । सुवर्चलेङ्गुदीपीलुशङ्खिनीनीपसम्भवम् ॥ सरलागुरुदेवाह्व-शिंशपासारजन्म च । तुवरारुष्करोत्थञ्च तीक्ष्णं कट्वम्लपित्तकृत् ॥ अर्शःकुष्ठकृमिश्लेष्म-शुक्रमेदोनिलापहम् । करञ्जनिम्बजे तिक्ते नात्युष्णे तत्र निर्दिशेत् ॥ कषायतिक्तकटुकं सारलं व्रणशोधनम् । भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे ॥ विशेषात् कृमिकुष्ठघ्ने तयोर्द्धं गीविरेचने । अचातिसुक्तकाचीटनारिकेलमधूकजम् ॥ त्रपुसैर्वारुकुष्माण्डश्लेष्मातकपियालजम् । वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ॥ पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम् । तिलतैलं वरं तेषु कौसुम्भं न वरं परम् ॥ वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ । मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ॥ शालूकी शौकरी पाकहंसजाकुक्कुटोद्भवा । वसा श्रेष्ठा स्ववर्गेषु कुम्भीरमहिषोद्भवा ॥ काकमद्गुवसा तद्वत् कारण्डोत्था च निन्दिता । शाखादमेदसां छागं हस्तिनञ्च वरावरम्" इति । इति तैलवर्गः ॥ ६५ ॥

तीक्ष्णोष्णसूक्ष्मादिगुणसामान्यात्तैलवर्गादनन्तरं मद्यवर्ग आरभ्यते—दीपनमिति । सर्वं मद्यं दीपनादिगुणयुक्तम् । तुष्टिश्चित्तपरितोषः । पुष्टिः शरीरपोषः । ते ददाति जनयति यत्तत्तुष्टिपुष्टिदम् । आतोऽनुपसर्गे कः । तथा ईषन्मधुरतिक्तकटुकम् । तथा अम्लौ पाकरसौ यस्य तदेवम् ; तथा सरम् ; तथा सकषायम्, तथा स्वरश्चारोग्यञ्च प्रतिभा च वर्णश्च तान् करोति । ननु सर्वाण्येव द्रव्याण्यारोग्यार्थमुपदिश्यन्ते तस्मादारोग्यकृत्त्वं सर्वेषामेव द्रव्याणां प्राप्तमिति सर्वस्यैवारोग्यकृत्त्वम ? उच्यते । युक्तमाह भवान् किन्त्वतिशयख्यापनार्थम् । एतन्मद्यमतिशयेनारोग्यकृदित्यर्थः । तथा लघु । तथा नष्टनिद्रेभ्यो नरेभ्योऽतिनिद्रेभ्यश्च हितम् । सर्वमेव मद्यप्रभावादिति केचित् ; अन्ये त्वेवं मन्यन्ते, यथा सुरादि यन्मद्यं श्लेष्मादिवर्धनं तन्नष्टनिद्रेभ्यो हितम् ; यच्च माधवादिमद्यं श्लेष्मादिहन्तृ, तच्चातिनिद्रेभ्यो हितमिति । तथा पित्तास्रदूषणं ; कृशेभ्यः स्थूलेभ्यश्च हितम् । सामान्येनापि निर्देशेऽवायं विशेषो बोध्यः । किञ्चिन्मद्यं कृशाय हितं किञ्चित् स्थूलायेति । अथवा तैलोक्तन्यायेन कृशस्थूलहितत्वं बोध्यम् । तथा रूक्षं सूक्ष्मं स्रोतोगामि । तथा

गुरु त्रिदोषजननं नवं जीर्णमतोऽन्यथा ॥ ६९ ॥
पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः।
नात्यर्थतीक्ष्णमृद्वल्प-सम्भारं कलुषं न च ॥ ७० ॥
गुल्मोदरार्शोग्रहणी-शोषहृत् स्नेहनी गुरुः।
सुराऽनिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा ॥ ७१ ॥
तद्गुणा वारुणी हृद्या लघुतीक्ष्णा निहन्ति च।
शूलकासवमिश्वास-विबन्धाध्मानपीनसान् ॥ ७२ ॥
नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा।
व्रणे पाण्ड्वामये कुष्ठे नचात्यर्थं विरुध्यते * ॥ ७३ ॥

---

मीतो विशोषयति। तथा वातघ्नं श्रमहरम्। युक्त्या पीतं सदैवं गुणं मद्यं भवति। युक्तिस्तु मदात्ययनिदाने चिकित्सिते च वक्ष्यमाणा। अन्यथा अयुक्त्या पीतं सविषतुल्यं भवति ॥ ६६—६८ ॥

गुर्विति। नवं किञ्चित्कालातिक्रान्तं तन्मद्यं गुरु त्रिदोषकरञ्च भवति। नवमनतीतसंवत्सरमित्येके। जीर्णं पुराणं किञ्चित्कालातिक्रान्तमतो नवादन्यथा लघु दोषहरञ्चेत्यर्थः। पेयमिति। तच्च मद्यमुष्णोपचारेण न पेयम्। उष्णो विहाराहारादिक उपचारो यस्य स एवं तेन। विरिक्तेत्यादि। कृतविरेचनेन न पेयं दोषासाम्यादिति भावः। क्षुधार्त्तेन न पेयम्। तथा अतितीक्ष्णमतिमृदु च मद्यं न पेयम्। अल्पसम्भारमिति। यद्यावता सम्भारेण लोकप्रसिद्धेन सन्धीयते सुरादि, तत्र तदपेक्षया चाल्पसम्भारं न पेयम्। तथा कलुषमस्वच्छं च न पेयम् ॥ ६९।७० ॥

अधुना मद्यविशेषानाह—गुल्मेति। सुरा गुल्मादिहृद् भवति। तथा स्नेहयतीति स्नेहनी। तथा गुरुर्वातनाशनी च। तथा मेदश्चासृक्च स्तन्यञ्च मूत्रञ्च कफश्च तानावहति। तदिति। एवं वारुणी प्रसन्ना। तएव सुरोक्ता गुणा यस्याः सा तद्गुणा सुरासमगुणेत्यर्थः। तथा हृदयाय हिता हृद्या। तथा लघुतीक्ष्णा च शूलादीन्निहन्ति च। विबन्धः स्रोतसामुपलेपेन दोषादीनामवहनम्। जगल-मेदक-वक्कसानां सुतरामनुपयोगित्वाद् गुणा नेहोक्ताः। संग्रहे तूक्ता एव। यथा, "जगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः। वक्कसो हृतसारत्वाद्विष्टम्भी दोषकोपनः"। वारुण्या अधोभागी घनो जगलः। जगलस्याधो भागो मेदकः। पानीयेन मद्यकल्कपीडनोत्पन्नो वक्कसः ॥ ७१।७२ ॥

नातीति। विभीतकानामियं वैभीतकी नातितीव्रो मदो यस्याः सेवम्। तीव्रमदं न जनयतीत्यर्थः। लघ्वी तथा पथ्या। व्रणादिषु चात्यर्थमन्यमद्यवन्न विरुध्यते।

---

* विष्टम्भिनी यवसुरा गुर्वी रूक्षातिदोषला। इत्यधिकः पाठः।

यथाद्रव्यगुणोऽरिष्टः सर्व्वमद्यगुणाधिकः ।
ग्रहणीपाण्डुकुष्ठार्शः-शोफशोषोदरज्वरान् ।
हन्ति गुल्मक्रिमिप्लीहान् कषायकटुवातलः ॥ ७४ ॥
मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ।
अल्पपित्तानिलं पाण्डु-मेहार्शःक्रिमिनाशनम् ॥ ७५ ॥
अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ॥ ७६ ॥
शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः ।
सृष्टमूत्रशकृद्वातो गौड़स्तर्पणदीपनः ॥ ७७ ॥
वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ।
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥ ७८ ॥
छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ॥ ७९ ॥

---

यथेत्यादि । अरिष्टोऽपि यैर्द्रव्यैः सिद्धः स तद्गुणाननुगच्छति सर्वैश्च दीपनत्वादिभिर्मद्य-गुणैरधिकः । तन्त्रान्तरे चोक्तम् । "मद्याकराधिकद्रव्यं मदिराद्यात्मकं ततः । यथा द्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः" इति । ग्रहण्यादिकांश्च रोगान् हन्ति । तथा कषायः कटुश्चासौ वातलश्च स एवम् । लक्षणं चास्य प्रागुक्तम् ॥ ७३।७४ ॥

मार्द्वीकमिति । मार्द्वीकं द्राक्षारसोद्भवं लेखनत्वादियुक्तम् । तथा अल्पौ पित्तानिलौ यस्य तदेवम् । अन्यमद्यापेक्षयाल्पतरौ करोतीत्यर्थः । तथा पाण्ड्वादिनाशनम् । "विलिखत्यतिते च्यायद्वालूं सल्लेखनं मतम्" । अस्मादिति । खार्जूरं मद्यमस्मान्मार्द्वीकादल्पान्तरगुणम् । अल्पान्तराः किञ्चिद्विशेषा गुणा यस्य तदेवम् । तथा वातलं गुरु च । द्राक्षामद्यं चान्यत्रोक्तम् । यथा, "शुष्कद्राक्षाम्बुसम्भूतो विशदो रोचनो हिमः । द्राक्षासवो मधुसमो ब्रंहणो भृशदीपनः" इति ॥ ७५ । ७६ ॥

शर्करेति । शार्करः शर्करासम्बन्धी मद्यविशेषः सुरभिः सुगन्धिर्भवति । तथा स्वादुश्च हृद्यश्च स्वादुहृद्यः । तथा नातिमदो लघुश्च भवति । सृष्टेत्यादि । गुड़सम्बन्धी गौड़ः सृष्टमूत्रत्वादिभिर्गुणैर्युक्तः । तथा तर्पणश्चासौ दीपनश्च तर्पणदीपनः । वातेत्यादि । सीधुः वातपित्तकरस्तथा स्नेहविकारान् तथा श्लेष्मविकारांश्च हन्ति । तन्त्रभूयस्त्वे-ष्वितरत्र चतुर्विधस्य नियमस्य प्रायिकत्वात् किम् । सीधुरपक्वेक्षुरसकृतः पक्वेक्षुरसकृतश्च । मेद इति । तत्र सीध्वोर्मध्ये पक्वरसो मेदःशोफोदरार्शांसि हन्ति । मेदःशोफोदरार्शोघ्न इत्यत्रमनुष्यकर्तृ के चेति टक ॥ ७७।७८ ॥

छेदीति । मध्वासवो माक्षिकेण सन्धीयते माधवाख्यो मद्यविशेषश्छेदी तीक्ष्णो मेहादिनाशनश्च । अष्टाङ्गसंग्रहे तु सुरासवादयो गदिताः । तथाचापठत् । "सुरासवस्तीव्रमदः स्वादुतीक्ष्णोऽनिलापहः । मैरेयो मधुरो वृष्यः सरः सन्तर्पणो गुरुः" । तत्र मधुनैव सुरासन्धानेन या क्रियते तां सुरासवमाहुः ॥ ७९ ॥

रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम्।
भृशोष्णतीक्ष्णरूक्षाम्ल-हृद्यं रुचिकरं परम्।
दीपनं शिशिरस्पर्शं पाण्डुदृक्क्रिमिनाशनम्॥ ८०॥
गुडेक्षुमद्यमार्द्वीक-शुक्तं लघु यथोत्तरम्॥ ८१॥
कन्दमूलफलाद्यञ्च तद्वद्विद्यात्तदासुतम्॥ ८२॥
शाण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु॥ ८३॥
धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम्।
श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत्।
शस्तमास्थापने हृद्यं लघु वातकफापहम्॥ ८४॥

---

रक्तेति। शुक्तं रक्तपित्तकफान् क्लेदयति। तथा वातानुलोमनं वातमनुलोनयति मार्गान्तरेभ्यस्तमानीय स्वमार्गप्रतिपन्नं करोति तद्वातानुलोमनम्। अतिशयेनोष्णतीक्ष्ण-रूक्षाम्लं, तथा हृद्यं, तथा अतिशयेन रुचिकरं, तथा दीपनं, तथा शिशिरः स्पर्शो यस्य तदेवं, तथा पाण्ड्वादिघ्नम्॥ ८०॥

गुडेक्षिताद्यादि। गुडादिभवं शुक्तं यथोत्तरं लघु। यद्द यदुत्तरं तत्तल्लघु। गुडकृताच्छुक्तादिक्षुशुक्तं लघु। इक्षुशुक्तान् मद्यशुक्तं लघु। मद्यशुक्तान्मार्द्वीकं शुक्तं लघु भवति। कन्दादि तदासुतं गुडशुक्तादिसुतं तद्वद्विद्यात्। तच्छुक्तसमानगुणं जानीयात्। शुक्तेनात्युत्कृष्टशक्तिना परित्यज्य निजं स्वभावं वशीकृत्यात्मरूपतां नीयत इत्यर्थः। आद्यग्रहणात् काण्डलकपत्रादिपरिग्रहः। तेन काण्डाद्यपि तथैव वेद्यम्॥ ८१।८२॥

अम्लत्वारोचनादिगुणतुल्यत्वादन्यदपि शाण्डाक्यादिमाह—शाण्डाकीत्यादि। मूलक-सर्षपशाकानि क्वथितासुतानि कालजीरकराजिकासुभावितान्यम्लतीक्ष्णानि शाण्डाकी-शब्देनोच्यन्ते। सा च नामदेशे प्रसिद्धा। सा चान्यच्चानुक्तमप्यासुतं कालेनाम्लमम्लीभूतं न तु स्वयमाम्लमाप्याद्यम्। अनेनैव हेतुना सुतरां तत्संस्कारतामधिकरोतीति। तच्च रोचनं लघु भवति॥ ८३॥

धान्याम्लमिति। धान्याम्लं काञ्जिकं भेदि तीक्ष्णं तथोष्णवीर्य्यं तथा पित्तकृत् स्वभावाच्च स्पर्शशीतलम्। व्यायामादिना श्रान्तत्वं श्रमः; निर्व्यायामादेवोपश्रान्तत्वं क्लमः; तौ हरति। तथा रुच्यं दीपनञ्च। बस्तिशूलञ्च नयति। तथा आस्थापने निरूहे शस्तम्। तथा लघु वातकफापहञ्च। हन्तेरन्यत्रेष्वपि दृश्यत इति डः। धान्याम्लं तण्डुलकण्डनादिकृतम् (१)। सौवीरकतुषोदकैर्विं तुषैः सतुषैश्च यवैः क्रमात् कृते तद्विद्यात्॥ ८४॥

---

(१) एभिरेव गुणैर्युक्ते सौवीरकतुषोदके। क्रिमि-हृद्रोग-गुल्मार्शः-पाण्डुरोग-निबर्हणे। ते क्रमाद्द वितुषैर्विद्यात् सतुषैश्च यवैः कृते। इत्यधिकः पाठः।

मूत्रं गोऽजाविमहिषी-गजाश्वोष्ट्रखरोद्भवम् ।
पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥ ८५ ॥
क्रमिशोफोदरानाह-शूलपाण्डुकफानिलान् ।
गुल्मारुचिविषश्वित्र-कुष्ठार्शांसि जयेल्लघु ॥ ८६ ॥

इति मद्यवर्गः ।

तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात् ।
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥ ८७ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

मद्यवत्तीक्ष्णोष्णादियुक्तत्वाद्गोमूत्रादिगुणानप्याह—मूत्रमिति । मूत्रं गोऽजादिभवं पित्तलादिगुणयुक्तं तथा लवणोऽनुरसः स्वल्पो यस्य तदेवम् । तथा क्रम्यादीन् जयेत् । लघु च । गोमूत्रस्य च पूर्वमुपन्यासात् प्राधान्यं ज्ञेयम् । संग्रहे तु विशेषान्तरमप्युक्तम् । "श्वासकासहरं छागं पूरणात् कर्णशूलजित् । दद्यात् क्षये किलासे च गजवाजिसमुद्भवम् । हन्त्युन्मादमपस्मारक्रमीन्मेहं तु रासभम् । कषायतिक्तमेतेषां हिक्काश्वासहरं शकृत् । पित्तं तिक्तं क्रमिहरं रोचनाकफवातजित् । तिक्तं पामाहरं मूत्रं मानुषं तु विषापहम्" इति ॥ ८५ । ८६ ॥

तोयेति । इत्यनन्तरोक्तेन प्रकारेण तोयादीनां वर्गैः क्रमानतिक्रमेण द्रवाणामेकदेशो यथास्थूलमयमुदाहृत उक्तः ॥ ८७ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

---

अन्नविधौ प्रकृतेऽल्पवक्तव्यत्वात् पूर्वं द्रवद्रव्यमभिधायान्नं वक्ति;—अथात इति । अन्नस्य स्वरूपं स्वभावो रसवीर्यविपाकप्रभावगुणकर्मादि तस्य विज्ञानमवगमस्तस्मै हितोऽध्यायोऽन्नस्वरूपविज्ञानीयस्तं व्याख्यास्यामः । शेषं पूर्ववद्व्याख्येयम् । द्रव्यशब्दस्याप्रयुक्तोऽप्यर्थस्य गमक इति अन्नद्रव्यस्वरूपविज्ञानीय इति द्रष्टव्यम् । तथा हि पूर्वस्मिन्नध्याये मन्दमतिप्रबोधनाय प्रयुक्तो द्रष्टव्यः । आचार्य्या हि वैचित्र्येण ग्रन्थरचनां विदधति । तत्र प्राक् स्वरूपशब्दो न निर्दिष्ट इह च द्रव्यशब्दः । अथ चोभयमप्रयुक्तमपि

रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।
सारामुखो दीर्घशूको रोध्रशूकः सुगन्धकः* ॥ २ ॥
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ।
स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ॥ ३ ॥
कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ।
शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ ४ ॥
महांस्तस्यानुकलमस्तं चाप्यनुततः परे ॥ ५ ॥
यवका हायनाः पांसुबाष्पनैषधकादयः ।

---

गम्यते मध्यलोपाख्यया च । अद्यते यत्तदन्नं धान्यमांसादि । धान्यञ्च द्विधा शूकशिम्बीभेदेन । तत्र प्राधान्याच्छूकधान्यस्य पूर्वमुपन्यासः । प्राधान्यं चास्य भूयस्तोपयोगित्वात् । शिम्बीधान्यस्य तु तद्व्यञ्जनत्वेन स्वल्पोपयोगित्वात् प्रायेणापथ्यत्वाच्चाप्राधान्यम् ॥ १ ॥

रक्त इति । तत्र रक्तशालिमहाशाली सुप्रथितावेव । कलमो मगधादिषु प्रसिद्धः । स एव महातण्डुल इति काश्मीरेषु । तूर्णकश्च तत्रैव आजव इति प्रसिद्धः । शकुनाहृतो यो मगधेषु बुद्धोत्पादकाल उत्तरकुरुभ्यो हंसैरानीतो मृगारिमात्रा विशाखाख्यया वापितो विस्तरं गतः । अतएव शकुनाहृत इत्यन्वर्थास्य संज्ञा । सारामुखः कृष्णशूकः शलाकारो दीर्घशूकः । रोध्रशूको रोध्रपुष्पाकारशूकः । सुगन्धो गन्धशालिसंज्ञया जालन्धरमगधादिषु ख्यातो देवशालिरित्यपरनामा । एवं पतङ्गादयो नानादेशेषु कर्षकादिभ्योऽवधार्याः । शूके जाताः शूकजास्तेषु मध्ये रक्ताद्यास्तपनीयान्ता अन्ये च ये शालयः शुभा रक्तादिसदृशास्ते सर्वे स्वादुपाकरसत्वादियुक्ताः । बद्धं ग्रन्थितमल्पं च वर्चः पुरीषं कुर्वन्तीति बद्धाल्पवर्चसस्त एवम् । कारणेन कार्योपचारादुक्ताः । कषायोऽनुरसो येषां त एवम् । पथ्याः स्वभावेनैव हिताः । तथा लघवो मूत्रकारिणः शीतवीर्याश्च । वर इति । तत्र तेषु महाशालिकलमादिषु मध्ये रक्तो रक्तशालिसंज्ञो वरस्तृष्णादींश्च दोषान्निर्हन्ति । अस्य च प्रागुपादानेनैव वरत्वे लब्धे वरग्रहणं युक्त्याग्र्यादिसंग्रहार्थम् । तथा च "वर्षासु दिव्यनादेये परं तोये वरावरे" इति । तथा "गव्ये क्षीरघृते श्रेष्ठे" । तथा "शर्करेक्षुविकाराणां फाणितञ्च वरावरे" । "वरोऽत्र मुद्गोऽल्पचलः ।" "माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च" इत्यादीनि वाक्यानि प्रदेशान्तरेष्वयमवोचदाचार्यः ॥ २—४ ॥

महानिति । तस्यानु रक्तशालेः पश्चान्महाशालिर्वरः । तं च महान्तमनु कलमः । महत्संज्ञात् कलमः किञ्चिदून इत्यर्थः, ततोऽनन्तरं परे अन्ये शालयो वरा ज्ञेयाः ।

---

* अस्यानन्तरम्—पुण्ड्रः पाण्डुकपुण्डरीकः प्रमोदो गौरशालिकः ।
लाङ्गली लोहवालाख्यः कर्दमः शीतभीरुकः" ॥ इत्यधिकः पाठो दृश्यते क्वचित् ।

स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः ।
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः ॥ ६ ॥
स्निग्धो ग्राही गुरुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः । *
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥ ७ ॥
ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ।
कुक्कुटाण्डकपालाख्य-पारावतकशूकराः ॥ ८ ॥
वरकोद्दालकोज्ज्वाल-चीनशारददुर्दराः ।
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः ॥ ९ ॥
स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः ।
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ १० ॥
कङ्गकोद्रवनीवार-श्यामाकादि हिमं लघु ।
तृणधान्यं पवनकृत् लेखनं कफपित्तहृत् ॥ ११ ॥

यवका इत्यादि । यवकादयः शालिविशेषाः स्वादवः ; तथोष्णादिगुणयुक्ताः ; तथा सृष्टे मूत्रपुरीषे येस्ते सृष्टमूत्रपुरीषाः । पूर्वं पूर्वंञ्च निन्दिताः । तेन यवकाः सर्वेभ्योऽपि गर्हिताः । तदनु अन्ये किञ्चित् किञ्चित् क्रमेण गर्हिता इति विज्ञेयम् ; नैषधकादय इत्यनादिशब्देन च यवकपत्रिकादयः शालिविशेषा गृह्यन्ते ॥ ५ । ६ ॥

स्निग्ध इति । व्रीहिषु मध्ये षष्टिकः श्रेष्ठो रक्तशालिरिव शालिषु । तथा स्निग्धादि-गुणयुक्तः स्थिरो हिम इति । शरीरस्थैर्यं करोति । ज्वरश्रमग्लानिहरः ; अतएव रसायनप्रयोगे ज्वरादौ च तत्र तत्र चामवपुषामुपदिष्टः ; यवस्तु स्थैर्यकरोऽपि नाम्नातो गुरुवातलत्वादिति षष्टिकश्च द्विविधः गौरः कृष्णगौरश्च ; अत्रासितगौरतो गौरः षष्टिकः श्रेष्ठः ॥ ७ ॥

तत इत्यादि । ततः षष्टिकान्महाव्रीह्यादयः क्रमाद्गुणैरल्पान्तरा गुणैर्हीनाः । स्वादुरिति । एभ्यः षष्टिकादिभ्योऽन्योऽनुक्तो व्रीहिः स्वादुर्मधुररसोऽम्लविपाकः पित्तकरो गुरुर्बहुमूत्रपुरीषोष्मा च । पाटलः पाटलाकुसुमाकारः । त्रिदोषस्त्रिदोषकोपनः । त्रिदोषस्त्वेवेत्यत्रैवशब्दोऽतिशयख्यापनाय । अतिशयेन त्रिदोषल एवेत्यर्थः । अति-त्रिदोषलत्वेनास्याभ्यवहारनिषेधं करोति । अतएव च रसादिमत्त्वं न व्यधादस्य शास्त्रकारः ॥ ८—१० ॥

कङ्ग्विति । कङ्ग्वादि तृणधान्यं हिमं लघु च तथा मारुतकृल्लेखनञ्च । लेखनं विकर्षणम् । "विलिखत्यतितैक्ष्ण्याद्यत् धातूंस्तल्लेखनं मतम्" इति । तथा कफपित्तहृत् । कषायमधुरत्वं पित्तश्लेष्महृत्त्वेनैतेषामवगतं तद्द्रवत्वविरुक्षत्वं वातकृत्त्वात् । तथा-

* लघुरिति वा पाठः ।

भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ।
कोरदूषः परं ग्राही स्पर्शशीतो विषापहः ॥ १२ ॥
उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्द्धनः ।
रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ॥
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत् ।
पीनसश्वासकासोरु-स्तम्भकण्ठत्वगामयान् ॥ १३ ॥
न्यूनो यवादन्ययवः रूक्षोष्णो वंशजो यवः ॥ १४ ॥
वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ।
सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ १५ ॥
पथ्या नन्दीमुखी शीता कषायमधुरा लघुः ॥ १६ ॥
इति शूकधान्यवर्गः ।

मुद्गाढकीमसूरादि शिम्बीधान्यं विबन्धकृत् ।

---

चोक्तम्। "ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति। अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम्" इति। संग्रहे तु स्पष्टं ह्येते गुणा एषामुक्ताः। यथा, "कफपित्तहरा रूक्षाः कषाया मधुरा हिमाः। वातला बद्धविण्मूत्रा लघवो लेखनात्मकाः" इति। श्यामाकादीत्यत्रादिशब्देन तोयश्यामाकशिम्बिरप्रशान्तिकामधूलिकागवेधुकाण्डलोहित्यानां ग्रहणम् ॥ ११ ॥

भग्नेति। तत्र तेषु तृणधान्येषु मध्ये प्रियङ्गुः कङ्गुर्भग्नस्याङ्गस्य सन्धानं करोति। तथा गुरुः। सुश्रुतेनोक्तम्। "रक्ताः पीताश्च कृष्णाश्च श्वेताश्चैव प्रियङ्गवः। यथोत्तरप्रधानाः स्युरूक्षाः कफहराः स्मृताः" इति। कोरदूषः कोद्रवोऽत्यर्थं संग्राही तथा स्पर्शशीतो विषापहश्च। रूक्ष इत्यादि। यवो रूक्षादिगुणैर्युक्तो विड्वातकरो वृष्यः स्थैर्यकृच्च। तथा मूत्रादीन् जयेत्। न्यून इति। अन्ययवो नाम शूकधान्यविशेषो लोकप्रसिद्धः। स यवान् न्यूनः स्वल्पगुणैर्युक्तः। वंशोद्भवो वेणुयवो रूक्षोष्णो भवति ॥ १२—१४ ॥

वृष्य इति। गोधूमो वृष्यादिगुणयुक्तः। जीवन ओजोऽभिवर्द्धनः। तथा वातपित्तहरः। सन्धानकारी जरप्रभृतेर्भग्नस्य सन्धानं करोति। तथा स्थैर्यकृत्सरश्च। चरके त्वन्यथैव गुणयुक्ता उक्ताः। "स्थैर्यकृत्सकषायश्च बल्यः श्लेष्मविकारहा। सन्धानकृद्वातहरो गोधूमः स्वादुशीतलः" इति। पथ्येति। नन्दीमुखी पथ्या शरीराय हिता कषायमधुरा लघुश्च। इति शूकधान्यवर्गः ॥ १५ । १६ ॥

शूकधान्यानन्तरं शिम्बीधान्यवर्गस्य सम्बन्धप्रयोजनं प्रागुक्तमेव। मुद्गेत्यादि। शिम्ब्याः कोश्या धान्यं मुद्गादिकं यत् शिम्बीधान्यं तद्विबन्धकृत्। कस्य विबन्धं करोति? सामर्थ्यात् वातस्य न तु पुरीषादीनाम्। तथा च संग्राहीत्यवैव पठति शास्त्रकृत्।

काषायं स्वादु संग्राही कटुपाकं हिमं लघु ।
मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ॥ १७ ॥
वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः ।
राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ॥ १८ ॥
उष्णाः कुलत्थाः पाकेऽम्ला शुक्राश्मश्वासपीनसान् ।
कासार्शःकफवातांश्च घ्नन्ति पित्तास्रदाः परम् ॥ १९ ॥
निष्पावो वातपित्तास्र-स्तन्यमूत्रकरो गुरुः ।
सरो विदाही दृक्शुक्र-कफशोफविषापहः ॥ २० ॥

---

संग्राहिलक्षणञ्च तन्त्रान्तरे यथा, "भेदि तत्पिण्डितान् भावान् शकृदाद्यान् भिनत्ति यत् । विपरीतमतो ग्राहि" इति । तस्मादविबन्धं स्रोतसामित्याह । तथा कषायं स्वादु कटुपाकं शीतवीर्य्यं लघु च । मसूरादीत्यत्रादिशब्देन मकुष्ठचणकादीनां ग्रहणम् । तथा मेद आदिषु हितं प्रकृतत्वादभ्यवहारे तथा लेपोपसेकेचेति । चशब्दोऽत्र लुप्तनिर्दिष्टो बोध्यः । लेपः प्रदेहः । उपसेकः परिषेकः । कषायशीतरूक्षत्वेन कटुपाकित्वेन च वातकृत्त्वं शिम्बीधान्यस्य शास्त्रकृतोक्तम् । अतएवेदमुपपन्नम् । "मुद्गोऽल्पचलः" इति । यदि हि शिम्बीधान्यस्य मारुतकृत्त्वं सम्यात् तदेतदवक्तुं युज्यते । तस्माद्वातकृत्त्वमस्यास्तीति स्थितम् । तस्मिंश्च सत्याध्मानकारित्वमप्युपपन्नमेव । अतएव संग्रहेऽस्याध्मानकारित्वमुक्तम् । मुद्गादीनाञ्च विशेषास्तत्रैवोक्ताः । यथा, "हरितास्वपि वरा मकुष्टाः कृमिकारिणः । वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणी भृशम्" इति ॥ १७ ॥

वर इत्यादि । अत्र एषु च शिम्बीधान्येषु मध्ये मुद्ग उत्तमः । तथा अल्पं चलं पवनं करोतीत्यल्पचलः । तुर्व्यं तिरके । कलायः पुनरतिशयेन वातलो भवति । राजमाषो रूक्षो बहुशकृत्करोतीति बहुशकृत् । तथा गुरुस्तथाऽनिलकरः । ताच्छील्ये टः । अन्यशिम्बीधान्याच्चातिवातलोऽयमिति वेद्यमनिलकरग्रहणात् । अन्यथा शिम्बीधान्यसामान्यलक्षणेन वातमात्रकारणस्य लब्धत्वादनिलकरग्रहणं न कुर्यात् ॥ १८ ॥

उष्णा इति । कुलत्था उष्णवीर्याः पाकेऽम्लाः । तथा शुक्रादीन् घ्नन्ति । अश्मा अश्मरी वक्ष्यमाणलक्षणा । तथा पित्तास्रदाः परमतिशयेन रक्तपित्तकराः । कषायस्वादुसंग्राहित्वं शिम्बीधान्यसामान्यलक्षणेनैषां वेद्यम् । दृष्टिनाशनत्वं चोष्णवीर्यत्वेन रक्तपित्तकारत्वेन च । संग्रहे तु स्पष्टं ह्युक्तम् । "कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः । पीनसश्वासकासार्शोहिक्कानाहकफानिलान् । घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम् । ग्राहिणी लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिनः" इति ॥ १९ ॥

निष्पाव इति । निष्पावो राजशिम्बीसंज्ञो वातादिकरस्तथा गुरुः सरो विदाही च । तथा दृगादींश्च हन्ति । संग्रहोक्तं चाम्लपाकत्वं कषायमधुरत्वं चेह नोक्तम् । यतोऽम्लविपाकित्वं विदाहित्वादेवाख्योक्तम् । कषायस्वादुत्वं च शिम्बीधान्यसामान्य-

माषः स्निग्धो बलश्लेष्म-मलपित्तकरः सरः।
गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ॥ २१ ॥
फलानि माषवद्विद्यात्काकाण्डोलात्मगुप्तयोः ॥ २२ ॥
उष्णस्त्वच्यो हिमः स्पर्शे केश्यो बल्यस्तिलो गुरुः।
अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ॥ २३ ॥
स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः।
दृक्शुक्रहृत् कटुः पाके तद्वत् बीजं कुसुम्भजम् ॥ २४ ॥
माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥ २५ ॥
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्।

---

गुणकथनेनैव। क्षणवेयस्त्वाह—"निष्पावा मधुरा रूक्षाः सकषाया विदाहिनः। उदावर्त्ते प्रशस्यन्ते गुरवो वातपित्तलाः" इति ॥ २० ॥

माष इति। माषः स्निग्धो बलादिकरः। तथा सरो गुरुरुष्णश्च। तथा वातहा स्वादुश्च। तथा शुक्रस्य वृद्धिं शुक्रस्यैव विरेकं बहिःप्रेरणं करोति। फलानीति। काकाण्डोला चात्मगुप्ता च तयोः फलानि माषवद्विद्यान्माषसमगुणानि विजानीयात्। काकाण्डोला कटभी। आत्मगुप्ता कपिकच्छुः ॥ २१। २२ ॥

उष्ण इति। तिल उष्णवीर्यः। तथा त्वच्यः। तथा स्पर्शे शीतः। केश्यो बल्यो गुरुश्च। तथा अल्पमूत्रः अल्पमूत्रकारः। पाके कटुः। तथा मेधादीन् करोति। त्वच्यकेश्यबल्या हितार्थयप्रत्ययान्ताः। स्निग्धत्वमनिलघ्नत्वं कषायकटुतिक्तरसत्वं नानाजातित्वं चेहास्य ग्रन्थकृता लाघवान्नोक्तम्। संग्रहे तूक्तमेव। यथा, "स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः। त्वच्यः केश्यो गुरुर्बल्यः स्पर्शशीतोऽनिलापहः ॥ अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत्। कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुणः" इति। अन्ये त्वनया युक्त्या संग्रहोक्तमर्थं संगृह्णते। स्निग्धत्वं तावत् तिलस्य तैलेषु मुख्यस्य स्नेहस्य योनिभूतत्वात्सिद्धम्। कफपित्तकृदिति वचनाच्च सामर्थ्यलब्धं वातघ्नत्वम्। कषायस्त्विति शिम्बीधान्यसामान्यगुणकथनेन कषायस्वादुत्वं लब्धमिति। एतदेवोररीकृत्य सद्योव्रणप्रतिषेधे वक्ष्यति। "कल्कं संरोहणं कुर्यात्तिलानां मधुकान्वितम्। स्निग्धोष्णतिक्तमधुरकषायत्वैः ससर्वजित्" इति ॥ २३ ॥

स्निग्धेति। उमा अतसी स्निग्धा स्वाद्वादिगुणयुक्ता उष्णवीर्या च। तथा दृष्टिं शुक्रं च हरति कटुपाका च। तथा उमया तुल्यं वर्तते तद्वदुमासमानगुणं कुसुम्भबीजमित्यर्थः। माष इति। अत्र शिम्बीधान्येषु माषोऽश्रेष्ठः। शूकजेषु शूकधान्येषु यवकोऽश्रेष्ठः ॥ २४। २५ ॥

नवमित्यादि। नवं प्रत्यग्रं धान्यमभिष्यन्द्याभिमुख्येन स्यन्दयति। तच्छैत्यपिच्छिलादिभिः। मालिन्यात् स्रोतसां स्थगितरूपसंक्लेशमात्मं करोतीत्यर्थः। अर्थात् पुराण-

शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्ज्जितम् ॥ २६ ॥

इति शिम्बीधान्यवर्ग: ।

मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।
यथापूर्वं शिवस्तत्र मण्डो वातानुलोमन: ॥ २७ ॥
तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् । *
स्रोतोमार्द्दवकृत् स्वेदी सन्धुक्षयति चानलम् ॥ २८ ॥

---

मनभिष्यन्दि । संवत्सरोषितं वर्षातीतं लघु भवति । नवं चार्थाद्गुर्वित्यनुक्तमप्युक्तम् भवति । तथान्यत्रेऽप्युक्तम् "वर्षातीतं सर्वमन्नं परित्यजति गौरवम् । न तु त्यजति हीर्यं वीर्यं मुञ्चत्यतः क्रमात्" इति । शीघ्रेत्यादि । लघ्वित्यनुवर्त्तते । सूप्यं मुद्गादि यच्छीघ्रजन्म तल्लघु भवति । तथा विगततुषं युक्त्या भर्जितं भृशं लघु भवति । संग्रहे त्वेवमुक्तम् । "नवं धान्यमभिष्यन्दि सेक्यं केदारजं च यत् । लघु वर्षोषितं दग्धभूमिजं स्थलसम्भवम्" इति । इति शिंबीधान्यवर्गः ॥ २६ ॥

निर्दिष्टे शूकशिम्बीधान्ये तयोश्च संस्कृतयोरुपयोग इति कृतान्नवर्गश्चारभ्यते,— मण्डेत्यादि । मण्डादीनां यथापूर्वं लाघवम् । तेनौदनमपेक्ष्य लघ्वी विलेपी ततोऽपि पेया पेयातो मण्डो लघुतर इत्यर्थोऽवतिष्ठते। मण्डपेयाविलेप्योदनानां यथापूर्वं लाघवमित्येवं वक्तव्ये यदत्रौदनस्य पृथक्पाठः स इदं ज्ञापयति । मण्डादयो लाजोपादाना वेद्या न तु तण्डुलोपादानाः । तथाच मुनिः । "शृतः पिप्पलिशुण्ठीभ्यां युक्तो लाजाम्लदाड़िमैः । मण्डः सन्दीपयत्यग्निं वातं चाप्यनुलोमयेत्" इति । तदुक्तम् । "द्रव्यस्यार्द्धपलं दत्त्वा तोयस्य प्रस्थमावपेत् । अर्द्धशेषं गृहीत्वा तत् कर्षौ द्वौ दाड़िमस्य च ॥ युक्तं सैन्धवनिश्चाद्रधान्यकैः शाणमात्रकैः । द्विकर्षमात्रैर्लाजैश्च भूयः संक्वथितञ्च तत् ॥ पिप्पलीजीरकाभ्यां च शाणैकेनावचूर्णितम् । पेयास्वेष विधिः कल्प्यो दाड़िमादिकृतास्वपि ॥" तथा, "सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता । घनसिक्था विलेपी स्याद् यवागूर्विरलद्रवा" इति । अन्ये तु मण्डलक्षणं पेयालक्षणं चान्यथेच्छन्ति । तथा तल्लक्षणम् । "लाजाम्लसैन्धवकणा-धान्यनागरदाड़िमैः । युक्तो विमर्दितः पूतो मण्डः संस्कृत उच्यते ॥ निर्द्रव्या प्राकृता पेया तक्रदाड़िमतण्डुलैः" इति । सामान्यपेयायाश्च तक्रदाड़िमलाजादिसाधितायाः गुणनिर्देशोऽयं न तु विशिष्टाया ज्वरचिकित्सादिविहिताया इति द्रष्टव्यम् । विशेषग्रहणात् कर्मान्तरनिर्देशाच्च । तत्र तेषु मण्डादिषु मध्ये मण्डः शिवः । तथा वातानुलोमनः तथा तृषं ग्लानिदोषशेषं हन्तीति तृड्ग्लानिदोषशेषघ्नः । असनुष्यकार्टके चेत्यत्र टक् । विहितवमनस्य विहितविरेचनस्य वा किञ्चिच्छेषो यो दोषस्य दोषशेषतावचनज्ञापकात् कृतवमनविरेचनस्य दोषशेषकरणं तेन च वमनकर्म्मणि विरेचनकर्म्मणि वा कर्त्तव्ये ऽतियोगभयात्तद्दोषशेषः

---

* श्लेष्मदोषघ्न इति वा पाठः ।

क्षुत्तृष्णाग्लानिदौर्बल्य-कुक्षिरोगज्वरापहा ।
मलानुलोमनी पथ्या पेया दीपनपाचनी ॥ २९ ॥
विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ।
व्रणाक्षिरोगसंशुद्ध-दुर्बलस्नेहपायिनाम् ॥ ३० ॥
सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ।
यश्चाग्नेयौषधक्वाथ-साधितो भृष्टतण्डुलः ।
विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ॥ ३१ ॥
इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥ ३२ ॥

---

कार्श्यं इत्ययमर्थो युक्त्या प्रतिपादितः । तथा मण्डः पाचनो धातुसाम्यकरश्च । तथा स्रोतसां मार्दवं करोति । तथा स्वेदयतीति स्वेदी वह्निञ्च दीपयति ॥ २७ । २८ ॥

क्षुदिति । क्षुच्च तृष्णा च ताभ्यां ग्लानिः सा च दौर्बल्यं च कुक्षिरोगश्च ज्वरश्च तानपहन्ति या सैवम्भूता पेया दौर्बल्यं कार्श्यं तथा मलान् वातादीननुलोमयति स्वमार्गस्थान् करोति । पथ्या शरीरस्य हिता । तथा दीपनी पाचनी चेति । पुंवत्कर्मधारयेति पुंवद्भावः ॥ २९ ॥

विलेपीत्यादि । विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता च । व्रणश्चाक्षिरोगश्च संशुद्धश्च दुर्बलश्च स्नेहपायी च तेषां हिता । व्रणाक्षिरोगशब्दौ मत्वर्थीयाकारान्तौ ॥ ३० ॥

सुधौत इति । ओदनः सुष्ठु धौतस्तथा प्रस्रुतो निस्रावितः स्विन्नोऽत्यक्तबाष्पश्च लघुर्भवति । यश्चौदन आग्नेयौषधानां चित्रकादीनां क्वाथेन साधितः सोऽतिलघुः । तथा भृष्टास्तण्डुला यस्मिन्नोदने सोऽतिलघुतमः । यथोक्तलक्षणादोदनाद्विपरीतो यः अप्रधौतादिः स गुरुः । क्षीरमांसादिभिर्मधुरैर्यश्च साधितः सोऽतिगुरुः ॥ ३१ ॥

इतीत्यादि । इत्यनया दिशा सर्वं पेयादिकं पूर्वोक्तं वक्ष्यमाणञ्च भक्ष्यादिकं द्रव्येण क्रियया संयोगेन मानेन चादिशेत् । तत्र द्रव्यतो यथा । ओदनस्य रक्तशाल्यादिजस्य लाघवम् । यावकादिजस्य तु गौरवम् । क्रियातो यथा । पाकादिसंस्काराच्छूल्यमांसस्य लघ्वादिगुणयोगः । अपरस्य त्वन्यथात्वं दृश्यते । तथाचोक्तं तन्त्रान्तरे । "श्वव्यं वातहरं बल्यं पथ्यं शूल्यामिवं लघु । अपथ्यं गुरु विष्टम्भि मांसं यच्च रसीकृतम्" इति । तन्त्रान्तरे चोक्तम् । "स्विन्नं मांसं गुरु स्तम्भि शूलपक्वं त्रिदोषजित्" इति । क्रिया संस्कार इत्यर्थः । योगः संयोगस्तेन यथा । आग्नेयचित्रकाद्यौषधक्वाथैः साधितस्य लाघवम् । मानतो यथा । बहुभिर्लघुभिरल्पैश्च गुरुभिर्युक्तं लघु एव । विपरीतैस्तु विपरीत एव । आदिग्रहणेन देशादिपरिग्रहः । जाङ्गलदेशप्रभवतण्डुलकृतो लघुः । आनूपदेशतण्डुलकृतो गुरुरित्यादि बोध्यम् ॥ ३२ ॥

बृंहणः प्रीणनो हृद्यश्चक्षुष्यो व्रणहा रसः ॥ ३३ ॥
मौद्गस्तु पथ्यः संशुद्ध-व्रणकण्ठाक्षिरोगिणाम् ॥ ३४ ॥

बृंहण इति। रस इति मांसरसः। आदिशब्दलोपात्। स बृंहणादिगुणयुक्तः। कृताकृतस्य च रसस्यायं गुणनिर्देशो बोध्यः। रसो हि स्नेहगुण्ठ्यादियुतः कृत इत्युच्यते विपरीतस्त्वकृतः। तेन कृतस्य तन्त्रान्तरे विधानमप्युक्तं गुणाय। यथा। "छागलं सक्थिजं मांसं निरस्थि तैत्तिरं तथा। चतुष्पलान्वितं सूक्ष्मं कल्पितं चालितं जले। पिप्पली-पिप्पलीमूलशुण्ठीचित्रकधान्यकैः। द्विशाणैः संयुते तोये क्वाथं सार्द्धाढ़कोन्मिते। मांसेऽस्मिन् द्विपलं तत्र दाडिमान् कुट्टितान् क्षिपेत्। तं रसं मर्दितं पूतं हिङ्गुसैन्धवजीरकैः। युक्तं प्रधूपितं पथ्यं शुद्धानां शुद्धिकाङ्क्षिणाम्। शुष्यतां व्याधियुक्तानां व्रणिनां वातरोगिणाम्। भग्नविश्लिष्टसन्धीनां क्षीणधात्विन्द्रियौजसाम्" इति। तन्त्रान्तरे चोक्तम्। "रसस्तत्र वरोऽनम्लः शाकुनो बृंहणः सरः। तक्रसिद्धस्तु विष्टम्भी लघुर्वातकफापहः॥ फलाम्ल-गोरसोदारं सविश्वाजाजिधान्यकम्। स्निग्धं मांसं हितं बल्यं बृंहणं रोचनं गुरु॥ कासमर्दकधान्याम्ल-दाड़िमादिरजःकृताः। स्नेहास्तक्रादिजाश्चान्ये योनिवद्गुरुरोचनाः॥ मालुधानीयवासादिपुष्पैर्योगिगुणः खलः। फलमूलैर्धनादानं व्यञ्जनं पाकतो धनम्॥ स्नेहवत् खल तत्यन्ये दोषलाः स्वस्वयोनिवत्। तद्वच्च तिलकल्काम्लप्रायः काम्बलिको मतः॥ कट्वरः कफजिद् ग्राही पित्तलो रोचको लघुः। मांसादजाजिशुण्ठ्यादिगलितः सोदको लघुः" ॥ ३३ ॥

मौद्ग इति। मौद्गो रसो यूषो व्रणिनां कण्ठरोगिणाञ्च पथ्यः। अस्य च संस्कृतस्य विधानमुक्तम्। "मुद्गानां द्विपलं तोये शतमर्द्धाढ़कोन्मिते। पादस्थं मर्दितं पूतं दाड़िमस्य पलेन तु॥ युक्तं सैन्धवविश्वाह्वधान्यकैः पादकार्षिकैः। कणाजीरकयोश्चूर्णात् शाणिकेनावचूर्णितम्॥ संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः। तथा। "पटोलपत्राच्छाणार्द्धं (१) मुद्गानां द्विपलं जले। द्रव्ये द्वात्रिंशद्गुणिते श्रतश्च दाडिमात्पलम्॥ कर्षमामलकानाञ्च क्षिप्त्वा पुनरधिश्रयेत्। पूतं तत्सैन्धवाद्यैश्च युक्तमाज्येन योजितम्॥ पटोलफलकाख्योऽयं यूषः पित्तोत्थरोगजित्। निम्बपत्रैर्निम्बयूषमेवमेव प्रकल्पयेत्॥ मूलकाच्छुण्ठिका खिन्ना घृतभृष्टा सधान्यका। हिङ्गुजीरकसंयुक्ता ततो मथितदाडिमे॥ ससैन्धवे विनिक्षिप्य पुनरग्नावधिश्रयेत्। तावद् यावन् मृदूभूतं तत-स्तूषणसंयुतम्॥ सुधूपितं हिङ्गुघृतैश्चातुर्जातावचूर्णितम्। शुण्ठीरसं दीप्तवीर्यं वात-श्लेष्मामयापहम्॥ अकृताकृतयूषाच्च रसाच्च जलसाधितात्। स्नेहाम्लपटुयुक्ताच्च पूर्वः पूर्वोलघुर्मतः॥ विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम्। गौरवं तनुसान्द्राम्लस्वादुष्वेवु पृथक्तया॥" तथोक्तम्। खलकाम्बलिकौ हृद्यौ साधितौ स्वौषधानुगौ। पिष्टितेन रसस्तत्र यूषो धान्यैः खलः फलैः॥ मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः। ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः॥ अल्पमांसादयः स्वच्छा दकलावणिकाः

(१) "पत्राच्छाणौ द्वौ" इति पाठान्तरम्।

वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित् ॥ २५ ॥

तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ।

शाण्डाकीवटकं दृग्घ्नं दोषलं ग्लपनं गुरु ॥ २६ ॥

रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ २७ ॥

श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।

विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणञ्च तत् ॥ २८ ॥

प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ।

लाजास्तट्छर्द्यतीसार-मेहमेदःकफच्छिदः ।

कासपित्तोपशमना दीपना लघवो हिमाः ॥ २९ ॥

पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ॥ ४० ॥

धाना विष्टम्भिनो रूक्षा तर्पणी लेखनी गुरुः ॥ ४१ ॥

---

स्मृताः" ॥ खलेन मांसेन शुण्ठ्यादिभिः खल्वैः स्वच्छा ये क्रियन्ते ते दकलावणिका बोध्याः । एवं यूषे यत्र धान्यमल्पं खलादौ वा मूलादीन्यल्पानि तस्यापि दकलावणिकत्वं बोध्यम् ॥ तन्त्रान्तरे चोक्तम् । "अथ गोरसधान्याम्लफलाम्लै रन्वितश्च यत् । यथोत्तरं लघु हितं संस्कृतासंस्कृतं तथा ॥ प्रभूतास्रमलो यूषः सूपाल्लघुतरः स्मृतः । सूपस्तु रसयूषाभ्यां स्थैर्याद्गुरुतरो मतः ॥ तं सरोगी न चाश्नीयान्नचाल्पाशी कथञ्चन" इति ॥ ३४ ॥

वातेत्यादि । कौलत्थो यूषो वातमनुलोमयति गुल्मादींश्च जयति । तूनिप्रतूनी—रोगौ गुल्मनिदाने वक्ष्यमाणलक्षणौ । तिलेत्यादि । तिलस्य विकृतिः पिण्याकस्य च । तथा शुष्कशाकादि दृष्टिघ्नं त्रिदोषकरं ग्लानिकरं गुरु च । अङ्कुरितं शस्यं विरूढकम् । शाण्डाक्यपि तन्त्रादिका शाण्डाकीवटकम् । रसालेति । रसाला करमथितेन मरीच-शर्करादियुक्तेन दध्ना कृता उल्लेखिका संज्ञा बृंहणी देहस्य बृंहत्वकरो वृष्यादि-गुणयुक्ता च ॥ २५—२७ ॥

श्रमेति । पानकं श्रमादिहरं प्रीणनादिगुणयुक्तम् । प्रीणनं मनःप्रीतिकरं यथा द्रव्यगुणञ्च । स्वादुना गुणेन च युक्तम् । मृर्पटादीनां लाववादिह गुणा नीताः । यथा, "पर्पटा लघवो रूच्या लघीयान् चारपर्पटः । हृद्या वृष्या रुचिकरा गुरवो रागखाण्डवाः । प्रीणना श्रमतृट्छर्दि मदमूर्च्छाभ्रमच्छिदः" ॥ २८ ॥

लाजेत्यादि । लाजास्तृडादींश्छिन्दन्ति । कासपित्ते चोपशमयन्ति । तथा दीपना लघवः शीतवीर्याश्च । पृथुका इति । हरितधान्यानि निस्तुषभ्रष्टमुशलहतानि पृथुका-श्चिपिटसंज्ञा गुरुत्वादियुक्ताः । धानेति । धाना भृष्टयवादिर्विष्टम्भिनी रूक्षादि-गुणयुक्ता च ॥ २९—४१ ॥

सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् ।
घ्नन्ति सन्तर्पणाः पानात् सद्य एव बलप्रदाः ॥ ४२ ॥
नोदकान्तरितान् न द्विर्न निशायां न केवलान् ।
न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून् ॥ ४३ ॥
पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ॥ ४४ ॥
वेसवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ॥ ४५ ॥
मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ॥ ४६ ॥

---

सक्तव इति । सक्तवो लघवः क्षुधादींश्च घ्नन्ति । तथोदकमिश्रिताः सन्तर्पणाः सद्य एव बलं कुर्वन्ति । तांश्च जलेनान्तरितान् व्यवहितान्नाश्नीयात् । अन्यभोजनेषु हि अन्तरापानं विहितं न तथा सक्तुषु कार्यमिति बोधयति । तथा न द्विर्द्विर्वारौ नाद्यात् । न निशायां रात्राम् । न केवलानुदकादिरहितान् । न भुक्त्वाभ्यवहृतभोजनादि । न द्विजैश्छित्त्वा दन्तैः करस्थं पिण्डं छित्त्वेत्यर्थः । बहूंश्च सक्तून्नाद्यात् । तन्त्रान्तरे चोक्तं रूक्षवातलत्वं सक्तूनामिह नोक्तम् । लघुत्वादिनैवावगतत्वात् । ननु रूक्षवातलत्वं चेदभ्युपगम्यते सक्तूनां ततः सन्तर्पणा इत्यनुपपन्नम् । सद्य एव बलप्रदा इत्येतदप्ययुक्तम् । युक्त्या ह्याहारः परिणमति । स धातुपुष्ट्यै नान्यथा । अत्राचक्ष्महे । प्रभावादुभयमप्येतदुक्तम् । सक्तूनां ह्ययमचिन्त्यः प्रत्यक्षवेद्यः प्रभावो यत्पीताः सन्तः सन्तर्पयन्ति । सद्य एव च बलं प्रयच्छन्ति । वाजीकरणं ह्यपरिणतमेव स्वकार्यं जनयति । तथा च मद्यं अपरिणतमेव मदं जनयति । तस्मात् सन्तर्पणत्वं बलप्रदत्वं चैषामुपपन्नमेव । तन्त्रान्तरे चोक्तम् । "तुल्याज्यः सक्तुप्राशस्तु वृष्यो भेदी रसायनम् । छर्द्यर्दितव्रणतृष्णाक्षयपीनसक्षयनिवर्तकः । प्रमेहक्षयकुष्ठानि न च स्युर्मन्थपायिनाम् । निचयात् कठिना गुर्वी पिण्डी प्रोक्ता मृदुर्लघुः । सक्तूनां द्रवताबीगाक्षवीर्यस्त्ववलेहिका । लाजसक्तुकृतापि स्याद्विलेपी तु गरीयसी" ॥ ४२ । ४३ ॥

पिण्याक इति । पिण्याकाख्यो यस्तिलादीनां निष्पीडितः कल्को ग्लपनो ग्लानिकरः । ग्लपन इति ग्लायतेर्णिजन्ताद्ग्लास्नावनुवमां चेति मित्वाद् ह्रस्वः बाहुलकात् कर्तरि ल्युट् । तथा विष्टम्भी दृष्टिविकारकश्च ॥ ४४ ॥

वेसवार इति । वेसवारो नागरधान्यकाजाजिहिङ्गुघृतादिसंस्कृतं कुट्टितं मांसम् । गुरुः स्निग्धो बलवर्द्धनः शरीरोपचयवर्द्धनश्च ॥ ४५ ॥

मुद्गेति । मुद्गादिजास्तु वेसवारा ये दण्डरिकादिभिर्द्रव्यैः सूक्ष्मच्छिन्नैः क्रियन्ते लोके पूरणशब्देन प्रसिद्धास्ते गुरवः प्रकृतिद्रव्यगुणाश्च । आदिशब्देन माषादयो गृह्यन्ते । तन्त्रान्तरे चोक्तम् । "सर्पिस्तैलगुडक्षीरैर्यवगोधूमपैष्टिकाः । पूपा विष्टम्भिनः प्रोक्ताः पैष्टिका वातलाः खराः ॥ वृष्या बल्याः सरा माषैर्वातघ्ना मृदुपिच्छिलाः । यथान्नं गुरवो बल्याः स्थूलाश्च कठिनाश्च ये ॥ तैलपक्वास्तु दृष्टिघ्ना गरीयांसो विदाहिनः । कासारसारा लघवो लाजैर्लघुतराः स्मृताः ॥ वातपित्तहरो वृष्यो घृतपूर

कुकूलकर्परभ्राष्ट्र-कन्दूङ्गारविपाचितान्।
एकयोनींल्लघून् विद्यादपूपानुत्तरोत्तरम्॥ ४७॥
इति कृतान्नवर्गः।

हरिणैणकुरङ्गर्क्ष-गोकर्णमृगमातृकाः।
शशशम्बरचारुष्क-शरभाद्या मृगाः स्मृताः॥ ४८॥
लाववर्त्तीकवार्त्तीर-रक्तवर्त्मककुक्कुभाः।
कपिञ्जलोपचक्राख्य-चकोरकुरुबाहवः॥ ४९॥
वर्त्तको वर्त्तिका चैव तित्तिरिः क्रकरः शिखी।
ताम्रचूडाख्यबकर-गोनर्दगिरिवर्त्तिकाः।
तथा शारपदेन्द्राभ-वारटाश्चेति विष्किराः॥ ५०॥

---

कफप्रदः। सद्यः प्राणकरो रुच्यो मांसलो रक्तलो गुरुः॥ लघीयान्मण्डकात्ततो गरीयान् फलपूरितः। मधुरोत्कारिका हृद्या कासारः पिच्छिलो गुरुः॥ गुडमत्स्यण्डिका-खण्डक्षीरेक्षुरससमाचितैः। पूपाः शुक्लबलश्लेष्मरुचिदास्तर्पणाः चणात्॥ नानाद्रव्यैः समायुक्ताः पक्वामक्लिन्नभर्जिताः। निमर्दको गुरुः स्निग्धो हृद्यो बलवतां हितः॥ खारिकेन्दुरिकापूरवटिकावटकादयः। विशदा रोचना बल्या गुरवः स्युः स्वयोनिवत्॥ शावकः पिच्छिलः स्निग्धः श्रीहोदावर्त्तहा गुरुः। भृष्टस्विन्नतया वाट्यो लघुः सेव्योऽतिकामिनाम्॥ ज्वरोदावर्त्तमेहानां पथ्यो वातानुलोमनः। शीतलं हरितादश्च शिम्बिजत्वात् खरं गुरु॥ मन्दजर्यो यवादित्वादभ्योषो बृंहणः सरः।" सिद्धसारे चोक्तम्। "अल्पुषा मण्डकाः पथ्याः शीतला गुरवो मताः" इति॥ ४६॥

कुकूलेति। अपूपान् कुकूलादिसिद्धानेकयोनीनेककारणान् यथोत्तरं लघून् विद्यात्। तेन कुकूलपक्वात् सजातीयादपूपात्कर्परपक्वो लघुः। कर्परपक्वाच्च भ्राष्ट्रपक्वः। भ्राष्ट्रपक्वात् कन्दुपक्वः। कन्दुपक्वाच्चाङ्गारपक्वः। कुकूलं मी अरं गोशकृदादिचूर्ण-सन्तापः। कर्परो ज्वालातप्तं कपालम्। भ्राष्ट्रकन्दू प्रसिद्धावेव। अङ्गारा दहन्तः काष्ठसम्भूता इति। इति कृतान्नवर्गः॥ ४७॥

कृतान्नवर्गादनन्तरं मांसशाकवर्गयोस्तद्व्यञ्जनभूतयोर्निर्देशः। तत्रापि प्राधान्यात् मांसवर्गस्य पूर्वं निर्देशः। प्राधान्यञ्चास्य भक्तेन सह प्रचुरोपयोगेऽप्यदोषात्। शाकस्य तु बहुप्रयोगे दोषं वक्ष्यति। "शाकावरान्नभूयिष्ठमल्पक्षीरलवणं त्यजेत्" इत्यनेन। हरिणेत्यादि। हरिणादयो दश मृगाः स्मृताः। आदिशब्देन कालपुच्छकपृषतादयः संगृहीता उच्यन्ते॥ ४८॥

लावेत्यादि। तत्र लावादयो वारटान्ता एकविंशतिर्विकीर्य भक्षणाद्विष्किराः। रक्ते वर्त्मनी यस्य स रक्तवर्त्मकः। वर्त्तको वर्त्तिकेति जात्यन्तरं न तु वर्त्तिकस्य स्त्री वर्त्तिका। यथा च बलाका सारिकेति। पुंस्यपि स्त्रीलिङ्गत्वाविशेषात्। शिखी मयूरः। शेषादिः॥ ४९।५०॥

जीवञ्जीवकदात्यूह-भृङ्गाह्वशुकसारिकाः ।
लट्वाकोकिलहारीत-कपोतचटकादयः ॥ ५१ ॥
प्रतुदा भेकगोधाहि-श्वाविदाद्या बिलेशयाः ॥ ५२ ॥
गोखराश्वतरोष्ट्राश्व-द्वीपिसिंहर्क्षवानराः ।
मार्ज्जारमूषिकव्याघ्र-वृकबभ्रुतरक्षवः ॥ ५३ ॥
लोपाकजम्बुकश्येन-चाषवान्तादवायसाः ।
शशघ्नीभासकुरर-गृध्रोलूककुलिङ्गकाः ।
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥ ५४ ॥
वराहमहिषन्यङ्कु-रुरुरोहितवारणाः ।
सृमरश्चमरः खड्गो गवयश्च महामृगाः ॥ ५५ ॥
हंससारसकादम्ब-बककारण्डवप्लवाः ।
बलाकोत्क्रोशचक्राह्व-मद्गुक्रौञ्चादयोऽप्चराः ॥ ५६ ॥
मत्स्या रोहितपाठीन-कूर्मकुम्भीरकर्कटाः ।
शुक्तिशङ्खोद्रशम्बूक-शफरीवर्मिचन्द्रिकाः ॥ ५७ ॥
चुलुकीनक्रमकर-शिशुमारतिमिङ्गिलाः ।
राजीचिलिचिमाद्याश्च मांसमित्याहुरष्टधा ॥ ५८ ॥

---

जीवमित्यादि । जीवञ्जीवकादयः प्रतुदा दश स्मृताः । प्रतुद्य तुण्डेनाहत्य शाल्यादिभक्षणात् प्रतुदाः । आदिशब्देन संगृहीताः खञ्जरीटकपारावता गृह्यन्ते । भेकादयश्चत्वारो बिलेशयाः । बिले बाहुल्येन शयनाद्बिलेशयाः । आदिशब्देन श्वेतश्यामशल्यकादयो गृह्यन्ते ॥ ५१।५२ ॥

गवेति । गवादयः प्रसह्याहृत्य भक्षणात्प्रसहाः । मृगाश्च पक्षिणश्च मृगपक्षिणः । केचिन् मृगाः केचित्पक्षिण इत्यर्थः । अश्वतरो वेगसरः । अश्वस्तुरगः । बभ्रुर्नाहको नकुल इत्यन्ये । लोपाको खीमशः । जम्बुकः शृगालः । श्येनो गरुडाकृतिः । चाषः किकीदिविः । वान्तादः श्वा । वायसः काकः । उलूकः काकारिः । कुलिङ्गकः कृष्णचटकः ॥ ५३।५४ ॥

वराहेति । वराहादयो दश महामृगसंज्ञाः । वारणो हस्ती । हंसेत्यादि । हंसादयः क्रौञ्चान्ता अप्सु चरणादप्चरसंज्ञाः । आदिशब्देन रक्तशीर्षकादयो गृह्यन्ते । मत्स्या इति । रोहितकादय एकोनविंशतिर्जलोद्भवा मत्स्यसंज्ञाः । चशब्दोऽनुक्तकदलकपर्दकादिसमुच्चयार्थः । इत्यष्टभिः प्रकारैः शास्त्रकारा मांसमाहुः ॥ ५५—५८ ॥

योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ॥ ५९ ॥
आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ॥ ६० ॥
तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः ।
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ ६१ ॥
दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ॥ ६२ ॥
ईषदुष्णा गुरुस्निग्धा बृंहणा वर्त्तकादयः ।
तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।
ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥ ६३ ॥

---

योनिष्विति । योनिषु पूर्व्वोक्तासु अष्टासु मध्ये व्यामिश्रगोचरत्वाद्व्यामिश्रविषयत्वादजावी व्यामिश्रे अजावी छागोरभ्रे ते अनिश्चिते । ते हि जाङ्गलेऽपि देशे वर्त्तते अनूपेऽपि । अजावी इति स्त्रीलिङ्गनिर्देशोऽत्र विवक्षित एव । केचित्त्वनिश्चिताविति निजगदुः । तत्र तित्तिरिरपि धन्वानूपचारी प्रथितः तत्कथमसौ हि जाङ्गलः कीर्त्तितः ? ब्रूमः । तत्स्वभावित्वात् यद्यप्युभयचरीऽयं तथापि जाङ्गलस्वभावत्वाज्जाङ्गलोऽयं भक्षणे । अत्र विष्किरत्वं तित्तिरे निश्चितं निमित्तमस्ति । तस्मादयं जाङ्गल एव युक्तः । हरिणादीनाञ्च किरातकैवर्तादिभ्यो नानादेशप्रसिद्धाः संज्ञा वेद्याः ॥ ५९ ॥

आद्येति । आदौ भवा आद्याः ; मृगविष्किरप्रतुदाख्या जाङ्गलचारित्वाज्जाङ्गलशब्दवाच्या एव । महामृगाप्चरमत्स्याख्या आनूपाः, मध्यौ द्वौ बिलेशयप्रसहाख्यौ साधारणौ जाङ्गलानूपचारिणावित्यर्थः । मध्याविति द्विवचननिर्देशसामर्थ्यादाद्यन्तानां वर्गाणां प्रत्येकं त्रिधात्वमनुमीयते त्रियग्रहणमन्तरेणापि ॥ ६० ॥

तत्रेति । तत्र तेषु जाङ्गलानूपसाधारणेषु मध्ये जाङ्गला बद्धमला ग्रथितं पुरीषं कुर्वन्ति । शीतवीर्य्या लघवः । सन्निपाते हिताः । किम्भूते ? पित्तोत्तरे पित्ताधिके । तथा वाते मध्यो यस्मिंस्तस्मिन् मध्यममवर्त्तति तथा कफानुगे कफोऽनुगोऽबली हीनो यस्मिंस्तस्मिन् स्वल्पेऽपि ॥ ६१ ॥

दीपन इति । शशोऽग्निदीपनः पाके कटुकः ग्राही रूक्षः शीतश्च । ग्राहिशीतत्वञ्चास्य जाङ्गलत्वादेव लब्धमित्यतिशयार्थं पुनरिहोपात्तम् । स्वादुकपाययत्वादिकमेषामिह युक्त्योक्तम् । संग्रहे तु स्पष्टं कृत्वोक्तम् । यथा, "तत्र बद्धमला रूक्षा मांसानामुत्तमा हिमाः । कषायस्वादुविशदा लघवो जाङ्गला हिताः ॥ तासोऽत्र हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित् । लघीयान् षड्रसश्चासौ ग्राही रूक्षो हिमः शशः ॥ कटुपाकोऽग्निकृत् पथ्यः सन्निपातेऽनिलावरे" इति ॥ ६२ ॥

ईषदिति । वर्त्तकादारभ्य यावज्जाङ्गलसमाप्तिस्तावत् सर्व्वे औष्ण्यगौरवस्निग्धत्वैरल्पैर्युक्ताः । तेष्वपि मध्ये तित्तिरिः श्रेष्ठो मेधादिकरश्च । तथा संग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च । स च तित्तिरिर्धन्वन्यानूपे च देशे विचरत्यतः

नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ।
तद्वच्च कुक्कुटो वृष्यः ग्राम्यस्तु श्लेष्मलो गुरुः ॥ ६४ ॥
मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः ।
गुरुः सलवणः काणकपोतः सर्व्वदोषकृत् ॥
चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ॥ ६५ ॥
गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ।
मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ॥ ६६ ॥
शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः ।
लवणानुरसाः पाके कटुका मांसवर्द्धनाः ।
जीर्णार्शोग्रहणीदोष-शोषार्तानां परं हिताः ॥ ६७ ॥
नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम् ।

---

स्निग्ध उष्णो गुरुर्बृंहणश्च । तथा च संग्रहे । "धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहणः" इति ॥ ६३ ॥

नेति । शिखी बर्ही नातिपथ्यः । श्रोत्रादीनां पथ्यो वयसः स्तम्भनकारित्वेन पथ्यः । तद्वच्च कुक्कुटो मयूरतुल्यगुणो वृष्यश्च । ग्राम्यः पुनः कुक्कुटः श्लेष्मलो गुरुश्च । मेधेत्यादि । क्रकरोपचक्रकाश्च मेधानलग्निश्च कुर्व्वन्ति हृद्याश्च । काणः कपोतो गुरुरीषल्लवणस्त्रिदोषकृच्च । चटका इति । चटकाः श्लेष्मलादियुक्ता अतिशयेन शुक्रकृतश्च ॥ ६४ । ६५ ॥

गुरूष्णेति । अतोऽनन्तरं बिलेशयाद्या वर्गा यथोत्तरं गुरुत्वेनोष्णत्वेन स्निग्धत्वेन मधुरत्वेन चाधिकाः । यो यस्मादुत्तरो वर्गः स तस्माद् गुरुत्वादिभिरधिक इत्यर्थः । तथा यथोत्तरमेव मूत्रकृतः शुक्रकृतो बल्या वातघ्नाः श्लेष्मपित्तलाश्च ॥ ६६ ॥

एवं वर्गपञ्चकस्य सामान्यगुणानुक्त्वाऽपवादमाह । शीता इति । तेषु वर्गेषु मध्ये महामृगाः शीतवीर्य्याः । क्रव्यं मांसं भुञ्जते ये ते क्रव्यादाः । क्रव्यादास्तु ये प्रसहा मार्जारगृध्रोलूकादयस्ते लवणानुरसाः पाके कटुका मांसवर्द्धनाश्चातितराम् । जीर्णप्रभृत्यामयानामतिशयेन हिता ॥ ६७ ॥

नेति । नातिशब्दोऽत्र ईषदर्थे । यदि तु प्रतिषेधनमात्रमभीष्टमभविष्यदाचार्य्यस्य, ततो नञएव केवलस्योपादानमकरिष्यत् । तस्मात् ईषदर्थ एव विवक्षितः । अत एवं व्याख्यानयन्ति । अदोषलमिति । अल्पदोषलम् । यथा अनतिदग्धो ग्राम इति । शरीरस्य धातुः शरीरधातुः प्रकृतत्वात् पुरुषशरीरस्य मांसाख्यो यो धातुस्तस्य सामान्यात् तुल्यत्वादाजं मांसमनभिष्यन्दि बृंहणञ्च । गुणकृतञ्चात्र सामान्यं गृह्यते न द्रव्यकृतम् । द्रव्यकृते हि सामान्ये गृह्यमाणे तुरगोरगादिमांसमपि पुरुषशरीरधातोर्मांसाख्यस्य मांसत्वेन समानं भवतीति तदप्यनभिष्यन्दि बृंहणञ्च स्यान्न केवलमाजं मांसम् । गुणकृते

शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥ ६८ ॥
विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ॥ ६९ ॥
शुष्ककासश्रमात्यग्नि-विषमज्वरपीनसान् ।
कार्श्यं केवलवातांश्च गोमांसं सन्नियच्छति ॥ ७० ॥
उष्णो गरीयान्महिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ।
तद्वत् वराहः श्रमहा रुचिशुक्रबलप्रदः ॥ ७१ ॥
मत्स्याः परं कफकराश्चिलिचीमस्त्रिदोषकृत् ।
लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम् ॥ ७२ ॥
मांसं सद्योहतं शुद्धं वयस्थं च भजेत् त्यजेत् ।

---

तु सामान्यं गृह्णीते शरीरधातुसामान्यादाजमेव मांसमनभिष्यन्दि बृंहणञ्चेति वक्तुं युज्यते । मांसग्रहणञ्चात्रोपलक्षणार्थम् । न केवलमाजं मांसं पुरुषशरीरधातूनां सामान्येन तुल्यं यावदन्येऽपि ये छागशरीरगता धातवस्तेऽपि मनुष्यशरीरधातुना तुल्यगुणास्तेऽप्यनभिष्यन्दिनो बृंहणाश्च । अनया भङ्ग्या पुरुषमांसस्याप्याचार्य्येणात्र गुणा उक्ताः । ननु बृंहणं यद्द्रव्यं तद्गौमाय्यमभिष्यन्दि च । अयामेवासाधारणो धर्म्मः स्वरूपः । तत्कथमनभिष्यन्दीत्युक्तम् ? ब्रूमः । द्रव्यप्रभावात् । ईदृशोऽय द्रव्यप्रभावो यद्बृंहणमपि द्रव्यमनभिष्यन्दीति ॥ ६८ ॥

विपरीतमिति । अतोऽजमांसाद्द विपरीतमाविकं मांसमल्पुष्णं स्निग्धं गुरु सदोषमभिष्यन्दि चेति । बृंहणत्वस्यापि विपर्य्यये प्राप्ते तदपवादमाह । बृंहणन्तु तदिति । तु शब्दोऽवधारणे । बृंहणमेव तदितर्थः । शुष्केति । गोमांसं शुष्ककासादीन् नियच्छति । उष्ण इति । महिष उष्णो गुरुतरः स्वप्नादींश्च करोति । गुरुशब्दादियसुनि प्रियस्थिरेत्यादिना गरादेशः । दार्ढ्यमिति वर्णदृढेत्यादिना ष्यञ् । तदिति । वराहः शूकरः तद्वत् महिषगुणो ज्ञेय इत्यर्थः । तथा श्रमहा रुच्यादिप्रदश्च ॥ ६९—७१ ॥

मत्स्या इति । गुरुष्णस्निग्धमधुरा वर्गाश्यातो यथोत्तरमित्यनेन लक्षणेनातिगुरुष्णस्निग्धमधुरत्वनतिमूत्रशुक्रकृत्त्वमतिवल्यत्वमतिवातघ्नत्वमतिकफपित्तलत्वञ्च मत्स्यानामुक्तम् । परं कफकरा इत्यनेनातः कफकृत्तमा मत्स्या इति बोधयति । संग्रहे स्पष्टार्थमेवमुक्तम् । "कफपित्तकरा मत्स्या परं पवननाशनाः" इति । चिलिचीमसंज्ञो मत्स्यस्त्रिदोषकरः । लावेति । लावादयः स्वस्ववर्गेषु वरतराः । तत्र लावो विष्किरेषु अतिश्रेष्ठः । रोहितो मत्स्येषु । स हि प्रतिस्रोतो विचारी, आकाशप्लवनश्च । तथाचोक्तम् । "प्रतिस्रोतो विचारित्वादाकाशप्लवनेन च । रोहितः प्रवरस्तेषाम्" इति । गोधा च बिलेशयेषु वरा । एणी मृगेष्विति ॥ ७२ ॥

मांसमिति । मांसं सद्यो हतं भजेत् । सद्योहतस्य मांसं भजेदित्यर्थः । तथा शुद्धं स्नायूस्थ्यादिरहितम् । तथा वयसि तिष्ठतीति वयःस्थम् । यद्यपि सर्व्वं मांस

मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम् ॥ ७३ ॥
पुंस्त्रियोः पूर्व्वपश्चार्द्धे गुरुणी गर्भिणी गुरुः ।
लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान् ॥ ७४ ॥
शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ।
तथामपक्वाशययोर्यथापूर्वं विनिर्द्दिशेत् ॥ ७५ ॥
शोणितप्रभृतीनाञ्च धातूनामुत्तरोत्तरम् ।
मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ॥ ७६ ॥
इति मांसवर्गः ।
शाकं पाठासठीसूषा-सुनिषण्णसतीनजम् ।
त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ॥ ७७ ॥
सुनिषण्णोऽग्निकृद्वृष्यस्तेषु राजक्षवः परम् ।

---

वयःस्थमेव तथापीह वयःस्थमित्युक्त्या शोभनं तरुणं वय इति शस्यते। तस्माद् यूनः प्राणिनो मांसं भजेत् न बालवृद्धयोरिति। त्यजेदिति। मृतं स्वयं मृतं न भजेत्। अविज्ञातस्वरूपेण व्याधिना मृतस्य प्राणिनो यन्मांसं तत्त्यजेदित्यर्थः। कृशं दुर्बलं न भजेत्। तथा भृशं मेद्यमतिमेदुरं मांसं त्यजेत्। तथा व्याधिनानिर्ज्ञातस्वरूपेण हतस्य वारिणा विषेण च हतस्य निर्जीवीकृतस्य यन्मांसं तत्त्यजेत्। संग्रहे तु हंसादीनां विशेषा उक्ताः। यथा, "हंसः स्वरकरः पित्तरक्तजिन्मधुरो हिमः। कुलीरः परमं वृष्यो वृंहणः प्रीणनो गुरुः॥ गोधा नियच्छति विषं मूषिकः शुक्रवर्द्धनः॥ गुरुण्यण्डानि बालानां कषायमधुरं पलम्। वृद्धानां स्नायुभूयिष्ठमबल्यं गुरु दोषलम्॥" इति ॥ ७३ ॥

पुमित्यादि। पुंस्त्रियोः पूर्वपश्चार्द्धे यथासंख्यं गुरुणी। पूर्वञ्च पश्चञ्च पूर्वपश्चे तयोरर्द्धे। पुंसः पूर्वार्द्धं गुरु स्त्रियः पश्चार्द्धं गुर्वित्यर्थः। गर्भिणी गुरुः, गर्भिणीमांसं गुरु। चत्वारः पादा येषां ते चतुष्पादस्तेषु चतुष्पात्सु गवादिषु मध्ये स्त्री लघुः। चतुष्पादिति संख्यासु पूर्वस्येत्यन्तलोपः। विहङ्गेषु द्विजेषु तु पुमान् लघुः। शिरःप्रभृतीनां मांसानां यथापूर्वं गुरुत्वं निर्द्दिशेत्। एवं सक्थ्यादिमांसेभ्यः शिरोमांसं गुरुतममित्यवतिष्ठते। आमपक्वाशययोश्च यथापूर्वं गुरुत्वनिर्द्देशः। तेन पक्वाशयादामाशयो गुरुः। रक्तादीनां धातूनां यथोत्तरं गुरुत्वं निर्द्दिशेत्। तेन लोहितान्मांसं गुरु, मांसान्मेद इत्यादि। मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदमित्यत्राप्युत्तरोत्तरमित्यनुवर्त्तते। तेन मांसाद्गुरुतरो वृषणः, तस्मान् मेढ्रो यावत् सर्वं गरिष्ठं गुदं निर्द्दिशेत्॥ इति मांसवर्गः ॥ ७४—७६ ॥

मांसवर्गादनन्तरं शाकवर्गो निगद्यते—शाकमिति। पाठादिजं शाकं त्रिदोषहरं लघु ग्राहि च तद्वद्राजक्षवकवास्तुकम्। सुनिषण्ण इति। तेषु मध्ये सुनिषण्णः स्वस्ति-

ग्रहण्यर्शोविकारघ्नो वर्चोभेदि तु वास्तुकम् ॥ ७८ ॥
हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ।
काकमाची सरा स्वर्या चाङ्गेर्यम्लाग्निदीपनी ।
ग्रहण्यर्शोऽनिलश्लेष्म-हितोष्णा ग्राहिणी लघुः ॥ ७९ ॥
पटोलं सप्तलारिष्टशार्ङ्गेष्टावल्गुजाऽमृताः ।
वेत्राग्रं बृहती वासा कुन्तली तिलपर्णिका ॥ ८० ॥
मण्डूकपर्णीकर्कोट-कारवेल्लकपर्पटाः ।
नाडीकलायं गोजिह्वा वार्ताकं वनतिक्तकम् ॥ ८१ ॥
करीरं कुलकं नन्दी कुचेला शकुलादनी ।
कठिल्लं केम्बुकं शीतं सकोशातककर्कशम् ।
तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ॥ ८२ ॥
हृद्यं पटोलं कृमिनुत् स्वादुपाकं रुचिप्रदम् ।
पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥ ८३ ॥

---

काश्मी जलमध्ये भवति । पवेशाङ्गेरीतुल्योऽग्निकरोऽपि वृष्यः । राजवन: चुद्रबोधनी राजशाकाख्योऽत्यर्थं ग्रहण्यर्शोविकारघ्नः । वास्तुकन्तु पुनः रक्तवास्तुकाख्यं वर्चोभेदि पुरीषस्य भेदनम् । काकमाची त्रिदोषघ्नी कुष्ठनाशनी वृष्या किञ्चिदुष्णा सरा भेदिनी स्वरहिता च स्वर्या । स्वास्थ्यसंत्राहकत्वेन च रसायनमाहश्चाद्रसायनम् । चाङ्गेरी चुद्राम्लिकाम्लाचाग्निदीपनी ग्रहण्यादिषु हिता । उष्णवीर्या ग्राहिणी लघ्वी च ॥ ७७—७९ ॥

पटोलमिति । पटोलादीनि कर्कशान्तान्यष्टाविंशतिः शीतवीर्याणि तिक्तानि पाके कटूनि ग्राहीणि वातलानि कफपित्तघ्नानि च । सप्तला सातला ; अरिष्टो निम्बः ; शार्ङ्गेष्टा अङ्गारवल्लिका ; अवल्गुजा वाकुची ; अमृता गुडूची ; वेत्रो वंशसदृशस्तच्छायम् ; वासा वृषः ; कुन्तली सूक्ष्मतिलजातिः ; तिलपर्णी बदरकः ; मण्डूकपर्णी आदित्यपर्णी ; कर्कोटकारवेल्ले पुनः प्रथिते एव ; पर्पटः शीतप्रियाख्यः ; नाड़ीकलायं सकुलाचकः सुवर्चलाभेदः ; गोधूमिका तु गोजिह्वा ; गोजी क्रोष्टुकमूलिका ; वनतिक्तकं वत्सकः ; कुलकं काकतिन्दुकः ; नन्दी नयप्रचय प्रन्दितः ; कुचेला पाठा ; शकुलादनी कटुका ; कठिल्लं दीर्घपत्रा वर्षाभूः ; कोशातकी घण्टोलिः ; कर्कशः कम्पिल्लकः ॥ ८०—८२ ॥

सामान्यगुणानुक्त्वा केषाञ्चिद्गुणकर्मविशेषमाह,—हृद्यमिति । मुनिनाप्युक्तम् ;—
"पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा । फलं त्रिदोषशमनं मूलञ्चास्य विरेचनम्"

वृषन्तु वमिकासघ्नं रक्तपित्तहरं परम् ।
कारवेल्लं सकटुकं दीपनं कफजित् परम् ॥ ८४ ॥
वार्त्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ।
सक्षारमग्निजननं हृद्यं रुच्यमपित्तलं ॥ ८५ ॥
करीरमाध्मानकरं कषायस्वादुतिक्तकम् ।
कोशातकावल्गुजकौ भेदनावग्निदीपनौ ॥ ८६ ॥

---

इति । बृहतीद्वयं स्थूलबृहती महोटिकाख्या ; क्षुद्रबृहती कण्टकारिकाख्या ; तदेतदुभयं पित्तकरमग्निदीपनं शक्रदादीनां भेदनं वातघ्नञ्च । वृषमिति । वृषं छर्दिकासौ हन्ति, रक्तपित्तञ्चात्यर्थं जयति । कारवेल्लमीषद्रसे कटुकमग्निदीप्तिकरमतिश्लेष्मघ्नम् । वार्त्ताकं रसे कटु तिक्तमुष्णवीर्य्यं मधुरं वातश्लेष्मघ्नम् ; सह क्षारेण वर्त्तते सक्षारं किञ्चित् क्षारत्वयुक्तमग्निजननम् ; हृद्यं हृदयाय हितम् ; रुच्यं रुचिकृत् ; अपित्तलम्, नञ ईषदर्थे, किञ्चित् पित्तकरमित्यर्थः । तत्र सह क्षारेण वर्त्तते सक्षारमित्येवं कथमुक्तम् ? यावता क्षारं द्रव्यम्, तथा च प्रागुक्तं चरणादितप्रादि; न द्रव्यं द्रव्येण सह वर्त्तते, तथा च गुणानामेवायं धर्मो यद्द्रव्याश्रितत्वं नाम ; तस्मात् क्षारमित्प्रयुक्तमिव मन्यामहे । अत्राचक्ष्महे,—क्षारशब्देनात्र क्षारधर्म उपलक्ष्यते विस्रावणाद्यात्मकस्तद्वत् सक्षारमिति द्रव्यमुपदिश्यते ; तस्मात् सक्षारमित्युपपन्नम् ॥ ८३—८५ ॥

करीरमिति । करीरं गूढपत्राख्यमाध्मानकरं रसे कषायमधुरतिक्तम् । कोशेत्यादि । अनयोश्च पित्तकारित्वं वातकफघ्नत्वञ्च वेद्यम् । तथाहि, प्रायेण यद्रुच्चं गुडूच्यादिद्रव्यं तत् पित्तलं वातपित्तकफहरञ्च दृष्टम् । तथाचाह मुनिः ;—"कफवातनुदवल्गुजैः" इति । तदेवमन्यत्राप्यौचित्येन दोषकरत्वादिकल्प्यम् ; संग्रहे चान्येऽप्युक्ताः । यथा,—"सतकटं कन्दकञ्च चतुर्ग्राहि हिमं गुरु । कुमारी जीवलोणिका नलिनी गुचुपर्णिका ॥ स्वादुरुच्चं सलवणं वातश्लेष्मकरं गुरु । श्यामा शाल्मलिकाश्मर्यफञ्जी कर्णिकयूथिका ॥ त्वचादनी चीरत्वचविम्बी सनिकञ्चिका । रौप्रः शाणः कर्बुदारः सशैलुर्वृषमूषिका । भल्लातकः कोविदारः कमलोत्पलकिंशुकम् । पटोलादिगुणं स्वादु कषायं पित्तजित् परम् ॥ वातपित्तहरा रूडी पर्विणी दीर्घपुष्पिका । लघूष्णतरा तिक्ता सारुबूका च लाङ्गली ॥ वातला कटुतिक्ताम्लभेदिनी तिलवेतसौ । विश्वरास्राबलाशाकं वातघ्नमतिसारनुत् ॥ वातं वत्सादनी हन्यात् कफं कण्डीरचित्रकौ" इति । मुनिना चान्येऽप्युक्ताः ;—"न्यग्रोधोडुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः । कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम्" इति । तथा सुश्रुते गदितम् ;—"करीरकुसुमं ज्ञेयं कफपित्तहरं लघु । आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते ॥ चातुर्थकज्वरहरं नस्ययोगेन शीलितम् । राजवृक्षस्य निम्बस्य शिग्रोः सिंहमुखस्य च ॥ कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च । श्रेयसी बिल्वपर्णी च बिल्वपत्रञ्च वातनुत्" इति ॥ ८६ ॥

तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ।
मदपित्तविषास्रघ्नो मुञ्जातं वातपित्तजित् ।
स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत् परम् ॥ ८७ ॥
गुर्वी सरा तु पालक्या मदघ्नी चाप्युपोदका ।
पालक्यावत् स्मृतश्चञ्चुः स तु संग्रहणात्मकः ॥ ८८ ॥
विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ।
जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनी ॥ ८९ ॥
चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ॥ ९० ॥
कुष्माण्डतुम्बकालिङ्ग-कर्कार्वेर्वारुतिण्डिशम् ।
तथा त्रपुसचीनाकचिर्भटं कफवातकृत् ।
भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥ ९१ ॥
वल्लीफलानां प्रवरं कुष्माण्डं वातपित्तजित् ।
बस्तिशुद्धिकरं वृष्यं त्रपुसन्त्वतिमूत्रलम् ॥ ९२ ॥

---

तण्डूलीय इति । तण्डूलीयो तन्डुलीरकाख्यः शीतवीर्य्यो रूक्षः स्वादुपाकरसो लघुर्मदादिनाशनश्च । मुञ्जातं वातपित्तघ्नं स्निग्धादिगुणयुतमतिशुक्रकृच्च । गुर्वीति । पालक्या गुर्वी तथा सरा मदादिभेदिनी । तुशब्दः पिच्छिलश्लेष्महिमादीनां संग्रहोक्तानां समुच्चयार्थः । तथाचोक्तं संग्रहे ;—"पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा" इति । मदघ्नीति । उपोदका मदनाशिनी अपिशब्दात् तद्वद्गुर्वी सरा च । उपोदका मयाला खण्डपालक्येति प्रथिता । चञ्चुः पालक्यासदृशी गुणैः स्मृतः । सपुनश्चञ्चुः संग्रहणात्मको न भेदी ॥ ८७-८८ ॥

विदारीति । विदारी शृगालिका वातपित्तहरा मूत्रलादिगुणयुक्ता रसायनञ्च । कन्दस्यैवायं गुणनिर्देशो बोध्यः । तथा च मुनिः ;—"जीवनो बृंहणो वृष्यो बल्यः शस्तो रसायनम् । विदारिकन्दः कण्ठ्यश्च मूत्रलः स्वादुशीतलः" इति । चक्षुष्येति । जीवन्ती चक्षुष्यादिगुणयुक्ता । या मधुरा सा शीतवीर्या । एभिर्गुणैः किञ्चिदूना । तथाचोक्तं संग्रहे ;—"चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा । शाकानां प्रवरा न्यूना द्वितीया किञ्चिदेव तु" इति । मुनिना तु जीवन्त्याः शतावर्य्या वातपित्तहरत्वमगादि । तत्पाठो हि,—"मण्डीशतावरीशाकं बलाजीवन्तिजञ्च यत् । पर्वाख्या पर्वपुष्पा च वातपित्तहरं मतम्" इति ॥ ८९।९० ॥

कुष्माण्डेति । कुष्माण्डादिकं कफवातकृद्भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु च । अत्र विशेषमाह,—वल्लीति । वल्लीफलानां मध्ये कुष्माण्डं पुष्पफलसंज्ञं वरं तथा वातपित्तहरं बस्तिशुद्धिकरं वृष्यञ्च । त्रपुसं पुनरतिशयेन मूत्रलम् । तुम्बमिति ।

तुम्बं रूक्षतरं ग्राहि कालिङ्गैर्वारुचिर्भटम् ।
बालं पित्तहरं शीतं विद्यात् पक्वमतोऽन्यथा ॥ ९३ ॥
शीर्णवृन्तन्तु सक्षारं पित्तलं कफवातजित् ।
रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु ॥ ९४ ॥
मृणालबिसशालूक-कुमुदोत्पलकन्दकम् ।
नन्दीमाषककेलूट-शृङ्गाटककशेरुकम् ।
क्रौञ्चादनं गालोड्यञ्च रूक्षं ग्राहि हिमं गुरु ॥ ९५ ॥
कलम्बनालिकामार्ष-कुटिञ्जरकुतुम्बकम् ।
चिल्लीलट्वाकलोणीका-कुरूटकगवेधुकम् ॥ ९६ ॥

---

तुम्बमलाबुसंज्ञं रूक्षतरम् । एर्वारुकादपि रूक्षं तुम्बं त्वतिशयेनेत्यर्थः । तथा ग्राहि । पूर्वाणि तु सामान्यगुणोक्त्या सैन्धवेव । चरकामुनिनवानुसारिणस्त्वेवमाचक्षते ;—"तुम्बं रूक्षतरं कालिङ्गैर्वारुचिर्भटं ग्राहि" इति ; कालिङ्गं कर्चरम् ; एर्वारुः कर्कटिका ; चिर्भटं डङ्गरं मालवेषु प्रसिद्धमतिप्रसिद्धं जालन्धरादिषु । एतच्च बालमसम्पूर्णरसादि पित्तहरं शीतवीर्यञ्च । अतो बालादविपरीतं पक्वं पित्तकरमुष्णवीर्यञ्चेत्यर्थः । सुश्रुतेनोक्तम् ;—"नीलं यत्त्रपुसं बालं तच्च पित्तहरं मतम् । तत्पाण्डु कफकृज्जीर्णमम्लपित्तकरं स्मृतम्" इति ॥ ९१—९३ ॥

शीर्णवृन्तमिति । शीर्णवृन्तं कर्चरमीषत्क्षारं पित्तलं कफवातघ्नञ्च । रुचिकरमग्निदीप्तिकृत् । हृद्यमष्ठीलानाहञ्च हन्ति लघु च । "घनाष्ठीलोपमो ग्रन्थिरष्ठीलोर्द्ध्वं समुन्नतः" इत्यष्ठीलालक्षणम् । "साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् । ऊर्द्ध्वो वातरोधेन तमानाहं प्रचक्षते" इति ॥ ९४ ॥

मृणालेत्यादि । मृणालादि रूक्षं संग्राहकं शीतवीर्यं गुरु च ; मृणालं द्विविधं सूक्ष्मं स्थूलञ्च ; तत्र सूक्ष्मं मृणालमितरद्बिसम् ; शालूकं पद्ममूलम् ; कुमुदकान्दम् : कुमुदं शशिप्रियम् ; उत्पलकन्दकं रक्तोत्पलकन्दकम् ; नन्दी तुण्डेरिका ; माषकी वाम्बलः ; केलूटं हिमकसंज्ञमुडुम्बरभेदः ; शृङ्गाटकं त्रिकोणाकृति जलोद्भवं कन्दम् ; कसेरुकं मागधम् ; क्रौञ्चादनं भेदम् (१) । गालोड्यं पद्मबीजम् ॥ ९५ ॥

कलम्बेति । कलम्बादिकं मधुरं किञ्चिल्लवणं वातश्लेष्मकरं गुरु च । शीतवीर्यं सृष्टमूत्रपुरीषञ्च मूत्रं पुरीषञ्च विसृजति बहिः क्षिपति । क्लिष्टमुदरप्रदेशे पिण्डीभूय जीर्य्यति परिणमति । प्रायोग्रहणं किञ्चिदेषां मध्ये नैवं स्वरूपमिति ज्ञापनार्थम् । कलम्बं कदम्बः ; नालिका दीर्घनालरूपा कलम्ब संज्ञा ? मार्षो मन्थारिका ; कुटिञ्जरं ताम्रमूलकम् ; कुतुम्बको द्रोणपुष्पी ; चिल्ली पृथुपत्रं, यवशाकं कुनामसंज्ञम् ;

---

(१) कण्ठ्यदूषणम् । घेञ्चुकेति केचित् ।

जीवन्तीझुंझ्नेडगज-यवशाकसुवर्चलम् *।
आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम् ॥ ९७ ॥
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु।
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति।
स्विन्नं निष्पीड़ितरसं स्नेहाढ्यं नातिदोषलम् ॥ ९८ ॥
लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता।
तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ॥ ९९ ॥
वर्षाभ्वी कालशाकञ्च सक्षारं कटुतिक्तकम्।
दीपनं भेदनं हन्ति गरशोफकफानिलान् ॥ १०० ॥
दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः।
शतावर्य्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः ॥ १०१ ॥
रूक्षो वंशकरीरस्तु विदाही वातपित्तलः।

---

लट्वाकी गुग्गुलुकः ; लोणीका लोणारः ; कुरुण्टकः स्थितिवारकः ; गवेधुकं तृण-धान्यविशेषः, जीवन्ती वृहज्ञान्धारम् ; झुंझुर्झुंझुरकः (१)। एडगजः प्रपुन्नाटः ; यवशाकं हृद्यपत्रा चिल्ली ; सुवर्चला रविभक्ता ; आलुकानि च सर्वाणि, नानाविधानि रक्तालुकमधुकालुकादिभेदेन। सूप्यानि मुद्गराजमाषादिपत्राणि। लक्ष्मणं मधुयष्टिका। एतच्च सर्वं स्विन्नं निष्पीड़ितरसमतिबहुस्नेहञ्च नात्यपथ्यम्। सुश्रुते चोक्तम् ;—संस्कृतं वेसवारेण सस्नेहं शाकमिष्यते। राज्ञिकासक्तुभक्तादिसंस्कारश्चानुवर्त्तते" इति ॥ ९६—९८ ॥

लघुपत्रेति। लघुपत्रा या चिल्ली यवशाकविशेषः सा तु वास्तुकसमा गुणैर्मता। तर्कारी अरणीका ; वरणी सालः ; समाहारेण तयोर्द्वन्द्वः। एतत् स्वादु किञ्चित्तिक्तं कफवातघ्नञ्च। वर्षाभ्वी पुनर्नवे ; तथा कालशाकं किञ्चित् क्षारं रसे च कटुतिक्तं वह्निदीपनं भेदनं गरादींश्च हरति। कठिल्लो वर्षाभूः स च प्रागुक्तगुणः। तथा च निघण्टुः ;—"पुनर्नवा विशाखश्च कठिल्लः शासिनाड़िका। वृश्चिकः क्षुद्रवर्षाभूर्दीर्घपत्रः कठिल्लकः। पुनर्नवा परः क्षुद्रः सच्छो मण्डलपत्रकः। श्वेतमूलो वर्षकेतुर्मंदा वर्षाभुरुच्यते" इति ॥ ९९।१०० ॥

दीपना इति। चिरिबिल्वः पूतिकरञ्जस्तस्याङ्कुरा वह्निदीपनाः कफवातघ्नाः सराश्च। शतावर्य्या अङ्कुराः प्ररोहास्तिक्तरसा वृष्याः शुक्रकृतस्त्रिदोषघ्नाश्च। रूक्ष

---

* "झंझ्नेडगजयवशाकसुवर्चलाः" इति पाठान्तरम्।
(१) "झञ्झ झंझुरकः" इति पाठान्तरम्।

पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ॥ १०२ ॥
क्रमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः ।
रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ॥ १०३ ॥
गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ॥ १०४ ॥
यद्बालमव्यक्तरसं किञ्चित्क्षारं सतिक्तकम् ।
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ॥ १०५ ॥
गुल्मकासक्षयश्वास-व्रणनेत्रगलामयान् ।
स्वराग्निसादोदावर्त-पीनसांश्च महत्पुनः ॥ १०६ ॥
रसे पाके च कटुकमुष्णवीर्यन्त्रिदोषकृत् ।

---

इति । वंशकरीरो वंशाङ्कुरो रूक्षो विदाही वातपित्तकृत् । पत्तूरो दीपनस्तिक्तरसः प्लीहादिजित् । पत्तूरो सल्याचकः । क्रमीति । कासमर्दः सरः क्रम्यादींश्च नाशयति । उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम् । रूक्षोष्णमिति । कुसुम्भशाकं रूक्षमुष्णवीर्य्यमम्लं गुरु पित्तकृत् सरञ्च । गुरूष्णमिति । सार्षपं शाकं गुरूष्णवीर्य्यम् । तथा शकृन्मूत्रञ्च बध्नाति । त्रिदोषकृच्च । संग्रहे तु सक्षारत्वमस्योक्तम् । तत्पाठो हि ;—"सक्षारमधुरं स्निग्धमुष्णञ्च गुरु सार्षपम्" इति । सुश्रुतेन चोक्तम् ;—"कफघ्नं सार्षपं शाकमासुरं शाकमेव च" इति ॥ १०१—१०४ ॥

यदिति । यन्मूलकं बालमव्यक्तरसमस्फुटस्वादं तथा किञ्चित्क्षारमीषत्क्षारगुणयुक्तं कार्य्यतोऽनुमीयमानं तथा सतिक्तमीषत्तिक्तकं रसनेन्द्रियस्य किञ्चिदुद्वेजकं तन्मूलकं दोषाणां हरं दोषहरं नान्यावस्थम् । बालं मूलकं दोषहरमित्यनेनास्य विशिष्टा बालावस्था दोषहरत्वेन नियम्यते । न सर्वं बालावस्थं दोषहरमपि त्वीदृग्रूपमित्यर्थः । अन्ये तु दोषयोर्हरं दोषहरमित्यत्र समासं कृत्वा वातश्लेष्मघ्नत्वमेवास्य प्रतिजानते । यतः किञ्चिदुष्णवीर्य्यत्वात् पित्तकरत्वमस्यास्त्येव । किञ्चित्तिक्तरसोपेतत्वेन पित्तकर्तृत्वमस्य व्याहन्तुं न युक्तम् । वक्ष्यति हि ;—"रसं विपाकस्तौ वीर्य्यं प्रभावस्तान् व्यपोहति" इति एवं चैतन्मूलकं वातश्लेष्मघ्नमेव युक्तं न तु पित्तघ्नञ्चेति तेषामभिप्रायः । एतच्च मूलकं गुल्मादीन् नियच्छति । पीनसांश्चेति चशब्दः समुच्चये । अन्यानप्येवं प्रायशो रोगान् नियच्छतीति । सुश्रुतस्तु ;—"सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका" इति । यद्वेदान्तरं ब्रूते तदप्यत्रैव बालमूलकलक्षणेऽन्तर्भूतमिति तन्त्रकृतेह पृथक् नोक्तम् । महदित्यादि । अव्यक्तरसादिलक्षणावस्थां विहाय यावद्व्यक्तरसाद्यवस्थं तत्सम्पद्यते ततोऽनन्तरं क्रमेण रसविपाकयोः कटुकमुष्णवीर्य्यं तन्मूलकं महद्वृद्धं त्रिदोषकृद् गुर्वभिष्यन्दि च भवति । वृद्धस्य च मूलकस्यानेका अवस्थाः सम्भवन्ति । तत्र चाद्याद्यावस्थायां किञ्चित्त्रिदोषकृत्त्वमन्त्यावस्थायामतिशयेन त्रिदोषकृत्त्वं वेद्यम् । संग्रहे

गुर्वभिष्यन्दि च स्निग्ध-स्विन्नं तदपि वातजित् ।
वातश्लेष्महरं शुष्कं सर्वमामन्तु दोषलम् ॥ १०७ ॥
कटूष्णो वातकफहा पिण्डालुः पित्तवर्द्धनः ।
कुठेरशिग्रुसुरस-सुमुखासुरिभूस्तृणम् ॥ १०८ ॥
फणिज्जार्जकजम्बीर-प्रभृति ग्राहि शालनम् ।
विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् ।
दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु ॥ १०९ ॥
हिक्काकासश्रमश्वास-पार्श्वरुक्पूतिगन्धहा * ।
सुरसः सुमुखो नातिविदाही गरशोफहा ।
आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत् ॥ ११० ॥

---

तस्य स्वादुविपाकित्वमुक्तम् । तत्पाटे महत्पुनः "रूक्षोष्णं कटुकं स्वादु विपाके सर्वदोषकृत्" इति तदामविषयम् । स्निग्धेत्यादि । अपिशब्द एवार्थे । तदेव महत्-मूलकं स्निग्धस्विन्नं वातजित् । स्निग्धञ्च तत् स्विन्नञ्च स्निग्धस्विन्नम् । नत्वस्निग्धस्विन्नमात्रमित्यर्थः । वातेत्यादि । सर्वं बालं वृद्धञ्च मूलकं शुष्कं सद्वातश्लेष्महरम् । आमं तु पुनर्मूलकं हरितकत्वेन यद्भक्ष्यते तद्दोषलम् । सर्वमित्यनायवकृतेन सम्बन्धेन सम्बध्यते । तेनादोषलस्य बालस्याप्यामस्य दोषलत्वं न तु वृद्धस्यैवेत्यर्थः । मूलकं नीलकण्ठापरसंज्ञम् ॥ १०५—१०७ ॥

कटूष्ण इति । पिण्डालुः कटुको रसे वीर्ये चोष्णो वातकफघ्नः पित्तकरश्च । कुठेरेत्यादि । कुठेरादि शालनं ग्राहि विदाहि कटुकं रसपाकयोरूक्षमुष्णवीर्य्यं हृद्यमग्निदीपनञ्च । तथा दृगादिहृत् तीक्ष्णम् । तथा दोषान् वातादीनुत्क्लेशयति कोपयति, स्थानाच्चालयति दोषोत्क्लेशकरं लघु च । शालनमवदंशो येन सहान्नं भोक्तुं युज्यते । कुठेरो वैकुण्ठः ; शिग्रुः फलपत्रकः ; सुरसः कृष्णतुलसी ; सुमुखः कटुपत्रकः ; आसुरी राजिका ; भूस्तृणं गुह्यबीजकम् ; फणिज्जको मरिचकश्चोग्रगन्धः प्रकीर्त्तितः ; आर्जकः खरपत्रकः ; जम्बीरः करपत्रकः ; प्रभृतिशब्देन संग्रहीता गृह्यन्ते ;—"धान्यतुम्बरुसालेययवानीशृङ्गवेरकाः । पर्णाशो गृञ्जनोऽजाजी कण्डीरं जलपिप्पली ॥ फणिज्जार्जकजम्बीरं खराश्वा कालमालिका । दीप्यकः चवकद्वीपिवस्तगन्धादिबद्धविट्" इति । तन्त्रान्तरे चोक्तम् ;—"कटुतिक्तरसा शीता कफपित्तविनाशिनी । विपाके मधुरा लघ्वी तस्कराङ्गुलिका स्मृता" इति ॥ १०८।१०९ ॥

हिक्केत्यादि । सुरसो हिक्कादिघ्नः पूतिगन्धं दौर्गन्ध्यं सौरभ्योत्पादनाद्धन्ति । सुमुखः कटुपत्राख्यः किञ्चिद्विदाही गरशोफौ च हन्ति । आर्द्रिका आर्द्रधानिका तिक्तमधुरा मूत्रकरी पित्तञ्च न करोति ॥ ११० ॥

---

* त्रमेत्यत्र विषेति वा पाठान्तरम् ।

लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः ।
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ॥ १११ ॥
किलासकुष्ठगुल्मार्शो-मेहक्रिमिकफानिलान् ।
सहिक्कापीनसश्वास-कासान् हन्त्यस्रपित्तकृत् * ॥ ११२ ॥
पलाण्डुस्तद्गुणन्यूनः श्लेष्मलो नातिपित्तलः ।
कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ॥ ११३ ॥
तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः ।
दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ।
विशेषादर्शसां पथ्यः भूकन्दस्त्वतिदोषलः ॥ ११४ ॥
पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ॥ ११५ ॥
वरा शाकेषु जीवन्ती सर्षपास्त्ववराः परम् ॥११६ ॥

इति शाकवर्गः ।

---

लशुन इति । लशुनोऽतितीक्ष्णोऽत्युष्णवीर्य्यः । कटुपाकरसः सरः भेदी हृद्यादिगुणयुक्तश्च किलासादीन् हन्ति रक्तपित्तञ्च करोति । किलासं श्वित्रम् । कन्दस्यैवायं गुणवीर्य्यनिर्देशो बोध्यः । पत्रनव्ययोर्मधुरत्वादभृशोष्णत्वानुपपत्तिः । तथाचोक्तं संग्रहे;—"पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः । तीक्ष्णोष्णो लशुनः कन्दे" इति ॥ १११।११२ ॥

पलाण्डुरिति । पलाण्डुर्धवलाच्चकास्त्वसद्गुणन्यूनस्तस्य रसोनस्य गुणास्तद्गुणासैर्हीनो लशुनात् किञ्चिद्धीनगुण इत्यर्थः । तथा श्लेष्मलो नातिपित्तञ्च करोति । न तु लशुनवत् कफघ्नोऽतिपित्तकृच्च । कफवातार्शसां स्वेदे भक्षणे च प्रभावात्पथ्यः । तन्त्रान्तरेऽन्योऽप्युक्तो यथा ;—"स्निग्धो रुचिष्यः स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च । स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छिलः चीरपलाण्डुरुक्तः" इति ॥ ११३ ॥

तीक्ष्ण इति । गृञ्जनकस्तीक्ष्णो ग्राही पित्तिनामहितश्च । दीपन इति । सूरणो नाम कन्दविशेषो दीपनो रूक्षः श्लेष्मघ्नो विशदो लघुरर्शसामतिपथ्यश्च । भूकन्दः स्फोटाख्यः प्रावृड्भवः प्रसिद्ध एव । स चात्यर्थं दोषलः ॥ ११४ ॥

पत्र इति । पत्रादीनां यथोत्तरं क्रमाद्गुरुत्वम् । तेन पत्रशाकमपेक्ष्य पुष्पशाकं गुरु ततः फलशाकं ततो नालशाकं ततोऽपि कन्दशाकमिति । एवं हारीतकेष्वपि गुरुत्वं वेद्यम् । बाहुल्येन चैतदुक्तम् । मूलके हि वैपरीत्यं दृश्यते । तथा हि मूलकस्य हि कन्दे लघुत्वम् । अतएव मुनिरप्याह ; "मूलके तु विपर्य्ययः" इति । शाकानां हारितकानां च येषामिह पर्य्याया नोक्तास्तेषां सद्वैद्येभ्योऽवगन्तव्याः । अथ वरावरत्वं निर्द्धारयति,—वरेत्यादि । शाकेषु मध्ये जीवन्ती वरा सर्षपाः पुनरवराः । इति शाकवर्गः ॥११५।११६॥

---

* "हन्ति रसायनम्" इति पाठान्तरम् दृश्यते ।

द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ।
स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ॥ ११७ ॥
निहन्त्यनिलपित्तास्र-तिक्तास्यत्वमदात्ययान् ।
तृष्णाकासश्रमश्वास-स्वरभेदक्षतक्षयान् ॥ ११८ ॥
उद्रिक्तपित्तान् जयति त्रीन् दोषान् स्वादु दाडिमम् ।
पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ।
सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ॥ ११९ ॥
मोचखर्जूरपनस-नारिकेलपरूषकम् ।
आम्राततालकाश्मर्य-राजादनमधूकजम् ॥ १२० ॥
सौवीरबदराङ्कोल्ल-फल्गुश्लेष्मातकोद्भवम् ।
वातामाभिषुकाक्षोड-मुकूलकनिकोचकम् ॥ १२१ ॥
उरुमाणं प्रियालञ्च बृंहणं गुरु शीतलम् ।
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ।
स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ॥ १२२ ॥

---

फलानामाहारकाले शाकेभ्योऽल्पोपयोगित्वाच्छाकवर्गादनन्तरं फलवर्ग उच्यते। स्वरनादेऽप्युक्तम् ;—"भुक्तावसाने फलं भुज्यते" इति फलवर्गोऽभिधीयत इत्याह,—द्राक्षेत्यादि। फलेषूत्तमा फलोत्तमा गोस्तनीपर्य्याया द्राक्षा सा वृष्यादिगुणयुक्ता। सकषाया ईषत्कषाया। अनिलादीन् क्षयान्तान् हन्ति। उदावर्त्तहरत्वं चरकमुनिनाऽस्या उक्तं, तच्च स्निग्धत्ववृष्यत्वसृष्टविण्मूत्रत्वैर्नेहोक्तप्रायम्। अभ्यासाच्च द्राक्षाणां गुणहीनत्वं देशाद्यनुरोधात्कल्प्यम् ॥ ११७। ११८ ॥

उद्रिक्तेति। उद्रिक्तमतिरिक्तं पित्तं येषां तांस्तथाविधान् त्रीन् दोषान् मधुरं दाड़िमं जयति। मधुरस्य पूर्वकथनं प्राधान्यख्यापनार्थम्। पित्तेत्यादि। अम्लं दाड़िमं पित्ताविरोधि न पित्तं कुरुते न च पित्त शमयति। अतएवैतद्वातकफापहमुक्तम्। सर्वं मधुरमम्लञ्च यद्दाड़िमं तत् हृद्यादिगुणसंयुक्तम्। मुनिनाप्युक्तम् ;—"रूक्षाम्लं दाड़िमं यत्तु तत्पित्तानिलकोपनम्" इति ॥ ११९ ॥

मोचेत्यादि। मोचादिप्रियालान्तं बृंहणत्वादियुक्तम्। मोचं कदलीफलम्; नारिकेलं रालफलाख्यम्; परूषकी मृदुफल; आम्रातः कपिचूड़ः; तालस्तालफलम्; काश्मर्यं काश्मरीफलम्; राजादनं क्षीरवृक्षम्; सौवीरबदरं कर्णिकाबदरम्; अङ्कोल्ल इति विल्लः; फल्गुः काकोदुम्बरिका; श्लेष्मातकं शेलुः; अभिषुकं खारोटम्। आक्षोड़ं स्नेहफलाख्यम्। मुकूलकं दन्तीफलम्। निकोचनं सरलफलम्। उरुमाणं स्निग्धफलम् प्रियालं सन्नतद्रुः ॥ १२०—१२२ ॥

फलन्तु पित्तलं तालं सरं काश्मर्य्यजं हिमम्।
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ॥ १२३ ॥
वाताम्राद्युष्णवीर्यन्तु कफपित्तकरं सरम्।
परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ॥ १२४ ॥
प्रियालमज्जा मधुरो वृष्य: पित्तानिलापह:।
कोलमज्जा गुणैस्तद्वत्तृट्छर्दिकासजिच्च स: ॥ १२५ ॥
पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम्।
दीपनं कफवातघ्नं बालं ग्राह्युभयं हि तत् ॥ १२६ ॥
कपित्थमामं कण्ठघ्नं दोषलं दोषघाति तु।
पक्वं हिक्कावमथुजित्सर्वं ग्राहि विषापहम् ॥ १२७ ॥
जाम्बवं गुरु विष्टम्भि शीतलं भृशवातलम्।
संग्राहि मूत्रशकृतोरकण्ठ्यं कफपित्तनुत् ॥ १२८ ॥

---

फलमिति। तालस्येदं तालं फलं पित्तकारि। काश्मर्य्यजं फलं सरं शीतवीर्य्यादिगुणयुक्तम्। मधूकबदरयोरपि विशेषान्तरमुक्तं संग्रहे;—"मधूकमहृद्यन्तु बदरं सरणात्मकम्" इति। वाताम्रादीनां ग्रहणं गुणविशेषप्रदर्शनार्थम्। निर्द्धारिते तु विशेषे वाताम्रादिकमुष्णवीर्य्यं कफपित्तकरं सरमतिशयेन वातघ्नं स्निग्धञ्च। आदिशब्देनाभिषुकादीनां ग्रहणम्। प्रियालजातं प्रियालजं फलमनुष्णवीर्य्यम्। तुर्विशेषे। विशेषस्तु शीतवीर्य्यत्वमेव। शेषं बृंहणादि सर्वं समानम्। प्रियालमज्जा अस्थ्यभ्यन्तरं मधुरादिगुणयुक्तम्। बदरमज्जा गुणैस्तद्वत् प्रियालमज्जावत्तृड़ादिजिच्च। तन्त्रान्तरे चोक्तम्;—"बैभीतको मदकर: कोलानां पित्तनाशन:"। तथा तालखर्जूरादीनां मस्तकमज्जान: स्वादुपाका वृष्या: शीतवीर्य्याश्चेति सुश्रुतोऽपठत् ॥ १२३—१२५ ॥

पक्वमिति। बिल्वं पक्वं सुदुर्जरं पूतिमारुतञ्च दुर्गन्ध्यपानवातकृद्भवति। बालमसम्पूर्णमनुपचितं बिल्वं दीपनं कफवातघ्नम्। उभयमामं पक्वञ्च ग्राहि मूत्रपुरीषादे: संग्रहणम्। कपित्थेति। आमं कपित्थं कण्ठं हन्ति दोषलं त्रिदोषकृत्। पक्वं कपित्थं दोषघ्नं हिक्काच्छर्दिहृच्च। सर्वमामं पक्वञ्च कपित्थं ग्राहि विषापहञ्च। आमकपित्थस्य काषायत्वं कण्ठघ्नत्वेनैवोदितम्। अम्लत्वञ्चाम्लवर्गमध्ये पाठादवगन्तव्यम्। पक्वस्य च मधुरत्वं सुप्रसिद्धमितीह एतन्नोक्तम्। तथा आमकपित्थगुणकथनेन तथाविधानि कषायाम्लस्वभावानि विविधानि कपित्थानि सदैवामकपित्थगुणानि वेद्यानि। पक्वकपित्थगुणकथनेन च तथाविधानि माधुर्य्यानुविद्धानि सदा पक्वगुणानि वेद्यानि ॥ १२६ । १२७ ॥

जाम्बवमिति। जाम्बवं गुर्वादिगुणयुक्तं मूत्रशकृतोश्च संग्रहणं कण्ठाय च हितं न, कफपित्तजिच्च। जाम्बवमिति फलार्थे जाम्ब्वा इत्यण्। आम्रस्य चाम्रवणस्याप्युप-

वातपित्तास्रकृद् बालं बद्धास्थि कफपित्तकृत्।
गुर्व्वाम्रं वातजित् पक्वं स्वाद्वम्लं कफशुक्रकृत् ॥ १२९ ॥
वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु।
शम्या गुरूष्णं केशघ्नं रूक्षं पीलु तु पित्तलम् ॥ १३० ॥
कफवातहरं भेदि प्लीहार्शःक्रिमिगुल्मनुत्।
सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ॥ १३१ ॥
त्वक् तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित्।
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ॥ १३२ ॥
लघु तत्केसरं कास-श्वासहिक्कामदात्ययान्।
आस्यशोषानिलश्लेष्म-विबन्धच्छर्द्यरोचकान्।
गुल्मोदरार्शःशूलानि मन्दाग्नित्वञ्च नाशयेत् ॥ १३३ ॥
भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम्।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ १३४ ॥

---

योगदर्शनात्तत्रैव गुणानाह,—वातेत्यादि। आम्रमिति वक्ष्यमाणेन सम्बन्धः। आमं चूताख्यं बालं सद् वातपित्तास्रकृत्। बद्धास्थि सञ्जातास्थि कफपित्तकृत्। पक्वमाम्रं गुरु वातजित्। मधुराम्लं कफशुक्रकृत्। संग्रहे सहकारस्य गुणा उक्ताः। यथा,—"सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः" इति। वृक्षाम्लमिति। वृक्षाम्लं ग्राह्यादिगुणैर्युक्तम्। वातश्लेष्महल्लघु च। कोशाम्रञ्च किञ्चिदेतस्मान् न्यूनगुणं ज्ञेयम्। तथा च संग्रहे "वृक्षाम्लं ग्राहि रूक्षोष्णं लघु रोचनदीपनम्। वातश्लेष्महरं किञ्चिदूनं कोशाम्रजं ततः" इति। शम्या इति। फलापेक्षया षष्ठी। शम्याः फलं गुरु। उष्णवीर्यं केशघ्नं रूक्षञ्च। पीलुफलञ्च पित्तलं यावद्गुल्मनुत्। सतिक्तमीषत्तिक्तं मधुरञ्च यत्पीलु तन्नात्युष्णं त्रिदोषजिच्च ॥ १२९—१३१ ॥

मातुलुङ्गस्य त्वङ्मांसकेसराणां पृथगुपयोगदर्शनात् पृथगेव गुणानाह,—त्वक्तिक्तेति। बीजपूरकस्य त्वक्तिक्ता कटुका रसे स्निग्धा वातघ्नी च। खरनादस्त्वाह,—त्वग्मातुलुङ्गात् कटुका गुर्वी वातप्रकोपनी" इति। चरकेऽप्युक्तम्—"गुर्वी त्वगस्य कटुका मारुतस्य च नाशनी" इति। एतन्मतानुसारिणस्त्वेवं पाठं पठन्ति। त्वक् तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातकृदित्यकारप्रश्लेषात्। मांसं केसरादर्वाग् बृंहणं मधुरं वातपित्तहृद् गुरु च। तस्य मातुलुङ्गस्य केसरं लघु। तथा श्वासादीन् मन्दाग्नित्वान्तान्नाशयेत् ॥ १३२। १३३ ॥

भल्लातकस्येति। त्वक् च मांसञ्च त्वङ्मांसं भल्लातकसम्बन्धि बृंहणं मधुरं शीतलञ्च। तस्य भल्लातकस्यास्थि तदस्थि अग्निसमं तीक्ष्णत्वादग्निवत् स्फोटककर्तृत्वात्।

स्वाद्वम्लं शीतमुष्णञ्च द्विधा पारेवतं गुरु ।
रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ॥ १२५ ॥
पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम् ॥ १२६ ॥
द्राक्षापरूषकञ्चार्द्रमम्लं पित्तकफप्रदम् ।
गुरूष्णवीर्यं वातघ्नं सरञ्च करमर्दकम् ॥ १२७ ॥
तथाम्लं * कोलकर्कन्धू-लकुचाम्रातमारुकम् ।
ऐरावतं दन्तशठं सतूदं मृगलिण्डिकम् ।
नातिपित्तकरं पक्वं शुष्कञ्च करमर्दकम् ॥ १२८ ॥
दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम् † ।
तृष्णाश्रमक्लमच्छेदि लघिष्ठं कफवातयोः ॥ १२९ ॥
फलानामवरं तत्र लकुचं सर्वदोषकृत् ॥ १४० ॥

---

अथवाऽग्निदिन्कस्तस्य गुणदोषकर्त्तृ तया तुल्यं भल्लातकास्थीति । तथा मेधायै हितमिति । कफवातघ्नम् । स्वाद्वम्लमिति । पारेवतं रैवतकाख्यं द्विधा । कथं द्विःप्रकारम् ? इत्याह स्वादु अम्लञ्च । तत्तु यथासंख्येन शीतमुष्णञ्च ; यथा द्वयमपि गुरु रुच्यमत्यग्निशमनञ्च । अथवा यथासम्भवं सम्बन्धो मधुरं गुर्वत्यग्निनाशनञ्च । अम्लं रुच्यमिति । मधुरमारुकं रुच्यं हृद्यं भवति । अपक्वस्यैवैते गुणा वेद्याः । यस्मादाह,—पक्वमिति । पक्वञ्च द्रागेव परिणामं याति । किञ्चिदुष्णवीर्यं किञ्चिद्गुरु किञ्चिद्दोषलमपथ्यम् । निघण्टावुक्तम्,—"आरुकं वीरसेनञ्च वीरावीरारुकं तथा । विद्याच्चातिविशेषेण तच्च विषमारुकम्" ॥ १२४—१२६ ॥

द्राक्षेति । द्राक्षा परूषकं करमर्दकञ्चार्द्रमाद्र्वमपक्वमम्लं सपित्तश्लेष्मकरं गुरूष्णवीर्यं वातघ्नं सरञ्चेति । करमर्दकं सुषेणसंज्ञम् । तथाम्लमिति । कोलादिकं मृगलिण्डिकान्तं तथा तद्वत् अम्लद्राक्षादिवद्गुणैर्ज्ञेयमित्यर्थः । कर्कन्धूः खबदरी । लकुचं लिकुचम् । आरुकस्याम्लस्यैवैते गुणा ज्ञेयाः । मधुरस्य हि विशेषेण पूर्वमुक्ता एव गुणाः । तथा ऐरावतादि नात्युष्णं पित्तङ्करोति । ऐरावतं नागरङ्गम् । दन्तशठं जम्बीरम् । तथा सतूदं मृगलिण्डिकञ्च । तथा करमर्दकं पक्वं शुष्कञ्च नात्यर्थपित्तकरम् । दीपनमिति । अम्लीकाफलं कोलफलञ्च शुष्कं सद्दीपनं भेदनं तृष्णादिनाशनं लघु कफवातयोश्च पथ्यम् । फलानामिति । फलानां सर्वेषां मध्ये लकुचमप्रधानं त्रिदोषकरम् । चरकमुनिस्तस्य पित्तश्लेष्मकृत्त्वमेवानुजज्ञे । तत्पाठे,—"हिक्काश्वासा हितः । वातघ्नं कफपित्तघ्नं विद्यात्कपंटकीफलम् । मधुराण्यतिपाकानि वातपित्त-

---

* तथाम्लमित्यत्र "तच्च" इति पाठान्तरम् ।
† "स्वाद्वम्लं लघु कोलन्तु शुष्कं जीर्णञ्च दीपनम्" इत्यधिकः पाठः ।

हिमानिलोष्णदुर्वात-व्याललालादिदूषितम् ।
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ॥ १४१ ॥
अन्यधान्ययुतं हीनवीर्यं जीर्णतयापि च ।
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ॥ १४२ ॥
असञ्जातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ।
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ॥ १४३ ॥
इति फलवर्गः ।
विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ।
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ॥ १४४ ॥

---

हराणि च ॥ अश्वत्थोडुम्बरप्लक्षन्यग्रोधानां फलानि तु । प्राचीनामलके चैव दोषघ्नं सरूहाणि च । इङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित्"। सुश्रुतेनोक्तम्,—"सुगन्धि मधुरं स्निग्धं लवलीफलमुच्यते । द्वचाम्लाल्पान्तरगुणं कोशाम्रफलमुच्यते" इति ॥१३७—१४०॥

सम्प्रति यादृशं फलं शाकञ्च सन्त्याज्यं तदुपदिशन्नाह,—हिमेत्यादि । दूषितशब्दः प्रत्येकं सम्बध्यते । धान्यं केदारस्थं हिमेन दूषितं त्यजेत् । तथा अनिलेन प्रवृद्धेन दूषितं तथा उष्णेनातपादिना दुर्वातेन पुरीवातादिना तथा व्यालानां सर्पादीनां लालया दूषितं त्यजेत् । आदिग्रहणेन शवकोथमूत्रपुरीषादीनां ग्रहणम् । तथा जन्तुभिः कृम्यादिभिर्जुष्टं सेवितम् । जले मग्नमाशिखं बुडितम् । अभूमौ विपरीतभुवि जातमभूमिजम् । या यस्योचिता भूमिस्ततोऽन्या विपरीता । अनार्तवमप्राप्तसमयम् । यस्मिन्नृतौ यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन् जातमित्यर्थः । तल्लक्षणं रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुतम् । यथा रक्तशालिर्यववेन सह विरुध्यते ; तथा मुद्गो माषेण ; एवं शूकधान्यं विजातीयेन शूकधान्येन, तथा शिम्बीधान्यं शिम्बीधान्येन विजातीयेन सह विरुद्धं त्यजेत् । केचिच्छूकधान्येन सह विरुद्धमिति वर्णयन्ति । अन्ये तु जीर्णं नवेन मिश्रितमन्यधान्ययुतमिति ब्रुवते । केदारगतं जीर्णतयाऽतिपुराणत्वेन हीनवीर्यं नष्टशक्ति । एवम्विधं धान्यं त्यजेत् । तथा शाकमपि त्यजेत् । कीदृशम् ? रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः । अथवा रूक्षेण काञ्जिकादिना सिद्धं रूक्षसिद्धम् । अकोमलं जठरेऽसञ्जातरसमपरिपूर्णरसस्वरूपमित्यर्थः । तद्वच्छुष्कं तथैव शुष्कशाकमप्यसञ्जातरसं त्यजेत् । अन्यत्र मूलकात् शुष्कमूलकं भजेदेव । प्रायेण फलमप्येवम्विधं त्यजेत् । प्रायोग्रहणं द्राक्षापरूषकादीनां शुष्काणामपि पथ्यत्वादत्याज्यत्वज्ञापनार्थम् । तथा आममसम्प्राप्तपाकं फलं त्यजेदिति वर्तते । किं सर्वं ? नेत्याह बिल्ववर्जितम् । बिल्वं त्वाममपि पथ्यत्वान्न त्यजेदेवेत्यर्थः । इति फलवर्गः ॥ १४१—१४३ ॥

फलवर्गादनन्तरं विविधौषधवर्गारम्भः । प्रायेणास्याहारोपयोगित्वाच्चत्रापि लवणानां पूर्वमुपन्यासो युक्तः सुतरामुपयोगित्वादित्याह,—निष्यन्दीति । सर्वं लवणं विष्यन्दि-

सैन्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत् ।
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ॥ १४५ ॥
लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ।
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम् ॥ १४६ ॥
ऊर्द्ध्वाधःकफवातानुलोमनं दीपनं बिड़म् ।
विबन्धानाहविष्टम्भ-शूलगौरवनाशनम् ॥ १४७ ॥
विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्द्धनम् ।
सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ॥ १४८ ॥
कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ।
रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ।
लवणानां प्रयोगे तु सैन्धवादीन् प्रयोजयेत् ॥ १४९ ॥

---

गुणयुक्तं विदुर्जानन्ति सद्वैद्या इति शेषः । विष्यन्दयति तच्छीलं विष्यन्दि । स्थानस्थ कफादिसङ्घातस्य विलीनविग्रहतामुत्पादयतीत्यर्थः । सूक्ष्मं सूक्ष्मस्रोतोगामि । सृष्टं सर्वं मूत्रपुरीषादि येन तत्सृष्टमलम् । तथा वातापहं पाकि अन्तर्व्रणादीनां पाककारि । तीक्ष्णमस्दु मरीचादिवत् । उष्णमुष्णवीर्यम् । रोचनं रुचिकृत् तथा कफपित्तकृत् ॥१४४॥

इति सामान्यलक्षणमुक्त्वा विशेषमाह,—सैन्धवमिति । तत्र तेषु लवणेषु मध्ये सैन्धवं सस्वादु ईषन्मधुरं वृष्यं हृद्यं त्रिदोषघ्नं तथा किञ्चिदुष्णं दृष्टेः पथ्यं किञ्चिदविदाह्यग्नि-दीपनञ्च । सामान्यगुणाश्च विष्यन्दिसूक्ष्मसृष्टमलत्वरोचनान्यस्य सन्त्येव । लघ्विति । सौवर्चलं लघु हृदयाय हितं सुगन्धि उद्गारं शोधयति । दुष्टं सच्छुद्धङ्करोति ; कटुपाकञ्च । तथा विबन्धिस्रोतसां हितं विबन्धघ्नम् । अग्निदीप्तिरुचिकृत् । ऊर्द्ध्वाध इति । विड़ं तदूर्द्ध्वमधश्च कफवातादीननुलोमयति । तथा दीपनं विबन्धादिघ्नञ्च । विपाक इति । सामुद्रं विपाके मधुरं गुरु कफवर्द्धनञ्च । सतिक्तेति । भूमिमुद्भिद्य यद्भवति तदौद्भिदमीषत्तिक्तं कटु क्षारं तीक्ष्णमुत्क्लेदि च दोषोत्क्लिष्टकारम् । कृष्ण इति । कृष्णे लवणे सौवर्चलगुणा लघुत्वादयो गन्धेन वर्जिताः सौगन्ध्यरहितास्त इति शेषः । रोमकमिति । रोमकं लवणं पांसूत्थं शिरालवणमीषत् क्षारं श्लेष्मलं गुरु च । लवणानामिति । लवणानां प्रयोगे सैन्धवमादि कृत्वा प्रयोजयेत् । अन्यत्र प्रदेशे लवणानि द्वित्राणि त्रिचतुराण्येव यत्र युज्यन्ते तत्र सैन्धवमादि कृत्वा प्रयोज्यानि यथा हिङ्ग्वादिचूर्णे द्विपटु इत्युक्तम् । तत्र सैन्धवसौवर्चले प्रयोज्ये । यत्र त्रयाणां प्रयोगस्तत्र सैन्धवसौवर्चलबिड़ादि । एवमौद्भिदादीनां लवणवर्गे पठितानामन्यत्रापि वेद्यम् । खरनादे चोक्तम्,—"सैन्धवं सारकं पाक्यं सौवर्चलमथौद्भिदम् । पूर्वं पूर्वं गुणोत्कृष्ट-मौषध्र चषां यथोत्तरम्" इति ॥ १४५—१४९ ॥

गुल्महृद्ग्रहणीपाण्डु-प्लीहानाहगलामयान्।
श्वासार्शःकफकासांश्च * शमयेद् यवशूकजः ॥ १५० ॥
क्षारः सर्वश्च परमं तीक्ष्णोष्णः क्रिमिजिल्लघुः।
पित्तासृग्दूषणः पाकी च्छेद्यो ह्यो विदारणः।
अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ॥ १५१ ॥
हिङ्गु वातकफानाह-शूलघ्नं पित्तकोपनम्।
कटुपाकरसं रुच्यं दीपनं पाचनं लघु ॥ १५२ ॥
कषाया मधुरा पाके रूक्षा विलवणा लघुः।
दीपनी पाचनी मेध्या वयसः स्थापनी परम् ॥ १५३ ॥
उष्णवीर्या सरायुष्या बुद्धीन्द्रियबलप्रदा।
कुष्ठवैवर्ण्यवैस्वर्य-पुराणविषमज्वरान् ॥ १५४ ॥
शिरोऽक्षिपाण्डुहृद्रोग-कामलाग्रहणीगदान्।
सशोषशोफातीसार-मेदोमोहवमिक्रिमीन् ॥ १५५ ॥
श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम्।
विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम्।

---

गुल्मेति। यवशूकजो यवक्षारो गुल्मादीन् शमयति। सम्प्रति स्वर्जिकाक्षारादीनामपि गुणानाह,—क्षार इति। क्षारः सर्वश्च परममतिशयेन तीक्ष्णोष्णः क्रिमिजिल्लघुश्च। पित्तासृजौ दूषयति। पाकी पाककारी। छेदी मेदःश्लेष्मादिग्रन्थिघ्नः। अहृद्यो हृदयाय न हितः। विदारणः पक्वगण्डादीनाम्। कटुलावण्याच्छुक्रादीनामपथ्यः। हिङ्ग्विति। हिङ्गु वातादिघ्नं पित्तप्रकोपनं कट्वादिगुणयुक्तञ्च ॥ १५०—१५२ ॥

कषाया इति। हरीतकी कषाया कषायरसा। कषायरसत्वात् कटुविपाकित्वं प्राप्तम्, इत्याह मधुरा पाक इति। तथा रूक्षा। विलवणेति वचनं लवणं वर्जयित्वा शेषाः पञ्च रसा अस्याः सन्तीति वेदयति। नन्वेवं कषायेत्यनर्थकं, यतः पञ्चसु रसेषु लवणहीनेषु मध्ये कषायोऽनुप्रविष्ट एव। अस्त्येवैतत्। कषायेत्येतदतिशयख्यापनाय। कषायो रसोऽस्यां बाहुल्येनास्तीत्यर्थः। तथा च मुनिः "हरीतकीं पञ्चरसामुष्णां विलवणां शिवाम्" इति। तथा लघुः। दीपन्यग्नेः। पाचन्यामादेः। मेध्या मेधायै हिता। वयस इत्यादि। कालकृता शरीरावस्था यौवनादिर्वयस्तस्य परमतिशयेन स्थापनी स्थिरीकरणी। उष्णेत्येतावतैवोष्णवीर्य्येत्यस्यार्थस्य लब्धत्वाद्वीर्य्यग्रहणमतिशयोष्णवीर्य्यत्वख्यापनार्थम्। सरा भेदनी। तथा आयुषे हिता। बुद्धिः वर्त्तमानार्थ-

---

* कासार्शःकफवातांश्चेति वा पाठः।

हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान् ॥ १५६ ।
तद्वदामलकं शीतमम्लं पित्तकफापहम् ।
कटु पाके हिमं केश्यमक्षमीषच्च तद्गुणम् ॥ १५७ ॥
इयं रसायनवरा त्रिफलाऽक्ष्यामयापहा ।
रोपणी त्वग्गदक्लेद-मेदोमेहकफास्रजित् ॥ १५८ ॥
सकेसरञ्चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ।
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् ॥ १५९ ॥

---

ग्राहिणी प्रज्ञा । इन्द्रियाणि चक्षुरादीनि । तेषां बलं प्रददाति या सैवम् । कुष्ठादीन् रोगान् जयति । खरनादे त्वेवमभ्यधायि "स्वाद्वम्लभावात्पवनं कटुतिक्ततया कफम् । कषायमधुरत्वाच्च हन्ति पित्तं हरीतकी" ॥ १५३—१५६ ॥

तद्वदिति । तया हरीतक्या तुल्यं वर्त्तत इति तृतीयान्ताद्वतिः । हरीतकीसमानगुणमामलकमित्यर्थः । विशेषं त्वस्याह । अभया उष्णा, इदं शीतं शीतवीर्य्यं तथाऽम्लमम्लरसं पित्तघ्नं चेति । क्षारपाणिस्तु आमलकं त्रिदोषघ्नं चाख्यत् ; यथा "अम्लभावाज्जयेद् वातं पित्तं माधुर्य्यशैत्यतः । कफं रूक्षकषायत्वादेवमेष त्रिदोषनुत्" ।। सुश्रुतेऽपि त्रिदोषघ्नत्वसुक्तम् । तद्ग्रन्थो हि ;—"चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् । हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः । कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकं तु तत्" इति । अक्षं विभीतकं पाके कटुकं शीतवीर्य्यं केशेभ्यो हितम् । तथा ईषत् तद्गुणं ताभ्यां हरीतकीधात्रीभ्यां समाना गुणा यस्य तत्तद्गुणं किञ्चिदक्षम् । ननु हरीतक्यादीनां स्थूलसूक्ष्मादिभेदेनानियतस्वरूपत्वात् कथमिवोपयोगः क्रियताम् ? इति केचित् । तान् ब्रूमहे । अक्षं तावदत्र कर्षप्रमाणं ग्राह्यम् । तथा च धन्वन्तरिराख्यत् ;—"विभीतकः कर्षफलः" इत्यादि । अन्वर्था हि इयं संज्ञा । कर्षः कर्षप्रमाणं फलं यस्य स कर्षफल इति । तदेवं विभीतकस्य फलं यत् कर्षप्रमाणं तद् ग्राह्यमित्यवतिष्ठते । हरीतक्या अपि प्रमाणं नियतमेव तन्त्रान्तरेऽप्युक्तम् ;—"न चास्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथाम्भसि । निमज्जेद् या प्रशस्तत्वाद् गुणकृत् सा प्रकीर्त्तिता । नवादिगुणयुक्तत्वं तथैकत्वं द्विकर्षता । हरीतक्याः फले येन तेनैतच्छ्रेष्ठमुच्यते" इति । तदेव द्विकर्षप्रमाणत्वं हरीतक्याः स्थितम् । धात्रीफलस्यापि युक्त्या नियतप्रमाणत्वमेव । तथा चोक्तं तन्त्रान्तरे,—"अभयैका प्रदातव्या द्वावेव तु विभीतकौ । धात्रीफलानि चत्वारि त्रिफलेयं प्रकीर्त्तिता" इति । तदेवमामलकानामर्द्धकर्षप्रमाणत्वमवतिष्ठते ; तस्मान्नियतप्रमाणत्वं त्रिफलायाः स्थितम् ॥ १५७ ॥

इयमिति । इयमीदृशी त्रिफला रसायनवरा, चक्षूरोगघ्नी, रोपणी व्रणानाम् । त्वग्गदाः कुष्ठादयः । क्लेदो व्रणादीनां स्रावः । मेदश्चतुर्थो धातुः । मेहः प्रमेहः । कफः श्लेष्मा । अस्रं रक्तम् । तानि जयति या सैवम् ॥ १५८ ॥

सकेसरमिति । दीपनरोचन मित्येतत्पर्य्यन्तम् । त्वक् च पत्रञ्च एला चेति द्वन्द्वैकवद्भावः । एतस्य नाम त्रिजातकं त्रिसुगन्धमिति । एतत् त्रिजातकं

रसे पाके च कटुकं कफघ्नं मरिचं लघु ॥ १६० ॥
श्लेष्मला स्वादुशीतार्द्रा गुर्वी स्निग्धा च पिप्पली।
सा शुष्का विपरीतातः स्निग्धा वृष्या रसे कटुः ॥ १६१ ॥
स्वादुपाकाऽनिलश्लेष्म-श्वासकासापहा सरा।
न तामत्युपयुञ्जीत रसायनविधिं विना ॥ १६२ ॥
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत्।
रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ॥ १६३ ॥
तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत्।
स्थौल्याग्निसदनश्वास-कासश्लीपदपीनसान् ॥ १६४ ॥
चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः ॥ १६५ ॥
चित्रकोऽग्निसमः पाके शोफार्शःक्रिमिकुष्ठहा ॥ १६६ ॥
पञ्चकोलकमेतच्च मरिचेन विना स्मृतम्।
गुल्मप्लीहोदरानाह-शूलघ्नं दीपनं परम् ॥ १६७ ॥

---

केसरयुक्तं चतुर्जातकमित्युच्यते। तच्च पित्तप्रकोपित्वादिगुणम् पित्तप्रकोपि तीक्ष्णादिगुणयुक्तम् ॥ १५९ ॥

रस इति। रसे पाके च कटुकं मरिचं कफघ्नं लघु च। कटुकरसत्वेन लब्धे पाकग्रहणमतिशयार्थम्। श्लेष्मलेति आर्द्राऽशुष्का पिप्पली श्लेष्मला स्वादुरसा शीतवीर्या गुरुः स्निग्धा च। सा शुष्का पिप्पली अत आर्द्रायाः पिप्पल्याः सकाशाद् विपरीता। शीतविपर्य्ययेणोष्णा गुरुविपर्य्ययेण लघुः। स्निग्धविपर्य्ययस्त्वत्र नास्ति स्निग्धेत्युक्तत्वात्। तथा वृष्या रसे कटुश्च। कटुरसत्वाच्च कटुपाकत्वं प्राप्तमित्याह,—स्वादुपाका। तथाऽनिलादीन् हन्ति सरा च। एवंविधामपि तां पिप्पलीमत्यर्थं न युञ्जीत रसायनविधिं विना। पिप्पलीं वर्द्धमानादिरसायनविधान एवातिशयेनोपयुञ्जीत। नागरमिति। नागरं शृङ्गवेरं दीपनादिगुणयुक्तम्; ग्राहि विडविबन्धकृत्; तथा हृद्यं हृदयाय हितम्; विबन्धनुत् स्रोतःशुद्धिकृत्। तद्वदिति। आर्द्रकं शुण्ठीसमानगुणमेव। एतच्च त्र्यं मरीचपिप्पलीशुण्ठ्याख्यं त्रिकटुकसंज्ञं स्थौल्यादीन् जयेत् ॥ १६०—१६४ ॥

चविकेति। चविका पिप्पलीमूलं मरिचात् स्तोकविशेषगुणं गुणैर्भवति। कटुरसविपाकं कफघ्नं लघूष्णवीर्यञ्चेत्यर्थः। गुणशब्देन रसविपाकादयोऽपि तन्त्रान्तराद् गृह्यन्ते, न तु पारिभाषिका एव गुरुलघ्वादयः; व्याप्तिन्यायात्। चित्रक इति। चित्रको दहनसंज्ञकोऽग्निसमः। पाकेऽत्यन्तोष्ण इत्यर्थः। तथा शोफादीन् हन्ति। पञ्चेति। एतच्च पूर्वोक्तं मरिचरहितं पिप्पलीपिप्पलीमूलचव्यचित्रकशुण्ठ्याख्यं पञ्चकोलसंज्ञं स्मृतं वैद्यकतन्त्रे। तथा गुल्मादिघ्नमतिदीपनञ्च। विस्तेति ॥ १६५—१६७ ॥

बिल्वकाश्मर्यतर्कारी-पाटलाटुण्टुकैर्महत् ।
जयेत्कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ॥ १६८ ॥
ह्रस्वं बृहत्यंशुमती-द्वयगोक्षुरकैः स्मृतम् ।
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ॥ १६९ ॥
बलापुनर्नवैरण्ड-शूर्पपर्णीद्वयेन तु ।
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ॥ १७० ॥
अभीरुवीराजीवन्ती-जीवकर्षभकैः स्मृतम् ।
जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिलापहम् ॥ १७१ ॥
तृणाख्यं पित्तजिद्दर्भ-कासेक्षुशरशालिभिः ॥ १७२ ॥

---

बिल्वेति । बिल्वादीनामुपलक्षणे तृतीया । बिल्वादिभिरुपलक्षितं महत्पञ्चमूलं कफानिलौ जयेत् । तच्च कषायतिक्तरसमुष्णवीर्य्यञ्च । बिल्वं श्रीफलम् । काश्मर्यो गाम्भारी । तर्कारी अरणिका । पाटला ताम्रपुष्पा । टुण्टुकः श्योनाकः । महद् गुरुबृहदनल्प इति पर्य्यायाः । ह्रस्वमिति । पञ्चमूलमिति वर्त्तते । ह्रस्वं कनीयो लघ्वल्पमितिपर्य्यायाः । बृहतीद्वयं क्षुद्रबृहती महाबृहती । अंशुमतीद्वयं शालपर्णी पृश्निपर्णी च । गोक्षुरको श्वदंष्ट्रकण्टकः । इदं ह्रस्वं पञ्चमूलं स्वादुपाकरसं नातिशीतं नात्युष्णं सर्वदोषजिच्च । बलेति । एतैः पञ्चभिर्मध्यमं पञ्चमूलम्; एतच्च कफवातघ्नं नातिपित्तकरं सरञ्च । अधुना चतुर्थं पञ्चमूलमाह—अभीरु इति । अभीरुवीरादिभिः पञ्चभिर्जीवनाख्यं पञ्चमूलं चक्षुष्यत्वादिगुणयुक्तम् ॥ १६८—१७१ ॥

पञ्चमं पञ्चमूलमाह,—तृणाख्यमिति । तृणसंज्ञं पञ्चमूलं दर्भकासेक्षुशरशालिभिः । तच्च पित्तजित् । संग्रहे त्वधिकमुक्तम् । यथा,—"सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः । विषदोषहरं शीतं सकषायं रसायनम् ॥ रूप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम् । वयसः स्थापनं शीतं लेखनं वातपित्तजित् ॥ ताम्रं सतिक्तमधुरं कषायं लेखनं लघु । कटुपाकरसं शीतं रोपणं कफपित्तजित् ॥ कांस्यं कषायानुरसं विशदं लेखनं सरम् । दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम् ॥ सतिक्तलवणं भेदि पाण्डुत्वकृक्रिमिवातनुत् । लेखनं पित्तलं किञ्चित् त्रपु सीसञ्च तद्गुणम् ॥ चक्षुष्यं कार्ष्णलोहन्तु कषायं स्वादु तिक्तवत् । लेखनं वातलं शीतं क्रिमिपित्तकफप्रणुत् ॥ मुक्ताविद्रुमवज्रार्कवैदूर्यस्फटिकादिकम् । मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् । चक्षुष्यं धारयेत्पापां पापालक्ष्मीविषापहम् ॥ सक्षार उष्णवीर्य्यश्च काचो दृष्टिकरञ्जनात् । शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ ॥ तुत्थकं कटुकं क्षारं कषायं विशदं लघु । लेखनं भेदि चक्षुष्यं कण्डूक्रिमिविषापहम् ॥ विशदो गैरिकः स्निग्धः कषायमधुरो हिमः । कफघ्नी तिक्तकटुका मनोह्वा लेखनी सरा ॥ स्निग्धं कषायं कटुकं हरितालं विषप्रणुत् । कषायमधुरं शीतं लेखनं स्निग्धमञ्जनम् ॥

रक्तपित्तविषच्छर्द्दिहिक्काघ्नं दृक्प्रसादनम् । स्रोतोऽञ्जनं वरं तत्र तद्वत् सौवीरकाञ्जनम् ॥
कफघ्नं तिक्तकटुकं छेदि सोष्णं रसाञ्जनम् । सर्वदोषप्रशमनं कासमोहक्षयापहम् ॥
कफघ्नमुष्णकटुकं शिलाजतु रसायनम् । तिक्तञ्च छेदनं योगवाहित्वात्सर्वरोगजित् ॥
कषायमधुरा रूक्षा कफघ्नी वंशरोचना । तुगाक्षीरी क्षयश्वास-कासघ्नी मधुरा हिमा ॥
कारव्यः कुञ्चिकाऽजाजी कवरी धान्यतुम्बरु । अन्नगन्धहरं रुच्यं दीपनं कफवात-
जित् ॥ वाष्पिका कटुतीक्ष्णोष्णा क्रिमिश्लेष्महरा परम् । तद्वच्च राजिका विघ्नसाधनी
दीपनी परम् ॥ शूलाटोपहरा रुच्या दीप्यकः कोष्ठशूलजित् ॥ अन्नाद्याः सर्षपाः
स्निग्धा वाष्पिकावत् प्रकीर्त्तिताः । शताह्वाकुष्ठतगरसुरदारुहरेणवः ॥ एलेलवालु-
सरलग्व्याघ्रनखचोरकाः । लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः ॥ सैर्य्यक-
स्तिक्तमधुरः स्निग्धोष्णः कफवातजित् । बस्तिमूत्रविबन्धघ्नो वृष्यो गोक्षुरको हिमः ॥
पाचनं कफपित्तघ्नं तिक्तं शीतं विषाद्वयम् । कफघ्नं तिक्तकटुकं मुस्तं संग्राहि
पाचनम् ॥ तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरहृद्दाह-
कामलावातरक्तनुत् ॥ तिक्तशीतौ ज्वरहरौ लघुभूनिम्बपर्पटौ । निम्बस्तिक्तो हिमः
कुष्ठक्रिमिपित्तकफापहः ॥ महानिम्बः परं ग्राही कषायो रूक्षशीतलः । गुग्गुलुः
पिच्छिलः स्पर्शे विशदोऽभ्यवहारतः ॥ सस्वादुः सकटुस्तिक्तः सकषायो रसायनम् ।
व्रण्यः स्वर्यः कटुः पाके रूक्षः सूक्ष्मोऽग्निदीपनः । क्लेदमेदोऽनिलश्लेष्मगण्डमेहापचीक्रिमीन् ।
पिटिकाग्रन्थिशोफांश्च हन्त्युग्रः स्रंसनो लघुः ॥ शङ्खपुष्पी सरा तिक्ता मेध्या क्रिमि-
विषापहा । कटुतिक्तोष्णमधुरा स्निग्धा स्वादुकफापहा (१) ॥ पित्तास्रविषतृड्दाह-क्रिमिघ्नं
गुरु रूक्षणम् । सर्वं सतिक्तं मधुरं चन्दनं शिशिरं परम् ॥ लघु रक्तं तयोश्शीरं
वातलं पाचनञ्च तत् ॥ ज्वरातिसारवमथुरक्तपित्तकफापहम् । मधुकं रक्तपित्तघ्नं
व्रणशोधनरोपणम् ॥ गुरु स्वादु हिमं वृष्यञ्चक्षुष्यं स्वरवर्णकृत् । कटुतिक्ते निशे कुष्ठमेह-
पित्तकफापहे ॥ प्रलेपाज्जयतः कण्डूं शोफं दुष्टव्रणं विषम् । प्रपौण्डरीकं चक्षुष्यं
शिशिरं व्रणरोपणम् ॥ कषायमधुरं तिक्तं रक्तपित्तप्रसादनम् ॥ बलात्रयं स्वादु
वृष्यं स्निग्धं शीतं बलप्रदम् । तत्र नामाऽधिकं बल्या क्षतक्षीणहिता गुरुः ॥ ताम्बूलं
कटु सक्षारं रुच्यमुष्णं कफापहृत् । भेदि सम्मोहकृत्पूगं कषायं स्वादुरोचनम् ॥ जाती-
पत्री कटुफलं कक्कोलकलवङ्गकम् । लघुतृष्णापहं हृद्यं वक्त्रदौर्गन्ध्यनाशनम् ।
सस्वादुतिक्तस्तृष्णाघ्नः कर्पूरश्छेदनो हिमः । लताकस्तूरिका तद्वन्मुखशोषहरा परम् ॥
कषायं मधुरं शीतं पद्मं पित्तकफास्रजित् । तद्वद्वकुलपुन्नागकुमुदोत्पलपाटलम् ॥ सचम्पकं
ततो नूनं गुणैः कौरण्टकिंशुकम् । मालतीमल्लिकापुष्पं तिक्तं जयति मारुतम् ॥
विषपित्तकफान्नागं सिन्दुवारञ्च तद्गुणम् ॥ कफघ्नं कैतकं तिक्तं शैरीषं विषहारि च ।
वातलं पुष्पमागस्त्यं कषायं कफपित्तजित् । बन्धूकं श्लेष्मलं ग्राहि तद्वदेव च यूथिका ।
कफघ्नमुष्णवीर्य्यञ्च कुङ्कुमं व्रणशोधनम् ॥ अवल्गुजैडगजजं बीजं वातकफप्रणुत् । आस्या-
वर्ण्यश्रमभेदःसौकुमार्य्यकृदन्यथा ॥ अतोऽध्वाऽग्निबलायूंषि कुर्याच्चङ्क्रमणं सुखम् । मारुत-
स्यानुलोम्यञ्च वपुःसम्भ्रमापहम् ॥ अन्वर्थसंज्ञं पादत्रं बलकृच्छुक्रलं तथा । वर्ण्यं नेत्रहितं

---

(१) सतिक्तं लवणं भेदि पाण्डुत्वक्रिमिवातनुत् । इत्यधिकः पाठः ।

शूकशिम्बीजपक्वान्न-मांसशाकफलौषधैः ।
वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः ॥ १७३ ॥

इति विविधौषधिवर्गः ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

छत्रं वातवर्षातपापहम् ॥ प्रवातरौक्ष्यवैवर्ण्यस्तम्भकृद्दाहतृड्भ्रमान् । अमाग्निमूर्च्छाश्च जयेदप्रवातमतोऽन्यथा ॥ प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन् । सन्निपातज्वरश्वाससमामवायूंश्च कोपयेत् ॥ याम्योऽस्वातकफकृच्छीतः स्वादुः कषायकः । कषायः पश्चिमो रूक्षो लघुर्नातिविदह्यते ॥ वातकृत् कफपित्तघ्नो मूर्च्छादाहभ्रमापहः । स्निग्धः शीतो लघुः सात्म्य उत्तरः षड्रसोऽनिलः ॥ ऐशानः कटुरूक्षोष्ण आग्नेयश्चैव मारुतः । अस्रो विदाही नैर्ऋत्यो वायव्यस्तिक्त उच्यते ॥ आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णताः । कुर्य्यात्पित्तास्रवृद्धींश्च छाया त्वेतान् व्यपोहति" इति ॥ १७२ ॥

सम्प्रति सुखग्रहणधारणार्थं संग्रहश्लोकमाह,—शूकेति । शूकधान्यादिभिर्वर्गितैर्वर्गीकृतैरयमन्नस्य लेश एकदेशः स्तोकमात्रो निर्दिष्टः । किम्भूतः ? नित्योपयोगो विद्यते यस्य स नित्योपयोगिकः । सदोपयोगवानित्यर्थः । मात्रायोगक्रियादेशकालादिविशेषाच्चोक्तानामपि द्रव्याणामन्यथात्वं दृष्टम् । यथा—तिलशौनिषेव्यमाणं विषमपि सञ्जायतेऽमृतसमानम् । भल्लातकः सह तिलैस्तत्कार्य्यपि कुष्ठमुपहन्ति । संस्कारेण लघुभ्यः सक्तुभ्यः सिद्धपिण्डिका गुरवः । मरुवासिष्वतिसात्म्यं दधिपीलुशमीकरीराणाम् । घृतदुग्धं हेमन्ते मन्दाग्निसमीरणकफोत्तरम्भवेत् प्रायः । दधिदुग्धं वातघ्नं तदजातं वातकृद्भवति । रेचनमपि च क्षीरं गव्यं संग्राहि कस्यचिद्भवति । तस्मादेवमादि स्वबुद्ध्यैवाभ्यूह्यम् । शास्त्रकृता तु ग्रन्थगौरवभयात् स्पष्टं कृत्वा तन्नोक्तम् । प्रदेशान्तरेषु युक्त्यैव प्रतिपादितमिति ॥ १७३ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामन्नस्वरूपादिविज्ञानीयोऽध्यायः षष्ठः ॥ ६ ॥

---

# सप्तमोऽध्यायः ।

अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
राजा राजगृहासन्ने प्राणाचार्य्यं निवेशयेत् ।
सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ॥ २ ॥
अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः ।
योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः ॥ ३ ॥
ओदनो विषवान् सान्द्रो यात्यविस्राव्यतामिव ।

अन्नपानस्वरूपं शरीरसन्धारणार्थं प्रागुक्तम् । पथ्यमपि चान्नपानं विषाद्युपहतं रोगाय मृत्यवे वा सम्पद्यते । अतस्तद्रक्षणाध्यायोऽयमारभ्यते । अन्नस्य रक्षा अन्नरक्षा सोपदेश्या यत्राध्याये सोऽप्युपचारादन्नरक्षेत्युच्यते । यथा शिशुपालवधः काव्यमिति । शेषं व्याख्यानमत्र पूर्ववत्कार्यम् ॥ १ ॥

राजेति । राजा नृपः प्राणाचार्यं वैद्यं राजगृहासन्ने निवेशयेदावासयेत् । एवं सति यो गुणः स्यात्तमाह ;—सर्वदेत्यादि । सर्वदा सर्वकालं रात्रौ दिवा वा नृपभवनसमीपस्थितः स वैद्यः सर्वत्रान्नपानशयनमाल्यादौ प्रतिजागृविर्दत्तावधानो भवति ॥ २ ॥

ननु किमेवं क्रियते ? इत्याह ;—अन्नपानमिति । महीपतेः सम्बन्ध्यन्नपानं विषाद् विषसंस्पर्शाद्विशेषेणातिशयेन रक्षेत् । अन्नपानमित्युपलक्षणम् । शयनवस्त्रगन्धरत्नमाल्यादीनामपि परिरक्ष्यत्वात् । किमिति नृपान्नपानादि विशेषेण रक्षेदित्याह,—योगेत्यादि । योगोऽन्नवस्त्रादिभिः सम्बन्धः । क्षेमस्तेषामन्नादीनां चौराद्युपद्रवरक्षणात् । तावप्येतौ तदायत्तौ नृपायत्तौ स्याताम् । क्षेमशब्दोऽर्द्धर्चादिः । धर्म्माद्या इति । धर्मार्थकाममोक्षा यन्निबन्धना योगक्षेमनिबन्धनाः ॥ ३ ॥

सम्प्रति विषदुष्टस्य भक्तस्य लक्षणमाह ;—ओदन इति । विषवानोदनः सान्द्रो विलेप्याकारः न च विस्रावयितुं शक्यते (१) । यतः पृथक्सिक्थो न भवेत् । तथा

(१) विस्राव्यो नैवं योऽस्रावविस्राव्यतामिव याति, चिरेण कालेन पच्यते, पक्वश्च पर्य्युषितभक्तसुषमा यस्य स पर्युषितोपमो भवेत्, निरूष्मा रूक्षः सद्योऽवतारितोऽपि स्यादित्यर्थः । तस्य च भक्तस्य सम्बन्धि मयूरकण्ठेन तुल्योष्मा मोहादीन् करोति । मयूरकण्ठेन तुल्यो नानावर्णो मयूरकण्ठतुल्यः स चासावुष्मा चेति । उष्मा वाष्पः । तथासावोदनो वर्णगन्धाद्यैर्हीयते । आदिशब्देन रसादीनां ग्रहणम्, क्लिद्यते प्रक्लिन्नो भवति ; तथा जलमध्ये छिन्नतैलबिन्दुसदृशैश्चन्द्रकैराचितो भवति । इति पाठान्तरम् ।

चिरेण पच्यते पक्वो भवेत्पर्य्युषितोपमः ॥ ४ ॥
मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत्।
हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रकाञ्चितः ॥ ५ ॥
व्यञ्जनान्याशु शुष्यन्ति ध्यामक्वाथानि * तत्र च।
हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥ ६ ॥
फेनोर्द्ध्वराजीसीमन्त-तन्तुबुद्बुदसम्भवः।
विच्छिन्नविरसा रागाः खाण्डवाः शाकमामिषम् †॥७॥
नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते।
श्यावा पीताऽसिता तक्रेऽघृते पानीयसन्निभा ॥ ८ ॥

चिरेण पच्यते बहुना कालेन पाकं याति। स च पक्वो निष्पन्नपाकः सद्य एव पर्युषितोपमो दिवसान्तरितीऽतिक्रान्ताहोरात्रः। मयूरकण्ठेन तुल्यं उष्मा बाष्पराजिर्नानावर्णा यस्य स तथोक्तः। पर्य्युषितोपम इति। यथा पर्युषितं भक्तं निरुष्म लब्धञ्च भवति, तथा विषदूषितं सद्योऽवतारितमपि तादृशमेव भवति। स चोपयुक्तो मोहमूर्च्छाप्रसेकान् करोति। मोहो वैचित्यम्; मूर्च्छा संज्ञाभ्रंशः; प्रसेकः श्लेष्मनिष्ठीवनम्। हीयते वर्णगन्धाद्यैरिति आदिशब्देन रसस्पर्शादिपरिग्रहः। प्रक्लिन्नो भवति। सलिलमध्याक्षिप्ततैलबिन्दुसदृशैश्चन्द्रकैश्च पूर्णो भवति। इति चक्षुरादिभिः परीक्षा ॥ ४। ५॥

व्यञ्जनानां परीक्षामाह;—व्यञ्जनानीति। व्यञ्जनानि सूपादीनि दधितक्रदाड़िमादिसंस्कृतान्याशु शीघ्रं शुष्काणि भवन्ति। क्वाथश्च तेषां ध्यामो मलिनो भवति। तत्र चेति। व्यञ्जनवत्सु क्वाथेषु हीनाधिका शिरोविरहादिलक्षणविकारोपेता चात्मीया छाया प्रतिबिम्बं दृश्यते। नैव वा कीदृश्यपि छाया न दृश्यते। स चेदमरिष्टं सनिमित्तत्वात्। फेनादीनां सम्भवः। तत्रेति प्रकृतम्। व्यञ्जनोपलक्षितेषु सर्वद्रवेष्वेव। विशेषेण पुनर्लवणोल्बणद्रवे फेनमाला। ऊर्द्ध्वराजीसम्भवन्तु रसकादिषु स्वयं दर्शयिष्यति। विच्छिन्नविरसा रागा इति। विच्छिन्नो रक्तवर्णः क्वचित् क्वचित्प्रदेशे द्राक्षापानादौ रागो भवति। विरसं विगतरसं तद्भवति। यथा राग एवं खाण्डवोऽपि। शाकमामिषञ्च क्लिन्नं स्थाने स्थाने शुष्यद्विरसञ्च ॥ ६। ७॥

यत्र द्रवे यादृशी राजी सम्भवति तां विशेषतो दर्शयन्नाह;—नीलेत्यादि। रसे मांसरसे विषदूषिते नीला नीलवर्त्तिकाकारा राजी दृश्यत इति प्रकृतेन सम्बन्धः। एवं चाग्रेऽपि राजी दृश्यत इति योज्यम्। क्षीरमध्ये ताम्रा ताम्रवर्णा, दधनि दधि

* श्यावक्वाथानीति पाठान्तरम्।
† विच्छिन्ना विरसा रागषाड़वाः शाकमामिषम्। इति वा पाठः।

काली मद्याम्भसोः क्षौद्रे हरित्तैलेऽरुणोपमा ।
पाकः फलानामामानां पक्वानां परिकोथनम् ॥ ९ ॥
द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ।
मृदूनां कठिनानाञ्च भवेत् स्पर्शविपर्य्ययः ॥ १० ॥
माल्यस्य स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः ।
ध्याममण्डलता वस्त्रे शदनं * तन्तुपक्ष्मणाम् ॥ ११ ॥
धातुमौक्तिककाष्ठाश्म-रत्नादिषु मलाक्तता ।
स्नेहस्पर्शप्रभाहानिः सप्रभत्वं तु मृन्मये ॥ १२ ॥
विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः ।

श्यावा दृश्यते लक्ष्यते चक्षुषा । श्यावा राजीति सर्वत्र प्रकृतम् । पीताऽसिता तक्र इत्यादि । तक्रस्य मध्ये पीताऽसिता आनीलपीता राजी दृश्यते इति प्रकृतम् । दृते सलिलनिभा । काली कृष्णा मद्यस्य तोयस्य च विषदूषितस्य । क्षौद्रे हरिदिति । माक्षिकमध्ये हरिता राजी दृश्यते । तैले अरुणोपमा ईषल्लोहिताकारा । उदाहरणमात्रं त्वेतत् । मस्तुनः कपोताभा । धान्याम्लस्य कृष्णा । द्रवौषधस्य कपिला । तथा आमानां फलानां पाकः पक्वानां परिकोथनं शाटित्वं भवति । द्रव्याणामार्द्र-शुष्काणां स्यातां म्लानिविवर्णते । यथासङ्ख्यं योज्यम् । आर्द्राणां म्लानिः । शुष्काणां वैवर्ण्यं श्यावत्वादिलक्षणम् । मृदूनां काठिन्यं कठिनानां मृदुत्वम् । अयं स्पर्शविपर्य्ययः । माल्यस्य पुष्पादेः स्फुटितं विशीर्णमग्रं प्रान्तो यस्य तत् स्फुटिताग्रं तद्भावस्तत्त्वम् । म्लान्युद्भवो म्लानता । गन्धान्तरोद्भवः स्वगन्धनाशः । अन्यस्य सम्भवश्च । वसागन्धस्य च तैले सम्भवः । ध्याममण्डलता वस्त्रे । वस्त्रे आस्तरणप्रावरणादिरूपे ध्यामानि मलिनानि मण्डलानि यस्य वस्त्रस्य तद्भावस्तत्त्वम् । शदनं शातः पातः । केषाम् ? तन्तूनां रोमणां पक्ष्मणाञ्च पार्श्ववर्त्तिनां वस्त्रसम्बन्धिनामेव । धातुर्लोहादिः । मौक्तिकं मुक्ताः । काष्ठं दारु । अश्मा पाषाणः । रत्नानि वज्रमरकतादीनि । आदिशब्देन शङ्खशुक्त्यादिपरिग्रहः । तेषु धात्वादिषु मलाक्तता पङ्कोपदिग्धता । स्नेह-हानिस्तेषामेव धात्वादीनां स्निग्धत्वव्यपगम इत्यर्थः । एवं स्पर्शप्रभाहानी । मृन्मये तु भाण्डे विषदूषिते निष्प्रभे सप्रभत्वम् ॥ ८—१२ ॥

इदानीं यो विषं ददाति तस्य लक्षणमाह ;—विषद इति । विषं ददातीति विषदो नरः श्यावं शुष्कमास्यं मुखं यस्यासौ श्यावशुष्कास्यः श्यावशुष्कवदनः । किं करोति ? विलक्षो वीक्षते दिशः । दिश इति समन्तादित्यर्थः । विलक्ष इति लज्जा-

*, शातनामिति वा पाठः ।

स्वेदवेपथुमांस्त्रस्तो * भीत: स्खलति जृम्भते ॥ १३ ॥
प्राप्यान्नं सविषं त्वग्निरेकावर्त्त: स्फुटत्यति ।
शिखिकण्ठाभधूमार्चि-रनर्चिर्वोग्रगन्धवान् ॥ १४ ॥
म्रियन्ते मक्षिका: प्राश्य काक: क्षामस्वरो भवेत् ।
उत्क्रोशन्ति च दृष्ट्वैतच्छुकदात्यूहसारिका: ॥ १५ ॥
हंस: प्रस्खलति ग्लानिर्जीवञ्जीवस्य जायते ।
चकोरस्याक्षिवैराग्यं क्रौञ्चस्य स्यान्मदोदय: ॥ १६ ॥
कपोतपरभृद्दक्ष-चक्रवाका जहत्यसून् ।
उद्वेगं याति मार्जार: शकृन्मुञ्चति वानर: ॥ १७ ॥

वान् । वीक्षते अवलोकयति ; किञ्च स्वदोषशङ्कया स्वेदवान् वेपथुमान् । त्रस्त: शरीरेण जातकम्पत्वात् । भीतश्चित्तेन सोद्वेगतयोपलक्ष्यमाणत्वात् । स्तम्भकुड्यादिभिरात्मानमन्तर्द्धापयितुमिच्छन्नितस्ततो गच्छंश्च स्खलितगतिर्भवति तत आह स्खलति । पुनः पुनश्च जृम्भां करोति तेनाह जृम्भते । उपलक्षणञ्चेदं तत्तत्कालभाविनीनां क्रियाणाम् । तद्यथा,—अस्थानहासी ; पृष्टोऽसम्बद्धमुत्तरं ददाति ; नैव वा वदति ; विवक्षुर्मुह्यति अङ्गुली: स्फोटयति ; शिर: कण्डूयते ; ओष्ठौ लेढ़ि ; भुवं विलिखति ; क्रियासु त्वरते ; विपरीतमाचरति ; स्वभूमौ च नावतिष्ठते ॥ १३ ॥

इदानीं सविषस्याग्निप्रक्षेपणादिकमुपदिशन्नाह ;—प्राप्यान्नमिति । सविषमन्नं प्राप्याग्नि: स्फुटति अति चटचटायतेऽतिशयेनेत्यर्थ: । एकावर्त्त इति । एक एवावर्त्तो यस्य संहतसर्वज्वालत्वात्, असौ एवैकावर्त्त: । शिखिकण्ठाभधूमार्चि: शिखी मयूरस्तस्य कण्ठ इन्द्रायुधवदनेकवर्णस्तस्येवाभा ययोर्धूमार्चिषोस्ते शिखिकण्ठाभे तादृशे धूमार्चिषी यस्याग्नेरसौ शिखिकण्ठाभधूमार्चिरिन्द्रायुधवदनेकवर्णधूमज्वाल इति यावत् । अनर्चिर्वा अज्वाल इति वा । उग्रगन्धवानिति कुणपगन्धवान् । निदर्शनञ्चेदम् । धूमोऽप्यस्य प्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलतां अप्युत्पादयति ॥ १४ ॥

स्नेहलवणयोगादप्यग्निरेवं स्यात्, अत: पक्षिभिरपि परीक्षाप्रकारान्तरं दर्शयन्नाह ;—म्रियन्ते इत्यादि । सविषमन्नमित्यनुवर्त्तते ; मक्षिका: सविषमन्नं प्राश्य विपद्यन्ते । मक्षिका: सविषेऽन्ने न निलीयन्ते । निलीनास्तु सद्यो विपद्यन्ते । विषदुष्टाहारात्तु काक: क्षामस्वरो भवेत् । उत्क्रोशन्ति उच्चैर्विक्रोशन्ति दर्शनादेव शुकदात्यूहसारिका: । विषदर्शनमात्रादेव च हंसगति: स्खलति । ग्लानिर्जीवञ्जीवस्य जायते । उपलक्षणञ्चेदम् । मरणमपि कस्यचिन्न ग्लानि: ; एवं जीवञ्जीवकस्य । चकोरस्याक्षिविरक्तता । दृष्ट्वै तदिति सर्वत्र योजनीयम् । क्रौञ्चस्य स्यान्मदोदयो मदोत्पत्ति: । कपोतपरभृद्दक्षचक्रवाकाख्यजहत्यसून् प्राणान् विजहति चात्यर्थं मरणदु:खा-

* त्रस्त इति वा पाठ: ।

हृष्येन् मयूरस्तद्‌दृष्ट्वा मन्दतेजो भवेद्विषम्।
इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः।
यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः॥ १८॥
स्पृष्टे तु कण्डूदाहोषा-ज्वरार्त्तिस्फोटसुप्तयः।
नखरोमच्युतिः शोफः सेकाद्या विषनाशनाः॥ १९॥
शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः।
ससोमवल्कतालीस-पत्रकुष्ठामृतानतैः॥ २०॥
लालाजिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम्।
दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे।
सेव्याद्यैस्तत्र गण्डूषाः सर्वञ्च विषजिद्धितम्॥ २१॥
आमाशयगते स्वेदमूर्च्छाध्मानमदभ्रमाः।
रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम्॥ २२॥
बिन्दुभिश्चाचयोऽङ्गानां पक्वाशयगते पुनः।

---

भ्याहृताः। उद्विजतेऽत्यर्थं मार्जारः। वानरस्तु शकृत् पुरीषं मुञ्चति। उपलक्षणञ्चेदम्। पृषतीमुखी रोदिति च। तथा हृष्येन्मयूरस्तद्दृष्ट्वा तदिति सविषान्नपरामर्शः। दृष्ट्वेत्यनुवर्त्तमानेऽपि पुनर्दृष्ट्वेति वचनं सर्वत्र मध्ये सम्प्रत्ययार्थमाद्यन्ताभ्यां गृहीतत्वात्। विषस्यास्य दर्शनादेव मन्दतेजस्कं भवति। एवं पूर्वोक्ताभिः परीक्षाभिरन्नं भक्तादि विषवत् विषसंसृष्टं ज्ञात्वा त्यजेदेतत्। कथम्? प्रयत्नतः प्रयत्नेन। तमेव प्रयत्नं दर्शयन्नाह;— यथा येन प्रकारेण त्यज्यमानेन क्षुद्रजन्तवो मक्षिकादयोऽपि तेन विषेण न विपद्येरन् न नश्येयुस्तथा त्यजेत्। क्षुद्रजन्तवोऽपि किंपुनर्महान्त इत्यपिशब्दार्थः॥ १५—१८॥

स्पृष्ट इत्यादि। सविषेऽन्ने मुखहस्तादिभिस्तु स्पृष्टे सति कण्ड्वादयः शोफान्ताः स्युः। ऊषा प्रादेशिकी दाहः; सर्वदाहस्तु दाहः; अर्त्तिः शूलम्; सुप्तिरङ्गस्याचैतन्यम्। नखरोमच्युतिर्नखशातो रोमशातः। ननु नखशातः केवलं वातरोगेषु पठितः; विषे च सन्निपातकोप उक्तः; तत्कथमेतदुच्यते? जात्यन्तरभूत एवायं विषनिमित्त इत्यदोषः। तत्र तेषु विषसंस्पर्शजेषु कण्ड्वादिरोगेषु सेकाद्याः शस्ता यतो विषनाशनाः। प्रलेपाश्च हिताः। कैरित्याह; सेव्यादिभिः॥ १९। २०॥

लालेत्यादि। वक्त्रगे मुखप्राप्ते लाला भवति। जिह्वौष्ठयोर्जाड्यं भवति। ऊषादयश्च स्युः। रसाज्ञत्वं जिह्वा रसं न चेतयत इत्यर्थः। हन्वोः स्तम्भश्च स्यात्। तत्र सेव्याद्यैः पूर्वोक्तैर्गण्डूषा हिताः। सर्वञ्चान्यदपि यद्विषं जयति तद्धितम्॥ २१॥

आमाशयेत्यादि। विषान्ने आमाशयं प्राप्ते स्वेदादयः स्युः। हृदयस्य रोधनं स्तम्भः। बिन्दुभिर्नानावर्णैरङ्गानामाचयः समन्ताच्चयनम्। पक्वाशयगते तु विषेऽनेक-

अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥ २३ ॥
तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसंचयः ।
तयोर्वान्तविरिक्तस्य हरिद्रे कटभीं गुडम् ॥ २४ ॥
सिन्दुवारकनिष्पाव-त्वाष्थिकाशतपर्विका: ।
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ।
नावनाञ्जनपानेषु योजयेद्विषशान्तये ॥ २५ ॥
विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ।
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ २६ ॥
न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ।
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥ २७ ॥
विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ॥ २८ ॥
आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ।

---

वर्णं वमति ; मूत्रयत्यतिसार्यते ; तन्द्रादयश्च भवन्ति । तयोरामपक्वाशयगतयोर्विषयो-र्वर्त्तमानस्य पुंसो यथायोगं वान्तविरिक्तस्य हरिद्रे कटभीत्यादिकमौषधं नावनादिषु योजयेत् । तत्र मदनफलालाबुकुम्भीकोशातकीफलैर्मधुयुक्तैर्निष्पावाम्बुयुक्तैर्वमनम् । तस्य स्नेहयित्वा विरेचनम् । पक्वाशयगते वमितस्यैव नीलिनीफलयुक्तेन घृतेन विरेचनमेव ॥ २२—२५ ॥

विषेत्यादि । विषभुक्ताय पुंस ऊर्ध्वमधश्च शुद्धाय काले सूक्ष्ममतिश्लक्ष्णं ताम्रचूर्णं समाक्षिकं दद्यात् । किम्भूतम् ? हृद्विशोधनं हृदयं शोधयदित्यर्थः । विषभुक्तायेत्या-हिताग्न्यादित्वात्परो निपातः । काल इत्युपलक्षणम्, देशसात्म्याग्न्यादीन् व्यपेक्षेतेत्यर्थः ; शुद्धे हृदि स्वलिङ्गे ज्ञाते ततोऽनन्तरं हेमचूर्णस्य शाणं कर्षचतुर्थांशं दापयेत् ॥ २६ ॥

हेम्नि दत्ते सति यो गुणः स्यात्तमाह ;—नेत्यादि हेम पिबतीति हेमपस्तस्याङ्गे विषं न सज्जते । कथम् ? पद्मपत्रे जलमिव । तस्य च हेमपस्य विस्तीर्णमायुर्जायते । सज्जत इत्यनात्मनेपदश्चिन्त्यम् ॥ २७ ॥ एष विधिर्गरेऽपि स्मृतो यो विष उक्तः ।

विरुद्धमिति । विरुद्धञ्चाहारं विषगरोपमं विद्यात् । विषगरवद्विरुद्धाहारा अपि व्याधिमृत्युहेतव इत्यर्थः । तथा चोक्तं संग्रहे, "विस्फोटगुल्ममदविद्रधिमेहयक्ष्म-तेजोबलस्मृतिमतीन्द्रियचित्तनाशम् । कुर्य्याद्विरुद्धमशनं ज्वरमस्रपित्तमष्टौ गदांश्च महतो विषवच्च मृत्युम्" इति ॥ २८ ॥

तदेव विरुद्धभोजनमाह ;—आनूपमित्यादि । आमिषं मांसमानूपं महामृग-वारिचरवारिशयाख्यं माषादिभिः सप्तभिः सह विरुध्यते । आनूपेष्वपि मध्ये विशेषाद-

विरुध्यते सह तिलैर्मूलकेन गुडेन वा।
विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ॥ २९ ॥
विरुद्धमम्लं पयसा सह सर्वं फलं तथा ॥ ३० ॥
तद्वत्कुलत्थवरककङ्गुवल्लमकुष्ठकाः ॥ ३१ ॥
भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ॥ ३२ ॥

---

तिशयेन पयसा सह मत्स्या विरुध्यन्ते। यतो मत्स्यक्षीरे स्वादुरसविपाकित्वान्महाभिष्यन्दिनी; शीतोष्णयोगाच्च परस्परविरुद्धे। मत्स्येष्वपि चिलीचिमाख्यो मत्स्यः पयसा सहात्यन्तविरुद्धः। स पुनः शकली लोहिताक्षः सर्वतो लोहितराजिः प्रायो भूमौ चरति। सोऽत्यभिष्यन्दितमत्वात् सुतरां विरुद्धः। एष चाहारोऽनिर्दिष्टविकारकारी यथोक्तान् विस्फोटादीन् करोति। कालान्तरेण च चिकित्सां विना प्राणानपि हरति। कश्चिच्च विरुद्धाहारी निर्दिष्टविकारकारी। यथा उपोदकातिसारायेति ॥२९॥

विरुद्धमिति। अम्लं द्रव्यं पयसा सह सर्वं विरुद्धम्। सर्वग्रहणं द्रवाद्रवग्रहणार्थम्। द्रवं काञ्जिकादि; अद्रवञ्चुक्रिकादिकमित्यर्थः। अन्यथा पयसो द्रवसमानजातीयत्वात्काञ्जिकाद्येव द्रवद्रव्यं विरुध्यते, न चुक्रिकादिकमपि। ननु तृतीययैव सहार्थो लब्ध एव। यथा,—वाराहं श्वाविधा नाद्यादित्यत्र; ततः किं सह शब्देन? सत्यमेतत्। सहग्रहणन्तु नियमार्थम्। सहैकध्यमम्लेनोपयुज्यमानं विरुद्धम्। यदा त्वम्लेन गोरसादिना क्षीरशाकसंज्ञव्यञ्जनकरणार्थं पयः संस्क्रियते तदा तस्य द्रव्यान्तरत्वापत्तेर्विरोधो नास्ति। तथा दधिक्षीरादिना घृतं पच्यते तत्राप्यविरोध एव; द्रव्यान्तरत्वात्। पूर्वकस्यापि सहशब्दस्यैवम्प्रायमेव प्रयोजनमभ्यूह्यमिति। अपि च, क्षीरे भुक्त उत्तरे कालेऽप्यम्लं न भोज्यमिति प्रतिपादनार्थञ्च सहग्रहणम्। तथा चोक्तं संग्रहे। "सर्वं चाम्लं पयसा सहैकध्यं तदुत्तरं वा विरुद्धम्" इति। फलं तथेति। फलमक्षोडादि च पयसा सह विरुद्धम्। सर्वशब्दः सर्वत्र न सम्बन्धनीयो यतो न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धम्, अपि तु किञ्चिदेव। तथा च मुनिः परिसङ्ख्यवापठत्। तथा आम्राम्रातकलकुचकरमर्दमोचदन्तशठवदरकोशाम्रभव्यजाम्बवकपित्थतिन्तिडीकपालेवताक्षोडपनसनारिकेलदाड़िमामलकान्येवंप्रकाराणि चान्यानीति। तस्मान्न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धं किन्तु मुन्युक्तमेव ॥ ३० ॥

तद्वदिति। फलवत् कुलत्थादयः पयसा सह विरुद्धाः। वरको व्रीहिभेदः। वरकोद्दालकेति प्रागुक्तः। वल्लमकुष्टकौ शिम्बीधान्यविशेषौ। उपलक्षणञ्चेदम्। माषनिष्पावावपि हि विरुद्धौ पयसा सहेति संग्रहे कथितम् ॥ ३१ ॥

भक्षयित्वेति। हरितकं मूलकं कुठेरादि भुक्त्वा पयस्त्यजेन्न पुनः शाकम्। मूलकादि स्निग्धस्विन्नं शाकसाधनेन साधितं भुक्त्वा क्षीरं न भक्षयेत्। एतस्मादेव च ज्ञापकान्मूलकादीनामुभयरूपत्वं वेद्यम्, हरितकत्वञ्च। तथा मूलकादीनां यदि शाकत्वप्रसिद्धिरेवाभविष्यत्, ततो हरितकं मूलकादि भक्षयित्वेति तन्त्रकृन्नावक्ष्यत्।

वाराहं श्वाविधा नाद्याद्दध्ना पृषतकुक्कुटौ ।
आममांसानि पित्तेन माषसूपेन मूलकम् ॥ २३ ॥
अविं कुसुम्भशाकेन बिसैः सह विरूढ़कम् ।
माषसूपगुडक्षीर-दध्याज्यैर्लकुचं फलम् * ॥ २४ ॥
फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ।
कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ॥ २५ ॥
सिद्धां वा मत्स्यपचने पचने नागरस्य वा ।
सिद्धामन्यत्र वा पात्रे कामात्तामुषितां निशाम् ॥२६॥
मत्स्यनिस्तलनस्नेह-साधिताः पिप्पलीस्त्यजेत् ।
कांस्ये दशाहमुषितं सर्पिरुष्णां त्वरुष्करे ॥ २७ ॥

---

तस्मान्मूलकस्य हरितकत्वञ्च ज्ञेयम् । लशुनेन सह क्षीरस्य प्रयोगो य उक्तः, साधयेच्छुद्ध-शुष्कस्य लशुनस्य चतुःपलमिति, स न विरुद्धः । अग्न्यादिसम्पर्काद् द्रव्यान्तरत्वोत्पत्तेः ॥२२॥

वाराहमिति । श्वाविधा सेधामांसेन सह वाराहं मांसं नाद्यात् । अग्रेऽपि नाद्यादिति क्रियायोगो यावत् त्यजेदिति क्रियान्तरम् । पृषतकुक्कुटौ दध्ना सह नाद्यात् । आमान्यपक्वानि मांसानि पित्तेन सह । माषसूपेन सह मूलकम् । अविं मेषं कुसुम्भ-शाकेन सह । विरूढकमङ्कुरितधान्यं बिसैः सह । माषसूपादीनामन्यतमेन सह लकुचफलम् । कदल्याः फलं तक्रेण सह दध्ना वा । तालफलेन वा कदलीफलम् । कणोषणाभ्यां सह काकमाचीम् । केवलेन माक्षिकेण सह काकमाचीं गुडेन वा सह काकमाचीम् । मत्स्याः पच्यन्ते यस्मिन् भाण्डे तत्र वा सिद्धां काकमाचीं नाद्यात् । नागरस्य वा पचने शुण्ठीभाण्डे सिद्धां काकमाचीम् । तथा यन्यत्र वा भाजने यथा-रुचिसिद्धां कामात्तां काकमाचीं रात्रिमुषितां पर्युषितां नाद्यात् ॥ २३—२६ ॥

मत्स्येत्यादि । मत्स्या निस्तल्यन्ते भृज्यन्ते येन स्नेहेन स मत्स्यनिस्तलनस्नेहस्तत्र साधिताः पिप्पलीस्त्यजेत् ; विरुद्धत्वात् । नाद्यादिति प्रकृतेऽपि त्यजेदिति वचनं न केवलं नाद्यात्प्रलेपादिकमपि न कुर्य्यादिति प्रतिपादनार्थम् । उत्तरत्रापि त्यजेदित्यस्यानु-वृत्तावेतदेव तात्पर्य्यम् कांस्यपात्रे दशरात्रमुषितं सर्पिस्त्यजेत् । दशाहादर्वागपि विरुद्धमेव । अरुष्करे भल्लातकविषये उष्णमन्नपानादिकं त्यजेत् । तथा पेयं नोष्णोप-चारैरित्यर्थेन मद्यस्योष्णं निषिद्धम् । तथा उष्णमुष्णार्त्तमुष्णे च युक्तञ्चोष्णैरिति माक्षिकस्य । तथा दध्नो नैवाद्यान्निशि नैवोष्णं वसन्तोष्णेत्यादिभिः । तस्मान्मधुमद्यदधिषु अत्युष्णं विरुद्धमित्यत्राचार्य्यो युक्त्या प्रत्यपादयत् । संग्रहे तु स्पष्टं कृत्वोक्तम्,—"मद्य-मधु-दधि-भल्लातकेषु चोष्णम्" इति ॥ २७ ॥

---

* क्षीरेत्यत्र क्षौद्रेति वा पाठः ।

भासो विरुध्यते शूल्यः कम्पिल्लस्तक्रसाधितः ॥ ३८ ॥
ऐकध्यं पायससुराकृशराः परिवर्जयेत् ।
मधुसर्पिर्वसातैल-पानीयानि द्विशस्त्रिशः ।
एकत्र वा समांशानि विरुध्यन्ते परस्परम् ॥ ३९ ॥
भिन्नांशे अपि मध्वाज्य दिव्यवार्य्यनुपानतः ।
मधुपुष्करबीजञ्च मधुमैरेयशार्करम् ।
मन्थानुपानः चैरेयो हारिद्रः कटुतैलवान् ॥ ४० ॥
उपोदकातिसाराय तिलकल्केन साधिता ॥ ४१ ॥

---

भास इत्यादि । भासः पक्षिविशेषः शूल्यो विरुध्यते । शूले संस्कृतो भासः कृतयत्नैर्विरुध्यत इत्यर्थः । शूल्य इति शूलात्पाक इति यत् । कम्पिल्लस्तक्रसाधितो विरुध्यते । संग्रहे चातोऽधिकमप्युक्तम् ; यथा, "सौवीरेण तिलशष्कुली" ; "क्षीरेण लवणम्" ; "नवनीतेन शाकम्" ; "नवपुराणसामपक्वं चैकध्यम्" ; तथा,—"सलिलावगाहः सह सोष्णाभितप्तस्य लगुडाध्युपवाताय तृष्णाभिवृद्धये च" ; तथैव, "पयःपानं रक्तपित्ताय" । शरीरेणायतस्य सहसाभ्यवहारस्फुरदिंषि गुल्माय वा । वाचा त्वायतस्य स्वरसादायेति ॥ ३८ ॥

ऐकध्यमिति । एकत्र पायससुराकृशरास्त्यजेत् । ऐकध्यमिति एकाङ्गीध्यमुक्तिति ध्यमुञ् । मध्वित्यादि । मध्वादीनि समांशानि तुल्यप्रमाणानि मिथो विरुध्यन्ते । कथम् ? द्वे वा त्रीणि वा एकत्र वा सर्वाणि । यथा, मधुसर्पिषी ; मधुवसे ; माक्षिकतैले ; माक्षिकोदके ; त्रीणि त्रीणि यथा,—मधुसर्पिर्वसा इत्येवमादि । ननु यद्येवंविधो विरोध उच्यते तत्कथमगस्त्यलेहे "कुडवञ्च पृथग् घृतात् । तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्" इति तैलघृतमधूनां तुल्यांशानां प्रयोगः ? ब्रूमः ;—केवलानां मध्वादीनां समांशानामुपयोगो विरुद्धो न तु द्रव्यान्तरसंयोगेन । तेषां संयोगसंस्कारादिवशाद्विशिष्टगुणान्तरोत्पत्तिर्दृष्टा । तस्मादगस्त्यलेहादौ द्रव्यान्तरे संयोगादिवशादविरोध एव ॥ ३९ ॥

भिन्नांशे इति । भिन्नांशे अपि मध्वाज्ये दिव्यवार्य्यनुपानतोऽनुपानेन विरुध्येते । तृतीयार्थे तसिप्रत्ययः । अपिशब्दोऽत्र केवलं समांश इत्यर्थः । मधुमाक्षिकं पुष्करबीजं चैकध्यं विरुध्यते । तथा मधुमार्द्वीकं मैरेयं खर्जूरासवं शार्करं शर्करया कृतं मद्यमेकत्रोपयुक्तं विरुध्यते । चैरेयः पायसो मन्थानुपानो विरुद्धः । मन्थोऽनुपानं यस्य स एवम् । चैरेय इति चीराड्ढञ् । हारिद्रः कुप्रसवः शाकविशेषः सार्षपचानुकारी पीताभासः कटुतैलवान् सर्षपतैलभृष्टो विरुद्धः ॥ ४० ॥

उपोदकेति । उपोदका तिलकल्केन साधिता अतिसाराय । तादर्थ्ये चतुर्थ्येव । अर्थो निमित्तम् ; तस्मै इदं तदर्थं तदर्थमेव तादर्थ्यम् । तेनातीसारकारणमित्ययमर्थो

बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ।
भृष्टा वराहवसया सैव सद्यो निहन्त्यसून् ॥ ४२ ॥
तद्वत्तित्तिरिपत्राढ्य-गोधालावकपिञ्जलाः ।
ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्च्छिताः ॥ ४३ ॥
हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ।
हारिद्रवह्निना सद्यो व्यापादयति जीवितम् ॥ ४४ ॥
भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ॥ ४५ ॥
यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ।
विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ॥ ४६ ॥
द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिः ॥ ४७ ॥

---

जायते । बलाका पक्षिजातिर्वारुण्या प्रसन्नया युक्ता विरुद्धा । कुल्माषैर्नातिस्विन्नमुद्गादिभिश्च सह विरुध्यते । सैव बलाका वराहवसया भृष्टा सद्यस्तत्क्षणादेव प्राणान् मारयति । ४१ । ४२ ॥

तद्वदिति । तित्तिर्यादय ऐरण्डेनाग्निना सिद्धास्तत्तैलेनैरण्डतैलेन विमूर्च्छिता यद्भृष्टा भृष्टास्तद्वद् बलाकावत् सद्यो जीवितहराः । पत्राढ्यो मयूरः । हारीतेत्यादि । हारीतस्य पक्षिविशेषस्य मांसं हारिद्रशूलके प्रोतमासक्तञ्च तत्पाचितञ्च हारिद्राग्निना सद्यो जीवितं हन्ति । भस्मेत्यादि । तदेव हारीतमांसं भस्मपांशुपरिध्वस्तं समाक्षिकं विरुद्धम् । भस्म च पांशुश्च भस्मपांशू भस्मरेणू ताभ्यां परिध्वस्तं धूसरितम् । सिद्धसारे चोक्तम् ; "न जातु कटुतैलेन भृष्टामद्यादुपोदकाम् । प्रियङ्गुकल्कस्निग्धाङ्गः पायसं न समाचरेत्" इति ॥ ४३—४५ ॥

द्रव्याणामानन्त्यात्प्रतिपदोक्त्याऽशेषविरुद्धसंग्रहः कर्तुमशक्य इति तत्संग्रहार्थं व्यापि वचनमाह ;—यदित्यादि । यत्किञ्चिदन्नपानौषधं वा दोषमुत्क्लेश्य स्वस्थानात्सञ्चाल्य न हरेद्बहिर्न निष्कासयेत् तत्समासतः संक्षेपतो विरुद्धम् । शुद्धिरत्रेष्टा । अत्र विरुद्धाहारकृते विकारे शुद्धिर्वमनविरेकादिरूपा इष्टा श्रेष्ठा । कुपितदोषसमूहस्य वमनादिभिर्निर्हरणान्निर्हारे चारोग्योत्पत्तिः । शमोवेति । न केवलं शुद्धिरिष्टा शमश्चेष्टः । कैः ? तेषां वैरोधिककोपितदोषाणां तत्कृतानां वा विस्फोटादीनां विकाराणां विरोधिभिः प्रतिपक्षभूतैरौषधैः ॥ ४६ ॥

नच शोधनशमनरूप एवोपक्रमोऽस्तीत्याह,—द्रव्यैरिति । तैरेव वैरोधिककुपितदोषप्रतिपक्षभूतैर्द्रव्यैः पूर्वं प्रथमं वा शरीरस्याभिसंस्कृतिः सा च विरुद्धाहारकृते विकारे प्रशस्तेति । यथा माक्षिकहरीतक्यादिना पित्तश्लेष्महरणौषधेन सन्ततशीलनादभिसंस्कृते देहे पित्तश्लेष्मकरं विरुद्धमुपयुक्तं सदविकर्तुमशक्तम् । एतदुक्तं भवति । विरुद्ध-

व्यायामस्निग्धदीप्ताग्नि-वयःस्थबलशालिनाम् ।
विरोध्यपि न पीडायै सात्म्यमल्पञ्च भोजनम् ॥ ४८ ॥
पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ।
निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ॥ ४९ ॥

---

प्रतिपक्षगुणवता द्रव्येण देहस्तथा दार्ढ्यं ग्राहितो यथा विरुद्धमपि द्रव्यं विकारं कर्तुं नालम् । व्यायामेत्यादि । व्यायामो विद्यते येषामित्यर्श आदित्वादच् । वयःस्थास्तरुणाः । बलेन शालितुं श्लाघितुं शीलं येषां ते बलशालिनः । स्निग्धाः स्निग्धाहारसात्म्याः । व्यायामिनां विरोध्यपि भोजनं न पीडायै न रोगोत्पत्तये । एवं स्निग्धादीनां प्रत्येकं सम्बन्धः कार्यः । केचिद्व्यायामीति पठन्ति । तथाविरुद्धमप्यन्नं यदभ्यासात् सात्म्यं सात्मीभूतं तथाऽल्पमल्पमात्रया च तद्भोजनं तच्च विरुद्धमपि न पीडायै इति योज्यम् ॥ ४७ । ४८ ॥

अथ यदपथ्यमपि सात्म्यतां प्राप्तं तत् किं त्याज्यं न वा । कथञ्च त्याज्यं कथञ्च पथ्यं भोज्यमित्याह ;—पादेनेति । अपथ्यमहितमन्नं पानं वा यच्चाङ्गनाप्लवनजागरणस्वप्नादिकं वा चेष्टितमहितमभ्यस्तं तत्पादेन चतुर्थांशेन त्यजेदहितफलत्वात् । तद्धि शरीरोचितमप्यपथ्यत्वादुदर्के दोषाय सम्पद्यते न गुणाय । यदि तु तदपथ्यमभ्यस्तं तथा सात्मीभूतं यस्मिंश्चतुर्थांशेनापि त्यज्यमाने शरीराबाधा शक्यते वह्निमान्द्याद्वा तदा पादपादेन वा षोड़शांशेन त्यजेदिति वाशब्दार्थः । तेन तुल्यं वर्त्तते तद्वत् । तेनैव क्रमेण पादेन पादपादेन वा हितं निषेवेत शीलयेत् । कथमेतद्द्वयमप्यपथ्यरूपं त्याज्यं निषेव्यं चेत्याह,—एकेत्यादि । एकश्च द्वौ च त्रयश्च तैरन्तरीकृतम् । एकद्वित्रिभिरन्नकालैर्व्यवधानं कृत्वाऽपथ्यं पादेन पादपादेन वा त्यजेत् । एकद्वित्र्यन्तरीकृतमिति क्रियाविशेषणत्वादत्र नपुंसकलिङ्गत्वम् । अधुनैतदेव स्पष्टीकृत्योच्यते । अपथ्यात्पाटलव्रीह्यादेरभ्यस्तात्पादमेकन्त्यक्त्वाऽनुचितात् पथ्याद्रक्तशाल्यादेस्तमेव पादं दत्त्वा चतुष्पात्त्वं सम्पाद्य योज्यम् । एवमन्नकालमेकमतिवाहयेत् । एवं पादेनापथ्यमभ्यस्तं त्यक्तं भवति । पथ्यञ्चानुचितं निषेवितं भवति । तथा द्वितीयेऽन्नकाले सर्वमपथ्यं योजनीयम् । एवमेकेनान्नकालेनापथ्यपादोऽन्तरीकृतः । ततस्तृतीयेऽप्युचितादपथ्यात्पादद्वयमपास्यानुचितात्पथ्यात्पादद्वयमुपयुज्य ततश्चतुर्थे सर्वमपथ्यं भोज्यं पञ्चमे च । एवमन्नकालद्वयेन पथ्यपादद्वयसहितमपथ्यपादद्वयमन्तरीकृतम् । ततः षष्ठेऽन्नकाले पादमुचितादपथ्यात्पादत्रयमनुचितात्पथ्याद्दत्त्वा सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम् । एवमन्नकालत्रयेणापथ्यमन्तरीकृतम् । ततो दशमेऽन्नकाले सर्वं पथ्यं सेवनीयम् । एवं पादपादेनाप्ययमेव क्रमः । स्पष्टार्थञ्च दिक् प्रदर्श्यते । तथा यवकादेः षोड़शांशं त्यक्त्वाऽनुचिताच्छाल्यादेः पथ्यात् षोडशांशमेव दत्त्वा चतुष्पात्त्वं सम्पाद्य भोज्यम् । एवमपथ्यमभ्यस्तं पादपादेन त्यक्तं भवति पथ्यं चानुचितं निषेवितं भवति । द्वितीयेऽन्नकाले सर्वमपथ्यं सेव्यम् । एवमेकेनापथ्यषोडशांशोऽन्तरीकृतः । ततस्तृतीयेऽप्युचितादपथ्यात्पादपादद्वयमपास्यानुचितात्पथ्यात्पादद्वयं दत्त्वा चतुष्पात्त्वं सम्पाद्य सेव्यम् । ततश्चतुर्थे पञ्चमे चान्नकाले

अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा।
सात्म्यासात्म्यविकाराय जायते सहसान्यथा ॥ ५० ॥
क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः।
नाप्नुवन्ति पुनर्भावमप्रकम्प्या भवन्ति च * ॥ ५१ ॥
अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम्।
अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ॥ ५२ ॥
आहारशयनब्रह्म-चर्य्यैर्युक्त्या प्रयोजितैः।
शरीरं धार्य्यते नित्यमागारमिव धारणैः ॥ ५३ ॥
आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ॥ ५४ ॥

---

सर्वमपथ्यं भोज्यम्। एवं कालद्वयेन पादपादद्वयमपथ्यस्यान्तरीकृतम्। ततः षष्ठेऽन्नकालेऽनुचितात्पथ्यात्पादपादद्वयमुचितादपथ्यात् पादपादास्त्रयोदशेति भोज्यम्। ततः सप्ताष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम्। एवं कालत्रयेणान्तरीकृतः ततो दशमेऽन्नकाले पथ्यादनुचितात् पादपादाश्चत्वारः। अपथ्यपादपादा द्वादशेति भोज्यम्। तत एकादशे सर्वमपथ्यं भोज्यम्। ततः एकेनान्नकालेनान्तरीकृतम्। एवमन्नकालद्वयत्रयान्तरितञ्च तावद्भोज्यं यावत्पथ्यस्य षोडशपादाः सेव्यतया सम्पद्यन्ते ॥ ४९ ॥

एवमनेन क्रमेणापथ्यदोषास्त्यक्ताः पीडायै न भवन्ति पथ्यगुणाश्च सम्वर्द्धिताः स्थिरतां प्राप्नुवन्तीत्यत आह ;—अपथ्यमिति। हि यस्मात्सहसा क्रममिममनालोच्यान्यथैवोक्तविध्यतिक्रमेणापथ्यमपि त्यक्तं सात्म्यं विकाराय जायते पथ्यमेव वा सहसा शीलितमसात्म्यं विकाराय जायते सात्म्यासात्म्याभ्यां विकारः सात्म्यासात्म्यविकारस्तस्मै। क्लृपिसम्पद्यमाने चतुर्थीति चतुर्थी ॥ ५० ॥

क्रमेण त्वपथ्यत्यागपथ्यशीलने विधीयमाने गुणाय स्यातामिति दर्शयति ;—क्रमेणेत्यादि। दोषा अपथ्याभ्यासजाः क्रमेण पूर्वोक्तेनापचिताः क्षयं नीता गुणाश्च पथ्योपयोगजाः क्रमेण पूर्वोक्तेनैवोपचिता वृद्धिं नीताः सन्तः पुरुषाणां यथासङ्ख्यमपुनर्भावं यान्ति दोषाः। गुणाश्चाप्रकम्प्याः स्थिरा भवन्ति ॥ ५१ ॥

साम्प्रतमहिताहारसेवनं सदा त्याज्यमिति सद्युक्तिं दर्शयति ;—अत्यन्तेत्यादि। दोषाणामहितैराहारादिभिर्दूषणं कर्तुं विद्वान् पण्डितो नार्हति न युज्यते। किम्भूतानाम् ? अत्यन्तमतिशयेन सन्निधानं निकटत्वं येषां दोषाणां त एवं तेषां दूषणात्मनां दूषणस्वभावानाम् ॥ ५२ ॥

एतत्प्रसङ्गेन चेदमाह ;—आहारेत्यादि। शयनं स्वप्नः। ब्रह्मचर्य्यं स्त्रीणामसेवा। आहारादीनां द्वन्द्वः। एतैर्युक्त्या प्रयोजितैः शरीरं सततं धार्य्यते। किमिव कैः ? आगारं गृहमिव धारणैः स्तम्भैर्यथा। आहार इति। तत्र तेषु

---

* सतां यात्यपुनर्भावं इत्यपि पाठः।

निद्रायत्तं सुखं दुःखं पुष्टिं कार्श्यं बलाबलम् ।
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥ ५५ ॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।
सुखायुषी पराकुर्य्यात् कालरात्रिरिवापरा ॥ ५६ ॥
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥ ५७ ॥

---

त्रिषु मध्यादाहारो वर्णित ऋतुचर्य्यायां द्रवान्नस्वरूपविज्ञानीययोः । तत्र तत्र च शास्त्रकारो ज्वरचिकित्सादौ च वक्ष्यति । शयनब्रह्मचर्य्ययोस्त्विहैव विधिं वक्तुकाम आह ;—निद्रायत्तमिति । निद्रायत्तं निद्राधीनं सुखमारोग्यं दुःखं रोगस्तथा पुष्ट्यादि च । न च जीवितमिति सम्बन्धः । अजीवितेन योगो भवतीत्यर्थः । साम्प्रतं दुष्टनिद्रां निर्दिशति ;—अकाल इति । अकाले निषेविता अति च निषेविता किञ्चिदेव निषेविता निद्रा सुखमारोग्यलक्षणमायुश्च जीवितं ते सुखायुषी पराकुर्य्यान्नाशयेत् । केव ? अपरा कालरात्रिरिव ॥ ५३—५६ ॥

अथ निद्रागुणप्रसङ्गेन तत्प्रतिपक्षभूतस्य जागरणस्यापि गुणमाह ;—रात्राविति । अपिशब्दावत्र सामर्थ्यलब्धौ बोद्धव्यौ । तेन रात्रावपि जागरणं रूक्षम् । दिवा त्वाग्नेयमत्यर्थं रूक्षं कालेनाहितबलत्वात् । तथा प्रस्वपनं दिवापि स्निग्धम् । रात्रौ तु सौम्यकालेऽतिशयेन स्निग्धमित्यवतिष्ठते । अपिशब्दाभ्यामन्तरेण तु रात्रावेव जागरणं रूक्षं दिवा तु स्निग्धमित्यर्थो जायते । व्यवच्छेद्यफलत्वाद्वाक्यानाम् । एवं दिवस एव स्निग्धं प्रस्वपनं रात्रौ तु रूक्षमिति । न चैतद्युज्यते ततो दिवाजागरणं सदा रूक्षं नाभविष्यत् तत्कथमिदमुपपत्स्यते । "बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि । विषार्त्तः कण्ठरोगी च नैव जातु निशास्वपि" इति । येषां ह्यपतर्पणमेव हितं यच्चापतर्पणं तदवश्यं रूक्षम् । तस्मादपतर्पणस्वभावं जागरणमेव सेव्यम् । तथा ; "ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः । दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः । मुक्ता तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः । क्रोधशोकभयैः क्लान्तान् श्वासहिक्कातिसारिणः । वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् । अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि ।" तदेतेषां सन्तर्पणार्हत्वात्सन्तर्पणमेव हितम् । यच्च सन्तर्पणं तदवश्यं स्निग्धम् । तस्मादेतैः सन्तर्पणस्वभावमेव सदा प्रस्वपनं सेव्यम् । एवञ्च पूर्वमेव च व्याख्यानं युक्तम् । प्रस्वप्नजागरणक्रिययोरद्रव्ययोरपि रूक्षस्निग्धत्वमुपचारादुपपन्नम् । यथा रूक्षं द्रव्यं गुग्गुल्वादि कफमेदःप्रभृतीन् सौम्यान् भावान् क्षपयति, तथैव यदा जागरणमपि तत्क्षपयद्दृष्टं तदा तद्रूक्षकार्य्यकरणाद्रूक्षमपि रूक्षमित्युपचर्य्यते । तथा प्रस्वपनादर्वाक् कफमेदःप्रभृतीनां सौम्यानां भावानां स्वहेतोरुत्पादस्तथा नोपलभ्यते । यथा प्रस्वापनादनन्तरं तस्मात् प्रस्वपनमस्निग्धमपि स्निग्धमित्युपचर्य्यते । प्रचल इवाचरतीति क्यङन्तान्निष्ठा । आसीनस्योपविष्टस्य प्रचलायितं आसीनप्रचलायित न तु

ग्रीष्मे वायुचयादान-रौक्ष्यरात्र्यल्पभावतः।
दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः॥ ५८॥
मुक्त्वा तु भाष्ययानाध्व-मद्यस्त्रीभारकर्मभिः।
क्रोधशोकभयैः क्लान्तान् श्वासहिक्कातिसारिणः॥ ५९॥
वृद्धबालाबलक्षीण-क्षततृट्शूलपीड़ितान्।
अजीर्ण्यभिहतोन्मत्तान् दिवास्वप्नोचितानपि।
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति॥ ६०॥
बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि।
विषार्त्तः कण्ठरोगी च नैव जातु निशास्वपि॥ ६१॥
अकालशयनान्मोह-ज्वरस्तैमित्यपीनसाः।

---

प्रस्वपनं सर्वसर्विकया; येन स्नेहनहेतुः स्यात्। रूक्षकार्य्याकरणाद्रूक्षम्। अनभिष्यन्दि तु विशेषेण। आसीनप्रचलायितं पुनरीदृग्रूपमित्यर्थः॥ ५७॥

यदि स्निग्धत्वादभिष्यन्दी दिवास्वप्नस्तत्किं कदाचिदपि न कार्य्य इत्याह;—ग्रीष्म इत्यादि। ग्रीष्मकाले दिवास्वप्नो हितः। यतस्तस्मिन् काले पवनचयो भवति। आदानस्य च परिपुष्टत्वादतिरौक्ष्यं भवति। रात्रयश्च निद्रासमाप्त्ययोग्या अल्पा भवन्ति। दिवास्वप्नश्च सन्तर्पकः। ग्रीष्मादपरस्मिन् काले कफपित्तकरः। सोऽचिन्त्यत्वाद्धेतुप्रभावस्य भाष्यादिक्लान्तादीन् मुक्त्वा वर्जयित्वा। तेनैतदुक्तं भवति;—ग्रीष्मादपरस्मिन्नपि काले स्वप्न एषां हित एव। यानमश्वादि; क्षतः खङ्गादिच्छिन्नः; अभिहतो लगुडादिना; स्वप्नोचिताः शीलितदिवास्वप्नाः। तत्र भाष्यादिक्लान्तानां पवनाकोपात् स्वप्नोऽनुज्ञातः। श्वासहिक्कादीनां वेगविस्मरणार्थम्। वृद्धादीनां यथायथं सन्तर्पणार्थं वेगविस्मरणार्थञ्च। अजीर्णिनां दिवास्वप्नोचितानाञ्च धातुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतस्तन्त्रज्ञता। तथा चोक्तम्;—"उचितो हि दिवास्वप्नो येषां नित्यं शरीरिणाम्। वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा" इति। ननु अजीर्णिनां दिवास्वप्नो न युक्तो दिवास्वप्नस्य कफवृद्धिकरत्वात्, कफवृद्ध्या चाग्निमान्द्यम्, अग्निमान्द्यादजीर्णान्नस्यापाक इत्ययुक्तस्तेषां दिवास्वप्नः। अत्रोच्यते;—दिवास्वप्नेनाजीर्णिनां धातुसाम्यं भवति। धातुसाम्ये च सति स्वस्थानस्थितैर्दोषैरनुपहतो वह्निः पचनक्षमो भवति। कफस्तु वृद्धोऽपि नैतेषामग्निमान्द्यं विधत्ते। अपि त्वङ्गानां पुष्टिमादधाति अतएवानन्तरमेवोवाच शास्त्रकारः। "धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति" इति॥ ५८—६०॥

बहुमेद इति। तथा बहुमेदःश्लेष्माणः स्निग्धाहारादिशीलिनश्च ग्रीष्मेषु अहनि न स्वप्युः। विषार्त्तः कण्ठरोगी च रात्रिष्वपि कदाचिदपि न स्वप्यात्। अकालेत्यादि। अकाले शयनं स्वप्नोऽकालशयनं तस्मादकालशयनान्मोहादयः स्युः। स्तैमित्यं गात्राणां

शिरोरुक्शोफहृल्लास-स्रोतोरोधाग्निमन्दताः ॥ ६२ ॥
तत्रोपवासवमन-स्वेदनावनमौषधम् ।
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥ ६३ ॥
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ।
एभिरेव च निद्राया नाशः श्लेष्मातिसङ्क्षयात् ॥ ६४ ॥
निद्रानाशादङ्गमर्द-शिरोगौरवजृम्भिकाः ।
जाड्यं ग्लानिभ्रमापक्ति-तन्द्रारोगाश्च वातजाः ॥ ६५ ॥
यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ।
असात्म्याज्जागरादर्द्धं प्रातः स्वप्यादभुक्तवान् ॥ ६६ ॥
शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ।
अभ्यङ्गोद्वर्त्तनस्नान-मूर्द्धकर्णाक्षितर्पणम् ॥ ६७ ॥
कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ।
मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः ॥ ६८ ॥
ब्रह्मचर्य्यरतेर्ग्राम्य-सुखनिस्पृहचेतसः ।

---

निरुत्साहत्वम्। अत्र च का चिकित्सेत्याह;—तत्रेत्यादि। तेषु अकालस्वप्नजेषु रोगेषु उपवासाद्यौषधं योजयेत्। निद्रायाश्च बाहुल्येन रात्रिः कालः। तथा चोक्तम्;—"लोकादिसर्गप्रभवा तमोमूला तमोमयी। बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते" इति। अतिनिद्रायां सत्यां तीक्ष्णानि वमनाञ्जननस्यानि योजयेत्; लङ्घनादि च। एभिरेव च तीक्ष्णवमनादिभिर्निद्राया नाशो भवति। श्लेष्माख्यस्य धातोरतिशयेनापचयात्। सम्प्रति निद्रानाशजान् विकारानाचष्टे;—निद्रेत्यादि। निद्रानाशादङ्गमर्दादयो वातोत्थाश्च रोगाः स्युः ॥ ६१—६५ ॥

यथाकालमिति। यतश्च सम्यक् सेवितायाः निद्राया असम्यक् सेवितायाश्च अनन्तरोक्ता गुणा दोषाः। अतोऽस्माद्धेतोः कालानतिक्रमेण सात्म्यतो यामद्वयं त्रयं वा निशि निद्रां भजेत्। असात्म्याज्जागरादर्द्धेन स्वप्न इष्यते। किं तर्हि यो यावन्तं कालमुचितं स्वपिति, तस्मात् कालादर्द्धेन प्रातः स्वप्यात्। अभुक्तवानभुक्तः सति। असात्म्यग्रहणेनैतद् द्योतयति;—न सर्वस्य रात्रावसुप्तस्य जागरणकालादर्द्धेन दिवास्वप्न इष्यते; किं तर्हि? यो यावन्तं कालमुचितं स्वपिति, तस्मात्कालाद्यावन्तं कालं जागृयात् तावतोऽर्द्धेनासौ स्वप्यात्। केचित् हि स्वल्पनिद्राः स्वभावतो भवन्ति ॥ ६६ ॥

शीलयेदिति। यो यो मन्दनिद्रः स क्षीरादीन् शीलयेत्। कान्ताबाहुलताश्लेषादयो निद्रासुखहेतवः। कान्ताबाहुलताश्लेषग्रहणमाश्लेषमात्रमेव निद्रासुखहेतुर्न तु

निद्रासन्तोषतृप्तस्य स्वङ्कालं नातिवर्त्तते ॥ ६९ ॥
ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ।
अप्रियामप्रियाचारां दुष्टसङ्कीर्णमेहनाम् ॥ ७० ॥
अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ।
वर्णिनीमन्ययोनिञ्च गुरुदेवनृपालयम् ॥ ७१ ॥
चैत्यश्मशानायतन-चत्वराम्बु चतुष्पथम् ।
पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम् ॥ ७२ ॥
अत्याशितोऽधृतिः क्षुद्वान् दुःस्थिताङ्गः पिपासितः ।
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥ ७३ ॥
सेवेत कामतः कामं तृप्तो वाजीकृतो हिमे ।
त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः ॥ ७४ ॥

---

ग्राम्यधर्मसेवेति दर्शनार्थम् । अतएवानन्तरमाह ;—"ब्रह्मचर्य्यरतेर्निद्रा स्वकालं नातिवर्त्तते" इति । ब्रह्मचर्य्यरतस्याप्यनुगतो मैथुनाभिलाषो निद्रां नाशयेदित्याह ;—ग्राम्येति । ग्राम्यसुखे निःस्पृहं चेतो यस्य स तस्य तथा सन्तोषतृप्तस्य ॥ ६७—६९ ॥

यदा तु ग्राम्यधर्मेण विना न रतिरपत्यार्थिता वा तदा तदधिकारार्थमुच्यते ;—ग्राम्यधर्म इत्यादि । ग्राम्यधर्मे स्त्रीपुंसयोगविषये अनुत्तानां स्त्रियं त्यजेदुत्तानां भजेदित्यर्थः । तथा रजस्वलत्वादियुतां त्यजेत् । दुष्टं व्याधिमलादिभिः सङ्कीर्णं सङ्कुचन्मेहनं योनिर्यस्यास्ताम् । तथा वर्णिनीं ब्रह्मचारिणीम् । अन्ययोनिमजामहिष्यादिञ्च त्यजेत् । गुर्वित्यादि । ग्राम्यधर्मनिर्वर्त्तने गुरुदेवनृपालयांस्त्यजेत् ; तथा चैत्यादींस्त्यजेत् ; तेषु स्त्रियं न सङ्गच्छेदित्यर्थः । चैत्यादीनां पर्य्याया दिनचर्य्यायामुक्ताः ; आयतनं दुष्टानां निग्रहस्थानञ्च ; पर्वाणि रविसंक्रान्त्यादींस्त्यजेत् ; तेषु कामं न सेवेतेत्यर्थः । तथा अनङ्गम् ; अङ्गं जघनम् ; नाङ्गमनङ्गमङ्गसदृशं जघनकार्य्यनिर्वर्त्तनयोग्यं मुखादिकमुच्यते ; दाक्षिणात्या हि मुखेन कुर्वन्ति ; तन्निषिध्यते ; दिवसञ्च त्यजेत् ; दिने रतं न कुर्वीतेत्यर्थः । मूर्द्धवक्षोऽभिघातञ्च त्यजेत् । अत्याशितादयः सुरतं त्यजेयुः । अत्याशितोऽतिभुक्तः ; अधृतिर्दुर्मनाः ; अन्यवेगार्त्तः पुरीषादिवेगातुरः ; ननु क्षुद्वान् क्षुद्वेगार्त्त उच्यते ; ततो अन्यवेगार्त्त इत्यनेनैवास्यार्थस्य लब्धत्वात् किं क्षुद्वानित्यनेन ? सत्यमेतत् ; अतिशयार्थं त्वेतत् । यथा क्षुद्वेगार्त्तः स्त्रियं गच्छन्नतिशयेन पीडया बाध्यते न तथाऽन्यवेगार्त्त इति ॥ ७०—७३ ॥

सम्प्रति ऋतुविशेषे निधुवनं नियमयति ;—सेवेतेत्यादि । तृप्तो वाजीकरणैः सञ्जातसन्तर्पणः सन् कामतो यथेच्छया हिमे हेमन्ते शिशिरे च कामं यथेच्छं सेवेत । वाजीकृतामिति सम्पदादित्वात् क्विप् । हत इति कोऽधिकारणे च ग्रीष्मेत्या-

भ्रमक्लमोरुदौर्बल्य-बलधात्विन्द्रियक्षयः ।
अपर्वमरणञ्च स्यादन्यथा गच्छतः स्त्रियम् ॥ ७५ ॥
स्मृतिमेधायुरारोग्य-पुष्टीन्द्रिययशोबलैः ।
अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ॥ ७६ ॥
स्नानानुलेपनहिमानिलखण्डखाद्य-
शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ।
सेवेत चानुशयनं विरतौ रतस्य
तस्यैवमाशु वपुषः पुनरेति धाम ॥ ७७ ॥
श्रुतचरितसमृद्धे कर्मदक्षे दयालौ
भिषजि निरनुबन्धं देहरक्षां निवेश्य ।
भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः
स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ ७८ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने सप्तमोऽध्यायः ॥ ७ ॥

---

दिनाऽधिकरणे क्तः । अधिकरणवाचिनश्चेति षष्ठी । वसन्ते शरदि च त्र्यहात् त्र्यहमतिक्रम्य मैथुनं निषेवेत । वर्षाग्रीष्मयोः पक्षात् कामं भजेत् । भ्रमेत्यादि । अन्यथा उक्तविधेरन्येन प्रकारेण स्त्रियं गच्छतो भ्रमादयः स्युः । अपर्वण्यकाले मरणमपर्वमरणम् । स्मृतीत्यादि । स्त्रीषु संयताः स्त्रीः सम्यक् सेवमानाः स्मृत्यादिभिरधिका अल्पजराश्च भवन्ति ॥ ७४—७६ ॥

स्नानेत्यादि । रतान्ते यथौचित्येन स्नानादीन् सेवेत । खण्डखाद्यं खण्डकृतं कणिकेत्यादि ; रसो मांसरसः । चानुशयनमिति । अनु पश्चाच्च स्वप्नं सेवेत । तस्मात् स्नानादिसेविनः शरीरस्य एवमस्मिन् कृते धाम तेजो भूय आगच्छति । शौजौ वसन्ततिलकं गुरुकद्वयञ्च । स्नानाङ्गरागव्यजनेन्दुपादयूषासवक्षीररसान् रसालम् । पश्चात् सिताढ्यान् सलिलं सुशीतं सेवेत निद्राञ्च रतान्ततान्त इति ॥ ७७ ॥

एतच्च पूर्वोक्तं हिताहितं सर्वं वैद्य एव वेत्ति ; तस्माद्वैद्यस्य सर्वथा शरीरं राज्ञा निवेद्यमिति दर्शयन्नाह ;—श्रुतेत्यादि । भिषजि शरीररक्षणं निरनुबन्धं निर्विकल्पमाधाय बहुकालमात्मीयश्रेष्ठफलभोगवान् । तथा तेजश्च स्वास्थ्यञ्च कीर्त्तिश्च प्रभावश्च एवं विपुला विस्तीर्णास्तेजःस्वास्थ्यकीर्त्तिप्रभावा यस्य स एवम्विधः । कीदृशे भिषजि ? श्रुतं शास्त्रावबोधः ; चरितमाचारः ; ताभ्यां समृद्धे सम्पूर्णे ; तथा क्रियाचतुरे ; तथा कृपालौ । वसुसुनिविरतिश्चेन्मालिनी नौ मयौ यः ॥ ७८ ॥

इति श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामन्नपानरक्षाध्यायः सप्तमः ॥ ७ ॥

# अष्टमोऽध्यायः ।

अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्त्तिका ।
मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥ २ ॥

गुरूणामर्द्धसौहित्यं लघूनां नातितृप्तता ।
मात्राप्रमाणं निर्दिष्टं सुखं यावत् विजीर्य्यति ॥ ३ ॥

भोजनं हीनमात्रन्तु न बलोपचयौजसे ।
सर्वेषां वातरोगाणां हेतुताञ्च प्रपद्यते ।
अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ॥ ४ ॥

---

अन्नरक्षाध्यायानन्तरं मात्राशितीयो युक्तः । यतो विषादिभ्यो रक्षितमन्नपानं हीनमात्राभ्यवहृतं जीवितोपघाताय सम्पद्यते । मात्राभ्यवहृतं प्राणिनां प्राणाय । अथेत्यानन्तर्य्ये ; यथा, अथातो धर्मजिज्ञासेति वेदाध्ययनादनन्तरं धर्मो जिज्ञासितव्य इत्यर्थः । अत इति प्रस्तुताभिसम्बन्धः । अशनमशितम् । भावे निष्ठा । मात्रया अशितं तस्मै हितो मात्राशितीयः । शेषं पूर्ववद्व्याख्येयम् ॥ १ ॥

मात्राशीति । सर्वकालं स्वस्थ आतुरो वा मात्राशी स्यात् परिमिताशी भवेत् । कुतो हेतोः ? हि यस्मान्मात्राग्नेः प्रवर्त्तिका स्वव्यापारे । अग्निप्रवृत्तिश्च देहस्थिति-हेतुः । तथा चोक्तम् ;—"अग्निमूलं बलं पुंसां बलमूलं हि जीवितम्" इति । तस्मान्-मात्रायाः प्राधान्यम् । अस्माच्च कारणान्मात्रायाः प्राधान्यं यतो मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघूनि च । तत्र गुरूणि पिष्टक्षीरद्राक्षाक्षोडेक्षुमाषानूपमांसादीनि । लघूनि दिव्योदक-रक्तशालिषष्टिक-मुद्ग-लाव-कपिञ्जलैण-शश-शम्बरादीनि ॥ २ ॥

तत्र गुरूणां का मात्रा का लघूनामित्याह ;—गुरूणामिति । गुरूणां द्रव्याणा-मर्द्धसौहित्यमर्द्धतृप्तिः ; लघूनां नातितृप्तता नातितृप्तिः ; किं तर्हि ? सौहित्य-मात्रम् । एतन्मात्राप्रमाणं निर्दिष्टम् । मात्रा ह्रस्वा मध्या बृहती च, तस्याः प्रमा-णम् । तत्र प्रमाणं मानम् तस्यास्तु प्रमाणमुन्मानम् । एवञ्चात्र मात्राशब्दस्यापौन-रुक्त्यम् । हि यस्मात्तावत्परिमाणमभ्यवहृतं सुखमविकृतिं कृत्वा परिणमति । एत-द्विपर्य्ययेण हीनमात्रं भोजनं वर्ज्यं दोषदर्शनात् । यथा चाह ;—भोजनमित्यादि । हीनमात्रं पुनरशनं न बलाय नोपचयाय न चौजसे । सर्वेषां वातरोगाणां कारणतां याति । अतिमात्रं त्वशनं त्रीनपि दोषान् शीघ्रमेव प्रकोपयति ॥ ३ । ४ ॥

पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ।
आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ॥ ५ ॥
विष्टम्भयन्तोऽलसकं च्यावयन्तो विसूचिकाम् ।
अधरोत्तरमार्गाभ्यां सहसैवाजितात्मनः ॥ ६ ॥
प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ।
आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ॥ ७ ॥
विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ।
सूचीभिरिव गात्राणि विध्यतीति विसूचिका ॥ ८ ॥
तत्र शूलभ्रमानाह-कम्पस्तम्भादयोऽनिलात् ।
पित्ताज्ज्वरातिसारान्तर्दाहतृट्प्रलयादयः ।
कफाच्छर्द्यङ्गगुरुता-वाक्सङ्गष्ठीवनादयः ॥ ९ ॥
विशेषाद्दुर्बलस्याल्प-वह्नेर्वेगविधारिणः ।
पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ॥ १० ॥

---

कुपिताश्च त्रयो दोषा अलसकाख्यं विसूचिकाख्यं वा व्याधिं यथा कुर्वन्ति तथा दर्शयति,—पीड्यमाना इति । तेनापक्वेनाहारेण दुष्टेन वाताद्या हि यस्मात्पीड्यमाना विबध्यमाना रुद्धमार्गत्वादतएव युगपदेककालं सर्व एव कोपितास्तदेव दुष्टमन्नमाविश्यालसकं कुर्वते । किं कुर्वन्तः ? विष्टम्भयन्तस्तदेव दुष्टमन्नं स्रोतःसु रुन्धानाः । तथा अधरोत्तरमार्गाभ्यां सहसैवानुचिते देशे काले च्यावयन्त ऊर्ध्वमधश्च निष्कर्षयन्तः अजितात्मनः असंयतचेतसः पुंसो विसूचिकां कुर्वते ॥ ५ । ६ ॥

एतदेव सविस्तरमाह ;—प्रयातीति । ऊर्ध्वं मुखेनाहारो न प्रयाति न चाधस्ताद् गुदेन प्रयाति न चाहारः पच्यते । आमाशये "नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" तस्मिन्नलसीभूत इवालसीभूतः । यथा अकर्मशीलः पुरुषोऽलस इत्युच्यते तथायमाहारोऽलसीभूतस्तिष्ठति तेन हेतुना स रोगोऽलसकः स्मृतः ॥ ७ ॥

विसूचिकायास्तु निर्वचनमाह ;—विविधैरिति । वाय्वादीनां त्रयाणामत्यन्तप्रकोपात् नानाप्रकारैर्वेदनोद्भेदैः पीडोत्पादैर्यस्माद्गात्राणि सूचीभिरिव विध्यति तस्माद्विसूचिकेत्युच्यते । विविधानां विकाराणां सूचिका विसूचिका विसूचिकेत्युच्यते । तत्रेति । वातादधिकाच्छूलादयो भवन्ति । आदिशब्देनाङ्गोद्वेष्टनमुखशोषादिपरिग्रहः । पित्ताद्दाहज्वराद्याः स्युः । प्रलयो मूर्च्छाप्रायः । आदिशब्देन मदादिपरिग्रहः । कफादधिकाच्छर्द्यादयो भवन्ति । आदिशब्देन चवथ्वादीनां ग्रहणम् ॥ ८ । ९ ॥

विशेषादिति । दुर्बलत्वादियुक्तस्य यन्मारुतेन विशेषादन्नं पीडितमन्तरामाशयमध्य एव श्लेष्मणा रुद्धमलसीभूतं तथा दोषैः चोभितमाकुलितम्, अतएवातिपीडा-

अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।
शूलादीन् कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥ ११ ॥
सोऽलसोऽत्यर्थदुष्टास्तु दोषा दुष्टामबद्धखाः ।
यान्तस्तिर्यक्तनुं सर्वां दण्डवत् स्तम्भयन्ति चेत् ।
दण्डकालसकं नाम तं त्यजेदाशुकारिणम् ॥ १२ ॥
विरुद्धाध्यशनाजीर्ण-शीलिनो विषलक्षणम् ।
आमदोषं महाघोरं वर्जयेद् विषसंज्ञकम् ।
विषरूपाशुकारित्वाद् विरुद्धोपक्रमत्वतः ॥ १३ ॥
अथाममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।
पीत्वा सोग्रापटुफलं वार्य्युष्णं योजयेत्ततः ॥ १४ ॥
स्वेदनं फलवर्त्तिञ्च मलवातानुलोमनीम् ।

---

कारित्वाच्छल्यरूपत एव स्थितं तीव्रान् दुःसहान् शूलादीन् छर्द्यादिवर्जितान् कुरुते । छर्द्यतीसाराभ्यां विसूचिकोक्ता । सोऽलससंज्ञो रोगः । दुर्बलोऽल्पापचितधातुः, स न कदाचिदाहारं सोढुं शक्तः । अल्पाग्निश्चाहारं सम्यक् न जीर्य्यति । यतो वेग-धारणशीलस्य प्रतिहतो वायुर्विमार्गगः पित्तकफावपि विमार्गगौ कुरुत इत्येतद् विशेषेण निर्देशः । दण्डकालसकं लिलक्षयिषुराह ;—अत्यर्थेत्यादि । अतिशयेन दुष्टा दोषास्तथा दुष्टामेन बद्धानि पूर्णानि स्रोतांसि येषां ते दुष्टामबद्धखाः । तथा तिर्य्यग्-गच्छन्तः तनुं सर्वाङ्गं शरीरं सकलं दण्डवद् यदि स्तम्भयन्ति प्रसारणाकुञ्चनरहितं कुर्वन्ति तदा दण्डकालसको नाम रोगो भवति । तं दण्डकालसकं त्यजेन्नोपक्रमेत् । आशुकारिणं आशु शीघ्रं स्वकर्म्म मारणं करोतीत्याशुकारी । क्षिप्रं हन्ती-त्यर्थः ॥ १०—१२ ॥

सम्प्रत्यामविषं निर्दिशति ;—विरुद्धेत्यादि । विरुद्धं प्रागुक्तं विरुद्धमल्पमित्या-दिना । विद्यादध्यशनमित्यादिनाध्यशनम् । अजीर्णञ्च त्रिविधं वक्ष्यति । एतानि शीलितुं शीलं यस्य तस्य पुंसो य आमदोषो विषलक्षणकालादिलक्षणयुक्तो महाघोरो-ऽतिकष्टो विषाख्यो यो भवति तं न चिकित्सेत् । कुतः ? विषरूपत्वादाशुकारि-त्वाद् विरुद्धोपक्रमत्वाच्च । विषसदृशस्वरूपत्वात् विषे शीतोपक्रमो युक्त आमे चोष्णोप-क्रमो युक्त इति विरुद्धोपक्रमत्वम् ॥ १३ ॥

अलसकोपक्रमं निर्दिदिक्षुरिदमाह ;—अथाममिति । अथेत्यानन्तर्य्ये । पूर्वोक्तं साध्यासाध्यमवगम्यानन्तरमामं साध्यमदुष्टं सन्तं त्वरितं द्रागातुर उल्लिखेदुद्वमेदित्यर्थः । किंविधमामम् ? अलसीभूतम् । अलसलक्षणतां गतमुल्लिखेदित्याह ;—पीत्वेत्यादि । जलमुष्णं पीत्वा वचालवणमदनफलयुक्तं वमेदित्यर्थः । ततोऽनन्तरं स्वेदनं योजयेत् । वर्त्तिं कराङ्गुष्ठ-तथा, "विपाच्य सूनाम्लमयूनि दन्ती-पिप्पलीतक्रणानिडसधूकुष्ठैः । 

नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ॥ १५ ॥
विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते।
तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १६ ॥
तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम्।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम्।
निहन्यादपि चैतेषां विभ्रमः सहसातुरम् ॥ १७ ॥
जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे।
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ॥ १८ ॥
शान्तिरामविकाराणां भवति त्वपतर्पणात्।
त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत् ॥ १९ ॥

---

निभां घृताक्तां गुदे रुजानाहहरीं विदध्यात्" इत्यादि फलवर्त्तिञ्च मलवातानुलोमनीं योजयेत्। तत्रामदोषे दोषवशादङ्गानि च नाम्यमानानि सङ्कोच्यमानानि सन्त्यत्यन्त स्विन्नानि वस्त्रादिना वेष्टयेत् ॥ १४ । १५ ॥

विसूच्यामिति। विसूच्यां पूर्वोक्तलक्षणायामतिवृद्धायां सत्यांपार्ष्ण्योः खुरिकयोरयः-शलाकादिना दाहः प्रशस्यते। तदहर्विसूचिकावन्तमुपवास्य लङ्घयित्वा विरिक्तवत्पेया-दिक्रमेणोपाचरेत्। सुश्रुते चोक्तम्,—"सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे। भल्लातकमधूच्छिष्टसीसपिण्याकनागरैः। घृततैलं पचेत् साम्लैस्तच्च खल्लीघ्नमुत्तमम्। त्वक्पत्ररास्नागुरुशिग्रुकुष्ठै रम्लप्रपिष्टैः सवचाशताह्वैः। उद्वर्त्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वञ्च तदर्थकारि॥ शिरीषनक्ताह्वफणिज्झबीजत्रायन्त्यपामार्गफलानि वर्त्तिः। बस्तस्य मूत्रेण विसूचिकाघ्नी प्रलेपनस्याञ्जनधूमयोगैः" इति ॥ १६ ॥

तीव्रार्त्तिरिति। अजीर्णी तीव्रशूलोपि सन् शूलहरमौषधं न पिबेत्। वमन-करमुष्णोदकञ्च प्रागुपदिष्टमेव पिबेदित्यर्थः। शूलघ्नमित्युपलक्षणार्थम्। छर्द्यतो-सारघ्नमपि विसूचिकायां न पिबेत्। यत आमेन सन्नो मन्दीभूतोऽग्निर्दोषौषधाशनं पक्तुं न समर्थः। एतेषाञ्च दोषौषधाशनानां त्रयाणां सम्बन्धी यो विभ्रमो व्यापत्तिः सहसा कालमनपेक्ष्य चातुरं हन्यात्। न केवलमिदं गुणाय सम्पद्यते प्रत्युत दोषं करोतीति सूचनार्थमपि चेति कृतम्। १७ ॥

कदौषधं युञ्जीतेत्याह;—जीर्णाशने इति। जीर्णमशनं यस्य तस्मिन्नौषधं युञ्ज्याद्वैद्यः। कीदृशि? स्तब्धमचलं गुरूदरं कोष्ठो यस्य तस्मिन्। किमर्थमौषधं युञ्ज्यादित्याह;—दोषेत्यादि गतार्थम्। कीदृशमौषधं योज्यमित्याह;—शान्तिरि-त्यादि। तुरवधारणे। यस्मादपतर्पणादेवामजातानां विकाराणामालस्यजाड्याग्नि-मान्द्यादीनां शान्तिरुपशमो भवति, तस्मादपतर्पणं योजयेत्। वक्ष्यति हि,—"मेहाम-दोषातिस्निग्धेत्यारभ्य यावल्लङ्घयेन्नित्यम्" इति। तस्मादपतर्पणं समीक्ष्य देशकालाग्न्या-दीन् पर्यालोच्य त्रिप्रकारं त्रिप्रकारे दोषे वैद्यः प्रयोजयेत् ॥ १८ । १९ ॥

तत्राल्पे लङ्घनं पथ्यं मध्ये लङ्घनपाचनम् ।
प्रभूते शोधनं तद्धि मूलादुन्मूलयेन्मलान् ॥ २० ॥
एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ।
चिकित्सेदनुबन्धे तु सति हेतुविपर्ययम् ।
त्यक्त्वा यथायथं वैद्यो युञ्ज्याद्व्याधिविपर्ययम् ॥ २१ ॥
तदर्थकारि वा पक्वे दोषे त्विद्धे च पावके ।
हितमभ्यञ्जनस्नेह-पानबस्त्यादि युञ्जतः ॥ २२ ॥
अजीर्णञ्च कफादामं तत्र शोफोऽक्षिगण्डयोः ।
सद्योभुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ २३ ॥

---

सम्प्रत्येतदेव यथायोगमाह ;—तत्रेत्यादि । तत्र तेषु त्रिषु मध्ये अल्पे दोषे लङ्घनमुपवासाख्यं पथ्यम् । तेन ह्यनलानिलव्रङ्क्षाऽल्पो दोषः शीघ्रं संशोष्य जीयते । मध्ये दोषे लङ्घनं पाचनञ्च पथ्यम् । अग्निः पचति तस्य पचतो ये विबन्धादयो भवन्ति तान्निषिध्य पाटवमादधानं पचति प्रयुङ्क्ते इव तत्पाचयतीति पाचनमुच्यते । हेतुमण्णिजन्तात्पचेर्बाहुलकात् कर्त्तरि ल्युट् । यदुपयुक्तमन्नपानौषधमपक्वानां सामानां धातूनां पाचने समर्थं तत् पाचनमित्यर्थः । प्रभूते शोधनं पथ्यम् । शोधनन्तु कायाद्बहिर्दोषानीरयति । वक्ष्यति हि ;—"यदीरयेद्बहिर्दोषान् पञ्चधा शोधनन्तु तत्" इत्यादि । कुतः ? प्रभूत आमदोषे शोधनं हितमित्याह ;—तद्धीत्यादि । हि यस्मात् तच्छोधनं मूलान्मलान्नाशयेत् । संग्रहेऽप्युक्तम् "बहुदोषाणां पुनरूपसेवनमेव कार्य्यं न ह्यसाविति पल्वलोदकौघे शाल्यादि पुष्टिर्भवति" इति ॥ २० ॥

एवमित्यादि । यथा सन्तर्पणोत्थ आमदोषो निदानविपर्य्ययाच्चिकित्स्यते एवमन्यानपि ज्वरादीन् विकारान् स्वनिदानविपर्य्ययाच्चिकित्सेत् । सन्तर्पणोत्थोऽपतर्पणेन शीतोत्थ उष्णेनेत्यादि । यदि तु एवमुपक्रम्यमाणो व्याधिरनुबध्यते, तेनोपशमं न गच्छेत्, ततो हेतुविपर्य्ययं त्यक्त्वा व्याधिविपर्य्ययं युञ्ज्यात् । किं भूतम् ? यथायथं यद्यस्य ज्वरादिव्याधेर्भैषज्यं वक्ष्यमाणं तत्प्रयुञ्जीतेत्यर्थः । यथा सुरूपर्पटकं ज्वरे रजनी प्रमेहे इति । न च हेतुव्याधिविपर्य्ययोरेव चिकित्सायामुपयोग इति दर्शयन्नाह ;—तदिति । तन्निदानव्याधिविपर्य्ययासाध्यमर्थं रोगोपशमलक्षणं कर्त्तुं शीलं यस्य तत्तदर्थकारि तद्वा युञ्ज्यात् । यथा मदात्यये मद्यपानम्, अतिसारे विरेचनमिति । वा शब्दः समुच्चयार्थ इति । त्रिविधमौषधं निर्दिश्यामचिकित्सामेवानुसरन्नाह । पक्वे दोषे निरामे दीप्ते पावके च निरामयत्वे दीप्ताग्नित्वे च समुचितमेव हितमभ्यङ्गादिकम् । युञ्जतो मात्रया यथाग्निसादादि न भवतीति ॥ २२ ॥

अजीर्णं लक्षयितुमाह ;—अजीर्णमिति । अग्निप्रतिपक्षत्वेन कफस्याजीर्णकारणप्राधान्यादग्रे निर्देशः । कफात् सकाशादजीर्णमामसंज्ञकं भवति । तत्राक्ष्णोः-

विष्टब्धमनिलाच्छूल-विबन्धाध्मानसादकृत् ।
पित्ताद्विदग्धं तृण्मोह-भ्रमाम्लोद्गारदाहवत् ॥ २४ ॥
लङ्घनं कार्य्यमामे तु विष्टब्धे स्वेदनं भृशम् ।
विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥ २५ ॥
गरीयसो भवेल्लीनादामादेव विलम्बिका ।
कफवातानुबद्धाम-लिङ्गा तत्समसाधना ॥ २६ ॥
अश्रद्धा हृद्व्यथा शुद्धे ऽप्युद्गारे रसशेषतः ।
शयीत किञ्चिदेवात्र सर्वश्चानाशितो दिवा ।
स्वप्यादजीर्णी सञ्जात-बुभुक्षोऽद्यान्मितं लघु ॥ २७ ॥

---

जीर्णेऽक्षिकूपयोर्गण्डयोः शोफो भवति । सद्योभुक्तवदप्राप्तविदाहावस्थ उद्गारः । प्रसेकः प्रसक्तं निष्ठीवनम् । उत्क्लेशो दोषाणां स्थानाच्चलनम् । गौरवं गात्राणाम् । विष्टब्धमिति । अनिलाद्विष्टब्धं नामाजीर्णं भवति । तच्च शूलादिकृत् । पित्तादिति । पित्ताद् विदग्धं नामाजीर्णमुत्पद्यते । तच्च तृडादियुक्तम् ॥ २३ । २४ ॥

त्रिविधस्यैवास्य चिकित्सामाह ;—लङ्घनमिति । तुरवधारणे । आमाख्येऽजीर्णे लङ्घनमेव कार्य्यं न वमनविरेचनादि । विष्टब्धे स्वेदनं भृशं कार्य्यम् । भृशशब्देने-तद् द्योतयति । पूर्वत्रापि स्वेदनं कार्य्यमत्र त्वत्यर्थमिति । विदग्धे विदग्धनाम्नि अजीर्णे वमनं कार्य्यम् । यद्वा लङ्घनस्वेदनवमनानां यथावस्थं यथादोषोद्रेकं हितं भवेत् तदेव कार्य्यम् । आमाजीर्णेऽपि स्वेदनवमने विदग्धेऽपि लङ्घनस्वेदने इति ॥ २५ ॥

गरीयस इति । गरीयसः प्रभूतादजीर्णादेव विलम्बिका स्यात् । कीदृशात् ? लीनादत्यर्थं स्रोतःसु श्लिष्टत्वात् । लीनादिति लीङ् श्लेषण इत्यस्य क्तप्रत्यये स्वादय ओदित इत्योदितश्चेति निष्ठानत्वम् । सा च श्लेष्मवायुभ्यामनुबद्धा युक्ता भवति । आमं नाम यदजीर्णं तत्सदृशलक्षणा यथा शोफोऽक्षिगण्डयोः सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवमिति । तेनामेन समं तुल्यं साधनं चिकित्सा यस्याः सैवम् । लङ्घनं कार्यमामे इति । जीर्णेऽप्याहारे कदाचिदाहारसारो रसोऽजीर्णः स्यात् । तल्लक्षणार्थ-माह ;—अश्रद्धेति । रसशेषे अश्रद्धा अन्नानभिलाषः । हृद्व्यथा हृदयशूलं गौरवञ्च । शुद्धेऽप्युद्गारेऽन्नसम्बन्धिनि । तेनाजीर्णादर्थान्तरभूत एवायं रसशेषः । अतश्च रसस्य रुधिरादिहेतोरसम्यक्परिपाक इत्यर्थः । तच्चिकित्सामाह ;—शयीतेत्यादि । अत्र रसशेषे किञ्चिदेव स्तोकमात्रमेव स्वप्यात् नाजीर्ण इव प्रभूतम् । सर्वश्चाजीर्णी अनाशितो दिवा शयीत आमाधमात् । यदा चोत्पन्नक्षुत् स्यात् तदा स्तोकं लघु चाद्यात् । आशः कृतो येन आशितः ; न आशितोऽनाशितः ; अभुक्तवानित्यर्थः । ननु अजी-र्णिनः ... वाक्येनाजीर्णिनां दिवास्वप्नोऽनुज्ञात एव तत्किं पुनरुक्तेन ?

विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढ़ता।
अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः॥ २८॥
न चातिमात्रमेवान्नमामदोषाय केवलम्।
द्विष्टविष्टम्भिदग्धाम-गुरुरुक्षहिमाशुचि॥ २९॥
विदाहि शुष्कमत्यम्बु-प्लुतं वान्नं न जीर्य्यति।
उपतप्तेन भुक्तञ्च शोकक्रोधक्षुधादिभिः॥ ३०॥
मिश्रं पथ्यमपथ्यञ्च भुक्तं समशनं मतम्।
विद्यादध्यशनं भूयो भुक्तस्योपरिभोजनम्॥ ३१॥

---

ब्रूमः ;—विशेषार्थं वाक्यमिदम्। अभुक्तौ दिवा स्वप्यादजीर्णोति। तत्र तु सामान्यम्। अशितानशितचिन्ता न क्रतेति युक्ता पुनरिहोक्तिः॥ २६। २७॥

सामान्यमजीर्णलक्षणं सामान्येन ब्रूते ;—विबन्ध इति। विबन्धो मूत्रपुरीषयोरप्रवृत्तिलक्षणः। अतिप्रवृत्तिस्तयोरेव। ग्लानिः शरीरस्यापचयः। मारुतमूढ़ता वातस्य प्रतिलोमता। विष्टम्भः कुक्षेराध्मानम्। गौरवं गुरुगात्रत्वम्। भ्रमो मोहः। एतत्सामान्यमजीर्णलक्षणम्। उक्तञ्च ;—"सीदत्यङ्गं भ्रमो मोहः कोष्ठे मुह्यति मारुतः। सर्वेषामप्यजीर्णानामविसंवादि लक्षणम्"॥ २८॥

साम्प्रतमजीर्णस्यान्यान्यपि कारणान्याह ;—नेति। अतिमात्रमेव भुक्तमन्नं न केवलमामदोषाय किं तर्हि द्विष्टादि चान्नं न जीर्य्यति। द्विष्टमप्रियम्। विष्टम्भि कुक्ष्याध्मानकारि। हिममतिशीतम्। अशुचि उच्छिष्टं केशादिदूषितञ्च। एतच्चाचिन्त्यप्रभावबलादामदोषहेतुः। विदाहि प्रागुक्तम्। शुष्कमद्रवप्रायम्। अत्यम्बुप्लुतमतिजलेन प्लावितम्। चः समुच्चये। न केवलं द्विष्टाद्यन्नं भुक्तं न जीर्य्यति यावता शोकादिभिश्चोपतप्तेन भुक्तं न जीर्य्यति। शोक इष्टविपत्त्यादिना मनोदौःस्थ्यम्; क्रोधो रोषः; क्षुद् बुभुक्षा। तदुपतप्तत्वं कालातिक्रमत्वात्। आदिशब्देन लोभभयादिपरिग्रहः॥ २९। ३०॥

सम्प्रति अपरमप्यन्नमामक्षोभकरमाह ;—मिश्रमिति। पथ्यं शाल्यादि। अपथ्यं यवकादि। तन्मिश्रमेकीकृत्य भुक्तं समशनमभिमतमस्मिन् वैद्यकतन्त्रे। विद्यादित्यादि। भुक्तस्याभ्यवहृतस्योपरि यद्भोजनं तदध्यशनं जानीयात्। नन्वेवं प्रातराशे कृते यः सायमाशस्तस्याप्यध्यशनत्वं प्रसज्यते। अध्यशनञ्च विवर्ज्यमेव। यतोऽनन्तरमेव पठिष्यति भगवान् चौण्यप्येतानि मृत्युं वेत्यादि। वैद्यकतन्त्रेषु च नराणां द्विराहार उपदिष्टः। तथा व्यासोऽप्यवोचत् ;—"सायं प्रातर्मनुष्याणां भोजनं विधिनिर्मितम्" इति। तस्मादध्यशनस्यैवं तदसमीचीनं लक्षणम्। अत्र सम्ब्रूमहे। प्राग्भुक्तस्योपरि समनन्तरमेव वह्नावविभक्ते यदशनं तदेवाध्यशनं नान्यत्। अतएव सुश्रुतो ब्रूते ;—"प्राग्भुक्ते त्वविभक्तेऽग्नौ द्विरन्नं न समाचरेत्" इति। तस्मात्प्रातराशे कृते सत्यग्नौ विभक्ते यः

अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम्।
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ॥ ३२॥
काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः।
षड्रसं मधुरप्रायं नातिद्रुतविलम्बितम् ॥ ३३ ॥
स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः।
तर्पयित्वा पितॄन् देवानतिथीन् बालकान् गुरून् ॥ ३४ ॥
प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान्।

---

सायमाशः स न परिहार्य्यः, अपि तु कार्य्य एव। गुणावहत्वात्। एतदेव प्रतिपादयितुं संग्रहेऽप्यगीष्ट। "प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति। दिवा प्रबोध्यतेऽर्केण हृदयं पुण्डरीकवत्। तस्मिन् विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः। व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः। न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः। अक्लिन्नेष्वन्नमासिक्तमन्यत्तेषु न दुष्यति। अविदग्धेष्विव पयःस्वन्यत्सम्मिश्रितं पयः। रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च। परिक्लेदं यान्ति कोष्ठे संवृते देहधातवः। क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति। विदग्धेषु पयःस्वन्यत्पयस्तप्तेष्विवार्पितम्। निशि तस्मादजीर्णेऽन्ने नाद्यादश्नीत भोजनम्" इति। अधिशब्दोऽत्रोपरिशब्दार्थः। यथा प्रासादमधिरोहति। अकाले बहु चाल्पं वा भुक्तं त्वशनं विषमाशनसंज्ञं विद्यात्। कः पुनरकालो भोजनस्येति चेत्, ब्रूमः ;—प्रसृष्टे विण्मूत्रे इत्यादिना आहारकालं वक्ष्यति तद्विपरीत्येनाकालो वेद्यः। त्रीण्यप्येतानि समशनाध्यशनविषमाशनानि मृत्युं वा सृजन्ति नयन्ति। घोरान् व्याधीन् गुल्मादीन् वा ॥ ३१। ३२॥

काल इत्यादि। काले वक्ष्यमाणे। तन्मना भोजनगतचित्तः। स्नातः। बुभुक्षितः। विविक्तस्थ एकान्तस्थितः। तथा प्रक्षालितचरणहस्तमुखः। अनिन्दन् भोजनमगर्हमाणः। अनुवन्नभाषमाणः। इष्टं मनोरुचितं भोजनम्। तथा द्रवं द्रवप्रायम्। इष्टैः प्रियैः सहाश्नीयात्। क्षुद्वान्। अत्र च प्रशंसायां मतुप्। उत्पन्नप्रशस्तबुभुक्षः। तेन किञ्चिदपि यदा दुष्टबुभुक्षा स्यात्तदा नाद्यादित्यर्थः। दुष्टबुभुक्षाया लक्षणम्,—"दीपोपनद्धं यदि लीनमन्नं पित्तोद्धतस्याह्वयुयान्न वह्निम्। जायेत दुष्टां तु ततो बुभुक्षां या मन्दबुद्धीन् विषवन्निहन्ति" इति। किम्भूतं भोजनम्? सात्म्यम्। तच्च सात्म्यं द्विधा। एकं स्वल्पकालाभ्यस्तं सुखावहम्; अन्यच्च जन्मनः प्रभृति सहात्मनाभ्यस्तं सुखावहञ्च। एतद्द्वैवं सात्म्यमुच्यते। तथा शुचि अनुच्छिष्टं केशाद्यनुपहतञ्च। हितं पथ्यम्। स्निग्धञ्च तद्गुणञ्च स्निग्धोष्णम्। तथा लघु लघुप्रायं न तु लघ्वेव। अतएवेदमुपपन्नम्। षड्रसं मधुरप्रायमिति। मधुररसो हि गुरुः। तथा च वक्ष्यति,—"कटोः कषायस्तस्माच्च मधुरः परमं गुरुः"। तद्यदि लघ्वेव स्यान्मधुरप्रायमिति न घटते। तस्माल्लघुप्रायमिति व्याख्येयम्। कथमद्यात्? आह ;—नातिद्रुतमविलम्बितम्। किं कृत्वा? पित्रादींस्तर्पयित्वा। तथा तिरश्चोऽप्यश्वपादीन् प्रतिपन्नपरिग्रहान् कृतस्वीकारान्

समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन् द्रवम्।
इष्टमिष्टैः सहाश्नीयाच्छुचिभक्तजनाहृतम् ॥ ३५ ॥
भोजनं तृणकेशादि-जुष्टमुष्णीकृतं पुनः।
शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३६ ॥
किलाटदधिकूर्चीका-क्षारशुक्तामभूलकम्।
कृशशुष्कवराहावि-गोमत्स्यमहिषामिषम् ॥ ३७ ॥
माषनिष्पावशालूक-बिसपिष्टविरूढकम्।
शुष्कशाकानि यवकान् फाणितञ्च न शीलयेत् ॥ ३८ ॥
शीलयेच्छालिगोधूम-यवषष्टिकजाङ्गलम्।
पथ्यामलकमृद्वीका-पटोलीमुद्गशर्कराः ॥ ३९ ॥
घृतदिव्योदकक्षीर-क्षौद्रदाडिमसैन्धवम्।
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ॥ ४० ॥
स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरञ्च यत् ॥ ४१ ॥

---

प्रत्यवेक्ष्य तदाहारचिन्तां कृत्वेत्यर्थः। अथात्मानं समीक्ष्य यथा ममेदं सात्म्यमिति नित्यमप्रमत्तः सन् पर्यालोच्य। खरनादेनोक्तम्, "अतिद्रवाशी त्वाहारगुणदोषान्न विन्दति। उत्सुकस्त्वत्यल्पमश्नाति छर्दयेद्वा वानवस्थितः। विलम्बितं तु भुञ्जानो न तृप्तिमधिगच्छति। खादन्नल्पपि शीतत्वाद्याति भक्तमहृद्यताम्। जल्पतो हसतश्चापि भुञ्जानस्यान्यचेतसः। त एव दोषा मन्तव्या ये विलम्बितभोजने" इत्यादि ॥ ३३—३५ ॥

भोजनमिति। तृणादिजुष्टं भोजनं त्यजेत्। आदिशब्देन मक्षिकादिपरिग्रहः। तथा भूय उष्णीकृतं तथा शाकबहुलं तथा अवरान्नं माषादि, तद्भूयिष्ठं तथाऽत्युष्णमतिलवणञ्च त्यजेत्। तथा किलाटादीन्न शीलयेत् नाभ्यसेत्। न कादाचित्कोऽभ्यवहार एषां निषिध्यते। मुनिना तु नाभ्यसेद्गौरवादिति यथा हेतुरुपन्यस्तस्तथेह नोक्तमयुक्तत्वात्। तथा हि, एषामभ्यवहारे यदि गुरुत्वमेव हेतुः स्यात् ततो यवादीनामपि बहुतराणां द्रव्याणां शीलनमयुक्तं स्यात्; तस्मादेषामशीलनेऽन्यदपि कारणं चिन्त्यं न तु गुरुत्वमात्रमेव। यथा किलाटकूर्चीकयोर्दोषलत्वं दध्नस्तु ज्वरादिकर्तृत्वं तथा सौतीरिपः। सौतीलिपवत्त्वाच्चानेकरोगहेतुत्वम्। क्षारस्य पुंस्त्वहानिकृत्त्वम्। शुक्तस्य दृष्टिहननत्वादि। तस्मादेषामपथ्यत्वाच्छीलननिषेधो बोध्यः ॥ ३६—३८ ॥

शीलयेदिति। शाल्यादीन् शीलयेत्। मधुसर्पिर्भ्यां सह त्रिफलाञ्च रात्रौ नेत्रबलाय शीलयेत्। न केवलं शाल्यादीनेव शीलयेत्। यच्च द्रव्यं स्वास्थ्यानुवृत्तिं करोति ऋतुचर्याविध्यादिषु युक्तमन्नपानादिकम्, तथा रोगोच्छेदकरं यत्किराततिक्तकादिद्रव्यं तच्च शीलयेत् ॥ ३९—४१ ॥

बिसेक्षुमोचचोचाम्र-मोदकोत्कारिकादिकम् ।
अद्याद्द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं पुरः ।
विपरीतमतस्त्वान्ते मध्येऽम्ललवणोत्कटम् ॥ ४२ ॥
अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ ४३ ॥
अनुपानं हिमं वारि यवगोधूमयोर्हितम् ।
दध्नि मद्ये विषे चौद्रे कोष्णं पिष्टमयेषु तु ॥ ४४ ॥
शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ।
सुरा कृशानां पुष्ट्यर्थं स्थूलानान्तु मधूदकम् ॥ ४५ ॥
शोषे मांसरसो मद्यं मांसे स्वल्पे च पावके ।
व्याध्यौषधाध्वभाष्यस्त्री-लङ्घनातपकर्मभिः ।
क्षीणे वृद्धे च बाले च पयः पथ्यं यथामृतम् ॥ ४६ ॥

---

बिसेत्यादि। बिसादि द्रव्यं गुर्वादिगुणयुक्तं पुरः पूर्वमद्यात्। मोदको लड्डुकः। उत्कारिका लप्सिका। अतोऽस्माच्च विपरीतं लघुरूक्षतीक्ष्णकटुसरप्रायमन्ते भोजनस्य सेवेत। मध्ये चाम्ललवणोत्कटम्। खरनादे चोक्तम्; "कटुं लवणमम्लं वा पूर्वमाहारमाहरेत्। आहारो मधुरो ह्यग्रे गुरु विष्टभ्य जीर्यति"। तदेतद्देशसात्म्यादिशः प्रमाणयितव्यम् ॥ ४२ ॥

अन्नेनेति। कुक्षेर्जठरस्यान्नेन द्वौ भागौ प्रपूरयेत्। पानेन जलादिना एकमंशं प्रपूरयेत्। चतुर्थमंशं पवनादीनामाश्रयमवशेषयेन्नत्वन्नेन पानेन वा प्रपूरयेत्। अत्र तु अंशकल्पना परिकल्पनेनैव युज्यते नत्वङ्गुलमानादिना। सुश्रुते चाभिहितम्;—"प्रक्षालयेदद्भिरास्यं भुञ्जानश्च मुहुर्मुहुः। विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्ववत्"। रसना विद्यते यस्य मुखस्य तद्रसनं तस्मिन् रसने विशुद्धे रोचतेऽन्नमपूर्ववत् ॥ ४३ ॥

अनुपानमिति। यवगोधूमयोर्भुक्तयोरनु पश्चात्पानं शीतं जलं हितम्। तथा दधि मद्ये विषे चौद्रे च हिमं जलमनुपाने हितम्। पिष्टमयेषु कोष्णं जलं हितम्। शाकमुद्गादिविकृतौ च मस्त्वादिकमनुपानं हितम्। कृशानां पुंसां सुरा पुष्ट्यर्थं हिता। स्थूलानां पुनः कर्शनाय मधूदकं हितम्। शोषे क्षये मांसरसो हितः पुष्टिकारित्वात्। मांसे भुक्ते मद्यमनुपानं हितम्। स्वल्पे च पावके मद्यमेवानुपानम्। व्याध्यादिभिः क्षीणे क्षपिते पयो दुग्धं पथ्यं हितम्। इह प्रकृतेऽपि पथ्यग्रहणं पथ्यतरत्वख्यापनार्थम्। यथामृतमित्यनेनैतत्प्रतिपादयति। यथाऽमृतं बलवर्णौजःकान्त्यायुरादिजनकं तथेदम् पीयूषः ॥ ४४—४६ ॥

विपरीतं यदन्नस्य गुणैः स्यादविरोधि च।
अनुपानं समासेन सर्वदा तत्प्रशस्यते ॥ ४७ ॥
अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम्।
अन्नसङ्घातशैथिल्य-विक्लित्तिजरणानि च ॥ ४८ ॥
नोर्ध्वजत्रुगदश्वास-कासोरःक्षतपीनसे।
गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ॥ ४९ ॥
प्रक्लिन्नदेहमेहाक्षि-गलरोगव्रणातुराः।
पानं त्यजेयुः सर्वश्च भाष्याध्वशयनं त्यजेत्।
पीत्वा भुक्त्वाऽऽतपं वह्निं यानं प्लवनवाहनम् ॥ ५० ॥

---

विपरीतमिति। अन्नस्य भक्तवटकादेर्यद्विपरीतं गुणैस्तदनुपानं सदा प्रशस्यते। यथा स्निग्धस्य रूक्षं, रूक्षस्य स्निग्धं, शीतस्योष्णं, उष्णस्य शीतम्, मधुरस्याम्लं, अम्लस्य मधुरमित्यादि। नन्वेवमुररीक्रियमाणे क्षीरस्य चैर्यादेर्वा चुक्रादीनामम्लानामनुपानं प्राप्तमित्याह, विपरीतगुणमपि यदविरोधि तदेवानुपानं सदा हितम् ॥ ४७ ॥

अनुपानस्य किं कर्मेत्याह; अनुपानमिति। अनुपानमूर्जादीन् करोति। ऊर्जा मनःप्रहर्षः। तृप्तिः प्रीणनं शरीरेन्द्रियस्य क्षामताविपरीतोऽन्नगुणः। तथा व्याप्तिः। द्रवस्य हि गमनं न कठिनस्य। दृढाङ्गता स्थिरशरीरत्वम्। तथा अन्नसङ्घातस्य शैथिल्यम्। विक्लित्तिर्विक्लेदनम्। जरणं परिणामः। एतानि च करोति ॥ ४८ ॥

एवं गुणमप्यूर्ध्वजत्र्वादिषु न हितमित्याह;—नोर्ध्वेत्यादि। ऊर्ध्वं जत्रुण ऊर्ध्व-जत्रु तस्मिन् ये गदास्तेषु तदनुपानं न हितम्। तथा श्वासादिषु न हितम्। गीत-भाष्ययोः प्रकर्षेण सङ्गः सातत्येन सम्बन्धस्तस्मिन्। तथा स्वरभेदे स्वरसादे न तद्धि-तम्। ऊर्ध्वजत्रुगदादीनां ह्यनुपानं प्रदूष्यामाशयमुरःकण्ठस्थितमाहारजं स्नेहमासा-द्याभिष्यन्दाग्निसादच्छर्द्यादीनामयान् विदध्यात् ॥ ४९ ॥

सम्प्रति येषां पानमेव न शस्यते तानाह;—प्रक्लिन्नेति। प्रक्लिन्नो देहो येषा-मामविसर्पाद्यार्तानां ते पानं त्यजेयुः। मेहादीनां रोगातुरशब्देन प्रत्येकं सम्बन्धः। मेहरोगाद्यातुराः पानं द्रवरूपं त्यजेयुर्न केवलमन्नपानस्योपरि यदनुपानम्। खरनादे चोक्तम्;—"मेही प्लीही व्रणी कुष्ठी पाण्डुर्जठरपीनसी। शोषातिसारी मन्दाग्निः पानीयं मन्दमाचरेत्। नोर्ध्वाङ्गपवनाविष्टे वाग्व्यायामहते न च। क्षतोरसि श्वासकासहिक्कावम्यर्दिते न च। निरन्नं चोर्ध्वरोगे च न पेयं वारि शीतलम्" इति। चशब्दो लुप्तनिर्दिष्टोऽत्र। सर्वोऽपि पुरुषः पीत्वा भुक्त्वा च भाष्यादीं स्त्यजेत्। तथा आतपादीन् पञ्च त्यजेदित्यत्राप्यनुवृत्त्या योज्यम्; यानं रथादि; प्लवनं तरणम्; वाहनमश्वादि ॥ ५० ॥

प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति।
तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ
प्रयुञ्जीताहारं विधिनियमितः कालः सहि मतः ॥५१॥

इत्यष्टाङ्गहृदये सूत्रस्थाने अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः।

अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

काले सात्म्यमित्युक्तम्। भोजनस्य तु कः काल इत्याह;—प्रसृष्ट इति। आहारं विधिना पूर्वोक्तेन काले सात्म्यं शुचि हितमित्यादिना नियमितं प्रयुञ्जीत; अश्नीयादित्यर्थः। कदा? मूत्रपुरीषे प्रकर्षेण सृष्टे सति। न तु किञ्चिदेव त्यक्त इति प्रशब्देन द्योतयति। तथा हृदये सुष्ठु विमले रसशेषकृतगौरवादिरहिते। तथा दोषे वातादौ स्वपथगे स्वमार्गगे। अजीर्णे ह्याहारेऽन्नशेषेण रुद्धगतयो वातादयः स्वस्थानं न लभेरन्। सुजीर्णे तु स्वस्थानस्थाः स्युः। उद्गारे विशुद्धे। चशब्दोऽनुक्तसमुच्चयार्थः। स्रोतोमुखेषु च विशुद्धेष्वित्यर्थः। क्षुदुपगमने उपगतायां क्षुधि। वातेऽनुसरति अनुलोमं गच्छति। तथाऽग्नौ कायाग्नावुद्रिक्ते पाकक्षमे। तथा देहे पटिन्द्रिये सुष्ठु लघौ च। कालः सहि मतः। हिशब्द एवार्थे। स एव कालो भोजनस्य इष्टो न तु अतोऽप्यूर्ध्वम्। सह्यतिकालः। तत्र भुक्तमन्नं वातविष्टब्धं कृच्छ्राद् विपच्यते। तथाचोक्तं तन्त्रान्तरे;—"अतीतकाले भुञ्जानो वायुनोपहतेऽनले। कृच्छ्राद्विपच्यते भुक्तं द्वितीयं नच काङ्क्षति। कुक्षावाध्मानमाटोपसादांश्च कुरुतेऽविकाम्" इति। तस्मात् पूर्वोक्तकाले भोजनमद्यादिति। यनौ त्सौ तः सः स्याद्रसरविविरामा धीरललिता ॥ ५१ ॥

इति श्रीमद्गङ्गादत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायां मात्राशितीयोऽध्यायोऽष्टमः ॥ ८ ॥

---

पूर्वमन्नपानादिद्रव्यैकदेशः प्रायोपयोगवान्निर्दिष्टः, तस्य चाहारविधिर्मात्रा चोपदिष्टा। सम्प्रति द्रव्यरसवीर्यविपाकादयो वाच्याः। यन्नपानं हि रसवीर्यविपाकादि परीक्ष्य प्रयोक्तव्यं नान्यथा। तस्मान्मात्राशितीयाध्यायादनन्तरं द्रव्यादिविज्ञानीय आरभ्यते;—अथात इति। द्रव्यमादिर्येषान्ते द्रव्यादयः। आदिशब्देन रसवीर्यादिपरिग्रहः। द्रव्यादीनां विज्ञानमवगमः तस्मै हितः। शेषं पूर्ववत् ॥ १ ॥

द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः ॥ २ ॥
पञ्चभूतात्मकं तत्तु क्ष्मामधिष्ठाय जायते ॥ ३ ॥

---

तत्र द्रव्यस्य रसादिभ्यः प्राङ् निर्देशः प्राधान्यात्। प्राधान्यञ्च स्वयमेव ग्रन्थकृत् प्रतिपादयन्नाह;—द्रव्यमिति। रसादीनामिति निर्धारणे षष्ठी। रसवीर्य्यादीनां मध्ये द्रव्यमेव प्रधानम्। ते रसादयोहि यस्मात्तदाश्रयास्तदेव द्रव्यमाश्रयो येषान्त एवम्। अतएव केवला रसादयो नोपलभ्यन्ते। तस्मात् द्रव्यं प्रधानम्॥ २॥

पञ्चेत्यादि। तुरवधारणे। यत्तदोश्च नित्यसम्बन्धात् यदित्येतदनुक्तमप्यर्थाल्लभ्यते तेनायमर्थः;—यद्रसादीनामाश्रयभूतं कार्य्यं द्रव्यं हरीतक्यादिस्थावरं छागादि जङ्गमं तत्पञ्चभूतात्मकम्। तत्र यत्कारणद्रव्यमाकाशादि तस्य हि पञ्चभूतात्मकत्वे सत्याकाशादीनां पृथकत्वेनात्मलाभो न स्यात्। ततश्चेदमाकाशं नाम महाभूतमिदं पृथ्वीनाम महाभूतमिति गदितं न पार्य्येत, सर्व्वस्य पञ्चमहाभूतात्मकत्वात्। न च यत्कारणं तत्कदाचित् कार्य्यं स्यात्। तस्मात् कार्य्यद्रव्यस्यैव पञ्चमहाभूतात्मकत्वं न कारणद्रव्यस्याकाशादेः। मुनिस्तु;—"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः" इति। न च वा द्रव्यमुक्त्वा तल्लक्षणं व्यधित। यथा—"यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत्। तद्द्रव्यम्" इति। अस्यार्थः—यत्र कर्म्म परिस्पन्दलक्षणं संयोगवियोगकारणं समवेतश्च गुणः। यत्र शब्दादयो गुर्व्वादयो वा बुद्धिवपुरादयो वा समवेताः। यच्च कारणं समवायि तद्द्रव्यमुच्यते। समवायीति। यत्कारणमपृथग्भवति तत्समवायिकारणं; यथा—तन्तवः पटस्य। एवमेतानि च कर्म्मगुणाश्रयित्वसमवायिकारणत्वानि यद्यपि सर्व्वाणि सर्व्वस्मिन् द्रव्ये न विद्यन्ते तथापि यद् यत्र सम्भवति तत्र तेन तस्य द्रव्यस्य द्रव्यत्वं कल्प्यम्। तद्यथा,—मनसः कर्म्मगुणाश्रयित्वेन वाय्वादीनान्तु कर्म्मगुणाश्रयित्वेन समवायिकारणत्वेन च। नन्वाकाशादीनि कारणद्रव्याणीति कथमुक्तम्? यावता आकाशस्य द्रव्यत्वमेव नास्तीति केचित्; तान् ब्रूमहे,—जलधेरिव प्रत्यक्षेणैवास्य नीलरूपतोपलब्धेरस्तित्वं सिद्धम्। तथा—कवयोऽपि नीलत्वमेवास्य वर्णयन्ति। तथा कर्णाटस्य,—"विपुलपुलिना ह्रद्या नद्यो वहन्त्यतिनिर्म्मलाः, कमलसुभगो वायुर्व्वाणं विलम्बति मांसलः। नवजलधरच्छायावासादिवाचिरनिर्गतो, वहति शशभृन्नीलस्निग्धे नभस्यवदाततताम्" इति। तथा च बाणस्य;—धौताश्मनिनभश्चीति। तदेतद्दूषयन्ति। तथा हि; दूरात् भ्रान्तिमात्रेणैव नीलरूपत्वमस्योपलभ्यते। यथा गिरेर्विविधवर्णस्यापि दूरान्नीलत्वप्रतीतिः। यत् कवीनां वर्णनं तस्मादलसेन निष्प्रमाणकमेव सम्भाव्यते तथा च ते नभसः शुक्लत्वं वर्णयन्ति। न च शुक्लत्वमेतस्योपपद्यते निराकारत्वात्। तस्मान्न नीलरूपत्वं नभसः। ननु दर्शनवैचित्र्यादस्य रूपवत्त्वमुपपन्नम्। यथा पुरुषः शरादिऋजुतां दिदृक्षुरेकचक्षुर्निमील्यापरं चोन्मील्य तामुपलभते न तु नयनयुगलेन। तद्वत्सन्निकृष्टे गगनरूपस्यानादानं विप्रकृष्टे तु स्यादिति। नचैतद्युक्तम्। यतो रूपवत्त्वेऽभ्युपगम्यमाने स्पर्शवत्त्वमस्य प्रसज्येत। रूपस्य स्पर्शेन नित्यसम्बन्धात्। स्पर्शवत्त्वे सत्याकाशत्वमेव न स्यात्। अतो न रूपवद्व्योम। अन्ये तु एवं मन्यन्ते। पवनवदाकाशस्यावस्थास्तु यथा किल पवनः स्पर्श-

**अम्बुयोन्यग्निपवन-नभसां समवायतः ।**
**तन्निर्वृत्तिर्विशेषश्च व्यपदेशस्तु भूयसा ॥ ४ ॥**

---

वान्। न च तस्मिन् रूपं सम्भवति। तथैवाकाशो न रूपवान् न च स्पर्शवानिति। तदिदमनवगतपदार्थस्वरूपाणां विलपनम्। ततो यत्र रूपं तत्रावश्यं स्पर्शो न तु यत्र स्पर्शस्तत्रावश्यं रूपम्। तस्मान्न नभो रूपवन्न च सत्। अत्रोच्यते ;—परमार्थदर्शिभिर्यदुपादायोत्पत्तिः कथ्यते तदस्ति। यथा पृथिव्यादि। उक्तञ्च—"अक्षरात् खं ततो वायुस्तस्मात्तेजस्ततो जलम्। उदकात् पृथिवी जाता भूतानामेष सम्भवः" इति। तस्मादाकाशं द्रव्यमस्ति। अपि च। आकाशमुपादाय गतिवृद्धिप्रसवादिविशेषोपलब्धेराकाशस्यास्तित्वम्। यथा रूपोपलब्धिविशेषसम्भवानुमितं चक्षुः। अपि च, आकाशाभावे ह्येकघनत्वं जगतः स्यात्। तथा शब्दाख्यस्य गुणस्यान्यथानुपपत्त्या अस्त्याकाशमिति। ननु वायुर्नास्त्येव, तत्स्वरूपग्राहकप्रमाणाभावात्। स्पर्शोपलब्धेर्वायोरस्तित्वमुच्यत इति चेत् तदपि न युज्यते ; अधुनैवोक्तं खाद्वायुरिति। गगनस्य च स्पर्शाभावात् वायोरस्पर्शवत्त्वं कारणगुणपूर्वकत्वात् कार्यस्य। नैतदस्ति कार्यस्योभयात्मकत्वदर्शनात्। कारणगुणपूर्वकं कार्यं दृष्टमकारणगुणपूर्वकं च दृष्टम्। तत्र कारणगुणपूर्वकं तावद् यथा, तन्तुश्वेतत्वपूर्वकं पटे श्वेतत्वम्। अकारणगुणपूर्वकञ्च दृष्टं यथा, हरिद्राक्षारसंयोगाद्रक्तता। तस्मादस्पर्शादाकाशादुत्पन्नो वायुः स्यादेव स्पर्शवान्। ननु एवमप्यग्निजलपृथिवीष्वपि स्पर्शविशेषसम्भवात् तस्मादग्न्यादिसमवाय एव वायुर्व्यवहरते न तद्व्यतिरिक्तो वायुरस्ति। अत्रोच्यते,—सत्यमनलादीनामपि स्पर्शोऽस्ति, किन्तु विलक्षण एवासौ, तथा हि,—तेजसः स्पर्शो रूपैकार्थसमवायी। अपां स्पर्शो रूपरसाभ्यां समवेतः। पृथिव्या रूपरसगन्धसमवेतः। यस्तु वायोः स्पर्शः स पत्रचलनशाखाभञ्जनादिकर्मसमवायी, स नैषामग्न्यादीनां दृष्टानां नापि अदृष्टानामात्मादिकालादीनाम्। गुणाश्च सर्वे द्रव्याश्रया दृष्टा रूपादय इव पटादिषु। तस्माद्वायोर्विशिष्टस्पर्शवत्त्वादस्तित्वमनुमीयते। तथा पवनस्य तत्कर्मोपदेशादस्तित्वम्। यस्य तत्त्वदर्शिभिः कर्मोपदिश्यते तदस्ति। यथा कफादिवद्वातस्य च कर्मोपदिष्टम्। यथा संसव्यासवधस्त्वाप्रेत्यादि। तस्मादस्ति वायुर्द्रव्यमिति। अग्निर्द्रव्यं नास्ति इन्धनव्यतिरेकेणानुपलब्धेः। अत्रोच्यते,—तत्त्वदर्शिभिरग्नेर्द्रव्योत्पत्तिहेतुत्वेनोपदेशादस्तित्वम्। तथाच इहैव वक्ष्यति, —"आग्नेयं दाहभावर्णप्रकाशपचनात्मकम्" इति। ननु युक्तश्चतुर्णां भूतानां सावयवत्वात् द्रव्येषूत्कर्षापकर्षसन्निवेशः। क्वचिद्द्रव्ये कस्यचिद्भूतस्य प्रमाणतः प्रभावतश्चावयवानामुत्कर्षापकर्षसद्भावादाकाशस्य तु निरवयवत्वात् सूक्ष्मत्वादेकत्वाच्चोत्कर्षापकर्षसन्निवेशो न युक्तः। युक्तमाह भवान्, किन्तु सावयवानामेव द्रव्याणां येऽवयवाः क्वचित्पाषाणादौ संहता अवतिष्ठन्ते, येन तत्र द्रव्ये काठिन्यस्य प्रकर्षो भवति तत्र चाकाशमपकृष्यते। अनिबिडावयवे तु सन्निवेशः आकाशः प्रकृष्यते। तदेवमनया युक्त्याऽऽकाशस्यापि न्यूनाधिकभाव उपपन्नः। अथ केन महाभूतेन कथं कृत्वाऽऽरब्धं द्रव्यमित्याह ;—क्ष्मामिति। पृथ्वीमाधारीकृत्वोत्पद्यते एवं पृथिव्याख्येन भूतेनाधारत्वेनोपकृत्य तेन तदारब्धं द्रव्यमित्युच्यते। तथा अम्बुयोनिमिति। अम्बु सलिलं योनिः कारणं यस्य

**तस्मान्नैकरसं द्रव्यं भूतसङ्घातसम्भवात् ॥ ५ ॥**
**नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः।**

तदम्बुयोनि द्रव्यम्। एवं जलं नाम महाभूतं रसवत्त्वाद्‌द्रयोनितयोपकृत्य तेन तदारब्ध-मित्युच्यते। मुनिनाप्युक्तम्,—"रसनार्थो रसस्तस्य द्रव्यमापः चितिस्तथा। निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः"। अमीषां द्रव्यादीनामाश्रयकर्मणोर्भेदश्चिन्त्यः। तथाऽग्निपवननभसां समवायादपृथग्भावात्तस्य द्रव्यस्य निर्वृत्तिर्निष्पत्तिः। तथा तस्य द्रव्यस्य यो विशेष इदमन्यदिदमन्यद्‌द्रव्यमित्येवंरूपो नानास्वभावः सोऽप्यग्निपवननभसां समवायात्। एवमग्निपवननभोभिः समवायिकारणत्वेनोपकृत्य तैरेतद्‌द्रव्यमारब्धमित्यु-च्यते। एवञ्च सर्वं कार्य्यद्रव्यं पञ्चमहाभूतात्मकम्। पञ्चभिर्महाभूतैरारब्धत्वात्। ननु यदि पञ्चमहाभूतात्मकं द्रव्यं तत् कथमुच्यते पार्थिवमिदं द्रव्यमिदमाप्यमित्याह, व्यपदेशस्तु भूयसेति। यत्र द्रव्ये यद्भूतं भूयिष्ठमधिकृतं तेन तस्य व्यपदेशः संज्ञा भवति। यथा पृथिव्याधिक्येोत्पादितं द्रव्यं पार्थिवम्, एवमाप्यं तैजसञ्च वेद्यम्। तदेवं सर्वं द्रव्यं पञ्चभूतात्मकं स्थितम् ॥ ३। ४ ॥

तस्मादिति। तस्माद्भूतसङ्घातसम्भवात् कारणाद्‌द्रव्यं नैकरसमपितु अनेकरसम्। एवं द्रव्यवद्रसस्यापि भूतसङ्घातसम्भवत्वम्। अतएव प्रतिद्रव्यं मधुरादिरसस्य नानास्वादो-पलम्भः। तथाच,—द्राक्षाचोडचीरेक्षुचीद्रगोजाक्षीरयुक्तादौ द्रव्ये सत्यपि माधुर्ये परोपर आस्वाद उपलभ्यते। एवमम्लानामपि मातुलुङ्गधात्र्याम्लादीनां द्रव्याणां नानास्वादो-पलम्भः; एवं लवणादीनाम्। अपि चैषां द्राक्षादीनामनेकरसत्वमास्वादविशेषादनु-मीयमानं भूयसा रसेनान्यरसाभिभवं कृत्वा व्यपदिश्यते। इदं मधुरमिदमम्लाद्यन्यतमं महाभूतवत्। यथा सर्वं द्रव्यं पञ्चमहाभूतात्मकं भूयसा महाभूतेनान्यमहाभूताभि-भवं कृत्वा तेन व्यपदिश्यते पार्थिवमिदमाप्यमिदमिति। ननु द्रव्यनिर्णये कृते पाञ्च-भौतिकं द्रव्यं यदेव प्रतिज्ञातं तदेव तस्मादित्यादिना निगमनग्रन्थेनातिवाहयितुं युक्तं, न पुनरप्रस्तुतमनेकरसत्वम्। तस्मादेवं ग्रन्थः कर्त्तुं न्याय्यः, तस्मान्नैकभूतजं द्रव्यं भूतसङ्घातसम्भवादिति। अत्रोच्यते,—षण्णामपि रसानां योनिरुदक तत्रैकस्यैव महाभूतस्योदकसंज्ञस्य रसकारणत्वं प्राप्तं नान्येषां नीरसत्वादिति कृत्वा न भूतसम्भवत्वं रसस्येत्येवम्विधामाशङ्कामपनिनीषुर्भूतसङ्घातसम्भवत्वं रसस्य चैकेनैव प्रयत्नेन। तस्मान्नैक-रसं द्रव्यं भूतसङ्घातसम्भवादिति जगाद। मुनिश्चात एव रसस्य भूतसङ्घातसम्भवत्वं स्पष्टं कृत्वोवाच। यथा,—"रसनार्थो रसस्तस्य द्रव्यमापः चितिस्तथा। निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः"। इत्येवं भूतसङ्घातो रसानां द्रव्याश्रितानामपि सम्भवकारणम्। एतच्च रसभेदीये सविस्तरं व्याख्यास्यामः ॥ ५ ॥

नैकदोषा इति। द्रव्यमनेकरसं ततस्तस्मात्कारणादेकदोषा रोगा ज्वरादयो न भवन्ति, अपि तु अनेकदोषा इत्यर्थः। अत्रापि व्यपदेशस्तु भूयसेत्यध्याहार्य्यम्। तेन त्रिदोषात्मकेऽपि ज्वरे वाताधिके वातज्वर एवं पित्तज्वरः श्लेष्मज्वर इत्येवंरूपो व्यपदेश उपपन्नः। ननु यदि सर्वो ज्वरः सन्निपातजस्तर्हि किमिति वक्ष्यत्ययं सन्निपातज्वर इति, ब्रूमहे,—समविषमरूपं प्रत्युत्कर्षमाश्रित्य यत्र दोषा वर्त्तन्ते स सन्निपातज्वर इति

अव्यक्तोऽनुरसः किञ्चिदन्ते व्यक्तोऽपि चेष्यते ॥ ६ ॥
गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये।
रसेषु व्यपदिश्यन्ते साहचर्य्योपचारतः ॥ ७ ॥
तत्र द्रव्यं गुरुस्थूल-स्थिरगन्धगुणोल्बणम्।
पार्थिवं गौरवस्थैर्य-सङ्घातोपचयावहम् ॥ ८ ॥
द्रव-शीत-गुरु-स्निग्ध-मन्द-सान्द्र-रसोल्बणम्।
आप्यं स्नेहन-विस्यन्द-क्लेद-प्रह्लाद-बन्धकृत् ॥ ९ ॥
रूक्ष-तीक्ष्णोष्ण-विशद-सूक्ष्म-रूप-गुणोल्बणम्
आग्नेयं दाह-भा-वर्ण-प्रकाश-पचनात्मकम् ॥ १० ॥

---

तल्लक्षता पुरस्तादविस्तरेण प्रतिपादयिष्यते। अथ को रसोऽनुरसो वेत्याह,—तत्रे-त्यादि। तत्र तस्मिन् द्रव्ये यो व्यक्तः स्फुट उपलभ्यते स रसः स्मृतस्तच्चज्ञैः। यस्त्व-व्यक्तोऽस्फुटप्रतिभासी रसनेन्द्रियेणोपलभ्यते सोऽनुरसः। हीनार्थोऽत्रानुशब्दोऽल्परस इत्यर्थः। नैतावदेवानुरसलक्षणमित्याह,—किञ्चिदित्यादि। मुखच्छिन्नस्य हरीतक्यादे-र्द्रव्यस्य रसनेन्द्रियेण किञ्चिदन्ते व्यक्तोऽप्युपलभ्यते यः सोऽप्यनुरस इष्यते मुनिभिरिति वाक्यशेषः। अन्त इत्यनेनैवं तद्बोधयति। अन्ते अवसाने नत्वादौ आपातमात्रे न च मध्ये। तयोर्हि रसस्यैवोपलम्भः। अनुशब्दस्यात्र पश्चादर्थत्वम्। पश्चात् स्फुटोऽपि किञ्चिद् य उपलभ्यते सोऽप्यनुरस इत्यर्थः ॥ ६ ॥

ननु मधुरादयो रसा गुर्वादिगुणायुक्ताः कथं वक्तुं पार्यन्ते ? यतो मधुरादयो रसा गुणा गुर्वादयश्च गुणा न च गुणानां मधुरादीनां गुर्वादिगुणाधारत्वमुपपन्नम्। तथा च वैशेषिकाः, "निर्गुणाः गुणाः" इति। तस्मिन् पर्यनुयोग इदमाह;—गुर्वादय इति। पृथिव्यादौ पृथिव्यादिमहाभूतारब्धे द्रव्ये रसाश्रये गुर्वादयो गुणाः परमार्थत आश्रिता नतु रसेषु मधुरादिषु। यत्तु रसेषु व्यपदिश्यन्ते तत् साहचर्योप-चारतः। सह चरतीति सहचरस्तस्य भावः साहचर्य्यम्। यस्मिन्नेव गुडादौ द्रव्ये मधुरो रस आश्रितस्तस्मिन्नपि गुरुगुण आश्रित इति मधुररसगुरुगुणयोः सहचरभावः। साहचर्येण तुल्याश्रयत्वेनोपचारः साहचर्योपचारस्तस्मात्साहचर्य्योपचारतो गुर्वादयो गुणा रसेषु मधुरादिषु व्यपदिश्यन्ते। यथा गुरुर्मधुरो रसो लघुरम्ल इत्यादि। न पुनः परमार्थतो रसेषु गुर्वादयः सन्ति। अस्ति च साहचर्येण व्यपदेशः। यथा घृतसहचरेण घृतस्थेनाग्निना दग्धो घृतदग्ध इत्युच्यते ॥ ७ ॥

तत्रेति। तत्र तेषु पार्थिवादिषु पञ्चसु मध्ये पार्थिवं द्रव्यं गुर्वादिगुणोत्कटम्। उल्बणशब्देनैतद् द्योतयति पार्थिवे द्रव्येऽन्येऽपि गुणाः सन्ति;—सर्वद्रव्याणां पाञ्चभौतिकत्वात्। गुर्वादयस्तूत्कटाः। एवमाप्यादिषु सर्वं योज्यम्। तथा गुरुत्वाद्यावहं गुरुत्वादिकृत्। द्रवेति। आप्यं द्रव्यं द्रवादिगुणोल्बणं स्नेहनादिकृत्। रूक्षेति। आग्नेयं

वायव्यं रूक्ष-विशदं लघु-स्पर्श-गुणोल्बणम् ।
रौक्ष्य-लाघव-वैशद्य-विचार-ग्लानि-कारकम् ॥ ११ ॥
नाभसं सूक्ष्म-विशद-लघु-शब्द-गुणोल्बणम् ।
सौषिर्यलाघवकरं जगत्येवमनौषधम् ।
न किञ्चिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः ॥ १२ ॥
द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्कटम् ।
अधोगामि च भूयिष्ठं भूमि-तोय-गुणाधिकम् ॥ १३ ॥
इति द्रव्यं रसान् भेदैरुत्तरत्रोपदेक्ष्यते ॥ १४ ॥
वीर्य्यं पुनर्वदन्त्येके गुरु-स्निग्ध-हिमं मृदु ।
लघु-रूक्षोष्ण-तीक्ष्णञ्च तदेवं मतमष्टधा ॥ १५ ॥
चरकस्त्वाह वीर्य्यं तद् येन या क्रियते क्रिया ।

---

द्रव्यं रूक्षादिगुणोत्कटं दाहादिकरम् । वायव्यं रौक्ष्यादिगुणं रौक्ष्यलाघवादिकरञ्च । नाभसमिति । नाभसं द्रव्यं सूक्ष्मादिगुणोल्बणं सौषिर्यादिकरञ्च । जगतीति । एवमनेन पञ्चमहाभूतात्मकत्वेन गुर्वादिगुणयोगेन द्रव्याणां जगति भुवनेऽस्मिन्नानौषधभूतं न किञ्चिद्द्रव्यमस्ति, अपितु सर्वमेव द्रव्यं यत्सिकतापांश्वादिकं तदौषधं चिकित्सितम् । वशान्नानार्थयोगयोः । अर्थश्च योगश्चार्थयोगौ । अर्थः प्रयोजनं; योगो युक्तिः । यथाऽनया युक्त्यौषधमिदं योजितमस्य रोगस्य विजयाय स्याद् अनया चास्य रोगस्येति । नानाविधौ यावर्थयोगौ तयोर्वशात् सामर्थ्यात् सर्वमपि द्रव्यमौषधम्; रोगप्रतीकारहेतुत्वात् ॥ ८—१२ ॥

अथ किं द्रव्यं किम्भूतोत्कटं भवतीत्याह;—द्रव्यमिति । ऊर्ध्वं गच्छतीत्यूर्ध्वं गमम् । खप्रकरणे गमेरप्युपसंख्यानमिति खः । प्रायो बाहुल्येनोर्ध्वगं द्रव्यमग्निपवनाधिकं भवति; यथा मदनफलादि । भूयिष्ठं प्रायेण । तथा चाऽग्निसमीरणोत्कटस्याप्यधोगामित्वं दृष्टम्; यथा हरीतक्यादेः । अचिन्त्यप्रभावत्वात् यथा सर्पे विषमयत्वेऽपि तत्फणामणेर्विषघ्नत्वम् । भूमितोयोल्बणं द्रव्यमधोगामि भवति; यथा त्रिवृतादि । यत् व्यामिश्रात्मकं तुल्यकालमूर्ध्वाधोदोषहरणं तदिह ग्रन्थगौरवभयान्नोक्तमपि मिश्रीभूतोत्कटं द्रव्यं व्यामिश्रात्मकमिति सामर्थ्यलब्ध एवायमर्थः ॥ १३ ॥

इतीति । इति परिसमाप्तौ । द्रव्यं प्रति यद्वक्तव्यं तन्निष्पन्नमित्यर्थः । एवं द्रव्ये निर्दिष्टे रसा निर्देष्टुं युक्ता इत्याह—रसानित्यादि । बहुवक्तव्यत्वादुत्तरत्रानन्तरेऽध्याये रसान् भेदैस्त्रिषष्टिसंख्यावच्छिन्नै रुपदेक्ष्यते तन्त्रकृत् ॥ १४ ॥

अथ वीर्य्यस्य विपाकादिभ्यः प्राधान्यात् तच्चर्चां प्रस्तौति;—वीर्य्यमिति । द्रव्यमुक्तम् । वीर्य्यं पुनर्गुर्वादीनष्टौ गुणान् द्रव्याश्रितानिति समाचक्षते । तस्मादेवमनेन प्रकारेण वीर्य्यमष्टधाऽष्टप्रकारं गुर्वादीनां मतम् । चरक इति । चरकाचार्य्यः पुन-

नावीर्य्यं कुरुते किञ्चित्सर्वा वीर्य्यकृता हि सा ॥ १६ ॥
गुर्वादिष्वेव वीर्य्याख्या तेनान्वर्थेति वर्ण्यते।
समग्रगुणसारेषु शक्त्युत्कर्षविवर्त्तिषु।
व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १७ ॥
अतश्च विपरीतत्वात् सम्भवंत्यपि नैव सा।
विवक्ष्यते रसाद्येषु वीर्य्यं गुर्वादयो ह्यतः ॥ १८ ॥

---

रेवं वक्ति। येन स्वभावेन या क्रिया क्रियते यत्कर्म निष्पाद्यते तद्वीर्य्यम्। तदेव यावत् किञ्चिद्गुणजातं द्रव्ये स्थितं तत्सर्वं वीर्य्यमेव सर्वं वीर्य्यं करोति। अतएवाह,— नावीर्य्यमित्यादि। यन्न वीर्य्यं तन्न किञ्चित्करोति न काञ्चिदप्यर्थक्रियां निष्पादयति। प्रतिनियतशक्तिपरिष्वक्तत्वात् सर्वभावानाम्। अतएवाह ;—सर्वेत्यादि। हिशब्दो यस्मादर्थे। यस्मात्सर्वा क्रिया वीर्य्यकृता वीर्य्येण जनिता, ततो यन्न वीर्य्यं तन्न किञ्चित् कुरुते ॥ १५। १६ ॥

गुर्वेति। यतो वीर्य्यस्यैव कारणसामर्थ्यं तेन कारणेन गुर्वादिषु एवाष्टासु वीर्य्याख्या अन्वर्था अनुगतार्थेति भण्यते। एवकारोऽवधारणार्थः। गुर्वादिषु एव वीर्य्यसंज्ञा न तु रसविपाकप्रभावेषु। किं भूतेषु गुर्वादिषु ? समग्रेत्यादि। समग्राश्च ते गुणाश्च तेषु साराश्चिरकालावस्थितयो गुर्वादयः एव। तथाच जाठराग्निसंयोगेनापि न मधुरादिरसवत्स्वभावमेते जहति। सर्तेः स्थिर इति घञि सारशब्दः। तथाऽन्येभ्यो मन्दसान्द्रादिभ्यो रसादिभ्यो वा गुणेभ्यो वा गुर्वादयः शक्त्युत्कर्षविवर्त्तिनः। शक्तिः सामर्थ्यस्योत्कर्षं आधिक्यम्। विशेषेण वर्त्तो विशेषेण भवनम्। शक्त्युत्कर्षस्य विवर्त्तः स विद्यते येषां त एवम्। किञ्च गुर्वादीनां गुणानां व्यवहाराय व्यवहारार्थम्। मुख्यत्वादन्येभ्यो गुणेभ्यो गुर्वादयः प्रधानभूता इत्यर्थः। तथाच, "गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रयाः" इत्युक्तं न मधुरादयो गुणा इति। तस्माद्गुर्वादीनां गुणानां व्यवहारमुख्यत्वं रसादिभ्यः। तथा बह्वग्रग्रहणाद्बहुग्रहणादग्रग्रहणाच्च बहवो द्रव्यरसादयो गुर्वादिभिर्गृहीता भवन्ति। तथा चायुर्वेदशास्त्रेषु रसादिभ्यो गुर्वादीनामग्रे ग्रहणं दृष्टम्। यथा वातादिदोषगुणनिरूपणायां गुर्वादीनामेव पूर्वं ग्रहणं न रसादीनाम्। तथा च तत्र रूक्षो लघुरित्याचार्य्योऽपठद्वायादिलक्षणे। एवं गुर्वादीनामेवाग्रे ग्रहणाद्गुर्वादिष्वेव वीर्य्याख्याऽन्वर्थाऽनुगतार्थेति भण्यते ॥ १७ ॥

अत इति। अतोऽस्माच्च कारणकदम्बकाद्विपरीतत्वाद्वैपरीत्येन स्थितत्वान्न रसादयो वीर्य्यम्। तथाहि, रसस्य सारत्वं नास्ति। जाठरानलसंयोगवशेन रसान्तरोत्पत्तेः। गुर्वादीनां तु जठराग्निसंयोगवशेनापि नान्यथाभावः। तथा न रसस्य शक्त्युत्कर्षविवर्त्तित्वम्। यतो रसस्य गुर्वाद्याहितशक्तेरेव स्वकर्मणि सामर्थ्यम्। व्यवहाराय यथा गुर्वादेर्मुख्यत्वं यथा बह्वग्रग्रहणं तथा प्रागदर्शितम्। प्रभावः सर्वातिशायी द्रव्यस्वभावस्तस्य च क्रियानिर्वर्त्तनसामान्ये सत्यपि वीर्य्यसंज्ञा पूर्वोक्ताद्धेतोर्न वर्त्तते

उष्णं शीतं द्विधैवान्ये वीर्यमाचक्षतेऽपि च ॥ १९ ॥
नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ।
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ॥ २० ॥
तत्रोष्णं भ्रम-तृड्-ग्लानि-स्वेद-दाहाशुपाकिताः ।
शमञ्च वातकफयोः करोति शिशिरं पुनः ।
ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः ॥ २१ ॥
जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् ।
रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २२ ॥
स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।

---

एवं विपाककर्मणोरपि चिन्त्यम् । तस्माद्रसाद्येषु सम्भवन्त्यपि विद्यमानानि असद्रूपेव सा वीर्य्यसंज्ञा न विवक्ष्यते नोररीक्रियते । आदौ भव आद्यः । दिगादित्वाद्यत् । रस आद्यो येषां प्रभावादीनां त एवं तेषु । वीर्य्यमित्यादि । हिशब्दो यस्मादर्थे । यत एवं सा वीर्य्यसंज्ञा सम्भवन्त्यपि रसादिषु वैपरीत्यान्न विवक्ष्यतेऽतो गुर्वादय एव वीर्य्यं न रसादयः ॥ १८ ॥

उष्णमिति । अन्ये आचार्य्या उष्णं शीतमिति द्विःप्रकारं वीर्य्यमाचक्षते । एवकारोऽवधारणार्थः । द्विधैव वीर्य्यं नाष्टधेति । अपिचेति निपातसमुदायो युक्तिसमुच्चये । तेऽपि सयुक्तिकमेवाहुरित्यर्थः ॥ १९ ॥

तामेव युक्तिं दर्शयन्नाह ;—नानेति । नानास्वभावमपि द्रव्यं स्थावरजङ्गमाद्यचेतनचेतनमग्नीषोमौ महाबलावुत्कृष्टशक्ती न जातु कदाचिदतिक्रामति नोल्लङ्घ्य वर्त्तते । अवश्यं हि द्रव्यं किञ्चिदाग्नेयं किञ्चित्सौम्यम् । अतः किञ्चिद्द्रव्यमुष्णवीर्य्यं किञ्चिच्छीतवीर्य्यम् । तथा च मुनिः ;—"न मत्स्याः पयसा सहाभ्यवहार्य्याः । उभयं ह्येतन्मधुरं मधुरविपाकं शीतोष्णत्वात् विरुद्धवीर्य्यं विरुद्धवीर्य्यत्वाच्छोणितप्रदूषणाय" इति । अत्र दृष्टान्तमाह ;—व्यक्ताव्यक्तमित्यादि । व्यक्तं चाव्यक्तं च व्यक्ताव्यक्तं ; नानात्मकमपि जगत्त्रैलोक्यं कर्तृ यथा व्यक्तं चाव्यक्तञ्च नातिक्रामति तथा द्रव्यमग्नीषोमावित्यर्थः । व्यक्तं स्थूलं दृश्यमित्यर्थः । साङ्ख्यानान्तु महदादि व्यक्तमव्यक्तं प्रधानं पुरुषश्च । तत्रेति । तत्र तयोरुष्णशीतयोर्मध्ये उष्णमुष्णवीर्य्यं भ्रमादीन् करोति । आशुपाकितां शीघ्रपाकित्वम् । शिशिरं शीतवीर्य्यन्तु ह्लादनादीन् करोति ॥ २०।२१ ॥

वीर्य्यादनन्तरं विपाकं लक्षयति ;—जाठरेणेति । जाठरेणौदर्य्येण अग्निना योगात् संश्लेषाद् यद् रसानां परिणामान्ते जरणनिष्ठाकाले रसान्तरं रसविशेष उत्पद्यते स विपाक इति स्मृतो मुनिभिः कथितः ॥ २२ ॥

स्वादुरिति । स्वादुर्मधुरो गुडादिः पटुर्लवणः सैन्धवादिर्मधुरं कृत्वा पच्यते रस इति सम्बन्धः । मधुरमिति क्रियाविशेषणत्वान्नपुंसकलिङ्गम् । स्वादुः स्वादुविपाक इत्यर्थः ।

तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ॥ २३ ॥
रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाशुभम् ।
किञ्चिद्रसेन कुरुते कर्म पाकेन वापरम् ।
गुणान्तरेण वीर्य्येण प्रभावेणैव किञ्चन ॥ २४ ॥
यद् यद् द्रव्ये रसादीनां बलवत्त्वेन वर्त्तते ।
अभिभूयेतरांस्तत्तत्कारणत्वं प्रपद्यते ॥ २५ ॥

---

अम्लो रसो दधिकाञ्जिकादिरम्लं पच्यते अम्लविपाको भवति । तिक्तोषणकषायाणां प्रायशः कटुर्विपाको भवति । प्रायशोग्रहणं सर्वत्रापि योजनीयम् ;—तेन व्रीहिस्थो मधुरो रसोऽम्लं पच्यत इत्युपपन्नम् । तथा चोक्तम् ;—"स्वादुरम्लविपाकोऽन्यो व्रीहिः" इति । तथा हरीतक्या भूयस्त्वेन यः कषायो रसः स मधुरमेव पच्यते ;—तथा कटुको रसः शुण्ठ्यार्द्रकपिप्पल्यादिस्थो मधुरं पच्यते । तथा चोक्तम् ;—"कषाया मधुराः पाके" इति । तथा 'नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् । रुच्यं लघु स्वादुपाकम्" इति । तद्वदार्द्रकमपीति । तथा, स्नेभजा स्वादुशीतार्द्रेत्यारभ्य यावत्स्वादुपाकेति । अत्र केचिदाहुः ;—तिक्तकषाययोरेव कटुविपाकतया पित्तकर्तृत्वमापद्यत इति । तदेतदसत् ; शीतवीर्य्यत्वेनैतयोः पित्तहन्तृत्वात् ; वीर्य्यं हि रसविपाकौ विजयते । वक्ष्यति हि ;—"रसं विपाकस्तौ वीर्य्यम्" इति ॥ २३ ॥

रसैरिति । रसैर्जिह्वाविषयिकैर्मधुराम्लकटुकैर्विपाककालोपलभ्यो मधुराम्लकटुकलक्षणो यो रसो भवति असौ तुल्यफलः । तुल्यं सदृशं फलं यस्य स तुल्यफलः । एतदुक्तं भवति ;—अभ्यवहृतस्य मधुररसस्य जाठराग्निसंयोगवशाद् यद्रसान्तरं फलतया निष्पन्नं तद्रसैः सदृशम् । फलग्रहणेनैतत् प्रतिपादयति । फलोपममेव वृष्यादिलक्षणकार्य्यसदृशं न तु कुसुमोपमं देहाह्लादनादिलक्षणकार्य्यमिति । एवमम्लादीनामपि व्याख्येयम् । तत्रेत्यादि । तेषु रसवीर्य्यविपाकादिषु मध्ये द्रव्यं किञ्चिच्छुभाशुभं सद्सत्कर्म रसेन कुरुते । यथा, मधु कषायरसत्वेन पित्तं शमयति । किञ्चिद् विपाकेन ; यथा, तदेव मधु कटुविपाकतया कफं हन्ति । किञ्चन द्रव्यं गुणान्तरेण । अन्योऽन्यगुणविलक्षत्वाद् रसविपाकतो यः स गुणान्तरो गुर्वादिस्तेन । यथा, अम्लं काञ्जिकं कफं शमयति ; रौक्ष्यात् । किञ्चन वीर्य्येण । यथा, कषायतिक्तं महत्पञ्चमूलं वातं जयति न तु पित्तम्, उष्णवीर्य्यत्वात् । किञ्चन द्रव्यं प्रभावेणैव शुभाशुभं कर्म कुरुते । यथा, अम्लोष्णा सुरा क्षीरं वर्द्धयति ॥ २४ ॥

ननु गुरुणाम्लमधुरादिगुणानां रसादीनां विरोधः । तत्रैषां कार्य्यनिष्पत्तौ समशक्तित्वं न वेत्याशङ्कानिवृत्त्यर्थमाह ;—यदिति । रसादीनां रसवीर्य्यविपाकप्रभावानां मध्ये यद् रसादिवस्तु रसो वीर्य्यं वा विपाको वा प्रभावो वा बलवत्त्वेन बलिष्ठतया द्रव्ये वर्त्ततेऽवतिष्ठते तत्तद् वस्तुजातमितरानबलिष्ठानभिभूय विफलीकृत्य कारणत्वं प्रतिपद्यते । कर्मकरणे कारणतामासादयतीत्यर्थः ॥ २५ ॥

विरुद्धगुणसंयोगे भूयसाल्पं हि जीयते ॥ २६ ॥
रसं विपाकस्तौ वीर्यं प्रभावस्तान्यपोहति ।
बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ २७ ॥
रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ॥ २८ ॥
दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी ।

---

अत इदमाह ;—विरुद्धेति । हि यस्माद्विरुद्धगुणसंयोगे संहतीभावे सति यदल्पं वस्तु तद्भूयसा बलवता जीयतेऽभिभूयते । गुणशब्देन चात्र रसादयो गृह्यन्ते न पारिभाषिका गुर्वादयोऽप्रकृतत्वात् । विरुद्धगुणसंयोग इत्यत्र विरुद्धगुणसमवेतद्रव्य-संयोग इति कल्प्यं न विरुद्धगुणसंयोग इति । न हि गुणानां संयोगो वक्तुं युज्यते ; किं तर्हि ? द्रव्याणाम् । तथा च मुनिः ;—"संयोगस्तु द्वयोर्बहूनां वा संहतीभावः" । विरोधश्च द्विविधः स्वरूपतः कार्यतश्च । स्वरूपतो विरोधो गुरुलघ्वोः शीतोष्णयोश्च । कार्यतो यथा ;—वायौ जेतव्ये रूक्षोष्णद्रव्यसंयोगोपयोगः । अत्र हि यो गुणानां विरोधः स कार्येण । तत्र यदल्पं वस्तुजातं तद्भूयसा वस्तुजातेनाभिभूयते । तत्र यथा क्षीरं शीतवीर्यमपि मधुररसहेतुक-स्नेहगौरवादिभिः सहायबाहुल्याद् वात-शमनाख्यं कार्यं करोति न पुनः स्वकार्यं वातप्रकोपाख्यम् ॥ २६ ॥

यत्र तु द्रव्ये रसादीनामुत्कर्षासम्भवः परस्परं साम्यं तत्र कस्य कार्यकारणत्वमित्याह ; —रसमिति । रसं मधुरादिषड्विधं विपाकः कर्त्ता व्यपोहति कार्यकरणे कुण्ठयति । यथा मधुरो मधुनि रसः कटुना विपाकेनाभिभूयते । अतएव पवनशमनाख्यं कार्यं मधुररस-हेतुकं न करोति अपि तु वातप्रकोपनाख्यं कटुविपाकहेतुकमेव करोति । तौ रस-विपाकौ वीर्यं कर्तृ भूतमपोहति । यथा महिषामिषोत्थितौ मधुररसविपाकौ उष्णवीर्याख्यं कर्तृ अभिभवति । अतएव तन्मांसं पित्तादिदूषणम् । अन्यथा स्वादुरसविपाकित्वात् पित्तशमकमेव स्यात् । प्रभावस्तु त्रीनपि रसादीन् विजयते । यथा ;—अम्लरसविपा-कोष्णवीर्या च सुरा क्षीरं जनयति ;—इतीदृशं रसादीनां नैसर्गिकं बलं स्वाभाविकी शक्तिः । एतदुक्तं भवति । रसं समबलमपि विपाको व्यपोहति । रसविपाकौ च सम-बलावपि वीर्यं स्वभावादपोहति । एतानि च समबलान्यपि प्रभावो व्यपोहतीति ॥२७॥

ननु द्रव्यरसविपाकवीर्याणि कर्मानुमानेन यथास्वरूपाण्येवावगच्छामः । प्रभावस्य तु न ज्ञायते कीदृशं कर्मेत्यत आह ;—रसादीति । द्वयोर्द्रव्ययो रसादीनां रसवीर्य-विपाकानां साम्ये सति यदेकं द्रव्यमन्यत् कर्म्म कुरुतेऽन्यत् पुनरन्यद्विशिष्टं कर्म्म, तत् प्रभावजं प्रभावाज्जातमिति ज्ञेयम् । अयमस्य द्रव्यस्य प्रभाव इति विशिष्टकर्मकरणाद्वि-ज्ञायत इत्यर्थः । ननु प्रभावः क उच्यते इति मूलः ;—रसवीर्यविपाकादिगुणाति-शायी द्रव्यस्य स्वभावो यः स प्रभावः । उक्तञ्च ;—"रसवीर्यविपाकादिगुणातिशय-वानजम् । द्रव्यस्वभावो निर्दिष्टो यः प्रभावः स कीर्त्त्यते" इति ॥ २८ ॥

अत्र निदर्शनार्थमाह ;—दन्तीति । चित्रकस्य रसवीर्यविपाकैस्तुल्यापि दन्ती रसादिभ्योऽतिशायिद्रव्यस्वभावयोगाद् विरेचनी न चित्रकश्चित्रकत्वात् । मधुकस्य च

मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ॥ २९ ॥
इति सामान्यतः कर्म द्रव्यादीनां पुनश्च तत्।
विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ॥ ३० ॥

---

मृद्वीका तुल्यापि रसादिभिर्योऽतिशायिद्रव्यस्वभावयोगात् मृद्वीका विरेचनी न मधुकम्। घृतं क्षीरस्य रसादिभिस्तुल्यमपि घृतं दीपनं न पुनः क्षीरम्। अन्येत्वेव प्रभावलक्षणं प्रतिपन्नाः प्रतिवस्तु स्वसंज्ञाप्रवृत्तिनिमित्तलक्षणो यो धर्मस्त्वतलादिप्रत्ययप्रतीतिसमधिगम्यः स प्रभावः। तन्त्रान्तरे चोक्तम् ;—"वस्तूनां यः स्वसंज्ञायाः प्रवृत्तौ कारणं स्मृतः। त्व-तलादिर्बोध्यश्च प्रभावः" इति। एवञ्च दन्तीत्वाद्दन्त्याः विरेचनकारित्वं प्रभावः। एवं मृद्वीकात्वात् मृद्वीकाया विरेचनकारित्वं प्रभावः। इत्यादि सकलपदार्थेषु बोध्यम् ॥ २९ ॥

सामान्यविशेषाभ्यां यतः सकलं व्याप्तमतो ग्रन्थकार इदमाह ;—इतीत्यादि। इति प्रकारे। अनेन प्रकारेण द्रव्यरसवीर्य्यादीनां सामान्येन कर्म्म व्याख्यातं न विशेषेण। यैरेव महाभूतैः रसवीर्य्यादयो द्रव्याश्रिता आरब्धास्तैरेव तथाभूतैस्तदाश्रयमपि द्रव्यम्। अतः सामान्यतः कर्म्म द्रव्यादीनां युक्तं सम्प्राप्तं, विशिष्टं कर्म्म प्रतिद्रव्यं वक्तुमिदमाह ;—पुनश्च तदिति। तत्सामान्योक्तं कर्म द्रव्यरसादीनां सम्बन्धि पुनर्भिद्यते विशिष्यते। केनेत्याह ;—विचित्रेत्यादि। विचित्राश्च ते प्रत्ययाश्च विचित्रप्रत्ययाः। नानाकारसन्निवेशयुक्तानि महाभूतानि प्रतिसत्वं प्राक्तनशुभाशुभकर्मप्रेरितो विचित्रो महाभूतपरिणाम इत्यर्थः। विचित्रप्रत्ययारब्धञ्च तद्द्रव्यञ्च तस्य भेदो विशेषस्तेन विचित्रप्रत्ययारब्धद्रव्यभेदेन तत्सामान्योक्तं कर्म्म द्रव्यादीनां भिद्यते। द्रव्याश्रितत्वाद् रसादीनामपि यत्कर्म तदपि द्रव्यभेदेन भिद्यते न तु सर्वमपि देशकालादिवशाद् विचित्रप्रत्ययारब्धम् ; परस्परवैलक्षण्याद्द्रव्याणाम्। परस्परवैलक्षण्ये चैषां विचित्रप्रत्ययारब्धत्वमेव कारणम्। यद् वशादन्यदिदं द्रव्यमिति रूपरसविपाकादिभिन्नमुत्पद्यते तथा प्रतिभासते च। तत्किं नु विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यत इति अत्राचक्ष्महे ;—सत्यमेतत्, किन्तु विशिष्टद्रव्यस्य संग्रहार्थं विचित्रप्रत्ययारब्धमिति विशेषणं शास्त्रकृता कृतम्। यस्य भेदेन द्रव्ये रसवीर्य्यादीनां यत्सामान्योक्तं कर्म्म तद्भिद्यते। यस्मिन् द्रव्ये रसादीनामन्यानि महाभूतान्यारम्भकाणि द्रव्यस्य चारम्भकाण्यपराणि च तद्द्रव्यं विचित्रप्रत्ययारब्धम्। तदेवं द्रव्याणां द्वैविध्यम्। यतः कानिचिद्द्रव्याणि यैरेव महाभूतैर्यथाविधै रसादय आरब्धास्तैरेव तथाविधैर्महाभूतैस्तदाश्रयाण्यपि द्रव्याण्यारब्धानि। तानि रसादिसमानप्रत्ययारब्धानि उच्यन्ते। तानि च यथायथं तत् कर्म्म रसाद्यनुगुणं सामान्यात् कुर्वते। यथा क्षीरेक्षुशर्करादीनि। कानिचित् पुनस्तदाश्रितरसादिसमारम्भकमहाभूतान्यन्यानि। तदाश्रयद्रव्यारम्भकाण्यन्यानि च महाभूतानि। तैरारब्धानि तानि विचित्रप्रत्ययारब्धानि द्रव्याणि। एतदुक्तं भवति ;—रसादीनामारम्भकाणि अन्यथाभूतानि महाभूतानि नोभयत्रैकरूपाणीति। तानि च यथायथं रसाद्यनुगुणं कर्म्म न कुर्वन्ति भिन्नत्वाद्धेतुभावस्य। तथाहि ;—रसादीनामारम्भेऽन्यो

स्वादुर्गुरुश्च गोधूमो वातजिद् वातकृद् यवः ।
उष्णा मत्स्याः पयः शीतं कटुः सिंहो न शूकरः ॥२१॥

इत्यष्टाङ्गहृदये सूत्रस्थाने नवमोऽध्यायः ॥ ९ ॥

---

हेतुरन्यश्च तदाश्रयद्रव्यारम्भ इति । यथा मकुष्ठयवमत्स्यसिंहादीनि । एतानि यथारसं वीर्य्यविपाककर्म्म कुर्वन्ति । विचित्रप्रत्ययारब्धत्वात् । इत्थं यानि रसादिसमानप्रत्ययारब्धानि द्रव्याणि च बहून्यपि तेषां रसोपदेशेन रसकर्म्म निर्देष्टुं शक्यते । अतएव हेतोः षण्णां रसानां योऽनुगुणनिर्देशस्तस्य सार्थकत्वम् । रसोपदेशमन्तरेण हि बहुतराणां द्रव्याणां समानरूपाणां क्षीरेक्ष्वादीनां कर्म वक्तुं सुखेन शक्यते। यानि तु विचित्रप्रत्ययारब्धानि द्रव्याणि तेषां प्रतिद्रव्यं कर्म्मोपदेशं विना यथायथं कर्म वक्तुं न शक्यते ॥ ३० ॥

एतदुदाहरणार्थं ग्रन्थकृदाह ;—स्वादुरिति । स्वादुरसोपेतो गुरुगुणयुक्तश्च गोधूमो मधुररसोपदिष्टं यद् वातजित्त्वं कर्म तत् करोति । समानप्रत्ययारब्धत्वात् । यवस्तु स्वादुरसोपेतो गुरुगुणयुक्तश्च मधुररसोपदिष्टं यद्वातजित्त्वं कर्म तन्न करोति, अपि तु वातकृत्त्वमेव करोति, विचित्रप्रत्ययारब्धत्वात् । मत्स्याः स्वादुरसोपेता गुरुगुणोपेताश्च न मधुररसोपदिष्टशीतवीर्य्याः, किं तर्हि ? उष्णवीर्य्या विचित्रप्रत्ययारब्धत्वात् । क्षीरञ्च स्वादुरसोपेतं गुरुगुणयुक्तञ्च मधुररसोपदिष्टशीतवीर्य्यं समानप्रत्ययारब्धत्वात् । स्वादुरसयुक्तो गुरुगुणयुक्तश्च सिंहो न यथारसं मधुरविपाकः, किं तर्हि ? कटुको विपाके, विचित्रप्रत्ययारब्धत्वात् । शूकरो मधुररसयुक्तो गुरुगुणोपेतश्च यथारसं मधुरविपाक एव समानप्रत्यारब्धत्वात् । एवं यानि समानप्रत्ययारब्धानि द्रव्याणि तेषां रसोपदेशेनैव गुणा निर्दिष्टा भवन्ति । यथा च मुनिः ;—"शीतं वीर्य्येण यद् द्रव्यं मधुरं रसपाकयोः । तयोरम्लं यदुष्णञ्च यच्चोक्तं कटुकं तयोः । तेषां रसोपदेशेन निर्दिष्टो गुणसंग्रहः । वीर्य्यतो विपरीतानां पाकतश्चोपदेक्ष्यते । यथापयो यथासर्पिर्यथा वा चव्यचित्रकौ । एवमादीनि चान्यानि निर्द्दिशेद् रसतो भिषक्" इति । बाहुल्येन च रसादिसमानप्रत्ययारब्धान्येव द्रव्याणीति चेतसि कृत्वा चान्योऽवोचत् । यथा, "गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये । रसेषु व्यपदिश्यन्ते साहचर्य्योपचारतः" इति । अतएव च बहुतराणि द्रव्याणि रसादिसमानप्रत्ययारब्धानि, अतो रसोपदेशव्याप्त्या तानि निर्देष्टुं शक्यन्ते नान्यथा । विचित्रप्रत्ययारब्धानि पुनः कतिपयान्येव द्रव्याणि तानि प्रतिद्रव्यमेवोपदिश्यन्ते । मुनिनाप्ययमर्थो [illegible]क्तः । यथा, "मधुरं किञ्चिदुष्णं स्यात् कषायं तिक्तमेव वा । यथा [illegible] यथा चानूपमामिषम् । लवणं सैन्धवं नोष्णमम्लमामलकं यथा । अर्कागुरुगुडूचीनां तिक्तानां चोष्णमुच्यते । किञ्चिदम्लरसं ग्राहि किञ्चिदम्लं भिनत्ति च । यथा कपित्थं [illegible] चामलकं यथा । पिप्पली नागरं वृष्यं कटुकाऽवृष्यमुच्यते । कषायं [illegible] सोऽभयायामतोऽन्यथा । तस्माद् रसोपदेशेन न सर्वं द्रव्यमादिशेत्" इति । [illegible] योगा वक्ष्यमाणास्ते रसादिसमानप्रत्ययारब्धैर्मधुराम्ललवणतिक्तकटुकषायर[illegible]याः । न तु विचित्रप्रत्ययारब्धैर्मधुराम्ललवणतिक्तकटुकषायरूपैः, यस्मा[illegible]निरूपिता रसवीर्य्यविपाकादयो

# दशमोऽध्यायः ।

अथातो रसभेदीयमध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

क्ष्माम्भोऽग्निक्ष्माम्बुतेजःख-वाय्वग्न्यनिलगोऽनिलैः ।

---

विद्यन्ते विचित्रप्रत्ययारब्धत्वात्। अयं रससंयोगभेद एवं गुणोऽयमेवं गुणत्वाच्चामुष्मिन् विषये योज्य एतस्मिन् विषये चायमिति निर्देष्टुं न शक्यते। अनिर्ज्ञातस्वरूपत्वात्। न हि विचित्रप्रत्ययारब्धैर्ये रससंयोगाः क्रियन्ते तेषां स्वरूपं कथमवधारयितुं शक्यते; अपिच, समानप्रत्ययारब्धैर्ये संयोगाः कल्प्यन्ते तेषां संयोगिनां वीर्य्यतो यो विरोधः शीतोष्णलक्षणः स न दोषाय। ये तु विचित्रप्रत्ययारब्धैः संयोगाः कल्प्यन्ते तेषां संयोगिनां यः शीतोष्णलक्षणैर्विरोधः स दोषायेति वेद्यम्। अन्यथा रसालापानकादीनामनेकद्रव्यकृतानामनभ्यवहार एव प्राप्नुयात्। तथा त्रयस्त्रिंशद्वर्गा ये वक्ष्यमाणास्तेषु यदयौगिकं तज्ज्ञात् यौगिकं त्वनुक्तमपि युञ्ज्यादिति यद्वक्ष्यते तत्र रसादिसमानप्रत्ययारब्धमेव योज्यम्; न विचित्रप्रत्ययारब्धम्; तस्य रसवीर्य्यविपाकानां नियमस्य कर्तुमशक्यत्वात्। तस्मादित्यादि। यत एवं विचित्रप्रत्ययारब्धं विचित्ररूपं तस्माद् रसोपदेशेन न सर्वं द्रव्यमादिशेदपि तु रसादिसमानप्रत्ययारब्धं द्रव्यमेव रसोपदेशेन निर्दिशेदिति ॥ ३१ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां द्रव्यादिविज्ञानीयोऽध्यायो नवमः ॥ ९ ॥

---

पूर्वस्मिन् अध्याये रसान् भेदैस्तत्रोपदेक्ष्यत इत्युक्तम्, अतस्तान् रसभेदान् वक्तुं रसभेदीयाध्यायं ब्रूते;—अथात इति। रसानां भेदो रसभेदस्तस्मै हितो रसभेदीयस्तमध्यायं व्याख्यास्यामः कथयिष्यामः। "रसनार्थो रसः" इति मुनिः। तथा अब्योनिरपामेव रसवत्त्वात् तथा च मुनिः,—"आपो हि रसवत्यः" इति। अपां चाव्यक्तरसत्वात् प्रतिव्यक्ति अन्यादृशो रसानां महाभूतवैलक्षण्यजः आस्वाद आस्वाद्यते। तथा च मधुररसाधिष्ठितानां क्षीरद्राक्षेक्षुशर्करादीनां प्रतिव्यक्त्यान्यादृशो मधुररसास्वाद उपलभ्यते; न तु एकरूपः। एवमम्लानामारनालकोलाम्लीकादीनामपि प्रतिद्रव्यमनेकरूप आस्वादविशेष उपलभ्यते न त्वेक एव ॥ १ ॥

पूर्वत्र प्रत्यवादि षडेव रसा इति तानेव लक्षयति;—क्ष्माम्भ इति। पृथिव्यादिभिर्महाभूतैर्द्वयोल्बणैर्द्विप्रधिकैः क्रमात्परिपाट्या यथासंख्यमित्यर्थः। मधुरादीनां षण्णां रसानामुद्भवोऽभिनिर्वृत्तिर्भवति। द्वयमुल्बणं येषु भूतेषु तानि द्वयोल्बणानि तैः। द्वयोल्बणशब्दोपादानाच्च द्रव्यवद्रसस्यापि पाञ्चभौतिकत्वमिति प्रतिपादयति। कतमत्

द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ २ ॥
तेषां विद्याद्रसं स्वादुं यो वक्त्रमनुलिम्पति।
आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादनः ॥ ३ ॥
प्रियः पिपीलिकादीनामम्लः क्षालयते मुखम्।
हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः ॥ ४ ॥
लवणः स्यन्दयत्यास्यं कपोलगलदाहकृत्।
तिक्तो विशदयत्यास्यं रसनं प्रतिहन्ति च ॥ ५ ॥
उद्वेजयति जिह्वाग्रं कुर्वंश्चिमिचिमां कटुः।
स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च ॥ ६ ॥
कषायो जडयेज्जिह्वां कण्ठस्रोतोविबन्धकृत् ॥ ७ ॥

---

पुनर्भूतद्वयं कतमस्मिन् रसेऽधिकमारम्भकं स्यादिति यथासंख्येन दर्शयन्नाह,—क्ष्माम्भो-ऽग्निक्ष्माम्बु तेजः-खवाय्वग्न्यनिलगोऽनिलैः। भूमिजलाभ्यामधिकाभ्यां मधुरः; क्ष्माग्नि-भ्यामम्लः। अम्ब्वग्निभ्यां लवणः; खवायुभ्यां तिक्तकः; अग्निवायुभ्यां कटुकः; क्ष्मानिलाभ्यां कषायः। ननु भूमितोयाधिक्यान्मधुर एवमम्ब्वाद्याधिक्यादन्यो भूम्याकाशा-धिक्यादन्य इत्येवमादिरसविकल्पैरसंख्येयरसप्रसङ्गः प्राप्नोति। अत्रोच्यते स्वभावाददोषः। एषां भूम्याकाशादीनामीदृशः स्वभावो यत् केनचिदेव भूताधिक्येन व्यवस्थितानि भूम्यादीनि रसान्तरोत्पादनसमर्थानि भवन्ति न सर्वेणेति ॥ २ ॥

ननु स्वलक्षणं विनाऽनुक्तो रसविशेषः कथं ज्ञायतामिति लक्षणार्थमाह;—तेषा-मिति। तेषां रसानां मध्ये आस्वाद्यमानो वक्त्रमनुलिम्पति मुखोपदेहं जनयति। तथा देहस्याह्लादन आश्वासकः। तथा अक्षाणामिन्द्रियाणां प्रसादनः प्रसन्नत्वकृत्। तथा पिपीलिकादीनां प्रियः। तं मधुरं जानीयात्। पिपीलिकादीनां प्रिय एतेनै-तद्दर्शयति। प्रमेहादिषु मूत्रगन्धोदये पिपीलिकोपसर्पणान्माधुर्य्यानुमानं कृत्वा मधु-मेहत्वादि ज्ञायते। आस्वाद्यमान इत्युत्तरत्रापि योज्यम्। अम्ल इति। अम्लो रस आस्वाद्यमानो मुखं क्षालयते स्रावयति। तथा रोमदन्तानां हर्षणः। हृषु अलीके। अलीककारी उद्वेजक इत्यर्थः। तथा अक्षिभ्रुवनिकोचनः; अक्षिणी च भ्रुवौ चाक्षि-भ्रुवम्; अचतुरादिसूत्रे निपातितम्। लवण इति। लवणो रसो मुखं स्यन्दयति। तथा कपोलयोर्गले च दाहं करोति। अन्नस्य रोचन इतीह अतिप्रसिद्धत्वान्नोक्तम्। संग्रहे तु स्पष्टार्थमुक्तम्; यथा,—"कण्ठकपोलं विदहत्यन्नं प्ररोचयति" इति। तिक्त इति। तिक्तो मुखं विशदयतीति; तच्च पैच्छिल्ययुतं करोति; रसनेन्द्रियञ्च प्रतिहन्ति अन्यरसग्रहणशक्तिं नाशयतीत्यर्थः। उद्वेजयतीति। कटुरास्वाद्यमानो जिह्वाग्रमुद्वे-जयति सोद्वेगं करोति; चिमिचिमां कुर्वन् दहनज्वालासंस्पर्शादिव। अक्ष्यादि स्रावयति। गण्डौ च दहतीव। कषाय इति। कषायो जिह्वां जडयति, रसादि-

रसानामिति रूपाणि कर्म्माणि मधुरो रसः ।
आजन्मसात्म्यात्कुरुते धातूनां प्रबलं बलम् ॥ ८ ॥
बालवृद्धक्षतक्षीण-वर्णकेशेन्द्रियौजसाम् ।
प्रशस्तो बृंहणः कण्ठ्यः स्तन्यसन्धानकृद् गुरुः ॥ ९ ॥
आयुष्यो जीवनः स्निग्धः पित्तानिलविषापहः ।
कुरुतेऽत्युपयोगेन समेदःकफजान् गदान् ।
स्थौल्याग्निसादसन्न्यास-मेहगण्डार्बुदादिकान् ॥ १० ॥
अम्लोऽग्निदीप्तिकृत् स्निग्धो हृद्यः पाचनरोचनः ।
उष्णवीर्य्यो हिमस्पर्शः प्रीणनः क्लेदनो लघुः ॥ ११ ॥
करोति कफपित्तास्रं मूढ़वातानुलोमनम् ।
सोऽत्यभ्यस्तस्तनोः कुर्य्याच्छैथिल्यं तिमिरं भ्रमम् ।

---

क्रियायां मन्दीकरोति। तथा कण्ठस्य स्रोतांसि शिराविशेषास्तेषां विबन्धं करोति श्वासादीनामयथाप्रवृत्तिमिव कुरुत इत्यर्थः ॥ ३—७ ॥

रसानामिति। इति परिसमाप्तौ। रसानां मधुरादीनां लक्षणानि समाप्तानि। सम्प्रति तेषां कर्म्म यथास्वं प्रदर्शयन्नाह कर्म्माणीति। कर्म्माणि वक्ष्यमाणानीति वाक्यशेषः। अथ को रसः किं कर्म्म करोतीत्यत आह,—मधुर इति। मधुरो रसो धातूनां बलं प्रबलं कुरुते। बलं निजं यत् प्रकृष्टं जनयतीत्यर्थः। कुतः? आजन्मसात्म्याज्जन्मप्रभृतिदेहस्य सात्म्यादित्यर्थः। बालभाव एव हि क्षीरादिना पुरुषस्य वृत्तिः। तथा बालादीनां प्रशस्तो हितस्तेजसोऽधिकवर्द्धनत्वात् प्रशस्तः। ओजस्तु तेजो धातूनां परमिति ओजोलक्षणं वक्ष्यति। तथा बृंहणः कण्ठ्यश्च। स्तन्यं क्षीरं; सन्धानं श्लेषः; ते करोतीति स्तन्यसन्धानकृत्। तथा आयुष्यादिगुणः। ननु आयुष्यजीवनयोरेकार्थत्वादेकतरोपादानमेव युक्तम्, नैवम् एतयोर्भिन्नार्थत्वात्। तथाहि, आयुष्यः स उच्यते योऽपरिमितायुषो हितोऽधिकायुषो हितत्वात्। तथा च मुनिः,—"तेनायुरमितं लेभे" इति; यस्त्वायुषो नियतरूपस्य तामेव मर्य्यादामनुबध्नाति स जीवयतीति जीवन उच्यते। तदनयोः स्पष्ट एव भेदः। तथा जीवनमोजस्यमित्यभिन्नार्थौ किन्तु एतयोर्द्वयोरपीह यदुपादनं, तदोजसो द्विविधाया अपि वृद्धेः कारकोऽयमिति प्रतिपादयितुम्; तथा च मधुरो रसो रुधिरादिक्रमेणौजसो वृद्धिकरः सामान्याद्विशेषाच्च यथा क्षीरं धातुवर्द्धनमुक्तं वृष्यञ्च। तत्र धातुवर्द्धनत्वेनैव वृष्यत्वस्योक्तत्वाद्वृष्यशब्दोपादानं यत्तदन्यानि वृष्याणि रूपाण्यात्मगुणादीनि तेभ्यः सकाशाद्विशेषेणाश्वेव वृद्धिकरमिति द्योतयितुं कृतमिति। कुरुते इत्यादि। मधुरो रसोऽत्युपयोगेनातिसेवया मेदःश्लेष्मोत्थान् रोगान् करोति। कांस्तानित्याह;—स्थौल्यादिकान् ॥ ८—१० ॥

कण्डूपाण्डुत्ववीसर्प-शोफविस्फोटतृड्ज्वरान् ॥ १२ ॥
लवणः स्तम्भसङ्घात-बन्धविध्मापनोऽग्निकृत् ।
स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ॥ १३ ॥
सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ।
तृट्कुष्ठविषवीसर्पान् जनयेत् क्षपयेद् बलम् ॥ १४ ॥
तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड् विषम् ।
कुष्ठमूर्च्छाज्वरोत्क्लेश-दाहपित्तकफान् जयेत् ॥ १५ ॥
क्लेदमेदोवसामज्ज-शकृन्मूत्रोपशोषणः ।
लघुर्मेध्यो हिमो रूक्षः स्तन्यकण्ठविशोधनः ।
धातुक्षयानिलव्याधीनतियोगात् करोति सः ॥ १६ ॥
कटुर्गलामयोदर्द-कुष्ठालसकशोफजित् ।
व्रणावसादनस्नेह-मेदःक्लेदोपशोषणः ॥ १७ ॥
दीपनः पाचनो रुच्यः शोधनोऽन्नस्य शोषणः ।
छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ॥ १८ ॥
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ।
मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ॥ १९ ॥
कषायः पित्तकफहा गुरुरस्रविशोधनः ।

---

अम्ल इति । अम्लो रसोऽग्निदीप्तिकृत्त्वादियुतः तथा कफपित्तास्रं करोति । मूढ़मननुलोमगं वातमनुलोमयतीति मूढवातानुलोमनः । सोऽम्लो रसोऽतिसेवितो देहशैथिल्यं तिमिरादींश्च कुर्य्यात् ॥ ११ । १२ ॥

लवण इति । लवणो रसः स्तम्भादिविध्मापनो वह्निकृत्त्वादियुतश्च । सोऽत्यभ्यस्तो वातरक्तादीन् जनयेत् । बलं प्राणं क्षपयेत् ॥ १३ । १४ ॥

तिक्त इति । तिक्तो रसः स्वयं मुखस्यारोचनशीलोऽरुच्यादीन् जयेत् । अरुचिराहारद्रव्यविषयेऽनभिलाषः । क्लेदादीनामुपशोषणः । तथा लघ्वादिगुणयुक्तः सोऽविसेवितो धातुक्षयादीन् कुरुते ॥ १५ । १६ ॥

कटुरिति । कटुर्गलामयादीन् जयति । व्रणस्यावसादनो रोहणः स्नेहादिविशोषणो दीपनत्वादिगुणयुक्तश्च । अन्नं शोषयति विदहति । अन्नशोषणत्वाच्छिनत्ति बन्धान् । स्रोतांसि विवृणोति प्रसारयति कफघ्नश्च सोऽतिनिषेवितस्तृष्णादीन् करोति ॥ १७—१९ ॥

पीड़नो रोपणः शीतः क्लेदमेदोविशोषणः ॥ २० ॥
आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ।
करोति शीलितः सोऽतिविष्टम्भाध्मानहृद्रुजः ।
तृट्कार्श्यपौरुषभ्रंश-स्रोतोरोधमलग्रहान् ॥ २१ ॥
घृतहेमगुड़ाक्षोड-मोचचोचपरूषकम् * ।
अभीरुवीरापनस-राजादनबलात्रयम् ॥ २२ ॥
मेदे चतस्रः पर्ण्यो जीवन्ती जीवकर्षभौ ।
मधूकं मधुकं बिम्बी विदारी श्रावणीयुगम् ॥ २३ ॥
क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यः काश्मरी सहे ।
क्षीरेक्षुगोक्षुरक्षौद्र-द्राक्षादिर्मधुरो गणः ॥ २४ ॥
अम्लो धात्रीफलाम्लीका-मातुलुङ्गाम्लवेतसम् ।
दाड़िमं रजतं तक्रं चुक्रं पालेवतं दधि ।
आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ २५ ॥
वरं सौवर्चलं कृष्णं बिडं सामुद्रमौद्भिदम् ॥ २६ ॥
रोमकं पांसुजं सीसं क्षारश्च लवणो गणः ।
तिक्तः पटोली त्रायन्ती बालकोशीरचन्दनम् ।
भूनिम्बनिम्बकटुका-तगरागुरुवत्सकम् ॥ २७ ॥

---

कषाय इति। कषायः पित्तकफघ्नो गुरुत्वादियुतः। अतिशयेन त्वक्प्रसादनश्च। सोऽत्युपयुक्तो विष्टम्भादीन् करोति ॥ २० ॥

अथ मधुरादिस्कन्धान्निर्दिशति,—घृतेत्यादि। हेम काञ्चनम्; राजादनं चापप्रियम्; बलात्रयं बलातिबला नागबलेति। मेदा महामेदेति मेदाद्वयम्। चतस्र इति। शालिपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च। मधूकं मधूकपुष्पम्; मधुकं मधुयष्टी; बिम्बी गोह्वा; श्रावणीयुगं श्रावणी महाश्रावणी च। क्षीरिणी काञ्चनक्षीरी; काश्मरी गाम्भारी। सहे महासहा क्षुद्रसहा च। आदिशब्देन तृणपञ्चमूलं मेदो मज्जतैलं मधुर-दाडिम-पुष्करबीज-शृङ्गाटकाऽश्वगन्धा-श्वदंष्ट्रा-मृणाल-कशेरुक-सिञ्चतिका-खर्जूरी-तालमस्तकादीनि गृह्यन्ते ॥ २१—२४ ॥

इदानीमम्लस्कन्धमाह, अम्ल इति। धात्रीफलमामलकम्; रजतं रौप्यम्; चुक्रं शुक्तम्; उपलक्षणमेतत्। संगृहीतानि अन्यान्यपि कोशाम्रलकुच-कुवल-कोल-बदरैरा-

---

* चोचतालपरूषकमिति वा पाठः।

नक्तमालहरिद्रे द्वे-मुस्तमूर्वाटरूषकम् ।
पाठापामार्गकांस्यायोगुडूचीधन्वयासकम् ।
पञ्चमूलं महद्व्याघ्रौ विशालाऽतिविषा वचा ॥ २८ ॥
कटुको हिङ्गुमरिच-क्रिमिजित् पञ्चकोलकम् ।
कुठेराद्या हरितका: पित्तं मूत्रमरुष्करम् ॥ २९ ॥
वर्ग: कषाय: पथ्याक्षं शिरीष: खदिरो मधु ।
कदम्बोडुम्बरं मुक्ता प्रवालाञ्जनगैरिकम् ।
बालं कपित्थं खर्जूरं बिसपद्मोत्पलादि च ॥ ३० ॥
मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।
मुद्गाद्गोधूमत: क्षौद्रात्सितायाा जाङ्गलामिषात् ॥ ३१ ॥
प्रायोऽम्लं पित्तजननं दाड़िमामलकादृते ।
अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात् ॥ ३२ ॥
तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनत: ॥ ३३ ॥
कषायं प्रायश: शीतं स्तम्भनं चाभयामृते ॥ ३४ ॥
रसा: कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ।
तिक्त: कषायो मधुरस्तद्वदेव च शीतल: ॥ ३५ ॥

---

वत-प्राचीनामलक-मस्तु-धान्याम्लादीनीह्रैव बोध्यानि । अथ लवणस्कन्धमाह ;—वरमिति । वरं सैन्धवं, लवणश्रेष्ठत्वात् । क्षार: स्वर्जिकादि: । तिक्तस्कन्धं वक्ति ;—तिक्त इति । नक्तमाल: करञ्ज: ; कांस्यं लौहभेद: ; अयो लौहम् । कटुस्कन्धमाह,—कटुक इति । पित्तं मूत्रं छागादीनाम् । उपलक्षणं चेदम् । अन्यानि संग्रहोक्तानि च मन:शिलासर्षपकुष्ठादीनि बोध्यानि । कषायस्कन्धमाह,—वर्ग इति । आदिशब्देन प्रियङ्गुलोध्रकट्वङ्गादीनि गृह्यन्ते ॥ २९—३० ॥

इदानीमेषां गुणनिरूपणं करोति,—मधुरमिति । प्रायेण मधुरं द्रव्यं कफकृद्भवति, शाल्यादीन् पुराणान् वर्जयित्वा । प्रायोग्रहणं तैलमकुष्ठादीनां व्यभिचारदर्शनात् । एवमुत्तरत्रापि प्रायोग्रहणस्य प्रयोजनं वेद्यम् । प्रायोऽम्लमिति । अम्लं द्रव्यं प्राय: पित्तकृद्दाड़िमामलके हित्वा । लवणं द्रव्यं प्रायश्चक्षुषोऽपथ्यं सैन्धवं वर्जयित्वा । तिक्तमिति । तिक्तं द्रव्यं कटु च प्रायेणावृष्यं वातकृच्च गुडूच्यादीन् हित्वा । कषायमिति । कषायं द्रव्यं प्रायेण शीतवीर्य्यं स्तम्भनञ्च भवति हरीतकीं वर्जयित्वा । रसा इति । कट्वम्ललवणा रसा यथोत्तरमुष्णवीर्य्या: । कटुरुष्ण: ; अम्ल उष्णतर:, लवण उष्णतम: ।

तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा ॥ ३६ ॥

पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः ॥ ३७ ॥

पटोः कषायस्तस्माच्च मधुरः परमो गुरुः ॥ ३८ ॥

लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ॥ ३९ ॥

संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा।

रसानां यौगिकत्वेन यथास्थूलं विभज्यते ॥ ४० ॥

एकैकहीनांस्तान् पञ्च पञ्च यान्ति रसा द्विके।

---

एवमुत्तरत्रापि यथोत्तरत्वं योज्यम्। तिक्तादयश्च तद्वदेव यथोत्तरं शीतवीर्य्याः। तेन तिक्तः शीतवीर्य्यः; कषायः शीतवीर्य्यतरः; मधुरः शीतवीर्य्यतम इति स्थितम्। तिक्त इति। तिक्तकटुकषाया रूक्षा विष्टम्भकाश्च। तथेति। यथोत्तरमित्यर्थः। पट्वम्लमधुरा इति। पट्वादयः स्निग्धा निःसारितविण्मूत्रवाताश्च। तथेत्यत्रापि वर्त्तते। पटोरिति। लवणात् कषायो गुरुतरः कषायान्मधुरः परमं गुरुः, अतिशयेन गुरुरित्यर्थः। लघुरिति। अम्लो लघुस्तस्मादम्लात् कटुर्लघुतरस्तस्माच्च कटोस्तिक्तो लघुतमः ॥ ३१—३९ ॥

इदानीं रसानामाधारद्वारेण संयोगान् कल्पनाश्च विभजन्नाह,—संयोगा इति। वक्ष्यमाणया रीत्या रसानां योगाः सप्तपञ्चाशद्विभज्यन्त इति वचनविपरिणामेन सम्बन्धः। कल्पना पुनरेषां त्रिषष्टिधा विभज्यते। कथं कृत्वा कल्पना विभज्यते? यथास्थूलं स्थूलानतिक्रमेण व्यक्तरसास्वादानुरूपतया न पुनर्यथासूक्ष्मम्। तथा हि, रसानुरसकल्पनया तरतमयोर्वंशाच्च रसानां कल्पना क्रियमाणा आनन्त्यमुपैति। तस्माद् यथास्थूलं रसानां कल्पना त्रिषष्टिधा विभज्यते। तथा यौगिकत्वेन शरीरोपयोग्यत्वेन ॥ ४० ॥

इदानीं रससंयोगानां व्याख्यानं विभक्तिकामाह;—एकैकेत्यादि। द्विके परिमाणे रसाधारद्रव्यसम्बन्धिनि संयोगे पञ्च रसा मधुराम्ललवणतिक्तकटुकास्तान् पञ्चाम्ललवणतिक्तकटुकषायान् यान्ति संयुज्यन्ते। किम्भूतान्? एकैकेन हीना विनाकृता एकैकहीनास्तान्। येनैकेन युक्तास्तद्वियुक्तानित्यर्थः। अत्र पञ्चानां रसानां पर्य्यायेण प्रत्येकमेकैकहीनानाञ्च शक्तिमत्त्वेनैककर्तृत्वेन च सम्बन्धो वेद्यः। अतएव चतुर्द्विके पञ्चदशप्रकाराविति यद्वक्ष्यति तदुपपन्नम्। एवं मधुरोऽम्लादीनम्लो लवणादीन् लवणस्तिक्तादींस्तिक्तः कटुकषायौ कटुः कषायं यातीति स्थितम्। द्विकं इति द्वौ परिमाणमस्य संयोगस्य। संख्यायाः संज्ञेत्यादिपरिमाणानुवृत्तेः परिमाणार्थे संख्यायाः अतिशदन्तायाः कनिति कन्। एवं त्रिकादिषु वक्ष्यमाणेषु लक्षणं योज्यम्। द्विरसद्रव्यसंयोगे पञ्चदश भेदा भवन्ति। यथा,—१ मधुरोऽम्लं याति; २ मधुरो लवणं; ३ मधुरस्तिक्तं; ४ मधुरः कटुकं; ५ मधुरः कषायम्। १ अम्लो लवणं याति; २ अम्लस्तिक्तं; ३ अम्लः कटुकं; ४ अम्लः कषायम्। १ लवणस्तिक्तं; २ लवण

त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककम् ॥ ४१ ॥
चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृत्।

कटुकं, ३ लवणः कषायम्। १ तिक्तः कटुकं; २ तिक्तः कषायम्। १ कटुः कषायमिति। अत्र च मधुरस्य गन्तृत्वमेव न गम्यत्वं हीनत्वयोगाभावात्। कषायस्य गम्यत्वमेव न गन्तृत्वमन्त्यत्वात्। एवं द्विरससंयोग पञ्चदश। त्रिके त्रिरसाधारद्रव्यसम्बन्धिनि संयोगे स्वादुर्मधुरो दश संयोगान् याति। यथा,—१ मधुरोऽम्ललवणं; २ मधुरोऽम्लतिक्तकं; ३ मधुरोऽम्लकटुकं; ४ मधुरोऽम्लकषायम्। स एव मधुराम्लत्यागेन तत् स्थाने लवणयुक्तस्तिक्तादिभिस्त्रिभिः क्रमेणान्वितस्त्रीन् संयोगान् याति। १ मधुरलवणतिक्तकः; २ मधुरलवणकटुकः ३ मधुरलवणकषायः। स एव लवणत्यागेन तत् स्थाने तिक्तयुक्तः कटुकषायाभ्यां क्रमेणान्वितो द्वौ संयोगौ याति। १ मधुरतिक्तकटुकः, २ मधुरतिक्तकषायः। स एव तिक्तत्यागेन तत्स्थाने कटुकान्वित एकं संयोगं याति। १ मधुरकटुकषायः। एवं मधुरो दशसंयोगान् याति। अम्ल इत्यादि। त्रिक इति वर्त्तते। अम्लः षट्संयोगान् याति। यथा,—१ अम्ललवणतिक्तः; २ अम्ललवणकटुकः; ३ अम्ललवणकषायः। स एवाम्लो लवणत्यागेन तत् स्थाने तिक्तान्वितः कटुकषायाभ्यां क्रमेण च युक्तो द्वौ संयोगौ याति। १ अम्लतिक्तकटुकः, २ अम्लतिक्तकषायः। एवं तिक्तत्यागेनैकं संयोगं याति। १ अम्लकटुकषायः। इत्यम्लः षट्। त्रीन् पटुरिति। लवणस्तिक्तयुक्तः कटुकषायाभ्यां क्रमेणान्वितो द्वौ संयोगौ याति १ लवणतिक्तकटुकः, २ लवणतिक्तकषायः। स एव तिक्तत्यागेनैकं याति। १ लवणकटुकषायः। एवं लवणस्त्रीन् संयोगान् याति। तिक्त एकमेव संयोगं याति। १ तिक्तकटुकषायः। एवं त्रिकसंयोगे विंशतिः। चतुष्केष्वित्यादि। चतुष्काररससंयोगेषु स्वादुर्दश संयोगान् याति। तत्र मधुरः साम्लो लवणादिभिः षट् संयोगान् याति। यथा;—१ मधुराम्ललवणतिक्तः, २ मधुराम्ललवणकटुकः, ३ मधुराम्ललवणकषायः, ४ मधुराम्लतिक्तकटुकः, ५ मधुराम्लतिक्तकषायः, ६ मधुराम्लकटुकषायः। स एव मधुरोऽम्लत्यागेन तत् स्थाने लवणान्वितस्त्रीन् संयोगान् याति। १ मधुरलवणतिक्तकटुकः, २ मधुरलवणतिक्तकषायः, ३ मधुरलवणकटुकषायः। स एव लवणत्यागेन तत् स्थाने तिक्तान्वित एकं संयोगं याति। १ मधुरतिक्तकटुकषायः। एवं चतुष्केषु मधुरो दश संयोगान् याति। चतुरोऽम्ल इत्यादि। चतुष्क इति वर्त्तते। अम्ललवणस्तिक्तादिभिस्त्रीन् संयोगान् याति। १ अम्ललवणतिक्तकटुकः, २ अम्ललवणतिक्तकषायः, ३ अम्ललवणकटुकषायः। स एव लवणत्यागेन तत् स्थाने तिक्तान्वित एकं संयोगं याति। १ अम्लतिक्तकटुकषायः। एवं चतुष्केष्वम्लश्चतुरः। पटुः सकृत्। पटुर्लवणः सकृदेकं भेदं याति। १ लवणतिक्तकटुकषायः। एवं चतुष्केषु पञ्चदश संयोगभेदाः। पञ्चकेष्वेकमेवाम्ल इति। पञ्चकेष्वम्लो रस एकमेव भेदं याति। १ अम्ललवणतिक्तकटुकषायः। मधुरः पञ्च सेवते। मधुरो रसः पञ्च संयोगान् सेवते। १ अम्ललवणतिक्तकटुकषायः, २ लवणत्यागान्मधुराम्लतिक्तकटुकषायः, ३ तिक्तअम्लत्यागान्मधुरलवणतिक्तकटुकषायः, ४ कटुकत्यागान्मधुराम्ललवणतिक्तकषायः, ५ कषायत्यागान्मधुराम्ललवणकटुकषायः,

पञ्चकेष्वेकमेवाम्लो मधुरः पञ्च सेवते।
द्रव्यमेकं षड़ास्वादमसंयुक्ताश्च षड्रसाः ॥ ४२ ॥

---

त्यागान्मधुराम्ललवणतिक्तकटुक इति। १ पदेयनच सुखस्तृतेत्र रसभेदान् शृणुष्व मे। मधुरोऽम्लेन पटुना तिक्तेन कटुकेन च। २ कषायेण पृथक् सार्धमम्लस्तु लवणेन च। तिक्तेन कटुना सार्धं कषायेण पृथक् सह। ३ पटुस्तिक्तेन कटुना कषायेण पृथक् सह। तिक्तस्तु कटुना सार्द्धं कषायेण पृथक् तथा। ४ कटुकस्तु कषायेण द्विसंयोगी इति स्मृताः। दश पञ्च च भेदास्तु संख्याता विंशतिस्त्रिके। ५ मधुराम्लौ तु पटुना तिक्तेन कटुना तथा। कषायेण तथा सार्धं तथा स्वादुपटू पृथक्। ६ तिक्तेन कटुकेनापि कषायेण तथा सह। स्वादुतिक्तौ तु कटुना कषायेण पृथक् सह। ७ स्वादूषणौ कषायेण स्वादोरेवं दश त्रिके। भेदाः स्युरम्ललवणौ तिक्तेन कटुना पृथक्। ८ कषायेण तथासार्धमम्लतिक्तौ पृथक् सह। कटुकेन कषायेण तथाम्लकटुकौ सह। ९ कषायेणेति षट् प्रोक्ता भेदा अम्लस्य तु त्रिके। पटुतिक्तौ तु कटुना कषायेण पृथक् सह। १० पटूषणौ कषायेण भेदा इति पटोस्त्रयः। तिक्तोषणौ कषायेण तिक्तस्यैवं सकृत्स्मृतः। ११ त्रिकं भेदा इति प्रोक्ताश्चतुष्के दश पञ्च च। स्वाद्वम्ललवणाः सार्द्धं तिक्तेन कटुकेन च। १२ पृथक्कषायेण तथा मधुराम्लौ सतिक्तकौ। कटुकेन तु संपृक्तौ कषायेण पृथक् तथा। १३ स्वाद्वम्लकटुकाः साध कषायेणेति षट् स्मृताः। सप्तमश्चात्र मधुरो लवणोषणतिक्तकैः। १४ भेदोऽष्टमो मतः स्वादु-कटुतिक्तकषायकैः। नवमस्त्वत्र मधुरः षड्षणकषायकैः। १५ दशमोऽत्र भवेत् स्वादुतिक्तोषणकषायकैः। दश भेदा भवन्त्येवं मधुरेण चतुष्कके। १६ कटु-तिक्ताम्ललवणैर्भेद एकश्चतुष्कके। द्वितीयस्त्वम्ललवणकषायकटुकैः स्मृतः। १७ तृतीयोऽत्र भवेदम्लपटुतिक्तकषायकैः। चतुर्थोऽत्र भवेदम्लतिक्तोषणकषायकैः। १८ एवमम्लेन भेदाः स्युश्चत्वारोऽत्र चतुष्कके। पटुनैकोऽत्र लवणतिक्तोषणकषायकैः। १९ एवं पञ्चदश ख्याताश्चतुष्करससंख्यया। षड् भेदान् पञ्चके प्राहुस्तान् वक्ष्यामि विभागशः। २० एको भेदोऽम्ललवणतिक्तोषणकषायकैः। द्वितीयः स्वादुलवणतिक्तोषणकषायकैः। २१ तृतीयस्त्वम्लमधुरतिक्तोषणकषायकैः। चतुर्थस्त्वम्लमधुरपटूषणकषायकैः। २२ पञ्चमस्त्वम्लमधुरपटुतिक्तकषायकैः। षष्ठो भेदोऽम्लमधुरलवणोषणतिक्तकैः। २३ षड्-भेदाइति निर्दिष्टाः पञ्चके प्रविभागशः। भेदः स्वाद्वम्ललवणतिक्तोषणकषायकैः। २४ एकएव षड्रसेन पृथक्त्वेन तु षट् स्मृताः। स्वादुरम्लोऽथ लवणस्तिक्तकश्च कटुस्तथा। २५ कषाय इति भेदाः स्युः सर्वतोऽत्र त्रिषष्टिधा। चीरं सुरा विडं निम्बश्च्यापथ्यं रसान्वयम्। २६ द्रव्यं स्वादु रसादीनां षण्णां विद्धि यथाक्रमम्। द्रव्यं द्रव्यान्तरैरेव योजयेद्धि रसादिषु। २७ धात्रीफलं शर्करया लवणेनार्द्रकं तथा। एवमादीनि द्रव्याणि योजयेद्भिषगुत्तमः। २८ कानिचिद्द्विरसादीनि द्रव्याणि स्युः स्वभावतः। यथैषः षड्रसः क्षणो यथा पञ्चरसाऽभया। २९ मद्यं पञ्चरसं यद्वत्तिलो यद्वच्चतूरसः। एरण्डतैलं त्रिरसं माचिकं द्विरसं यथा। ३० घृतमेकं स्वादुरसं मधुरादिविभागतः। दिशाचादुदितादेवं धीरमूह्यं मनीषिणा ॥ ४१—४२ ॥

षट् पञ्चकाः षट् च पृथग्रसाः स्युश्चतुर्द्विकौ पञ्चदश प्रकारौ।
भेदास्त्रिकाविंशतिरेकमेकं द्रव्यं षडास्वादमिति त्रिषष्टिः ॥४३॥
ते रसानुरसतो रसभेदास्तारतम्यपरिकल्पनया च।
सम्भवन्ति गणनां समतीता दोषभेषजवशादुपयोज्याः ॥४४॥

इत्यष्टाङ्गहृदये सूत्रस्थाने दशमोऽध्यायः ॥ १० ॥

---

संप्रति एकैकहीनानित्यादिना ग्रन्थेन रसानां भेदाः शास्त्रकृतोक्तास्तानेव संक्षेपेण प्रकटयितुमाह,—षडिति। पञ्चकरसानां योगाः षट्संख्याः। पञ्चकेष्वेकमेवाम्लो मधुरः पञ्च सेवत इति। षट् च पृथग्रसा असंयुक्ताश्च षड्रसा इति। चतुरित्यादि। चतुष्कभेदः पञ्चदशप्रकारः। द्विकभेदश्च पञ्चदशप्रकारः। "चतुष्केषु दशस्वादुश्चतुरोऽम्लः पटुः सकृत्", एवं पञ्चदश प्रकाराः "एकैकहीनांस्तान् पञ्च पञ्च यान्ति रसा द्विके" इति वचनात्। भेदा इत्यादि। त्रिकास्त्रिभेदभिन्ना भेदा विंशतिः। त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एकं चेति विंशतिः। एकमेव द्रव्यं षडास्वादम्। इतीयं रसानां भेदास्त्रिषष्टिः ॥ ४३ ॥

यथास्थूलं चैषा त्रिषष्टिधा कल्पना ख्याता। सम्प्रति यथासूक्ष्मं प्रदर्शयितुमाह,—ते इति। ते रसभेदास्त्रिषष्टिरूपा रसतो रसवशेन तथानुरसतोऽनुरसवशेन तथा तारतम्यपरिकल्पनया अयं मधुरोऽयं मधुरतरोऽयं मधुरतम इत्येवंरूपा या तया च गणनां समतीताः संख्यामतिक्रान्ताः सम्भवन्ति। दोषेत्यादि। दोषा वातादयो भेषजानि हरीतक्यादीनि। दोषाश्च भेषजानि च दोषभेषजानि तेषां वशोऽनुरोधः सामर्थ्यं वा तस्माद्धेतुभूताद्रसभेदा उपयोज्या न दोषमनपेक्ष्य भेषजं वाऽनपेक्ष्य। एवमेवोपयोज्या इत्यर्थः। तथाच मुनिः,—"क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित्। दोषौषधादीन् संचिन्त्य भिषजा सिद्धिमिच्छता" इति। दोषभेषजवशादित्युपलक्षणार्थम्। देशादिवशादपि देशादीन् वीक्ष्य रसभेदा उपयोज्याः। यथा पवने जेतव्ये मधुराम्लौ लवण इति। स्वागतारनभगैर्गुरुकान्ता इति ॥ ४४ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां रसभेदाख्यानीयोऽध्यायो दशमः ॥ १० ॥

# एकादशोऽध्यायः ।

अथातो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
दोषधातुमला मूलं सदा देहस्य तं चलः ।
उत्साहोच्छ्वासनिश्वास-चेष्टावेगप्रवर्त्तनैः ॥ २ ॥
सम्यग् गत्या च धातूनामक्षाणां पाटवेन च ।
अनुगृह्णात्यविकृतः पित्तं पक्त्यूष्मदर्शनैः ॥ ३ ॥
क्षुत्तृड् रुचिप्रभामेधा-धीशौर्यतनुमार्दवैः ।
श्लेष्मा स्थिरत्वस्निग्धत्व-सन्धिबन्धक्षमादिभिः ॥ ४ ॥
प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।

---

रसभेदीयादनन्तरं दोषादिविज्ञानीय आरभ्यते। यतो दोषभेषजवशादुपयोज्या इत्युक्तम्, अत ईदृक्स्वरूपास्ते दोषा इति ज्ञापनार्थमध्यायोऽयमुच्यते। अथात इति। दोषा आदयो येषां ते दोषादयस्तेषां विज्ञानं प्राकृतेन वैकृतेन च स्वरूपेणोपगमस्तस्मै हितो यस्तमध्यायं व्याख्यास्यामः। आदिशब्देन धातवो मलाश्च संगृह्यन्ते। तत्स्वरूपोपगमेन च तएव दोषाः सम्यग्ज्ञाता भवन्ति। धातूनां मलानाञ्च दोषाधारभूतत्वात् ॥१॥

दोषेत्यादि। दोषा वातादयो धातवो रसादयो मला मूत्रादयस्ते देहस्य मूलमिव मूलम्। यथा वृक्षस्य स्कन्धशाखादियुक्तस्य मूलं प्रधानं तदारब्धत्वात्तथा देहस्य दोषधातुमलाः। तं च देहं चलो वायुरुत्साहादिभिरनुगृह्णात्युपकुरुते। उत्साहः सर्व्वचेष्टासूद्योगः। उच्छ्वास ऊर्द्ध्वं श्वसनं श्वासमुक्तिः। निश्वासः श्वासस्य शरीरान्तःप्रवेशनम्। चेष्टनं चेष्टा वाक्कायमनोव्यापारः। वेगानां प्रवर्तनं वातविण्मूत्रादीनां बहिर्निरसनम्। एतैश्च मारुतो देहमनुगृह्णाति। पित्तं पक्त्यादिभिरनुगृह्णाति। पक्तिः पाकः। ऊष्मा औष्ण्यम्। दर्शनं दृष्टिः। मेधा बुद्धिविशेषः। धीः प्रज्ञा। शौर्यं पौरुषम्। तनुमार्दवं शरीरमृदुत्वम्। श्लेष्मा स्थिरत्वादिभिरनुगृह्णाति। क्षमा क्षान्तिः ॥ २—४ ॥

प्रीणनमिति। प्रीणनादीनि कर्म्माणि रसादीनां क्रमात् क्रमेण श्रेष्ठानि स्मृतानि मुनिभिरिति शेषः। संगृहीतानि मध्यमान्यपराणि कर्म्माण्येषां सन्त्येव। यथा रसस्य दृष्टिरक्तपुष्ट्यादिकं कर्म्म; रक्तस्य च वर्णप्रसादो मांसपोषणम्; मांसस्य बलं मेदःपुष्टी च; मेदसः स्वेददार्ढ्यास्थिपुष्टयश्च; अस्थ्नो मज्जपोषणम्; मज्ज्ञो बलमस्थिपूरणं शुक्रपुष्टिश्च; शुक्रस्य हर्षो बलं च; एतैर्धातवो देहमनुगृह्णन्तीत्यर्थः। प्रीणनमाप्यायनम्। रसो हि सम्यगव्यवहृतः स्रोतांसि समाविश्येन्द्रियप्रसादमभिनिर्वर्तयन्मनसः प्रीतिं

गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात् स्मृतम् ॥ ५ ॥
अवष्टम्भः पुरीषस्य मूत्रस्य क्लेदवाहनम्।
स्वेदस्य क्लेदविधृतिर्वृद्धस्तु कुरुतेऽनिलः ॥ ६ ॥
कार्श्यकार्ष्ण्योष्णकामित्व-कम्पानाहशकृद्ग्रहान्।
बलनिद्रेन्द्रियभ्रंश-प्रलापभ्रमदीनताः ॥ ७ ॥
पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाल्पनिद्रताः।
पित्तं श्लेष्माग्निसदन-प्रसेकालस्यगौरवम्।
श्वैत्यशैत्यश्लथाङ्गत्वं श्वासकासातिनिद्रताः ॥ ८ ॥
रसोऽपि श्लेष्मवत् रक्तं विसर्पप्लीहविद्रधीन्।
कुष्ठवातास्रपित्तास्र-गुल्मोपकुशकामलाः।
व्यङ्गाग्निनाशसंमोह-रक्तत्वङ्नेत्रमूत्रताः ॥ ९ ॥
मांसं गण्डार्बुदग्रन्थि-गण्डोरूदरवृद्धिताः।

---

मादधाति। जीवनमोजोवृद्धिकरं रक्तकर्म्म। लेप उपदेहो मांसस्य कर्म्म। तदुपलिप्तान्यस्थीनि चेष्टां क्षमन्ते। स्नेहो नेत्रादिषु स्निग्धता मेदसः कर्म्म। धारणमूर्ध्वधारणमस्थिकर्म्म। पूरणं स्नेहेनास्थ्नां मज्ज्ञः कर्म्म। शुक्रस्य गर्भोत्पत्तिः श्रेष्ठं कर्म्मेति योज्यम् ॥ ५ ॥

इदानीं मलानां कर्म्माण्याह,—अवष्टम्भ इति। अवष्टम्भो देहधारणशक्तिः श्रेष्ठं कर्म्म पुरीषस्य स्मृतम्। मूत्रस्य क्लेदवाहनं श्रेष्ठं कर्म्म। मूत्रं क्लेदं निर्वाहयति। स्वेदस्य क्लेदविधारणं श्रेष्ठं कर्म्म। क्लेदाभावे हि नैव देहस्य मध्यमत्वक्। स्वेदस्य कचरोमधारणमपि। वृद्धः पुनर्वायुः कार्श्यादीन् करोति। बलादीनां भ्रंशेन सम्बन्धः। बलस्य तु प्राणोपघातो भ्रंशः। निद्रायास्तु नाशो भ्रंशः ॥ ६। ७ ॥

पीतेत्यादि। पीतस्य विड़ादिभिस्त्वगन्तैः सम्बन्धः। ततः क्षुदादिभिर्द्वन्द्वस्ततस्ता-प्रत्ययः। पित्तं पीतविण्मूत्रादीन् करोति। श्लेष्मा वृद्धोऽग्निसादादीन् करोति। श्वैत्यं गात्रशुक्लता। शैत्यमङ्गानां शिशिरत्वम्। रस इति। रसः श्लेष्मवत्। रसोऽपि वृद्धोऽग्निसादादीन् करोति। रक्तं वृद्धं विसर्पादीन् करोति। उपकुशो नाम दन्तरुजोत्तरतन्त्रे वक्ष्यमाणलक्षणा ॥ ८। ९ ॥

मांसमिति। मांसं वृद्धं गण्डादीन् रोगान् करोति गण्डशब्देन गण्डमाला गलगण्डश्च गृहीतौ। आद्यन्तलोपात्। (१) इतरथ गण्डो गण्डमांसम्। गण्डौ चार्बुदं च ग्रन्थिश्च गण्डार्बुदग्रन्थयः। गण्डौ च ऊरू च उदरं च तेषां वृद्धिता। ततो द्वन्द्वः।

---

(१) इतरथ मांसं वृद्धं गण्डो गण्डमांसाख्यादिति पाठान्तरम्।

कण्ठादिष्वधिमांसं च तद्वन्मेदस्तथा श्रमम्।
अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलम्बनम् ॥ १० ॥
अस्थ्यधस्थ्यधिदन्तांश्च मज्जा नेत्राङ्गगौरवम्।
पर्वसु स्थूलमूलानि कुर्यात् कृच्छ्राण्यरूंषि च ॥ ११ ॥
अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि ॥ १२ ॥
कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ॥ १३ ॥
मूत्रन्तु बस्तिनिस्तोदं कृतेऽप्यकृतसंज्ञताम् ॥ १४ ॥
स्वेदोऽतिस्वेददौर्गन्ध्य-कण्डूरेवञ्च लक्षयेत्।
दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ॥ १५ ॥
लिङ्गं क्षीणेऽनिलेऽङ्गस्य सादोऽल्पं भाषितेहितम्।
संज्ञामोहस्तथा श्लेष्म-वृद्ध्युक्तामयसम्भवः ॥ १६ ॥

---

ताः करोति। वृद्धिता वृद्धित्वम्। कण्ठादिष्वधिकं मांसं च कुरुते। आदिशब्देन तालुजिह्वादिपरिग्रहः। मेदोऽपि वृद्धं गण्डादीन् कुरुते। तथा अल्पेऽपि चेष्टिते श्रमं कुरुते श्वासं च। तथा स्फिजोः स्तनयोरुदरस्य च लम्बनं कुरुते ॥ १० ॥

अस्थीति। अस्थि वृद्धमध्यस्थ्यधिदन्तांश्च कुरुते। मज्जा वृद्धो नेत्रयोरङ्गानां च गौरवं कुर्यात्। कुरुत इति प्रकृते कुर्यादित्युक्तं स्पष्टार्थम्। पर्वसु अङ्गुल्यादिसन्धिषु स्थूलानि मूलानि च कुर्यात्। अरूंषि पिटिकाविशेषान् कुर्यात्। कीदृशानि? स्थूलमूलानि। कृच्छ्राणि कृच्छ्रसाध्यानि। अतीति। शुक्रं वृद्धमतिस्त्रीकामतां कुर्यात् शुक्राश्मरीं च। अपिशब्दात् बलस्नेहावपि ॥ ११। १२ ॥

कुक्षाविति। शकृत् पुरीषं वृद्धं कुक्षावाध्मानादीन् कुर्यात्। कुर्यादिति सम्भावनायां लिङ्। आध्मानमानाहः। आटोपोऽन्त्रकूजनम्। मूत्रमिति। मूत्रं वृद्धं बस्तिनिस्तोदं बस्तिव्यथां कुर्यात्। तथा कृतेऽपि मूत्रेऽकृतसंज्ञतामकृताभासत्वमेव कुर्यात्। स्वेद इत्यादि। स्वेदो वृद्धोऽतिस्वेदादीन् कुर्यात्। अनेन प्रकारेण दूषिकादीनपि मलान् लक्षयेदनुमिनुयात्। दूषिकाऽक्षिमलः। आदिशब्दात् घ्राणकर्णनासामलादीनां ग्रहणम्। कथं लक्षयेदित्याह,—बाहुल्येत्यादि। मलबाहुल्येन तत्स्थानगौरवेण च। आदिग्रहणात् कण्डूक्लेदादयो गृह्यन्ते ॥ १३—१५ ॥

वृद्धानां वातादीनां लिङ्गान्यभिधाय क्षीणानां वातादीनां लिङ्गान्याह;—लिङ्गमिति। अनिले क्षीणे स्वप्रमाणापचिते। वायोस्तु सर्वक्षये देह एव न स्यात्। कस्य तु लिङ्गं स्यात् किं पुनस्तल्लिङ्गमित्याह;—अङ्गस्येत्यादि। अङ्गस्य सादः क्रियास्वसामर्थ्यम्। ईहितं चेष्टितं कायिकं कर्म। भाषितं चेहितञ्च। अल्पवचनता अल्पचेष्टितत्वं च स्यात्। तथा संज्ञामोहः संविदोऽभावः। तथा श्लेष्मवृद्धौ य उक्ता आमि-

पित्ते मन्दोऽनलः शीतं प्रभाहानिः कफे श्रमः।
श्लेष्माशयानां शून्यत्वं हृद्द्रवश्लथसन्धिता: ॥ १७ ॥
रसे रौच्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता।
रक्तेऽम्लशिशिरप्रीति-शिराशैथिल्यरूक्षता: ॥ १८ ॥
मांसेऽचग्लानिगण्डस्फिक्शुष्कतासन्धिवेदनाः।
मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्गता ॥ १९ ॥
अस्थ्न्यस्थितोदः शदनं दन्तकेशनखादिषु।
अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ॥ २० ॥
शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा।
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ २१ ॥
पुरीषे वायुरन्त्राणि सशब्दो वेष्टयन्निव।
कुक्षौ भ्रमति यातूर्द्ध्वं हृत्पार्श्वे पीडयन् भृशम् ॥ २२ ॥
मूत्रेऽल्पं मूत्रयेत् कृच्छ्राद् विवर्णं सास्रमेव वा।
स्वेदे रोमच्युतिः स्तब्धरोमता स्फुटनं त्वचः ॥ २३ ॥

---

सादप्रसेकादयस्तेषामामयानां सम्भवो भवति। पित्ते इत्यादि। पित्ते क्षीणे लिङ्गमेतत्। अग्निर्मन्दः शीतं कान्तिहानिश्च स्यात्। कफे क्षीणे भ्रमो भवति। तथा श्लेष्माशयानां शून्यत्वम्। श्लेष्माशया उरःशिरःसन्ध्याद्याः ॥ १६। १७ ॥

रसे इति। रसे क्षीणे रौच्यादयः स्युः। रक्त इति। रक्ते क्षीणे अम्लाद्यभिलाषादयः स्युः। मांस इति। मांसे क्षीणे अक्षग्लानिः। गण्डयोः स्फिजोश्च शुष्कत्वम्। सन्धीनां वेदनाः स्युः। स्फुटन्तीव सन्धय इत्यर्थः। मेदसीति। मेदसि क्षीणे कट्याः स्वापः प्लीहवृद्धिः कृशाङ्गत्वं च। अस्थ्नीति। अस्थ्नि क्षीणे ऽस्थ्नां तोदो भवति। शदनं शातः पात इत्यर्थः। केषाम्? दन्तादीनाम्। अस्थ्नामिति। मज्जनि क्षीणे अस्थ्नां सौषिर्यं भ्रमादिश्च ॥ १८—२० ॥

शुक्रे इति। शुक्रे क्षीणे शुक्रं चिरात् प्रसिच्येत रक्तं वा। प्रसिच्येतेति कर्मकर्तरि। वृषणयोरतिशयेन तोदो व्यथा स्यात्। मेढ्रं शिश्नं धूमायतीव च। लोहितादेराकृतिगणत्वात् क्यष्। अकृत् सार्वेत्यादिना दीर्घः। पुरीषे इति। पुरीषे क्षीणे वायुः कुक्षौ भ्रमति। अन्त्राणि वेष्टयन्निव शब्दं जनयन् यातूर्ध्वम्। किं कुर्वन्? हृत्पार्श्वे भृशं पीड़यन्। मूत्र इति। मूत्रे क्षीणे अल्पं मूत्रयेत् कृच्छ्राद्विवर्णं रक्तमेव वा। स्वेदे इति। स्वेदे क्षीणे रोमणां च्युतिः शादो रोमणाञ्च स्तब्धत्वम्। त्वचश्चर्मणः स्फुटनं दरणम् ॥ २१—२३ ॥

मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम्।
स्वमलायनसंशोष-तोदशून्यत्वलाघवैः ॥ २४ ॥
दोषादीनां यथास्वञ्च विद्याद् वृद्धिक्षयौ भिषक्।
क्षयेण विपरीतानां गुणानां वर्द्धनेन च।
वृद्धिं मलानां सङ्गाच्च क्षयं चातिविसर्गतः ॥ २५ ॥
मलोचितत्वाद्देहस्य क्षयो वृद्धेस्तु पीड़नः ॥ २६ ॥
तत्रास्थनि स्थितो वायुः पित्तन्तु स्वेदरक्तयोः।
श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणां मिथः ॥ २७ ॥
यदेकस्य तदन्यस्य वर्द्धनक्षपणौषधम्।
अस्थिमारुतयोर्नैवं प्रायो वृद्धिर्हि तर्पणात् ॥ २८ ॥

---

इदानीं घ्राणादिमलानामपि सामान्येन क्षयलिङ्गमाह,—मलानामित्यादि। सूक्ष्माणां शुष्काल्पानां दूषिकादीनां दुःखेन बोद्धुं शक्यं दुर्लक्ष्यं क्षयं लक्षयेत् जानीयात्। कैः? मलानां स्थानानि मलायनानि स्वानि च तानि मलायनानि च स्वमलायनानि तेषां संशोषतोदशून्यत्वलाघवानि स्वमलायनसंशोषतोदशून्यत्वलाघवानि तैः ॥ २४ ॥

एवं व्यासेन दोषधातुमलानां वृद्धिक्षयावभिधाय समासतोऽभिधातुमिदमाह,—दोषादीनामिति। दोषधातुमलानां वृद्धिक्षयौ जानीयात्। कथम्? यथास्वदोषादीनां गुणेभ्यो विपरीता ये गुणास्तेषां गुणानां क्षयेण वर्द्धनेन च देहगतेन दोषादीनां क्षयं वृद्धिञ्च विद्यात्। यथा वायोर्गुणा रूक्षलघुशीतादयस्तेषां विपरीता स्निग्धगुरूष्णादयः; तेषां स्निग्धादीनां देहे यदा वृद्धिर्दृश्यते तदा वायोः क्षयो ज्ञेयः। यदा तु तेषां स्निग्धादीनां देहे क्षयो दृश्यते तदा वायोर्वृद्धिं विद्यात्। एवं स्वबुद्ध्या विकल्प्य मलानां धातूनाञ्च वाच्यम्। मलानामित्यादि न केवलं मलानां पूर्व्वोक्तेन प्रकारेण वृद्धिक्षयौ ज्ञेयौ यावदमुनापि वक्ष्यमाणेन लक्षणेन तेषां वृद्धिक्षयौ ज्ञेयौ। एवं स्वबुद्ध्या विकल्प्य मलानां सङ्गाद् बहिर्निःसरणलक्षणाच्च वृद्धिं विद्यात्। तेषामेव मलानामतिविसर्गादतिप्रवर्त्तनात् क्षयं विद्यात् ॥ २५ ॥

मलोचितत्वादिति। द्वावपि मलानां वृद्धिक्षयौ पीडाकरौ देहस्य। तत्रापि य एषां क्षयः स वृद्धितोऽप्यतिशयेन पीड़ाकरः अनौचित्यात्। देहिनां हि प्रायो मलक्षयोऽनुचितोऽनभ्यस्तो वृद्धिस्तूचितैवेति न तथा पीड़ां करोति ॥ २६ ॥

अथ दोषादीनामाश्रयाश्रयिभावं दर्शयति;—तत्रेत्यादि। तत्र तेषु वातादिषु मध्ये अस्थ्नि वायुः स्थित आश्रितः। पित्तन्तु स्वेदरक्तयोः स्थितम्। श्लेष्मा शेषेषु रसमांसमेदोमज्जशुक्रमूत्रपुरीषादिषु स्थितः। यतश्चैवमाश्रयाश्रयिभावो दोषधातूनां तेन हेतुना आश्रयाश्रयिणां मिथः परस्परं यदेकस्याश्रयस्य वर्द्धनं, तत्तदाश्रयिणोऽपि वर्द्धनं, यदा यस्य क्षपणं तदाश्रयिणोऽपि क्षपणम्। नन्वेवमेवास्थ्नो वाताश्रयस्य यद्वर्द्धनं तदप्याश्रयिणोऽपि

श्लेष्मणानुगता तस्मात् संचयस्तद्विपर्ययात्।
वायुनानुगतोऽस्माच्च वृद्धिक्षयसमुद्भवान्।
विकारान् साधयेच्छीघ्रं क्रमाल्लङ्घनबृंहणैः॥ २९॥
वायोरन्यत्र तज्जांस्तु तैरेवोत्क्रमयोजितैः॥ ३०॥
विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः।
मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्म्मभिः॥ ३१॥
स्थौल्यकार्श्योपचारेण मेदोजानस्थिसंचयात्।
जातान् क्षीरघृतैस्तिक्तसंयुतैर्वस्तिभिस्तथा *॥ ३२॥

---

वर्द्धनं, यदस्य क्षपणं तदपि वातस्य क्षपणं प्राप्नोतीत्याह। अस्थिमारुतयोर्नैवं वर्द्धन-क्षपणौषधम्। सम्भवतीत्यध्याहार्य्यम्। हि यस्मात्प्रायो बाहुल्येन या वृद्धिर्वर्द्धनं दोष-धातूनां सा सन्तर्पणाद् बृंहणाद्भवति। प्रायोग्रहणं वायुपरिहारार्थम्। सा च श्लेष्मणा अनुगता अनुबद्धा यत एवं या वृद्धिः सन्तर्पणात्तस्माद्धेतोर्य एषां दोषादीनां क्षयः स प्रायो भूयिष्ठमपतर्पणात्तल्लङ्घनरूपाद्भवति। स च संचयो वायुनानुगतः। एवं यदस्थ्नो वर्द्धन-मौषधं तत् स्निग्धमधुरादि बृंहणरूपं वातस्य क्षपणम्। यच्च वातस्य वर्द्धनमौषधं तद्रूक्ष-तिक्ताद्यपतर्पणं लङ्घनरूपमस्थ्नः क्षपणम्। तदर्थमेतदुक्तम्,—अस्मादिति। यत एवं वृद्धेः सन्तर्पणरूपत्वं क्षयस्यापतर्पणरूपत्वमतो वृद्धिक्षयसम्भवान् विकारान् दोषधातूनां सम्बन्धिनः क्रमाल्लङ्घनबृंहणैः साधयेदुपक्रमेत्। कथम्? शीघ्रम्। चिरोत्थिता हि ते दुश्चिकित्स्याः स्युः। वृद्ध्युत्थान् विकारान् लङ्घनैः क्षयोत्थान् बृंहणैरिति क्रमार्थः॥ २७—२९॥

नन्वेवं वातवृद्ध्युत्थान् विकारान् लङ्घनैस्तत्क्षयोत्थान् बृंहणैरिति स्यादत इदमाह;—वायोरिति। वायुं हित्वा वृद्ध्युत्थान् विकारान् लङ्घनैः, क्षयोत्थान् बृंहणैः साध-येत्। कथम्? तज्जान् वायुसम्भवान् विकारान् पुनस्तैरेव लङ्घनबृंहणैरुत्क्रमयो-जितैरुपक्रमेत्। यथानिर्दिष्टक्रमाद्विपरीतः क्रम उत्क्रमः॥ ३०॥

यथा वातवृद्ध्युत्थान् विकारान् बृंहणैस्तत्क्षयोत्थांश्च लङ्घनैरिति दोषाणां विशेष-चिकित्सेह नोक्ता, दोषोपक्रमणीये वक्ष्यमाणत्वात्। रसचिकित्सा च रसोऽपि श्लेष्म-वदित्युक्तेर्नेह पुनर्निर्दिष्टा; अतो रक्तादीनां चिकित्सामाह;—विशेषादिति वृद्धि-क्षयोपक्रमे एवं स्थितेऽपि विशेषेण रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैरुपक्रमेत्। मांस-वृद्धिजान् शस्त्रक्षाराग्निकर्म्मभिः। स्थौल्यकार्श्योपचारेण मेदोवृद्धिक्षयाभ्यां जातान्। मेदोजानिति मध्यमपदलोपोऽत्र द्रष्टव्यः। मेदोवृद्धिजान् स्थौल्योपचारेण द्विविधोप-क्रमणीयोक्तया स्थौल्यचिकित्सया मेदःक्षयजान् कार्श्योपचारेणोपाचरेत्। अस्थिक्षय-जान् क्षीरघृतैस्तिक्तसंयुतैर्वस्तिभिस्तथा तथाशब्दे तिक्तसंयुतैरित्यर्थः। ननु यानि वातकान्ति

---

* मज्जशुक्रामयानां तु भोजनं स्वादुशीतलम्।
शुद्धिव्यवायव्यायामं यच्चान्यत् शुक्रशोधनम्॥ इत्याधिकः पाठः।

विड्वृद्धिजानतीसारक्रियया विट्क्षयोद्भवान् ।
मेषाजमध्यकुल्माष-यवमाषद्वयादिभिः ॥ ३३ ॥
मूत्रवृद्धिक्षयोत्थांश्च मेहकृच्छ्रचिकित्सया ।
व्यायामाभ्यञ्जनस्वेद-मद्यैः स्वेदक्षयोद्भवान् ॥ ३४ ॥
स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः ।
तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः ॥ ३५ ॥
पूर्वो धातुः परं कुर्याद् वृद्धः क्षीणश्च तद्विधम् ॥ ३६ ॥
दोषा दुष्टा रसैर्धातून् दूषयन्त्युभये मलान् ।
अधो द्वे सप्त शिरसि खानि स्वेदवहानि च ।
मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः ॥ ३७ ॥

---

द्रव्याणि तान्यस्थिक्षयोद्भवविकाराणां वृद्धिकरणानीति तद्द्रव्योपयोगोऽत्र न युक्तस्तित्तस्य वातकृत्त्वात् । उच्यते ;—यद्द्रव्यं स्निग्धं शोषणं खरत्वमुत्पादयति तदस्थ्नो वर्द्धनं युक्तं खरस्वभावादस्थ्नाम् । नचैवम्विधमेकं द्रव्यमस्ति यत् स्निग्धं शोषणञ्च, तस्मात् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिश्च तिक्तसंयुतैश्चेत्युपदिष्टम् । क्षीरघृतस्य तिक्तयुक्तस्य खरस्वभावत्वात् । विड्वृद्धिजान् पुरीषवृद्धिजान् अतीसारचिकित्सया साधयेत् । विट्क्षयोद्भवान् मेषाजमध्यादिभिः साधयेत् । मेष उरभ्रः, अजश्छागः तयोर्मध्यमन्तराधिः । कुल्माषोऽर्द्धस्विन्नो माषादिर्हिङ्गुघृतादिसंयुतः । माषद्वयं माषो राजमाषश्च । आदिशब्देन काकाण्डोलात्मगुप्तादीनां ग्रहणम् । मूत्रवृद्ध्युत्थान् मेहचिकित्सया, मूत्रक्षयोत्थान् मूत्रकृच्छ्रचिकित्सया, स्वेदक्षयजान् व्याधीन् व्यायामादिभिः साधयेत् ॥ ३१—३४ ॥

स्वस्थानं कायाग्नेः पक्वामाशययोर्मध्यम् । यथा वक्ष्यति, "पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम्" इत्यादि यावत् "पाचकं नाम तत् स्मृतम्" इति । तत्र पक्वामाशयमध्ये तिष्ठतीति स्वस्थानस्थस्तस्यैवम्विधस्य कायाग्नेर्जाठरानलस्यांशा भागा धातुषु रसादिषु संश्रिताः, तेषामग्न्यंशानां सादेन मान्द्येन धातूनां वृद्ध्युद्भवस्तेषामंशानामतिदीप्त्याऽतितैक्ष्ण्याद्धातुक्षयोद्भवः । पूर्व्व इत्यादि । पूर्वो रसाख्यो धातुर्वृद्धो भूत्वा परं रक्ताख्यं धातुं वृद्धं कुर्यात्, पूर्व्वश्च क्षीणो धातुः परं धातुं तद्विधं क्षीणमेव कुर्यात् ॥३५।३६॥

दोषाइति । दोषा दुष्टा रसैर्मधुरादिभिर्मिथ्यायोगातियोगसेवितैः कुपिता धातून् दूषयन्ति । उभये दोषा धातवश्च मलान् दूषयन्ति । मला मलायनानि दूषयन्तीति सम्बन्धः । तथा च मुनिः ;—"मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः" इति । कानि मलायनानीत्याह,—अधो द्वे गुदमेढ्राख्ये ; सप्त शिरसि खानि ; द्वे अक्षिणी, द्वौ कर्णौ, द्वौ नासापुटावास्यञ्चेति । तथा स्वेदवहानि रोमकूपाख्यानि छिद्राणि सर्वशरीरगतानि मलायनानि स्युः । अतो दूषणात् कारणात् तेषु मलायनेषु दुष्टेषु यथास्वं गदाः स्युः । यो यस्य स्वो यथास्वम् ॥ ३७ ॥

ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम् ।
हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ ३८ ॥
स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम् ।
यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ॥
निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः ॥ ३९ ॥
ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ।
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।
विच्छायो दुर्मना रूक्षो भवेत् क्षामश्च तत्क्षये ॥ ४० ॥
जीवनीयौषधक्षीर-रसाद्यास्तत्र भेषजम् ।
ओजोविवृद्धौ देहस्य तुष्टिपुष्टिबलोदयः ॥ ४१ ॥
यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु ।
तत्तत्त्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत् ॥ ४२ ॥

---

दोषधातुमलानां समविषमा अवस्था गदिता, ओजस्तु निरूपयन्नाह ;—ओजस्त्विति । रसादीनां धातूनां शुक्रान्तानां यत्परं तेजस्तदोजः स्मृतम् । तथा हृदयस्थमपि व्यापि सकलशरीरव्यापि । यतस्तस्य षड्बिन्दुत्वस्य विशेषेण हृदयं स्थानम् । तथा देहस्य स्थितिर्देहस्थितिस्तस्या निबन्धनं जीविताधिष्ठानमित्यर्थः । अनल्पत्वाद्युः, परशब्देनैतद्द्योतयति ;—अन्यदप्योजोऽस्ति न तद्धातूनां तेजः श्लेष्माख्यमिति । तथा चोक्तं संग्रहे ;—"स्निग्धं सोमात्मकं शुद्धं रक्तमीषत्सपीतकं" इत्यादि । यन्नाशे यस्यौजसो नाशेऽभावे नियतं निश्चितं प्राणिनोऽभावः । यस्मिन्नोजसि तिष्ठति विद्यमाने तिष्ठति प्राणिति देहीति शेषः । यतो यस्माच्च भावाः पदार्था निष्पद्यन्ते जायन्ते विविधा अनेकप्रकाराः । तथा देहः संश्रयो येषां ते देहसंश्रयाः । लक्षणमोजसो मुनिनाऽभ्यधायि ;—"हृदि तिष्ठति यच्छुद्धं स्निग्धमीषत्सपीतकम् । ओजः शरीरे सङ्ख्यातं तन्नाशे ना विनश्यति" इत्यादि । ३८—३९ ॥

ओज इति । ओजः कोपादिभिः क्षीयेत । तत्क्षये बिभेति दुर्बल इत्यादि लक्षणम् ; जीवनीयौषधाद्यास्तत्र भेषजम् । जीवनीयौषधानि जीवन्त्यादीनि दश जीवनसंज्ञानि । तथान्यानि यानि मधुराणि द्रव्याणि । क्षीरस्य जीवनीयत्वेनैव ग्रहणे सिद्धे पृथग्भावोऽतिशयेनात्र क्षीरमौषधमिति । रसो मांसरसः । आदिग्रहणेन काकाण्डोलात्मगुप्ताघृतादिपरिग्रहः । ओजोविवृद्धाविति । ओजोविवृद्धौ सत्यां देहस्य तुष्टिः प्रहर्षः, पुष्टिर्बृंहणं बलं स्थानमेषामुदयः सम्यग्वृद्धिर्भवति ॥ ४० । ४१ ॥

इदानीं संक्षेपेण वृद्धिक्षयभेषजं कथयन्नाह ;—यदन्नमिति । यदन्नं पुरुषो द्वेष्टि नाभिनन्दति यद्यप्यन्नं प्रार्थयेत तत्तदन्नं द्विष्टं त्यजन् परिहरन्निष्टमन्नं समश्नन् भक्षयन्

कुर्वते हि रुचिं दोषा विपरीतसमानयोः ।
वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयन्त्यबुधास्तु न ॥ ४३ ॥
यथाबलं यथास्वञ्च दोषा वृद्धा वितन्वते ।
रूपाणि जहति क्षीणाः समाः स्वं कर्म कुर्वते ॥ ४४ ॥
य एव देहस्य समा विवृद्ध्यै त एव दोषा विषमा वधाय ।
यस्मादतस्ते हितचर्ययैव क्षयाद् विवृद्धेरिव रक्षणीयाः ॥४५ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने एकादशोऽध्यायः ॥ ११ ॥

---

दोषाणां सम्बन्धिनौ वृद्धिक्षयौ तौ तौ यौ यस्य दोषस्यात्मीयौ वृद्धिक्षयौ तौ तौ जयेत् । ननु किमविशेषेणैतत् प्रार्थितमश्नन् दोषक्षयं जयेदित्याह ;—अविरोधीति । तुरवधारणे । अविरोध्येव तत्तथाविधमन्नमश्नन् दोषाणां क्षयं जयेत्, नतु विरोध्यन्नमश्नन् ॥ ४२ ॥

ननु द्वेष्यान्नत्यागेनेष्टभक्षणेन कुतो हेतोर्दोषाणां वृद्धिक्षयौ जयेदित्याह, कुर्व्वते इति । यस्माद्दोषा वातादयो विपरीतसमानयोः रुचिं कुर्वन्ति । किम्भूताः सन्तो वृद्धाः क्षीणाश्च । यथाक्रमं वृद्धाः प्रमाणाधिकाः सन्तः स्वगुणेभ्यो यद्विपरीतगुणमन्नं तद्विषयां रुचिं प्रीतिमुत्पादयन्ति । भूयिष्ठं बाहुल्येन क्षीणाः सन्तो यत्तत्समानगुणमाहारजातं तेषां वर्द्धनहेतुस्तद्विषयां प्रीतिमुत्पादयन्ति । यथा वातो वृद्धः स्निग्धाम्लमधुरमन्नमभिलषति । पित्तं वृद्ध शीतमधुररूक्षतिक्तकषायमन्नमभिलषति । श्लेष्मा वृद्धो रूक्षाम्लकटुतिक्तमन्नमभिलषति । वातः क्षीणो रूक्षकषायाद्यन्नमभिलषति । पित्तं क्षीणमम्ललवणकटुकमन्नमभिलषति । श्लेष्मा क्षीणः स्निग्धमधुराम्ललवणमन्नमभिलषति भूयिष्ठमित्यनेन प्रायिकत्वमस्या व्यवस्थाया दर्शयति । तेन दोषगतिवैचित्र्यादन्यथापि क्वचित् भवति । यथा कस्यचिन्नरस्य वातोऽपि क्षीणः स्निग्धमधुराद्यन्नमभिलषति, पित्तमपि वृद्धमम्ललवणाद्यन्नमभिलषति, श्लेष्मापि वृद्धो मधुराम्लाद्यन्नमभिलषतीति व्यभिचारात् । अतएवाबुधा न लक्षयन्ति न विदन्ति यथा किमयं दोषः क्षीण उत वृद्ध इति ॥ ४३ ॥

नचानेनैव लक्षणेन वृद्धाः क्षीणाश्च दोषा लक्षणीयाः, किं तर्हि अन्यदपि लक्षणमस्तीत्याह ;—यथाबलमिति । बलानतिक्रमेण यथास्वञ्च यद् यदात्मीयं यथारूपाणि गुणकर्म्मलक्षणानि दोषा वृद्धा वितन्वते विस्तारयन्ति । क्षीणाश्च बलानतिक्रमेण तथा स्वरूपाणि जहति त्यजन्ति । यथा वायुर्वृद्धो रूक्षशैत्यपारुष्यध्वंसव्यासादीनि विस्तारयति । क्षीणस्तु वायुः पूर्व्वोक्तानि रूक्षादीनि जहाति ; अतएव न व्यञ्जयति । अथ समा दोषाः किं विदधतीत्याह,—समा इत्यादि । यदा न वृद्धा नच क्षीणाः समा दोषाः स्वप्रमाणस्थास्तदा स्वं कर्म्म उत्साहोच्छ्वासादिकं यथोक्तं कुर्वते । तत्तथात्वे लक्षणीयाः ॥ ४४ ॥

तदेवं वृद्धक्षीणसमा दोषा वेद्याः । क्षीणा दोषाः क्षीणत्वादेवाकिञ्चित्करत्वात् कदाचित्पीडां नोत्पादयन्त्येवेति विचिन्त्याल्पमतयो वैद्याः क्षीणदोषवर्द्धनार्थं कदाचदनादरं कुर्युरित्याह ;—य एवेति । य एव दोषाः समाः सन्तो देहस्य विवृद्ध्यै

# द्वादशोऽध्यायः ।

अथातो दोषभेदीयाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

पक्काशयकटीसक्थि-श्रोत्रास्थिस्पर्शनेन्द्रियम् ।
स्थानं वातस्य तत्रापि पक्काधानं विशेषतः ॥ २ ॥

नाभिरामाशयः स्वेदो लसीका रुधिरं रसः ।
दृक् स्पर्शनञ्च पित्तस्य नाभिरत्र विशेषतः ॥ ३ ॥

---

वर्द्धनाय भवन्ति, त एव दोषा विषमाः स्वप्रमाणादधिका हीना वा सन्तो वधाय देहविनाशाय स्युः। यस्मादेवं ततस्ते दोषा हितचर्य्ययैव चयाद्धीनत्वाद्रक्षणीयाः। कुत इव वृद्धेरिव। यथा विवृद्धेर्विशेषेण वर्द्धनात्ते रक्षन्ते तथा चयादपि रक्षणीया इति। उपजातिर्वृत्तम् ॥ ४५ ॥

इति श्रीमद्गाङ्गदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-सुन्दराख्यायां रसभेदाख्यानीयोऽध्याय एकादशः ॥ ११ ॥

---

दोषादिविज्ञानीयादनन्तरं दोषभेदीयाध्यायारम्भः, यतो दोषभेदमन्तरेण दोष-विज्ञानं सम्यङ् नोक्तं स्यात्। पूर्व्वस्मिन्नध्याये बहुवक्तव्यत्वाद्दोषभेदो नोक्त इत्याह ;—अथात इति। दोषाणां भेदो दोषभेदः स्थाननामविभागादिभिस्तस्मै हितो दोष-भेदीयः। शेषं पूर्व्ववत् ॥ १ ॥

पक्काशयेत्यादि। पक्काशयादि वातस्य स्थानं, तत्रापि षड्विधस्थाने विशेषेण पक्काशयादि पक्काधानं पक्काशयः। अतएव वाते बस्तिरुपक्रमः पक्कमाधीयते स्थाप्यतेऽस्मिन्निति पक्काधानं पक्काशयः। अतएव वाते बस्तिरुपक्रमः प्रधान उक्तः। मूलापकर्षणात्सकलशरीरव्यापित्वेऽपि शेषामिदं विशेषेणोक्तम्। तथा च प्रागुक्तम् ;—"ते व्यापिनोऽपि हृन्नाभ्योः" इति। विचित्रगतित्वाच्चैषां वक्ष्यमाण-प्राणादिभेदेन पृथक् स्थानकर्मनिर्देशः ॥ २ ॥

नाभिरिति। पित्तस्य नाभ्यादीनि स्थानानि। लसीका जलसदृशी ; दृक् चक्षुः ; स्पर्शनं त्वक्। ननु स्पर्शनेन्द्रियं वायोः स्थानमुद्दिष्टं, तदेव कथं पित्तस्यापि स्यात् ? ब्रूमः ;—वातसखित्वादग्नेर्वातसखो ह्यग्निः ; पित्तञ्च वह्निरिति वचनात्। तस्मादुभयोरप्येतद्युक्तं स्थानम्। विशेषत इति। सर्वेषु स्थानेषु मध्ये पित्तस्य विशे-षेण नाभिः स्थानम् ॥ ३ ॥

उरःकण्ठशिरःक्लोम-पर्वाण्यामाशयो रसः ।
मेदो घ्राणञ्च जिह्वा च कफस्य सुतरामुरः ॥ ४ ॥
प्राणादिभेदात्पञ्चात्मा वायुः प्राणोऽत्र मूर्धगः ।
उरःकण्ठचरो बुद्धि-हृदयेन्द्रियचित्तधृक् ।
ष्ठीवनक्षवथूद्गार-निःश्वासान्नप्रवेशकृत् ॥ ५ ॥
उरः स्थानमुदानस्य नासानाभिगलांश्चरेत् ।
वाक्प्रवृत्तिप्रयत्नोर्जोबलवर्णस्मृतिक्रियः ॥ ६ ॥
व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ।
गत्यपक्षेपणोत्क्षेप-निमेषोन्मेषणादिकाः ।
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ॥ ७ ॥
समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥ ८ ॥
अपानोऽपानगः श्रोणि-बस्तिमेढ्रोरुगोचरः ।
शुक्रार्त्तवशकृन्मूत्र-गर्भनिष्क्रमणक्रियः ॥ ९ ॥

---

कफस्य उरःप्रभृतीनि जिह्वान्तानि स्थानानि । सुतरां सुष्ठु, स्थानमुरो वचः ॥ ४ ॥

अथ प्रत्येकमेतेषां दोषाणां विशिष्टस्थानाश्रयेण क्रियाभेदात्पञ्च भेदानाह,— प्राणादीति । वायुरेक एव चलनस्वभावः सन् प्राणादिभिः प्राणोदानव्यानसमानापानैर्भेदाद्विशेषात्पञ्चात्मा पञ्चस्वभावः । यथैकोऽपि देवदत्तो यां यां क्रियां करोति तदनुरूपामेव संज्ञां लावकपाचकादिकां लभते तद्वद्वातादयः । प्राण इति । अत्र एषु मध्ये प्राणो वायुर्मूर्धगः शिरसि स्थित उरः कण्ठञ्च चरति । तथा बुद्ध्यादीनां धारकस्तथा ष्ठीवनादिक्रियः । ष्ठीवनं मुखस्रावोद्गारः । ष्ठीवनमिति ष्ठिवेर्ल्युटि ष्ठिविसिव्योर्दीर्घश्चेति पृषोदरादिपाठाद्दीर्घः । उर इति । उदानस्य प्रधानमुरः स्थानं नासादींश्च चरति । वाक्प्रवृत्त्यादिक्रियः । प्रयत्नः कार्येषु पदार्थग्रहणादिषूद्यमः । व्यान इति व्यानो हृदये स्थितः प्राधान्येन कृत्स्ने सर्वस्मिन् शरीरे चरति । तथा महाजवः शीघ्रगतिः प्राणाद्यपेक्षया । तथा गत्यादिकाः क्रियाः प्रायः सर्वदेहिनां तस्मिन्व्याने प्रतिबद्धास्तदायत्ताः । गतिश्चंक्रमणम् । अपक्षेपणं अङ्गस्याधोनयनम् । उत्क्षेपः अङ्गस्योर्द्धं नयनम् । निमेषः अक्ष्णोर्निमीलनम् । उन्मेषस्तयोर्विकाशः । आदिग्रहणेन जृम्भणान्नास्वादनविशोधनादिपरिग्रहः । समान इति । समानो वायुरग्निसमीपस्थः । सामान्योक्तावपि प्राधान्यात्पाचकोऽग्निरिह ग्रह्यते । अतएवाह ;— कोष्ठे चरतीति । सर्वत इत्याद्यार्थत्वात् सर्वस्मिन् कोष्ठे चरति । स चान्नं गृह्णाति-

पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् ।
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥ १० ॥
त्यक्तद्रवत्वं पाकादिकर्मणानलशब्दितम् ।
पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ॥ ११ ॥
तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ।
करोति बलदानेन पाचकं नाम तत् स्मृतम् ॥ १२ ॥
आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात् ।
बुद्धिमेधाभिमानाद्यैरभिप्रेतार्थसाधनात् ॥ १३ ॥
साधकं हृद्गतं पित्तं रूपालोचनतः स्मृतम् ।
दृक्स्थमालोचकं त्वक्स्थं भ्राजकं भ्राजनात्त्वचः ॥ १४ ॥
श्लेष्मा तु पञ्चधोरस्थः स त्रिकस्य स्ववीर्यतः ।
हृदयस्यान्नवीर्याच्च तत्स्थ एवाम्बुकर्मणा ॥ १५ ॥

---

पक्वामाशये धारयतीत्यर्थः । पचत्यग्निसन्धुक्षणाङ्गताकारइव । विवेचयति संहतमन्नं पाकाय विभजते । मुञ्चति शकृन्मूत्रादिरूपमधः । अपान इति । अपानो वायुरपानं प्राधान्येनाश्रितः श्रोण्यादिचरः शुक्रादिनिष्क्रमणक्रियः । इति वातभेदाः पञ्च ॥५—९॥

पञ्च पित्तभेदानाह ;—पित्तमित्यादि । तेषु पञ्चसु मध्ये पक्वामाशययोर्मध्यस्थं यत्पित्तं, तथा पञ्चभूतात्मकत्वेऽपि सति यत्तैजसगुणोदयादाग्नेयगुणोत्कर्षात् त्यक्तद्रवत्वं सञ्जातकाठिन्यं, तथा सहकारिकारणैः पाचनक्रियां प्रति सव्यापारैर्वाय्वादिभिरनुग्रहादुपकाराद्द यत्पाकदाहादिक्रियया अनलशब्दितमग्निशब्द-वाच्यं यत्पित्तं तत्पाचकमुच्यते । तच्चान्नं पचति । सारकिट्टौ पृथग् विभजति विभागी-करोति । किट्टशब्दस्य लोकाश्रयत्वाल्लिङ्गस्येति पुंस्त्वम् । तत्रस्थमेव पक्वामाशयमध्यग-मेव शेषाणां रञ्जकादीनां धातुस्थानां चानुग्रहमुपकारं करोति । बलदानेन सामर्थ्या-धानेन स्वस्थानस्थमेव तुष्टूपकुरुत इत्यर्थः । आमेत्यादि । यच्चामाशयस्थं पित्तं तद्र-साख्यधातो रञ्जनात् रागनिष्पादनात् रञ्जकमुच्यते । बुद्धीत्यादि । यत्तु हृद्गतं हृदयस्थं पित्तं तद्बुद्ध्यादिभिः कारणभूतैरभिप्रेतस्यार्थस्य बाह्यग्रहणस्मरणादिरूपेण साधनात् साधकमुच्यते । वर्त्तमानकाले या मनोर्थसंशयस्य निश्चयं कर्त्तुं तदर्थाध्यवसायोपारूढा सा बुद्धिः । बुद्धिविशेषो मेधा । रूपेत्यादि । दृष्टिस्थं पित्तं रूपालोचनादन्तस्तारकायाः स्थितं तदायत्तरूपग्रहणशक्तित्वादालोचकमुच्यते । त्वक्स्थमिति । त्वचो भ्राजनाद्दीप-नाद्भ्राजकं नाम पित्तम् एतच्च पित्तमभ्यङ्गलेपपरिषेकादीन् पाचयति ॥ १०—१४ ॥

श्लेष्मेति । श्लेष्मा तु पञ्चधा श्लेष्मापि पञ्चप्रकारः । तदेव पञ्चप्रकारत्वमाह ;—उरःस्थ इति । स श्लेष्मा उरसि तिष्ठतीत्युरःस्थस्त्रिकस्य पृष्ठाधाराख्यस्य स्वप्रभावात् यत्

कफधाम्नाञ्च शेषाणां यत्करोत्यवलम्बनम् ।
अतोऽवलम्बकः श्लेष्मा यस्त्वामाशयसंस्थितः ॥ १६ ॥
क्लेदकः सोऽन्नसङ्घातक्लेदनात् रसबोधनात् ।
बोधको रसनास्थायी शिरःसंस्थोऽक्षतर्पणात् ।
तर्पकः सन्धिसंश्लेषाच्छ्लेषकः सन्धिषु स्थितः ॥ १७ ॥
इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् ।
व्यापिनामपि जानीयात् कर्माणि च पृथक् पृथक् ॥ १८ ॥
उष्णेन युक्ता रूक्षाद्या वायोः कुर्वन्ति सञ्चयम् ।
शीतेन कोपमुष्णेन शमं स्निग्धादयो गुणाः ॥ १९ ॥

---

यस्मादवलम्बनं करोति स्वकर्मणि तस्य सामर्थ्यमुत्पादयति । हृदयस्थान्नवीर्यादन्नवीर्येणाभ्यवहृतादन्नाद्रसरूपतापरिणतादवलम्बनं तत्स्थेन वीर्येण करोति । चशब्दात् स्ववीर्येणापि हृदयस्यावलम्बनं करोति । किन्तु अन्नवीर्यादतिशयेन यथावलम्बनं हृदयस्य करोति न तथा स्ववीर्यतः । यतोऽन्नरसः पूर्वं हृदि स्थितिं कृत्वा ततो व्यानवायुतत्क्षिप्तः सर्वं शरीरं याति तस्माद्विशेषेण हृदयस्थान्नवीर्यादवलम्बनं युक्तम् । आगमोऽपि "हृदयं मनसः स्थानमोजसश्चिन्तितस्य च । मांसपेशीचयो रक्तपद्माकारमधोमुखम् । योगिनो यत्र पश्यन्ति सम्यग्ज्योतिः समाहिताः । रसो यः स्वच्छतां यातः स तत्रैवावतिष्ठते । ततो व्यानेन विक्षिप्तः कृत्स्नं देहं प्रपद्यते ।" तथा तत्स्थ एवोरःस्थ एवैष श्लेष्मा शेषाणां कफस्थानानामम्बुकर्मणा क्लेदसंश्लेषादिलक्षणेन जलव्यापारेणावलम्बनं करोत्यतोऽस्मादयथोक्ताद्धेतोरवलम्बकः श्लेष्मेत्युच्यते । यस्त्विति यः पुनः श्लेष्मा आमाशये स्थितः स क्लेदक इत्युच्यते । कुतः ? अन्नसंघातक्लेदनात् कारणात् । रसबोधनादिति । रसनास्थायी जिह्वास्थो बोधक इत्युच्यते । रसबोधनात् कारणात् । शिरःसंस्थइति । शिरःस्थोऽक्षतर्पणात् तर्पकः शिरस्थस्तर्पक इत्युच्यते, अक्षतर्पणाद्धेतोः । सन्धिसंश्लेषादिति । सन्धिषु स्थितः श्लेष्मा श्लेषक इत्युच्यते । सन्धिसंश्लेषात् कारणात् ॥ १५—१७ ॥

एवं दोषाणां स्थानान्युक्त्वा उपसंहरन्नाह ;—इतीति । बाहुल्येन दोषाणामविकृतात्मनामप्रच्युतस्वभावानामिव्यक्तप्रकाराणि स्थानानि व्यापिनामपि सकलशरीरचराणामपि ज्ञेयानि । तथा कर्माणि पृथक् पृथक् प्रत्येकं ज्ञात्वा जानीयाद् वैद्यः ॥ १८ ॥

विकृतिरेषां वृद्धिः चयश्च । वृद्धिरपि द्विविधा चयप्रकोपभेदेन । दोषादिविज्ञानीये सामान्येन वृद्धिचयलक्षणमुक्तम् । सम्प्रति चयकोपरूपवृद्धिनिदानं संक्षेपेण सूचयन्नाह ;—उष्णेनेति । उष्णेन गुणेन विरुद्धेनोपहिता रूक्षादयः प्रथमाध्यायोक्ताः षड्वातगुणा वायोश्चयं कुर्वन्ति, न कोपमुष्णस्य विरुद्धत्वात् । त एव रूक्षादयः शीतगुणोपहितास्तत्सदृशत्वाद् वायोः कोपं कुर्वन्ति । उष्णेन युक्ताः स्निग्धादयो गुणा वायोः शमं कुर्वन्ति विपरीतत्वात् ॥ १९ ॥

शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते ।
उष्णेन कोपं मन्दाद्याः शमं शीतोपसंहिताः ॥ २० ॥
शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम् ।
उष्णेन कोपं तेनैव गुणा रूक्षादयः शमम् ॥ २१ ॥
चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ।
विपरीतगुणेच्छा च कोपस्तून्मार्गगामिता ।
लिङ्गानां दर्शनं स्वेषामस्वास्थ्यं रोगसम्भवः ॥ २२ ॥
चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।

---

शीतेनेति । एवं पित्तस्य शीतेन गुणेन युक्तास्तीक्ष्णादयो गुणाश्चयं कुर्वन्ति, एवं तीक्ष्णादयो गुणा उष्णेन सहिताः कोपं कुर्वन्ति । मन्दादयो गुणाः शीतगुणयुक्ताः शमं कुर्वन्ति विपरीतत्वात् ॥ २० ॥

शीतेन युक्ता इति । शीतगुणोपहिताः स्निग्धादयः कफस्य चयं कुर्वन्ति, उष्णेन युक्तास्तएव स्निग्धाद्याः कफस्य कोपं कुर्वन्ति । तेनैवोष्णेन युक्ता रूक्षादयः कफस्य च शमं कुर्वन्ति । कफस्य हि शीतगुणेन सदृशेनापि स्निग्धादिगुणयुक्तेन स्थानत्वाच्चयः स्यात् । विपरीतेनोष्णेन विलयनात् कोपः । स एवोष्णो यदा रूक्षादियुक्तो भवति तदा विपरीतत्वाच्छमो भवति ॥ २१ ॥

इदानीं चयादीनां लक्षणान्याह ;—चय इति । स्वधाम्नि आत्मीये स्थाने दोषस्य या वृद्धिः स चय उच्यते । चितस्य दोषस्य लिङ्गमाह, यदा हि वातश्चितो भवति तदा रूक्षादिषु तद्गुणसामान्येषु प्रद्वेषः स्यात्, तद्विपरीतगुणेषु स्निग्धादिष्वभिलाषः स्यात् । एवं कफपित्तयोश्चितयोर्व्याख्या । ननु प्रद्वेषो वृद्धिहेतुष्वित्येकमेव लक्षणं दोषचयसत्तानुमापकं कर्तुं न्याय्यम् ; यदि वा विपरीतगुणेच्छा चेत्येतत् ; किं द्वयोरुपादानेन ? अत्रोच्यते,—कदाचिदचितोऽपि दोषो वाताख्यः स्वप्रमाणस्थः क्षीणो वा यस्य स वातवृद्धिहेतून् रूक्षादीन् न द्वेष्टि अपितु तानिच्छति, सात्म्यवशात् । यथा गर्भिणी स्त्री दौहृदवशात् । तदेवं व्यभिचारदर्शनात् प्रद्वेषो वृद्धिहेतुषु विपरीतगुणेच्छा चेति द्वयमपि कर्त्तव्यम् । तेन यदा तुल्यकालं पुरुषस्य वातसमानगुणेषु तद्वृद्धिहेतुषु प्रद्वेषो जायते, वातगुणप्रतिपक्षेषु तत्क्षपणहेतुषु चाभिलाषस्तदा सम्यक् निश्चीयते वातस्योपचितिरिति द्वयमप्येतदुक्तम् । कोपइति । उन्मार्गगामिता स्वस्थानं त्यक्त्वा दोषस्य यत्पुनर्मार्गान्तरगमनं स कोपः । कोपस्य लिङ्गमाह । लिङ्गानां स्वेषां यथायथं दर्शनमुद्भवो वातादीनां कुपितानां यानि लिङ्गानि दोषादिविज्ञानीयेऽभिहितानि वातव्याधिनिदाने च वक्ष्यन्ते तेषां दर्शनमुपलब्धिः ॥ २२ ॥

चयेत्यादि । ग्रीष्मादिषु त्रिषु कालेषु ग्रीष्मवर्षाशरत्सु वातस्य चयप्रकोपप्रशमा भवन्ति । तथा वर्षादिषु त्रिषु वर्षाशरद्धेमन्तेषु च पित्तस्य चयप्रकोपप्रशमा भवन्ति

वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ॥ २३ ॥
चीयते लघुरूक्षाभिरोषधीभिः समीरणः।
तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥ २४ ॥
अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम्।
पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ॥ २५ ॥
चीयते स्निग्धशीताभिरुदकौषधिभिः कफः।
तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति ॥ २६ ॥
इतिकालस्वभावोयमाहारादिवशात्पुनः।
चयादीन् यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ॥२७
व्याप्नोति सहसा देहमापादतलमस्तकम्।
निवर्त्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ॥ २८ ॥
नानारूपैरसंख्येयैर्विकारैः कुपिता मलाः।

---

तथा शिशिरादिषु त्रिषु शिशिरवसन्तग्रीष्मेषु श्लेष्मणश्चयप्रकोपप्रशमा भवन्ति। ननु मरुतो ग्रीष्मे चयो न युक्तो, यतस्तस्मिन्काले लघुरूक्षा ओषधयो भवन्ति। तथा वर्षासु पित्तचयो न युक्तो जलानामोषधीनां चाम्लपाकत्वात्। तथा श्लेष्मणः शिशिरे चयो न युक्तस्तदा ह्याप ओषधयश्च स्निग्धा भवन्ति कालश्च शीत इति कोप एवोपपन्न इत्यस्मिन् पर्यनुयोग इदमाह;—चीयत इति। ग्रीष्मकाले वातो लघुरूक्षाभिरोषधीभिर्देहे चादानकालस्वभाव्यात्तद्विधे लघुरूक्षे तद्विधो लघुरूक्षः समीरश्च इति समानगुणत्वात्पवनस्य कोपः प्राप्तस्तन्निषिध्यते कालस्यौष्ण्यादित्यनेन। एवं पित्तस्य वर्षासु कोपः शैत्यादित्यनेन निषिध्यते ॥ २३—२६ ॥

इतीति। इति पूर्वोक्तोऽयं वाय्वादिचयादिः कालस्य स्वभावः। आहारादिवशादन्नपानसामर्थ्यात्पुनर्दोषाः सद्योऽपि तत्क्षणादेव कालमनपेक्ष्यैव चयादीं श्चयप्रकोपप्रशमान् यान्ति। तस्मादेव चाहारादिवशात्। यथाक्तं चयादिकालेऽपि च दोषा नतु चयादीन् यान्ति। तस्मात्कालादाहारादीनां प्राधान्यमित्यर्थः। आहारादीत्यादिशब्देन रसायनवाजीकरणवमनविरेचनादयो गृह्यन्ते ॥ १७ ॥

एवं दोषाणां चयादीन् प्रदर्श्य व्याप्तिनिवृत्तिवैचित्र्यं कोपजं दर्शयितुमाह;—व्याप्नोतीति। मलः कुपितः सहसा शीघ्रमेवापादतलमस्तकं व्याप्नोति। पादतलादारभ्य यावन्मस्तकमित्यर्थः। निवर्त्तते पुनरल्पाल्पं स्तोकं स्तोकमिति यथा गिरिनद्यादीनां जलपूरः समविषमं सहसैव व्याप्नोति निवर्त्तते तु स्तोकं स्तोकमिति ॥ २८ ॥

ननु प्रतिरोगं निदानलक्षणचिकित्सितमानन्त्याद्वक्तुमशक्यं तच्चाविदन् न कश्चिदत्र तथा यत्नं कुर्यादित्याशङ्क्याह;—नानारूपैरिति। यत्तदोर्नित्यसम्बन्धात् यस्मादिति

तापयन्ति तनुं तस्मात्तद्धेत्वाकृतिसाधनम् ।
शक्यं नैकैकशो वक्तुमतः सामान्यमुच्यते ॥ २९ ॥
दोषा एव हि सर्वेषां रोगाणामेककारणम् ।
यथा पक्षी परिपतन् सर्वतः सर्वमप्यहः ॥ ३० ॥
छायामत्येति नात्मीयां यथा वा कृत्स्नमप्यदः ।
विकारजातं विविधं त्रीन् गुणान्नातिवर्त्तते ॥ ३१ ॥
तथा स्वधातुवैषम्य-निमित्तमपि सर्वदा ।
विकारजातं त्रीन् दोषान् तेषां कोपे तु कारणम् ॥ ३२ ॥
अर्थैरसात्म्यैः संयोगः कालः कर्म्म च दुष्कृतम् ।
हीनातिमिथ्यायोगेन भिद्यते तत्पुनस्त्रिधा ॥ ३३ ॥

---

लभ्यते । यस्मान्नानारूपैरनेकप्रकारैरसंख्येयैर्गणनां समतीतैर्विकारैर्ज्वरैर्मला वातपित्त-श्लेष्माणः कुपितास्तनुं देहं तापयन्ति दुःखयन्ति तस्मात्तद्धेत्वाकृतिसाधनं शक्यं नैकैकशो वक्तुमयमस्य विकारस्य हेतुरियमाकृतिरिदं लक्षणमिदमस्य साधनं चिकित्सितमतः सामान्यमुच्यते ॥ २९ ॥

अत्रैव हेत्वन्तरमाह,—दोषा इति । सर्वेषां रोगाणां यस्माद्दोषा एवैककारणम् । एकं च तत्प्रधानं कारणं निमित्तमेककारणम् । यदि वा सर्वेषां रोगाणां दोषा एकं तुल्यं कारणं समानं कारणमित्यर्थः । एवशब्दोऽवधारणे । दोषा एव कारणं, नापरं किञ्चिद्वस्तुजातम् । अत्र दृष्टान्तमाह ;—पक्षी प्राचिकादिर्यथा सर्वतः समन्तात्परिपतन् भ्रमन्, सर्वमप्यहः सकलमपि दिवसमात्मीयां छायां नात्येति नातिक्रामति, तया विना क्षणमप्यसौ नोपलभ्यत इत्यर्थः । तथान्यदपि निदर्शनमाह ;—यथा वेत्यादि । यथा वा कृत्स्नं निरवशेषमेतद्विकारजातं स्थावरजङ्गमादिभेदभिन्नं जरायुजाण्डजादिभेदभिन्नं वा विविधं नानाप्रकारं ; त्रीन् गुणान् सत्वरजस्तमःसंज्ञान् ; नातिवर्त्तते नात्येति । त्रिभिरेतैर्विरहितं न जातुचिद्भवतीत्यर्थः । तथा स्वधात्वित्यादि । धातवो दोषधातुमलाः शरीरधारणसामान्यात् तेषां वैषम्यं स्वलक्षणतोऽन्यथात्वं स्वधातुवैषम्यं निमित्तं यस्य तद्विकारजातं त्रीन् दोषान्नातिक्रामति ; त्रिदोषरहितं न सम्भवतीत्यर्थः । धातुवैषम्यञ्च प्रतिरोगमन्यादृशत्वान्नानाविधम् । यत्तु येन धातुवैषम्येन जन्यते तत्तस्य स्वं स्वीयं भवति । येषां तु रोगाणां देवग्रहादि निमित्तं न तेषु तथा दोषानुबन्धः ; आगन्तुकत्वात् । आगन्तुकनिजयोर्द्वयमेव भेदः । यदागन्तुकेषु प्रथमं रोगोद्भूतिः पश्चाद्दोषानुबन्धो निजेषु प्राग्दोषानुबन्ध इति । ये च व्याचक्षते, स्वे च ते धातवश्च तेषां वैषम्यमिति, तेषां नायमर्थः प्रतिपादितः स्यात् । स्वग्रहणं चातिरिच्यते । यतः शरीरान्तरावस्थायिनो दोषा वातादयः शरीरान्तरे रोगं जनयितुं नालम् । तस्मात्पूर्वमेव व्याख्यानं श्रेयः । तेषामिति । तेषां वातादीनां कोपे कारणमसात्म्यैरनुचितैरर्थैः शब्दस्पर्शरूपरसगन्धास्तैः

हीनोऽर्थेनेन्द्रियस्याल्पः संयोगः स्वेन नैव वा ।
अतियोगोऽतिसंसर्गः सूक्ष्मभासुरभैरवम् ॥ २४ ॥
अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च ।
यदृच्छ्या वीक्ष्यते रूपं मिथ्यायोगः स दारुणः ॥ २५ ॥
एवमत्युच्चपूत्यादीनिन्द्रियार्थान् यथायथम् ।
विद्यात् कालस्तु शीतोष्ण-वर्षभेदात्त्रिधा मतः ॥ २६ ॥
स हीनो हीनशीतादिरतियोगोऽतिलक्षणः ।
मिथ्यायोगस्तु निर्दिष्टो विपरीतस्वलक्षणः ॥ २७ ॥

---

श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानामिन्द्रियाणां यः संयोगस्तथा कालः शीतोष्णवर्षलक्षणो दुष्टस्तथा कर्म चैहिकमन्यजन्मजञ्च यद्दुष्कृतमशुभमसितमयं दोषाणां कोपहेतुः । तुशब्दः समुच्चये । न केवलं रूक्षादयो वातादीनां कोपकारणं यावदसात्म्येन्द्रियार्थ-संयोगादिरपि । एतच्च पूर्वोक्तं दोषकोपकारणमसात्म्येन्द्रियार्थसंयोगादिभेदेन त्रिधा भिन्नमपि पुनर्भूयस्त्रिवा त्रिप्रकारमपि भिद्यते । कथम्? हीनमिथ्याति-योगेन ॥ ३०—२३ ॥

तानेव हीनमिथ्यातियोगान् दर्शयति ;—हीन इति । अर्थेन शब्दादिना स्वेनेन्द्रि-यस्य श्रोत्रादेर्हीनोऽल्पो यः संयोगः स हीनयोगः । नैव वेति । अथवा सर्वसर्विकया तेनार्थेन न संयोगः सोऽपि हीनो योगः । तस्यैवेन्द्रियस्य स्वेनार्थेन योऽतिसंसर्गोऽति-सेवालक्षणः स तस्य स्वेनार्थेनातियोगः । तच्च सूक्ष्मभासुरभैरवमित्यादि यदृच्छ्या वीक्ष्यते नयनेनालोक्यते स तस्य चक्षुरिन्द्रियस्य स्वेनार्थेन मिथ्यायोगः । एवमनया दिशा "सूक्ष्म-भासुरभैरवं" तथा "अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च । यदृच्छ्या वीक्ष्यते रूपं मिथ्यायोगः स दारुणः ।" तिमिरादिहेतुत्वात् । एवमनया चक्षुषो रीत्याऽन्यान-पीन्द्रियार्थान् यथास्वमिन्द्रियाणामत्युच्चमन्दादीन् मिथ्यायोगरूपान् विद्यात् । यदात्युच्च-परुषेष्टविनाशभीषणाद्यनिष्टशब्दः श्रोत्रेन्द्रियेण गृह्यते तदा श्रोत्रेन्द्रियस्य स्वेनार्थेन शब्दाख्येन मिथ्यायोगः । यदा पूतिविष्ठाद्यनिष्टो गन्धो घ्राणेन्द्रियेण गृह्यते तदा घ्राणेन्द्रियस्य स्वेनार्थेन गन्धाख्येन मिथ्यायोगः । यदा स्नानानुलेपनादीनां शीतोष्णादीनां च स्पृश्यानामक्रमसेवनेन स्पर्शः स्पर्शनेन्द्रियेण गृह्यते तदा स्पर्शनेन्द्रियस्य स्वेनार्थेन स्पर्शाख्येन मिथ्यायोगः ; तथा रसनेन्द्रियेण यो रसोऽपरिपाट्या युज्यते, तथा पथ्यद्रव्यविनिष्टोऽपि यो रसो रसनेन्द्रियेण गृह्यते स तस्य रसनेन्द्रियस्य स्वेन रसाख्ये-नार्थेन मिथ्यायोगः । काल इति । कालः पुनः शीतोष्णवर्षभेदेन त्रिधा त्रिप्रकारो मतो मुनीनाम् । तत्र हेमन्तशिशिरलक्षणः शीतः ; उष्णो वसन्तग्रीष्मलक्षणः ; प्रावृड्-लक्षणो वर्षाख्यः । स च कालो हीनशीतादिर्हीनयोगलक्षणः । अतियोगोऽतिमात्रयोग-लक्षणः । विपरीतं स्वं शीतोष्णवर्षाख्यं लक्षणं यस्य कालस्य स विपरीतस्वलक्षणो

कायवाक्चित्तभेदेन कर्मापि विभजेत्त्रिधा ।
कायादिकर्मणा हीना प्रवृत्तिर्हीनसंज्ञिका ॥ ३८ ॥
अतियोगोऽतिवृत्तिस्तु वेगोदीरणधारणम् ।
विषमाङ्गक्रियारम्भः पतनस्खलनादिकम् ॥ ३९ ॥
भाषणं सामिभुक्तस्य रागद्वेषभयादि च ।
कर्म प्राणातिपातादि दशधा यच्च निन्दितम् ।
मिथ्यायोगः समस्तोऽसाविह चामुत्र वा कृतम् ॥ ४० ॥
निदानमेतद्दोषाणां कुपितास्तेन नैकधा ।
कुर्वन्ति विविधान् व्याधीन् शाखाकोष्ठास्थिसन्धिषु ॥ ४१ ॥
शाखा रक्तादयस्त्वक् च बाह्यरोगायनं हि तत् ।
तदाश्रया मषव्यङ्ग-गण्डालज्यर्बुदादयः ।

---

मिथ्यायोगः । गुणगुणिनोरभेदोपचारात् काल एवमुच्यते । तत्र यथा हेमन्ते शीतस्याल्पत्वं हीनो योगस्तस्मिन्नेव हेमन्तेऽतिशैत्यमतियोगस्तस्मिन्नेव हेमन्ते औष्ण्यं मिथ्यायोगः । उपलक्षणञ्चेदम् । एवं शरद्वसन्तयोरपि यन्मन्दवर्षौष्ण्यं स्वलक्षणं तद् यदा हीनतरं स्यात् सोऽपि हीनयोगः । एवमतियोगायोगयोरपि योज्यम् ॥ २४—३७ ॥

कायवागिति । यथा कालस्त्रिधा निरूपितस्तथा कर्मापि कायवाक्चित्तभेदेन त्रिप्रकारं विभजेत् ; तथा कायकर्मणस्तथा वाक्कर्मणस्तथा चित्तकर्मणो हीना या प्रवृत्तिः स हीनसंज्ञको योगः । अतिप्रवृत्तिरतियोगः । कायादिकर्मणो मिथ्यायोगमधिकृत्याह,—वेगोदीरणवारणमित्यारभ्य यावत्पतनस्खलनादिकम् । यदेतत् कायिकं कर्म तस्य कर्मण एवं रूपस्य या वृत्तिः स कायकर्मणो मिथ्यायोगः । विषमाङ्गक्रियाकर्म विषमारम्भ उभयलोकविरुद्धो, विषमपतनं विषमस्खलनम् । आदिशब्देन विषमगमनादीनां ग्रहणम् । सामिभुक्तस्यार्द्धभुक्तस्य यद्भाषणं तत्पनस्वरूपा या प्रवृत्तिः स वाक्कर्मणो मिथ्यायोगः । रागद्वेषभयादि यदेतन्मानसं कर्म तस्य कर्मण एवंरूपा या प्रवृत्तिः स चित्तकर्मणो मिथ्यायोगः । तथा दिनचर्याध्यायोक्तं यत्प्राणातिपातादि दशधा दशप्रकारं कर्म निन्दितमशुभं निर्दिष्टं हिंसास्तेयेत्यादिना ग्रन्थेन तच्च यथायथं कायवाक्चित्तकर्मणां मिथ्यायोगः समस्तोऽसाविह चामुत्र वा कृतमस्मिन् लोके कृतमन्यत्र वा लोके कृतमाचरितं सर्व एव मिथ्यायोगः ॥ ३८—४० ॥

निदानमिति । निदानमेतद्दोषाणां कोप इति वाक्यशेषः । कुपितास्तेन निदानेन नैकधा किन्तर्हि अनेकप्रकारेण व्याधीन् विविधान् नानाप्रकारान् कुर्वन्ति । कुपिता दोषा इति वचनविपरिणामेन सम्बन्धः । क्व व्याधीन् कुर्वन्तीत्याह ;—शाखेत्यादि । शाखाश्च कोष्ठश्च अस्थीनि च सन्धयश्च तेषु ॥ ४१ ॥

शाखेति किमुच्यत इत्याह ;—शाखेत्यादि । शाखा रक्तादयः षड्धातवस्त्वक्

बहिर्भागाश्च दुर्नाम-गुल्मशोफादयो गदाः ॥ ४२ ॥
अन्तः कोष्ठो महास्रोत आमपक्वाशयाश्रयः ।
तत्स्थानाच्छर्द्यतीसार-कासश्वासोदरज्वराः ।
अन्तर्भागश्च शोफार्शोगुल्मवीसर्पविद्रधिः ॥ ४३ ॥
शिरोहृदयवस्त्यादि-मर्माण्यस्थ्नाञ्च सन्धयः ।
तन्निबद्धाः शिरास्नायु-कण्डराद्याश्च मध्यमः ॥ ४४ ॥
रोगमार्गः स्थितास्तत्र यक्ष्मपक्षवधार्दिताः ।
मूर्धादिरोगाः सन्ध्यस्थि-त्रिकशूलग्रहादयः ॥ ४५ ॥
स्रंसव्यासव्यधस्वाप-सादरुक्तोदभेदनम् ।
सङ्गाङ्गभङ्गसङ्कोच-वर्त्तहर्षणतर्पणम् ॥ ४६ ॥

---

च ; एतद्बाह्यं रोगायनं बाह्यानां रोगाणामयनं स्थानम् । हिशब्दो यस्मादर्थे । यस्माद् बाह्यानां रोगाणामयनं, अतस्तदाश्रया मषव्यङ्गादयो रोगा बहिर्भागा उच्यन्ते । आदिशब्देन विसर्पविद्रधिपिप्लुकुष्ठादयो गृह्यन्ते । दुर्नामेत्यादि । बहिर्भागाश्चेत्यत्र चशब्दो भिन्नक्रमः शोफादय इत्यस्मादनन्तरं द्रष्टव्यः । दुर्नामगुल्मशोफादयश्च बहिर्भागा इत्यर्थः ॥ ४२ ॥

अन्तरित्यादि । कोष्ठः कथ्यते । अन्तः तथा महास्रोतस्तथा आमपक्वाशयाश्रयः । तत्स्थाना अन्तर्भागाश्रयाश्छर्द्यादयो रोगाः । न केवलास्तएव छर्द्यादयोऽन्तर्भागाश्रया यावच्छोफार्शोगुल्मवीसर्पविद्रध्यपि अन्तर्भागश्च । शोफादीनां विद्रध्यन्तानां समाहारद्वन्द्वनिर्देशः ॥ ४३ ॥

इदानीं मध्यमं रोगमार्गं वक्ति ;—शिर इत्यादि । शिरोहृदयादीनि मध्यमो रोगमार्गः । अस्थ्नाञ्च सन्धय इत्येवं निर्देशेनेदं बोधयति । नात्र द्वयं विवक्षितमस्थीनि च सन्धयश्चेति ; किं तर्हि ? अस्थ्नां सम्बन्धिनः सन्धय इति । सन्धयो ह्यनेकेऽपि सन्ति । तथा च वक्ष्यति ;—"मांसास्थिस्नायुधमनीशिरा सन्धिसमागमे" इति । तन्निबद्धास्तेष्वस्थिषु निबद्धाः संलग्ना इत्यर्थः । शिराः, स्नायुः कण्डराश्चादयो येषां धमनीकूर्चादीनां ते । च शब्दात्पूर्वोक्ताश्च । तत्र मध्यमे रोगमार्गे यक्ष्मादयो गदास्त्रिकशूलग्रहाद्यन्ताः । मूर्द्धादीत्यत्रादिशब्देन हृदयवस्त्यादिपरिग्रहः । सन्ध्यस्थित्रिके शूलानि सन्ध्यस्थित्रिके ग्रहा इति योज्यम् । आदिशब्देन पक्षग्रहादयो वातविकारा गृह्यन्ते । यक्ष्मणोऽत्र मर्मास्थिसन्ध्यधिष्ठानत्वात् पूर्वं निर्देशः । वक्ष्यति हि ;—"तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः । शरीरसन्धीनाविश्य तान् शिराश्च प्रपीडयन्" इत्यादि ॥ ४४ । ४५ ॥

इदानीं वायोः कर्माण्याह ;—स्रंसेत्यादि । स्रंसो हन्वादिसन्धिविश्लेषः ; व्यसनं व्यासः ; विक्षेपणमङ्गप्रत्यङ्गादेः ; यथा आक्षेपकादिषु ; व्यधस्ताडनमिव मुद्गरादिना ; स्वापः सुप्तिः कार्त्स्न्यचैतन्यम् ; सदनं सादोऽङ्गानां क्रियास्वसामर्थ्यम् ; रुक् सततं

कम्पपारुष्यसौषिर्य-शोषस्पन्दनवेष्टनम् ।
स्तम्भः कषायरसता वर्णः श्यावोऽरुणोऽपि वा ॥ ४७ ॥
कर्म्माणि वायोः पित्तस्य दाहरागोष्मपाकिताः ।
स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्च्छनं मदः ।
कटुकाम्लौ रसौ वर्णः पाण्डुरारुणवर्जितः ॥ ४८ ॥
श्लेष्मणः स्नेहकाठिन्य-कण्डूशीतत्वगौरवम् ।
बन्धोपलेपस्तैमित्य-शोफापक्त्यतिनिद्रताः ॥ ४९ ॥

---

शूलम् ; तोदो विच्छिन्नं शूलम् ; भेदनं भेदो विदारणमिवाङ्गस्य ; सङ्गो मूत्रपुरीषादेः स्वाशयेभ्योऽनिःसारो वाक्संगादिश्च ; भङ्गानां जङ्घोरुप्रभृतीनां भङ्ग इव भङ्गश्चूर्णनमिवाङ्गभङ्गः ; सङ्कोचनं संकोचः शिरादीनाम् ; वर्त्तनं वर्त्तः पुरीषादीनां पिण्डीकरणम् ; हर्षणं रोम्णामूर्द्ध्वीभावः ; तर्षणं तर्षस्तृट् ; तथा कम्पोऽतिवेपनम् ; पारुष्यं परुषत्वम् । सौषिर्यमस्थ्नाम् ; शोषः शोषणम् ; वेष्टनं वयनमिवाङ्गस्य ; स्पन्दनं हि किञ्चिच्चलनम् ; स्तम्भो बाहूरुजङ्घादीनां समाकुञ्चनाद्यभावः ; कषायरसता कषायास्वादत्वम् ; वर्णः श्यावोऽरुणोऽपि वा । श्यावारुणौ वर्णावित्यर्थः । एतानि वायोः कर्माणि । अथ पित्तस्याह ;—पित्तस्येत्यादि । दाहादीनि पित्तस्य कर्माणि । सर्वाङ्गीणस्तापो दाहः ; रागो लौहित्यम् ; उष्मा औष्ण्यम् ; पाकिता पाककर्त्तृत्वमजीर्णेष्वन्ने च ; स्वेदनं स्वेदः ; क्लेदः शोणितादिषु विकारः ; स्रुतिः स्रावः ; कोथः क्लेदस्यातिशयोऽविच्छिन्नत्वम् ; सदनं सादः ; मूर्च्छनं भ्रमः ; मदो वक्ष्यमाणो रोगविशेषः ; रसावास्वादौ कटुकाम्लौ । वर्णः पाण्डुरारुणाभ्यामन्यः । शुक्ललोहितवर्णनिषेधेन तच्छेषनानावर्णसम्भवः सूच्यते ॥ ४६—४८ ॥

श्लेष्मकर्माण्याह ;—श्लेष्मण इति । कफस्य स्नेहादीनि कर्माणि । स्नेहः स्नैग्ध्यम् ; काठिन्यममृदुत्वम् ; कण्डूः खर्जूः ; शीतत्वं शीतसद्भावः ; गौरवं गुरुत्वम् ; बन्धः स्रोतसाम् ; अक्ष्यादीनामुपलेपः ; स्तैमित्यं गात्राणामपटुत्वम् ; काये वर्णः शुक्लः ; रसौ च मधुरपटू ; चिरकारिता कार्यादौ विलम्बत्वम् । ननु वायोरमूर्त्तत्वादवर्णरसोपलब्धिरनुपपन्ना ; अमूर्त्तस्य हि वर्णरसौ दूरोत्सारितौ । नतदस्ति । न हि सर्वाणि कार्याणि कारणसदृशान्येव भवन्ति । तथा चेन्द्रियेभ्यो जडेभ्यो बुद्धेरजडाया उत्पत्तिर्दृष्टा । तस्मात् कारणसदृशानि कार्याणीति प्रायिकमेतत् । अचिन्त्यत्वाच्च द्रव्यप्रभावस्य वायोः सकाशात् कषायरसता श्यावारुणवर्णोत्पत्तिश्चान्वयव्यतिरेकसिद्धा कथमिव निवार्यताम् । इत्येवं दोषाणां कर्माण्युपदिष्टानि । तद्विकारश्च संग्रहे उक्तः । तथा च तद्ग्रन्थः ;—"अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजाः । विंशतिः श्लेष्मजाश्चैव स्थूला नानात्मजा मताः" । "नखभेदः पादशूलं सुप्तिभ्रंशौ विपादिका । खुडो गुल्फग्रहो जानुविश्लेषो जानुकुञ्चनम् ॥ पिण्डिकोद्वेष्टनं सादश्चोर्व्वोः स्तम्भश्च गृध्रसी । आढ्यत्वं भंशशूलञ्च गुदे स्तम्भस्तु मेहने ॥ मुष्काक्षेपः श्रोणिभेदो वंक्षणानाह एव च ।

वर्णः श्वेतो रसौ स्वादुलवणौ चिरकारिता ।
इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् ॥ ५० ॥
दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ।
व्याध्यवस्थाविभागज्ञः पश्यन्नार्तान् प्रतिक्षणम् ॥ ५१ ॥

---

उदावर्तोऽथ विड्भेदः पार्श्वपृष्ठत्रिकग्रहाः ॥ खञ्जवामनकुब्जत्वं हृद्वीदरवेष्टकौ । हन्मोहो वचनिस्तोदः शोषोद्घातौ तथोरसः ॥ बाहुशोषो हनुग्रीवामन्यास्तम्भौष्ठभेदनम् । दन्तभेदोऽथ शैथिल्यं कण्ठध्वंसोऽथवा ग्रहः ॥ कषायास्यत्वमूकत्वे मुखशोषो रसाज्ञता । घ्राणनाशोऽज्ञता गन्धे शब्दोच्चैः श्रवणं तथा ॥ बाधिर्यं कर्णशूलञ्च वर्त्मस्तम्भनकुञ्चनम् । तिमिरं चाक्षिशूलञ्च भ्रूयुग्रदासोऽथ नेत्रयोः ॥ ललाटशङ्खभेदौ च केशभूस्फुटनन्तथा । शिरोरुगार्दितं जृम्भा प्रलापो वेपथुर्भ्रमः ॥ एकाङ्गव्याधिरायामः पक्षाघातोऽपतन्त्रकाः । दण्डकः स्वप्ननाशश्च ग्लानिः पारुष्यरूक्षता ॥ विषादश्चानवस्थानमरुणश्यामवर्णता । इत्यशीतिः समाख्याता रोगा वातसमुद्भवाः" ॥ "अन्तर्दाहो विदाहश्च प्लोषोऽथ दवथुर्दवः । अतुग्रधा चांसदाहश्च स्वेदोऽत्यम्लकधूमकौ ॥ रक्तक्लेदोऽङ्गगन्धश्च गात्रावयवशातनम् । त्वङ्मांसदरणो मांसक्लेदश्चर्मदलस्तथा ॥ रक्तविस्फोटकः कोठः पित्तासृग्रक्तमण्डले । नीलिका कामला कक्षा गात्रे हरितपीतता ॥ पूतितिक्तास्यता तृष्णा लोहगन्धास्यता तथा । जीवादानमतृप्तिश्च प्रवेशस्तमसस्तथा ॥ गलास्यगुदमेढ्राक्षिपाको हारिद्रपीतता । नखाक्षिमूत्रशक्तृतां चत्वारिंशत्तु पित्तजाः" ॥ "स्तैमित्यं गौरवं तृप्तिरालस्यमतिनिद्रता । तन्द्रास्यस्रावमाधुर्ये प्रलेपो हृदयस्य च ॥ स्वादः कण्ठप्रलेपश्च श्लेष्मोद्गिरणमेव च । मलाधिक्यमतिस्थौल्यं वमनं प्रतिसञ्चयम् ॥ उदर्दो गलगण्डश्च शैत्यं श्वेतावभासता । विण्मूत्रनखनेत्राणां शुक्लता च कफामयाः ॥ यथास्थूलं विकाराणां चत्वारिंशदिदं स्मृतम्" इति "हृदादौ शूलवद्दाहो योऽन्तर्दाहः स कीर्तितः । पाणिपादांसमूलेषु सन्तापो विविधस्तु यः । अग्न्यर्चिषेव निःस्वेदो विदाहः स निगद्यते ॥ ओषः सर्वाङ्गिकस्तीव्रो दाहः स्वेदारतिप्रदः । दवथुश्चक्षुरादिभ्यस्तीव्र उष्मा प्रवर्त्तते । मुखौष्ठतालुषु दवा अग्नोद्गिरणसञ्ज्ञकः । धूमायनं शिरोघ्राणकण्ठतालुषु धूमकः । प्रमीलकस्तु स्तैमित्यं गुरुताङ्गस्य गौरवम् । आहारानभिलाषस्तु तृप्तिः स्याद् विषयाग्रहः । निद्रार्त्तस्येव तन्द्रा स्याच्छेषाः प्रथितनामकाः" । दोषाणां कर्माण्युपदिश्य निर्देशप्रयोजनमधिकृत्याह ;—इतीत्यादि । इति प्रकारे । दोषाणां लक्षणं दोषलक्षणं यथायथं लिङ्गम् । इति पूर्वोक्तेन प्रकारेण यद्दोषलक्षणमुक्तं तद्दर्शनाद्यैः सम्यगुपलक्षयेत् जानीयात् वैद्य इति शेषः । दर्शनाद्यैरित्यादिशब्देन स्पर्शनप्रश्नौ गृह्येते ।' किम्भूतं दोषलक्षणम् ? अशेषाश्च ते आमयाश्चाशेषामयास्तान् सर्वानामयान् साधु व्याप्नोति तदशेषामयव्यापि । किम्भूतो वैद्यः ? अवहितो दत्तावधानः ; तथा व्याध्यवस्थाविभागज्ञः । व्याधेरवस्थाः कालकृता दशास्तासां विभागः पृथक्त्वं यथेयमन्यस्य व्याधेरवस्था इयमन्यावस्थेत्यवस्थाभेदाच्चोपक्रमभेदः । तथाहि, एकस्यैव ज्वरस्य नवस्यान्य उपक्रमो जीर्णस्यान्यस्तदेवं विभागं यो जानाति स

अभ्यासात् प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी ।
रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ॥ ५२ ॥
दृष्टापचारजः कश्चित् कश्चित् पूर्वापराधजः ।
तत्सङ्कराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः ॥ ५३ ॥
यथानिदानं दोषोत्थः कर्मजो हेतुभिर्विना ।
महारम्भोऽल्पके हेतावातङ्को दोषकर्मजः ॥ ५४ ॥
विपक्षशीलनात् पूर्वः कर्मजः कर्मसंक्षयात् ।
गच्छत्युभयजन्मा तु दोषकर्मक्षयात् क्षयम् ॥ ५५ ॥

---

व्याध्यवस्थाविभागज्ञः । तथाऽऽर्त्तान् व्याधितान् प्रतिक्षणं मुहूर्त्तं मुहूर्त्तं पश्यन्नालोकयन् ॥ ४९—५१ ॥

किमिति पुनः पुनर्व्याधितदर्शनं क्रियत इत्याह ;—अभ्यासादिति । अभ्यासान्मुहुर्मुहुश्चिकित्सितकर्मणि प्रवर्त्तनाद्दृष्टिर्दर्शनं चिकित्साविज्ञानं जायते, न केवलाच्चिकित्साशास्त्रावगमात् । किम्भूता दृष्टिः ? कर्मणि सिद्धिस्तां प्रकाशयितुं शीलं यस्याः सा कर्मसिद्धिप्रकाशिनी । अत्र दृष्टान्तमाह ;—रत्नादित्यादि । आदिशब्देन सुवर्णहिरण्यादीनां ग्रहणम् ; तेषां यत्सदसज्ज्ञानम्, इदं शोभनमिदं न शोभनमित्यवगमस्तन्न शास्त्रादेव जायते किन्त्वभ्यासाच्च । एवकारोऽवधारणार्थः । न शास्त्रावबोधान्न च केवलादभ्यासादित्येवकारेण बोधयति । किल यथा रत्नपरीक्षा तच्छास्त्रावबोधदर्शनाभ्यां सम्यग् जायते, तथैव चिकित्सा शास्त्रावबोधान्नित्यं नित्यमातुरदर्शनाच्चावगम्यत इत्यर्थः ॥ ५२ ॥

दृष्टेत्यादि । दृष्टश्चासावपचारश्च तस्माज्जातो दृष्टापचारजः । अपचारो व्याधिहेतुः । ऐहिकलौकिकाद् व्याधिकारणाज्जातो दृष्टापचारजः । कश्चिदात्मकृतात्पूर्वापराधादशुभकर्माख्याज्जातः पूर्वापराधजः । अपरः कश्चित्तत्सङ्कराद्भवति । तयोः सङ्करस्तत्सङ्करो मिश्रत्वं तस्मात् । न केवलात्पूर्वापराधान्न च केवलाद् दृष्टापराधादपि तु द्वयोः संसर्गाज्जात इत्यर्थः । एवमनेन प्रकारेण व्याधिस्त्रिधा त्रिप्रकारः स्मृतः ॥ ५३ ॥

अथ त्रिप्रकारव्याधिलक्षणार्थमाह ;—यथा निदानं दोषोत्थ इति । यद् यस्य दोषस्य वातादेर्लघुरूक्षादि निदानं, तेन कुपिता दोषास्तेभ्य उत्थितो व्याधिः स दोषोत्थो ज्ञेयः, यो दृष्टापचारज इत्युक्त इत्यर्थः । हेतुभिर्वातादिनिदानैर्लघुरूक्षादिभिर्विना यो भवति स कर्मजः । यस्त्वल्पे निदाने सेविते महारम्भः स्यात् स कर्मदोषजो रोगो ज्ञेयः । महान् आरम्भो यस्य सः । पूर्वरूपरूपैर्बलवद्भिर्युक्त इत्यर्थः ॥ ५४ ॥

अथ त्रिविधस्यापि व्याधेश्चिकित्सामाह ;—विपक्षशीलनात्पूर्व इति । पूर्वः पूर्वमुक्तो यः केवलं दोषजो व्याधिः स विपक्षशीलनात् यथोक्तविपक्षादिसेवनात् क्षयं याति । कर्मजो रोगः कर्मसंक्षयात् क्षयं याति उभयजन्मा दोषकर्मोत्थो दोषकर्मणोरुभयोरपि क्षयात् क्षयं याति ॥ ५५ ॥

द्विधा स्वपरतन्त्रत्वाद् व्याधयोऽन्त्याः पुनर्द्विधा ।
पूर्वजाः पूर्वरूपाख्या जाताः पश्चादुपद्रवाः ॥ ५६ ॥
यथास्वजन्मोपशयाः स्वतन्त्राः स्पष्टलक्षणाः ॥ ५७ ॥
विपरीतास्ततोऽन्ये तु विद्यादेवं मलानपि ।
तान् लक्षयेदवहितो विकुर्वाणान् प्रतिज्वरम् ॥ ५८ ॥
तेषां प्रधानप्रशमे प्रशमो शाम्यतस्तथा ।
पश्चाच्चिकित्सेत्तूर्णं वा बलवन्तमुपद्रवम् ॥ ५९ ॥

---

व्याधीनां त्रैविध्यमाख्याय द्वैविध्यं दर्शयितुमाह ;—द्विधेति । स्वतन्त्रश्च परतन्त्रश्च स्वतन्त्रपरतन्त्रौ तयोर्भावः स्वतन्त्रपरतन्त्रत्वं ; तस्माद्धेतोर्द्विधा व्याधयः । एके स्वतन्त्रा अन्ये परतन्त्रा इत्यर्थः । अन्ते भवा अन्त्याः परतन्त्रास्ते पुनर्भूयो द्विधा । तदेव द्वैविध्यं दर्शयितुमाह ;—पूर्वजा इति । पूर्वं जाताः पूर्वजाः । अन्येष्वपि दृश्यत इति डः । पूर्वजाः पूर्वरूपसंज्ञा रोगाः । ये च पश्चाज्जाता गदास्ते व्याधीनामुपद्रवा इत्यन्त्या द्विविधाः । सम्प्रति स्वतन्त्रं लक्षयति ;—यथेत्यादि । जन्म च उपशयश्च जन्मोपशयौ । जन्मोत्पत्तिरुपशयः सुखानुबन्धः । यौ यः स्वं यथास्वम् । यस्य ज्वरादेर्यावात्मीयौ शास्त्रनिर्दिष्टौ तौ यथास्वशब्देन सूच्येते । यथास्वं जन्मोपशयौ येषां ते यथास्वजन्मोपशया व्याधयः स्वतन्त्रा उच्यन्ते । चिकित्सागुरुलाघवप्रतिपत्त्यर्थश्च स्वतन्त्रादिसंज्ञाकरणम् । स्वग्रहणाद् येऽन्यजन्मनि जायन्ते अन्यस्य च व्याधेर्यत उपशयः सुखानुबन्धस्तत एतत्परिवारस्यापि, ते तु न स्वतन्त्राः । तथा चोक्तम्,—पूर्वरूपरूपादिक्रमेण ज्वरादावुत्पन्ने तत्परिवारा ये श्वासादय उत्पद्यन्ते तदुपशये चोपशेरते न ते स्वतन्त्राः । ज्वरादय एव तु मूलव्याधिरूपत्वात् स्वतन्त्रा इत्युच्यन्त इति ॥ ५६ । ५७ ॥

विपरीता इति । स्वतन्त्रेभ्यो रोगेभ्यो येऽन्ये परतन्त्राः पूर्वरूपाख्यास्तथोपद्रवसंज्ञाश्च ते विपरीता विपरीतस्वरूपाः, न यथास्वजन्मोपशया न च स्पष्टलक्षणाः । एवं व्याधीनां स्वतन्त्रपरतन्त्रत्वं प्रतिपाद्य दोषाणां प्रतिपादयन्नाह ;—विद्यादिति । न केवलं रोगान् स्वतन्त्रपरतन्त्रभेदैर्विद्याद् वैद्यो यावन्मलान् दोषानपि वातादीनेवं स्वतन्त्रपरतन्त्रभेदैर्जानीयात् । तानिति । तान् वातपित्तकफान् यथास्वजन्मोपशयलक्षणावच्छिन्नस्वरूपान् प्रतिज्वरं प्रतिविकारं विकुर्वाणान् विकृतिं कोपं गच्छतो जानीयात् वैद्य इति शेषः । कीदृक् ? अवहितो दत्तचित्तः ॥ ५८ ॥

एवं स्वतन्त्राणां व्याधीनां यथास्वोपशय एव भेषजमुक्तम् । परतन्त्राणां व्याधीनां कः प्रशमोपाय इत्याह ;—तेषामिति । तेषां परतन्त्राणां रोगाणामप्रधानानां प्रधानप्रशमे स्वतन्त्रव्याधिप्रशमे शमो भवति । न तु तेषां पृथगुपक्रमो विधेय इत्यर्थः । अशाम्यतस्तथा शममगच्छतः परतन्त्रान् व्याधीन् दोषान् वा तथा तेन प्रकारेण प्रधानचिकित्सालक्षणेन पश्चात् प्रधानचिकित्सात उत्तरकालं चिकित्सेत् । अचिकित्स्यमानो ह्यसाध्यतां यायात् । तूर्णं वेति । उपद्रवस्तु बलवान् स्यात्तदा तमेवोपद्रवं तूर्णमेव चिकित्सेन्न पश्चात् ॥ ५९ ॥

व्याधिक्लिष्टशरीरस्य पीड़ाकरतरो हि सः ॥ ६० ॥
विकारनामाकुशलो न जिह्रीयात् कदाचन ।
नहि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ ६१ ॥
स एव कुपितो दोषः समुत्थानविशेषतः ।
स्थानान्तराणि च प्राप्य विकारान् कुरुते बहून् ॥ ६२ ॥
तस्माद् विकारप्रकृतीरधिष्ठानान्तराणि च ।
बुद्ध्वा हेतुविशेषांश्च शीघ्रं कुर्यादुपक्रमम् ॥ ६३ ॥

---

ननु कुतोऽप्रधानं शीघ्रं चिकित्सेदित्याह,—व्याधीत्यादि । हि यस्माद् व्याधिक्लिष्टशरीरस्य पुंसः सोऽतिशयेन पीडाकरः ; प्रागुत्पन्नोऽपि रोगः पीडाकरः । उपद्रवश्च पश्चाज्जायमानो व्याधिक्लिष्टशरीरस्योत्पन्नत्वात् पीडाकरतरः । तदयमत्रार्थः,—परतन्त्रो व्याधिर्हीनबलः प्रधानोपक्रमेणैवोपशाम्यति । यस्तु परतन्त्रः पश्चादुत्पद्यमानोऽपि स्वतन्त्रव्याध्युपक्रमेण शमं न याति तं पश्चादुपक्रमेत् । यस्तु बलवान् परतन्त्रस्तमादावेव चिकित्सेदतिपीड़ाकरत्वात् ॥ ६० ॥

ननु येषां विकाराणां नामग्राहं चिकित्सा नोक्ता, तेषां नामाकुशलो वैद्यः किं चिकित्सेन्नेत्याशंक्याह,—विकारेत्यादि । विकारा रोगास्तेषां नामानि तेष्वकुशलो वैद्यो न जातुचिज्जिह्रीयात्, रोगसंज्ञानभिज्ञोऽहमिति लज्जां न कुर्यात् ; चिकित्सामेव विदध्यादित्यर्थः । कुतो हेतोरित्याह,—नहीत्यादि । यस्मात्सर्व्वविकाराणां नामतः संज्ञातो ध्रुवा निश्चिता स्थितिः स्वस्थानं नास्ति ॥ ६१ ॥

ननु कुतोऽशेषरोगाणां नामतो नास्ति स्थितिरित्याशङ्क्याह,—स एवेति । यस्मात् स एक एव दोषो वाताद्यन्यतमः समुत्थानविशेषतो हेतुभेदात् तथा स्थानान्तराणि स्वस्थानं हित्वा पराणि स्थानानि प्राप्य गत्वा विकारान् बहूननन्तान् कुरुते । तथाचोक्तं तन्त्रान्तरे,—"योऽन्तः शरीरसन्धीनाविशति तेन जृम्भा ज्वरश्चोपजायते । यस्त्वामाशयमभ्युपैति तेन रोगा भवन्त्यूरस्यरोचकश्च । यः कण्ठमभिप्रपद्यते कण्ठस्ततो भंशते स्वरश्चावसीदति । यः प्राणवहानि स्रोतांस्यन्वेति श्वासः प्रतिश्यायश्च तेनोपजायते" इति ॥ ६२ ॥

तस्मादिति । विकारस्य ज्वरादेः प्रकृतय उपादानकारणानि वातादिदोषास्ता विकारप्रकृती रोगहेतुविशेषान् बुद्ध्वा ज्ञात्वा, तथाधिष्ठानान्तराणि स्थानविशेषांश्च बुद्ध्वा, तथा हेतुविशेषानधिष्ठाननिदानभेदांश्च बुद्ध्वा, यथा किमयं कुपितः पवनो रूक्षेण हेतुना लघुना शीतेन वेत्यादि ज्ञात्वा, शीघ्रमेवोपक्रमं चिकित्सां कुर्यान्न तु विकारानभिज्ञ इति । ननु बुद्ध्वापि विकारप्रकृत्यादित्रयमुपक्रमं कुर्वन्तः कदाचित्सिद्धिमाप्नुवन्तो दृश्यन्ते भिषजः कदाचिन्नेति, तदत्र संशयस्खलिते कर्म्मणि कथं नियुज्यते वैद्य इति कथमुक्तं शीघ्रं कुर्यादुपक्रममित्याशङ्क्याह,—दूष्यमित्यादि । दोषौषधनिरूपणे सति

दूष्यं देशं बलं कालमनलं प्रकृतिं वयः ।
सत्वं सात्म्यं तथाहारमवस्थाश्च पृथग्विधाः ॥ ६४ ॥
सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे ।
यो वर्त्तते चिकित्सायां न स स्खलति जातुचित् ॥ ६५ ॥
गुर्वल्पव्याधिसंस्थानं सत्वदेहबलाबलात् ।
दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ॥ ६६ ॥
गुरुं लघुमिति व्याधिं कल्पयंस्तु भिषग्ब्रुवः ।
अल्पदोषाकलनया पथ्ये विप्रतिपद्यते ॥ ६७ ॥

---

दूष्यादीन् दश समीक्ष्य सम्यग्विलोक्य यश्चिकित्सायां वर्त्तते यत्नं करोति, स वैद्य न कदाचित् स्खलति नापराधी स्यात् । दोषो वातादिः ; औषधं हरीतक्यादि ; तयो-र्निरूपणं पर्यालोचनं तस्मिन् दोषौषधनिरूपणे । दूष्यादीनां समस्तानामुपादानं सर्वेषा-मेवावगमे चिकित्साकरणं प्रति यथातिशयद्योतनार्थं, न पुनरेषां द्वौ वा त्रीन् वा चतुरः पञ्च वा समीक्ष्य । किन्तर्हि ? सर्वानेतान् सम्यगवबुध्येति । अथ दूष्यादीनेव समीक्ष्य नेत्याह ;—अवस्थाश्च पृथग्विधाः । एषामेव दूष्यादीनामवस्थाः सूक्ष्मसूक्ष्माः अतिशयेन सूक्ष्मास्ताश्च यथावद् बुद्ध्येति ॥ ६३—६५ ॥

नच दूष्याद्येव परीक्ष्यं ; किन्तर्हि ? व्याधिरपि गुरुलघुत्वेन परीक्ष्य एव इत्याह,—गुर्वित्यादि । गुरुश्चाल्पश्च गुर्वल्पौ गुर्वल्पौ च तौ व्याधी च गुर्वल्पव्याधी तयोः संस्थान-माकृतिः । अपिशब्दो भिन्नक्रमे । तद्गुर्वल्पव्याधिसंस्थानमन्यथाकारमपि दृश्यते विपरीतमपि लक्ष्यते । अपिशब्दात् क्वचिद्गुर्वल्पव्याधिसंस्थानं यथातत्त्वं दृश्यते क्वचिन्नेति व्याधिलक्षणस्य गमकत्वाभावः प्रसज्येत । ततश्च रोग निदानप्राग्रूपलक्षणोप-शयाप्तिभिरिति दूष्येत्, तस्मादपिशब्दोऽत्र गुर्वल्पसंस्थानस्य यथातत्त्वदर्शनं क्वचिन्नत्वेवेति-सूचनार्थं कृतः । कुतो हेतोरित्याह,—सत्वेत्यादि । सत्वं धैर्यम् । देहो महदल्प-स्थूलकृशादिः ; सत्वञ्च देहश्च सत्वदेहौ ; बलञ्चाबलञ्च बलाबले ; तस्मात् सत्वदेहबला-बलाद्धेतोर्गुर्वल्पव्याधिसंस्थानेऽवहितो भवेत् । अधिकसत्वे तथोत्कृष्टदेहबले च गुरुर्महानपि व्याधिरुत्पन्नोऽल्पसंस्थानो हीनबल इव लक्ष्यते सत्वदेहबलयोरुत्कृष्टत्वात् । तथा हीनसत्वे हीनदेहे हीनबले चोत्पन्नो लघुरपि महानिव लक्ष्यते हीनसत्व-देहबलात् । तस्मादस्मिन् व्याधिसंस्थानेऽर्थे दत्तावधानेन भाव्यम् ॥ ६६ ॥

गुरुमिति । यस्तु भिषग्ब्रुवः कुत्सितो वैद्यः स व्याधिसंस्थानमात्रावलोकनाद् गुरुं व्याधिं लघुमिति कल्पयन्निश्चिन्वन्नल्पदोषाकलनया हीनमात्रादोषनिश्चयेन पथ्ये विप्रतिपद्यते, चिकित्सिते मोहं गच्छति । गुरुव्याधावल्पव्याधियोग्यं भेषजं ददाति । एवं लघुव्याधिं गुरुमिति कल्पयन् बहुदोषाकलनया पथ्ये विप्रतिपद्यते भिषग्ब्रुवत्वात् । अन्यत्रापि ब्रुवान्तस्य कुत्सितत्वमेव प्रसिद्धम् । यथा मनुः,—"जातिमात्रोपजीवी

ततोऽल्पमल्पवीर्यं वा गुरुव्याधौ प्रयोजितम्।
उदीरयेत्तरां रोगान् संशोधनमयोगतः ॥ ६८ ॥
शोधनं त्वतियोगेन विपरीतं विपर्यये।
क्षिणुयान्न मलानेव केवलं वपुरस्यति ॥ ६९ ॥
अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा।
तथा युञ्जीत भैषज्यमारोग्याय यथा ध्रुवम् ॥ ७० ॥
वक्ष्यन्तेऽतःपरं दोषा वृद्धिक्षयविभेदतः ॥ ७१ ॥
पृथक् त्रीन् विद्धि संसर्गास्त्रिधा तत्र तु तान् नव ॥ ७२ ॥

---

स्यात् कामं वा ब्राह्मणब्रुवः। धर्म्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन" इति। केचित् भिषग्ध्रुवमिति पेठुः। भिषग् वैद्यो गुरुं लघुमिति व्याधिं कलयन् ध्रुवं निश्चितं पथ्ये विप्रतिपद्यते इति च व्याचक्षते ॥ ६७ ॥

यस्मादेवम्, ततोऽल्पमित्यादि। ततोऽल्पमल्पमात्रमल्पवीर्यं वाऽनुत्कृष्टशक्तिकं वा भेषजं गुरुव्याधौ प्रयोजितं दत्तं संशोधनं रोगानुदीरयेत्तरामतिशयेनोत्क्लेशयेत्। कुतः? अयोगतो हीनयोगात्। अयोगो हि हीनयोग उच्यते। यथा पुत्रकार्याकरणादपुत्र इत्युच्यते। शोधनमिति। विपर्यये च लघुव्याधौ विपरीतं शोधनं तु प्रयोजितं कस्माद्विपरीतमल्पवीर्यात् संशोधनादतिमात्रमुत्कृष्टवीर्यं च बहुदोषाकलनया अतियोगेन प्रयोजितं न केवलं मलान् क्षिणुयात् क्षपयेद् यावद् वपुरस्यति शरीरमपि हिंस्यात्। अत्र च संशोधनं यद्दृष्टान्तत्वेनोपन्यस्तं तदयोगातियोगाभ्यां रोगान् शरीरक्षपणकादिति निर्वर्तयतीति। खरनादेनाप्युक्तम्,—"अल्पमुत्क्लेशयेद्दोषं बहु प्राणान्निहन्ति च। तस्मान्निरूप्य भिषजा देयं युक्तं विरेचनम्" इति। तथा ज्वरमुख्यादीनाञ्च तत्प्रतीकारार्थं यद्दीयते भेषजं, तत्रापि महारम्भे चाल्पमल्पवीर्यं चौषधं न देयमित्यस्मादेव दृष्टान्तीभूतादर्थादवगन्तव्यम् ॥ ६८। ६९ ॥

अत इति। यस्माच्चैवं रोगाणां दुर्विज्ञेया गतिः, अतोऽस्माद्धेतोः सततमभियुक्तः सदायुर्वेदपाठावबोधानुष्ठानपरो वैद्यः सर्वं दूष्यादिवस्तुजातमालोच्य सर्वथा सर्वेण प्रकारेणायुर्वेदानुसारिण्या स्वमनीषया तद्विद्यसम्भाषातः सम्भवया च तथा कर्माभ्यासतोऽपि निपुणं निरूप्य तथा तेन प्रकारेण दोषदूष्यदेशाद्यनुगुणेन भेषज्यं युञ्जीत भेषजं युञ्ज्यात्, यथा आरोग्याय ध्रुवं येन प्रकारेणारोग्यार्थमवश्यं स्यात् ॥ ७० ॥

पूर्वमुक्तं दोषा एव हि सर्वेषां रोगाणामेककारणमतस्तानेव दोषान् वृद्धिक्षयभेदेनाह,—वक्ष्यन्ते इत्यादि। वृद्धिश्च क्षयश्च वृद्धिक्षयौ, तयोर्विभेदो वृद्धिक्षयविभेदः। विविधो भेदो विभेदस्तस्माद् वृद्धिक्षयविभेदतः। ततोऽनन्तरं दोषा वातादयः वक्ष्यन्ते भणिष्यन्ते ॥७१॥

पृथगिति। पृथग् व्यस्तान् स्वप्रमाणाधिकान् त्रीन् दोषान् रोगहेतून् विद्धि अवेहि। वातो वृद्धः, पित्तं वृद्ध, श्लेष्मा वृद्धः, एवं त्रयो दोषाः। संसर्गभेदानधुना

त्रीनेव समया वृद्ध्या षड़ेकस्यातिशायने ॥ ७३ ॥
त्रयोदश समस्तेषु षट् द्व्येकातिशयेन तु ॥ ७४ ॥
एकं तुल्याधिकैः षट् च तारतम्यविकल्पनात् ॥ ७५ ॥

---

वक्ति,—संसर्गस्त्रिधा त्रिप्रकारः ; तत्र संसर्गे नव दोषभेदान् स्वप्रमाणाधिकान् विद्धि ; इत्येतदनुवृत्तिकल्पितेन सम्बन्धेन सर्वत्र योज्यम् ॥ ७२ ॥

कथं नव भेदा इत्याह,—त्रीनेवेति । समया वृद्ध्या त्रीनेवान्यूनाधिकान् संसर्गदोषभेदान् । एको वातपित्ताभ्यामधिकाभ्यां ; द्वितीयो वातकफाभ्यामधिकाभ्यां ; तृतीयः पित्तश्लेष्मभ्यामधिकाभ्यामिति । संसर्गोत्थयोर्दोषयोरेकस्य दोषस्यातिशयेऽधिकतरया वृद्ध्या षट् संसर्गदोषभेदान् विद्धि । अतिशयोऽतिशायनम् । अतिशायने तमविष्टनाविति निपातनाद्दीर्घः । दोषद्वयवृद्धेश्चिन्त्यमानत्वादपरदोषचिन्ता नास्त्यत्र । वातो वृद्धः, पित्तं वृद्धतरम् ; पित्तं वृद्धं, वातो वृद्धतरः ; कफो वृद्धः, पित्तं वृद्धतरम् ; पित्तं वृद्धं, कफो वृद्धतरः ; कफो वृद्धः, वातो वृद्धतरः ; वातो वृद्धः, कफो वृद्धतरः ; एवं षट् संसर्गभेदान् विद्धि ॥ ७३ ॥

त्रयोदशेत्यादि । समस्तेषु सन्निपतितेषु त्रिष्वपि दोषेषु वृद्धेषु त्रयोदश दोषभेदान् विद्धि । कथमित्याह,—षड़िति । द्वावेकश्च द्व्येकास्तेषां द्व्येकेषामतिशयोऽधिकत्वं तेन द्व्येकातिशयेन । ततो द्व्यातिशयेन त्रयो भेदाः ; तथा दोषैकस्यातिशयेन त्रय इति षट् भेदाः । यथा कफो वृद्धः, वातपित्तमधिकवृद्धम् ; पित्तं वृद्धम्, वातकफावतिवृद्धौ, वातो वृद्धः, पित्तकफावतिवृद्धौ ; पित्तकफौ वृद्धौ, वातोऽतिवृद्धः ; वातकफौ वृद्धौ, पित्तमतिवृद्धम् ; वातपित्ते वृद्धे, कफोऽतिवृद्धः ; इति षड् भेदान् द्व्येकातिशयेन सन्निपाते विद्धि ॥ ७४ ॥

एकमिति । तुल्यं कृत्वा समं कृत्वा वृद्धैर्दोषैरेकं सन्निपातमेकभेदं विद्धि । षड़िति । तरतमयोर्भावस्तारतम्यम् । कस्य तारतम्यम् ? प्रकृतत्वात्सन्निपातस्थ-दोषाणाम् । तारतम्यस्य विकल्पने भेदस्तारतम्यविकल्पनं ; तस्मात् सन्निपातस्थदोषाणां वृद्धिरूपाणां षड् भेदान् विद्धि । यथा वातो वृद्धः, पित्तं वृद्धतरं, कफो वृद्धतमः ; वातो वृद्धः, कफो वृद्धतरः, पित्तं वृद्धतमम् ; पित्तं वृद्धं, कफो वृद्धतरः, वातो वृद्धतमः ; पित्तं वृद्धं, वातो वृद्धतरः, कफो वृद्धतमः ; कफो वृद्धो, वातो वृद्धतरः, पित्तं वृद्धतमम् ; कफो वृद्धः, पित्तं वृद्धतरं, वातो वृद्धतमः ; एतेषाञ्च लक्षणं मुनिरध्यगीष्ट । तथा च ग्रन्थः—"सन्निपातज्वरस्योर्द्ध्वं त्रयोदशविधस्य तु । प्राक् सूचितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक् ॥ भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् । वातपित्तोल्बणे विद्याल्लिङ्गं मन्दकफे ज्वरे ॥ शैत्यं कासोऽरुचिस्तन्द्रा पिपासा दाहरुग्व्यथा । वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः । छर्दिः शैत्यं मुहुर्दाहस्तृष्णामोहोऽस्थिवेदना । मन्दवातेऽध्यवस्यन्ति लिङ्गं पित्तकफोल्बणे ॥ सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः । वातोल्बणे स्याद् द्व्यनुगे तृष्णा कण्ठास्यशुष्कता ॥ रक्तविण्मूत्रता दाहः स्वेदस्तृड्बलसंक्षयः । मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि ॥ आलस्यारुचिहृल्लास दाहवम्यरतिभ्रमैः । कफोल्बणं सन्निपातं तन्द्राकासेन

पञ्चविंशतिमित्येवं वृद्धैः क्षीणैश्च तावतः ॥ ७६ ॥
एकैकवृद्धिसमताक्षयैः षट् ते पुनश्च षट् ।
एकक्षयद्वन्द्ववृद्ध्या सविपर्ययापि ते ।

---

षादिशेत् ॥ समं दोषैस्त्रिभिर्वृद्धैः सन्निपातस्य लक्षणम् । मुहुर्दाहो मुहुः शीतं कण्ठ-स्वेदनपार्श्वरुक् ॥ मोहश्छर्द्दिर्दिवानिद्रा रात्रौ जागरणं तथा । प्रतिश्यायश्छर्दिरालस्यं तन्द्रारुच्यग्निमार्दवम् ॥ हीनवाते पित्तमध्ये चिह्नं श्लेष्माधिके मतम् । हारिद्रमूत्रनेत्रत्वग् दाहस्तृष्णा भ्रमोऽरुचिः । हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥ शिरोरुक्वेपथुः श्वासः प्रलापश्छर्दरोचकौ । हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् । शीतको गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् । हीनपित्ते मध्यवाते लिङ्गं श्लेष्माधिके विदुः ॥ वर्चोभेदोऽग्निदौर्बल्यं तृष्णादाहोऽरुचिर्भ्रमः । कफहीने वातमध्ये लिङ्गं पित्ताधिके मतम् ॥ श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् । कफहीने पित्तमध्ये लिङ्गं वाताधिके स्मृतम्" इति ॥ ७५ ॥

पञ्चेत्यादि । एवं पूर्वोक्तेन प्रकारेण पञ्चविंशतिसंख्यान् वृद्धान् दोषान् वृद्धैर्दोषैर्विद्धि । क्षीणैरिति । क्षीणैः क्षयावस्थैर्दोषैः तावतस्तत्परिमाणान् पञ्चविंशति-संख्यकान् दोषभेदान् विद्धि । यथा वृद्धैः पृथक् त्रीन् दोषभेदान्, तथा क्षीणैः । पृथक् त्रीनित्यादिग्रन्थे वृद्धिशब्दस्थाने क्षीणशब्दो निपात्यः । तद् यथा, वातः क्षीणः, पित्तं क्षीणं, कफः क्षीणः । तदेवं संसर्गे नव दोषभेदान् विद्धि । कथं त्रीनेव ? समक्षीण-त्वेन । क्षीणवातपित्तसंसर्गः, क्षीणपित्तकफसंसर्गः, क्षीणवातकफसंसर्गः । षडेकस्या-तिशायने । अतिशायने अन्यदोषापेक्षया क्षीणत्वातिरेके । वातः क्षीणः, पित्तं क्षीणतरम्; पित्तं क्षीणं, वातः क्षीणतरः ; वातः क्षीणः, कफः क्षीणतरः ; कफः क्षीणः, वातः क्षीणतरः ; कफः क्षीणः, पित्तं क्षीणतरम् ; पित्तं क्षीणं, कफः क्षीणतरः । एवं षड्दोषभेदान् विद्धि । त्रयोदश समस्तेषु ;—सन्निपतितेषु क्षीणेषु दोषेषु दोषभेदां-स्त्रयोदश विद्धि कथम् ? षड्द्व्येकातिशयेन तु । दोषद्वयस्यातिशयेनातिक्षीणत्वेन तथा दोषैकस्यातिक्षीणत्वेन पर्यायतः षट् क्षीणसन्निपातैर्दोषभेदान् विद्धि । यथा वातः क्षीणः, पित्तकफावतिक्षीणौ ; पित्तं क्षीणं, वातकफावतिक्षीणौ ; कफः क्षीणः पित्तवातावतिक्षीणौ ; वातपित्ते क्षीणे, कफोऽतिक्षीणः ; पित्तकफौ क्षीणौ, वातो-ऽतिक्षीणः ; वातकफौ क्षीणौ, पित्तमतिक्षीणम् । एकं तुल्यक्षीणैर्भेदं विद्धि ; षट् तारतम्यविकल्पनात् । कफः क्षीणः, पित्तं क्षीणतरं, वातः क्षीणतमः ; वातः क्षीणः, कफः क्षीणतरः, पित्तं क्षीणतमम् ; पित्तं क्षीणं, कफः क्षीणतरः, वातः क्षीणतमः ; कफः क्षीणः, वातः क्षीणतरः, पित्तं क्षीणतमम् ; वातः क्षीणः, पित्तं क्षीणतरं, कफः क्षीणतमः ; पित्तं क्षीणं, वातः क्षीणतरः, कफः क्षीणतमः । एवं पञ्चविंशतिदोषभेदान् क्षीणैर्दोषैर्विद्धि ॥ ७६ ॥

एकैकेति । ते सन्निपातस्थदोषास्त्रयः षोढ़ा भवन्ति । कथमित्याह,—वृद्धिश्च समता च क्षयश्च वृद्धिसमताक्षयाः । एकैकस्य वाताद्यन्यतमस्य वृद्धिसमताक्षया

भेदा द्विषष्टिर्निर्दिष्टास्त्रिषष्टः स्वास्थ्यकारणम् ॥ ७७ ॥

संसर्गाद्रसरुधिरादिभिस्तथैषां
दोषांस्तु क्षयसमतावृद्धिभेदैः ।
आनन्त्यं तरतमयोगतश्च यातान्
जानीयादवहितमानसो यथास्वम् ॥ ७८ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने द्वादशोऽध्यायः ॥ १२ ॥

---

एकैकवृद्धिसमताक्षयास्तैरेकैकवृद्धिसमताक्षयैः षट् । यथा वातो वृद्धः, पित्तं समं, कफः क्षीणः ; पित्तं वृद्धं, वातः समः, कफः क्षीणः ; कफो वृद्धः, पित्तं समं, वातः क्षीणः ; कफो वृद्धः, वातः समः, पित्तं क्षीणम् ; वातो वृद्धः, कफः समः, पित्तं क्षीणम् ; पित्तं वृद्धं, कफः समः, वातः क्षीणः । एवमेकैकवृद्धिसमताक्षयैः षट् । पुनरिति । एकस्य क्षय एकक्षयः । द्वन्द्वस्य वृद्धिर्द्वन्द्ववृद्धिः । एकक्षयसहिता द्वन्द्ववृद्धि-रेकक्षयद्वन्द्ववृद्धिस्तया । किम्भूतया ? सविपर्ययया सह विपर्ययेण वैपरीत्येन वर्त्तते तया । एकक्षयद्वन्द्ववृद्ध्या पुनरेव षड् दोषभेदाः । वातः क्षीणः, पित्तकफौ वृद्धौ ; पित्तं क्षीणं, वातकफौ वृद्धौ ; कफः क्षीणः, वातपित्ते वृद्धे, एवमेकक्षयद्वन्द्ववृद्ध्या त्रयो भेदाः । सविपर्ययया च वृद्ध्या त्रयो दोषभेदाः । द्वन्द्वक्षयकदोषवृद्ध्या द्वन्द्वक्षयसहितैकदोषवृद्धि-स्तया । यथा वातपित्ते क्षीणे श्लेष्मा वृद्धः ; वातकफौ क्षीणौ, पित्तं वृद्धम् ; पित्तकफौ क्षीणौ, वातो वृद्धः, इति सविपर्ययया वृद्ध्या त्रयो दोषभेदाः । एवं सन्निपातभेदा द्विरूपया वृद्ध्या षडेते । पञ्चभेदगणनया दोषाणां भेदा द्विषष्टिर्निर्दिष्टाः । त्रिषष्ट इति । त्रिषष्टीनां पूरणो यो दोषभेदः स स्वास्थ्यकारणमारोग्यहेतुर्धातुसाम्यात् । अत्र हि स्वप्रमाणस्था वातपित्तकफाः । ये च दोषभेदा द्विषष्टिस्ते च रोगकारणमित्यर्थादुक्तं भवति । अत्र च रोगहेतुत्वे दोषवैषम्यं कारणम् । त्रिषष्ट इति तस्य पूरणो डडिति डट् ॥ ७७ ॥

अधुना रसादिभेदादानन्त्यं दोषभेदानां दर्शयन्नाह ;—संसर्गादिति । न केवलं द्विषष्टिभेदभिन्नान् दोषान् जानीयात्, आनन्त्यञ्च गतान् विद्यात् । कथमानन्त्यमित्याह, —एषां दोषभेदानां यथास्वं रसादिभिः संयोगात् । तथैषामेव क्षयादिभेदैस्तरतम-योगाच्चानन्त्यं गतान् विद्यात् । तत्र दिङ्मात्रं शिष्यव्युत्पत्तये प्रदर्श्यते,—तत्र रस-वातपित्तकफानां पृथक्त्रयो भेदा भवन्ति, पृथक्त्रीन् विद्धीत्यनुसारेण । संसर्गस्त्रिधा । तत्र तु तान् रसमेवाधिकृत्य नव विद्धि । कथम् ? पूर्ववत् क्षीणेव समया वृद्ध्या षडेकस्यातिशायने । एवं पूर्वोक्तेन न्यायेन रसमधिकृत्य संसर्गं योजयित्वा सन्निपाते योजनीयाः । यथा त्रयोदशसमस्तेषु । कथम् ? षड्द्वैकातिशयेन तु । एकं तुल्या-धिकैः षट् च तारतम्यविकल्पनादिति समानं पूर्वेण । रसाख्यं स्थानं केवलमधिकम् । पञ्चविंशतिमित्येवं वृद्धैः क्षीणैश्च तावतो रसमधिकृत्य भेदान् विद्धि । इत्येवं रुधिर-मांसादिभिर्योज्यम् । एकैकापक्षासेनेत्येवं द्विषष्टिभेदभिन्नानां दोषाणां रसादिभिः सप्तभिः संयोगाच्चत्वारि शतान्येकचत्वारिंशदधिकानि स्युः । शब्दादिसंसर्गात् क्षीण-

# त्रयोदशोऽध्यायः ।

अथातो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु ।
स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यङ्गमर्दनम् ॥ २ ॥
वेष्टनं त्रासनं सेको मद्यं पैष्टिकगौड़िकम् ।
स्निग्धोष्णा बस्तयो बस्तिनियमः सुखशीलता ॥ ३ ॥
दीपनैः पाचनैः सिद्धाः स्नेहाश्चानेकयोनयः ।
विशेषान्मेध्यपिशित-रसतैलानुवासनम् ॥ ४ ॥

---

तमादिभिर्भेदैश्च चिन्त्यमाना दोषा आनन्त्यं यान्तीति। रसभेदे दोषभेदे चावगते वैद्यस्य हेतुलक्षणोपक्रमेषु मोहो न भवति। तथाच मुनिः,—"यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित्। न स मुह्येद विकाराणां हेतुलिङ्गोपपत्तिषु" इति। मोक्षौग-स्विदग्रभवा प्रहर्षिणी स्यात् ॥ ७८ ॥

इति श्रीचन्द्रगाङ्गदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टांङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां दोषभेदीयो नामाध्यायो द्वादशः ॥ १२ ॥

---

पूर्वेऽध्याये विकृतान् दोषानाश्रित्यैवोपक्रमैदितुरक्तम्, अतस्तमेवोपक्रमं दर्शयितुं दोषोपक्रमणीयमारिरिप्सुरिदमाह ;—अथात इति। दोषाणामुपक्रमणं चिकित्सा दोषोपक्रमणं ; तस्मै हितो दोषोपक्रमणीयः। शेषं पूर्ववद योज्यम् ॥ १ ॥

सर्वदोषेभ्यश्च प्रधानो वात इति तदुपक्रमं पूर्वमाह ;—वातस्येति। वातस्योपक्रमः स्नेहः। श्रेष्ठत्वाच्च प्रागुपादानं स्नेहस्य। ततः स्वेदः ; कृतस्नेहस्वेदस्य च संशोधनं, तच्च मृदु, न तीक्ष्णम्, तीक्ष्णस्य वातकोपहेतुत्वात् ; तथा स्वाद्वादीनि भोज्यानि भक्ष्याणि। अभ्यङ्गश्च मर्दनं चाभ्यङ्गमर्दनं पाण्यादिना। वेष्टनं शाटकादिना। त्रासनं खड़्गव्यग्रोग्रहस्तराजपुरुषादिदर्शनादिना। ननु भीशोकादिभिर्मारुतस्य कोप उक्तः। वक्ष्यति हि ;—क्रियातियोगभीशोकेत्यादि। तत् कथं त्रासनं वायोरुपक्रमः ? उच्यते—भयं वातप्रकोपहेतुर्न तु त्रासनम्। त्रासनं हि सर्ववातावजयनं, तस्माद्-वातोपशान्त्यर्थं त्रासनं युक्तम् ; यथोन्मादादिषु। तथा च वक्ष्यति ;—वातोन्मादे हर्षणश्वासत्रासभयताड़नेत्यादि ; तथा सेकादिरुपक्रमः। सेको दशमूलक्वाथादिना ; तथा मद्यं पैष्टिकं गौड़िकं वातस्योपक्रमः ; तथा स्निग्धोष्णा बस्तयो वातस्योपक्रमः। स्निग्धोष्णा इत्युक्त्या रूक्षशीतं बस्तिमत्र निरस्यकरोति ; तथा बस्तिनियमो यथाविधि

पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम् ।
स्वादुतिक्तकषायाणि भोजनान्यौषधानि च ॥ ५ ॥
सुगन्धशीतहृद्यानां गन्धानामुपसेवनम् ।
कण्ठेगुणानां हाराणां मणीनामुरसा धृतिः ॥ ६ ॥
कर्पूरचन्दनोशीरैरनुलेपः क्षणे क्षणे ।
प्रदोषश्चन्द्रमाः सौधं हारि गीतं हिमोऽनिलः ॥ ७ ॥
अयन्त्रणसुखं मित्रं पुत्रः सन्दिग्धमुग्धवाक् ।
छन्दानुवर्त्तिनो दाराः प्रियाः शीलविभूषिताः ॥ ८ ॥
शीताम्बुधारागर्भाणि गृहाण्युद्यानदीर्घिकाः ।
सुतीर्थविपुलस्वच्छ-सलिलाशयसैकते ॥ ९ ॥
साम्भोजजलतीरान्ते कायमाने द्रुमाकुले ।
सौम्या भावाः पयः सर्पिर्विरेकश्च विशेषतः ॥ १० ॥

---

बस्तिदानं वातस्योपक्रमोऽथवा बस्तिनियमः कर्मकाले योगाख्यस्त्रिपञ्चाशद्बस्तिसंख्यः प्राक्स्नेह एकः पश्चात्त इत्येवमादिना ग्रन्थेन यो दर्शितः स वातस्योपक्रमः ; तथा सुखं शीलयतीति सुखशीलः । शीलिकामिभित्त्याचरिभ्यो णः । तस्य भावः सुखशीलता सौख्यवृत्तित्वम् । तिलप्रियालाक्षोडादयोऽनेका योनयो येषां तेऽनेकयोनयः स्नेहास्ते च वातस्योपक्रम इति योज्यम् । किं भूताः ? दीपनपाचनैर्द्रव्यैः सिद्धाः । विशेषेण पृष्टमांसरसस्तैलमनुवासनञ्च वातस्योपक्रमः ॥ २—४ ॥

पित्तस्योपक्रमं वक्ति,—पित्तस्येति । उपक्रम इति वर्त्तते । सर्पिषः पानमित्यादि पित्तस्य प्रकुपितस्योपक्रमः ; तथा हाराणां मुक्तादाम्नां कण्ठेगुणसंज्ञानां वक्षसा धृतिर्धारणम् । मणीनां मरकतचन्द्रकान्तपद्मरागादीनाम् ; तथा कर्पूरादिभिः प्रतिक्षणमनुलिपनम् ; तथा प्रदोषादिः पित्तस्योपक्रम इति वर्त्तते । प्रदोषो रात्रिमुखम् ; सुधाया इदं सौधं धवलगृहम् ; हारि रम्यं ; गीतं गानम् । तथा मित्रमयन्त्रणसुखं न विद्यते यन्त्रणा यस्मिन् तथाविधं सुखं यस्मिंस्तथाविधं मित्रम् ; तथा सन्दिग्धा अव्यक्ता मुग्धा प्रौढ़ा वाग् गीर्यस्य स एवम्विधः पुत्रः । दाराः कलत्राणि वल्लभाः सुशीलाश्च ; तथा छन्दानुवर्त्तिनश्चित्तानुगुणकारिणः । शीताम्बुधारा गर्भेऽभ्यन्तरे येषां तथाविधानि गृहाणि ; तथा उद्यानमुपवनम् ; तथा दीर्घिका गृहपुष्करिण्यः ; तथा सौम्याभावाः पित्तस्योपक्रमः । क्व स्थितस्य ? सुतीर्थविपुलस्वच्छसलिलाशयसैकते यः कायमानगृहं तस्मिन् । शोभनं तीर्थं यस्य स एवं सुतीर्थश्चासौ विततविमलजलाशयश्च सुतीर्थविपुलस्वच्छसलिलाशयस्तस्य समीपे सकान्तं तस्मिन् । सिकता अस्मिन् देशे सन्तीति सिकताशर्कराभ्यामिलयण् । समूहार्थे ठन्, दुर्निवारः स्यात् । कीदृशे

श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् ।
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥ ११ ॥
दीर्घकालस्थितं मद्यं रतिप्रीतिप्रजागरः ।
अनेकरूपो व्यायामश्चिन्ता रूक्षं विमर्दनम् ॥ १२ ॥
विशेषाद् वमनं यूषः क्षौद्रं मेदोघ्नमौषधम् ।
धूमोपवासगण्डूषा निःसुखत्वं सुखाय च ॥ १३ ॥
उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्त्तितः ।
संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ १४ ॥
ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते ।
मरुतो योगवाहित्वात् कफपित्ते तु शारदः ॥ १५ ॥

---

कायमाने साम्भोजं सपद्मं जलं यस्मिंस्तीरान्ते स एवं साम्भोजजलतीरान्तो यस्मिन् कायमाने तस्मिन्; तथा द्रुमैश्चैराकुले व्याप्ते। विशेषेण तु पयो घृतं विरेकश्चोपक्रमः ॥ ५—१० ॥

अधुना श्लेष्मण उपक्रममाह,—श्लेष्मण इति। विधिना शास्त्रोक्तेन युक्तं तीक्ष्णं वमनविरेचनं कफस्योपक्रमः; तथान्नं रूक्षादिगुणयुक्तम्; तथा मद्यं पुराणम्। रतिप्रीतिप्रजागरः। रमणं रतिस्तस्याः प्रीतिः सुखं तथा प्रजागरोऽतिजागरणम्; तथा अनेकरूपो व्यायामो नियुद्धधनुराकर्षणादिकः विशेषेण तु वमनं यूषो माक्षिकं; तथा मेदोघ्नं यदौषधं तच्च धूमादयश्च; तथा निःसुखत्वं सुखाभावो दुःखरूपत्वम्। वाग्देहमनःकर्मणो दुःखदस्यानुष्ठानाद् यदसुखमुत्पद्यते तच्च श्लेष्मणो वृद्धस्य विकारकरणहेतोरुपशमात् सुखाय जायते ॥ ११—१३ ॥

इदानीं संसर्गोपक्रमं वक्ति,—उपक्रम इति। पृथक् प्रत्येकं दोषान् वातादीनुद्दिश्याश्रित्य य उपक्रमः कीर्त्तित उक्तः, संसर्गसन्निपातेषु च तमुपक्रमं यथास्वं विकल्पयेत्। प्रवृद्धदोषानुसारेण निरूप्य प्रयुञ्जीतेत्यर्थः। यथा वातपित्तसंसर्गे वातपित्तोपक्रमौ मिश्रौ। वातकफसंसर्गे वातकफोपक्रमावित्यादि। एवं सन्निपातेऽपि निरूप्योपक्रमः प्रयोज्यः ॥ १४ ॥

संसर्गे भूयोऽप्युपक्रममाह,—ग्रैष्म इति। उपक्रम इति वर्त्तते। वातपित्तसंसर्गे ग्रीष्मर्तुचर्याविहित उपक्रमः प्रायेण योज्यः। यथा अतोऽस्मिन् पटुकटूष्णव्यायामार्ककरांस्त्यजेत्। भजेन्मधुरमेवान्नमित्यादि सर्व्वं त्याज्यं सेव्यञ्च। कफमारुतसंसर्गे वसन्तर्तुभवस्तीक्ष्णवमननस्याद्ये रित्यादिरुपक्रमो योज्यः। प्रायेणेत्यन्यत्रापि योज्यम्। ननु ग्रीष्मेऽत्यन्तशीतसेवोक्ता वसन्ते च तीक्ष्णं वमननस्यादुग्रमसितञ्च द्वयमप्येकान्तेन पवनहेतुः। तत्कथमुक्तं ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुत इत्याशङ्क्याह,—मरुतो योगवाहित्वात्। अत्रायं भावः। यदा किल वायुः पित्तेन युज्यते तदा दाहादिकान् नपित्त

चय एव जयेद्दोषं कुपितं त्वविरोधयन् ।
सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ १६ ॥
प्रयोगः शमयेद् व्याधिं योऽन्यमन्यमुदीरयेत् ।
नासौ विशुद्धः शुद्धस्तु शमयेद् यो न कोपयेत् ॥ १७ ॥
व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ।
कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च ॥ १८ ॥
दोषा यान्ति तथा तेभ्यः स्रोतोमुखविशोधनात् ।
वृद्ध्याभिष्यन्दनात्पाकात् कोष्ठं वायोश्च निग्रहात् ॥ १९ ॥

---

समे सति दाहादिकं कर्तुं मरुत्सामर्थ्यं, अपि च ग्रीष्मे शीतमेव सेव्यत इति नायं नियमः ; किं तर्हि ? स्निग्धाद्यपि ; तस्मान्मरुत्पित्ते ग्रीष्मविधिर्युक्तः । वसन्ते च कफयोगात् कफविकारकार्येव भवति योगवाहित्वात् ; अतो वासन्तस्तीक्ष्णो वमननस्यादिर्न्याय्यः । एवं पित्तेन सह स्थितस्य वायोः पित्तचिकित्सा कफेन सह स्थितस्य वायोः कफचिकित्सा स्वभाववशादिति भावः । कफपित्तसंसर्गे तु शारदः शरदृतुचर्याविहित उपक्रमः । सन्निपाते क उपक्रमः ? ब्रूमः, वर्षर्तुचर्याविहितः । प्रावृषि हि दोषत्रयकोप उक्तः ; अतएवाह,—भजेत्साधारणं सर्वमित्यादि ॥ १५ ॥

सम्प्रत्युपक्रमस्य कालं वक्ति,—चय इति । चयकाल एव दोषं वातादिं जयेत् । यथा छिन्नमूलत्वान्न विकुर्वीत । न कोपकालं प्रतीक्षेतेतिसूचनार्थं एवशब्दः । कथं जयेदित्याह,—कुपितं दोषमविरोधयन् । सर्वदोषकोपे केवलं बलवत्तरं दोषं जयेत् । कथम् ? शेषदोषाविरोधेन । कुतो हेतोरित्याह ;—प्रयोग इति । प्रयोगो व्याधिं शमयेदन्यमन्य व्याधिमुदीरयेत् प्रकोपयेन्नासौ विशुद्धो न श्रेष्ठ इत्यर्थः । स तु विशुद्धः प्रयोगो यः शमयेद व्याधिं न कोपयेत् तस्मादन्यं व्याधिमविरोधयन् व्याधिं जयेत् ॥ १६-१७ ॥

अथ कथं दोषाः कोष्ठाच्छाखास्थिसन्धिषु यान्तीत्याह,—व्यायामादिति । कोष्ठादुदराच्छाखास्थिमर्माणि दोषा यान्ति । कुत इति हेतुचतुष्टयमाह,—व्यायामादिभिः शाखास्थिमर्माणि दोषा यान्ति । तत्र व्यायामोपजातश्रमस्योर्ध्वं प्रपन्नः पवनो व्यायामकृतक्षोभश्रमोष्मादिभिः प्रशिथिलं चलञ्च दोषं स्वास्पदाच्च्यावयित्वा पर्याकुलं शाखादिषु क्षिपति । तथा, अत्यातपादिसम्बन्धिना उष्मणस्तैक्ष्ण्यात्तीक्ष्णेन उष्मणा विलायिता दोषास्तेनैव चोष्मणा विवृतेषु स्रोतोमुखेषु सत्सु शाखादीन् यान्ति । अहितेत्यादि । अहितेन सेवितेन दोषाः स्वप्रमाणादतिरिच्यमानाः कोष्ठमापूर्य वार्षिका इव जलौघा निम्नोन्नतानीव शाखास्थिमर्माणि प्रपद्यन्ते । अपिः समुच्चये । द्रुतत्वादित्यादि । द्रुतत्वाच्छीघ्रवाहित्वान्मारुतस्य कोष्ठाच्छाखास्थिमर्माणि दोषा यान्ति । शाखादिभ्यः कथं दोषाः कोष्ठं यान्तीत्याह,—तथेति । स्रोतसां मुखानि तेषां विशोधनं विवरणं तस्माद्दोषाः कोष्ठं यान्ति । तथा वृद्ध्यादिभिः । वृद्धिः स्वप्रमाणातिरेकः ; वृद्धा हि दोषाः

तत्रस्थाश्च विलम्बेरन् भूयो हेतुप्रतीक्षिणः २० ॥
ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि ॥ २१ ॥
तत्रान्यस्थानसंस्थेषु तदीयामबलेषु च ।
कुर्याच्चिकित्सां स्वामेव बलेनान्याऽभिभाविषु ॥
आगन्तुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा ॥ २२ ॥

---

स्थानि स्रोतांस्यापूर्य कोष्ठं यान्ति । अभिष्यन्दनञ्च नाग्नितापादितौष्ण्यादिसंश्लेषादेव, अपितु चौरायभिष्यन्दिभोजनादपि । एवं पाकात् । पाचनादिभिः पक्वा दोषाः क्वचिदनासज्जन्तः कोष्ठं यान्ति । किञ्च वायोश्च निग्रहात् । चशब्दात् न केवलं पूर्वेभ्यो हेतुभ्यो यावद् वायुप्रेरणाच्चेत्यर्थः ॥ १८-१९ ॥

कोष्ठस्था दोषाः किं कुर्युरित्याह,—तत्रस्था इति । तत्रस्थाः कोष्ठस्थाश्च दोषा विलम्बेरन्नरोगानुत्पादयेयुः, यस्मात्ते भूयो हेतुप्रतीक्षिणः । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनात्; हेतौ प्रथमा । भूयो हेतुप्रतीक्षिणत्वादित्यर्थः । क्षीणोऽपि हि दोषः कोष्ठे शाखादौ वा मार्गान्तरे गतो हीनशक्तित्वान्न रोगोत्पादनसमर्थो भवति ॥ २० ॥

यद्येवं किं कदाचिदप्यन्यस्थानगता दोषा हीनशक्तित्वान्न रोगान् कुर्युरित्याह,—ते इति । ते दोषाः कालदेशदूष्यप्रकृत्यपथ्यादेः समानगुणाद्बलं लब्ध्वा कुप्यन्ति विकार-मुत्पादयन्तीत्यर्थः । कुत्रस्थान इत्याह,—अन्याश्रयेष्वपि कोष्ठाश्रयशाखादिमर्मस्वपि । शाखामर्माश्रिताः कोष्ठेष्वपीत्यर्थः । न केवलं स्वस्थानस्था एव कुप्यन्तीति सूचनार्थो-ऽपिशब्दः ॥ २१ ॥

इदानीं परस्थानगतानां दोषाणां विकल्पेन चिकित्सामुपदिशन्नाह,—तत्रेति । तत्र तेषु वातादिष्वन्यस्थानसंस्थेषु । अन्यस्य स्थानमन्यस्थानं तत्र सन्तिष्ठन्तेऽन्यस्थान-संस्थास्तेषु परस्थानगतेषु तदीयां स्थानिदोषसम्बन्धिनीमेव चिकित्सां कुर्यान्न स्वकीयाम् । तस्य परस्थानदोषस्येयं तदीया ताम् । किम्भूतेषु दोषेषु ? अबलेषु । तुरवधारणे अबले-ष्वेव न बलवत्सु, बलवत्सु हि स्वामेव चिकित्सां वक्ष्यति । अतएवाह,—कुर्यादिति । बलेनात्मीयया शक्त्या अन्याभिभाविषु अन्यस्थानिदोषमभिभवितुं शीलं येषां तेऽन्याभि-भाविनः । स्थानिदोषं पराभूय तत्र ये संतिष्ठन्त इत्यर्थः । तेषु स्वामेव चिकित्सां कुर्यादित्यर्थः । किमेष एव नियमो यदन्यस्थानगतेष्वबलेष्वागन्तुस्थानिदोषसम्बन्धिनीं चिकित्सां कुर्यात् । बलवत्सु पुनरागन्तुसम्बन्धिनीं चिकित्सां कुर्यात् । अथ पक्षान्तरे-ऽपि कुत्रचित् क्वचिद् विद्यत इत्यत आह,—आगन्तुमिति । स्थानिनं दोषं प्रतिकृत्य यथासौ स्थानिदोष आगन्तुदोषचिकित्सानिवर्तनान्न विकारं कुर्यात् तथा तस्य प्रतीकारं कृत्वा पूर्वं स्वैरेवोपक्रमैरबलिनमप्यागन्तुं दोषं शमयेच्चिकित्सेत् । न केवलमन्यस्थान-संस्थेष्वागन्तुष्वबलेषु स्थानिदोषचिकित्सां कुर्यात् यावदागन्तुदोषचिकित्सामपि कुर्यादि-त्यर्थः । अथाऽसौ स्थानिदोष आगन्तुदोषेण बलवत्वादभिभूयेत ततोऽस्य विकारकरणं प्रत्यसमर्थत्वान्न प्रतिकारमकृत्वैव चागन्तुं शमयेदिति वा शब्दार्थः । अन्यस्थानसंस्थेष्विति

प्रायस्तिर्यग् गता दोषाः क्लेशयन्त्यातुरांश्चिरम् ।
कुर्यान्न तेषु त्वरया देहाग्निबलवित्क्रियाम् ॥ २३ ॥
शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ।
ज्ञात्वा कोष्ठप्रपन्नांश्च यथासन्नं विनिर्हरेत् ॥ २४ ॥
स्रोतोरोधबलभ्रंश-गौरवानिलमूढताः ।
आलस्यापक्तिनिष्ठीव-मलसङ्गारुचिक्लमाः * ।
लिङ्गं मलानां सामानां निरामाणां विपर्ययः ॥ २५ ॥
उष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।
दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ २६ ॥

---

बहुवचननिर्देशः पर्यायेण दोषाणां स्थितत्वादन्यथा द्वयोरेकस्य वाऽन्यस्थानस्थितत्वं स भवति न त्रयाणाम् ॥ २२ ॥

तिर्यग् गतेषु दोषेषु यत्कार्यं तदाह,—प्राय इति । तिर्यग् गता दोषाः प्रायो बाहुल्येनातुरांश्चिरं क्लेशयन्ति पीडयन्ति । तेषु तिर्यग्गतेषु दोषेषु त्वरया शीघ्रमेव क्रियां चिकित्सां न कुर्याद् वैद्य इति शेषः । कीदृशो वैद्यः ? देहाग्निबलाभिज्ञः ॥ २३ ॥

कथं तेषामुपक्रमः कार्य इत्याह,—शमयेदिति । तांस्तिर्यग् गतान् दोषान् प्रयोगेण शास्त्रविहितेन शमयेत् । सुखं वेति । यथा वा देहपीडा न भवति तथा क्रमेण कोष्ठमानयेद्, वृद्ध्याभिष्यन्दनादित्यादिना । ज्ञात्वेत्यादि । कोष्ठगतांश्चावगत्य यथासन्नं विनिर्हरेत् । यो यस्यासन्नो मार्गो यदं मुखं प्राणं वा तेनैव यथासन्नं वमनविरेचनादिना निष्कासयेदित्यर्थः ॥ २४ ॥

सम्प्रति साममललिङ्गमाह,—स्रोतोरोधेति । स्रोतसां रोधः; बलस्य भ्रंशो हानिर्बलभ्रंशः; गौरवं गुरुत्वम्; अनिलस्य वायोर्मूढताऽस्य सम्यगसञ्चारः; आलस्यं तन्द्रा; अपक्तिराहारस्यापाकः; निष्ठीवो मुखस्रावः; मलस्य पुरीषादेः सङ्गोऽप्रवृत्तिः; अरुचिरन्नामभिलाषः; क्लमो ग्लानिः । इत्येतत् सामानां मलानां लिङ्गं लक्षणम् । निरामाणां विपर्ययोऽस्माद्वैपरीत्यम् ॥ २५ ॥

सम्प्रति रोगसम्भवमाह,—उष्मण इति । उष्मणोऽग्ने रल्पबलत्वेन दौर्बल्येन आद्यं प्रथमधातुं रसं रसाख्यमपाचितमामं प्रचक्षते वदन्त्याचार्या इति शेषः । किम्भूतं रसम् ? आमाशयगतम्; तथा दुष्टं वाताद्यनुशयितम्; रसग्रहणं पवनस्य निरा-

---

* विण्मूत्रनखदन्तत्वक्चक्षुषां पीतता भवेत् ।
रक्तत्वमतिक्षयात्व पृष्ठास्थिकटिसन्धिरुक् ।
शिरोरुक् जायते तीव्रा निद्रा विरसता मुखे ।
कश्चिच्च श्वयथु र्गात्रे ज्वरोऽतीसारहर्षणम् । इत्यधिकः पाठो दृश्यते ।

अन्ये दोषेभ्य एवाति-दुष्टेभ्योऽन्योन्यमूर्च्छनात् ।
कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥ २७ ॥
आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः ।
सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥ २८ ॥
सर्वदेहप्रविसृतान् सामान् दोषान्न निर्हरेत् ।
लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ।
आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ॥ २९ ॥
पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ।

---

सार्थम्, अन्यथा आद्यो धातुर्वाताख्य इत्याशङ्क्येत। वातादीनामपि हि धारणाद् धातुसंज्ञाऽस्त्येव । अन्ये इति । अन्ये अपरे आचार्या दोषेभ्य एव वातादिभ्योऽतिदुष्टेभ्योऽन्योन्यमूर्च्छनात् परस्परमिश्रीभावादामस्य सम्भवं कथयन्ति । केभ्यः कस्येव । यथा कोद्रवेभ्यो विषस्य सम्भवं कथयन्ति तथा दोषेभ्य आमस्य सम्भवम् ॥ २६ । २७ ॥

तेन पूर्वोक्तलक्षणेनामेन सम्पृक्ताः संयुक्ताः दोषा दूष्याश्च रसादयः कीदृशाः ? दूषितास्तैरेव वातादिभिः । सहामेन सामा इत्युपदिश्यन्ते, तत्र तत्र प्रदेशे तन्त्रे भण्यन्ते । ये च रोगा ज्वरादयस्तदुद्भवा वातादिदोषसमुत्थास्तेनामेन युक्ताः सामा इत्युच्यन्ते । यथेहैव । अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे इति । आमलक्षणं चैवं पठन्ति । द्रवं गुर्वनेकवर्णं हेतुः सर्वरोगाणां स्निग्धं पिच्छिलमासं तन्तुमदनुबद्धशूलं दुर्गन्धीत्यादि । सामानाञ्च वातादीनां संग्रहे पृथग् लक्षणमुक्तम् । यथा—"वायुरामान्वयः सातिराध्मानच्छदसञ्चरः । दुर्गन्धमसितं पित्तं कटुकं बलहं गुरु ॥ आविलस्तन्तुमांस्त्यानः प्रलेपी पिच्छिलः कफः । विपर्यये तु पक्वत्वं तथा ताम्रं समेचकम् ॥ पीतञ्च पित्तमच्छञ्च श्लेष्माच्छः पिण्डितोऽथवा । विशदश्च सफेनश्च धवलो मधुरो रसः" इति ॥ २८ ॥

सामा अपि दोषा यादृशा न निर्हार्यास्तादृशान् दर्शयति,—सर्वेति । सामान् दोषान् वातादीन् सर्वस्मिन् देहे प्रविसृतान् व्याप्ताशेषकायान् धातुषु रसादिषु लीनान् श्लिष्टान् अनुत्क्लिष्टान् स्वस्थानादचलितान् न निर्हरेद्वमनादिभिर्न शोधयेत् । कुतः ? दुर्निर्हरत्वाद् दुःखेन निर्हर्तुं शक्यत्वात् । ते हि निर्ह्रियमाणा आश्रयस्य शरीराख्यस्य नाशाय स्युः । यावत्तु सर्वदेहप्रविसृता न भवन्ति, यथा भुक्तानन्तरं ज्वरोत्पत्तौ नवातिसारे च, तथा वमनेन हरीतक्या च यथायोगं निर्हारोऽनुज्ञात एव ग्रन्थकृता ; अत्र दृष्टान्तमाह,—फलादित्यादि । आमादपक्वात् फलादामादे रसो निर्ह्रियमाणो दुर्निर्हरत्वादाश्रयस्य फलस्य यथा नाशाय भवत्येवं दोषा अपि ॥ २९ ॥

तर्हीदृशे दोषे किं कार्यमित्याह,—पाचनैरिति । तांस्तथाविधान् दोषान् पाचनैर्ज्वराद्यध्यायोक्तैः । दीपनैरिति पाचनानां स्नेहानाञ्च विशेषणं मध्यदीपकत्वात् ।

शोधयेत् शोधनः काले यथासन्नं यथाबलम् ॥ ३० ॥
हन्त्याशु युक्तं वक्त्रेण द्रव्यमामाशयान् मलान्।
घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद् गुदेन च ॥ ३१ ॥
उत्क्लिष्टानध ऊर्ध्वं वा नचामान् वहतः स्वयम्।
धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः ॥ ३२ ॥
प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः।
विबद्धान् पाचनैस्तैस्तैः पाचयेन्निर्हरेत वा ॥ ३३ ॥
श्रावणे कार्त्तिके चैत्रे मासि साधारणे क्रमात्।
ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ॥ ३४ ॥
अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः। *

---

अग्निदीप्तिकृद्भिः पाचनैः स्नेहैश्च परिष्कृतान् परिकल्पितान् कृतसंस्कारान् यथासन्नं यथाबलञ्च कृत्वा यथोक्ते काले शोधनैर्द्रव्यैः शोधयेत्। यथासन्नमिति। यस्य दोषस्यासन्नो यो मार्गस्तेनैव तं निर्हरेत्। यथाबलमिति। यस्य यावद् बलमातुरस्योत्तमं मध्यममधमं वा तज् ज्ञात्वा मृदुना मध्येन तीक्ष्णेन वा शोधनेन शोधयेदित्यर्थः ॥ ३० ॥

कस्य को मार्ग आसन्न इत्याह,—हन्तीत्यादि। वक्त्रेण द्रव्यं युक्तं पीतमामाशयादाशु मलान् हन्ति। घ्राणेन तु पीतमूर्ध्वजत्रूत्थान् मलानाशु हन्ति। गुदेन युक्तं पक्वाधानात् पक्वाशयादाशु मलान् हन्ति। इदानीं यादृशा आमा न धार्यास्तादृशान् दर्शयति,—उत्क्लिष्टानिति। अध ऊर्ध्वं वा उत्क्लिष्टानामान् स्वयं वहतो यत्नं विनैव प्रवृत्तानौषधैः स्तम्भनैर्न धारयेत्। कुत इत्याह,—हि यस्मात्ते दोषा विधृता रोगदा ज्वरादिकारिणः। तेषु तु यत् कार्यं तदाह,—प्रवृत्तानिति। अतोऽस्माद्धेतोः प्रवृत्तान् प्राक् प्रारम्भकाले दोषान् हितभोजिन उपेक्षेत संग्रहेण न धारयेत्। विबद्धानीषत् प्रवृत्तांस्तैस्तैर्यथोक्तैः पाचनैः पाचयेत् पाकं नयेन्निर्हरेद्वा। अथ कः शोधनकाल इत्याह,—श्रावणे इति। क्रमाद् यथाक्रमं ग्रीष्मचितं वायुं श्रावणे निर्हरेत्। वर्षाचितं पित्तं शरदि निर्हरेत्। हेमन्तशिशिरचितं कफं वसन्ते निर्हरेत्। एते हि साधारणाः कालाः। अत एतेषु शोधनं युक्तम् ॥ ३१—३४ ॥

ननु ग्रीष्मादिष्वेव कस्माद् वातादयो न शोध्यन्ते इत्याह,—अतीति। यतो ग्रीष्मादयोऽत्युष्णादियुक्तास्तेषामत्युष्णवर्षशीतानां ग्रीष्मवर्षाहिमागमानां साधारणे सन्धौ शीतोष्णवर्षसमभावे काले दोषान् वातादीन् दुष्टान् विकृतान् विशोधयेद् विनिर्हरेत्।

---

* त्रयः साधारणास्तेषामन्तरे प्रावृडादयः। प्रावृट् शुक्लनभौ तत्र शरदूर्ज्जसहौ मृतौ। तपस्यो मधुमासश्च वसन्तः शोधनं प्रति। एतान् ऋतून् विकल्प्यैवं दद्यात् संशोधनं भिषक् ॥ इत्यधिकः पाठः।

सन्धौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत् ॥ ३५ ॥
स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ ३६ ॥
कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम्।
प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ३७ ॥
युञ्ज्यादनन्नमन्नादौ मध्येऽन्ते कवलान्तरे।
ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम् ॥ ३८ ॥
कफोद्रिक्ते गदेऽनन्नं बलिनो रोगरोगिणोः।

---

सन्धौ हि साम्यमतः शोधनं प्रति न ते कालाः। तथाहि, ग्रीष्मे तावदादानग्लानं खरतररविकिरणतप्तं पिपासाक्रमाद व्याकुलमतिप्रविलीनदोषमतिशिथिलं शरीरं भवति। औषधं पुनरतिखरदिवाकरकरनिर्भरतापादुष्णतीक्ष्णतां यातमतियोगाय सम्पद्यते। प्रावृषि घनघनौघसङ्घट्टसादिते सर्वतो जगत्यवसन्नोऽग्निर्भवति। आदानदुर्बलञ्च शरीरं भवति। औषधयश्च जलदजलप्लावितमूला अल्पवीर्याः सम्पद्यन्ते। भूवाष्पसंयोगाच्चौषधीनां विदग्धत्वम्। अतो मध्यतां गता अयोगायैव। शीतकाले चातिशीतोपहतत्वात् शरीरमतिवातविष्टब्धमतिस्निग्धगुरुदोषं भवति। शीतोपहतत्वाच्चोष्णस्वभावमप्यौषधं संशोधनायोपयुक्तं मन्दवीर्यतां प्राप्तमयोगायैव कल्पते। तस्माद् युक्तमुक्तमत्युष्णवर्षशीतत्वाद्ग्रीष्मादिषु स्वस्थस्य शोधनमयुक्तम् ॥ ३५ ॥

नन्वातुरस्य संशोधनसाध्यस्याप्ययमेव संशोधनकालो नेत्याह,—स्वस्थेत्यादि। स्वस्थावस्थमधिकृत्यायं संशोधनकाल उक्तः। व्याधौ चात्ययिके व्याध्यनुरोधेन शोधनकालः ॥३६॥

यदि हिमन्तादावतिशीतोष्णादौ काले व्याधिः संशोधनसाध्यः सम्भवेत्तदा कथं संशोधनं कार्यमित्याह,—कृत्वेत्यादि। शीतोष्णवृष्टीनां प्रतीकारं कृत्रिमस्तुगुणं यथायथमुत्पाद्य संशोधनादिलक्षणां क्रियां प्रयोजयेत्। कृत्रिमगुणोपधानञ्च यथा हेमन्ते गर्भगृहादि, ग्रीष्मे धारागृहादीनि। क्रियाकालं न हापयेन्नातिक्रामयेत्, आत्ययिकस्य व्याधेः प्राणहारित्वात् ॥ ३७ ॥

सम्प्रत्यौषधकालान् दर्शयन्नाह,—युञ्ज्यादिति। दशैते औषधस्य कालाः। अनन्नमौषधं तदुच्यते, यदुपयुज्य तस्मिन् परिणते भुञ्जीत। अन्नादौ तदुच्यते; यदुपयुज्य समनन्तरमाहारोपयोगो विधीयते। मध्य इति। अन्नस्याहारस्य मध्ये यदौषधं भुज्यते। अन्तेऽवसाने। कवलान्तरे इति। कवलयोर्ग्रासयोरन्तरे मध्ये न तु ग्रासमिश्रितं कृत्वेत्यर्थः। ग्रासे ग्रास इति। यद्ग्राससम्पृक्तं भुज्यते। मुहुरिति। पुनः पुनर्भुक्तेऽभुक्ते वा यदौषधं भुज्यते। सान्नमिति। सहान्नेनाहारेण यदौषधं भुज्यते। सामुद्गं तदुच्यते यदाहारस्य प्राक् पश्चाच्च प्रयुज्यते। तेन हि समुद्गपुटयुगलोपमेनौषधद्वयेनाहारो मध्ये क्रियते। समुद्गः संपुटकः, निशि यच्छयनवेलायां भुज्यते ॥ ३८ ॥

अधुना विषयविभागेन यस्मिन् व्याधौ यदुपयुज्यते तद्दर्शयति। कफोद्रिक्ते इत्यादि। कफोद्रिक्ते रोगे निरन्नमौषधं योज्यम्। कयोरित्याह,—बलिनोरित्यादि। बलवति

अन्नादौ विगुणेऽपाने समाने मध्य इष्यते ॥ ३९ ॥
व्यानेऽन्ते प्रातराशस्य सायमाशस्य तूत्तरे ।
ग्रासग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि ॥ ४० ॥
मुहुर्मुहुर्विषच्छर्दि-हिक्कातृट्श्वासकासिषु ।
योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके ॥ ४१ ॥
कम्पाक्षेपकहिक्कासु सामुद्गं लघुभोजिनाम् ।
ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ४२ ॥
इत्यष्टाङ्गहृदये सूत्रस्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

अथातो द्विविधोपक्रमणीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

रोगे तत्केवलमन्नादिरहितमौषधम् । तद्ध्यनन्नमतिवीर्यं भवति । बलवांश्च यदि रोगी तदोपयुञ्जीत न तु दुर्बले । दुर्बलस्य त्वन्नसहितं न ग्लानिकरं भवति । अन्नादाविति । अपानाख्ये वायौ विगुणे कुपिते सत्यौषधं भुक्त्वा समनन्तरमेवाहार इष्यत इत्यर्थः । समाने वायौ विगुणे मध्ये भक्तस्यौषधमिष्यते । व्यानाख्ये विगुणे प्रातराशस्य पूर्वाह्ण-भुक्तस्यान्तेऽवसाने भेषजमिष्यते । सायमित्यादि । उत्तरे व्यानापेक्षया उदानाख्ये मरुति विगुणे सायमाशस्यापराह्णभुक्तस्य त्वन्ते भेषजमिष्यते । प्राणाख्ये मातरिश्वनि वाते प्रदुष्टे विकृते ग्रासग्रासान्तयोर्भेषजमिष्यते । ग्रासश्च ग्रासान्तश्च तयोरन्नग्रास-सम्पृक्तमौषधं ग्रासयोर्मध्ये भेषजमित्यवतिष्ठते । मुहुर्मुहुर्भुक्ते यदभुक्ते वा भेषजं तत्तु विषादिषु योज्यम् । अरोचके अरुचौ सह भोज्यैर्भैषज्यं योज्यम् । कीदृशैर्भोज्यैः ? चित्रैरनेकविधैः । कम्पेति । सामुद्गं नाम यदादावन्ते चाहारस्य भुज्यते तत्कम्पादिषु प्रशस्यत इति वक्ष्यमाणेन सम्बन्धः । केषाम् ? लघ्वन्नाशिनाम् । ऊर्ध्वजत्रुविकारेषु शयनवेलायामौषधं प्रशस्यत इति ॥ ३९—४२ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

---

दोषोपक्रमणीयादनन्तरं द्विविधोपक्रमणीयारम्भेऽयं सम्बन्धः ;—पूर्वं सामान्येनोपक्रमो दोषोपक्रमणीयेऽभिहितः, अत्र तु उपक्रमस्य विशेषेणोपक्रमविशेष उच्यत इत्याह,—अथात इति । द्विविधं द्विप्रकारश्च तदुपक्रमणञ्च द्विविधोपक्रमं तस्मै हितो द्विविधोपक्रमणीयः । शेषं पूर्ववत् ॥ १ ॥

उपक्रम्यस्य हि द्वित्वाद् द्विधैवोपक्रमो मतः ॥ २ ॥
एकः सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः ।
बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ ॥ ३ ॥
बृंहणं यद् बृहत्त्वाय लङ्घनं लाघवाय यत् ।
देहस्य भवतः प्रायो भौमापमितरच्च ते ॥ ४ ॥
स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनञ्च यत् ।
भूतानां तदपि द्वैध्याद् द्वितयं नातिवर्त्तते ॥ ५ ॥
शोधनं शमनञ्चेति द्विधा तत्रापि लङ्घनम् ।
यदीरयेद् बहिर्दोषान् पञ्चधा शोधनञ्च तत् ।
निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ॥ ६ ॥

---

उपक्रमस्य समासतो द्विविधः, तन्त्रान्तरपठितानां चतुर्णामुपक्रमाणामत्रैवान्तर्भावात् । अतएव सहेतुकमुपदिशन्नाह,—उपक्रम्यस्येति । हि यस्मादुपक्रम्यस्य चिकित्स्यस्य द्वित्वाद्द्वितोऽपक्रमो द्विधैव मत इष्टः । एवशब्दोऽवधारणे परमतं क्षिपति ॥ २ ॥

कथं द्विधेत्याह,—एक इति । तत्र तयोर्द्वयोरुपक्रमयोरेकः सन्तर्पणरूप उपक्रमो द्वितीयश्चापतर्पणरूप उपक्रमः । बृंहणं लङ्घनञ्च तयोः सन्तर्पणापतर्पणयोः पर्यायावुदाहृतौ । देहस्य बृंहणं तदुच्यते, यद् देहस्य बृहत्त्वाय भवति । लङ्घनं तदुच्यते, यद् देहस्य लाघवाय लाघवोत्पादनाय भवति । सन्तर्पणापतर्पणे भौमापमितरच्च भवतः । भूमेरिदं भौमम्, अपामिदमापम्, भौमयुक्तमापं सन्तर्पणम् । इतरद् भौमापादन्यदग्निवाय्वाकाशात्मकमपतर्पणम् । प्रायोग्रहणात् किञ्चिद्भौममप्यपतर्पणम् । यथा यवमसूरमकुष्टतण्डुलीयादि, तथाग्निपवनोत्कटस्यापि शुण्ठीपिप्पल्यादेर्वृष्यत्वेन सन्तर्पणकार्यदर्शनाच्च ॥ ३ । ४ ॥

अधुना स्नेहनादिश्चतुर्विधस्योपक्रमस्य सन्तर्पणापतर्पणयोरेवान्तर्भावं दर्शयन्नाह,—स्नेहनमिति । स्नेहनादि यच्चतुर्विधं कर्म तदपि द्वितयं सन्तर्पणापतर्पणरूपं नातिवर्त्तते नातिक्रामति । कुतो हेतोरित्याह,—भूतानां सन्तर्पणापतर्पणरूपाद् द्वैध्याद्द्विप्रकारकत्वात् ॥ ५ ॥

इदानीं प्रत्येकं तयोर्भेदानाह,—शोधनमिति । तत्र च तयोः सन्तर्पणापतर्पणयोर्बृंहणलङ्घनापरपर्याययोर्मध्यात् यल्लङ्घनमपतर्पणं तद् द्विधा । कथमित्याह,—शोधनं शमनञ्चेति । इति हेत्वर्थे । यतः शोधनं शमनञ्च ततो द्विधेत्यर्थः । इदानीं शोधनस्य लक्षणं प्रभेदं चाधिकृत्याह,—यदिति । यदौषधं दोषान् वातादीनन्तःस्थितान् बहिरीरयेत् क्षिपेत्, तच्छोधनम् । तच्च पञ्चधा पञ्चविधम् । तदेव पञ्चविधत्वमाह,—निरूह इति । निरूहो वस्तिः, तथा वमनं, तथा कायविरेकः शिरोविरेकश्च, तथा अस्रविस्रुती रक्तस्रावश्चेति पञ्चधा शोधनम् । सर्वशरीरस्य शिरःप्रभृतेरधो मलनिर्हरणं यत् सकाय-

न शोधयति यद् दोषान् समान्नोदीरयत्यपि ।
समीकरोति विषमान् शमनं तच्च सप्तधा ।
पाचनं दीपनं क्षुत्तृड्-व्यायामातपमारुताः ॥ ७ ॥
बृंहणं शमनं त्वेव वायोः पित्तानिलस्य च ॥ ८ ॥
बृंहयेद् व्याधि-भैषज्य-मद्य-स्त्री-शोक-कर्शितान् ।
भाराध्वोरःक्षत-क्षीण-रूक्ष-दुर्बल-वातलान् ।
गर्भिणी-सूतिका-बाल-वृद्धान् ग्रीष्मेऽपरानपि ॥ ९ ॥

---

विरेक शब्देनोच्यते । यत्तु केवलं शिरःसंज्ञकस्य शरीरावयवस्य प्रायेणोर्द्ध्वं मलनिर्हरणं स शिरोविरेकः ॥ ६ ॥

सम्प्रति शमनाख्यस्य लक्षणं प्रभेदं चाधिकृत्याह,—नेति । यदौषधं दोषान् वातादीन्न शोधयति नान्तःस्थितान् वहिर्निष्कासयति, तथा समान् स्वप्रमाणस्थान्नोदीरयति नोत्क्लेशयति, विषमांश्च स्वप्रमाणाद्धीनाधिकभावावस्थितान् समीकरोति, स्वप्रमाणस्थान् विदधाति तच्छमनमुच्यते । तच्च सप्तधा सप्तप्रकारं पाचनादिभेदेन । पाचयतीति पाचनम्; पचतोऽग्नेः पक्तुं शक्तिमधिकां यदुत्पादयति तद्द्रव्यं क्रिया वा पाचनमुच्यते । यथा लङ्घनं किराततिक्ताख्यं मुस्तादि वा । दीपनं यथा घृतादि । तन्त्रान्तरे च दीपनपाचनयोर्लक्षणमुक्तम् । चारपाणिनाप्युक्तम्,—"पाचनं पाचयेद दोषान् सामान् शमयेव तु । दीपनं त्वग्निकृत्त्वामं कदाचित् पाचयेन्न वा" ॥ यथा, "यदग्निकृत् पचेदामं दीपनं तद यथा घृतम् । पाचनं तद विपर्यस्तं यथा वक्ष्यामि लक्षणम्" इति । क्षुत्तृट्शब्दाभ्यां क्षुत्तृषानिग्रहाविह गृह्येते ॥ ७ ॥

पाचनादीनां दोषशमनत्वमुक्तं तच्च वाते वातपित्ते च न सम्भवतीत्याह,—बृंहणमिति । तुशब्दो विशेषे, विशेषस्तु लङ्घनापेक्षया । शोधनं शमनं चेति द्विधा लङ्घनमुक्तम् । बृंहणमपि शोधनं भवति दुग्धादिद्रव्यं शोधनस्वभावद्रव्यत्वात् । तेन तथाविधेन द्रव्येण केवलस्य वातस्य पित्तयुक्तस्य वा कोप आशङ्क्यते । यथा लङ्घनशोधनद्रव्येण हरीतक्यादिना । ततो बृंहणस्य विशेषणार्थस्तुशब्दः कृतः । बृंहणं यतः शोधनं मरुतः केवलस्य पित्तसहितस्य वा शमनं नतु लङ्घनशोधनवत्कोपनम् । एवकारोऽवधारणार्थः । बृंहणं यच्छोधनकरं शोधनं वातस्य पित्तयुक्तस्य वा शमनमेव न कोपनं नातुचिदित्यर्थः । लङ्घनन्तूभयरूपमपि वातस्य वातपित्तयोर्वा कोपनमेव ॥ ८ ॥

इदानीं ये बृंह्यास्तानाह,—बृंहयेदिति । कर्शितशब्दस्य व्याध्यादिभिः प्रत्येकं सम्बन्धः; व्याधिकर्शितान् बृंहयेदेवं शेषेष्वपि योज्यम् । भारादिभिः क्षीणस्य प्रत्येकं सम्बन्धः भारक्षीणान् बृंहयेत् । एवं शेषेषु रूक्षादीन् बृंहयेत् । ग्रीष्मेऽपरानप्यन्यानुक्तानपि बृंहयेत् । इत्यत्र ग्रीष्मेऽपि सर्वानपि बृंहयेदिति, विशेषेण तु व्याधिकर्शितादीन् ॥ ९ ।

मांस-क्षीर-सिता-सर्पिर्मधुर-स्निग्ध-वस्तिभिः।
स्वप्न-शय्या-सुखाभ्यङ्ग-स्नान-निर्वृत्ति-हर्षणैः॥ १०॥
मेहामदोषातिस्निग्ध-ज्वरोरुस्तम्भ-कुष्ठिनः।
विसर्प-विद्रधि-प्लीह-शिरः-कण्ठाक्षि-रोगिणः।
स्थूलांश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि॥ ११॥
तत्र संशोधनैः स्थौल्य-बल-पित्त-कफाधिकान्।
आमदोष-ज्वरच्छर्द्यतीसारहृदामयैः॥ १२॥
विबन्ध-गौरवोद्गार-हृल्लासादिभिरातुरान्।
मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः॥ १३॥
एभिरेवामयैरार्तान् हीन-स्थौल्य-बलादिकान्।
क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान्।
समीरणातपायासैः किमुताल्पबलैर्नरान्॥ १४॥
न बृंहयेल्लङ्घनीयान् बृंह्यांस्तु मृदु लङ्घयेत्।
युक्त्या वा देशकालादि-बलतस्तानुपाचरेत्॥ १५॥

---

कैर्बृंहयेदित्याह,—मांसेत्यादि। मांसादिभिर्बृंहयेत्। मधुरस्निग्धैर्वस्तिभिर्नतु रूक्षतीक्ष्णैः, तेषामपतर्पणस्वभावत्वात्। स्वप्नो निद्रा; शय्यासुखं खट्वाजनितं शर्म। निर्वृत्तिश्चित्तस्यानाकुलत्वम्॥ १०॥

मेहेत्यादि। मेहादीनामिनिर्मत्वर्थीयः। मेहप्रभृतीन् लङ्घयेत्। शिशिरे पुनरन्यानप्यपरानपीति व्याधितानां ग्रहणम्। स्वस्थानान्तु शिशिरे हेमन्तविधिविशेषेणोक्त एव। शिशिरशब्दः शीतमात्रोपलक्षणार्थः; तेन हेमन्तेऽपि लङ्घयेदित्यर्थ उपलभ्यते॥ ११॥

पूर्वमुक्तं लङ्घनं द्विधा; शोधनं शमनं चेति। तत्र शोधनविषयं निरूपयन्नाह,—तत्रेति। लङ्घयेदिति वर्त्तते। तत्र तेषु लङ्घनीयेषु मध्ये संशोधनाख्यैर्लङ्घनैः स्थौल्याद्यधिकान्, तथा आमदोषादिभिरार्त्तान् लङ्घयेत्; तथा मध्यस्थौल्यबलपित्तकफाधिकानेभिरेवामदोषज्वरादिभिर्गदैरातुरान् प्रायः पूर्वं पाचनदीपनैर्लङ्घनभेदैर्लङ्घयेत्। प्रायोग्रहणं देशकालाद्यपेक्षया नियमस्यासर्वविषयत्वज्ञापनार्थम्। हीनस्थौल्यबलादिकांस्तु सतः क्षुत्तृष्णानिग्रहैर्बुभुक्षापिपासावेगविधारणाख्यैर्लङ्घनविशेषैर्लङ्घयेत्। दोषैर्वातपित्तकफैर्मध्यबलैरार्त्तान्, तथा दृढान् शक्तान् समीरणादिभिर्लङ्घयेत्। आयासो व्यायामः। किमुत किंपुनरल्पबलैर्दोषैरार्त्तान् समीरणादिभिर्लङ्घयेत्, सुतरान्तु हीनबलैरार्तान् लङ्घयेदेवेत्यर्थः॥ १२—१४॥

न बृंहयेदिति। लङ्घनीयान् लङ्घनार्हान् मेहामदोषादीन् न बृंहयेत्। तर्हि बृंह्यस्य वातव्याधेर्यदा ज्वरादिव्याधिर्लङ्घनसाध्यो जायते तदा किं लङ्घनं कार्यं उत

बृंहिते स्याद् बलं पुष्टिस्तत्साध्यामयसंक्षयः ॥ १६ ॥
विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः ।
क्षुत्तृट्सहोदयः शुद्ध-हृदयोद्गारकण्ठता ।
व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते ॥ १७ ॥
अनपेक्षितमात्रादिसेविते कुरुतस्तु ते ।
अतिस्थौल्यातिकार्श्यादीन् वक्ष्यन्ते ते च सौषधाः ॥ १८ ॥
रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते ॥ १९ ॥
अतिस्थौल्यापची-मेह-ज्वरोदर-भगन्दरान् ।
कास-सन्यास-कृच्छ्राम-कुष्ठादीनतिदारुणान् ॥ २० ॥

---

बृंहणमित्यत्र संशय इत्याह,—बृंह्यानिति । ये पुनर्बृंह्यास्तान्लङ्घनसाध्यानयात्तान् मृदु कृत्वा लङ्घयेत् । मृदुना लङ्घनप्रकारेणापतर्पयेदित्यर्थः । युक्त्या वा प्रयोगेण सन्तर्पणापतर्पणव्यामिश्रलक्षणेन देशकालादीनां बलतोऽनुरोधेन, तानुपाचरेदुपक्रमेत् नैव लङ्घयेदित्यर्थः । आदिग्रहणेन सत्त्वसात्म्यादिग्रहणम् ॥ १५ ॥

बृंहितलङ्घितयोः किं लक्षणमित्याह,—बृंहिते इति । बृंहिते सति बलं पुष्टिः स्यात्; तथा बृंहणसाध्या ये आमयास्तेषां संक्षयो विनाशो भवेत् । सम्प्रति लङ्घितलक्षणमाह,—विमलेति । विमलेन्द्रियतादिस्तन्द्रानाशश्चेत्यन्तो ग्रन्थो लङ्घितलक्षणम् । विमलेन्द्रियता करणपाटवम्; क्षुत्तृषोः सहैककालमुदयः । शुद्धहृदयेति । हृदयञ्चोद्गारश्च कण्ठश्च हृदयोद्गारकण्ठं, शुद्धञ्च तद् हृदयोद्गारकण्ठञ्च तस्य भावः शुद्धहृदयोद्गारकण्ठता । विमलेन्द्रियतादीनां पदानामकृतसमासानामेव समस्तानां निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतराणां सर्वेषाञ्च लङ्घिते लक्षणत्वद्योतनार्थः; अन्यथाप्येषां दोषाणामुत्पत्तौ लङ्घितलक्षणत्वं भवेन्नत्वेकस्य द्वयोर्बहूनां चोत्पत्तौ लङ्घितलक्षणत्वं स्यात् । मुनिरप्यनेनैव हेतुना असमासेनैव लक्षणं व्यधत्त । तथा,—“वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे । हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥ स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये । कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि” इति ॥ १६ । १७ ॥

अनपेक्षितेति । ते बृंहणलङ्घने अनपेक्षितमात्रादिसेविते अतिस्थौल्यातिकार्श्यादीन् कुरुतः । अनपेक्षिताश्च ते मात्रादयश्च अनपेक्षितमात्रादयस्तैः सेविते मात्राद्यनपेक्षया कृते इत्यर्थः । ते चातिस्थौल्यातिकार्श्यादयः सौषधाः सभेषजा वक्ष्यन्ते पुरस्ताद् भणिष्यन्ते ॥ १८ ॥

अथातिबृंहितलङ्घितयोः किं लक्षणमित्याह,—रूपमिति । अतिबृंहितश्चातिलङ्घितश्च त्वेकवद्भावः । अतिबृंहितेऽतिलङ्घिते च तैरेवातिस्थौल्यादिभिश्चातिकार्श्यादिभिश्च बृंहणलङ्घनातियोगलक्षणं वेद्यम् । चशब्दः समुच्चये । तानेवातिस्थौल्यादीनाह,—अतिस्थौल्येति । अतिस्थौल्यादीनतिबृंहितं कर्म कुरुते इत्यनुपात्तेनापि दृष्टत्वादत्र

तत्र मेदोऽनिलश्लेष्म-नाशनं सर्वमिष्यते ॥ २१ ॥
कुलत्थ-जूर्ण-श्यामाक-यव-मुद्ग-मधूदकम् ।
मस्तुदण्डाहतारिष्ट-चिन्ताशोधनजागरम् ॥ २२ ॥
मधुना त्रिफलां लिह्याद् गुडूचीमभयां घनम् ।
रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः ॥ २३ ॥
शिलाजतुप्रयोगश्च साग्निमन्थरसो हितः ।
विडङ्गं नागरं क्षारः काललोहरजो मधु ।
यवामलकचूर्णञ्च योगोऽतिस्थौल्यदोषजित् ॥ २४ ॥
व्योष-कट्वी-वरा-शिग्रु-विड़ङ्गातिविषास्थिराः ।
हिङ्गु-सौवर्चलाजाजी-यवानी-धान्यचित्रकाः ॥ २५
निशे बृहत्यौ हवुषा पाठा मूलञ्च केम्बुकात् ।
एषां चूर्णं मधु घृतं तैलञ्च सदृशांशकम् ॥ २६ ॥
सक्तुभिः षोड़शगुणैर्युक्तं पीतं निहन्ति तत् ।
अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान् ॥ २७ ॥
हृद्रोग-कामला-श्वित्र-श्वास-कास-गलग्रहान् ।
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ॥ २८ ॥

---

कर्त्तृपदेन क्रियापदेन च सम्बन्धः कार्यः । अतएव तदपेक्षयातिस्थौल्यादीनां द्वितीया । अथवा योग्यतयवानुपात्तेनापि क्रियादिना सम्बन्धो भवत्येव, सुकविलक्षणस्यैवं स्थितत्वात् । तथा च भगवतो व्यासस्य,—"यश्च निम्बं परशुना यश्च नं मधुसर्पिषा । यश्चैनं गन्धमाल्येन सर्वस्य कटुरेव सः" । अत्र हि छेदसेकालङ्कारक्रिया अपेक्ष्य निम्बादीनां द्वितीया अर्थसम्बन्धश्च ॥ १९ । २०

अथैषां स्थौल्यादीनामुपक्रममाह,—तत्रेति । तेष्वतिस्थौल्यादिषु मेदोऽनिलश्लेष्मनाशनं सर्वमन्नपानौषधमिष्यते, किंतदिति ब्रुते,—कुलत्थेत्यादि । कुलत्थादिकं स्थूलैर्ष्यते । जूर्णस्तृणधान्यविशेषो दक्षिणापथे जोड़लक इति प्रसिद्धः ; दण्डाहतं मथितम् ; त्रिफलादीनामन्यतमं मधुना लिह्यात् । तथा रसाञ्जनादेश्च प्रयोगोऽग्निमन्थरससहितो हितोऽतिस्थूलायेतिप्रकृतेन योज्यम् । विड़ङ्गादियोगः सर्वसमभागोऽतिस्थौल्यदोषजित् ॥ २१—२४ ॥

व्योषेति । व्योषादीनि द्रव्याणि चतुर्विंशतिः परस्परसमभागानीत्येको भागः । तत्समो मधुनो द्वितीयो भागो घृतस्य तृतीयस्तैलस्य चतुर्थः । एषां सर्वेषां मिश्रीभूतानां षोड़शगुणा यवसक्तवः । तदेतत्पीतमतिस्थौल्यादिकान् पूर्वोक्तान् सर्वान् रोगानि-

अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः ।
स्नेहाग्नि-निद्रा-दृक्-श्रोत्र-शुक्रौजः-क्षुत्स्वर-क्षयः ॥ २९ ॥
बस्ति-हृन्मूर्ध-जङ्घोरु-त्रिक-पार्श्व-रुजा-ज्वरः ।
प्रलापोर्ध्वानिलग्लानि-च्छर्दि:पर्वास्थिभेदनम् ।
विण्मूत्रादि-ग्रहाद्याश्च जायन्तेऽतिविलङ्घनात् ॥ ३० ॥
कार्श्यमेव वरं स्थौल्यात् न हि स्थूलस्य भेषजम् ।
बृंहणं लङ्घनं नालमतिमेदोऽग्निवातजित् ॥ ३१ ॥
मधुरस्निग्धसौहित्यैर्यत्सौख्येन विनश्यति ।
क्रशिमा स्थविमात्यन्त-विपरीतनिषेवणैः ॥ ३२ ॥

---

हन्ति । अन्यांश्च तथाविधान् रोगान् बृंहणोत्थान् इत्यर्थः ; तथा हृद्रोगादीन् निहन्ति ; तथा बुद्ध्यादिकरम् । मन्दस्य मन्दस्याग्ने र्दीपनश्च ॥ २५—२८ ॥

साम्प्रतमतिलङ्घनोत्थान् रोगान् सौषधादीनाह,—अतिकार्श्यमिति । अतिकार्श्यादयोऽतिविलङ्घनाज्जायन्ते । स्नेहादीनां क्षयशब्देन समासः, बस्त्यादीनाञ्च रुजाशब्देन, मूत्रग्रहाद्याश्चेति आद्यशब्देन नानाविधानां वातरोगाणां ग्रहणम् ॥ २९ । ३० ॥

यद्यपि कार्श्याख्योऽयं महान् दोषस्तथापि स्थौल्यमपेक्ष्य वर एवेति प्रतिपादयन्नाह, कार्श्यमिति । अत्र चातिकार्श्यमेव वरमतिस्थौल्यादिति वेद्यं, न कार्श्यं मात्रं स्थौल्यमात्रं वा ; यस्मादतिकृशातिस्थूलावेव लङ्घनबृंहणाभ्यामुपक्रम्यावच विवक्षितौ न स्थूलकृशौ सामान्येन । कार्श्यमेव स्थौल्याद वरं कुत इत्याह,—बृंहणमिति । यस्मात् स्थूलस्य भेषजं बृंहणं नालं न समर्थं न च लङ्घनं समर्थम् । यस्मात्स्थूलस्य भेषजमतिमेदोऽग्निवातजित् । यन्मेदःक्षपणमग्निनाशकृद वातहृच्च । स्थूलस्य हि बृंहणेन मेदोऽतितरामुपचीयते लङ्घनेन मेदःक्षपणं भवति, किंत्वग्निपवनावस्योपचीयेते । तस्माद बृंहणं मांसक्षीरादि, यच्च लंघनं कोद्रवश्यामाकादि, तत्पूर्वस्माद्धेतोः स्थूलस्य न भेषजम् ॥ ३१ ॥

मधुरेति । यतो यस्मात्क्रशिमा मधुरस्निग्धतृप्तिभिः सौख्येनानायासेन नश्यति शाम्यति, तस्मात्कार्श्यं स्थौल्याद वरम् । यतश्च स्थविमास्थूलत्वमत्यन्तविपरीतनिषेवणैः शाम्यति । अत्यन्तविपरीतानां निषेवणानि अत्यन्तविपरीतनिषेवणानि तैस्तिक्तकटुकषायप्रायैरन्नपानौषधसेवनैः शाम्यतीत्यर्थः । स्थूलकृशयोश्च यदि बृंहणसाध्यस्तुल्यो व्याधिः स्यात्, ततः स्थूलस्योपक्रमविरोधात् तथा सुखेन न शाम्यति । यथा, कृशस्य लङ्घनसाध्यो विसूचिकादिर्यदि चेतयोः स्यात् सोऽपि कृशस्य सुखेनोपशाम्यति ; स्थूलस्य विरुद्धोपक्रमत्वाद्दुःखेन शाम्यति । तथा हि, अत्र प्रधानोपक्रमः स्वेदः, स च तावन्न घटते, "न स्वेदयेदतिस्थूलम्" इति निषेधात् । यद्यनं लङ्घयति तदा "स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः । चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ स्तस्ततोऽधिकम् । स्थूलं

योजयेद् बृंहणं तत्र सर्वं पानान्नभेषजम् ।
अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च ।
स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ॥ ३३ ॥
न हि मांससमं किञ्चिदन्यद् देहबृहत्त्वकृत् ।
मांसादमांसं मांसेन सम्भृतत्वाद् विशेषतः ॥ ३४ ॥
गुरु चातर्पणं स्थूले विपरीतं हितं कृशे ।
यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥ ३५ ॥

---

कोटरवद् वृद्धौ दहतोऽग्न्यनिलौ च तौ" ॥ इत्यादिना यावद् वातसखेन वनवह्निना वनस्येवास्य महती व्यापदुत्पद्यते । अथ बृंहणोपक्रमः क्रियते तदा आमदोषो वर्द्धेत । कृशस्य त्वविरुद्धोपक्रमत्वादविसूचिकादिः सुखेनोपक्रम्यस्तस्मात् कार्श्यमेव स्थौल्याद् वरम् । कृशिमेति कृशशब्दात् पृथ्वादिपाठादिमनिच् । रकृतोहलादेरिति रेफादेशः । स्थविमेति दृढादेराकृतिगणत्वादिमनिजिति केचित् । तस्मिंश्च सति स्थूल-दूरेति यणादिपरस्य लोपः, ऋकारस्य च गुणः ॥ ३२ ॥

अथ कृशे कीदृशं भेषजमित्याह,—योजयेदिति । तत्र कृशे बृंहणं सर्वं पानाद्यौषधं योज्यम् । अचिन्तयेति । अचिन्तया चेतसः शोककार्याद्यनाकुलत्वेन, तथा हर्षणेन, चित्तस्य तुष्ट्या, तथा सन्तर्पणेनाहारविशेषादिना बृंहणेन, तथा स्वप्नप्रसङ्गादतिनिद्रा-सेवनेन कृशः पुष्यति सर्वोपचितधातुः सम्पद्यते । क इव ? वराहः शूकरो यथा । अन्येभ्यश्च पुष्टिहेतुभ्यः कृशविषये स्वप्न एव प्रधान इति च दर्शयितुं वराहो दृष्टान्तत्वे-नोपन्यस्तो ग्रन्थकृता । तथाहि, वराहस्य स्वप्नमन्तरेण न कश्चित्तथाविधोऽभ्यवहारादि-रुपलभ्यते यथासौ पुष्टोऽतिमेदुरो दृश्यते । अतिस्थूलातिकृशयोश्च मुनिना लक्षणमभ्य-धायि ; "मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः । अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते" तथा, "शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततः । त्वगस्थिशेषोऽतिकृशः स्थूल-पर्वा नरो मतः" इति । न हीति । मांसेन सममपरं देहबृहत्त्वकरं न च विद्यते । सर्वबृंहणत्वकरेभ्यो मांसमतिबृंहणमित्यर्थः । विशेषेण मांसादमांसं देहस्य बृंहणत्वकृत् । कुत इत्याह, मांसेन सम्भृतत्वात् पुष्टत्वात् ॥ ३३ । ३४ ॥

एवं विस्तरेण स्थूलकृशयोरुपक्रममुक्त्वा समासेनाह,—गुरु चेति । यद् गुरु तथा अपतर्पणं तत् समासेन स्थूलाय हितं, माक्षिकशालूकादि । एतद्धि रौक्ष्यान्मेदः क्षपयति, गौरवाच्च शीघ्रं जरां न गच्छति । यदतो विपरीतं लघु सन्तर्पणञ्च तदतिकृशाय हितं, शालि-षष्टिकैणेयमांस-लाव-कपिञ्जलाऽविकम् । अतिकृशस्य ह्यग्निरपि कृशो भवति ; तस्माद् यदि तस्य गुर्वन्नपानौषधमुपयुज्यते ततोऽग्निसादोऽस्य जायते । अथास्य लघु बृंहणमुपयुज्यते तद् भूयः कार्श्यमेवास्यापद्यते । तस्माल्लघुसन्तर्पणञ्च यत्तत् कृशाय हितम् । गुरु चेत्यत्र चशब्दाल्लघु च यदपतर्पणं श्यामाककोरदूषादिकं, तथान्यदपि यन्न गुरु न च लघु मेदोघ्नं जागर-व्यवाय-व्यायाम-चिन्तादिकं तच्च स्थूले हितं गमयति ।

दोषगत्यातिरिच्यन्ते ग्राहिभेद्यादिभेदतः ।
उपक्रमा न ते द्वित्वाद्भिन्ना अपि गदा इव ॥ ३६ ॥
इत्यष्टाङ्गहृदये सूत्रस्थाने चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथातः शोधनादिगणसंग्रहमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

यवेति । उभयोः स्थूलकृशयोर्यवगोधूमं हितम् । किम्भूतं यवगोधूममित्याह,—तद्योग्येत्यादि । तयोः स्थूलकृशयोर्योग्या उचिता आहिता कृता कल्पना संयोगसंस्कारादिना उपयोगः उपायो वा यस्मिन् यवे गोधूमे तदेवं यवाः स्थूले हिता गोधूमाः कृशे इत्यर्थः । हितयोगे चतुर्थी वक्तव्येत्यस्य प्रायिकत्वात् स्थूले हितमित्यत्र न चतुर्थी । अन्येऽपि ह्येवं प्रयोगा दृश्यन्ते । यथा रुद्रटस्य ;—"सामाजाधीमतां हितम्" इति । तथास्यैव "विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता । व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम्" इति ॥ ३५ ॥

ननु वातीसारज्वरगुल्मादीनामनेकरूपत्वादनन्ता एवोपक्रमाः प्राप्ताः, तत्कथमुक्तमुपक्रमस्य हि द्वित्वाद्द्विविधोपक्रमो मत इत्याह,—दोषेत्यादि । दोषाणां पृथग्रूपाणां संसर्गसन्निपाततरतमभेदेनानन्त्यं यातानां या गतिः, तथा तेषामेव स्थानवृद्धिक्षयलक्षणा या गतिस्तिर्यगूर्ध्वाधोलक्षणा या गतिः, तथा शाखाकोष्ठास्थिसन्धिलक्षणा च या गतिस्तया अतिरिच्यन्ते बहवो भवन्त्युपक्रमाः । कथमित्याह,—ग्राहिभेद्यादिभेदतः । ग्राही च भेदी च ग्राहिभेदिनौ तावादौ येषां रोगानुरोधान्नानाविधानामुपक्रमाणां ते ग्राहिभेद्यादयस्तेषां भेदो विशेषो ग्राहिभेद्यादिभेदस्तस्मात् । यद्यप्यतिरिच्यन्ते अनन्ताः सम्पद्यन्ते तथापि द्वित्वात् सन्तर्पणापतर्पणरूपान्न तेऽतिरिच्यन्ते । सन्तर्पणरूपत्वमपतर्पणरूपत्वं वा वर्जयित्वा न तेषामुपक्रमाणां रूपान्तरं सम्भवतीत्यर्थः । कथमिव नातिरिच्यन्ते इत्याह,—भिन्ना अपि गदा इव । यथा वातादिदोषवशान्नानाविधा अपि ज्वरादयो बृंहणलङ्घनसाध्यत्वं सामत्वं निरामत्वं वा नातिवर्त्तन्ते तथोपक्रमा अपीति ॥ ३६ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां द्विविधोपक्रमणीयोऽध्याय चतुर्दशः ॥ १४ ॥

---

द्विविधोपक्रमणीयाध्यायादनन्तरं शोधनादिगणसंग्रहाध्यायारम्भः ; यतो दोषोपक्रमणीये द्विविधोपक्रमणीये च नानाविधा उपक्रमा अभिहितास्ते च मदन-मधुकादिभेषजाश्रयाः, अतस्तानि शोधनाद्युपयोगीनि सर्वोपक्रमाधिकाराणि सञ्जिघृक्षुरध्याय-

मदन-मधुक-लम्बा-निम्ब-बिम्बी-विशाला-
त्रपुस-कुटज-मूर्वा-देवदाली-कृमिघ्नम्।
विदुल-दहन-चित्राः कोशवत्यौ करञ्जः
कण-लवणवचैला-सर्षपाश्छर्दनानि ॥ २ ॥

निकुम्भ-कुम्भ-त्रिफला-गवाक्षी
स्नुक्-शङ्खिनी-नीलिनि-तिल्वकानि।
शम्पाक-कम्पिल्लक-हेमदुग्धा-
दुग्धञ्च मूत्रञ्च विरेचनानि ॥ ३ ॥

मदन-कुटज-कुष्ठ-देवदाली-
मधुक-वचा-दशमूल-दारु-रास्ना।

---

मिममारेभे,—अथात इति। शोधनं शोधनरूपो द्रव्यगण आदिर्येषां त एवम्। आदिशब्देन वातहरादिगणपरिग्रहः। तेषां संग्रहो यस्मिन्नध्याये स शोधनादिगणसंग्रहस्तं शोधनादिगणसंग्रहसंज्ञमध्यायं व्याख्यास्यामः। गणः समूहः; विच्छिन्नानां पदार्थानामेकत्र राशीकरणं संग्रहः। तत्र शोधनगणस्य सर्वदोषविजयत्वेन प्राधान्यात् पूर्वमुपन्यासः ॥ १ ॥

शोधनञ्च चतुर्विधम्; वमन-विरेचनास्थापन-शिरोविरेचन-द्रव्यभेदेन। तत्रापि वमनस्यौषधगणं तावत् पूर्वं वक्ति,—मदनेत्यादि। मदनं रावः; मधुकं मधुयष्टिका; लम्बा तुम्बी दीर्घतिक्तालावुसंज्ञा; निम्बः पिचुमर्दः; बिम्बी गोल्हा ओष्ठोपमफलसंज्ञा; विशाला इन्द्रवारुणी; त्रपुसं तिक्तत्रपुसं वेद्यम्, तस्य वमने योग्यत्वात्। कुटजं वत्सकम्; मूर्वा पीलुपर्णी; देवदाली घरङ्गरा; कृमिघ्नं विडङ्गम्; विदुलो जलवेतसः; दहनश्चित्रकः; चित्रा मूषिकपर्णी; कोशवत्यौ घण्टालिकैका धामार्गवो द्वितीया राजकोशातकी; करञ्जो नक्तमालम्; कणः पिप्पली; लवणं सैन्धवम्; वचा गोलोमी; एला त्रुटिः; सर्षपो रक्षोघ्नः; एतानि मदनादीनि छर्दनानि छर्दयन्ति छर्दिकराणि। अत्र मदन-विशाला-त्रपुस-कुटज-विडङ्गैला-सर्षपाणां फलानि वमनकर्न्ति। मधुक-विदुल-चित्रक-दन्ती-वचानान्तु मूलानि। रोध्र-सुवर्णक्षीरी-कम्पिल्लानां त्वचो वम्याः। शेषाणां फलपत्रपुष्पाणीति। वसु-मुनि-विरतिश्च मालिनी नौ मयौ यः ॥ २ ॥

निकुम्भेत्यादि। निकुम्भो दन्ती; कुम्भस्त्रिवृतम्; त्रिफला वरा; गवाक्षी विशाला द्वितीयेन्द्रवारुणी; स्नुक् गुडा; शंखिनी यवतिक्ता; नीलिनी नीलपुष्पा भारवाही संज्ञा; तिल्वको रोध्रः, शम्पाकः कर्णिकारः; कम्पिल्लको रञ्जनकः; हेमदुग्धा कनकक्षीरी; दुग्धं क्षीरं; मूत्रं प्रसिद्धम्; निकुम्भादीन्येतानि विरेचनानि। उपजातिवृत्तम् ॥ ३ ॥.

मदन-कुटजेत्यादि। मदनं मदनफलम्; कुटजं वत्सकलत्व; कुष्ठं गदनाम; दार्

यव-मिसि-कृतवधनं कुलत्थो
मधुलवणं त्रिवृता निरूहणानि ॥ ४ ॥

वेल्लाऽपामार्ग-व्योष-दार्वी-सुरालाः
बीजं शैरीषं बार्हतं शैग्रवञ्च ।
सारो माधूकः सैन्धवं तार्क्ष्यशैलं
त्रुट्यौ पृथ्वीका शोधयन्तुत्तमाङ्गम् ॥ ५ ॥

भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ।
वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत् ॥ ६ ॥

दूर्वाऽनन्ता-निम्ब-वासात्मगुप्ता-
गुन्द्राऽभीरुः शीतपाकी प्रियङ्गुः ।
न्यग्रोधादिः पद्मकादिः स्थिरे द्वे
पद्मं वन्यं सारिवादिश्च पित्तम् ॥ ७ ॥

आरग्वधादिरर्कादिर्मुष्ककाद्योऽसनादिकः ।
सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित् ॥ ८ ॥

---

देवदारु ; रास्ना युक्तरसा ; मिसिः शतपुष्पा ; कृतवेधनं धामार्गवः ; निरूहणानि निरूहणसाधनानि । भवति जगति नौ ततः परौ यौ नजसहितेर्जरगैश्च पुष्पिताग्रा ॥४॥

वेल्लेत्यादि । वेल्लो विडङ्गः ; अपामार्गः प्रत्यक्पुष्पी ; व्योषं त्रिकटुकम् ; दार्वी पीतद्रुः ; सुराला श्रेष्ठसर्जरसः ; शिरीषबीजं शैरीषम् ; बृहत्या बीजं बार्हतम् ; शिग्रुबीजं शग्रवम् ; सारो माधूकी मधुपुष्पसारः ; सैन्धवं सिन्धूत्थम् ; तार्क्ष्यशैलं सुवीरसाञ्जनम् ; त्रुट्यौ सूक्ष्मैला स्थूलैला च ; पृथ्वीका हिङ्गुपत्री ; एतान्युत्तमाङ्गं शोधयन्ति, मूर्धविरेचनानीत्यर्थः । मौ यौ पश्चाच्छैर्वैश्वदेवीति नाम्ना ॥ ५ ॥

भद्रदारु नतमिति । भद्रदारु द्रुकिलिमम् ; नतं तगरम् ; कुष्ठं गदः ; दशमूलं द्विपञ्चमूलम् ; बलाद्वयं बलातिबला च एतानि भद्रदार्वादीनि, तथा वक्ष्यमाणो वीरतरादिर्विदार्यादिश्च वायुं नाशयति ॥ ६ ॥

दूर्वेत्यादि । दूर्वा शाद्वलम् ; अनन्ता यवासः ; निम्बः प्रसिद्धः ; वासा आटरूषकः ; आत्मगुप्ता कपिकच्छूः ; गुन्द्रा पटेरकः ; अभीरुः शतावरी ; शीतपाकी शिखण्डिका काकघन्तिकाभेदः । प्रियङ्गुः श्यामा ; एष दूर्वादिगणः, तथ वक्ष्यमाणो न्यग्रोधादिः, तथा पद्मकादिर्गणः, तथा शालिपर्णी-पृश्निपर्ण्यौ, तथा पद्मं जलजं वन्यं कुटंनटं सारिवादिश्च गणः ; एते पित्तं नाशयन्ति । मौ तौ गौ चेच्छालिनी वेदलोकैः ॥ ७ ॥

आरग्वधेत्यादि । आरग्वधाद्यादयो गणाः समेते बलासं श्लेष्माणं जयन्ति ॥ ८ ॥

जीवन्ती-काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च ।
ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः ॥ ९ ॥
विदारि-पञ्चाङ्गुल-वृश्चिकाली-वृश्चीव-देवाह्वय-शूर्पपर्ण्यः ।
कण्डूकरी जीवन-ह्रस्वसंज्ञे द्वे पञ्चके गोपसुता त्रिपादी ॥१०॥
विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ।
शोषगुल्माऽङ्गमर्दोर्ध्व-श्वास-कास-हरो गणः ॥ ११ ॥
सारिवोशीर-काश्मर्य-मधूक-शिशिरद्वयम् ।
यष्टी परूषकं हन्ति दाहपित्तास्रतृड्ज्वरान् ॥ १२ ॥

पद्मक-पुण्ड्रौ वृद्धितुगर्द्ध्यः
शृङ्ग्यऽमृता दश जीवनसंज्ञाः ।
स्तन्यकरा घ्नंतीरण-पित्तं
प्रीणन-जीवन-बृंहण-वृष्याः ॥ १३ ॥

---

जीवन्तीति । जीवन्त्यादिर्गणो जीवनीयसंज्ञः । उदाहरणमात्रं चेदम् । धीमता स्वादुशीतस्निग्धादीन् जीवन्त्यादिषु साधारणगुणानालोच्य क्षीरेक्षुद्राक्षाक्षोड-विदार्यादिषु तद्गुणेषु जीवनीयादित्वमवधारयितुं युक्तमिति । जीवन्ती जीववर्द्धना; काकोल्यौ द्वे एका काकोली कवडीसंज्ञा; अन्या क्षीरकाकोली पयस्विनीसंज्ञा; द्वे मेदे एका मेदा मणिच्छिद्रासंज्ञा; अन्या महामेदा वचसहासंज्ञा; मुद्गपर्ण्या-दीनां प्रागुक्तानि नामानि; द्व्यन्तान्तरादिगुरुभिः सोदधिसः सप्तभिर्गणैर्गुरुणा । आर्याद्धे नात्रायुजि जः षष्ठोऽयं नलघुकौ वा ॥ ९ ॥

विदारीत्यादि । विदारी वृष्यकन्दा; पञ्चाङ्गुल एरण्डः; वृश्चिकाली उष्ट्रधूमकी मेषशृङ्गी; वृश्चीवः क्षुद्रवर्षाभूः; देवाह्वयः सुरदारुः; देवाद्वयेति पाठे एका सहदेवा द्वितीया विश्वदेवा चेति देवाद्वयम् । शूर्पपर्ण्यौ मुद्गपर्णी तथा माषपर्णी च । कण्डुकरी कपिकच्छूः । जीवनेत्यादि । अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् । जीवनाख्यमिति जीवनसंज्ञं पञ्चमूलम् । बृहती कण्टकारिका शालिपर्णी पृश्निपर्णी गोक्षुरकमिति ह्रस्वसंज्ञं पञ्चमूलम् । गोपसूता सारिवा; त्रिपादी हंसपादी कीटमारिकाख्या । उपजातिर्वृत्तम् । एष विदार्यादिगणो बृंहणो वातपित्तघ्नः शोषादिहरश्च ॥ १० । ११ ॥

सारिवेति । सारिवा उत्पलवल्ली; उशीरं वीरतरुः; काश्मर्यः सर्वतोभद्रा; मधूकी गुडपुष्पकः; शिशिरद्वयमेकं सितं चन्दनं मलयजसंज्ञमन्यद्रक्तंचन्दनसंज्ञम्; यष्टी क्लीतकसंज्ञा; परूषकं मृदुफलम्; सारिवादिरयं दाहादीन् हन्ति ॥ १२ ॥

पद्मकेत्यादि । पद्मकं हैमपद्मम्; पुण्ड्रः प्रपौण्डरीकम्; वृद्धिः श्रावणी; तुगा तुगाक्षीरी; ऋद्धिर्महाश्रावणी; शृङ्गी कुलीरशृङ्गी; अमृता छिन्नरुहा; दश-

परूषकं वरा द्राक्षा कट्फलं कतकाफलम् ।
राजाह्वं दाडिमं शाकं तृष्णामूत्रामयवातजित् * ॥ १४ ॥
अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम् ।
सैला मधुक-नागाह्वं विषान्तर्दाहपित्तनुत् ॥ १५ ॥
पटोल-कटुरोहिणीचन्दनम् मधुस्रव-गुडूची-पाठान्वितम् ।
निहन्ति कफपित्तकुष्ठज्वरान् विषं वमिमरोचकं कामलाम् ॥१६॥
गुडूची-पद्मकाऽरिष्ट-धानका-रक्तचन्दनम् ।
पित्तश्लेष्मज्वरच्छर्दि-दाहतृष्णाघ्नमग्निकृत् ॥१७॥
आरग्वधेन्द्रयव-पाटलि-काकतिक्ता-
निम्बाऽमृता-मधुरसा-स्रुववृक्ष-पाठाः ।
भूनिम्ब-सैर्यकपटोल-करञ्जयुग्मं
सप्तच्छदाग्नि-सुषवी-फल-बाण-घोण्टाः ॥ १८ ॥

---

जीवनसंज्ञा जीवन्त्यादिगणोक्ताः । एते पद्मकादयः स्तन्यहेतवः ; तथा वातपित्तं घ्नन्ति तथा प्रीणनादियुक्ताः । अष्टाभ्यो भाद्री योज्यासुपचिता ॥ १३ ॥

परूषकमिति । परूषकी मृदुफली बन्धनच्छदः । वरा श्रेष्ठा ; द्राक्षा मधुफला ; कट्फलं रोहिणी सोमवल्कः ; कतकफलं वारिप्रसादनम् ; राजाह्वं कर्णिकारम् ; दाडिमं शुकेष्टम् ; शाकं खरच्छदं वृक्षविशेषः । परूषकादिरेष तृडामयादिजित् ॥ १४ ॥

अञ्जनमिति । अञ्जनं द्विधा ; एकं स्रोतोऽञ्जनं यामुनसंज्ञं, अपरं सौवीराञ्जनं नेत्रभूषणाख्यम् ; फलिनी प्रियङ्गुः ; मांसी जटाजटा ; पद्मं पुष्करम् ; उत्पलं शशिप्रियम् ; रसाञ्जनं तार्क्ष्यशैलम् ; एला बहुला प्रसिद्धा ; मधुकं मधुयष्टी । नागाह्वं नागकेसरम् । एषोऽञ्जनादिर्विषादिजित् ॥ १५ ॥

पटोलेत्यादि । पटोलं पाण्डुफलम् ; कटुरोहिणी कटुका ; चन्दनं गन्धसारम् ; मधुस्रवा मरुद्री सुरङ्गी ; गुडूची छिन्नरुहा ; पाठा अम्बष्ठा ; एतैर्द्रव्यैर्युक्तमेतत् पटोलादिकं कफादीन् हन्ति । मात्रासमकं नवमीलगन्तम् ॥ १६ ॥

गुडूचीत्यादि । गुडूची छिन्नोद्भवा ; पद्मकी मरुद्भवा ; अरिष्टो निम्बः ; धानका धान्याकम् ; रक्तचन्दनं रक्तकाष्ठम् ; एष गुडूच्यादिः पित्तादीन् हन्ति ॥ १७ ॥

आरग्वधेत्यादि । आरग्वधः शम्पाकः ; इन्द्रयवाः कलिङ्गकाः ; पाटलिर्वसंतदूती ; काकतिक्ता माञ्जिष्टा ; निम्बः पारिभद्रकः ; अमृता गुडूची ; मधुरसा मूर्वा ; स्रुववृक्षो विकङ्कतः कण्टकीवृक्षः कण्टकारिकेति प्रसिद्धः ; पाठा अम्बष्ठा ; भूनिम्बः कैरातः ; सैर्यकः सहचरः ; पटोलं कर्कशच्छदम् ; करञ्जयुग्ममेकः पूतिक-

---

* मूर्च्छामयवातजिदिति वा पाठः ।

आरग्वधादिर्जयति च्छर्दिकुष्ठविषज्वरान् ।
कफं कण्डूं प्रमेहञ्च दुष्टव्रणविशोधनः ॥ १९ ॥
असन-तिनिश-भूर्ज-श्वेतवाह-प्रकीर्या-
खदिर-कदर-भण्डी-शिंशपा-मेषशृङ्गयः ।
त्रिहिम-तल-पलाशा जोङ्गकः शाक-शालौ-
क्रमुक-धवकुलिङ्ग-च्छागकर्णाश्वकर्णाः ॥ २० ॥
असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।
पाण्डुरोगं प्रमेहञ्च मेदोदोषनिबर्हणः ॥ २१ ॥
वरुण-सैर्यकयुग्म-शतावरी-दहन-मोरट-बिल्व-विषाणिकाः ।
द्विबृहती-द्विकरञ्ज-जयाद्वयं बहलपल्लव-दर्भ-रुजाकराः ॥ २२ ॥
वरुणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।
अधोवातं * शिरःशूलं गुल्मं चान्तःसविद्रधिम् ॥ २३ ॥

करञ्जश्चिरिबिल्वाख्योऽपरो नक्तमालाख्यः ; सप्तच्छदः अयुग्मच्छदः ; अग्निमन्थः ; सुषवी कारवी पानीयवल्ली अजशृङ्गी ; फलं मदनफलम् ; वाणः सहचरः ; घोण्टा पूगविशेषः । वसन्ततिलका वृत्तम् । अयमारग्वधादिश्छर्द्यादीन् निहन्ति ॥ १८ । १९ ॥

असनेत्यादि । असनः पीतशालाख्यः ; तिनिशः स्यन्दनसंज्ञः ; भूर्जो बहुपुटाख्यः ; श्वेतवाहोऽर्जुनः ; प्रकीर्या पूतिकरञ्जः ; खदिरी गायत्री ; कदरः खदिराकृतिः श्वेतसारः ; भण्डी शिरीषः ; शिंशपा मण्डलपत्रिका ; मेषशृङ्गी अजशृङ्गी ; त्रिहिमं चन्दनत्रयं मलयज-रक्तचन्दन-दारुहरिद्रा-भेदेन । तलस्तालः ; पलाशः किंशुकः ; जोङ्गकोऽगुरुसंज्ञः ; शाकं वरदारु ; शाली रसनिर्यासाख्यः ; क्रमुकं पूगम् ; धवः शकटाख्यः ; कुलिङ्गं शाक्रयवाः ; छागकर्णो वस्तकर्णः, अश्वकर्णः कुशिकः । मालिनी वृत्तम् । अयमसनादिः श्वित्रादीन् विजयते शमयति ; विजयत इति विपराभ्यां जेरित्यात्मनेपदम् । तथा मेदोदोषं निबर्हति पराकरोति ॥ २० । २१ ॥

वरुणेत्यादि । वरुणो रुरुमाणः ; सैर्यकयुग्मं सहचरद्वयमेको रक्तपुष्पः कुरबकाख्योऽन्यः पीतपुष्पः कुरण्टकाख्यः ; शतावरी वरा ; दहनो वह्निः ; मोरटो मूर्वा ; बिल्वः पूतिवासः ; विषाणिका अजशृङ्गी ; द्विबृहत्यौ कण्टकारिकामोटिकाख्ये ; करञ्जयुग्मं प्रागुक्तम् ; तर्कारी हरीतकी चेति जयाद्वयम् ; बहलपल्लवः शोभाञ्जनः ; दर्भाः कुशाः ; रुजाकरो हिंतालुः । द्रुतविलम्बितमाह नभो भरौ । वरुणादिरयं कफादीन् हन्ति ॥ २२ । २३ ॥

* आध्यवातमिति वा पाठः ।

ऊषकस्तुत्थकं हिङ्गु-कासीसद्वयसैन्धवम् ।
सशिलाजतु कृच्छ्राश्म-गुल्ममेदःकफापहम् ॥ २४ ॥

वल्लन्तरारणिक-वूक-वृषाश्मभेद-
गोकण्टकेत्कट-सहाचर-बाण-काशाः ।
वृक्षादनी-नल-कुशद्वय-गुण्ठ-गुन्द्रा-
भल्लूक-मोरट-कुरण्ट-करम्भ-पार्थाः ॥ २५ ॥

वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः ॥ २६ ॥

रोध्र-शाबररोध्र-पलाश-जिङ्गिणी-सरल-कट्फल-युक्ताः ।
कुत्सिताम्ब-कदली-गतशोकाः, सैलवालु-परिपेलव-मोचाः ॥२७॥

एष रोध्रादिको नाम मेदःकफहरो गणः ।
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ २८ ॥

---

ऊषक इति । ऊषको वृष्यकः कल्लर इति प्रसिद्धः ; तुत्थकं कार्पूरं किटिहापरसंज्ञम् ; हिङ्गु रामठम् ; कासीसद्वयमेकं पांशुधातुसंज्ञमपरं पुष्पकासीसाख्यम् ; सैन्धवं माणिमन्थम् ; शिलाजतु शिलाजम् ; ऊषकादिरयं मूत्रकृच्छ्रादीनपहन्ति ॥ २४ ॥

वेल्लन्तर इति । वेल्लन्तरो वीरतर उशीराख्यः ; अरणिकोऽग्निमन्थः ; वूका ईश्वरमल्लिका ; वृष आटरूषकः । अश्मभेदः पाषाणभेदः ; गोकण्टको गोक्षुरकः ; इत्कटा सूक्ष्मपत्रिका दीर्घलोहितयष्टिका काष्ठविशेषः; सहाचरः सहचर ; बाणो नीलपुष्पशैरेयकः ; काशः श्वेतचामरकः ; वृक्षादनी कामवृक्षकः ; नलो स्वल्पपुष्पाख्यः ; कुशद्वयं स्थूलसूक्ष्मभेदेन दर्भद्वयम् ; गुण्ठो वृन्तवृणम् कुन्द्रगुण्ठकापरसंज्ञः ; गुन्द्रा पदएरकः ; भल्लूकः श्योनाकः ; मोरटः क्षीरमोरटः ; कुरण्टः सितिवारकः ; करम्भ उत्तमारणी ; पार्था सुवर्चला । वसन्ततिलका वृत्तम् । एष वीरतरादिर्वर्गो गणो वातजान् रोगान् हन्ति, तथा अश्मर्यादिहरः ॥ २५ । २६ ॥

रोध्रेत्यादि । रोध्रस्तिल्वकः ; शाबररोध्रोऽक्षिभेषजापरसंज्ञः ; पलाशः शठी ; जिङ्गिणी जिञ्जिणी कृष्णशाल्मली ; सरलं देवदारु ; कट्फलं कुमुदारोहिणी ; युक्ता रास्ना, गिरिकर्णिकेत्यन्ये ; कुत्सिताम्बः कदम्बः ; कदली रम्भा ; गतशोकः अशोकः ; एलवालु ऐलेयम् ; परिपेलवं कुटन्नटं गोपालदमनकाख्यम् ; मोचा शल्लकी ; स्वागता वृत्तम् । अयं रोध्रादिको गणो मेदःकफापहो योनिदोषघ्नश्च ; तथा स्तम्भी दोषाणां शकृदादेश्च ; तथा वर्णाय हितो विषघ्नश्च ॥ २७ । २८ ॥

अर्कालर्कौ नागदन्ती विशल्या भार्गी रास्नावृश्चिकाली प्रकीर्या ।
प्रत्यक्पुष्पी पीततैलोदकीर्याश्वेतायुग्मं तापसानाञ्च वृक्षः ॥२९॥

अयमर्कादिको वर्गः कफमेदोविषापहः ।
कृमिकुष्ठप्रशमनो विशेषाद् व्रणशोधनः ॥ ३० ॥

सुरसयुग-फणिज्जं कालमाला-विडङ्गं
खरबुस-वृषकर्णी-कट्फलं कासमर्दः ।
क्षवकसरसिभार्गी कार्मुका काकमाची-
कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ ३१ ॥

सुरसादिगणः श्लेष्ममेदःकृमिनिषूदनः ।
प्रतिश्यायारुचिश्वास-कासघ्नो व्रणशोधनः ॥ ३२ ॥

मुष्कक-स्नुग्-वराद्वीपि-पलाश-धव-शिंशपाः ।
गुल्ममेहाश्मरीपाण्डु-मेदोऽर्शःकफशुक्रजित् ॥ ३३ ॥

वत्सक-मूर्वा-भार्गी-कटुका-मरिचं घुणप्रिया च गण्डीरम् ।
एला-पाठाजाजी-कट्वङ्गफलाजमोद-सिद्धार्थ-वचाः ॥ ३४ ॥

---

अर्केत्यादि । अर्कः सदापुष्पी ; अलर्को मन्दारकाख्यः श्वेतकुसुमः ; नागदन्ती पर्वपुष्पिका ; विशल्या लाङ्गली ; भार्गी पाङ्गी ; रास्ना रस्या ; वृश्चिकाली उष्ट्रधूमकः ; प्रकीर्या करञ्जकः ; प्रत्यक्पुष्पी अपामार्गः ; पीततैला काकादनी ; उदकीर्या करञ्जकः ; श्वेतायुग्ममेका किणिहिसंज्ञा, अन्या महाश्वेता पालिन्दीसंज्ञा ; तापसानां वृक्ष इङ्गुदः । शालिनी वृत्तम् । एषोऽर्कादिवर्गः कफघ्नोऽतिशयेन व्रणशोधनः ॥ २९ ॥

सुरसयुगेत्यादि । सुरसयुगं सुतुलसीद्वयं गौरकृष्णभेदेन ; फणिज्जो मरीचकः ; कालमाला कृष्णार्जकः कुवेरकभेदः ; विडङ्गं वेल्लम् ; खरबुसो मरुबकः ; वृषकर्णी मूषिककर्णी ; कट्फलं सोमवल्कम् ; कासमर्दः कासघ्नः ; क्षवकः क्षुद्विबोधनः ; सरसी तुम्बरपत्रिका ; भार्गी अङ्गारवल्ली ; कार्मुका रक्तमञ्जरी, अतिमुक्तक इत्यन्ये । काकमाची गुड़फला ; कुलहली भूकदम्बकः अलम्बूसाख्यः ; विषमुष्टिः कर्कोटी ; महानिम्बक इत्येके । भूस्तृणं गुह्यबीजमतिच्छत्राख्यम् ; भूतकेशी मांसीप्रभजारा । मालिनी वृत्तम् । सुरसादिरयं गणः श्लेष्मादिघ्नः प्रतिश्यायादिहरो व्रणशुद्धिकृत् ॥३१।३२

मुष्ककेत्यादि । मुष्कको मोक्षकः ; स्नुक् गुडा उपकाख्यः ; वरादीनां प्रोक्तानि नामानि । मुष्ककादिरेष गुल्मादिजित् ॥ ३३ ॥

वत्सकेत्यादि । वत्सको वनतिक्तकः ; मूर्वा मधुरसा ; मरीचमूषणम् ; घुणप्रिया अतिविषा ; गण्डीरः स्नुही ; एला वेला ; पाठा प्राचीना ; अजाजी जीरकः ;

जीरक-हिङ्गु-विडङ्गपशुगन्धा पञ्चकोलकं हन्ति ।
चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ३५ ॥
वचा-जलद-देवाह्व-नागरातिविषाभयाः ।
हरिद्राद्वय-यष्ट्याह्व-कलशी-कुटजोद्भवाः ॥ ३६ ॥
वचा-हरिद्रादिगणावामातीसारनाशनौ ।
मेदःकफाढ्यपवन-स्तन्यदोषनिबर्हणौ ॥ ३७ ॥
प्रियङ्गु-पुष्पाञ्जन-युग्मपद्मा-पद्माद्रजो योजनवल्ल्यनन्ता ।
मानद्रुमो मोचरसः समङ्गा-पुन्नाग-शीतं मदनीयहेतुः ॥३८ ॥
अम्बष्ठा मधुकं नमस्कारी-नन्दीवृक्ष-पलाश-कच्छुराः ।
रोध्रं धातकि-बिल्वपेशिके कट्वङ्गः कमलोद्भवं रजः ॥ ३९ ॥
गणौ प्रियंग्वम्बष्ठादी पक्वातीसारनाशनौ ।
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥ ४० ॥

---

कट्वङ्गफलं आरलुकफलम् ; केचित्तु कट्वङ्गं टुण्टुकं फलं राठमित्याहुः ; अजमोदी दीप्यकः ; सिद्धार्थो गौरसर्षपः ; वचादीनामुक्तानि नामानि । गुर्वन्ताष्टपदनन-भागार्यापूर्वसदृशशकलद्वितया । आर्यैरार्यागीतिर्गीता सङ्गीतगीतविधौ । पशुगन्धा अजगन्धा मकरन्तराख्या ; पञ्चकोलकं प्रागुक्तम् । वत्सकादयश्चलादीन् घ्नन्ति । आर्या ॥ ३४ । ३५ ॥

वचेत्यादि । वचा गोलोमी ; जलदोऽम्बुधरः ; देवाह्वं किलिमम् ; नागरं विश्वम् ; अतिविषा भङ्गुरा ; अभयाऽमृता ; हरिद्राद्वयं पिण्डा एका, पचम्पचा दार्वीसंज्ञाऽन्या । यष्ट्याह्वं क्लीतिका ; कलशी पृश्निपर्णी ; कुटजोद्भवा इन्द्रयवा । एतौ वचादिर्हरिद्रादिगणावामातीसारघ्नौ मेदःकफादिहरौ च ॥ ३६ । ३७ ॥

प्रियङ्गु इत्यादि । प्रियङ्गुः श्यामा ; पुष्पाञ्जनं रीतिपुष्पम् ; युग्मेत्यत्रानुवृत्तिकृतेन सम्बन्धेनाञ्जनमिति सम्बध्यते ; तेनाञ्जनयुग्मं स्रोतोञ्जनमेकमन्यत् सौवीरमित्यर्थोऽवतिष्ठते । पद्मा पद्मचारिणी ; पद्मात् कमलाद्रजः केसरम् ; योजनवल्ली मञ्जिष्ठा ; अनन्ता यवासकः ; मानद्रुमः शाल्मली ; मोचरसः शाल्मलीनिर्यासः ; समङ्गा नमस्कारी रक्तमूलाख्या ; पुन्नागस्तुङ्गो रक्तकेसराख्यः ; शीतं चन्दनम् ; मदनीयहेतुर्धातकी । उपजातिवृत्तम् । अम्बष्ठा मयूरशिखाख्या ; मधुकं मधुयष्टिका ; नमस्कारी समङ्गा ; नन्दीवृक्षः प्ररोही ; पलाशः प्रसिद्धः ; कच्छुरा फणिह्वारी धन्वयवासकाख्यः ; बिल्वपेशिका बिल्वमज्जा ; कट्वङ्गः श्योनाकः ; कमलोद्भवं रजः पद्मरेणुः ; एतौ प्रियंग्वम्बष्ठादिगणौ पक्वातीसारनाशनौ सन्धानीयौ हितौ पित्ते व्रणरोपणौ च । अष्टाभ्यीर्षोद्गरायुपचिता ॥ ३८—४० ॥

मुस्ता-वचाग्नि-द्विनिशा-द्वितिक्ता-
भल्लात-पाठा-त्रिफलाविषाख्याः ।
कुष्ठं त्रुटी हैमवती च योनि-
स्तन्यामयघ्ना मलपाचनाश्च ॥ ४१ ॥

न्यग्रोध-पिप्पल-सदाफल-रोध्र-युग्मं
जम्बूद्वयार्ज्जुन-कपीतन-सोमवल्काः ।
प्लक्षाम्र-वञ्जुल-पियाल-पलाश-नन्दी-
कोली-कदम्ब-विरला-मधुकं मधूकम् ॥ ४२ ॥

न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधनः ।
मेदःपित्तास्रतृड्दाह-योनिरोगनिबर्हणः ॥ ४३ ॥

एलायुग्म-तुरुष्क-कुष्ठ-फलिनी-मांसी-जल-ध्यामकम्
स्पृक्का-चोरक-चोच-पत्र-तगर-स्थौणेय-जातीरसाः ।
शुक्तिर्व्याघ्रनखोऽमराह्वमगुरुः श्रीवासकं कुङ्कमम्
चण्डा-गुग्गुलु-देवधूप-खपुराः पुन्नागनागाह्वयम् ॥ ४४ ॥

एलादिको वातकफौ विषञ्च विनियच्छति ।
वर्णप्रसादनः कण्डू-पिटिकाकोठनाशनः ॥ ४५ ॥

---

मुस्तेत्यादि । मुस्ता गाङ्गेयी ; तिक्ताद्वयमेका कटुकाऽन्या काकतिक्ता । विषाख्या शुक्लकन्दा ; हैमवती श्वेतवचा । एते योन्यामयघ्नाः स्तन्यामयघ्ना मलपाचनाश्च । तौ जगौ गुरुश्चेन्द्रवतीन्द्रवज्रा ॥ ४१ ॥

न्यग्रोधेत्यादि । न्यग्रोधो वटवृक्षः ; पिप्पलोऽश्वत्थः ; सदाफल उदुम्बरः ; जम्बूद्वयमेका राजजम्बूर्बृहत्फला, अन्या ह्रस्वफला काकजम्बूः ; अर्जुनः पार्थः ; कपीतनः कपिचूडो वानीराख्यः ; सोमवल्कः सितसारः खदिरः ; प्लक्षः शृङ्गीप्लक्षकाख्यः ; आम्रश्चूतः ; वञ्जुलो वेतसः ; पियालो द्राक्षारसप्रियः खरस्कन्धाख्यः ; नन्दी जयवृक्षः ; कोली बदरी ; विरला तिन्दुकी ; मधुकं यष्टिः ; मधूकं मधूकपुष्पम् । न्यग्रोधादिरयं सङ्ग्रहणादिगुणयुक्तः । वसन्ततिलकम् ॥ ४२ । ४३ ॥

एलायुग्मेत्यादि । एलायुग्मं सूक्ष्मेला स्थूलेला च ; तुरुष्कः कृत्रिमो निर्यासविशेषः ; कुष्ठं गदः ; फलिनी गन्धप्रियङ्गुः ; मांसी नलदम् ; जलं ह्रीवेरं ; ध्यामकं दवदग्धकम् ; स्पृक्का देवी ; चोरको ग्रन्थिपर्णी ; चोचं त्वक् ; पत्रं गन्धपत्रम् ; तगरं चक्रम् ; स्थौणेयं तलपीतकम् ; जातीरसो बोलः ; शुक्तिर्नखः ; व्याघ्रनखः समुद्रजः, अमराह्वं देवदारुः ; अगुरुः प्रसिद्धः ; श्रीवासश्चण्डा श्रीवेष्टकाख्यः ; कुङ्कमं वाह्लीकम् ; चण्डा कोपना ;

श्यामा दन्ती द्रवन्ती-क्रमुक-कुटरणी शङ्खिनी चर्मसाह्वा
स्वर्णक्षीरी गवाक्षी शिखरि-रजनकच्छिन्नरुहा-करञ्जाः ।
बस्तान्त्री व्याधिघातो बहलबहुरसस्तीक्ष्णवृक्षात् फलानि
श्यामाद्यो हन्ति गुल्मं विषमरुचिकफौ हृद्रुजं मूत्रकृच्छ्रम् ॥४६॥

त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ।
युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥ ४७ ॥

एते वर्गा दोषदूष्याद्यपेक्ष्य
कल्कक्वाथस्नेहलेहादियुक्ताः ।

---

गुग्गुलुः पुरः ; देवधपः सर्जरसः ; खपुरः कन्दुरुकः ; पुन्नागी रक्तकेसरः ; नागाह्वयं नागकेसरम् । एलादिरयं वातादीन् हन्ति ; तथा वर्णप्रसन्नत्वकृत् कण्ड्वादिहृच्च । मसौजसौतौगुरुकाश्च सूर्यतुरगैः शार्दूलविक्रीडितम् ॥ ४४ । ४५ ॥

श्यामेति । श्यामा मालविका त्रिवृत् मसूरविदलाख्या ; दन्ती मुकूलकश्चिनाख्यः ; द्रवन्ती उन्दुरकर्णिका ; क्रमुकः पट्टिकारोध्रः ; कुटरणी शुक्ला त्रिवृत् ; शङ्खिनी यवतिक्ता ; चर्मसाह्वा सातला ब्राह्मीत्यन्ये ; स्वर्णक्षीरी कंकुष्ठम् ; गवाक्षी गवादनी स्थाणुकर्णीसंज्ञा, इन्द्रवारुणीत्यन्ये ; शिखरी अपामार्गः ; रजनकः काम्पिल्लकः ; छिन्नरुहा अमृतवल्ली ; करञ्जः केडर्यः ; बस्तान्त्री वृषगन्धा ; व्याधिघातः कृतमालः ; बहलबहुरस इक्षुः ; तीक्ष्णवृक्षात् पीलोः फलानि । श्यामादिरेष गुल्मादीन् हन्ति । म्रौभ्नौ याथ त्रयः स्युः स्वरमुनितुरगैः स्रग्धरा स्याद् विरामैः ॥ ४६ ॥

त्रयस्त्रिंशदितीति ; इति प्रकारे । त्रयस्त्रिंशदिति वर्गाः कथिताः ; अत्र संख्योपादानमेषां प्राधान्यख्यापनार्थम् । अन्येऽप्येवं प्रकाराः सन्त्येते तु प्रधाना इत्यर्थः । सुखग्रहणार्थं वा सङ्ख्यावचनं कृतम् । एतेषु त्रयस्त्रिंशत्सु वर्गेषु अलाभतः अलाभे सति तद्विधं रसवीर्यविपाकैस्तुल्यं द्रव्यमन्यदनुक्तमपि युञ्ज्यात् ; नचैतावदत्र विधेयमित्याह,—जह्यादयौगिकम् ; न केवलमेषु वर्गेषु तद्द्रव्यालाभे यथालाभमन्यत्तद्विधं द्रव्यं युञ्ज्याद, यावदयौगिकं यत्तु द्रव्यं तच्च त्यजेत् । दोषरोगातुराद्यपेक्षया पुरुषस्यास्मिन् काले वयसि वा यो गणः समस्ततत्साध्यामयशमनाय च वारयितुं युक्तः ; एकस्य द्रव्यस्यालाभे द्वयोर्बहूनां वा तत्प्रकारमेकमपरं द्रव्यं द्वे वा बहूनि वा द्रव्याणि संयोज्य प्रयोज्यः ; एवं न समस्तद्रव्यापेक्षा कार्य्येति । यथा च सुश्रुतः,—"समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत् । पृथङ् मिश्रान् समस्तांश्च गणान् वा व्यस्तसंहतान्" इति । त्रयस्त्रिंशदिति वेस्त्वयश्चेति त्रयसादेशः । यौगिकमिति योगाय प्रभवतीत्यर्थे योगाच्चेति ठञ् ॥ ४७ ॥

एते इति । एते पूर्वोक्ता वर्गा दोषदूष्यवयोबलादीनपेक्ष्य कल्कादियुक्ताः सुकृच्छ्रान् रोगानामयान् घ्नन्ति ; युक्ता इत्यत्रान्तर्भावितण्यर्थो युजिः ; ततः कल्कादिषु

पाने नस्येऽन्वासनेऽन्तर्बहिर्वा
लेपाभ्यङ्गैर्घ्नन्ति रोगान् सुकृच्छ्रान् ॥ ४८ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः ।

अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
गुरु-शीत-सर-स्निग्ध-मन्द-सूक्ष्म-मृदु-द्रवम् ।
औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥ २ ॥
सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥ ३ ॥

---

वैद्येन योजिता इत्यर्थोऽवतिष्ठते । आदिशब्देन फाण्टशीतकषायादिपरिग्रहः । कथमेते घ्नन्तीति प्रकारं युक्त्याह,—पाने इत्यादि । पानादुपयोगे सति । लेपाभ्यङ्गैरिति बहुवचनेन लेपाभ्यङ्गस्नानादिभिश्चेति योज्यम् । मालिनीवृत्तम् ॥ ४८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीनदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां शोधनादिगणसंग्रहोऽध्यायः पञ्चदशः ॥ १५ ॥

---

शोधनादिगणसंग्रहाध्यायादनन्तरं स्नेहाध्यायारम्भः, यतः शोधनं स्नेहस्वेदावन्तरेण न सम्भवति । वक्ष्यति हि,—"स्नेहस्वेदावनभ्यस्य" इत्यादि । तस्मात् स्नेहस्वेदाध्याययोरारम्भो युक्त इत्याह,—अथात इति । स्नेहस्य सर्पिरादेर्विधिः स्नेहविधिस्तं व्याख्यास्यामः । शेषं पूर्ववद् योज्यम् ॥ १ ॥

गुरुशीतेति । गुर्वादिगुणयुक्तं यद्द्रव्यं तत् स्नेहनं भवति । विपरीतमतो यल्लघूष्ण-स्थिर-रूक्ष-तीक्ष्ण-स्थूल-कठिन-सान्द्र-गुणोपेतं तद् विरूक्षणम् । प्रायोग्रहणं विरूक्षणे स्नेहने च योज्यम् । तथाच, लघ्वपि सार्षपं तैलं छागञ्च दुग्धं, तथा विष्किरप्रतुदमृगाख्यं वर्गत्रयं स्नेहनं भवति । तथोष्णमपि मत्स्यमहिषमांसं स्नेहनं भवति । एवं रूक्षणेऽपि वेद्यम् । तथाच यवो गुरुशीतसरादिगुणयुक्तोऽपि विरूक्षणस्तथा राजमाषोऽपि । स्नेहने प्रकृतेऽपि विरूक्षणोपन्यासोऽन्वयव्यतिरेकेण सुतरां स्नेहस्य तारतम्यप्रतिपादनार्थः ॥ २ ॥

सर्पिरिति । स्नेहेषु क्षीरानूपामिषादिषु मध्ये सर्पिरादयश्चत्वारः स्नेहाः प्रकर्षेण वराः, आशु स्वकार्यकरणात् । तत्रापि च तेष्वपि चतुर्षु मध्ये सर्पिरुत्तमं, संस्कारस्यानुवर्त्तनात् । ननु यदि संस्कारमनुरुध्यते सर्पिस्तदानीं मरिचचित्रकादिद्रव्यादिभिः

पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ।
घृतात्तैलं गुरु वसा तैलान् मज्जा ततोऽपि च ॥ ४ ॥
द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥ ५ ॥
स्वेद्य-संशोध्य-मद्यस्त्री-व्यायामासक्त-चिन्तकाः ।

---

संस्कृतस्य घृतस्य शैत्यादिगुणविपर्यासः प्राप्तः । न चेदं दृष्टम्, यदस्य शैत्यादयो गुणा विनश्यन्त्यौष्ण्यादयश्चोत्पद्यन्त इति । अत्रोच्यते, अनुशब्दोऽत्र सहार्थे, अनेकार्थत्वान्निपातानाम् । तेनायमर्थः, सर्पिषो गुणाः संस्कारगुणैः सह वर्त्तन्ते नतु तैलादीनाम् । तैलवसामज्जानो हि संस्कारवशात् स्वगुणांस्त्यजन्ति । अत्र चोदाहरणं चन्दनाद्यं तैलम् । अतो द्रव्यगुणान्तरैरनभिभूतगुणत्वात् सर्पिष इतरेषां तैलादीनां द्रव्यैरभिभूतगुणत्वादुत्तमत्वम् । अतएव च वातपित्तज्वरादिषु विकारेषु घृतसाध्येषु भेषजं तैलं नेष्टं, अनिष्टसम्पादनात् । तैलसाध्येषु तु विकारेषु तदुपशान्त्यर्थं तथाविधद्रव्यसंस्कृतं घृतमपीष्टम् ; तद्धि न तथानिष्टहेतुः । तस्मात् सर्वस्नेहेभ्यः सर्पिरेवोत्तमम् । संस्कारस्यानुवर्त्तनादिति न्यायात् न्याय्यमेव, माधुर्यादिहेतोश्च ॥ ३ ॥

पित्तघ्ना इति । यो यः पूर्वो यथापूर्वं यो य उत्तरो यथोत्तरमिति यथासादृश्ये इत्यव्ययीभावः । उत्तरमपेक्ष्य पूर्वः पूर्वं चापेक्ष्योत्तरः ; तेन चतुर्णां स्नेहानां यथाविहितानां सर्पिरादीनां त्रय एव स्नेहा वसामज्जसर्पिःसंज्ञका यथापूर्वत्वेन सम्बध्यन्ते, न तु तैलाख्यः स्नेहस्तस्य पूर्वत्वाभावात् । नह्यन्योऽस्मात् कश्चिदुत्तरोऽस्ति यदपेक्षयैष पूर्वत्वमात्मन आसादयेत् ; तस्मान्नास्ति पूर्वत्वसम्बन्धस्तैलस्य ; तथा चतुर्णां स्नेहानां त्रय एव स्नेहा मज्जवसातैलाख्या यथोत्तरत्वेनाभिसम्बध्यन्ते, न सर्पिःसंज्ञकः स्नेह उत्तरत्वाभावात् । नह्यन्यः कश्चिदस्य पूर्वो विद्यते, यदपेक्षयैवोत्तरत्वमात्मन आसादयतीत्युक्तम् । तदेवं यथापूर्वं पित्तघ्नत्वं वसामज्जसर्पिषां सामान्येनोक्तम् । विशेषेण च वसा पित्तघ्नी मज्जा पित्तघ्नतरः सर्पिः पित्तघ्नतममित्यर्थः । इतरघ्ना इति । इतरौ वातकफौ पित्तापेक्षया तौ घ्नन्ति पराकुर्वन्तीतीतरघ्नाः । यथोत्तरं त्रयः स्नेहा मज्जवसातैलाख्या वातश्लेष्मघ्नाः ; तेन मज्जा वातश्लेष्मघ्नी वसा वातश्लेष्मघ्नतरा तैलं वातश्लेष्मघ्नतममिति प्रकृतम् । अन्ये त्वेवं व्याचक्षते, श्लेष्मणि स्नेहनिषेधादितरघ्ना इति सामान्योक्तावपि वातघ्ना इति गम्यते । अथवा द्रव्यान्तरसंस्कृतसर्पिराद्यपेक्षया कफस्यापीतरशब्देन ग्रहणमिति । घृतादिति । घृताद् गुरुणः सकाशात्तैलं गुरुतरमित्यर्थः । वसा तु तैलाद् गुरुतरा, ततोऽप्यतिशयेन मज्जा गुरुतमः ॥ ४ ॥

इदानीं यमकस्नेहस्त्रिवृतस्नेहो महास्नेहो इति तत्र तत्रोच्यते ; न च ते ज्ञायन्त इत्याह,—द्वाभ्यामिति । द्वाभ्यां स्नेहाभ्यां यमको नाम्ना स्नेहः । यथा, सर्पिर्वसाभ्यां सर्पिस्तैलाभ्यां सर्पिर्मज्जभ्यामित्यादि । एवं त्रिभिः स्नेहैस्त्रिवृतश्चतुर्भिर्महास्नेहः, उच्यत इति शेषः ॥ ५ ॥

सम्प्रति स्नेह्यान् निरूपयति,—स्वेद्येति । स्वेद्यादयः स्नेह्याः स्नेहार्हाः, न त्वस्नेहितः स्वेद्य इत्यर्थः । एवं योऽपि शोध्यः सोऽपि पूर्व स्नेह्यः । स्वेदार्हा स्वेद्याः,

वृद्धबालाबलकृशा रूक्षाः क्षीणास्त्ररेतसः ॥ ६ ॥
वातार्त्तस्यन्दतिमिर-दारुणप्रतिबोधिनः ।
स्नेह्या न त्वतिमन्दाग्नि-तीक्ष्णाग्निस्थूलदुर्बलाः ॥ ७ ॥
ऊरुस्तम्भातिसाराम-गलरोगगरोदरैः ।
मूर्च्छा-च्छर्द्यरुचि-श्लेष्म-तृष्णामद्यैश्च पीड़िताः ।
अपप्रसूता युक्ते च नस्येर बस्तौ विरेचने ॥ ८ ॥
तत्र धीस्मृतिमेधाग्नि-काङ्क्षिणां शस्यते घृतम् ।
ग्रन्थि-नाड़ी-कृमि-श्लेष्ममेदोमारुतरोगिषु ॥ ९ ॥
तैलं लाघवदार्ढ्यार्थि-क्रूरकोष्ठेषु देहिषु ।
वाताऽध्वातप-भार-स्त्री-व्यायाम-क्षीणधातुषु ।
रूक्ष-क्लेशक्षमात्यग्नि-वातावृतपथेषु च ॥ १० ॥
शेषौ वसा तु सन्ध्यस्थि-मर्म्मकोष्ठरुजासु च ।
तथा दग्धाऽऽहत-भ्रष्ट-योनिकर्णशिरोरुजि ॥ ११ ॥

---

अर्हार्थे कृत्यप्रत्ययोऽत्र ण्यः । एवं संशोध्याः शोधनार्हाः । मद्यासक्तस्त्रीसक्तव्यायाम-सक्ताश्च, तथा येऽपि चिन्तकाः, तथा वृद्धा वाला अवला अल्पबला इत्यर्थः, तथा कृशा रूक्षाः क्षीणरुधिराः क्षीणशुक्राश्च । वातार्त्ता वातपीड़िताः । स्यन्दादिषु प्रत्येकमिन् योज्यः । स्यन्दोऽभिस्यन्दः ; तिमिरोऽक्षिरोगः ; दारुणप्रतिबोधिनः कृच्छ्रोन्मीलिन इत्यर्थः । एते स्नेह्याः स्नेहार्हाः । अतिमन्दाग्न्यादयो न स्नेह्याः । अतिशब्दो यावद्-दुर्बलेषु प्रत्येकं योज्यः ; तेनातिदुर्बला न स्नेह्या इत्यर्थः । अतएवाल्पबलाः स्नेह्या नत्वतिदुर्बला इति न पूर्वापरविरोधः । अतितीक्ष्णाग्नेः स्नेहनादत्यग्निवृद्धिः । अति-स्थूलस्य चाग्निभेदसोर्वृद्धिः । अतिदुर्बलस्य च जरणाशक्तेः स्नेहस्य व्यापत् । ऊरुस्त-म्भादिभि र्यावन् मद्येन च पीड़िता न स्नेह्याः । अत्र शोधनप्रसङ्गे तु स्नेहनं विना न शोधनमिति यावत् । अपप्रसूता स्रुतगर्भा न स्नेह्येतिलिङ्गवचनविपरिणामः । प्रयुक्त च नस्यादिकर्म्मणि सर्व एव न स्नेह्याः ॥ ६—८ ॥

साम्प्रतं चतुर्णां स्नेहानां मध्ये यो येभ्यो हितस्तं दर्शयन्नाह,—तत्रेति । तत्र तेषु स्नेहेषु मध्ये धीस्मृत्याद्यभिलाषिणां घृतं शस्यते यावदग्निकाङ्क्षिणाम् । अन्ये तु मेधादि-काङ्क्षिणामिति पठन्ति । आदिशब्देन स्वरायुर्वर्णादिपरिग्रहः । ग्रन्थीत्यादि । तैलं ग्रन्थ्यादिरोगिषु शस्यते । लाघवदार्ढ्यार्थिषु क्रूरकोष्ठेषु प्राणिषु च शस्यते । वातेत्यादि । वातादीनां क्षीणधातूनां प्रत्येकं सम्बन्धः । वातक्षीणधातुषु एवमातपक्षीणधातुष्वित्यादि । शेषौ घृततैलाभ्यामुक्ताभ्यामन्यौ वसामज्जानौ शस्येते, तथा रूक्षेषु क्लेशसहेषु । अत्यग्निषु

तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे ॥ १२ ॥
ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ॥ १३ ॥
तैलं त्वरायां शीतेऽपि घर्मेऽपि च घृतं निशि ।
निश्येव पित्ते पवने संसर्गे पित्तवत्यपि ॥ १४ ॥
निश्यन्यथा वातकफाद् रोगाः स्युः पित्ततो दिवा ॥१५॥

---

बलवदग्निष्विति द्रष्टव्यम्; अन्यथा अत्यग्निषु स्नेहनिषेधात् पूर्वापरविरोधः स्यात्; अथवा, अत्यग्निष्वपि वसामज्जानावनुजज्ञे । अपवादवाक्यत्वादस्येति व्याख्येयम्। वातेनावृताः पन्थानश्छिद्राख्या येषां तेषु च शस्येते शेषौ । वसायास्त्वन्यदपि विशेषान्तरमाह,—वसेति । तुर्विशेषे । चः समुच्चये । रुजाशब्दः प्रत्येकं सम्बध्यते; सन्धिरुजास्थिरुजास्वित्यादिषु, तथा दग्धरुजि आहतरुजि, तथा भ्रष्टयोनिरुजीत्येवं सम्बन्धः कार्यः ॥ ९—११ ॥

इदानीं कस्मिन् काले कस्य स्नेहस्योपयोगः शस्त इति दर्शयन्नाह,—तैलमिति । तैलं प्रावृषि शस्यते इति सम्बन्धः । एवमुत्तरत्रापि योजनीयम् । स्वस्थस्य स्नेहनाय सर्वत्र स्नेहस्य प्रसङ्गे नियमोऽयं क्रियते । तैलं प्रावृष्येव वर्षान्त एव सर्पिर्वसामज्जानौ माधव एवेति ॥ १२ ॥

ननु वर्षासु तैलं वर्षान्ते सर्पिर्वसामज्जानौ माधव इति योऽयं नियमः स किञ्चिदपेक्ष्य वर्त्तते, आहोस्विदनपेक्ष्येत्यस्मिन् पर्यनुयोग इदमाह,—ऋताविति । साधारणे ऋतौ श्रावणादौ संशोधनात् पूर्वं स्नेहनाय स्नेहसेवादिकः शस्तः, तथा अह्नि वासरे न निशि, तथा विमले रवौ जलदनीहारादिनाऽनाच्छादिते खरांशौ । स्नेह इति सामान्यशब्दप्रयोगात् सर्वस्नेहः सर्पिरादिश्चतुष्प्रकारो गृह्यते । तैलमिति । त्वरायां सत्यां व्याधिक्रियां प्रति प्राप्ते काले स्नेहयोग्यतायां सत्याम् । शीते हेमन्तशिशिराख्ये काले तैलं संशोधनात् पूर्वं स्नेहनार्थं शस्तं नान्यस्नेहः । अपिशब्दान्न केवलं वर्षासु अवर्षासु च शस्त इत्यर्थः । सर्वस्य स्नेहस्याह्न्युपयोगाद् रात्रावप्रयोगः प्राप्त इत्याह,—घर्मे इति । न केवलं शरदि घृतं प्रयुञ्जीत, यावद् घर्मेऽपि निश्युपयुञ्जीत । न च घर्म एव निश्युपयुञ्जीत, यावत् पित्ते कुपितपित्तजे वा विकारे, तथा पवने कुपिते तज्जे वा विकारे स्नेहसाध्ये घर्मे घृतं निश्युपयुञ्जीत, न दिवा न च तैलं वसामज्जानौ वा, तथा पित्तवति पित्ताधिके संसर्गे वातपित्ताख्ये श्लेष्मपित्ताख्ये कुपिते तज्जे वा विकारे स्नेहसाध्ये घर्मे घृतं निश्युपयुञ्जीत । पित्ते पवन इत्येतद् दोषविकारोभयोपलक्षणार्थं ज्ञेयम् । पित्तवतीति भूम्नि मतुप् । निशीति । अन्यथोक्तप्रकारादपरेण प्रकारेण यथा शीतकाले निशि घृतोपयोगाद् वातकफाद्धेतो रोगा भवेयुः; तथा दिवा घर्मे काले तैलोपयोगात् पित्ततः पित्ताद् रोगाः स्युः । वसामज्ज्ञोस्त्वनिश्चितस्वरूपत्वान्नोष्णकाले नाति शीतकाले त्वरायां सत्यामुपयोगस्तत्कारेण दर्शितः । तथा चोक्तम्,—"यथा सत्वन्तु शैत्योष्णे वसामज्ज्ञोऽस्तु निर्दिशेत्" इति ॥ १३—१५ ॥

युक्त्यावचारयेत् स्नेहं भक्ष्याद्यन्नेन बस्तिभिः।
नस्याभ्यञ्जनगण्डूष-मूर्धकर्णाक्षितर्पणैः १६ ॥
रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणाः।
स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात् स्मृताः ॥ १७ ॥
यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा।
स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात् ॥ १८ ॥

---

कथं स्नेह उपयोज्य इत्याह,—युक्त्येति। युक्तिर्योग उपायलक्षणः। युक्त्या मात्रा-काल-क्रिया-भूमि-देह-दोष-स्वभावया स्नेहं सर्पिरादिकं अवचारयेदुपयुञ्जीत। केन सहेत्याह, भक्ष्याद्यन्नेन। आदिशब्देन भोज्य-लेह्य-पेयस्य चिविधस्याप्यन्नस्य ग्रहणम्; तथा वस्तिभिर्नस्येनाभ्यञ्जनेन गण्डूषेण च स्नेहमवचारयेत्। मूर्धादीनां तर्पणशब्देन प्रत्येकं सम्बन्धः। तेन मूर्द्धतर्पणेन शिरोवस्त्याख्येन, तथा कर्णतर्पणेन कर्णपूरणाख्येन, तथाऽक्षितर्पणेन तर्पणपुटपाकविध्युक्तेन। भक्ष्यं शशाङ्ककिरणादि तेन भक्ष्येण सह। आदिग्रहणादोदनादयो मुनुप्रक्ता गृह्यन्ते। तथा च मुनिः;—"ओदनश्च विलेपी च रसो मांसं पयो दधि। यवागूः सूपशाकौ च यूषः काम्बलिकः खलः॥ सक्तवस्तिलपिष्टञ्च मद्यं लाजास्तथैव च। भक्ष्यमभ्यञ्जनं बस्तिस्तथैवोत्तरबस्तयः:" इत्यादि। बस्तिभिरिति बहुवचननिर्देशो बस्तित्रयग्रहणार्थः, तेन निरूहोऽन्वासनं बस्तिरुत्तर इति ॥ १६ ॥

रसेत्यादि। रसभेदश्च एककत्वञ्च ताभ्यां रसभेदैककत्वाभ्यां स्नेहस्यावचार्यमाणस्य चतुःषष्टिर्विचारणा भवन्ति। रसभेदैर्नैकैकहीनानित्यादिग्रन्थनिर्दिष्टेन त्रिषष्टि-सङ्ख्यावच्छिन्नेन सहोपयुक्तस्य स्नेहस्य, तथैककत्वेनासहायेन केवलेन स्नेहेन सहास्य चतुःषष्टिर्विचारणाः स्नेहप्रयोगकल्पना या एता भक्ष्याद्यन्नेन, तथा रसभेदेन मूर्ध-कर्णाक्षितर्पणेन च या एताः क्रमात् यथाक्रमं निर्दिष्टास्ताः कल्पनाः स्नेहस्यान्याभि-भूतत्वादन्येन भक्ष्यादिना बहुना, तथा रसभेदेन सहोपयुक्तस्याभिभूतत्वात्, तथा अल्प-त्वादल्पोपयोगित्वात् मूर्धाक्षितर्पणादौ पानद्रवप्रभूतस्यैवावचारयितुमशक्यत्वाच्च विचा-रणाः स्मृताः, आयुर्वेदस्य कर्त्तृभिरिति शेषः ॥ १७ ॥

यथोक्तेति। स्नेहस्य|विचारणासंज्ञात्वे यथानिर्दिष्टो हेतुस्तस्य यथोक्तस्य हेतोर-भावादविद्यमानहेतुत्वाद् योऽच्छपेयः स्नेहः केवल एव न सा विचारणा केवलोपयो-गित्वाद् बहूपयोगित्वाच्चेत्यर्थः। नन्विह केवलः स्नेहो न विचारणेत्युच्यते। प्राक् केवलस्यैव स्नेहस्य बस्त्यादुपयोगविचारणेत्यभ्यधायि तदेतत् पूर्वापरव्याहतमिव मन्या-महे। नैतदस्ति, अच्छपेय इत्यस्य ह्ययमर्थः। अच्छः केवलो यः स्नेहः पीयते सा विचारणा न भवति। मूर्द्धादितर्पणादिना तु केवलस्य स्नेहस्य य उपयोगः सा च विचारणेति। स्नेहस्येति। सोऽच्छपेयाख्यः कल्पः प्रयोगः स्नेहस्य श्रेष्ठः प्रशस्य-तमः। कुत इत्याह,—स्नेहकर्माशुसाधनात्; स्नेहकर्म्मणां तर्पणमार्दवादीनां शीघ्रं सम्पादनात् ॥ १८ ॥

द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात्।
ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम्।
कल्पयेद् वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ॥ १९ ॥
ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः ॥ २० ॥
शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥ २१ ॥

---

अधुना स्नेहस्य त्रिविधमात्रालक्षणमधिकृत्याह,—द्वाभ्यामिति। द्वाभ्यां यामाभ्यां या स्नेहस्य मात्रा प्रयुक्ता जाठरानलवशाज्जरां याति सा तस्य ह्रस्वा मात्रा। चतुर्भिर्यामैर्या जीर्यति सा तस्य मध्यमा मात्रा। अष्टभिर्यामैर्या जीर्यति सोत्तमा मात्रा। क्रमाद्, यथाक्रमं ता ह्रस्वमध्यमोत्तमा मात्रास्ताभ्यश्च तिसृभ्यो मात्राभ्यो ह्रसीयसीमति शयेन ह्रस्वां कल्पयेत्, वैद्य इति शेषः। ह्रस्वमध्यमोत्तमा इति निर्देशे द्व्यापोरित्यादिना ह्रस्वः। ह्रस्वा मात्रा यामद्वयजरणलक्षणा ततोऽप्यर्वाक् कालेन या जरां याति सा ह्रसीयसीति। दोषादीन् दोष-भेषज-देश-काल-बल-शरीराऽऽहार-सत्व-सात्म्य-प्रकृतीर्वीक्ष्याकलय्य प्राक् पूर्वमेव अज्ञातकोष्ठे पुरुषे उत्तममात्राविषये ह्रसीयसीं कल्पयेत्। ततो ह्रस्वामनन्तरं मध्यमामनन्तरमुत्तमाम्। एवं मध्यममात्राविषये ह्रसीयसीं ह्रस्वमात्राविषयेऽपि ह्रसीयसीं प्राक् कल्पयेत्, अति प्रत्यपायभयात्। एवकारोऽवधारणे। तुशब्दो यथोत्तरमिति क्रमनिर्देशार्थः; संग्रहेप्युक्तम्,—"अज्ञातकोष्ठे हि बहु कुर्य्याज्जीवितसंशयम्" इति। इयं ह्रस्वेयं ह्रस्वा इयमनयोरतिशयेन ह्रस्वा ह्रसीयसीति ईयसुनः स्थूलदूरेत्यादिना लोपः। अन्यं स्तु पलद्वयपलचतुष्टयपलषट्कसङ्ख्यावच्छिन्ना मात्रा उक्ताः। न चैतद्, युज्यते, यतो जठरानलशक्तिमनपेक्ष्य स्नेहमात्रा प्रयुज्यमानाऽनर्थायैव। अतोऽस्माभिः पलद्वयादिसङ्ख्यावच्छिन्ना नोक्ता। मुनेरपि नैतन् मतम्। तद् यथो हि,—"अहोरात्रमहः कृत्स्नमर्द्धाहञ्च प्रतीक्ष्यते। प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति" इति ॥ १९ ॥

अधुना शोधनशमनलक्षणभेदात् त्रिविधस्य स्नेहस्य कालमात्रालक्षणमधिकृत्याह,—ह्यस्तन इति। ह्यस्तनेऽन्ने आहारे जीर्ण एव जीर्णमात्र एव न त्वन्नाभिलाषे सति, शुद्धये शोधनार्थं बहुरुत्तमया मात्रया स्नेहोऽच्छः केवलः पेयत्वेन शस्यते। सञ्जातबुभुक्षेण तु पीतो जाठरानलस्य दीप्तत्वाच्छोधनकार्यमकुर्वाणस्तद्, योग्यतां चानुत्पादयन्नाश्वेव जरामुपैति। वमनमपि बुभुक्षितस्य न सम्पद्यते कफापचितेः पूर्वोक्ताद्धेतोः। तस्माद् युक्तमुक्तं ह्यस्तने जीर्ण एवान्न इति ॥ २० ॥

शमन इति। शमनो यो रोगस्य शमनायोपयुज्यते स्नेहः स क्षुद्वतो जातबुभुक्षस्य शस्यते, जातायां बुभुक्षायां न जीर्णमात्र एवान्ने शोधन इव। शमनो हि स्नेहो यत्र तत्रस्थं दोषं कुपितं सर्वशरीरव्यापित्वात् शमयति। यदि पुनर्जीर्णमात्र एवान्ने स्नेहोऽयमबुभुक्षितस्यैवोपयुज्यते तदानीं स्रोतसां कफाद्युपलेपानिवर्त्तनात् तत्संपृक्तोऽसौ स्नेहो न सर्व शरीरं व्याप्नुते, अव्याप्नुवंश्च न दोषं शमयेत्। तस्मात् क्षुद्वते एवायं

बृंहणो रससद्याद्यः सभक्तोऽल्पो हितः स च ।
बालवृद्धपिपासार्त-स्नेहद्विण्मद्यशीलिषु ॥ २२ ॥
स्त्रीस्नेहनित्य-मन्दाग्नि-सुखित-क्लेशभीरुषु ।
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥ २३ ॥
प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्द्ध्वदेहजान् ।
व्याधीन् जयेद् बलं कुर्यादङ्गानाञ्च यथाक्रमम् ॥ २४ ॥
वायुष्णमच्छेऽनुपिवेत् स्नेहे तत् सुखपक्तये ।
आस्योपलेपशुद्ध्यै च तौवरारुष्करे न तु ॥ २५ ॥

---

शस्यते। स च मध्यममात्रया अनन्नः केवल एव भक्त्यादिना विचारणा आहारेण रहितः। अच्छ एव पेय इत्यर्थः। अत्र चोत्तमया मात्रया स्नेहपानदिनानन्तरं पथ्यं कार्यं पुनः स्नेहप्रयोगः पुनरन्यस्मिन्नहनि पथ्यं कार्यम्। मध्यममात्रया स्नेहपाने तु लघुभोजिनो न याममात्रेऽन्नाकाङ्क्षा भवति। तदा च स्नेहोपयोगे रात्र्यारम्भे रात्रियामार्द्धे गते वा रसकौदनप्रायं भोजनं भोज्यं मात्रयेव, ग्रन्थकारो हि शमने स्वल्पभोजनमेवानुजज्ञे। वक्ष्यति हि,—"उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत्" इति। सुश्रुते चोक्तम्,—"परिषिच्याङ्गिरुष्णाभिर्जीर्णस्नेहं ततः एरं। यवागूं पाययेदुष्णामक्लिन्नामल्पतण्डुलाम्। पेयो यूषो रसो वा स्यादक्तः सौरभायुतः। क्तो वाप्यल्पसर्पिष्को विलेपी वा विधीयते" इति ॥ २१ ॥

बृंहण इति। बृंहणः स्नेहो रससद्याद्यैः सह शस्यते। "रस इत्यविशेषोक्तौ ज्ञेयो मांसभवो रसः" इति तन्त्रान्तरोक्त्या रसशब्देन मांसरसोऽत्र बोद्धव्यः। आदिशब्देन क्षीरखण्डादि द्रवरूपस्य ग्रहणम्, तथा सह भक्तेनौदनेनासौ वर्त्तत इति सभक्तः शस्यते। एष च स्नेहो ह्रसीयसीतोऽपि मात्रातोऽल्पः। स च स्नेहो बालादिषु हितः। बालादीनामितरेतरद्वन्द्वः। पिपासार्त्तास्तृट्पीड़िताः। स्नेहद्विषो ये स्वभावेनैव स्नेहं द्विषन्ति। स्त्रीस्नेहयोर्नित्यशब्देन सम्बन्धः स्त्रीनित्येषु स्नेहनित्येषु चेत्यर्थः काले चोष्णे ग्रीष्मादौ कृशेषु नरेषु च हितः ॥ २२—२३ ॥

स चोपयुक्तः किं करोतीत्याह,—प्रागिति। प्राक् च मध्यं चोत्तरञ्च तत् प्राङ्मध्योत्तरं भक्तं यस्मिन् स्नेहे स प्राङ्मध्योत्तरभक्तः; तेनायमर्थः, भक्तस्यादावुपयुक्तोऽसौ स्नेहोऽधोदेहजान् व्याधीन् जयेत्। मध्ये उपयुक्तो मध्यदेहजान् भक्तस्योपर्युपयुक्त ऊर्द्ध्वदेहजानिति यथाक्रमम्; तथा अङ्गानां शरीरावयवानामधोमध्योर्द्ध्वसंज्ञकानां बलं कुर्यात्। इदं चोक्तम्,—"मारुतेऽभ्यधिके सर्पिः सदा सलवणं हितम्। केवलं चाधिके पित्ते कफे सव्योषणं तथा" इति ॥ २४ ॥

वारीति। अच्छे पेये स्नेहे उत्तममध्यमह्रस्वमात्रोपयोजिते अनुपश्चादुष्णं वारि पिवेत्। किमर्थम्? तत्सुखपक्तये तस्य स्नेहस्य सुखपक्तिः सुखेन पाकस्तदर्थम्, तथा आस्योपलेपशुद्ध्यै स्नेहलिप्तस्य मुखस्य शुद्धिनिमित्तम्। तुवरतैले भल्लातकतैले

जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ।
तेनोद्गारविशुद्धिः स्यात् ततश्च लघुता रुचिः ॥ २६ ॥ *
भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ २७ ॥
उष्णोदकोपचारी स्याद् ब्रह्मचारी क्षपाशयः ।
न वेगरोधी व्यायाम-क्रोध-शोक-हिमातपान् ॥ २८ ॥
प्रवात-यान-यानाध्व-भाष्याभ्यासन-संस्थितीः ।
नोचात्युच्चोपधानाहः-स्वप्नधूमरजांसि च ॥ २९ ॥
यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ।
सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥ ३० ॥

---

वाक्यपेयेऽप्युष्णोदकं न पिबेत्; तयोरल्पुष्णवीर्यत्वादिति भावः। तुवरस्यायं विकारः स्नेहस्तौवरः; तस्य विकार इत्यण्। एवमारुष्करे च। चिरपीते च स्नेहे जीर्णाजीर्ण प्रति संशये सति भूयोऽप्युष्णं जलं पिबेत्। अनुपानापेक्षं पुनर्ग्रहणं न वीप्सार्थम्। तेनोष्णोदकपानेनोद्गारस्य विशुद्धिर्भवेत्, ततश्च जीर्णाजीर्णशङ्कातोऽधिकमङ्गलाघवं रुचिश्च स्नेहस्य पातुः स्यात्। संग्रहेऽप्यन्यदप्युक्तम्। यथा,—"ततो गुरुप्रावरणो निवाते शयने स्थितः। जरणान्तं प्रतीक्षेत तृष्यन्नुष्णाल्पवारिपः॥ शिरोरुग्-भ्रम-निष्ठीव-मूर्च्छा-दाहारुचिक्लमैः। जानीयाद् भिषजं जीर्णाजीर्णं तच्छान्तिलाघवात्। अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिः" इति ॥ २५ । २६ ॥

भोज्य इति। भोज्यो भोजयितव्यो नरः। किंतत्? अन्नम्। कीदृशम्? द्रवोष्णम्। अत्र चोभयथा समासः। द्रवेण मुद्गयूषादिना सहोष्णमन्नं द्रवोष्णम्, तथा केवलं द्रवञ्च तदुष्णञ्च द्रवोष्णं पेयादिकं केवलमेवेति, तथा अनभिष्यन्दि न कफकृत्, तथा नातिस्निग्धमर्थादीषत् स्निग्धम्, तथा असङ्करमसङ्कीर्णमपथ्येनामिश्रितमित्यर्थः। कः पुरुषः किं कुर्वन् ईदृशमन्नं मात्रया भोजयितव्य इत्याह,—श्वः स्नेहं पास्यन् पातुमिच्छन्, तथा तस्मिन्नेव दिने स्नेहं पिबेत्, तथा पीतवानपि यः स्नेहम्। अपिः समुच्चये। ननु मात्राशी सर्वकालं स्यादिति प्रागुक्तमेव तत् किमिह पुनर्मात्राग्रहणेन? ब्रूमः, मात्राशब्दस्तत्र प्रमाणार्थः, इह स्वल्पार्थः। तेनायमर्थः। यावदन्नमस्य सम्यग् यथाकालं परिणमति तावताप्यन्नादनेन स्वल्पं भोज्यमिति; तथा असौ स्नेहस्य पाता उष्णोदकोपचारी स्यात्। उष्णोदकमुपचरितुं सेवितुं शीलमस्य स एवम्, तथा ब्रह्मचारी ललनासङ्गरहितः। क्षपाशय इत्यधिकरणे शेतेरित्यच्। क्षपाशय इत्यनेन दिवास्वप्नस्य रात्रिजागरस्य च निषेधः। स्नेहं पिबति यावन्त्यहानि

---

* सात्मीभूतो विकुरुते न स्नानामुदीरणम्। इत्यधिकः पाठः।

उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ॥ ३१ ॥
त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत्।
सम्यक् स्निग्धोऽथवा यावदतः सात्म्योभवेत् परम् ॥ ३२ ॥
वातानुलोम्यं दीप्तोऽग्निर्वर्च्चः स्निग्धमसंहतम्।
स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्य्ययः।
अतिस्निग्धे तु पाण्डुत्वं घ्राण-वक्त्र-गुद-स्रवाः ॥ ३३ ॥
अमात्रयाऽहितोऽकाले मिथ्याहारविहारतः।
स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः।
कण्डू-कुष्ठ-ज्वरोत्क्लेश-शूलानाहभ्रमादिकान् ॥ ३४ ॥

---

तावन्त्यन्यान्यपि स्नेहपानरहितानि व्यायामादीं स्त्यजेत्। सवकर्म्मसु वमनविरेचनादिष्वयमुष्णोदकोपचारीत्यादिक्रमो विधिरित्यर्थः। यानादिष्वहःस्वप्नोऽजीर्णवर्ज्यो नायं विधिरिति प्रदर्शनार्थं प्रायोग्रहणम्। व्याधिचोरेषु च प्रायोऽयमेव विधिः। अवाप्यतीसारादिष्वहःस्वप्नादीनामनुज्ञानात् प्रायोग्रहणम् ॥ २७—३० ॥

उपचार इति। तुर्व्यतिरेके। शमने स्नेहे तूपयुक्ते उपचारो भोजनादिविधिर्विरिक्तवत् कार्य्यः। यथा विरिक्ते पेयादिकः क्रमस्तथास्मिन्नपीत्यर्थः ॥ ३१ ॥

त्र्यहमिति। मृदौ कोष्ठे सति पुरुषस्त्रिदिनमच्छं स्नेहं पिबेत्। क्रूरकोष्ठे सप्ताहम्, मध्यकोष्ठस्तु षड्रात्रम्। मध्यकोष्ठस्तत एव लक्षणादधिगम्यते। मध्यकोष्ठे च स्नेहगो दोषः संग्रहे कथितः। यथा, चत्वार्यहानि पञ्च वा स्नेहं पिबेदिति। यदि च त्र्यहेण सम्यक् स्निग्धलक्षणं न स्यात् ततश्चतुष्पञ्चरात्रमपि स्नेहं पिबेत्। मध्यकोष्ठस्तु षड्रात्रं पिबेदित्याह,—सम्यक्स्निग्धोऽथवा यावदित्यादि। अथवा नेष नियमः सम्यक्स्निग्धलक्षणोत्पत्तिरेव नियमः, अतः सप्ताहादपूर्द्ध्वमच्छस्नेहः पेयो यावत् स्निग्धलक्षणः स्यात्। अतःपरं स्नेहः सात्म्योभवेत्, सात्म्योभूते च स्नेहे यो दोषः स संग्रहे कथितः। यथा,—"सात्म्योभूतो हि कुरुते न मलानामुदीरणम्। अतियोगेन वा व्याधीन् यथाम्भोद्योतयोजनात्" इति। यदि तु सप्ताहेनापि स्नेहलक्षणं नोत्पद्यते तदा दिनमेकं विश्रमय्य पुनः स्नेहो योज्य इति सद्वैद्याः ॥ ३२ ॥

वातेत्यादि। सम्यक्स्निग्धे पुरुषे तु वातानुलोम्यादि क्लमान्तं लक्षणं भवति। वर्च्चः शकृत् स्निग्धं, तथा असंहतं शिथिलम्। रूक्षेऽस्निग्धे विपर्य्ययो वैपरीत्यम्। अतिस्निग्धे तु स्नेहस्यातियोजनात् पुनः पाण्डुत्वादयो भवन्ति। स्रवशब्दस्य घ्राणादिभिः प्रत्येकं समासः ॥ ३३ ॥

अमात्रयेति। अमात्रः पीतः स्नेहः सर्पिरादिः शोफादीन् करोति। आदिशब्देन तु बलक्षयजाड्यवाग्ग्रहादयः संगृहीता गृह्यन्ते। अहितो यो यस्य प्रतिषिद्धः स्नेहः, तथा अकाले योष्मादौ पूर्वं प्रतिषिद्धे, तथा मिथ्याहारतो द्रवोष्णमित्यादिविपर्य्ययेण, तथा मिथ्याविहारत उष्णोदकोपचारी स्यादित्यादिविपर्य्ययेण ॥ ३४ ॥

क्षुत्तृष्णोल्लेखन-स्वेद-रूक्ष-पानान्न-भेषजम् ।
तक्रारिष्टं खलोद्दाल-यव-श्यामाक-कोद्रवाः ॥ ३५ ॥
पिप्पली-त्रिफला-क्षौद्र-पथ्या-गोमूत्रगुग्गुलुः ।
यथास्वं प्रतिरोगञ्च स्नेहव्यापदि साधनम् ॥ ३६ ॥
विरूक्षणे लङ्घनवत् कृतातिकृतलक्षणम् ॥ ३७ ॥
स्निग्ध-द्रवोष्णधन्वोत्थ-रसभुक् स्वेदमाचरेत् ।
स्निग्धस्त्र्यहं स्थितः कुर्याद् विरेकं वमनं पुनः ।
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ॥ ३८ ॥
मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।
स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ॥

---

क्षुदिति । स्नेहव्यापदि स्नेहविधिविभ्रंशे सति क्षुत्तृष्णादिसाधनं चिकित्सा । क्षुत्तृष्णानिग्रहौ क्षुत्तृष्णाशब्देनाक्तौ ; उल्लेखनं वमनम् ; रूक्षशब्दस्य पानादिभिस्त्रिभिर्योगः । तक्राणि चारिष्टश्चेत्येवं समासः । खली व्यञ्जनविशेषः प्रागुक्तः ; उद्दालः शालिविशेषः । यथास्वं दोषानुगुण्येन प्रतिरोगं यद् यस्मिन् रोगे स्व स्वे अध्याये उक्तं तदपि साधनम् ॥ ३५ । ३६ ॥

स्नेहव्यापत्साधनस्य विरूक्षणस्वभावत्वात् प्रसङ्गेन विरूक्षणस्य सम्यक्कृतातिकृतलक्षणमाह,—विरूक्षणे इति । विरूक्षणे सम्यगुत्पन्ने, तथा अत्यर्थोत्पन्ने च लङ्घनवत् कृतातिकृतलक्षणं ज्ञेयम् । कृतं चातिकृतञ्च कृतातिकृते तयोर्लक्षणं कृतातिकृतलक्षणम् । कृतशब्देन सम्यक् कृतमुच्यते । विरूक्षणातियोगलक्षणन्तु स्नेहातियोगलक्षणेनैवोक्तम् । तत्र सम्यक्कृतस्य लङ्घनस्य यल्लक्षणं विमलेन्द्रियतादि तदेव विरूक्षणे कृते लक्षणं बोध्यम् ; तथा अतिकृते विरूक्षणे अतिलङ्घितस्य लक्षणं कार्श्यादिकं वेद्यम् ॥ ३७ ॥

स्निग्धेत्यादि । स्निग्धश्चासौ द्रवोष्णधन्वोत्थरसश्च तं भुङ्क्ते यः स स्निग्धद्रवोष्णधन्वोत्थरसभुक् । धन्वोत्थरसो जाङ्गलदेशमांससमुद्भूतो रसः । मांसरसस्य स्वभावत एव स्निग्धद्रवत्वात् स्निग्धद्रवग्रहणमधिकयोगायेति वेद्यम् । उष्णमुभयथा वीर्यतोऽग्निसंयोगाच्च । एवम्भूतः पुरुषः पूर्वं स्निग्धोऽनन्तरं स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् दिनत्रयं स्थितः सन् विरेकं कुर्यात् । वमनं पुनरिति । यदा तु स्नेहादनन्तरं वमनमेवोपयुक्तं तदेकाहमनेनैव प्रकारेण स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् स्थितोऽन्यच्च दिनं द्वितीयमहः, कफमुत्क्लेश्य स्थानात् प्रच्याव्यावस्थितो वमनं कुर्यात् । केनोत्क्लेश्य ? तत्करैः कफकरणहेतुभिर्माष-क्षीर-मत्स्य-गुडादिभिः । तत्करैरित्यादि कृत्वो हेत्वादिना हेतौ टः ॥ ३८ ॥

मांसलेति । मांसलत्वादियुक्ताः पुरुषा ये शोध्यत्वेन स्नेहयितुमभीष्टास्तान् पूर्व प्रथमं रूक्षयेत् । ततो रूक्षयित्वाऽनन्तरं संस्नेह्य शोधयेत् । किमेवं स्यादित्याह,—

संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ॥ ३९ ॥
अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ॥ ४० ॥
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत् ॥ ४१ ॥
प्राज्यमांसरसास्तेषु पेया वा स्नेहभर्जिता।
तिलचूर्णश्च सस्नेह-फाणितः कृशरा तथा ॥ ४२ ॥
क्षीरपेया घृताढ्योष्णा दध्नो वा सगुडः सरः।
पेया च पञ्चप्रसृता स्नेहैस्तण्डुलपञ्चमैः।
सप्तैते स्नेहनाः सद्यः स्नेहाश्च लवणोल्बणाः ॥ ४३ ॥
तद्ध्यभिष्यन्द्यरूक्षञ्च सूक्ष्ममुष्णं व्यवायि च ॥ ४४ ॥
गुड़ानूपामिषक्षीर-तिलमाषसुरादधि।
कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥ ४५ ॥
त्रिफला-पिप्पली-पथ्या-गुग्गुल्वादिविपाचितान्।
स्नेहान् यथास्वमेतेषां योजयेदविकारिणः ॥ ४६ ॥

---

एवं स्नेहव्यापन्न जायते। मांसला उपचितमांसाः; मेदुरा मेदस्विनः। अलमिति।
न केवलं स्नेहव्यापदेवं न स्यात्; यावत् स्नेहोऽसात्म्यतां गतः सन् मलान् वातादीन्
पुरीषादींश्च ईरयितुं प्रेरयितुमलं पर्याप्तः। बालेत्यादि। बालादिषु तथा यः
स्नेहविषयः परिहारः शीतोदकादिस्तमसहिष्णुष्वक्षमेषु सद्यःस्नेहाख्याननुद्वेगाननुद्वेज-
कानेतान् योगान् प्रयोजयेत् ॥ ३९—४१ ॥
कांस्तानित्याह,—प्राज्येत्यादि। तेषु बालादिषु प्राज्यमांसरसाः प्रभूतमांसानामेव
रसाः; तथा स्नेहभर्जिता पेया, तथा तिलचूर्णः पललाख्यः सस्नेहफाणितः सर्पिरा-
दिना युक्तः क्षुद्रगुड़ेन च युक्तः, तथा क्षैरेयी वा पेया सर्पिष्मती उष्णा च दधिसरो वा
सगुड़ः। पेया च पञ्च प्रसृता, द्वे पले प्रसृतं विदुः। पञ्च प्रसृतानि यस्यां सा पञ्च-
प्रसृता। केषां पञ्च प्रसृतानीति युक्त्याह,—स्नेहैस्तण्डुलपञ्चमैरिति। सर्पिस्तैलं वसा
मज्जेति चतुर्णां स्नेहानां चत्वारि प्रसृतानि तण्डुलाश्च प्रसृतमित्यर्थः। एते सप्त
पूर्वोक्ताः सद्यः शीघ्रं स्नेहना निष्परिहाराश्च। न केवलमेत एव स्नेहना इत्याह,—
स्नेहाश्च लवणोल्बणाः। सर्पिरादयो लवणाढ्याश्च सद्यःस्नेहनाः ॥ ४२। ४३ ॥
कस्मादित्याह,—तदिति। यस्माल्लवणमभिष्यन्दि स्रोतसां स्रावकमरूक्षत्वादिगुण-
युक्तञ्च, सूक्ष्मं सूक्ष्मस्रोतोगामि, व्यवायि देहमखिलं व्याप्य पाकाय कल्पते। कुष्ठादिषु
स्नेहयोग्यत्वे सति गुड़ादि स्नेहनाय न प्रकल्पयेत् न योजयेत् ॥ ४४। ४५ ॥
तर्हि ते कथं स्नेह्या इत्याह,—त्रिफलेत्यादि। एतेषां कुष्ठादीनां यथास्वमध्यायेषु

क्षीणानां त्वामयैरग्नि-देहसन्धुक्षणक्षमान् ॥ ४७ ॥
दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ।
स्वस्थेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः ॥४८॥

इत्यष्टाङ्गहृदये सूत्रस्थाने षोड़शोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

अथातः स्वेदविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
स्वेदस्तापोपनाहोष्म-द्रवभेदाच्चतुर्विधः ।
तापोऽग्नि-तप्त-वसन-फाल-हस्ततलादिभिः ॥ २ ॥

---

पथ्यत्वेनाभिहितैस्त्रिफलादिभिः पाचितान् साधितानविकारिणः स्नेहान् योजयेत् । कुष्ठादीनां सम्बन्धी यो विकारस्तद्वताम् । तेन कुष्ठिनां शोफिनां मेहिनामित्यर्थोऽवतिष्ठते । क्षीणानामिति । आमयैर्व्याधिभिः क्षीणानां पुंसामग्निदेहसन्धुक्षणक्षमान् स्नेहान् योजयेत् । अग्निश्च देहश्चाग्निदेहौ । सन्धुक्षणाय क्षमाश्च सन्धुक्षणक्षमास्तान्, यथासंख्येनात्र सम्बन्धः । अग्नेः सन्धुक्षणास्तद्दीपका देहस्य क्षमा पुष्ट्यावहाः । अत्र चायं भावः, किल व्याधिभिः क्षीणानां वह्निरपि क्षीणो भवति । अतस्तेषां न केवलं ये पुष्ट्यावहा वह्निमान्द्यमावहन्ति । अथवा वह्निसन्धुक्षणा न पुष्ट्यावहाः स्नेहा उपयोक्तुं युक्ताः किन्तर्हि उभयकारिण एव योक्तुं युक्ता इति ॥ ४६—४७ ॥

दीप्तेति । यः पुमानाभीक्ष्ण्येन स्नेहमुपसेवते स दीप्तान्तराग्नित्वादिगुणयुक्तो भवतीति प्रदिष्टः । सद्वैद्यै रिति शेषः । उपजातिर्वृत्तम् ॥ ४८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां स्नेहविधिरध्यायः षोड़शः ॥ १६ ॥

---

शोधनप्रसङ्गेन स्नेहोपयोगः, स्निग्धे च देहे दोषाणां मार्दवीकरणाय स्वेदस्य प्रसङ्गः, अतस्तत्परिज्ञानार्थोऽयमध्याय आरभ्यते,—अथात इति । स्वेदनं स्वेदस्तस्य विधिर्विधानं व्याख्यास्यामः । शेषं पूर्ववत् ॥ १ ॥

स्वेदस्य चातुर्विध्यमाह,—स्वेद इति । स्वेदश्चतुर्विधस्तापादिभेदात् । तत्र तापादीनेव लक्षयितुमाचष्टे,—ताप इति । तापः स्वेदः, अग्नितप्तेन वसनेन तथा फालेनायोमयेनाग्निना तप्तेन तथा हस्ततलेनापि । आदिग्रहणात् दारु-वालुका-घटिका-कांस्यपात्रादयो गृह्यन्ते ॥ २ ॥

उपनाहो वचा-किण्व-शताह्वा-देवदारुभिः ।
धान्यैः समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥
उद्रिक्तलवणैः स्नेह-चुक्र-तक्र-पयःप्लुतैः ॥ ३ ॥
केवले पवने श्लेष्म-संसृष्टे सुरसादिभिः ।
पित्तेन पद्मकाद्यैस्तु साल्वणाख्यैः पुनः पुनः ॥ ४ ॥
स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ॥
अलाभे वातजित्पत्र-कौशेयाविकशाटकैः ।
रात्रौ बद्धं दिवा मुञ्चेन् मुञ्चेद्रात्रौ दिवाकृतम् ॥ ५ ॥

उपनाह इति । किण्वं सुराप्रकृतिः । धान्यैरिति सामान्योक्तावपि तिलातसी-माषादीनि योग्यत्वाद् यानुष्णवीर्याणि स्निग्धानि वा तानि प्रायेण प्रयोज्यानीति । समस्तग्रहणं गन्धैरेव युज्यते । अतएव संग्रहेऽवदत् ;—"सर्वगन्धानि" इति । गन्धैर्गन्ध-द्रव्यैः कुष्ठागुरु-तगर-सुरसादिभिस्तथा रास्नादिभिः । किम्भूतैः ? पूर्वोक्तैः । उद्रिक्त-लवणैर्लवणाढ्यैः, तथा स्नेहश्च चुक्रञ्च तक्रञ्च पयश्च तैः प्लुतैरालोड़ितैः । चुक्रमम्लम् । तक्रस्य चुक्रत्वादेव ग्रहणे सिद्धे तक्रग्रहणमतिशयाय । अतिशयेन साल्वणाख्ये स्वेदने तक्रं प्रयोज्यमिति । केवले पवने वचादिभिरुपनाहः स्वेदः कार्यः । श्लेष्मसंसृष्टे पवने सुरसादिभिः सुरसयुगादिना गणेन । पित्तेन संसृष्टे पवने पद्मकाद्यैः पद्मकपुण्ड्रा-विल्यादिभिः । पित्तेन संसृष्टे पवन इत्यत्र किञ्चिदेव पित्तेन संसृष्टे पवने पद्मकादि-भिरुपनाहः कार्य इत्यादि योज्यं, नाधिकेन पित्तेन युक्ते पवने नापि तुल्येन पित्तेन युक्ते पवन इति । एवं ह्युक्तम्,—"ग्रैष्मः प्रायो मरुत्पित्ते विधिः कार्यः" इति । ग्रैष्मश्च विधिः प्रायेण सर्वः शीतः, तत्र स्वेदो दूरोत्सारित एव ; तस्मात् किञ्चित् पित्तेन संसृष्टे पवने पद्मकाद्यैरुपनाहः कार्य्य इति वेद्यम् । एते च त्रय उपनाहाः केवले वायौ तथा कफयुक्ते पित्तयुक्ते च क्रमेण योज्याः । एते च साल्वणाभिधानाः स्वेदा इत्याह,— साल्वणाख्यैरिति । पुनः पुनरिति । असकृत्तैः स्वेदयोजना कार्येत्यर्थः । निरपायो हि यथार्थं साल्वणापरसंज्ञ उपनाहाख्यः स्वेदः, न तथाऽपरे स्वेदा इति । उपनह्यते बध्यते चर्म्मपट्टादिनेत्यन्वर्थं नामास्योपनाह इति । साल्वण इत्यस्य च तन्त्रान्तरे प्रसिद्धं नाम । तथाच धन्वन्तरिः,—"काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः । सानूपौ-दकमांसस्तु सर्वस्नेहसमन्वितः । सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः" इति । उद्रिक्तलवणैः स्नेह-चुक्र-तक्र-पयः-प्लुतैरिति त्रिष्वपि स्वेदेषु योज्यम् ॥ ३ । ४ ॥

बन्धात्मकश्चायं स्वेद इति बन्धात्मकस्वेदोपायभूतांश्चर्म्मपट्टादीनाह—स्निग्धेत्यादि । चर्म्मपट्टैर्बद्धमुपनद्धमङ्गं रात्रौ दिवा मुञ्चेत् । किम्भूतैः ? स्निग्धोष्णवीर्यैस्तथाऽपूतिभि-रदुर्गन्धैः, सुपरिकर्म्मितत्वात् । अलाभे चर्म्मपट्टादीनामभावे वातजित्पत्रैरेरण्डजादि-भिस्तथा कौशेयादिभिः कौशेयं राङ्कवादिवस्त्रविशेषः ; आविकं कम्बलम् ; तैर्बद्धं रात्रौ दिवा मुञ्चेत् । दिवा वा बद्धं रात्रौ मुञ्चेद्रात्रौ बद्धं दिवा मोक्तव्यम् ॥ ५ ॥

उष्मा तूल्कारिका-लोष्ट-कपालोपल-पांसुभिः ।
पत्रभङ्गेन धान्येन करीषसिकतातुषैः ।
अनेकोपायसन्तप्तैः प्रयोज्यो देशकालतः ॥ ६ ॥
शिग्रु-वीरणकैरण्ड-कारञ्जसुरसार्ज्जकात् ।
शिरीष-वासा-वंशार्क-मालतीदीर्घवृन्ततः ॥ ७ ॥
पत्रभङ्गैर्वचाद्यैश्च मांसैश्चानूपवारिजैः ।
दशमूलेन च पृथक् सहितैर्वा यथामलम् ॥ ८ ॥
स्नेहवद्भिः सुरा-शुक्त-वारि-क्षीरादि-साधितैः ।
कुम्भीर्गलन्तीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।
वाससाच्छादितं गात्रं स्निग्धं सिञ्चेद् यथासुखम् ॥ ९ ॥

---

उष्मेति। उष्मोष्णवाष्पः। उष्माख्यः स्वेद उल्कारिकादिभिः प्रयोज्यः। तत्र यव-माषैरण्डबीजातसी-कुसुम्भबीजादिभिः पिष्टस्विन्नैर्लप्सिकाकृतिर्यः स्वेदनोपायः स उल्कारिका; लोष्टं मृत्पिण्डः; कपालं कर्परम्; उपलः पाषाणः; पांसुर्धूलिः। तथा पत्रभङ्गेन छदसमूहेन, तथा धान्येन। करीषो गवादिशकृच्चूर्णम्; सिकता वालुका; तुषो धान्यत्वक्। एतैरुल्कारिकादिभिस्तुषान्तैः स्वेदो विधातव्यः। किम्भूतैः? अनेके च ते उपायास्तैः सन्तप्ता उष्णीकृता ये उल्कारिकादयस्तैरनेकोपायसन्तप्तैः। कथं प्रयोज्य इत्याह;—देशकालतः। ल्यब्लोपे पञ्चमी चेयम्। तेन देशकालावपेक्ष्य। उपलक्षणञ्चेदम्; तेन दोषदूष्यादीनपेक्ष्य स्वेदोऽयं प्रयोज्यः। लोष्ट-कपाल-पाषाणान-ग्निवर्णान् सन्दंशेन गृहीत्वा स्वेद्यदोषाद्यपेक्षया अम्भस्यम्ले धान्याम्ले शुक्तादौ वा निमज्जयेत्। तदुद्भूतवाष्पैः स्वेदः शयनस्थस्य कार्यः। अथवा गवादिशकृता पिण्डीकृतेनोष्णेन स्वेदः स च पिण्डस्वेदसंज्ञः। अथवा एरण्डादिद्रव्ययुक्तानि यवादीनि धान्यानि साम्लकादीनि गृहीत्वा पिहितमुखायां मुषायां सम्यगुपस्वेद्य निवाते गृहे शयनस्थे किलिञ्जे प्रस्तीर्यांविक-कौशेय-वातहरपत्रान्यतमोत्तरप्रच्छदे रौरवाजिनप्रावारादिस्ववच्छन्नं स्वेदयेत्। अथवा पूर्ववत् स्वेद्यद्रव्याणि कुम्भ्यामुत्क्वाथ्य तन्निकटोपविष्टो घनवस्त्रप्रावृत ऊष्माणं गृह्णीयात्। एष संस्तरस्वेदः। एवमनेकोपायसन्तप्तत्वं दोष-दूष्याद्यपेक्षया निरूप्य स्वेदो योज्यः ॥ ६ ॥

अथ द्रवस्वेदमाह,—शिग्रु इति। शिग्र्वादिजैः पत्रसमूहैः, तथा वचाद्यैर्वचादिगणोक्तैः, तथा मांसैरनूपजैर्जलजैश्च दशमूलेन च पृथग् व्यस्तैर्द्वित्रादिभिः सहितैः समस्तैर्वा यथामलं स्नेहवद्भिर्दोषहरस्नेहाद्यन्यतमस्नेहयुक्तैर्यथादोषं सुराशुक्तवारिक्षीरादिसाधितैः कुम्भीः स्थालीः पूरयित्वा, तथा गलन्तीर्गर्गरीश्च वंशादिमयीर्नाडीर्वा पूरयित्वा, रुजार्दितं पीडार्त्तं गात्रमङ्गं वाससाच्छादितं, तथा स्निग्धं सत् यथासुखं सुखस्पर्शं कदाचिदनुष्णं कदाचिदीषदुष्णं दोषपीडावशात् सिञ्चेदिति ॥ ७—९ ॥

तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले।
अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥ १० ॥
निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ॥ ११ ॥
व्याधि-व्याधितदेशर्तु-वशान्मध्यवरावरम्।
कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ॥ १२ ॥
आमाशयगते वायौ कफे पक्वाशयाश्रिते।
रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ॥ १३ ॥

परिषेकस्वेदमाख्यायावगाहस्वेदं द्रवभेदमाह,—तैरिति। तैरेव पूर्वोक्तैः स्वेद-द्रवैः पूर्णं कुण्डं भ्रशमवगाह्य प्रविश्यातुरो रोगी तिष्ठेत्। कीदृशे दोषे इत्याह,—सर्वाङ्गगेऽनिले सर्वशरीरव्यापिनि वायौ, तथा अर्शःप्रभृतिरोगकष्टपीड़ासु। आदि-ग्रहणेन हस्तपादपीड़ासु वा। कुण्डग्रहणमुपलक्षणार्थम्; तेन कूपकुटीस्वेदौ च वेद्यौ। संग्रहे उक्तम्;—"शयनस्याधोविस्तारद्विगुणखाते क्षते वातहरदारुकरीषा-द्यन्यतरपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदयेदिति कूपस्वेदः। कूटीं नात्युच्च-विस्तारवृत्तामच्छिद्रामुपनाह-द्रव्य-कल्क-घन-प्रदिग्धकुड्यां सर्वतो विधूमप्रदीप्तखदिरा-ङ्गारपूर्ण-हसन्तिकासमूहपरिवृतां विधाय तन्मध्यस्थितशय्यास्थं स्वेदयेदिति कुटीस्वेदः। "पद्मोत्पलादिभिः सक्तुपिण्ड्या वाच्छाद्य चक्षुषी। शीतैर्मुक्तावलीपद्ममुकुलोत्पल-भाजनैः। मुहुःकरैश्च सजलैः स्विद्यतो हृदयं स्पृशेत्" इति ॥ १० ॥

निवात इति। अपगतवाते देशे स्वेदमाचरेत्। किम्भूतः? अन्तः स्नेहपानेन वहिश्चाभ्यङ्गादिना स्निग्धः, तथा जीर्णान्नश्च येन ह्यस्तनमन्नं जीर्णम्। आमाजीर्णाया-क्रान्तं नरं वर्जयित्वा तेन स्वेदार्हेण नरेण स्वेद आचरणीयः। आमाजीर्णाया-क्रान्तेन तु पुरुषेणाजीर्णेऽन्ने नैव स्वेद आचरणीयः ॥ ११ ॥

कीदृशं स्वेदमाचरेदित्याह,—व्याधीति। व्याध्यपेक्षया व्याधितापेक्षया देशा-पेक्षया ऋत्वपेक्षया धात्वपेक्षया च यथाविध एव मध्यममुत्कृष्टं हीनं वा स्वेदमा-चरेत्। कफार्त्तः इति। कफार्त्तः कफग्रस्तो रूक्षः सन् अन्तर्बहिरस्निग्धो रूक्षणं न च स्निग्धं स्वेदमाचरेत्। अपरं श्लेष्मवाते रूक्षस्निग्धं केनचिदङ्गेन रूक्षं केनचिदङ्गेन स्निग्धमेवम्विधं स्वेदमाचरेत्। आमाशयेति। आमाशयगते वाते आदौ रूक्षः स्वेदः कार्यः पश्चात् स्निग्धः। तथा पक्वाशयगते कफे, आदौ स्निग्धः स्वेदः पश्चाद्‌ रूक्ष इत्यर्थः। कुत एवं नियम इत्याह,—स्थानानुरोधतः स्थानवशात्। वायुर्यत आमाशये आगन्तुः, स्थानञ्च तत्श्लेष्मणस्तद्वशात्तत्रादौ रूक्ष एव स्वेदो योज्यः, पश्चात् स्निग्ध इति। कफश्च पक्वाशये आगन्तुः, स्थानञ्च तद्वायोरतः पूर्वं स्निग्धः स्वेदः पश्चाद्‌ रूक्ष इति पूर्वोक्त एव न्यायो न्याय्यः। तथा चोक्तम्,—"तत्रान्यस्थानसंस्थेषु तदीयाम" इति। तथा;—"आगन्तुं शमयेद्दोषं स्थानिनं प्रतिकृत्य च" इति। तस्मात् पूर्वं रूक्षेण स्थानिनं कफं प्रतिकृत्य पश्चादागन्तुकस्य वायोः शमनं स्निग्धस्वेदाख्यं प्रयोज्य-

अल्पं वंक्षणयोः स्वल्पं दृङ्-मुष्क-हृदये न वा ।
शीतशूलक्षये स्विन्नो जातेऽङ्गानाञ्च मार्दवे ।
स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ॥ १४ ॥
पित्तास्र-कोप-तृण्-मूर्च्छा-स्वराङ्गसदन-भ्रमाः ।
सन्धिपीड़ाज्वरश्याव-रक्तमण्डलदर्शनम् ॥ १५ ॥
स्वेदातियोगाच्छर्दिश्च तत्र स्तम्भनमौषधम् ।
विषक्षाराग्न्यतीसार-च्छर्दिमोहातुरेषु च ॥ १६ ॥
स्वेदनं गुरुतीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा ।
द्रव-स्थिर-सर-स्निग्ध-रूक्ष-सूक्ष्मं च भेषजम् ।
स्वेदनं स्तम्भनं श्लक्ष्णं रूक्ष-सूक्ष्म-सर-द्रवम् ॥ १७ ॥
प्रायस्तिक्तं कषायञ्च मधुरञ्च समासतः ।
स्तम्भितः स्याद् बले लब्धे यथोक्तामयसंक्षयात् ॥ १८ ॥

---

मिति । ननु वायोरामाशये कोपोऽनुपपन्नः ; यतो मरुल्लघ्वादिगुणयुक्तः, आमाशयस्तु गुरुमृदुत्वादियुक्तः ; अतः शम एवोपपन्न इति चेत्, एतच्चायुक्तम् । बलिनो ह्यन्याश्रयस्थस्यापि कोपो युक्तः । मार्गरोधाच्च वायोरामाशयेऽपि प्रकोपः सम्भवतीति । तथा च वक्ष्यति,—"प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये गतः" इति । तथाचोक्तम् ;—"ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि" इति ॥ १२ । १३ ॥

अल्पमिति । वङ्क्षणयोरल्पमेवेति योज्यम् । दृशोर्मुष्कयोर्हृदि चात्यल्पम् । नवेति । अथवा दृगादिषु स्वेदं नाचरेदेव । शीतशूलयोः क्षये सञ्जाते सति अङ्गानां पाणिपादादीनाञ्च मृदुत्वे जाते स्विन्नो नरः स्यात् । स च स्विन्नः शनैर्मृदितो मन्दमर्दिताङ्गः स्नातः उष्णोदकेनानन्तरं स्नेहोक्तविधिमुष्णोदकोपचारी स्यादित्यादिकं भजेदिति ॥ १४ ॥

स्वेदस्य सम्यग्लक्षणमुक्त्वातियोगलक्षणमाह,—पित्तेति । स्वेदस्यातियोगाद् रक्तपित्तकोपादयो भवन्ति च्छर्दिश्च । मूर्च्छा मोहः । स्वराङ्गयोः सदनेन सम्बन्धः । भ्रमोऽज्ञानम् । श्यावानि च रक्तानि च श्यावरक्तानि । तत्र तेषु स्तम्भनमौषधं कार्यम्, तथा विषाद्यातुरेष्वपि स्तम्भनमेवौषधं न्याय्यमित्यर्थः । स्वेदनमिति । गुरु यद्द्रव्यं तीक्ष्णमुष्णञ्च तद् बाहुल्येन स्वेदनं भवति । प्रायोग्रहणात् भयशोकादिकरुगुर्वपि गृह्यते ; अन्यथा अतो वैपरीत्येन संस्तम्भनं भवति । द्रवेत्यादि । द्रवादिगुणयुक्तं यत् तद् द्रव्यं स्वेदनं भवति तथा श्लक्ष्णादियुक्तं तत् स्तम्भनं भवति ॥ १५—१७ ॥

अधुना रसतः स्तम्भनं निर्दिशन्नाह,—प्राय इति । प्रायः समासतः संक्षेपेण तिक्तं कषायञ्च मधुरञ्च स्तम्भनं भवति । स्तम्भितस्य [ लक्षणमाह,—स्तम्भित इति । बले लब्धे

स्तम्भ-त्वक्स्नायुसङ्कोच-कम्प-हृद्-वाग्-हनुग्रहैः ।
पादोष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत् ॥ १९ ॥
न स्वेदयेदतिस्थूल-रूक्ष-दुर्बल-मूर्च्छितान् ।
स्तम्भनीय-क्षत-क्षीण-क्षाम-मद्य-विकारिणः ॥ २० ॥
तिमिरोदर-वीसर्प-कुष्ठ-शोषाढ्य-रोगिणः ।
पीत-दुग्ध-दधि-स्नेह-मधून् कृतविरेचनान् ॥ २१ ॥
भ्रष्टदग्धगुदग्लानि-क्रोधशोकभयान्वितान् ।
क्षुत्तृष्णा-कामला-पाण्डु-मेहिनः पित्तपीड़ितान् ।
गर्भिणीं पुष्पितां सूतां मृदु चात्ययिके गदे ॥ २२ ॥
श्वास-कास-प्रतिश्याय-हिक्काध्मान-विबन्धिषु ।
स्वरभेदानिलव्याधि-श्लेष्मामस्तम्भगौरवे ॥ २३ ॥
अङ्गमर्द-कटी-पार्श्व-पृष्ठ-कुक्षि-हनुग्रहे ।
महत्त्वे मुष्कयोः खल्यामायामे वातकण्टके ॥ २४ ॥
मूत्रकृच्छ्रार्बुदग्रन्थि-शुक्राघाताढ्यमारुते ।
स्वेदं यथायथं कुर्यात् तदौषधविभागतः ॥ २५ ॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ॥ २६ ॥

---

जाते सति यथोक्तानां रोगाणाञ्च संक्षयात् स्तम्भितो नरः स्यात् । अतिस्तम्भितं लक्षयति,—स्तम्भेति । त्वक् च स्नायुश्च तयोः सङ्कोचः । हृदयादीनां ग्रहेण सम्बन्धः । ततः स्तम्भादीनां द्वन्द्वः । स्तम्भादिभिस्तथा श्यावैः पादादिभिरतिस्तम्भितं कथयेत् ॥ १८।१९ ॥

नेति । अतिस्थूलादीन्न स्वेदयेत् । अतिस्थूलस्य स्वेदेन मेदोविलयनादत्यन्तं शरीरक्षोभः स्यात् । रूक्षादीनाञ्च कार्श्यमिति । आढ्यरोगो वातरक्तम् । भ्रष्टदग्धगुदो-ऽतीसारक्षाराग्न्यादिभिः । ग्लान्यादीनामन्वितेन सम्बन्धः । क्षुदादीनां मेहान्तानां द्वन्द्वः । क्षुद्वतः स्वेदादत्यन्तं देहग्लानिः, कामलापाण्डुमतोः स्वेदेन पित्तवृद्ध्या रोगवृद्धिः, पित्तप्रधानस्य स्वेदाद्रोगवृद्धिः, गर्भिण्याः स्वेदेन गर्भव्यापत्, पुष्पिताया रक्तातिप्रवृत्तिः; सूतायाः कार्श्यम् । मृदु चेति । यदेषामतिस्थूलादीनामात्यन्तिको व्याधिर्विसूचिकादिः स्यात्तदैते मृदु स्वेदयितव्याः ॥ २०—२२ ॥

श्वासेत्यादि । श्वासादिमत्सु यथास्वं स्वेदं कुर्यात् । क्वचित्तापं क्वचिदुपनाहं क्वचिदुष्माणं क्वचिद् द्रवमिति । कथम् ? तेष्वौषधानि तदौषधानि तेषां विभागो यथास्वमुपयोगस्तेन तदौषधविभागेन स्वेदं कुर्यात् । स्वल्पो तीव्ररुजान्वितेति वात-

निवातं गृहमायासो गुरुप्रावरणं भयम्।
उपनाहाहवक्रोध-भूरिपानं क्षुधातपः ॥ २७ ॥
स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ २८ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः।

अथातो वमन-विरेचनविधिमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
कफे विदध्याद् वमनं संयोगे वा कफोल्वणे।

---

व्याधौ वक्ष्यते। आयामवातकण्टकौ च। आढ्यवात ऊरुस्तम्भः। स्वेद इति। मेदः-कफाभ्यां पवने आवृते सत्यनाग्नेयः स्वेदो हितः ॥ २३—२६ ॥

कोऽसावनाग्नेय इत्याह,—निवातमिति। निवातगृहादयोऽनाग्नेयाः स्वेदाः। आयासो व्यायामः। गुरुप्रावरणं, रल्लकादि। भयं खड्गहस्तराजपुरुषदर्शनादिना। उपनाहोऽप्यनाग्नेयः स्वेदः, उपनाहस्य द्वैविध्यात्। तत्रोपनाहो वचाकिण्वेत्यादि-राग्नेयः, तत्र तापोऽग्नितप्तवसनेत्यनुवृत्तेः। अनाग्नेयस्तु स्निग्धोष्णवीर्यैर्न्दुभिरधर्मपट्टरित्यादिकः। आहवः समरः; भूरिपानं बहुमद्यपानम् ॥ २७ ॥

स्नेहेति। ते दोषाः सम्यक् सुष्ठु, शुद्धिभिर्वमनविरेचनलक्षणाभिर्निर्ह्रियन्ते निष्कास्यन्ते। के दोषा इत्याह,—स्नेहक्लिन्ना ये तथा कोष्ठगा धातुस्थाश्च स्रोतोलीनास्तथा शाखास्वस्थिषु च स्थिताः। किम्भूताः? स्वेदैर्द्रवीकृत्य कोष्ठं नीता उदरं प्रापिता इति ॥ २८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां स्वेदविधिरध्यायः सप्तदशः ॥ १७ ॥

---

शुद्धिभिर्निर्ह्रियन्त इत्युक्तं; कास्ताः शुद्धय इति शुध्यर्थं वमनविरेचनाधिकारः,—अथात इत्यादि। वमनञ्च विरेचनञ्च तयोर्विधिः। शेषं पूर्ववत् ॥ १ ॥

तत्र वमनविधिमाह,—कफे इति। श्लेष्मणि वमनं कुर्यात्। अत्र पूर्वं वमनकथनं

तद्वद् विरेचनं पित्ते विशेषेण तु वामयेत् ॥ २ ॥
नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः ।
कुष्ठ-मेहापची-ग्रन्थि-श्लीपदोन्मादकासिनः ।
श्वासहृल्लासवीसर्प-स्तन्यदोषोर्ध्वरोगिणः ॥ ३ ॥
अवम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ।
बालवृद्धकृशस्थूल-हृद्रोगिक्षतदुर्बलाः ॥ ४ ॥
प्रसक्तवमथुप्लीह-तिमिरक्रिमिकोष्ठिनः ।
ऊर्ध्वप्रवृत्तवायुस्र-दत्तबस्तिहतस्वराः ॥ ५ ॥
मूत्राघात्युदरी गुल्मी दुर्बमोऽत्यग्निरर्शसः ।
उदावर्त-भ्रमाष्ठीला-पार्श्वरुग्वातरोगिणः ॥ ६ ॥
ऋते विषगराजीर्ण-विरुद्धाभ्यवहारतः ॥ ७ ॥
प्रसक्तवमथोः पूर्वं प्रायेणामज्वरोऽपि च ।
धूमान्तैः कर्मभिर्वर्ज्याः सर्वैरेव त्वजीर्णिनः ॥ ८ ॥
विरेकसाध्या गुल्मार्शोविस्फोटव्यङ्गकामलाः ।

---

"विरेच्यते मन्दकफस्तु सम्यक्" इति प्रतिपादनार्थम् । संयोगे च कफाधिके । तत्र च पित्तकफवान् वमनं कुर्यात् । यथा, कफे कफाधिके वा संयोगे च वमनं तथैव पित्ते पित्ताधिके वा संयोगे विरेचनं कुर्यादिति तद्वच्छब्दस्यार्थः । नवेति । विशेषेण पुनर्नवज्वरातिसारादीनूर्ध्वरोगपर्यन्तान् वामयेत् ॥ २ । ३ ॥

अवम्या इति । गर्भिण्यादयो वातरोगान्ता अवम्याः । अर्शांसि विद्यन्ते यस्य सोऽर्शसः । अर्श आदिभ्यश्चेत्यच् । तत्र गर्भिण्या वमनाद्द गर्भव्यापद्गर्भभ्रंशश्च । क्षुधितस्य च वायुना क्षपितशरीरत्वाद्द बलक्षयः स्यात् । बालादीनामौषधबलाक्षमत्वाद्द बलोपरोधः स्यात् । हृद्रोगादीनां हृदयोपरोधः प्रसक्तच्छर्दनानामुदानो वायुरुत्क्षिप्य प्राणानपि हिंस्यात् । एवमन्यत्रापि रोगोद्गमश्चिन्त्यः ॥ ४—६ ॥

किं सर्वदैव गर्भिण्यादयोऽवम्याः, उत कस्याञ्चिदवस्थायां वम्या इत्याह,—ऋते इति । विषाद्यभ्यवहारमन्तरेण । विषाद्यभ्यवहारे तु वम्या एवैते । प्रसक्तेति । प्रसक्तवमथोः पूर्वं स्थिता एकादशातुरा दुर्बलान्ताः, तथा आमज्वरिणश्च ते सर्वे धूमान्तैः कर्मभिर्वर्ज्याः न केवलं वमनेनैव । धूमग्रहणं गण्डूषादिकर्मणोऽपि परिहारार्थम् । प्रायोग्रहणमष्टमासाया गर्भिण्या निरूहा वर्ज्या इति सूचनार्थं, तथा सद्योभुक्तस्य ज्वरितस्य सतो वमनानुज्ञानार्थम् । तु पुनरजीर्णिनः पुरुषा वमनादिभिर्गण्डूषादिभिश्च वर्ज्याः । सद्योऽजीर्णिनां हि वमनमनुज्ञातमेव ॥ ७ । ८ ॥

विरेकेति । विरेकेण साध्या उपक्रम्या गुल्मादयः श्लक्ष्ट्ग्रहपर्यन्ताः ; पक्वाशये

जीर्णज्वरोदर-गर-च्छर्दिप्लीहहलीमकाः ॥ ९ ॥
विद्रधिस्तिमिरं काचः स्यन्दः पक्वाशयव्यथा ।
योनिशुक्राशया रोगाः कोष्ठगाः क्रमयो व्रणाः ॥ १० ॥
वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ।
वम्याश्च कुष्ठमेहाद्या नतु रेच्यो नवज्वरी ॥ ११ ॥
अल्पाग्न्यधोगपित्तास्र-क्षतपायुतिसारिणः ।
सशल्यास्थापितक्रूर-कोष्ठातिस्निग्धशोषिणः ॥ १२ ॥
अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ।
श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः ॥ १३ ॥
निशां सुप्तं सुजीर्णान्नं पूर्वाह्णे कृतमङ्गलम् ।
निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ १४ ॥
वृद्ध-बालाबल-क्लीव-भीरून् रोगानुरोधतः ।
आकण्ठं पायितान्मद्यं क्षीरमिक्षुरसं रसम् ॥ १५ ॥

---

व्यथा पक्वाशयव्यथा। वम्याश्चेति चः समुच्चये। ये च कुष्ठाद्या ऊर्ध्वरोगपर्यन्ता वमनार्हा उक्तास्ते च विरेच्याः। नेति। न तु रेच्य इति। तुरवधारणे। नवज्वरी नव रेच्यः। तस्य हि विरेचनमपक्वान् दोषान् निर्हरद्द वातकोपायेव स्यात्। यच्चा-दीनां त्ववस्थावशान् मृदुविरेच्यत्वमनुज्ञातमेव, तथापि चाध्मानगुरुताशूलस्तैमित्यकारि-णीत्यादिना अतीसारस्यापि मृदुविरेचनमनुज्ञातं। नैवं नवज्वरस्य स्वल्पविरेच्यत्वं कदापि। अल्पाग्न्यादयः शोष्यन्ता न विरेच्याः। तत्राल्पाग्निरबलत्वाद्भेषजवेगं न सहते। अधोरक्तपित्तातिसारिणावतिप्रवृत्त्या हन्यात्। क्षतपायोः प्राणापहारकारिणी रुक् स्यात्। सशल्यस्य क्षते वायुराश्रितो जीवितं हन्यात्। आस्थापितस्य भेषजवेगा-सहनाद्द बलोपरोधः स्यात्। क्रूरकोष्ठस्यौषधाद्धेतोर्दोषा ह्यप्रवर्त्तमाना हृदयशूल-पर्वभेदानाह-च्छर्दि-मूर्च्छा-क्लमान् जनयित्वा प्राणान् हन्युः। अतिस्निग्धस्यातियोगाय स्यात्। शोषिणः क्षीणधातुतया मलबलत्वं तदभावाद्देहविनाशनं स्यादिति ॥ ९—१२ ॥

अथेत्यादि। एतत् पूर्वोक्तं रेच्यारेच्यत्वमवगम्यानन्तरं साधारणे श्रावणादौ काले यथाविधि स्नेहस्वेदाऽध्यायोदितेन क्रमेण स्निग्धस्विन्नं पुरुषं भेषज्यमात्रां प्राङ्मुखं पाययेदिति वक्ष्यमाणेन सम्बन्धः; श्वोवम्यं प्रातर्वमनार्हम्; वम्यमित्यर्हे कृत्यतृच-श्चेत्यर्हार्थे पोरदुपधादिति यत्। उत्क्लिष्टः स्थानाच्चलितः कफो यस्य तमुत्क्लिष्टकफम्। कः? मत्स्यादिभिः अन्तर्भावितण्यर्थोऽत्र; उत्क्लेशित इत्यर्थः। तथारात्रौ सुप्तम्; कालाध्वनोरिति द्वितीया। अतएव सकलनिशास्वापोऽत्र लक्ष्यते। सुष्ठु जीर्ण-मन्नमाहारो यस्य तम्। कदा पाययेत्? प्रातःकाले। किम्भूतम्? कृतं मङ्गलं

यथाविकारविहितां मधुसैन्धवसंयुताम्।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ १६ ॥
ब्रह्म-दक्षाऽश्वि-रुद्रेन्द्र-भू-चन्द्राऽर्काऽनिलाऽनलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः ॥ १७ ॥
रसायनमिवर्षीणाममराणामिवामृतम्।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १८ ॥
ओं नमो भगवते भैषज्यगुरवे वैदूर्यप्रभराजाय,
तथागतायार्हते सम्यक् सम्बुद्धाय। तद् यथा,
ओं भैषज्ये भैषज्ये महाभैषज्ये समुद्गते स्वाहा।
प्राङ्मुखं पाययेत् पोतं मुहूर्त्तमनुपालयेत्।
तन्मना जातहृल्लास-प्रसेकश्छर्दयेत्ततः ॥ १९ ॥
अङ्गुलिभ्यामनायस्तो नालेन मृदुनाथवा।
गलताल्वरुजन् वेगानप्रवृत्तान् प्रवर्त्तयन् ॥ २० ॥
प्रवर्त्तयन् प्रवृत्तांश्च जानुतुल्यासने स्थितः।
उभे पार्श्वे ललाटञ्च वमतश्चास्य धारयेत् ॥ २१ ॥

---

स्वस्त्ययनादि यस्य तम्। कृतमङ्गलमित्युपलक्षणार्थम्; कृतदेवद्विजाग्निगुरुवृद्धार्चनमपीति द्रष्टव्यम्। तथा निरन्नकृताहारमातुरवशात् किञ्चित् स्निग्धम्। कथमित्याह,—पेयया पीतसर्पिषम्। वृद्धेत्यादि। असावथ वृद्धो वा बालो वा दुर्बलो वा क्लीबः खेदासहिष्णुर्भवति, भीरुर्वा कातरो भवति, तदा रोगानुरोधादाकण्ठमतिमात्रं मद्यक्षीरादिकं पाययेत्। तदनन्तरं भषज्यमात्रां पाययेत्। संग्रहेऽप्युक्तम्;—"भीरुकृश-बालसुकुमारत्वाद्दोषानुरोधिनाकण्ठं पीतयूषेक्षु-क्षीर-मांस-रस-मद्य-तुषोदक-यवागू-मण्डान्यतमम्" इति। किम्भूतां मात्राम्? यथाविकारविहितां रोगानुसारेण साधितां, तथा मधुसैन्धवाभ्यां युताम्। किं कृत्वा? कोष्ठं मृदु-मध्य-क्रूर-लक्षणं विभज्य विचार्य। श्लेष्माधिक्येन मृदुत्वं श्लेष्ममध्यत्वेन मध्यत्वं श्लेष्महीनत्वेन क्रूरत्वमिति मानं कोष्ठस्य बोध्यम्। तथा चोक्तम्;—"श्लेष्मोत्तरं छर्दयते ह्यदुःखम्" इति। भेषज्यमात्रां किम्भूताम्? मन्त्राभिमन्त्रिताम्। तानेव मन्त्रानाह,—ब्रह्मेत्यादिग्रन्थेन। पीतमिति। भेषज्यमात्रां पीतं सन्तमातुरं मुहूर्त्तं तन्मना वमिगतचित्तोऽनुपालयेत् प्रतीक्षेत। जातेत्यादि। ततोऽनन्तरं सञ्जातहृल्लासप्रसेकः सन् छर्दयेत्। हृल्लासो हृदुपरोधः; प्रसेको निष्ठीवनम्। कथं वमेत्? अङ्गुलिभ्यां द्वाभ्याम्। यद्वा कोमलेन सुवर्चलरण्डादिजेन नालेन मृदुना वमेत्। कीदृशः? अनायस्त अनायासेनेत्यर्थः।

प्रपोड़येत्तथा नाभिं पृष्ठञ्च प्रतिलोमतः ।
कफे तोच्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ॥ २२ ॥
वमेत् स्निग्धाम्ललवणैः संसृष्टे मरुता कफे ।
पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥ २३ ॥
हीनवेगः कणा-धात्री-सिद्धार्थ-लवणोदकैः ।
वमेत् पुनः पुनस्तत्र वेगानामप्रवर्त्तनम् ॥ २४ ॥
प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ।
अयोगस्तेन निष्ठीव-कण्डू-कोठ-ज्वरादयः ॥ २५ ॥
निर्विबन्धं प्रवर्तन्ते कफ-पित्तानिलाः क्रमात् ।
सम्यग्योगेऽतियोगे तु फेन-चन्द्रक-रक्तवत् ॥ २६ ॥
वमितं चामता दाहः कण्ठशोषस्तमो भ्रमः ।
घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात् ॥ २७ ॥
सम्यग्योगेन वमितं च्णमाश्वास्य पाययेत् ।
धूमत्रयस्यान्यतमं स्नेहाचारमथादिशेत् ॥ २८ ॥

---

अपरं गलताल्वपीड़यन्। तथा, अप्रवृत्तान् वेगान् प्रेरयन् प्रवृत्तांश्च प्रवर्त्तयन् जानुप्रमाणे पीठे स्थितः। उभे इति। अपरमस्य नरस्य वमनं कुर्वतो द्वे पार्श्वे ललाटञ्च धारयेत्, परिचारक इति शेषः। प्रतिलोमतोऽउन्मार्गेण। कफे इति। कफे तीच्णोष्णकटुकैर्द्रव्यैर्वमेत्, पित्ते स्वादुशीतैर्द्रव्यैर्वमेत्, स्निग्धाम्ललवणैर्वायुयुक्ते कफे वमेत्। कियन्तं कालं वमेदित्याह—यावत् पित्तस्य दर्शनं कफान्तो वा तावद्वमेत् ॥१३—२३॥

हीनवेग इति। हीनवेगो नरः कणा-धात्री-सिद्धार्थलवणोदकैरनल्पं वमेत्। तत्र तेषु सम्यग्योगातियोगायोगेषु मध्याद् वेगानामप्रवर्त्तनमसौ अयोगः। सविबन्धा च या प्रवृत्तिः सोऽप्ययोगः। केवलस्य दोषादिरहितस्यौषधस्य या प्रवृत्तिः सोऽप्ययोगः। तेनायोगेन निष्ठीवनादयः स्युः ॥ २४—२५ ॥

निर्विबन्धमिति। सम्यग्योगे कफपित्तानिलाः क्रमेण निर्विबन्धं निःसङ्गं प्रवर्त्तन्ते। अतियोग इति। अतियोगे पुनः फेनचन्द्रकरक्तवद् वमितं भवति। फेनश्च चन्द्रकाश्च रक्तञ्च तानि विद्यन्ते यस्य वमितस्य तदेवम्, तथा चामतादयो भवन्ति। तमस्तिमिरदर्शनं दारुणाश्च वातरोगाः तथा मृत्युर्भवति। जीवाख्यस्य शोणितस्य निर्गमान्निष्कासात्। सम्यगिति। सम्यग्योगेन वमिते सति मुहूर्त्तमाश्वास्य शीतवातादिना धूमत्रयस्य स्निग्धमध्यतीच्णाख्यस्यान्यतममेकं पाययेद्वैद्यः। अथानन्तरं स्नेहाचारमुष्णोदकोपचारी स्यादित्यादिकमादिशेत् ॥ २६—२८ ॥

ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखाम्बुना ।
भुञ्जानो रक्तशाल्यन्नं भजेत् पेयादिकं क्रमम् ॥ २९ ॥
पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रीनुभयं तथैकम् ।
क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः ॥ ३० ॥
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण ।
महान् स्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः ॥ ३१॥
जघन्य-मध्य-प्रवरे तु वेगाश्चत्वार इष्टा वमने षड़ष्टौ ।

---

तत इति । तदूर्द्ध्वं सायमपराह्णे प्रभाते पूर्वाह्णे वा बुभुक्षित उष्णोदकेन स्नातो रक्तशाल्यन्नं भुञ्जानः पेयादिकं क्रमं भजेत् । तमेव पेयादिकं क्रममाह,— पेयामिति । प्रधाना च मध्या च अवरा च प्रधानमध्यावराः । प्रधानमध्यावराश्च ताः शुद्धयश्च ताभिः शुद्धो नरः क्रमेण यथासंख्यं पेयां त्रीनन्नकालान् द्वावन्नकालावेकमन्नकालं भजेदिति । विलेप्यादिष्वप्येवं योज्यम् । एतदेव स्पष्टीकृत्योच्यते । यथा, प्रधानशुद्ध्या शुद्धो नरो द्वावन्नकालावेकस्मिन् दिने पेयां भजेदिति, द्वितीयेऽह्न्येकमन्नकालं विलेपीं तृतीये वासरे द्वावन्नकालौ विलेपीमेव, चतुर्थे दिवसेऽकृतं शुण्ठीलवणाद्यसंस्कृतं यूषं द्वावन्नकालौ भजेत्, पञ्चमेऽह्नि प्रथमेऽन्नकाले । चः समुच्चये । त्रिष्वपि कालेष्वकृतञ्च यूषं भजेत् । विभज्य तावद् गम्यते । एवं कालत्रयं कृताकृतं रसं विभज्य भोजयेत् । सप्तरात्रेण प्रकृतिभोजनं क्रमेण सेवेत । एवं यथास्वं मध्यशुद्धिशुद्धस्यावरशुद्धिशुद्धस्य च योजना कार्या । मुनिस्त्वाह,—“अथैनं सायाह्णे अपरे वाह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां स्वविक्लिन्नां मण्डपूर्वामुष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य । एवं द्वितीये तृतीये वाऽन्नकाले । चतुर्थे तु तथाविधानामेव शालीनां सुस्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत् । एवं पञ्चमे षष्ठे चान्नकाले । सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विःप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत् । एवमष्टमे नवमेऽन्नकाले । दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसस्य रसेन दकलावणिकेन नातिसारवता भोजयेदुष्णोदकानुपानम् । एवमेकादशे द्वादशे वान्नकाले । अत ऊर्ध्वमन्नगुणान् क्रमेणोपयुञ्जानः सप्ताहात् प्रभृति भोजनमागच्छेत् । त्रीनिति कालाध्वनोरत्यन्तसंयोगे द्वितीया ॥ २९ । ३० ॥

अधुना पेयादिक्रमस्य फलं वक्ति,—यथेति । यथा वाह्योऽग्निरणुरल्पस्तृण-गोमय-काष्ठ-फलादिभिः सन्धुक्ष्यमाण उद्दीप्यमानो महान् स्थिरः सर्वपचो भवति । सर्वपच इति पचेरजन्तस्य सर्वशब्देन सह षष्ठीसमासः । तेनैव प्रकारेण पेयादिभिः शुद्धस्योदर्योऽग्निर्महान् स्थिरः सर्वपचश्च भवति । खरनादेऽप्युक्तम्;—“विरिक्ते वमने श्रेष्ठे पेयादीनां त्रिकक्रमः । त्रिशो द्विशो मध्यमे स्यादेकशस्तु कनीयसि” इति ॥ ३१ ॥

जघन्येति । जघन्यश्च मध्यश्च प्रवरश्च तस्मिन् वमने क्रमेण वेगाश्चत्वारः षडष्टौ,

दशैव ते द्वित्रिगुणा विरिक्ते प्रस्थस्तथा स्याद् द्विचतुर्गुणश्च ॥३२॥
पित्तावसानं वमनं विरेकादर्धं कफान्तञ्च विरेकमाहुः।
द्वित्रान् सविट्कानपनीय वेगान् मेयं विरिक्ते वमने तु पीतम् ॥३३

अथैनं वामितं भूयः स्नेहस्वेदोपपादितम्।
श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग् विरेचयेत् ॥ ३४ ॥
बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते।
प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि ॥ ३५ ॥
कषायमधुरैः पित्ते विरेकः कटुकैः कफे।
स्निग्धोष्णलवणैर्वायावप्रवृत्तौ तु पाययेत् ॥ ३६ ॥
उष्णाम्बु स्वेदयेदस्य पाणितापेन चोदरम्।
उत्थानेऽल्पे दिने तस्मिन् भुक्त्वान्येद्युः पुनः पिबेत् ॥ ३७ ॥
अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः।

---

तत्सङ्ख्यातामिति शेषः। ते वेगा दशैव द्वित्रिगुणा जघन्यमध्यप्रवरे विरिक्ते क्रमेण भवन्ति। तथेति समुच्चये, न केवलं वेगानां मानं प्रस्थश्च द्विचतुर्गुणो मानं स्यादिति तथाशब्दस्यार्थः। त्रिष्वेतानुप्रपजातिवृत्तानि ॥ ३२ ॥

पित्तेति। पित्तान्तं वमनं वदन्ति, विरेकादर्धं वमनं कथयन्ति, विरेचनं कफान्तमाहुः। द्वित्रानिति। द्वे वा त्रयो वा द्वित्राः। सङ्ख्ययाऽव्ययेति बहुव्रीहिः, बहुव्रीहौ सङ्ख्येयेडजिति वा समासान्तः। सह विशा पुरीषेण वर्तत इति सविट्कौ विड्वान् वेगान् सविट्कानपनीय गणनयाऽनया रुद्धविरिक्ते मेयं मातव्यम्। वमने पुनः पीतं यदौषधं तदपनीय मेयम्। इन्द्रवज्रावृत्तम् ॥ ३३ ॥

अथैनमिति। एनं नरं वामितं भूयः पुनरपि स्नेहस्वेदाभ्यामुपपादितमनन्तरं सम्यग् विरेचयेत्। कदा? श्लेष्मणः कालः सन्धिभागप्रहरस्तस्मिन् गते सति। किं कृत्वा? कोष्ठं मृदु-मध्य-क्रूर-लक्षणं ज्ञात्वाऽवगम्य। बहुपित्त इति। यो बहुपित्तः कोष्ठः स मृदुर्भवति। स च क्षीरेणापि विरिच्यते। अपिशब्दादारग्वधादिभिरपि। प्रभूतेति। प्रभूतमारुतः क्रूरः कोष्ठो भवति। स कृच्छ्रेण कथञ्चिदपि श्यामादिकैर्विरिच्यते। आदिशब्देन कटुष्टसुधादीनां ग्रहणम्। अपिशब्दादारग्वधादिना विरिच्यते। कषायेति। कषायमधुरैरारग्वधादिभिः पित्ते विरेकः; कटुकैः कफे विरेकः; स्निग्धोष्णलवणैरेरण्डतैलादिभिर्वायौ विरेकः कार्यः। अप्रवृत्ताविति। विरेकाप्रवृत्तौ उष्णाम्बु पाययेद् वैद्यः। अस्य चातुरस्य पाणितापेन जठरं स्वेदयेत्। उत्थाने इति। तस्मिन् विरेकस्य दिनेऽल्पे उत्थाने स्तोकायां प्रवृत्तौ सत्यां भुक्त्वान्नमन्येद्युरन्यस्मिन् दिने पुनर्विरेचनौषधं पिबेदातुरः ॥ ३४—३७ ॥

भूयोऽप्युपस्कृततनुः स्वेदस्नेहैर्विरेचनम् ॥
यौगिकं सम्यगालोच्य स्मरन् पूर्वमनुक्रमम् ॥ ३८ ॥
हृत्कुच्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ।
कण्डूर्विदाहः पिटिका पीनसो वातविड्ग्रहः ॥
अयोगलक्षणं योगो वैपरीत्ये यथोदितात् ॥ ३९ ॥
विट्-पित्त-कफ-वातेषु निःसृतेषु क्रमात् स्रवेत् ।
निःश्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम् ॥
मांसधावनतुल्यं वा मेदःखण्डाभमेव वा ।
गुदनिःसरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ।
भवन्त्यतिविरिक्तस्य तथातिवमनामयाः ॥ ४० ॥
सम्यग विरिक्तमेनञ्च वमनोक्तेन योजयेत् ।
धूमवर्ज्येन विधिना ततो वमितवानिव ।
क्रमेणान्नानि भुञ्जानो भजेत् प्रकृतिभोजनम् ॥ ४१ ॥
मन्दवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ।
अदृष्टजीर्णलिङ्गञ्च लङ्घयेत् पीतभेषजम् ।

---

अदृढ़ेति । दृढस्नेहः कोष्ठो यस्य स दृढस्नेहकोष्ठः । न दृढस्नेहकोष्ठोऽदृढस्नेहकोष्ठः । स भूयोऽपि स्नेहस्वेदः संस्कृतशरीरो दशाहादूर्ध्वं यौगिकं विरेचनं पिवेत् । यथावन्निरूप्य पूर्वमनुक्रमं भेषज्यमात्रां मन्त्राभिमन्त्रितामित्यादिकं तथा अप्रवृत्तौ तु पाययेत् उष्णाम्बु, स्वेदयेदस्य पाणितापेनेत्यादिकञ्च स्मरन् पिवेदिति । हृदिति । अयोगलक्षणं हृत्कुक्ष्यशुद्धिरित्यादिकम् । यथोक्ताद्वैपरीत्ये हृत्-कुक्षि-शुद्धिरित्यादिको योगो योगलक्षणम् ॥ ३८ । ३९ ॥

विड़िति । अतिविरिक्तस्य विट्पित्तकफवातेषु क्रमान्निःसृतेषु जलं स्रवेत् । किम्भूतम् ? निःश्लेष्मपित्तं, तथा श्वेतं कृष्णं सलोहितं पीतरक्तं, अथवा मांसधावनसदृशं, अथवा मेदःशकलाभं स्रवेत् । तथा गुदनिःसरणादयोऽतिवमनामयाश्च क्षामतादयो भवन्ति ॥ ३९ । ४० ॥

सम्यगिति । एनञ्च नरं सम्यग्विरिक्तं वमनविहितेन विधिना विधूमेनोपपादयेत् । मत इति । ततोऽनन्तरं क्रमेण पूर्व्वोक्तेन रक्तशाल्यन्नसहितपेयादीन्यन्नान्यश्नन् प्रकृतिभोजनं भजेत् ॥ ४१ ॥

मन्देति । पीतभेषजं मन्दवह्न्यादीन् पञ्च लङ्घयेत् । अदृष्टं जीर्णलिङ्गं पीतभेषजस्य यस्येति योज्यम् । एवं लङ्घिते यो गुणो भवति तमाह,—सं हेति । उष्माश्च सङ्गाश्च तुक्के

स्नेहस्वेदौषधोत्क्लेश-सङ्गैरिति न बाध्यते ॥ ४२ ॥
संशोधनाऽस्रविस्राव-स्नेहयोजन-लङ्घनैः ।
यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ॥ ४३ ॥
स्रुताल्प-पित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ।
पेयां न पाययेत् तेषां तर्पणादिक्रमो हितः ॥ ४४ ॥
अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ।
निर्हरेद् वमनस्यातः पाकं न प्रतिपालयेत् ॥ ४५ ॥
दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम् ।
विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत् ॥ ४६ ॥
दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ।
अपरिज्ञातकोष्ठश्च पिबेन् मृद्वल्पमौषधम् ॥ ४७ ॥
वरं तदसकृत् पीतमन्यथा संशयावहम् ।
हरेद् बहूंश्चलान् दोषानल्पानल्पान् पुनः पुनः ॥ ४८ ॥

---

उत्क्लेशसङ्गाः। स्नेहश्च स्वेदश्चौषधश्च तानि तेषामुत्क्लेशसङ्गाः स्नेहस्वेदौषधोत्क्लेशसङ्गास्तैः। इत्येवं लङ्घिते सति मन्दाग्न्यादिर्न बाध्यते ॥ ४२ ॥

संशोधनेति। संशोधनादिभिर्यतोऽग्निर्मन्दतां याति, अतो हेतोः पेयादिक्रममाचरेत्। संशोधनं सम्यक्शुद्धिः; अस्रविस्रावो रक्तस्रुतिः; स्नेहयोजनं स्नेहयोगः। ननु शुद्धाग्निमान्द्यमिहोच्यते। वक्ष्यति च,—"बुद्धिप्रसादम्" इत्यादिना, ज्वलनस्य दीप्तिं संशोधनं करोतीति। तदिमे वचसी परस्परं व्याहन्याते। अत्रोच्यते, कालभेदाद् दोषसंशोधने क्रियमाणेऽग्निमान्द्यं भवति। कृते च संशोधनेऽप्यपेयादिक्रममासेवमानस्याऽग्निदीप्तिरिति न कश्चिदत्र व्याघातः। स्रुताल्पपित्तश्लेष्माणमिति। स्रुतौ पतितावल्पौ पित्तश्लेष्माणौ यस्य तं, तथा मद्यपो यो नरस्तं मद्यपं, तथा वातपैत्तिकं; एतांस्त्रीन् पेयां न पाययेत्। तर्ह्येषां किं कार्यमित्याह,—प्रथमेऽन्नकाले लाजसक्तवो द्वितीयेऽन्नकाले मांसरसौदकेनेत्येष तर्पणादिक्रमस्तेषां हितः ॥ ४३—४४ ॥

ननु विरेचनस्येव वमनस्य कस्मात् पाको न प्रतीक्ष्यत इत्याह,—अपक्वमिति। वमनमपक्वं सत् दोषान् निर्हरेत्, विरेचनं तु पच्यमानं दोषान्निर्हरेत् अतो वमनस्य पाको न प्रतिपाल्यते। दुर्बल इति। दुर्बलो बहुदोषश्च दोषपाकेन हेतुना स्वयमौषधमन्तरेण यो विरिच्यते भिद्यते, तं नरं भेदनीयैर्भोज्यभक्ष्यैर्योजयेत्। दुर्बलः शोधित इति। दुर्बलादयः पिबेयुः। किमित्याह—यस्माद्विरेचनौषधं पुनः पुनः पीतं वरम्, अन्यथा बहु तीक्ष्णौषधं पीतं संशयावहं प्राणसन्देहकारि, तथा पुनः प्रयुक्तमौषधं बहूंश्चलान् दोषानल्पानल्पान् हरेत्। एवं बलहानिं विना दोषनिर्हारः कृतः स्यात् ॥ ४५—४८ ॥

दुर्बलस्य मृदुद्रव्यैरल्पान् संशमयेत् तु तान् ।
क्लेशयन्ति चिरन्ते हि हन्युर्वैनमनिर्हृताः ॥ ४९ ॥
मन्दाग्निं क्रूरकोष्ठञ्च सचारलवणैर्घृतैः ।
सन्धुक्षिताग्निं विजितकफवातञ्च शोधयेत् ॥ ५० ॥
रूक्ष-बह्वानिल-क्रूरकोष्ठ-व्यायाम-शीलिनाम् ।
दीप्ताग्नीनाञ्च भेषज्यमविरिच्यैव जीर्यति ॥ ५१ ॥
तेभ्यो बस्तिं पुरा दद्यात् ततः स्निग्धं विरेचनम् ।
शकृन्निर्हृत्य वा किञ्चित् तीक्ष्णाभिः फलवर्तिभिः ।
प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत् सुखम् ॥ ५२ ॥
विषाभिघात-पिटिका-कुष्ठ-शोफ-विसर्पिणः ।
कामला-पाण्डु-मेहार्तान् नातिस्निग्धान् विरेचयेत् ।
सर्वान् स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान् ॥ ५३ ॥
कर्मणां वमनादीनां पुनरप्यन्तरेऽन्तरे ।
स्नेहस्वेदौ प्रयुञ्जीत स्नेहमन्ते बलाय च ॥ ५४ ॥

---

दुर्बलस्येति । तुरवधारणे । दुर्बलस्य नरस्य मृदुद्रव्यैरल्पानेव तान् दोषान् सम्यक् शमयेत् । ते तु दोषा अनिर्हृताश्चिरमेनमातुरं क्लेशयन्ति हन्युर्वा अनिर्हृता मारयेयुः । मन्दाग्निमिति । मन्दाग्निं क्रूरकोष्ठञ्च नरं °सह चारलवणाभ्यां |वर्त्तन्ते|यानि घृतानि,| तैर्यथासंख्यमुद्दीपितानलं विजितकफवातञ्च शोधयेत् ॥ ४९ । ५० ॥

रूक्षेत्यादि । रूक्षादीनां भेषज्यमविरिच्यैव विरेचनमकृत्वैव परिणतिमेति । तेभ्यो रूक्षादिभ्यो पूर्वं बस्तिं दद्यात्, अनन्तरमेरण्डतैलबिन्दुघृतादिकं विरेचनं योजयेत् । अथवा फलवर्त्तिभिस्तीक्ष्णाभिः पुरीषं किञ्चिदल्पं निर्हृत्य निःसार्य स्निग्धं विरेचनं दद्यात् । किमिति बस्तिना अथवा तीक्ष्णाभिः फलवर्त्तिभिश्च किञ्चिच्छकृन्निर्हारः क्रियते इत्याह,—प्रवृत्तमिति । यस्मान् मलं प्रवृत्तं सन्तं किञ्चित् पतितं स्निग्धो विरेकः सुखं मलप्रेरणेन निर्हरेत् ॥ ५१ । ५२ ॥

विषेति । नातिशब्दोऽत्र ईषदर्थे, नातिशीतगुप्तमित्यत्र यथा । विषाद्यार्त्तानीषत् स्निग्धान् विरेचयेत् । सर्व्वानिति । सर्वानीषत्स्निग्धान् विषाद्यार्त्तादीन् स्नेहविरेकैः शोधयेत् । स्नेहभावितांश्च पुरुषान् रूक्षैर्विरेकैः शोधयेत् ॥ ५३ ॥

कर्म्मणामिति । वमनादीनां कर्मणामन्तरेऽन्तरे मध्ये मध्ये पुनरपि भूयः स्नेहस्वेदौ प्रयुञ्जीत । अन्ते च कर्मणां बलाय शरीरस्य बलाधानार्थं स्नेहं प्रयुञ्जीत । तदेषोऽर्थः

मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा * ।
स्नेहस्वेदैस्तथोत्क्लेश्य ह्रियते शोधनैर्मलः ॥ ५५ ॥
स्नेहस्वेदावनभ्यस्य कुर्यात् संशोधनन्तु यः ।
दारु शुष्कमिवानामि शरीरं तस्य दीर्यते ॥ ५६ ॥
बुद्धिप्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।
चिराच्च पाकं वयसः करोति संशोधनं सम्यगुपास्यमानम् ॥५७॥

इत्यष्टाङ्गहृदये सूत्रस्थाने अष्टादशोऽध्यायः ॥ १८ ॥

---

## ऊनविंशोऽध्यायः ।

अथातो बस्तिविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

योज्यः, आदौ स्नेहस्वेदौ ततो वमनं पुनः स्नेहस्वेदौ ततो विरेचनं पुनः स्नेहस्वेदौ ततोऽनुवासनं पुनः स्नेहस्वेदौ ततो निरूहबस्तिरिति ॥ ५४ ॥

किमित्येवं विधीयत इत्याह,—मल इति । मलो हि देहादुत्क्लेश्य पतनोन्मुखीकृत्य शोधनैर्विरेचनादिभिर्ह्रियते । कथमिव ? वाससो वस्त्राद् यथा स्नेहस्वेदैः । स्नेहस्वेदानभ्यासे दोषमाह,—स्नेहेति । यो नरः स्वेदस्नेहावनभ्यस्याऽशीलयित्वा शोधनं कुर्यात्तस्य शरीरन्दीर्यते । कथमिव ? आनामि आनमने काष्ठं शुष्कं यथा दीर्यते ॥ ५५ । ५६ ॥

साम्प्रतं संशुद्धेः फलमाह,—बुद्धिप्रसादमिति । यौवनादेः पाकः परिणाम इति । उपजातिर्वृत्तम् ॥ ५७ ॥

इति श्रीमद्गङ्गादत्तपुत्र श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां वमनविरेचनविधिरध्यायोऽष्टादशः ॥ १८ ॥

---

मलहरणार्थं पूर्वाध्याय उक्तः, बस्तिनापि मला निर्ह्रियन्त इति वमनविधेरनन्तरं बस्तिविधेरुपदेशो युक्त इत्याह,—अथात इति । बस्तिना दीयत इति बस्तिस्तस्य विधिः । शेषं पूर्ववद् व्याख्येयम् ॥ १ ॥

---

* उष्णादिभिर्यथोत्क्लेश्य ह्रियते वाससो मलः । तथैव वपुषः स्नेहस्वेदमाषतिलादिभिः ॥ इत्यधिकः पाठः ।

वातोल्वणेषु दोषेषु वाते वा बस्तिरिष्यते।
उपक्रमाणां सर्वेषां सोऽग्रणीस्त्रिविधश्च सः ॥ २ ॥
निरूहोऽन्वासनो बस्तिरुत्तरस्तेन साधयेत्।
गुल्मानाह-खुड़-प्लीह-शुद्धातीसार-शूलिनः ॥ ३ ॥
जीर्णज्वर-प्रतिश्याय-शुक्रानिलमलग्रहान्।
वर्ध्माश्मरीरजोनाशान् दारुणांश्चानिलामयान् ॥ ४ ॥
अनास्थाप्यास्त्वतिस्निग्धः चतोरस्को भृशं कृशः।
आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥ ५ ॥
कास-श्वास-प्रसेकार्शो-हिक्काध्मानाल्पवर्चसः।
शूनपायुः कृताहारो बद्धच्छिद्रोदकोदरी।
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ॥ ६ ॥

---

वातेति। वात उल्वणोऽधिको येषां दोषाणां तेषु बस्तिरिष्यते आचार्यैरिति शेषः। तत्र वातपित्ते वातश्लेष्मणि अथवा केवले वायौ बस्तिरिष्यते। उपक्रमाणां चिकित्सानां सर्वेषां स बस्तिरग्रणीः प्रधानतमः। स च त्रिप्रकारः, तदेव त्रैविध्यमाह,—निरूहोऽन्वासनो बस्तिरुत्तर इति। यदा तूत्तरेण मार्गेण मेढ्रादिना दीयते इत्युत्तरबस्तिः। तेनेति। तेनेत्यनेन निरूहः परामृश्यते। कथमिति चेत् ब्रूमः, अनास्थाप्यास्त्वधीते। तत्र के निरूह्या इत्यपि ते सन्त्यतानिरूह्याः पुनरिमे प्रतिवक्तुं युज्यन्ते। अपिच, आस्थाप्या एव चान्वास्या इति पठन्ति केचिदास्थाप्या इति न गम्येत यदीह निरूहो न परामृश्येत; तस्मात्तेनेत्यनेन निरूहस्य ग्रहणं न्याय्यम्। तेन निरूहेण गुल्मादींस्तथा जीर्णज्वरादीन् कृच्छ्रान् वातरोगांश्चोपक्रमेत्। गुल्मादीनां शूलान्तानां द्वन्द्वे इनिः कार्यः। शुक्रादीनां ग्रहेण सम्बन्धः। शुक्रग्रहो रेतोविबन्धः; अनिलग्रहो वायोरसञ्चारः; रजोनाशः स्त्रियः पुष्पनाशः ॥ २—४ ॥

अनास्थाप्या इति। अतिस्निग्धादयः सप्तममासगर्भिण्यन्ता अनास्थाप्या अनिरूह्याः। वमिमान् प्रसक्तच्छर्दिः। बद्धादेरुदरेण सम्बन्धः, तत इनिर्मत्वर्थीयः। यद्यातिसारिण आस्थाप्या इत्यनेनामातिसारिणोऽनास्थाप्यत्वे लब्धे, पुनर्वचनमतिप्रमाथित्वेनामातिसारिणः कथञ्चिदप्यनास्थाप्या इति। तत्रातिस्निग्धस्य दोषानुत्क्लेश्य निरूहः श्वयथुमुदरञ्च जनयेत्। चतोरस्ककृशयोः चोभव्यापन्नं शरीरमाशु पीडयेत्। आमातिसारिणो दोषस्य सम्यगनिर्हरणाद्देहस्य चामत्वादतिपीडां कुर्यात्। प्रसक्तच्छर्दिषो दोषोत्क्लेशी निरूहमूर्ध्वं नयेत्। कृतवमनविरेकयोः सुरिक्तं देहं चतं चार इव दहेत्। कृतनस्यस्य विवृतोर्ध्वस्रोतस्तया विभ्रंशं कुर्यात्। कासश्वासादीनामुत्क्लिष्टदोषत्वान्निरूह ऊर्ध्वं व्रजेत्। अर्शःप्रभृतीनां भृशतरमाध्मानान्मृत्युर्वा स्यात्। अल्पवर्चस्कादीनां स्तम्भजाड्यादीनावहेत्। गर्भिण्याः पूर्वोक्ता एव दोषाः ॥ ५। ६ ॥

आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥
रूक्षाः केवलवातार्ता नानुवास्यास्त एव च ॥ ७ ॥
येनास्थाप्यास्तथा पाण्डु-कामला-मेह-पीनसाः।
निरन्नप्लीहविड्भेदि-गुरुकोष्ठकफोदराः ॥ ८ ॥
अभिष्यन्दिभृशस्थूलकृमिकोष्ठाढ्यमारुताः।
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ॥ ९ ॥
तयोस्तु नेत्रं हेमादि-धातुदार्वस्थिवेणुजम्।
गोपुच्छाकारमच्छिद्रं श्लक्ष्णजु गुलिकासुखम् ॥ १० ॥
ऊनेऽब्दे पञ्च पूर्णेऽस्मिन्नासप्तस्यङ्गुलानि षट्।

---

आस्थाप्या इति। य एव आस्थाप्यास्त एवानुवास्याः। आङ्पूर्वात्तिष्ठतेर्णिजन्तादनुपूर्वाच्च वसतेरर्हार्थे ण्यत्। विशेषेणातिवह्न्यादयोऽनुवास्याः। येनेति। त एवेति य एवानास्थाप्या अनिरूह्यास्ते चापि नानुवास्याः, तथा पांड्वादयो नानुवासनार्हाः। एतेषां हि दोषानुत्क्लेश्य स्नेहबस्तिरुदरं जनयेत्। निरन्नस्यानुवासनात् स्नेहविपत्तिः। तथाचोक्तं खरनादेन,—"अभुक्तवतस्य तथा स्नेहो बस्तिर्विपद्यते" इति। प्लीहादीनां स्तम्भजाड्यादीनावहेत्। कृमिकोष्ठस्यानुवासनादयः पूर्वमनिर्हृताः कृमिभिरतिबहुत्वादशेषानिःसरणेन हृदयमतिकर्षद्भिष्कर्हयेयुः। आढ्यमारुतस्य सस्नेहदोषानिर्हरणादामवृद्धिः। पीते विषे गरे च नानुवास्या इति योज्यम्। अपच्यां च क्रमेण श्लीपदीतीनिर्गलगण्डवानिति मतुप्। अपच्यादयो नानुवास्या इति। संग्रहे चोक्तम्,—"अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम्। सरत्वस्य सूक्ष्मत्वात् क्षिप्रमूर्ध्वं प्रपद्यते॥ तेन वायोर्जयो न स्याद्वातधामन्यतिष्ठता। कायाग्निराशनाशश्च विशेषादनिवर्त्तनात्॥ स्नेहः सद्योऽग्निताहाररहितामाशयेऽनिलम्। पक्वस्थं हन्ति पक्वश्चयावते चान्नपाकतः॥ निरूहस्य समीरस्य तीक्ष्णवेगावुभावपि। तावन्न मूर्छितौ तीक्ष्णावधोऽन्नेन सहागतौ॥ ऊर्ध्वं वा शक्ततासाद्ध संस्थितौ कोष्ठ एव वा। समलाहारविष्टम्भौ हरेतामाशु जीवितम्। भुक्तवाननुवास्योऽस्मान्न निरूह्यो ह्यभुक्तवान्" इति ॥ ७—९ ॥

निरूहान्वासनयोर्यन्त्रस्य लक्षणमाह,—तयोरिति। तयोर्निरूहान्वासनयोर्नेत्रं भवति। नीयते प्राप्यते स्नेहकल्कादयपानमिति नेत्रम्। नेवेति णेः ष्ट्रन्प्रत्ययः। किम्भूतं नेत्रम्? हेमादीति। आदिशब्दः प्रकारे; तेन रूप्य-रीतिकाऽयस्कांस्य-त्रपु-सीसादयो गृह्यन्ते। दारु शिंशपादिकाष्ठम्; अस्थि गजादेः; वेणुर्वंशः। एतेषां द्वंद्वः। एभ्यो जातं तयोर्निरूहान्वासनयोर्नेत्रं भवति। किम्भूतम्? गोपुच्छाकारम्। गोपुच्छ इवाकारो यस्य तत्। तथा अच्छिद्रं निर्विवरं तथा श्लक्ष्णं कोमलं तथाप्रज्ञु अवक्रम्। गुलिकासदृशमतीक्ष्णं मुखं यस्य तदेवम् ॥ १० ॥

अथास्य प्रमाणमाह,—ऊने इति। अपूर्णे वर्षे नेत्रस्य पञ्चाङ्गुलानि। आतुराङ्गुल-

सप्तमे सप्त तान्यष्टौ द्वादशे षोड़शे नव ॥ ११ ॥
द्वादशैव परं विंशात् वीच्य वर्षान्तरेषु च ।
वयोबलशरीराणि प्रमाणमभिवर्धयेत् ॥ १२ ॥
स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ॥ १३ ॥
पूर्णेऽब्दे ऽङ्गुलमादाय तदर्द्धार्द्धप्रवर्द्धितम् ।
त्र्यङ्गुलं परमं छिद्रं मूलेऽग्रे वहते तु यत् ।

---

प्रमाणमिति गम्यते। दर्घ्येण चेत्येतदप्यनुक्तं गम्यते। वक्ष्यति हि,—"स्वाङ्गुष्ठेन समं मूले स्थौल्येन" इति। आसप्तभ्यः सप्तवर्षाणि मर्यादीकृत्य षडङ्गुलानि प्रमाणम्। आङत्र मर्यादायां नाभिविधौ; तेन षड्वर्षबाले षडङ्गुलानि नेत्रम्; अन्यथा सप्तवर्षस्यापि षडेवेति प्राप्नोति। वक्ष्यति तु,—"सप्तमे सप्त" इति। एवं च पूर्वापरं व्याहतं स्यात्; तस्मान्मर्यादायामाङित्यवेहि। सप्तमे वर्षे सप्ताङ्गुलानि। द्वादशे वत्सरे तान्यङ्गुलान्यष्टौ नेत्रम्। द्वादशानां पूरणइति तस्य पूरणे डडिति डट्। एवं षोडशे इत्यत्र षोडशसम्वत्सरे नवाङ्गुलानि नेत्रम्। विंशाद्वत्सरात्। तस्मादूर्द्ध्वमेकविंशतिप्रभृतिवर्षेषु द्वादशाङ्गुलानि नेत्रम्। नातोऽप्यधिकानीत्येवशब्दार्थः। विंशतिशब्दात्पूरणे डडिति विंशतेडितीति तिलोपाद्विंशशब्दः। वीक्ष्य इति वर्षान्तरेषु अन्तरालावच्छिन्नेषु वर्षेषु नवमदशमादिषु वीक्ष्य पर्यालोच्य नेत्रस्य प्रमाणमभिवर्धयेत्। चशब्दो भिन्नक्रमः। न केवलं वर्षान्तरेषु प्रमाणमभिवर्धयेत्, यावद्वयोबलादीनि निरूप्य प्रमाणं चाभिवर्धयेत् ॥ ११ । १२ ॥

स्वाङ्गुष्ठेनेति। स्थौल्येन परिणाहेन स्वाङ्गुष्ठेन तुल्यं मूले नेत्रं, तथाऽग्रं प्रान्तस्मिन् कनिष्ठयाऽङ्गुल्या समं नेत्रं स्यात्। खरनादेनाप्युक्तम्,—"वस्तिनेत्रमृजु श्लक्ष्णं सद्वृत्ताङ्गुलिकामुखम्। भवेद्गोपुच्छसंस्थानं सुप्रवाहं त्रिकर्णिकम् ॥ या त्रिभागप्रणयने मर्यादा कर्णिका भवेत्। द्वे कर्णिके चोपरिष्टाद्वस्त्याधारेऽग्रवान्तरे ॥ स्वाङ्गुष्ठकपरीणाहं मूलं नेत्रस्य शस्यते। मध्यं त्वनामिकातुल्यमग्रं तुल्यकनिष्ठिकम् ॥ स्वेनाङ्गुलिप्रमाणेन दैर्घ्यं स्याद् द्वादशाङ्गुलम्। कर्कन्धुप्रवहच्छिद्रं श्रेष्ठमन्यद्यथावयः ॥ विंशद्वादशषड्वर्षे द्वादशाष्टषडङ्गुलम्। कर्कन्धुकसतीनाग्रमूलच्छिद्रवहम्" इत्यादि ॥ मुनिरप्यवोचत्;—"षड्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिर्द्वादशवर्षजानाम्। स्युर्मुद्गकर्कन्धुसतीनवाहि च्छिद्राणि वर्त्त्याः पिहितानि चैव। यथावयोङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति" इति ॥ १३ ॥

अधुना बिन्दुद्वारेण नेत्रस्थौल्यप्रमाणमधिकं दर्शयन्नाह,—पूर्णे इति। वर्षे पूर्णे सत्यङ्गुलमादाय स्वाङ्गुलात्प्रभृति क्रमेण त्र्यङ्गुले छिद्रं मूले नेत्रस्य भवति। किम्भूतं छिद्रम्? अर्धस्यार्धमर्द्धार्द्धम्। तस्याऽङ्गुलस्यार्द्धार्द्ध तेन प्रवर्द्धितं। तत्र प्रथमे वर्षेऽङ्गुलमात्रं छिद्रं यावद् वर्षाणि षट्; सप्तमे वर्षे सपादमङ्गुलं यावदेकादश; द्वादशे वर्षे सार्द्धमङ्गुलं यावत् षोडश वर्षाणि; षोडशे वर्षे पादोनमङ्गुलद्वयम्; सप्तदशे वर्षेऽङ्गुल-

मुद्गं माषं कलायञ्च क्लिन्नं कर्कन्धुकं क्रमात् ॥ १४ ॥
मलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम् ।
वर्त्त्याग्रे पिहितं मूले यथास्वं द्व्यङ्गुलान्तरम् ॥ १५ ॥
कर्णिकाद्वितयं नेत्रे कुर्यात् तत्र च योजयेत् ।
अजाविमहिषादीनां वस्तिं सुमृदितं दृढम् ॥ १६ ॥
कषायरक्तं निश्छिद्र-ग्रन्थिगन्धशिरं तनुम् ।
ग्रथितं साधु सूत्रेण सुखसंस्थाप्यभेषजम् ॥ १७ ॥
वस्त्यभावेऽङ्कपादं वा न्यसेद्वासोऽथवा घनम् ॥ १८ ॥

---

द्वयम् ; अष्टादशे वर्षे सपादमङ्गुलद्वयम् ; एकोनविंशवर्षे सार्द्धमङ्गुलद्वयम् ; विंशतिवर्षस्य पादोनमङ्गुलित्रयम् ; एकविंशतिवर्षस्य त्र्यङ्गुलं छिद्रमिति क्रमो वेद्यः । परममित्यनेनैतद्गमयति,—परममुत्कर्षमाश्रित्येदं मूलच्छिद्रम् ; मध्यमन्तु यत्तच्छिद्रं स्वाङ्गुष्ठेनेत्यनेनोक्तम् । ऊनवर्षस्य त्वर्धाङ्गुलं छिद्रमेतदपेक्षया कल्प्यम् । अग्रे तु छिद्रं तद्भवति यन्मुद्गादि वहति । तत्र वार्षिकस्य मुद्गवाहि यावत् षड्वर्षम् । सप्तवर्षस्य माषवाहि यावदेकादशोऽब्दः ; द्वादशवर्षस्य कलायवाहि ; षोडशवर्षस्य स्विन्नकलायवाहि ; एकविंशतिवर्षस्य कर्कन्धुवाहीति क्रमाद् वयःप्रमाणम् । ऊनवर्षस्य च न मुद्गादिवाहि कल्प्यम् । अग्रच्छिद्रप्रमाणं चैतदग्रे कनिष्ठयेत्यत्रापि सङ्गच्छत एव । दैर्घ्यप्रमाणं चात्र पक्षे पूर्वमेव योज्यम् । स्वाङ्गुष्ठेन समं मूले स्थौल्ये प्रमाणत्वेत्यमेन च्छिद्रप्रमाणं स्वमत्या भिषजा प्रकल्प्यम् । तथा त्र्यङ्गुलं परमं छिद्रमित्यत्र स्थौल्यप्रमाणं स्वधियैव निरूप्यम् । तन्त्रकृता तु ग्रन्थगौरवभयादुक्तप्रायत्वाच्चेह नोक्तम् ॥१४ ॥

मूलेत्यादि । मूले यच्छिद्रमुक्तं तत् प्रमाणेन घटिता सम्पादिता कर्णिका छत्राकारा गुदाधिकान्तःप्रवेशरोधिनी यस्मिंस्तदेवम् । तथा वर्त्त्या दशादिकृतया प्रान्ते पिहितं स्थगितम् । मूले यथास्वमूनवर्षादिकस्य तदङ्गुलप्रमाणेन द्व्यङ्गुलान्तरं कर्णिकायुगलं मूलप्रदेशे नेत्रे विदधीत, वस्तिपुटयोजनार्थम् । अतएवाह,—तत्रेत्यादि । तस्मिंश्च कर्णिकाद्वितये अजादीनां वस्तिं योजयेत् । आदिशब्देन गोहरिणवराहमहिषाणां ग्रहणम् । अजादीनामित्येवं निर्देशेऽप्यविमहिषग्रहणे लब्धे साक्षादेतयोर्ग्रहणमन्यजेभ्य एतद्वस्तेर्योग्यतरत्वप्रतिपादनार्थम् । किम्भूतं वस्तिम् ? सुमृदितं सस्नेहं मुहुः सुष्ठु मर्दितं, तथा दृढं, तथा कषायेण हरीतक्यादिना रक्तं, तथा छिद्रञ्च ग्रन्थिश्च गन्धश्च शिराश्च ताः निर्गता न सन्ति यस्य तन्निश्छिद्रग्रन्थिगन्धशिरम् । तथा तनुं न स्थूलं तथा साधु सम्यक् सूत्रेण ग्रथितं बद्धं, तथा सुखेनाकृच्छ्रेण संस्थापनीयमौषधं यत्र तदेवम् ॥ १५—१७ ॥

वस्त्यभावे इति । वस्तेरभावे सति अङ्कपादं छागणाद्यवयवविशेषं वा न्यसेत् नेत्रे योजयेत् । अथवा वस्त्रं घनं न्यसेत् । निरूहेति निरूहस्य मात्रा प्रथमे वर्षे

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरात्परम् ।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत्षट्प्रसृतास्ततः ॥ १९ ॥
प्रसृतं वर्द्धयेदूर्द्ध्वं द्वादशाष्टादशस्य च ।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ २० ॥
यथायथं निरूहस्य पादो मात्रानुवासने ॥ २१ ॥
आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः ।
अन्वासनार्हं विज्ञाय पूर्वमेवानुवासयेत् ॥ २२ ॥
शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा ।
अभ्यक्तस्नातमुचितात्पादहीनं हितं लघु ॥ २३ ॥
अस्निग्धरूक्षमशितं सानुपानं द्रवादि च ।
कृतचंक्रमणं मुक्तविण्मूत्रं शयने सुखे ॥ २४ ॥

---

कषायस्नेहसहितस्य प्रकुञ्चः पलप्रमाणम् । षण्मासादौ त्वेतदनुसारेणार्धपलादि कल्प्यम् । वर्षात् परं प्रकुञ्चवृद्धि प्रतिसम्वत्सरं कार्या यावत् षट् प्रसृता द्वादश पलानि । तत ऊर्द्ध्वं प्रसृतं वर्द्धयेत् । प्रत्यब्दमित्यनुवर्तते । ततो द्वादशवर्षस्यैव द्वादशपलानि । अनन्तरं त्रयोदशवर्षादिषु प्रतिवर्षं पलद्वयं निरूहमात्रायां वर्द्धयितव्यं क्रमेणैव यावत् सप्तदशवर्षाणि । अष्टादशवर्षस्य तु द्वादश प्रसृताश्चतुर्विंशतिपलानि । इदं मानप्रमाणं सप्ततिवर्षाणि यावत् । परं सप्ततेरूर्द्ध्वं दशैव प्रसृता मानं नाधिकम् ॥ १८—२० ॥

एवं सांवत्सरिकादारभ्य यावद् वर्षशतिकस्तावन्निरूहमात्रामभिधाय अनुवासनमात्रामधिकृत्याह,—यथायथमिति । यथायथं यथास्वं वार्षिकस्य एकविंशतिवत्सरादेर्वा निरूहस्य पादश्चतुर्भागो मात्रानुवासने अनुवासनविषये मात्रा । यस्य पलं निरूहस्तस्य कर्षप्रमाणमनुवासनमित्यर्थः । एवं सर्वत्र कल्प्यम् ॥ २१ ॥

आस्थाप्यमिति । आस्थाप्यं निरूहणार्हं स्निग्धं तथा स्विन्नं तथा शुद्धमूर्द्ध्वाधस्तथा भूयोऽपि लब्धबलं तथानुवासनयोग्यं विदित्वा पूर्वमेव निरूहादनुवासयेत् । शीते हेमन्तशिशिरयो ऋर्त्वोस्तथा वसन्ते दिवाऽनुवासयेत् । केचिदाचार्या अन्यदाशीताद् वसन्ताच्चान्यस्मिन् ग्रीष्मप्रावृट्शरदाख्ये ऋतौ रात्रावनुवासयेत् । केचिदिति भिन्नक्रमः, ततोऽन्यदेत्यतोऽनन्तरं द्रष्टव्यः ; इति केचिदाहुरिति वाक्यशेषः । धान्वन्तरास्तु सर्वथैव रात्रावनुवासनं नेच्छन्ति । धन्वन्तरिमतमधिकृत्य संग्रहेऽभिजगौ,—"न रात्रौ प्रणयेत् वस्तिं दोषोत्क्लेशो हि रात्रिजः । स्नेहो वीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम्" इति । तदेवं तद्देशान्तरादिवशात् प्रमाणयितव्यम् । किम्भूतं नरम् ? अभ्यक्तस्नातं पूर्वमभ्यक्तः पश्चात् स्नातः । पूर्वकालेति समासः । उचितात् यदर्थेन भोजनमभ्यस्तं

नातुग्रच्छ्रिते नचोच्छीर्षे सम्विष्टं वामपार्श्वतः ।
सङ्कोच्य दक्षिणं सक्थि प्रसार्य्य च ततोऽपरम् ॥ २५ ॥
अथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे ।
उच्छ्वास्य वस्तेर्वदने बद्धे हस्तमकम्पयन् ॥ २६ ॥
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम् ।
नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ॥ २७ ॥
सावशेषञ्च कुर्वीत वायुः शेषे हि तिष्ठति ॥ २८ ॥
दत्ते तूत्तानदेहस्य पाणिना ताडयेत् स्फिचौ ।
तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ २९ ॥
ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।
आहन्यान्मुष्टिनाङ्गञ्च स्नेहेनाभ्यज्य मर्द्दयेत् ॥ ३० ॥

---

यथाचतुर्थभागहीनमशितं, तथा हितं लघुगुणयुक्तं, तथा किञ्चित् स्निग्धरूक्षं, तथा सानुपानं द्रवादि च। आदिशब्देन द्रवोष्णमनभिष्यन्दीत्यादिविशिष्टं भुक्तवन्तमिति गमयति। उक्तञ्च संग्रहे,—"अतिस्निग्धाशिनो ह्युभयमार्गात् स्नेहो मदमूर्च्छाग्निसादहृल्लासादीन् जनयति। रूक्षाशिनो विष्टम्भं बलवर्णहानिञ्च। अल्पमात्रद्रवाशिनो विसृष्टविण्मूत्रस्य चाऽन्नावृतो न, तदावरणात् व्यापदमिति। किम्भूतम् ? कृतचंक्रमणं तथा त्यक्तमूत्रपुरीषं तथा शयने सुखावहे सम्विष्टं स्थितम्। किम्भूते ? नातुग्रच्छ्रिते नातुग्रन्नते नचोच्छीर्षे त्यक्तोच्छीर्षे। कथं सम्विष्टम् ? वामपार्श्वतो वामपार्श्वेन। सङ्कोच्य दक्षिणं सक्थि वामसक्थ्न उपरीति ह्रस्ववेद्याः। ततो दक्षिणसक्थ्नोऽपरं वामं सक्थि प्रसार्य। संग्रहे चोक्तम्,—"शयने नात्युच्छ्रिते स्वास्तृते ईषदुन्नतपाददेशे वामपार्श्वेन प्राक्शिरसं सम्वेशयेत्" इति ॥ २२—२५ ॥

अथेति। अस्यवम्भूतावस्थस्यातुरस्य गुदे स्निग्धे कृते वस्तेर्वदने उच्छ्वासवातं निःसार्य्य बद्धे सति नातिशीघ्रं नातिविलम्बितं नातिवेगं न वा मन्दं, तथा पृष्ठवंशाभिमुखमेकवारमेव नेत्रं स्निग्धप्रान्तं प्रपीडयेत् कथं प्रपीड़येत् ? हस्तमकम्पयन्। अतद्रुतादिपीडनदोषा वस्तिव्यापदि वक्ष्यमाणाः। सावशेषमिति। सावशेषञ्च स्नेहं कुर्वीत। कुतो हेतोरित्याह,—यस्मात् शेषे स्नेहे वायुस्तिष्ठति ॥ २६—२८ ॥

दत्त इति। दत्ते चातिस्नेहे सत्युत्तानगात्रस्य तु तस्य स्फिचौ हस्तेनाहन्यात्; तथा तेनैव प्रकारेण तत् पार्ष्णिभ्यां स्फिचौ ताडयेत्। शय्यां खट्वां पादतश्चरणदेशात् त्रीन्वारानुत्क्षिपेन्न तु मूर्द्धतः ॥ २९ ॥

तत इति। ततः शय्योत्क्षेपादनन्तरं प्रसारितशरीरस्य दत्तगेन्दुकस्य पार्ष्णिके पार्ष्णद्वौ मुष्टा हन्यात्। अङ्गं शरीरञ्च स्नेहेन तलादिनाभ्यज्य मर्द्दयेत्। किमेवं

वेदनार्त्तमिति स्नेहो न हि शीघ्रं निवर्त्तते ।
योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्न कार्य्यकृत् ॥२१॥
दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु ॥ २२ ॥
निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ।
अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।
तीक्ष्णैर्वा बस्तिभिः कुर्याद् यत्नं स्नेहनिवृत्तये ॥ ३३ ॥
अतिरौक्ष्यादनागच्छन्न चेज्जाड्यादिदोषकृत् ।
उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिवेत् ।
प्रातर्नागरधान्याम्भः कोष्णं केवलमेव वा ॥ ३४ ॥
अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ।
यथा वा स्नेहपक्तिः स्यादतोऽतुरल्बणमारुतान् ।
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥ २५ ॥
इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ २६ ॥

---

क्रियत इत्याह,—अङ्गं वेदनार्तं पीडातुरमिति हेतोर्यस्मादाशु स्नेहो न निवर्त्तते । शीघ्रमपयाते च स्नेहे सत्यपरः स्नेहो देयः । कस्मादेवं विधीयत इत्याह,—स्नेहश्च शरीराभ्यन्तरे अतिष्ठन्नेव कार्यकृन्न स्नेहने समर्थ इत्यर्थः ॥ ३० । ३१ ॥

दीप्तेति । दीप्ताग्निं तु पुरुषं निवृत्तस्नेहं सन्तं लघुमात्रया स्वभावतश्चाशयेत् । निवृत्तौति । स्नेहस्य त्रयः प्रहराः परो निवृत्तिकालः । ततः प्रहरत्रयात् परतो रात्रिन्दिवमुपेक्षेत । न तदाकर्थ्ये यत्नं कुर्यात् । परतोऽहोरात्रात् फलवर्त्तिभिरर्श-श्चिकित्सितोक्ताभिरथवा तीक्ष्णैर्बस्तिकल्पोक्तैर्बस्तिभिः स्नेहागमनाय यतेत ॥ ३२ । ३३ ॥

अतीति । अतिरौक्ष्यादनागच्छन् स्नेहो यदि जाड्याग्निसादादिदोषान्न विधत्ते, तदुपेक्षेतैव न निष्कासने यतेतेत्यर्थः ; ततो निशां रात्रिमध्युषितः पुमान् प्रातः प्रभाते शुण्ठीधान्याम्बु कदुष्णं पिबेत् केवलमेव वा नागरधान्यकरहितं कोष्णं जलं पिबेत् ॥३४॥

अन्वासयेदिति । तमातुरं भूयस्तृतीये दिवसे पञ्चमे वाऽनुवासयेत् । अथवा यथा स्नेहपाको भवेदित्यग्न्यपेक्षया समरात्रेऽधिके न्यूने वा त्रिरात्रे वा यथायोगमनु-वासयेत् । अतोऽस्मादेव हेतोरधिकपवनान् व्यायामशीलानत्यग्निदीप्तान् रूक्षांश्च पुरुषान् प्रत्यहमनुवासयेत् ॥ २५ ॥

इतीति । इति पूर्वोक्तेन प्रकारेण स्नेहैस्त्रिचतुरैर्वा स्निग्धे सति स्रोतोविशोधनाय निरूहं शोधनं प्रयोजयेत् । अस्निग्धे सति तनोः शरीरस्य स्नेहनं प्रयोजयेत् । त्रयो

पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥ ३७ ॥
अभ्यक्तस्वेदितोत्सृष्ट-मलं नातिबुभुक्षितम् ।
अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ।
बस्तिं प्रकल्पयेद् वैद्यस्तद्विदैर्बहुभिः सह ॥ ३८ ॥
क्वाथयेद् विंशतिपलं द्रव्यस्याष्टौ पलानि च ॥ ३९ ॥
ततः क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।
पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफाधिके ॥ ४० ॥

---

वा चत्वारो वा त्रिचतुराः । सङ्ख्ययाव्ययेति समासः । चतुरोऽच् प्रकरणे तुत्रपाभ्यामुपसङ्ख्यानमित्यच्समासान्तः ॥ ३६ ॥

पञ्चमे इति । अथानुवासनादनन्तरं तृतीये पञ्चमे वा वासरे मध्याह्ने किञ्चिदावृत्तेऽतिक्रान्ते, तथा बलिमङ्गले विहिते सति पुरुषं कृताभ्यक्तस्वेदितं त्यक्तमलं किञ्चिद् बुभुक्षितं, तथा प्रकृत्यादिभिर्ज्ञात्वा दोषादीन् विदित्वा । आदिशब्देन सात्म्यबलादिपरिग्रहः । इत्येवं सर्वमधिगत्य वैद्यो बस्तिं प्रकल्पयेत् । ननु दूष्यं देशमित्यादिना सर्वमुक्तमेवैतत्तत् किमनेनेति । ब्रूमः; निरूहमपि सापायं पश्यताचार्येणैतदुक्तम्,—"दूष्यदेशादि महता यत्नेनालोचनीयम्" इति प्रतिपादनार्थं निरूहमात्राप्रथममित्यादि सर्वमालोच्यम् । कथं प्रकल्पयेदित्याह,—तद्विदैर्वैद्यकशास्त्रज्ञैर्बहुभिः सह सार्द्धम् ॥ ३७ । ३८ ॥

अथ निरूहकल्पनामाह,—क्वाथयेदिति । द्रव्यस्य बस्तिकल्पोक्तस्य निरूहकल्पनाथ विंशतिपलानि, तथा अष्टौ पलानि मदनफलानि सामान्यपरिभाषया षोडशगुणं जलं दत्त्वा क्वाथयेत् । चतुर्भागावशेषश्च ग्राह्यः ॥ ३९ ॥

तत इति । तस्मादेवंकृतात् क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् । द्वादशप्रसृतो हि निरूहः । तत्र स्नेहं षट्पलिकं कल्पयेदित्यर्थः । पित्तेऽधिके स्वस्थे च पुरुषे षष्ठांशं स्नेहं चतुष्पलिकं प्रकल्पयेदिति प्रकृतम् । कफेऽधिके स्नेहमष्टमांशं त्रिपलिकं प्रकल्पयेत् । सर्वत्र च वातपित्तकफेष्वधिकेषु स्वस्थवृत्तेऽप्यष्टमं भागं त्रीणि पलानि कल्कस्य प्रयोजयेदिति प्रकृतम् । ननु स्वस्थस्य दोषचालनं प्रतिषिद्धं तन्त्रान्तरीयः । तद्ग्रन्थो हि,—"यो हि सञ्चालयेत् सुप्तं वने सिंहं करादिभिः । सदोषांश्चालयेत् स्वस्थान् प्रच्छर्दनविरेचनैः" इति । तस्मात् स्वस्थे निरूहस्य कल्पना न युक्तेति । तदेतदसत् । यस्मात् प्रागभिहितम् । "शीतोद्भवं दोषचयं वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले । घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जातिति" । तस्मादाचार्यवचनाज्ज्ञायते स्वस्थवृत्तेरपि शुद्धिविधानं सम्मतमिति । तन्त्रकृतस्तन्त्रान्तरीयं शिष्टव्यवहारविरुद्धत्वात् ॥ ४० ॥

सर्वत्र चाष्टमं भागं कल्काद्भवति वा यथा ।
नात्यच्छसान्द्रता बस्तेः पलमात्रं गुडस्य च ॥ ४१ ॥
मधुपट्वादिशेषञ्च युक्त्या सर्वं तदेकतः ।
उष्णाम्बुकुम्भीबाष्पेण तप्तं खजसमाहतम् ॥ ४२ ॥
प्रक्षिप्य बस्तौ प्रणयेत् पायौ नात्युष्णशीतलम् ।
नातिस्निग्धं न वा रूक्षं नातितीक्ष्णं न वा मृदु ॥ ४३ ॥
नात्यच्छसान्द्रं नोनातिमात्रं नापटु नाति च ।
लवणं तद्वदम्लञ्च पठन्त्यन्ये तु तद्विदः ॥ ४४ ॥
मात्रां त्रिपलिकां कुर्यात् स्नेहमाक्षिकयोः पृथक् ।
कर्षार्द्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ॥ ४५ ॥
सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत् ।
माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ।
आवपेत निरूहाणामेष संयोजने विधिः ॥ ४६ ॥

---

सर्वत्रेति । सर्वत्र वाते पित्ते कफे च कल्कात् पेष्यद्रव्यादष्टमं भागं त्रीणि पलानि कल्पयेत् । भवति वेत्यादि—यथा नात्यच्छता सान्द्रता बस्तेः । यथा वा बस्तिरत्यच्छोऽतिसान्द्रो वा घनो न भवति तथा कल्कः कल्पयितव्यः । पलमात्रमिति—पलमात्रं गुड़स्य चेति पित्ते तदधिकं नेतिज्ञापनार्थं मात्रग्रहणम् । मधुपट्वादिशेषञ्च युक्त्या प्रकल्पयेत् । तत्रेयं युक्तिः—माक्षिकस्य पलचतुष्टं सैन्धवस्य च कर्षः । तथा क्वचिद् यवक्षारस्य कर्षः । आदिग्रहणात् मांसरससुरासवमूत्रक्षीरकाञ्जिकानां ग्रहणम् । सर्वमिति । तदेतत् सर्वमौषधमेकत एकस्मिन् कृत्वा भेषजपाकातिक्रान्तिपरिहारार्थमुष्णाम्बुकुम्भीबाष्पेण तप्तं खजेन दर्व्या हननकाष्ठेन समाहतमालोड़ितं, तथा ब्रह्मदक्षेत्यादिना चाभिमन्त्रितं बस्तौ प्रक्षिप्य पायौ गुदे प्रणयेत् । नात्युष्णं नातिशीतलं नातिस्निग्धं न वा रूक्षं नातितीक्ष्णं न वा मृदु नात्यच्छं नातिसान्द्रं नातिघनं नोनमात्रं न अतिमात्रं नापटु नातिलवणं । तद्वदम्लं चेत्यादिना नात्यम्लम् । अतिशब्दप्रयोगादत्र मध्यमावस्थानुगमः । साम्प्रतमन्यमतमभिधत्ते,—पठन्तीत्यादि । तद्विदो बस्तिविद एवं पठन्ति—यथा, मात्रां त्रिपलिकां कुर्यादित्यादि । सम्प्रति निरूहावयवानां माक्षिकादीनां संयोजनविधिमाह, माक्षिकमित्यादि—माक्षिकादि क्रमादावपेत् कुण्डके माक्षिकं प्रथमं प्रक्षिप्य मर्द्दयेत् । ततस्तत्रैव लवणं क्षिप्त्वा मेलयेत् । ततो लवणं तत्रैव मर्द्दयित्वा मिश्रयेत् । एवं स्नेहं ततोऽनु कल्कं ततः क्वाथमित्यनेन क्रमेण मिश्रयेदित्यर्थः । एवं योजितानि द्रव्याणि समरसतां यान्ति । समरसभावेन निरूहस्य सम्यग्योगो भवति । निरूहाणां संयोजने मिश्रणे एष विधिरितद्विधानम् ॥ ४१—४६ ॥

उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत्।
कृतोपधानः सञ्जातवेगश्चोत्कटकः सृजेत् ॥ ४७ ॥
आगतौ परमः कालो मुहूर्त्तो मृत्यवे परम्।
तत्रानुलोमिकं स्नेह-क्षारमूत्राम्लकल्पितम् ॥ ४८ ॥
त्वरितं स्निग्धतीक्ष्णोष्णं बस्तिमन्यं प्रपीडयेत्।
विदध्यात् फलवर्तिं वा स्वेदनोत्त्रासनादि च ॥ ४९ ॥
स्वयमेव निवृत्ते तु द्वितीयो बस्तिरिष्यते।
तृतीयोऽपि चतुर्थोऽपि यावद् वा सुनिरूढ़ता ॥ ५० ॥
विरिक्तवच्च योगादीन् विद्यात् योगे तु भोजयेत्।
कोष्णेन वारिणा स्नातं तनु धन्वरसौदनम् ॥ ५१ ॥

---

उत्ताने इति। निरूहे दत्तमात्रे तु उत्तानः सन् तन्मना निरूहवेगे दत्तावधानस्तथा कृतोपधानः सन् तिष्ठेत्। समुद्गतवेगश्चोत्कटकः सन् त्यजेद्वेगमिति शेषः। आगताविति—आगतौ प्रत्यागमने कालः परमो मुहूर्त्तः। अपरस्तस्मात् मुहूर्त्तादन्यो विट्श्रद्धागमनकालो मृत्यवे मरणाय। तत्र तस्मात् मुहूर्त्तात् परम् अनागतनिरूहस्य त्वरितं अपरं बस्तिं निरूहं प्रपीड़येदिति सम्बन्धः। किम्भूतं निरूहम्? आनुलोमिकमनुलोमकरम्। स्नेहस्तथा क्षारो यवक्षारादिस्तथा मूत्रं गोमूत्रमम्लं तक्रकाञ्जिकादि तैः कल्पितं निर्व्वाहितम्। तथा स्निग्धञ्च तीक्ष्णमुष्णञ्च। स्नेहयोगादेव स्निग्धत्वे सिद्धे स्निग्धग्रहणं निरूहाणां स्निग्धतरत्वप्रतिपादनार्थम्। आनुलोमिकमित्यध्यात्मादित्वात् ठञ्। अथवा फलवर्त्तिं विदध्यात्। फलेन मदनफलेन युक्ता वर्त्तिः। सा च अर्शश्चिकित्सिते वक्ष्यमाणा। स्वेदनोत्त्रासनादि च इति—स्वेदनं स्वेदः उत्त्रासनं खड्गहस्तयोधदर्शनादिना कुपितनृपखड्गव्यग्रोग्रबाहुदर्शनादिना आकुलं कुर्यात् ॥ ४७—४९ ॥

स्वयमिति। फलवर्त्त्याद्यायासं विनापि निवृत्ते निरूहे सति द्वितीयो निरूह इष्यते। यत्नविशेषेण तु निरूहे निवृत्ते सति नान्यं बस्तिं प्रपीड़येदित्युक्तं भवति। तृतीयोऽपीति अपिः समुच्चये। एवं चतुर्थोऽपीति। यावद्वेति। पञ्चमादयोऽपि बस्तयो देया यावत् सम्यङ् निरूढ़त्वं स्यात् ॥ ५० ॥

कानि पुनः सम्यङ् निरूढलिङ्गानीत्याह,—विरिक्तेति। निरूहे विरिक्त इव योगादीन् विद्यात्। तत्र चोक्तम्,—"हृत् कुक्षिशुद्धिरित्यारभ्य यावद् भवन्त्यतिविरिक्तस्य तथातिवमनामया इति। योगे इति—योगे तु निरूहस्य सम्यग्योगे सति सुखोष्णजलस्नातं सन्तं भोजयेत्। किम्? धन्वरसो जाङ्गलरसस्य ओदनश्च तद्धन्वरसौदनम्। किम्भूतं धन्वरसौदनम्? तनु अघनम्। ननु यूषक्षीररसैः क्रमादिति वक्ष्यति, तत् कथमिहेदमनुपपद्यते? ब्रूमः, वातविकारशमनार्थो हि निरूहः प्रायेणेष्यते; तस्मिंश्च रसकौदनमेव पथ्यं श्रेयः। अग्रे च, दोषापेक्षया पथ्यं विशेषेणैवोपदेक्ष्यतेऽतो [नात

विकारा ये निरूहस्य भवन्ति प्रचलैर्मलैः ।
ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम् ॥ ५२ ॥
अथ वातार्द्दितं भूयः सद्य एवानुवासयेत् ।
सम्यग्घीनातियोगाश्च तस्य सुः स्नेहपोतवत् ॥ ५३ ॥
किञ्चित् कालं स्थितो यश्च सपुरीषो निवर्त्तते ।
सानुलोमानिलः स्नेहस्तत्सिद्धमनुवासनम् ॥ ५४ ॥
एकं त्रीन् वा बलासे तु स्नेहबस्तीन् प्रकल्पयेत् ।
पञ्च वा सप्त वा पित्ते नवैकादश वानिले ।
पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ५५ ॥

---

किञ्चिदनुपपन्नम् । ननु दोषनिर्हरणं वमनविरेकाभ्यां द्रवादेव क्रियते । तत्र पेयादिक्रमो युक्तस्तथेहापि युक्तः स्यात् । नैवम्, विरेकवमनाभ्यां हि वह्निस्थानमाच्छाद्यते तेनाग्निमान्द्यं भवति । निरूहस्तु नाभेरूर्द्ध्वमगच्छन्नेव दोषनिर्हरणं करोति । तेन नात्राग्निमान्द्यापत्तिः । तस्मान्नात्र पेयादिक्रमः । अपि च वातविकारविषयत्वाच्च रसौदनप्रायमेव पथ्यं युक्तम् ॥ ५१ ॥

विकारा इति । प्रकर्षेण चलैर्दोषैर्ये विकारा भवन्ति ते कोष्णसलिलस्नातस्य कृतभोजनस्य सतः शमं गच्छन्ति । अतएव तत् कार्य्यमिति भावः । अथेति—अथ निरूहादनन्तरं वातपीड़ितं पुरुषं सद्य एव तस्मिन्नेव दिने अनुवासयेत् । सम्यगिति—तस्यानुवासनस्य स्नेहपानस्येव सम्यग् योगादयः स्युः । स्नेहपीतस्येव स्नेहपीतवत् । षष्ठ्यन्ताद्वतिः ॥ ५२ । ५३ ॥

तत्र वातानुलोम्यमित्यादि घ्राणवक्त्रगुदस्रवा इत्युक्तं स्नेहपानं सम्यग् योगातियोगलक्षणम् । अन्यदनुवासनस्य सम्यग्योगलक्षणमाह,—किञ्चिदिति । चशब्दः पूर्वोक्तं सम्यग् योगलक्षणं समुच्चिनोति । किञ्चिदल्पमात्रं कालं कोष्ठाभ्यन्तरे स्थितः सन् सविट्कः सानुगुणपवनो निवर्त्तते निःसरति यः स एवम्भूतः स्नेहस्तत् सिद्धमभिमतकार्य्यकारि अनुवासनम् ॥ ५४ ॥

उक्तञ्च व्यस्तं समस्तं चेदं सिद्धानुवासनलक्षणम्,—एकमिति । स्नेहवस्तीनमुवासनानि एकं त्रीन् वा श्लेष्मविकारे प्रकल्पयेत् । कार्ये कारणोपचारादेवमुक्तम् । एवमग्रेऽपि चिन्त्यम् । पित्ते पञ्च स्नेहवस्तीनथवा सप्त दद्यात् । नव एकादश वायौ दद्यात् । ततः पुनरयुग्मान् स्नेहवस्तीन् दद्यात्, ततः पुनरप्यास्थापनं दद्यात् । अयुग्मवचनं देहबाहुल्येनायं व्यवहारो युक्त इति प्रतिपादयितुम् । वातार्त्तस्य तु युग्मा अपि देया एव । तथा चामुनैवाभ्यधायि । व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रति[illegible]मिति ॥ ५५ ॥

कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ॥ ५६ ॥
वातघ्नौषधनिःक्वाथस्त्रिवृतासैन्धवैर्युतः ।
बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णरसान्वितः ॥ ५७ ॥
न्यग्रोधादिगणक्वाथौ पद्मकादिसितायुतौ ।
पित्ते स्वादुहिमौ साज्य-क्षीरेक्षुरस-माक्षिकौ ॥ ५८ ॥
आरग्वधादिनिःक्वाथ-वत्सकादियुतास्त्रयः ।
रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ॥ ५९ ॥
त्रयस्ते सन्निपातेऽपि दोषान् घ्नन्ति यतः क्रमात् ॥ ६० ॥
त्रिभ्यः परं बस्तिमतो नेच्छंत्यन्ये चिकित्सकाः ।
न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ६१ ॥
उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।
त्रिधैवं कल्पयेद् बस्तिमित्यन्येऽपि प्रचक्षते ॥ ६२ ॥
दोषौषधादिबलतः सर्वमेतत् प्रमाणयेत् ॥ ६३ ॥
सम्यङ् निरूढलिङ्गन्तु नासम्भाव्य निवर्त्तयेत् ॥ ६४ ॥
प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च ।

---

कफेत्यादि । कृतास्थापनस्य च पथ्यं श्लेष्मपित्तपवनेषु यथासंख्यं यूषादिभिः सह अन्नमुपभोक्तव्यम् । वातघ्नेति—बस्तिर्निरूहोऽनिले वातविषये वातघ्नौषधानि दशमूलादीनि तेषां निःक्वाथो यवकादिसिद्धः सैन्धवैर्युतः, तथा स्निग्धो मधुराम्ललवणयुक्तः पवने हितः । न्यग्रोधेति—पित्ते मधुरशिशिरौ सघृतदुग्धेक्षुरसमधू द्वौ बस्ती हितौ । आरग्वधेति तथा आरग्वधेन्द्रयवेत्यादिकषायवत्सकमूर्वेत्यादिकषायाभ्यां युक्ता रूक्षा माक्षिकगोमूत्राभ्यां सहितास्तीक्ष्णादिगुणयुक्तास्त्रयो बस्तयः कफे हिताः ॥ ५६—५९ ॥

त्रयश्चेति । सन्निपाते त्रय एव बस्तयो हिताः । यस्मादेते त्रीन् दोषान् क्रमेण पराकुर्वन्ति । त्रिभ्य इति—अतएव हेतोस्त्रिभ्यो बस्तिभ्यः परमपरे भिषजो निरूहं नेच्छन्ति । यतस्त्रयो दोषास्त्रिभिर्बस्तिभिर्निवर्तिता इति चतुर्थो दोषो न विद्यते, यं लक्षीकृत्य भूयश्चतुर्थः पुटको दीयते । उत्क्लेशनमिति—अन्ये वैद्यास्तृतीयो बस्तिर्दोषाणां शमनं क्रमादित्यनया युक्त्या बस्तित्रयं कल्पयेदिति जगुः ॥ ६०—६२ ॥

तत्र किं क्रियतामित्याह,—दोषेति । तदत्र दोषभेषजसात्म्यादिवशात् सर्वमप्येतत् प्रमाणीकार्यम् । अथ पूर्वमतानुग्राहि स्वमतमाह,—सम्यगिति । सम्यङ्निरूढलिङ्गं त्वसम्भाव्यासम्पाद्य न निवर्तयेत् बस्तिदानं कारयेदेवेति ॥ ६३ । ६४ ॥

इदानीं कर्मकालयोगाख्यान् बस्तिविशेषानाह ;—प्रागिति । प्राक् पूर्वमेकः

सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ ६५ ॥
कालः पञ्चदशैकोऽत्र प्राक् स्नेहान्ते त्रयस्तथा ।
षट् पञ्च बस्त्यन्तरिता योगोऽष्टौ बस्तयोऽत्र तु ।
त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ॥ ६६ ॥
स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ॥ ६७ ॥
तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ॥ ६८ ॥
स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ॥ ६९ ॥
ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ।
मात्राबस्तिः स्मृतः स्नेहः शीलनीयः सदा च सः ॥ ७० ॥
बालवृद्धाध्वभारस्त्री-व्यायामासक्तचिन्तकैः ।
वातभग्नबलाल्पाग्नि-नृपेश्वरसुखात्मभिः ।
दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ॥ ७१ ॥
बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।

---

स्नेहबस्तिः । अन्तऽवसाने पञ्च स्नेहाः । तथा निरूहा द्वादश सहानुवासनाः । इत्येवं त्रिंशद्वस्तयः कर्मेति गदिताः । काल इति—पञ्चदश बस्तयः काल उच्यते । कथमुच्यते ? एकः पूर्वं स्नेहस्तथाऽन्ते त्रयः स्नेहास्तथा षट्स्नेहाः पञ्चभिर्बस्तिभिरन्तरिता इति । योग इति—योगो वाष्टौ बस्तयः । कथमित्याह । त्रयो निरूहास्त्रीणि चानुवासनानि तथाद्यन्तयोर्द्वौ स्नेहबस्ती इति । स्नेहबस्तिमिति—स्नेहबस्तिमथवा निरूहमेकमेव केवलमतिशयेन न शीलयेत् । यतः स्नेहादतिसेवितादुत्क्लेशाग्निमान्द्ये जायेते । निरूहादतिसेवितात् पवनाद्भयं जायते । तस्मादिति—तस्मात्कारणान्निरूढो नरः स्नेहनार्हः स्यात् । अनुवासितश्च पुरुषो निरूहणार्हो भवेत् । स्नेहेति—एवं पूर्वोक्तया स्नेहशोधनयुक्त्या बस्तिकर्म सेवितं त्रीन् दोषान् जयति ॥ ६५—६९ ॥

अधुना मात्राबस्तिं लक्षयति,—ह्रस्वयेति । ह्रस्वया यामद्वयजरणलक्षणया स्नेहमात्रया समस्तुल्यो योजितः स्नेहो मात्राबस्तिसंज्ञः स्मृतः सद्वैद्यैरिति शेषः । अनेनाऽन्यया स्नेहमात्रोक्ता । यथा—"षट्पला तु भवेज्ज्येष्ठा त्रिपला मध्यमा भवेत् । कनीयस्यर्धपला त्रिधा मात्राऽनुवासने" इति । शीलनीय इति स च मात्राबस्तिर्बालादिभिः सततमेव शीलयितव्यः । स च शीलितो दोषापहस्तथा निष्परीहारोऽनियन्त्रणो बलाय हितो निर्गतपुरीषादिकः सुखकारी स्यात् ॥ ७० । ७१ ॥

बस्ताविति । बस्तिस्थाने रोगेषु नारीणामित्यर्थाल्लभ्यते । नारीणां योनिगर्भाशयेषु च द्वाभ्यां त्रिभिर्वा आस्थापनैः शुद्धेभ्यस्तेभ्यो नरेभ्यः स्त्रीभ्यश्चोत्तरबस्तिं दद्यात् ।

द्विवास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ॥ ७२ ॥
आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम् ।
वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ७३ ॥
सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसम्भवम् ।
कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम् ॥ ७४ ॥
तस्य बस्तिर्मृदुर्लघुर्मात्रा शुक्तिर्विकल्पय वा ॥ ७५ ॥
अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः ।
ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ॥ ७६ ॥
हृष्टे मेढ्रे स्थिते चर्ज्जौ शनैः स्रोतोविशुद्धये ।
सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनीम् ॥ ७७ ॥
आमेहनान्तं नेत्रञ्च निष्कम्प्यं गुदवत्ततः ।
पीड़िते ऽन्तर्गते स्नेहे स्नेहबस्तिक्रमो हितः ॥ ७८ ॥

---

द्वे वा त्रीणि वा द्विवाणि च तान्यास्थापनानि च द्विवास्थापनानि । तैः शुद्धा द्विवास्थापनशुद्धाः । पुमान् स्त्रियेत्येकशेषः । गुदादुत्तरेण मार्गेण दीयते इत्युत्तरबस्तिः ॥७२॥

अथ नेत्रस्य परिमाणमाह,—आतुर इति । तन्नेत्रमुत्तरबस्तियन्त्रकमातुराङ्गुलप्रमाणेन द्वादशाङ्गुलं दैर्घ्येणेत्यर्थादेव प्रतीयते । पुरुषाणामेवैतदिति वेद्यम् । स्त्रीणां हि वक्ष्यति । नेत्रन्दशाङ्गुलं मुद्गप्रवेशमिति । तच्च वृत्तं वर्त्तुलं गोपुच्छाकृति तथा मूले मध्ये चोत्पादितकर्णिकन्तथा सिद्धार्थकः प्रविशत्यस्मिन्निति सिद्धार्थकप्रवेशं तादृशमग्रं प्रान्तो यस्य नेत्रस्य तत् सिद्धार्थकप्रवेशाग्रं, तथा श्लक्ष्णमतिकोमलं, तथा हेमादिजम् । आदिशब्देन धात्वादयः प्रागुक्ता गृह्यन्ते । कुन्द-करवीर-जातीपुष्प-वृन्तसदृशं दृढञ्च । अश्वमारः करवीरः ॥ ७३ । ७४ ॥

तस्येति । तथा तस्य नेत्रस्य बस्तिर्मृदुर्लघुर्योज्य इति शेषः । मात्रा शुक्तिः कर्षद्वयम् । शुक्तिः स्नेहस्येति शेषः । विकल्पय वा बल-वयः-सत्त्व-देहसात्म्यादि निरूप्य वा मात्रा कार्येत्यर्थः ॥ ७५ ॥

अथेत्यादि । अथेति मङ्गले । अस्य रोगिणो निरूहवत्कृतमङ्गलस्य, तथा पूर्वं स्नातस्य पश्चादशितस्य । कथमशितस्य ? स्नेहबस्तिविधानतः । तृतीयार्थे तसिः । स्नेहबस्तौ यादृश आहारो विहितस्तेन कृतभोजनस्येत्यर्थः । तथा ऋजोः स्पष्टंस्थितस्य तथा सुखेनासीनस्य । क्व ? पीठ आसने । किम्भूते ? जानुतुल्ये, तथा मृदावकठिने च । प्रहृष्टे लब्धे तथा ऋजु स्पष्टं कृत्वा स्थिते सति शनैर्न त्वरया सूक्ष्मां शलाकां प्रणयेत् । स्थूलायां तत्र क्षतकरणात् । तथा शलाकया शुद्धे मेढ्रे सत्यनुसेवनी सेवनीमनुलक्षीकृत्य आमेढ्रान्तं नेत्र प्रणयेत् । प्रायेण प्रवेशयेदित्यर्थः । कथम् ? गुद

बस्तीननेन विधिना दद्यात् त्रींश्चतुरोऽपि वा ।
अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत् ॥ ७९ ॥
स्त्रीणामार्त्तवकाले तु योनिर्गृह्णात्यपावृतेः ।
विदधीत तदा तस्मादनृतावपि चात्यये ।
योनिविभ्रंशशूलेषु योनिव्यापदसृग्दरे ॥ ८० ॥
नेत्रं दशाङ्गुलं मुद्ग-प्रवेशं चतुरङ्गुलम् ।
अपत्यमार्गे योज्यं स्याद् द्व्यङ्गुलं मूत्रवर्त्मनि ।
मूत्रकृच्छ्रविकारेषु बालानां त्वेकमङ्गुलम् ॥ ८१ ॥

---

इव निष्कम्पम् । ततो निष्कम्पं स्थापनादनन्तरं पीडिते पुटके स्नेहे चान्तःप्रविष्टे सत्यनुवासनक्रमो हितः । पाणिना ताडयेत्, स्फिचौ तस्य पार्ष्णिभ्यामित्यादिकः ॥७६-७८॥

बस्तीनिति । त्रींश्चतुरो वा बस्तीननेन विधानेन दद्यात् । शेषं विधिपरिहारादिसम्यग्दानव्यापदादिकमस्योत्तरबस्तेरनुवासनस्येव चिन्तयेत् । यदुक्तं खरनादेन,—"यथाशेषं प्रवेश्याथ स्नेहस्यार्द्धपलं नयेत् । प्रत्यागते द्वितीयं वा तृतीयं वा प्रदापयेत् । स चेदनुवसेत्तत्र स्यात् क्रियेयं विशेषतः । पिप्पल्यारग्वधाङ्गारधूमवत्सकसैन्धवैः । मूत्राम्लपिष्टैर्गुलिकाः माषसर्षपसन्निभाः । छायासु शुष्कास्ताः शिश्ने दद्यात् सर्षपसन्निभाः । पूर्वं माषोपमाः पश्चात्ताभिः स्नेहं समानयेत् । स्नेहे प्रत्यागते च स्यादानुवासनिको विधि" रिति ॥ ७९ ॥

एवं पुरुषाणामुत्तरबस्तिविधानमुक्त्वा स्त्रीणां वक्ति,—स्त्रीणामिति । ललनानामृतुकाल एवार्त्तवकाल ऋतुस्तु द्वादशनिशा इत्यादिनोक्तः तत्र ऋतौ योनिः कर्त्री उत्तरबस्तिस्वभावं स्नेहं गृह्णाति । कुतः ? अपावृतेरपावरणात् कारणात् । अन्यदा तु संवृतत्वान्न स्नेहमादत्ते गर्भवत् । तस्माद्धेतोस्तदा ऋतुकाले विदधीत । प्रकृतत्वादुत्तरबस्तिम् । आत्ययिके व्याधावनृतावपि विदधीत । तमेवात्ययं दर्शयति,—योनीत्यादि । योनिविभ्रंश उत्तरे वक्ष्यमाणः । योनिशूलो योनिरुजा, तेषु तथा योनिव्यापत्तौ तथाऽसृग्दरे, रक्तपित्तं योनिमुखेनागच्छत् स्त्रीणामसृग्दरमुच्यते । एतेषु रोगेषूत्तरबस्तिमात्ययिकत्वादनृतावपि दद्यात् ॥ ८० ॥

अथात्र नेत्रस्य प्रमाणमाह,—नेत्रमिति । दशाङ्गुलप्रमाणं दैर्घ्येण । तथा मुद्गः प्रविशत्यस्मिन्निति मुद्गप्रवेशं तदिवास्य प्रवेशाग्रमिति वेद्यम् अन्तलोपाख्यया तन्त्रयुक्त्या । वृत्तगोपुच्छाकारादिशेषं पूर्वोक्तमत्र वेद्यम् । पुष्पवृन्तोपमत्वं त्वत्र न युज्यते । यतो मूत्रस्रोतःपरिणाहं यत्तद्विधातव्यं पुरुषे, स्त्रियां चैवंप्रकारम् । यदुक्तं मुनिना,—"पुष्पनेत्रप्रमाणन्तु प्रमदानां दशाङ्गुलम् । मूत्रस्रोतःपरीणाह" मिति । तत्र चतुरङ्गुलं यावत् प्रवेश्यम् । चतुरङ्गुला चोर्ध्वकर्णिका कार्य्या ; अधिकप्रवेशनिवारणार्थं, न तु मेहनेनेव इव मध्यमकर्णिकेति । अयमर्थोऽत्र साक्षान्नोपात्तो गम्यमानत्वात् । अत एतत्प्रवेशप्रमाणमाह, चतुरङ्गुलमपत्यमार्गे योज्यं स्यादिति । अपत्यमार्गे इत्यनेन स्त्री-

प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिरेव तु ॥ ८२ ॥
उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।
ऊर्द्ध्व जान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥
वस्तींस्त्रिरात्रमेवञ्च स्नेहमात्रां विवर्धयेत् ॥ ८३ ॥
त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम् ॥ ८४ ॥
पश्चाद् विरिक्तो वमिते ततः पश्चान्निरूहणम् ।
सद्यो निरूढश्चान्वास्यः सप्तरात्राद् विरेचितः ॥ ८५ ॥
यथा कुसुम्भादियुतात्तोयाद्रागं हरेत् पटः ।
तथा द्रवीकृताद्देहाद् बस्तिर्निर्हरते मलान् ॥ ८६ ॥

---

गर्भग्रहणप्रसवादिसमर्थं सूच्यते। एवंविधायाः स्त्रियाश्चतुरङ्गुलं प्रवेशयितव्यमिति। मूत्रवर्त्मनि द्व्यङ्गुलं योज्यम्। या स्त्री सुरतव्यवहारगर्भग्रहणयोग्या। अथवा बालाया अप्रौढायास्तस्या योनिमूत्रस्यैव केवलं मार्गस्तस्या नेत्रं द्व्यङ्गुलं प्रवेश्यम्। अत ऊर्ध्वंतु प्रवेशात्तासां मांसक्षतिः स्यात्। केषु रोगेषु ? मूत्रकृच्छ्रविकारेषु। बालानान्तु स्त्रीणामेकमङ्गुलं प्रवेश्यम् ॥ ८१ ॥

प्रकुञ्चेति। स्त्रीणामुत्तरबस्तौ स्नेहस्य प्रकुञ्चो मध्यमा मात्रा, नोत्तमा कनिष्ठा वा। बालानान्तु शुक्तिरेव मध्यमा मात्रा स्नेहस्य ॥ ८२ ॥

अथ नीत्तरवस्त्यवस्थानं त्रिविधाया अपि स्त्रिया वदति,—उत्तानाया इति। उत्तानाया नत्ववाङ्मुखायाः पार्श्वस्थिताया वा। शयानाया न त्वासीनायास्तस्योर्ध्वजान्वा वस्तींस्त्रिचतुरानहोरात्रेण योजयेत्। किं कृत्वा ? सक्थिनी सङ्कोच्य। अनुवासने त्वेक एवाहोरात्रेण योज्य इत्यस्य भेदः। वस्तिदानकार्य्यमत्र न त्वत्रानुवासनवत् त्र्यहे पञ्चमे वाहनीति। किं कुर्वन् ? स्नेहमात्रां यथास्वमर्द्धकर्षकर्षादिक्रमेण वर्द्धयेत्। त्र्यहमिति। त्र्यहमेव च विश्रम्य त्रीणि दिनानि विलम्ब्य च पुनः पूर्वोक्तेनैव प्रकारेण प्रणिदध्यात् प्रकुर्यात्। एष एव च न्यायो मेढ्रेऽपि योज्यः। तज्जातीयत्वादस्यार्थस्य। अतएवान्तेयमुपदिष्ट उभयसम्बन्धार्थम् ॥ ८३। ८४ ॥

युक्त्योक्तमेवामुमर्थं संक्षेपेण संग्राह्य पुनराह,—पश्चादिति उत्तमशुद्ध्या शुद्धे वमिते पश्चादनन्तरं विरेकः कार्यः। यस्मात् प्रवरया शुद्ध्या शुद्धे तु वमिते पेयादिक्रमेण सप्ताहात् प्रकृतिभोजनापत्तिः। सप्ताहेनैकान्तरानुवासनदानेन स्निग्धस्य विरेक इति पश्चेणैव युज्यते। ततोऽनन्तरं पश्चात् परतो निरूहो यतः कृतविरेकस्य सप्ताहात् प्रकृतिभोजनापत्तौ स्नेहनार्थमनुवासनेनैकान्तरितेन स्निग्धस्य निरूहो युज्यत इति पश्चैणैव युक्तः। निरूढश्च सद्य एवानुवास्यः। तथा च प्रागभ्यधायि,—"अथ वातार्दितं भूयः सद्य एवानुवासयेत्" इति। विरेचितः सप्तरात्रादूर्ध्वमनुवास्यः, यतः सप्ताहेन प्रकृतिभोजनापत्तिस्ततः स्नेहार्थमनुवासनं युक्तम् ॥ ८५ ॥

ननु दोषाणां धातूनाञ्च स्नेहस्वेदाभ्यामिक्लीलीभावात् कथं बस्तिर्दोषानेव निर्हरेत्

शाखागताः कोष्ठगताश्च रोगा
मर्मोर्द्ध्वसर्वावयवाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो
वायोः परं जन्मनि हेतुरस्ति ॥ ८७ ॥
विट्श्लेष्मपित्तादिमलाचयानां
विक्षेपसंहारकरः स यस्मात् ।
तस्यातिवृद्धस्य शमाय नान्यद्
बस्तेर्विना भेषजमस्ति किञ्चित् ॥ ८८ ॥
तस्माच्चिकित्सार्ध इति प्रदिष्टः
कृत्स्ना चिकित्सापि च बस्तिरेकैः ।

---

धातूनित्येतच्चोद्यं दृष्टान्तद्वारेण परिजिहीर्षुरिदमाह,—यथेति । कुसुम्भकुङ्कुमादि-युक्ताज्जलाद् यथा पटो वासो रागं हरेत् गृह्णीयात् न कुसुम्भादिकं, तथैव द्रवीकृतात् कायाद्दोषधातूनामेकलोलीभावेऽपि बस्तिर्दोषान्निर्हरेन्न धातून् ॥ ८६ ॥

अधुना वायोः स्वरूपं प्रथयन् बस्तिं श्लाघयन्नाह,—शाखेति । सक्थिनी द्वे, द्वौ बाहू इति शाखास्तासु गतास्तत उत्पन्नाः । एवं कोष्ठो महास्रोतस्तत्र गताः कोष्ठगताः । तथा मर्माणि च ऊर्ध्वञ्च सर्वं च अवयवाश्च मर्मोर्द्ध्वसर्वावयवास्तेषामङ्गं, तत्र जाता मर्मोर्द्ध्वसर्वावयवाङ्गजाः । तत्र मर्माणि मर्मविभागे वक्ष्यन्ते । ऊर्ध्वशब्देनोर्ध्वजत्रु गृह्यते । तत्र जाता ऊर्द्ध्वाङ्गजा मुखरोगादयः । सर्वाङ्गजा ज्वरादयः । अवयवजाः श्वित्रादयश्च ये रोगा विद्यन्ते तेषां जन्मनुत्पत्तौ वायोरपरः कश्चिदपि हेतुर्नास्ति । कथम् ? परमतिशयेन । किञ्चिन्मात्रेणानुबलभावेन पित्तश्लेष्माणावपि हेतू भवत एव । यथा पामादर्शनादीनाम् । अथावयवग्रहणेनैवोर्ध्वग्रहणे लब्धे ऊर्ध्व-ग्रहणं प्राधान्यख्यापनार्थम् । यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायादिति । तदेवाधिकृत्य वक्ष्यमाणः पञ्चविधः सकलमेवोत्तरे च तन्त्रे प्रधानं । तस्मात् प्रधाना ऊर्ध्वाङ्गजाः ॥ ८७ ॥

ननु कुतो हेतोर्मरुत एतेषु कारणत्वमित्याह,—विड़िति । विट् च श्लेष्मा च पित्तञ्च विट्श्लेष्मपित्तानि तान्यादिर्येषाम् । आदिशब्देन मूत्रस्वेदादिपरिग्रहः । त एव शरीर-मलिनीकरणान्मलास्तेषामाचयाः सञ्चयास्तेषां स वायुर्यस्माद्विक्षेपसंहारकरः । विक्षेपश्च संहारश्च विक्षेपसंहारौ तौ करोतीति । कृञो हेतुताच्छील्येत्यादिना हेतौ टः । विक्षेप-संहारकरणहेतुरित्यर्थः, तस्य क्रियावत्त्वात् । वायुश्च शेषदोषाभ्यां न कदाचिद्विक्षिप्यते संह्रियते वा, तयोर्निष्क्रियत्वात् । तस्य च वायोः प्रवृद्धस्य शमनार्थं बस्तिमन्तरेणापरं भेषजं नास्ति । स्नेहस्वेदादिकन्तु विद्यमानमपि न तथा समर्थमित्यगण्यत्वात्तदविद्य-मानमुच्यते ॥ ८८ ॥

तथा निजागन्तुविकारकारी
रक्तौषधत्वेन शिराव्यधोऽपि ॥ ८९ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने एकोनविंशोऽध्यायः ॥ १९ ॥

---

तस्मादिति। तस्माद्दोषप्रधानस्य पवनस्य शमनार्थात् कारणाद्व वस्तिश्चिकित्सार्द्ध इति कथितः। एकैश्चाचार्य्यैर्निरवशेषापि चिकित्सा बस्तिः प्रदिष्टः। ननु चतुर्णां भिषजादीनामित्यादिलक्षणा चिकित्सा तत् कथं तस्या भागकल्पना कर्त्तुं युज्यते। न च सर्वा चिकित्सा बस्तिरिति वक्तुं शक्यते। शेषचिकित्सा शास्त्रविस्तरस्यानर्थक्यप्रसङ्गात्। तस्मादेतदयुक्तमिवाभाति। अत्रोच्यते, तथापि वायुविकारा अशीतिरुक्ताः। पित्तश्लेष्मविकाराश्च षष्टिरुक्ताः। तत्र वातविकाराणां प्रधानोपक्रमो बस्तिस्तस्माच्चिकित्सार्द्धो बस्तिः कार्य्यद्वारेणोक्तः। अथवा मारुतं पित्तश्लेष्मविट्सहितं बस्तिः समूलमेवापकर्षतीत्युक्ता सर्वा चिकित्सा इति कार्य्यद्वारेणैकैरुपदिष्टः। अन्यत्रापि चैवंप्रायो निदर्शित आचार्य्यैः। तथाच मुनिः,—"यानीह कर्माण्युक्तानि विसर्पविनिवृत्तये। एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः" इति। चिकित्सार्द्धमित्ययन्तु पाठो न युक्त एव। अर्द्धशब्दस्य हि समविभागे एव नपुंसकत्वम्। न चात्र समप्रविभागो गम्यते। तस्मान्नपुंसकत्वमत्र अन्याय्यम्। तथेत्यादि—न केवलं बस्तिर्यावच्छिराव्यधोऽपि चिकित्सार्धः सर्वा वा चिकित्सेत्युपदिष्टः। कुतः ? निजेत्यादिना। निजा वातादिसमुत्था आगन्तवो विषवज्रादिसमुत्थाः। निजाश्चागन्तवश्च ते च ते विकाराश्च निजागन्तुविकारास्तान् कर्त्तुं शीलमस्य तन्निजान्तुविकारकारि। तच्च तद्रक्तञ्च निजागन्तुविकारकारिरक्तं तस्यौषधत्वेन। तत्र विसर्पविद्रधिप्रभृतिरोगविशेषोपशमकरणाच्चिकित्सार्द्धः शिराव्यध उपदिष्टः। तथापरेऽपि ये रोगाः शीतोष्णस्निग्धरूक्षादैरुपक्रमैरनुपशान्तास्तेऽपि शिराव्यधसाध्याः। अतएव सर्वापि चिकित्सा शिराव्यध उक्त इति ॥ ८९ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां बस्तिविधिरध्यायकोनविंशः ॥ १९ ॥

---

# विंशोऽध्यायः ।

अथातो नस्यविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
ऊर्द्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ।
नासा हि शिरसो द्वारं तेन तद् व्याप्य हन्ति तान् ॥
विरेचनं बृंहणञ्च शमनञ्च त्रिधापि तत् ॥ २ ॥
विरेचनं शिरःशूल-जाड्यस्यन्दगलामये ।
शोफगण्डक्रिमिग्रन्थि-कुष्ठापस्मारपीनसे ॥ ३ ॥
बृंहणं वातजे शूले सूर्यावर्त्ते स्वरक्षये ।
नासास्यशोषे वाक्सङ्गे कृच्छ्रबोधेऽवबाहुके ॥ ४ ॥
शमनं नीलिकाव्यङ्ग-केशदोषाक्षिराजिषु ॥ ५ ॥
यथास्वं यौगिकैः स्नेहैर्यथास्वञ्च प्रसाधितैः ।

---

पञ्चकर्म्मोक्तिप्रस्तावे वमनविरेकान्वासननिरूहानुक्त्वा नस्यविधिमाह,—अथेति । जत्रु कण्ठोरसोः (१) सन्धिः । जत्रुण ऊर्ध्वमूर्ध्वजत्रु । मयूरव्यंसकादित्वात् समासः । तत्र विकारा ऊर्ध्वजत्रुविकारास्तेषु ऊर्द्ध्वजत्रुविकारेषु शिरोरोगादिषु विषये वमन-शिराव्यधादयोऽपीष्यन्त एव । विशेषेण तु नस्यमिष्यते । नासायां भवं नस्यम् । तत्र भव इति यत् । नासिकायाः पद्दन्न इति नसादेशः । ननु किमिति नस्यमेतेषु रोगेषु विशेषेणेष्टमित्याह,—नासेति । यस्मात् घ्राणं शिरोद्वारं तेन द्वारेण स्रोतःशृङ्गाटक-प्राप्तमूर्ध्व नेत्रकण्ठादिशिरोमुखानुप्रवेशेन तच्छिरो व्याप्य तान्विकारान् हन्ति ॥ १ ॥

विरेचनमिति —तत्र नस्यं विरेचनबृंहणशमनभेदेन त्रिधा स्यात् । तत्र पूर्वं विरे-चनाख्यस्योपयोगमाह,—विरेचनमिति । शिरःशूलादिषु विरेचनं नस्यमिष्यते । अपस्मारो यद्यपि ऊर्द्ध्वजत्रुस्थितो न भवति तथापि विरेचननस्येन शाम्यतीति तदुपादानम् । उपलक्षणं चेदम् । कफप्रकोपास्यवैरस्यगन्धाज्ञानादिष्वपि विरेचनमेव हितम् ॥२।३॥

बृंहणमिति । वातोद्भवशूलादिषु बृंहणं नस्यं हितम् । सूर्यावर्त्तः शिरोरोग-विशेषः । कृच्छ्रबोधः कृच्छ्रोन्मीलनम् । अववाहुको वातव्याधिविशेषः । शमनमिति—नीलिकादिषु शमनं नस्यं हितम् । नीलिकाव्यङ्गौ क्षुद्ररोगेषु वक्ष्यमाणौ । केशदोषः केशशातः । यथास्वमिति—ये ये स्नेहा यथास्वं तैः । किम्भूतैः ? यौगिकैर्योगार्हैः सर्षपतैलादिभिर्न तु घृतादिभिः । तथा यथास्वं मरीचशुण्ठ्यादिभिः प्रसाधितैः

---

(१) वक्षोऽंसयोरिति पाठान्तरम् ।

कल्कक्वाथादिभिश्चाढ्यं मधुपट्वासवैरपि ॥ ६ ॥
बृंहणं धन्वमांसोत्थ-रसासृक्खपुरैरपि ।
शमनं योजयेत् पूर्वैः क्षीरेण च जलेन च ॥ ७ ॥
मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ।
कल्काद्यैरवपीडस्तु तीक्ष्णैर्मूर्धविरेचनः ॥ ८ ॥
ध्मानं विरेचनश्चूर्णो युञ्ज्यात् तं मुखवायुना ।
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ।

---

संस्कृतैः । तथा कल्कक्वाथस्वरसादिभिश्च यथास्वं कफघ्नैर्गिरिकर्णिकादिजनाढ्यं विरेचनाख्यं नस्यं भवति । न केवलमेतैर्यावन्माक्षिकादिभिश्च । पटुः सैन्धवादिः ; आसवो मद्यविशेषः ॥ ४ । ६ ॥

बृंहणमिति । बृंहणं नस्यं धन्वोत्थमांसोद्भवरसैः स्यात् । तथा असृजा रक्तेन धन्वोत्थेनैव, तथा खपुरैर्निर्यासविशेषैः । अपिशब्दादन्यैरपि पूर्वोक्तैः स्नेहैरतीक्ष्णैर्बृंहणं भवति । शमनं नस्यं पूर्वोक्तैरतीक्ष्णैः स्नेहैर्घृतादिभिः, तथा मांसरसादिभिर्योजयेत् । तथा क्षीरेण जलेन चेति । सुश्रुतस्तु स्पष्टतरमुवाच,—"तत्तु नस्यं देयं वाताभिभूते शिरसि दन्त-केश-श्मश्रुशातदारुण-कर्णशूल-कर्णक्ष्वेड-तिमिर-स्वरोपघात-नासारोग-मुखशोषावबाहुकाकालजवलीपलितप्रादुर्भावदारुणप्रतिबोधे वातपैत्तिकेषु चान्येषु मुखरोगेषु वातपित्तहरद्रव्यसिद्धेन स्नेहेन बृंहणमेव । विरेचनं कफाभिव्याप्ततालुकण्ठशिरसां अरोचकशिरोगौरवशूलपीनसार्धावभेदक-क्रिमि-प्रतिश्यायापस्मार-घ्राणाज्ञानेष्वन्येषु चोर्ध्वजत्रुगदेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति । तथा "सम्यग्विरिक्तशिरसि सर्पिर्नस्तो निषिचयेत् ।" अवपीडस्तु शिरसो विरेचनवदभिष्यन्दसर्पदष्टविसञ्ज्ञेभ्यो दद्यात् । शिरोविरेचनद्रव्याणामन्यतममासाद्यावपीडयेत् । चेतोविकारक्रिमिविषाभिपन्नानां चूर्णं प्रधमेत् । शर्करेक्षुरसघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च दद्यात् । कृशदुर्बलभीरूणां सुकुमारस्य योषितां । शृताः स्नेहाः शिरःशुद्ध्यै कल्कस्तेभ्यो यथा हित इति ॥ ७ ॥

अधुनाऽन्यानपि नस्यविशेषानाह,—मर्श इति । एषु नस्यभेदेषु मध्ये मर्शाख्यः प्रतिमर्शाख्यश्चेति स्नेहो द्विधा भेदद्वयेन भवति । कथम् ? मात्रया मात्राभेदेन न तु वस्तुभेदेन । कल्काद्यैरिति—तुरवधारणे भिन्नक्रमः । कल्काद्यैरेवावपीडो न स्नेहेन । स चावपीडस्तीक्ष्णैः गुग्गुल्वादिभिः कल्कक्वाथरसाद्यैर्न मृदुभिः । मूर्धविरेचनं शिरोविरेचनाख्यं नामान्तरमस्य ॥ ८ ॥

अतीक्ष्णस्तु शमनसंज्ञमेव विरेचनस्य प्रकारान्तरमाह,—ध्मानमिति । चूर्णो मरीचादिभिः कृतो विरेचनो बहिर्दोषनिरसनो ध्मानं प्रधमनाख्यं नस्यं स्यात् । कथं ? नासया प्रणीयमानः । कथं पुनरसौ नासायां ध्मापयितव्य इत्याह ;—युञ्ज्यादिति । युञ्ज्यात् तं चूर्णं मुखवायुना फूत्काराख्येन प्रवेशयेत् । कथम् ? नाड्या

स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥ ९ ॥
प्रदेशिन्यङ्गुलीपर्व-द्वयान्मग्नसमुद्धृतात् ।
यावत्पतत्यसौ विन्दुर्दशाष्टौ षट् क्रमेण ते ॥ १० ॥
मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात् ।
बिन्दुद्वयोना: कल्कादे र्योजयेन्नतु नावनम् ।
तोयमद्यगरस्नेह-पीतानां पातुमिच्छताम् ॥ ११ ॥
भुक्तभक्तशिर:स्नात-स्नातुकामस्रुतास्रजाम् ।
नवपीनसवेगार्त-सूतिकाश्वासकासिनाम् ॥ १२ ॥

---

करणभूतया । किम्भूतया ? षडङ्गुलानि यस्या: सा षड़ङ्गुला ; द्वे मुखे यस्या: सा द्विमुखा ; षड़ङ्गुला चासौ द्विमुखा च षडङ्गुलद्विमुखा ; तया । तथा भेषजगर्भया त्रिकट्वादिचूर्णभरितया । स हि चूर्णो भूरितरं वहुतरं दोषं चूर्णत्वादपकर्षति निर्हरति । तथा कल्कक्वाथादय: । ततस्तस्माद्द विरेचनाख्योऽयमित्यर्थ: ॥ ९ ॥

अधुना मर्शस्नेहस्य परिमाणमधिकृत्याह,—प्रदेशिनीति । प्रदेशिन्यङ्गुष्ठसमीपजाङ्गुली, तस्या: पर्वद्वयं तस्मात् । किम्भूतात् ? पूर्वं मग्नं पश्चात्समुद्धृतं तस्मान्मग्नसमुद्धृतात् । तर्जनीपर्वद्वयाद्द यावत्परिमाणं पतत्यसौ विन्दुरुच्यत इति शेष: । ते विन्दवो यथासंख्यं मर्शस्य दश उत्कृष्टा मात्रा ; अष्टौ मध्यमा मात्रा ; षट् कनिष्ठा मात्रा । ता एव क्रमान्मात्रा बिन्दुद्वयेन ऊना: कल्कस्वरसादे: । तेनाष्टौ विन्दव उत्तमा मात्रा, षट् मध्यमा, चत्वार: कनिष्टेत्यवतिष्ठते । यावदिति—यत्परिमाणमस्येति यत्तदेतद्भ्य: परिमाणे वतुप् । आसर्वनाम्न इत्याकारादेश: ॥ १० ॥

अधुना येषां नस्यमयुक्तं तानाह,—योजयेदिति । तोयादि पीतं येस्तेषाम् । आहिताग्न्यादित्वात्परनिपात: । तथा पातुमिच्छतां नावनं नस्यं नैव योजयेत् । तोयादिपीतानां पातुमिच्छताञ्च प्रयोजितं नस्यं नासास्यदोषदेहतिमिरशिरोरोगान् कुर्यात् । भुक्तभक्तस्य च दोषा ऊर्ध्वस्रोतांस्याहृत्य च्छर्दिश्वासकासप्रतिश्यायान् जनयेयु: । शिर:स्नातस्य शिरोऽक्षिकर्णशूलकण्ठरोगपीनसहनुमन्यास्तम्भार्दितशिर:कम्पान् । स्नातुकामस्य च मूर्ध्नि स्तिमितो दोषो जाड्यारुचिपीनसान् । सुतरक्तस्य च क्षामतामरुचिमग्निसदनञ्च । नवप्रतिश्यायस्य स्रोतोरोधात् दुष्टप्रतिश्यायकृमिकण्डूविचर्चिकारोगान् । सूतिकाया: सुतमूत्रितोच्चारितादिवेगार्तानां भृशतरं वेगविधारणजान् विकारान् । सूतिकाया: सुतश्वासकासिनोर्व्याधिविवृद्धिम् । शुद्धानां कृतवमनविरेचनानां श्वासकासरक्तदोषान् । श्वासकासिनोर्व्याधिविवृद्धिम् । शुद्धानां कृतवमनविरेचनानां श्वासकासस्वरेन्द्रियहानिशिरोगौरवकृमिकण्डूदोषान् । दत्तवस्तीनां विवृतस्रोतस्तयाऽतिव्याप्त्या स्वरेन्द्रियहानिशिरोगौरवकृमिकण्डूदोषान् । तथा अनार्तवदुर्दिनेऽपि सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रश्वासकासादीन् । एषु च नस्यदोषेषु जातेषु यथास्वं कण्डूपाकमन्यास्तम्भकण्ठरोगप्रतिश्यायारुंपिका: । एषु च नस्यदोषेषु जातेषु यथास्वमायतनं दोषोद्रेकं चावेक्ष्य स्नेहस्वेदशिरोविरेकवक्त्रलेपसेकतीक्ष्णावपीडधूमगण्डूषादीनि यथास्वं कुर्यात् । संग्रहे चोक्तम्— गर्भिण्याश्च भक्तद्वेषज्वरमूर्च्छाद्यविभेदका: स्यु: ।

शुद्धानां दत्तबस्तीनां तथानार्तवदुर्दिने ।
अन्यत्रात्ययिकाद्व्याधेरथ नस्यं प्रयोजयेत् ।
प्रातः श्लेष्मणि मध्याह्ने पित्ते सायंनिशोश्चले ॥ १३ ॥
स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः ।
शीतें मध्यन्दिने ग्रीष्मे सायं वर्षासु सातपे ॥ १४ ॥
वाताभिभूते शिरसि हिक्कायामपतानके ।
मन्यास्तम्भे स्वरभ्रंशे सायंप्रातर्दिने दिने ॥
एकाहान्तरमन्यत्र सप्ताहञ्च तदाचरेत् ॥ १५ ॥
स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च ।
निवातशयनस्थस्य जत्रूर्द्ध्वं स्वेदयेत् पुनः ॥ १६ ॥

---

अपत्यञ्च व्यङ्गं विकलेन्द्रियमुन्मादापस्मारयुक्तं वा सूयात् । तत्र गर्भिणी रूचे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छुभिः शृतं पयः पिबेत् । बलाविदार्यंशुमतीमेदाभिर्वैभिरेवच शृतं हविर्वातहरसिद्धश्च स्नेहः शिरोबस्तौ कर्णपूरणे च योज्यः । सर्वं च बृंहणमन्नपानमिति । तोयपीतादिषु सदैव किं न योज्यमित्याह । अन्यत्रेत्यादि आत्ययिके व्याधौ नस्यं योज्यमेव । सांप्रतं यत्र काले यत्र च दोषे नस्यं प्रयोज्यं तद्दर्शनार्थमाह,—अथेति । श्लेष्मरोगे प्रातर्नस्यं प्रयोजयेत् । पित्तरोगेषु मध्याह्ने । वाते अपराह्णे रात्रौ च । कारणे कार्योपचारात् कफरोगः श्लेष्मशब्देनोक्तः । तेन श्लेष्मरोगादिषु प्रातर्नस्यं योज्यम् । संग्रहे विशेषः । लालास्रावसुप्तिप्रलापदन्तकटकटायनक्रथनकच्छ्रोन्मीलन-पूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्राविति ॥ ११—१३ ॥

स्वस्थवृत्ते इति । तुरवधारणे । स्वस्थवृत्ते शरदि वसन्ते च पूर्वाह्ण एव नस्यं योज्यम् । शीते हेमन्तशिशिरलक्षणे मध्याह्ने । ग्रीष्मे सायमपराह्णे । वर्षासु सातपे दृश्यमाने रवौ वासरे प्रयोजयेत् ॥ १४ ॥

अधुना दोषापेक्षया नस्यकालनियममाह ;—वाताभिभूते इति । वाताभिभूतमूर्धादिषु स्वरभंशान्तेषु सायंप्रातः पूर्वाह्णापराह्णयोः प्रतिदिनं च नकाहान्तरितम् । अन्यत्र वाताभिभूतमूर्धादिभ्योऽन्यस्मिन् रोगे एकाहान्तरं सप्ताहञ्च नस्यमाचरेत् । सप्ताहादूर्द्ध्वं नस्यं न विदध्यादित्यर्थः ॥ १५ ॥

इदानीं यादृशस्य पुरुषस्य यथास्थितस्य नस्यं देयं तदाह ;—स्निग्धेति । पूर्वं स्निग्धं पश्चात् स्विन्नमुत्तमाङ्गं शिरो यस्य तस्य, तथा प्राक् पूर्वं कृतमावश्यकमवश्यकरणीयमुच्चारमूत्रोत्सर्गदन्तधावनादिकं येन स प्राक्कृतावश्यकस्तस्य तथा निवातस्थाने शयनं यत् तत्र स्थितस्य सतो भूयो जत्रूर्ध्वं स्वेदयेत् ॥ १६ ॥

अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्धनि नामिते ॥ १७ ॥
नासापुटं पिधायैकं पर्य्यायेण निषिचयेत्।
उष्णाम्बु तप्तं भैषज्यं प्रनाड्या पिचुनाथवा ॥ १८ ॥
दत्ते पादतलस्कन्ध-हस्तकर्णादि मर्द्दयेत् ॥ १९ ॥
शनैरुच्छिद्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः ॥ २० ॥
आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ॥ २१ ॥
मूर्च्छायां शीततोयेन सिञ्चेत्परिहरन् शिरः।
स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ॥ २२ ॥

---

अथोत्तानेति। अथाऽनन्तरमुत्तानस्पष्टस्थितशरीरस्य सतो हस्तचरणे प्रसारिते तथा किञ्चिदुन्नतचरणस्य किञ्चिच्छिरसि नामिते सति नासापुटमेकं पिधाय स्थगयित्वा पर्यायेन नतु युगपत् भेषज्यं निषेचयेत्। कीदृशमुष्णाम्बु तप्तमुष्णोदकोष्णीकृतम्। केन परिषेचयेत्? प्रनाड्या अथवा पिचुना कार्पासादिमयेन ॥ १७। १८ ॥

दत्त इति। दत्ते नस्ये सति पादतलस्कन्धहस्तकर्णादि मर्दयेत्। आदिशब्देन ग्रीवाललाटादिपरिग्रहः। सुश्रुते चाभ्यधायि—वस्त्रावच्छादितनेत्राय वामहस्तप्रदेशिन्योन्नामितनासिकाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णाम्बुप्रतप्तं रजतादिशुक्तीनामन्यतमस्थं शुक्त्या पिचुना वाऽनवच्छिन्नधारं सिञ्चेदिति ॥ १९ ॥

शनैरिति। ततो मर्दनानन्तरं शनैरुच्छिद्य पार्श्वयोरुभयोर्निष्ठीवेत्। अनभ्यवहरन् कफसहितमभ्यवहृतमग्निमवसादयेद्दोषञ्च संवर्धयेत्। एकपार्श्वनिष्ठीवने न सर्वाः शिरा भेषजेन सम्यग्व्याप्यन्ते ॥ २० ॥

आभेषजेति। एवमनेन क्रमेण आभेषजक्षयाद्द्विस्त्रिर्वा नस्यं कुर्यात्। नतु नस्यमात्रा सकृदेव प्रक्षेप्तव्या, हीनमात्रं चौषधं न देयम्, तद्धि दोषानुत्क्लेश्यानिर्हरन्गौरवारुचिकासप्रसेकपीनसच्छर्दिकण्ठरोगान् कुर्यात्; अधिकमतियोगात् दोषान् कुर्यात्। सकृदेव सर्वं दत्तमुच्छिद्यमानं शिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोधञ्च कुर्यात्। अत्युष्णं दाहपाकज्वररक्ताङ्गमूर्च्छाभ्रमान्। अतिशीतं हीनदोषानेव। अत्यवनतशिरसो दूरगमना-
अत्युन्नतशिरसः सम्यक्प्रतिपद्यमानं तानेव हीनदोषान्।
न्मूर्च्छाजाड्यज्वरान्। सङ्कुचितगात्रस्य सम्यग्धमनीरप्राप्नुवद्दोषोत्क्लेशं कुर्यात् ॥ २१ ॥

यदि च नस्ये दीयमाने भेषजवेगाद्दसात्म्येन संजातमूर्च्छायां प्रतिकारमाह;—

मूर्च्छायामिति। मूर्च्छायां सत्यां शीतजलेन मूर्द्धवर्जं सिञ्चेत्। संग्रहेऽप्युक्तम्। नच नस्ये दीयमाने कोपहासव्यवहारस्पन्दनोच्छेदनान्याचरेत्। तथाहि शिरोरुक्प्रतिश्यायकासतिमिरखलितपलितव्यङ्गतिलकालकमुखदूषकानां सम्भवः। विरेचनस्यावसाने देशदोषसात्म्याद्यपेक्षया स्नेहमनुसंन्यसेत्। तन्त्रान्तरे चोक्तम—अथ नस्याहे।

नस्यान्ते वाक्शतं तिष्ठेदुत्तानो धारयेत्ततः।
धूमं पीत्वा कवोष्णाम्बु-कवलान् कण्ठशुद्धये ॥ २३ ॥
सम्यक्स्निग्धे सुखोच्छ्वास-स्वप्नबोधाक्षपाटवम्।
रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्द्धशून्यता ॥ २४ ॥
स्निग्धेऽतिकण्डूर्गुरुता-प्रसेकारुचिपीनसाः।
सुविरिक्तेऽक्षिलघुता-स्वरवक्त्रविशुद्धयः ॥ २५ ॥
दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते ॥ २६ ॥
प्रतिमर्शः क्षतक्षाम-बालवृद्धसुखात्मसु।
प्रयोज्योऽकालवर्षेऽपि * नत्विष्टो दुष्टपीनसे ॥ २७ ॥
मद्यपीतेऽबलश्रोत्रे क्रमिदूषितमूर्द्धनि।
उत्कृष्टोत्क्लिष्टदोषे च हीनमात्रतया हि सः ॥ २८ ॥

---

नरमव्याहतवेगं धौतान्तर्बहिर्मुखमवस्थितशिरसं प्रायोगिकधूमपानविशुद्धस्रोतसं स्वास्तीर्णनिवातशयनस्थमुत्तानशीर्षमीषदुन्नतपादं प्रसारितचरणञ्च जत्रूर्ध्वं पाणितापेन पुनः पुनः स्वेदयेदिति ॥ २२ ॥

नस्यान्त इति। नस्यावसाने वाक्शतं मात्राशतमुत्तानो निद्रामासेवमानस्तिष्ठेत्। धूममिति। ततो वाक्शतावस्थानादनन्तरमीषदुष्णजलकवलान् धारयेत्। किमर्थम्? कण्ठशुद्धये उत्क्लिष्टदोषशान्तये। किं कृत्वा? धूमं विरेचनाद्यन्यतमं यथायोगं पीत्वा ततोऽस्य स्नेहोक्तविधिमाचारमादिशेत् ॥ २३ ॥

सम्यगिति। सम्यक्स्निग्धे शिरसि सुखोच्छ्वासादयः स्युः। संग्रहे चोक्तम्। सम्यक्स्निग्धे मूर्ध्नि विरिक्ते वा सुखोच्छ्वासनिःश्वाससुखसुप्तबोधाक्षिपाटवानि स्युः। रूक्ष इति—रूक्षे तु शिरसि अक्षिस्तब्धता तथा नासायामास्ये च शोषो मूर्द्धशून्यता च स्यात्। स्निग्ध इति—अतिस्निग्धे कण्ड्वादयः स्युः। सुविरिक्ते इति। सुविरिक्ते सम्यग्विरिक्तेऽक्षिलघुतादयः स्युः। दुर्विरिक्त इति—दुर्विरिक्ते गदोद्रेको रोगस्याधिक्यमतिविरेचिते क्षामता कृशता स्यात्। अधुना प्रतिमर्शस्य विषयं सूचयितुमाह ॥ २४-२६ ॥

प्रतिमर्श इति। प्रतिमर्शः क्षामतादिषु प्रयोज्यः। अकालवर्षेऽपि कार्यः। यद्यपीति—दुष्टपीनसे तु न प्रयोज्यः। दुष्टपीनसो नासारोगेषु वक्ष्यमाणः। तथा मद्यपीते तथाऽबलश्रोत्रे रुद्धश्रवणमार्गे तथा क्रमिभिर्दूषितो मूर्द्धा यस्य तस्मिन् क्रमिपीडितशिरसि तथोत्कृष्टो वृद्धिं गतः अथोत्क्लिष्टः प्रचलो दोषो यस्य तस्मिंश्च प्रतिमर्शो न योज्यः। केन प्रकारेण न योज्य इत्याह;—हीनेति। हि यस्मात् हीनमात्रतया

---

* अकालपलिते इति वा पाठः।

निशाहर्भुक्तवान्ताहः-स्वप्नाध्वश्रमरेतसाम् ।
शिरोऽभ्यञ्जनगण्डूष-प्रस्रावाञ्जनवर्चसाम् ।
दन्तकाष्ठस्य हासस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ॥ २९ ॥
पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात् ।
दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः ॥ ३० ॥
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चोनाष्टादशे धूमः कवलो नोनपञ्चमे ।
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ ३१ ॥
आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत् ।
मर्शवच्च गुणान् कुर्यात्सहि नित्योपसेवनात् ।
न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्शवद्भयम् ॥ ३२ ॥
तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ।
शिरसः श्लेष्मधामत्वात् स्नेहाः स्वस्थस्य नेतरे ॥ ३३ ॥

---

हीना मात्रा यस्य स हीनमात्रस्तस्य भावो हीनमात्रता तया। यस्मादसौ प्रयुज्यते एषां चोदीर्णदोषत्वात् । तावता दोषोत्क्लेश एव भवति न शमः ॥ २७ । २८ ॥

निशाहरिति । असौ प्रतिमर्शो द्विबिन्दुको निशादीनां पञ्चदशानां कालानामन्ते प्रयोज्यः । तत्र निशाहर्भुक्तवान्ताहःस्वप्नाख्येषु पञ्चसु कालेषु प्रतिमर्शे प्रयुक्ते स्रोतसां शुद्धिर्भवति । क्रमात् क्रमेणैवं पठितेष्वध्वश्रममैथुनानां त्रयाणामन्ते प्रतिमर्शे दत्ते सति श्रमनाशः स्यात् । उपलक्षणं चेदम् । मनःप्रसादशिरोलाघवेऽपि भवतः । एवं शिरोऽभ्यञ्जनादिषु पञ्चस्वन्ते, प्रतिमर्शे योजिते सति दृष्टेर्बलं स्यात् । ततोऽनन्तरं दन्तकाष्ठहासयोरन्ते यथासंख्येन द्विजदृढत्वं पवनशमश्च स्यात् ॥ २९ । ३० ॥

अधुना अञ्जनस्य धूमादीनाञ्च पुरुषविशेषे नियमं करोति,—न नस्येत्यादि । ऊनसप्तवर्षे नस्यं न योज्यं तथाऽतिक्रान्ताशीतिवर्षे च नस्यं न प्रयोज्यम् । अपूर्णाष्टादशवर्षे धूमो न प्रयोज्यः । कवलोऽपूर्णपञ्चवत्सरे न प्रयोज्यः । ऊनदशवर्षे शुद्धिर्वमनविरेकादिका न प्रयोज्या । अतीतसप्ततिवर्षे शुद्धिर्न योज्या ॥ ३१ ॥

आजन्मेति । प्रतिमर्शः पुनर्बस्तिरिव शस्तो हितः । कथम् ? आजन्ममरणं जन्ममरणे चावधिं कृत्वा प्रतिमर्शो हित इत्यर्थः । स च प्रतिमर्शो नित्योपसेवनात् सन्ततमभ्यस्यमानो मर्श इव गुणान् सुखोच्छ्वासादीन् कुर्यात् । अत्र च प्रतिमर्शे यन्त्रणा उष्णोदकोपचारी स्यादित्यादिका नास्ति । न च व्यापद्भ्योऽक्षिस्तब्धताशोफेत्यादिभ्यो भयं मर्श इव नास्तीति । मर्शे इव मर्शवत् । सप्तम्यन्ताद्वतिः ॥ ३२ ॥

तैलमिति । तैलमेव नित्याभ्यासेन, प्रतिमर्शन्यायेन नस्यार्थे श्रेष्ठं भवति । इतो

आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता।
मर्शे च प्रतिमर्शे च विशेषो न भवेद् यदि ॥ ३४ ॥
को मर्शं सपरीहारं सापदञ्च भजेत्ततः।
अच्छपानविकाराख्यौ कुटीवातातपस्थिती।
अन्वासमात्राबस्ती च तद्वदेव च निर्दिशेत् ॥ ३५ ॥

जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वीत्वङ्मधुकप्लवागुरुवरापुण्ड्राह्वबिल्वोत्पलम्।
धावन्यौ सुरभिः स्थिरे क्रमिहरं पत्रं त्रुटिं रेणुकं
किञ्जल्कं कमलाह्वयं * शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥ ३६

तैलाद्रसं दशगुणं परिशेष्य तेन
तैलं पचेच्च सलिलेन दशैव वारान्।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ ३७ ॥

हेतोर्मूर्ध्नः कफस्थानत्वात्। नचापरे स्नेहास्तेषां श्लेष्मलत्वादितिभावः। आशुकारी मर्शश्चिरकारी तु प्रतिमर्शः। गुणोत्कर्षयुक्तो मर्शो गुणापकृष्टतान्वितश्च प्रतिमर्श इत्यनयोर्भेदः। यदि च मर्शे प्रतिमर्शे च विशेषो न स्यात् तदा मर्शं सपरीहारं सव्यापदञ्च को भजेत्? न कश्चिद्भजेदित्यर्थः। प्रतिमर्शविशेषवदच्छपानविकाराख्यौ स्नेहौ शीघ्रकारित्वादिना विशेषेण निर्दिशेत्। तथा कुटीप्रवेशस्थित्या यद्रसायनमुपयुज्यते यच्च वातातपाद्यपरिहारस्थित्या रसायनं क्रियते ते च द्वे अपि तथैव विशेषेण निर्दिशेत्। तथान्वासनं तथा मात्राबस्तिश्च तावप्येवं चिरकारिशीघ्रकारित्वादिगुणैर्विनिर्दिशेत् ॥ ३३—३५ ॥

इदानीमणुतैलं निर्दिदिक्षुराह;—जीवन्तीत्यादि। जीवन्त्यादीनि द्रव्याणि दिव्ये जले क्वाथयेत्। गोपी सारिवा। प्लवं गोपालदमनाख्यम्। पुण्ड्राह्वं पौण्डरीकम्। धावन्यौ कण्टकारिकामहोटिकाख्ये। सुरभिः सल्लकी। स्थिरे शालपर्णीपृश्निपर्ण्यौ। क्रमिहरं विडङ्गम्। अत्र तैलसमानि द्रव्याणि ग्राह्याणीति वैद्यव्यवहारः। आकाशाद्दैः पटादिभिर्गृहीतं जलं दिव्यमुच्यते। तैले तस्माच्छतगुणं गृहीत्वा तावत् क्वाथयेत्, यावद्दशगुणो रसस्तैलात् स्यात्। तेन क्वाथेन च तैलं दशवारान् पचेत्। दशमे च पाके तैलसममजाक्षीरं क्षिपेत्, ततः पुनः पचेत्। इति तत्तैलं महागुणमणुतैलसंज्ञं कथयन्ति। अणुषु तैलमणुतैलम्। अणूनीन्द्रियस्रोतांसि प्रविशतीत्यर्थः ॥ ३६-३७ ॥

* कमलाद् बला इति वा पाठः।

घनोन्नत-प्रसन्न-त्वक्-स्कन्ध-ग्रीवाऽस्य-वक्षसः ।
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ ३८ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ।

अथातो धूमपानविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
जत्रूर्ध्वं कफवातोत्थ-विकाराणामजन्मने ।
उच्छेदाय च जातानां पिबेद्धूमं सदाऽऽत्मवान् ॥ २ ॥
स्निग्धो मध्यः स तीक्ष्णश्च वाते वातकफे कफे ।
योज्यो न रक्तपित्तार्ति-विरिक्तोदरमेहिषु ॥ ३ ॥
तिमिरोर्ध्वानिलाध्मान-रोहिणीदत्तबस्तिषु ।
मत्स्य-मद्य-दधि-क्षीर-क्षौद्र-स्नेह-विषाशिषु ।

---

घनेति । नस्यशीलिनो निविडोन्नततररमणीयत्वगादयः स्युः । त्वक् च स्कन्धश्च ग्रीवा च आस्यञ्च वक्षश्च त्वक्स्कन्धग्रीवास्यवक्षः । घनोन्नतप्रसन्नं त्वक्स्कन्धग्रीवास्यवक्षो येषां ते घनोन्नतप्रसन्न-त्वक्-स्कन्धग्रीवाऽस्य-वक्षसः । तथा पुष्टेन्द्रियाः पलितवर्जिताश्च भवेयुः ॥ ३८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-
सुन्दराख्यायां नस्यविधिरध्यायो विंशतितमः ॥ २० ॥

---

ऊर्द्ध्वाङ्गचिकित्साप्रसङ्गाद्धूमपानविधिं जिगदिषुराह,—अथात इति । आत्मवान् सुमतिर्हिताहारविहारो जत्रुण ऊर्द्ध्वं श्लेष्मवातोद्भवानां विकाराणां रोगाणामजन्मनेऽनुत्पत्तेय, तथोत्पन्नानामुच्छेदाय विनाशाय सदा धूमं पिबेत् ॥ १ । २ ॥

स्निग्धेति । स च धूमः स्निग्धमध्यतीक्ष्णभेदेन त्रिधा । यथाक्रमं वाते स्निग्धो, वातकफे मध्यः, कफे तीक्ष्णो योज्यः । नेति—रक्तपित्तार्त्यादिषु धूमो नावचारणीयः । ननु वाते, वातकफे, कफे च धूमस्योक्तत्वात् पित्तार्त्तौ प्राप्तिरेव नास्ति, तत् किं प्रतिषेधेन ? ब्रूमः, वातप्रकृतिवातपित्तार्त्तौ सत्यां कश्चिद् भिषक्पाशो भ्रान्त्या प्रकृत्यनुरूपोपक्रमचिकीर्षया धूमं योजयेत्तन्निषेधार्थमिदमुक्तम् । अथवा पित्तार्त्तप्रकृतेर्वातश्लेष्म-

शिरस्यभिहते पाण्डुरोगे जागरिते निशि ॥ ४ ॥
रक्तपित्ताऽऽन्ध्य-बाधिर्य-तृण्मूर्च्छा-मद-मोह-कृत्।
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः ॥ ५ ॥
क्षुत-जृम्भित-विण्मूत्र-स्त्रीसेवा-शस्त्रकर्मणाम्।
हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ॥ ६ ॥
कालेष्वेषु निशाहार-नावनान्ते च मध्यमम्।
निद्रा-नस्याऽञ्जनस्नान-च्छर्दितान्ते विरेचनम् ॥ ७ ॥
बस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजु।
मूलाग्रेऽङ्गुष्ठकोलास्थि-प्रवेशं धूमनेत्रकम् ॥ ८ ॥

---

व्याद्युत्पत्तौ धूमो न योज्य इति प्रतिपादनार्थमिदं गदितम्। अशिशब्दो मत्स्यादिषु विषान्तेषु प्रत्येकं योज्यः। अत्र च यथासम्भवं पानं मद्यादेरशनञ्च मत्स्यादेरशनशब्देनेहोच्यते। चतुर्विधेष्वाहारेष्वशनशब्देनात्स्येव व्यवहारः। यथा मात्राशी सर्वकालं स्यादिति। केचिच्च यवागूपायिन्यपि धूमपानं नेच्छन्ति ॥ ३। ४ ॥

रक्तपित्तेति। मूर्छा संज्ञानाशः, मोहश्चित्तनाशः, मुह वैचित्त्ये इति पाठात्। आस्यबाधिर्यग्रहणमुत्तमाङ्गरोगोपलक्षणार्थम्; तेन संग्रहोक्तमर्दितमपि गृह्यते। धूमोऽकाले पूर्वोक्ते रक्तपित्ताद्यादौ पीतो रक्तपित्तादीन् कुर्यात्। अप्रतिषिद्धेऽपि काले क्षुतादावतिशयेन पीतो रक्तादिकृत्। तत्रेति—तत्र रक्तपित्ताद्यार्तौ विधिरुपक्रमो यथास्वं सर्पिःपाननस्यालेपपरिषेकादिः शीतो विधिर्हितः ॥ ५ ॥

इदानीं त्रयाणां धूमानां पृथक् कालं दर्शयन्नाह,—क्षुतेत्यादि; क्षुतादीनामष्टानामन्ते मृदुं स्नेहनाख्यं धूमं पिबेत्। एषु क्षुतादिषु कालेषु निशाहारनावनान्तेषु च मध्यमं धूमं पिबेत्। मध्यममिति "मध्यान्त" इति सः। विरेचनाख्यं धूमं निद्रादीनामन्ते पिबेत्। नावननस्ययोरेकार्थयोरिहोपादानान्नस्यक्रमेण धूमं पिबेदिति ग्रन्थकृता प्रतिपादितम्। तेन स्निग्धनस्यान्ते स्निग्धं मृदुपरपर्यायं धूमं पिबेत्। आचार्योपदेशाच्च क्षुताद्यन्तेषु च स्निग्धं धूमं पिबेत्। मध्याङ्गस्यान्ते मध्यमं धूमं पिबेत्। कालेष्वितिबहुवचनाच्च क्षुतादीनामष्टानामन्तादिषु च मध्यमं धूमं पिबेत्। एवं निद्रानस्यान्ते विरेचनं धूमं पिबेत्। कालेष्विति वचनान्निशाशब्दोऽत्र विरेचनपर्यायः ॥ ६। ७ ॥

साम्प्रतमत्र नेत्रस्वरूपमाह,—बस्तीति। बस्तौ नेत्रं बस्तिनेत्रं बस्तिनेत्रेण समं बस्तिनेत्रतुल्यं द्रव्यं धातुदार्वस्थिवेणुज यस्य धूमनेत्रस्य तद्बस्तिनेत्रसमद्रव्यं धूमनेत्रं शिल्पिना कारयेद्भिषक्। किम्भूतं नेत्रम्? त्रयः कोशाः पर्वाणि यस्य तत् त्रिकोशम्। ऋजु न वक्रम्। तथा मूलं चाग्रञ्च तस्मिन् यथासंख्यमङ्गुष्ठदराख्यिप्रवेशम्। अङ्गुष्ठश्च कोलास्थि चेति समाहारद्वन्द्वः। तत् प्रविशत्यस्मिन्निति, पद्मकृत्रिशिति यत्र ॥ ८ ॥

तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ।
अङ्गुलानां क्रमात्पातुः प्रमाणेनाष्टकानि तत् ॥ ९ ॥
ऋजूपविष्टस्तच्चेता विवृतास्यस्त्रिपर्य्ययम् ।
पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत् ॥ १० ॥
प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ।
उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कण्ठगे ॥ ११ ॥
मुखेनैव वमेद्धूमं नासया दृग्विघातकृत् ॥ १२ ॥
आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रिभिः ॥ १३ ॥
अक्षः पिबेत्सकृत् स्निग्धं द्विर्मध्यं शोधनं परम् ।
त्रिश्चतुर्वा मृदौ तत्र द्रव्याण्यगुरुगुग्गुलुः ॥ १४ ॥

---

दैर्घ्येण प्रमाणमिदानीन्तीक्ष्णादिकस्य त्रिविधस्य धूमनेत्रस्याह—तीक्ष्णेति । यथासंख्यं दैर्घ्येण तीक्ष्णस्य त्रीण्यष्टकानि चतुर्विंशतिरङ्गुलानि स्युः । स्नेहने च धूमे चत्वार्य्यष्टकानि द्वात्रिंशदङ्गुलानि स्युः । मध्यमे च धूमे पञ्चाष्टकानि चत्वारिंशदङ्गुलानि स्युः । पर्वानिकत्वं सूक्ष्मत्वं दैर्घ्यञ्च नेत्रस्येह कृतम् । एवं हि नयनकर्णादीनां न बाधको धूमः स्यात् । तथा च मुनिः—"दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः । नेन्द्रियं बाधते धूम" इति ॥ ९ ॥

कीदृशः सन् धूमं पिबेदित्याह ;—ऋजूपविष्ट इति । ऋजु स्पष्टम् । उपविष्ट आसीनः । तथा तच्चेता धूमपानगतचित्तः । तथा प्रसारितमुखः । तथा नेत्रगतदृष्टिरित्यपि द्रष्टव्यम् । कथं पिबेत् ? त्रिपर्य्ययं आक्षेपविसर्गावपनैस्त्रिपर्य्ययैः । तथा छिद्रमेकैकं पिधाय प्रकृतत्वान्नासिकया एव । तदेवंविधः सन् नासिकया पिबेत् ? एकैकमित्येकस्वहुव्रीहिवदिति द्वित्वसुब्लोपौ । तेनायमर्थः—एकं नासापुटं पिधायापरेण नासापुटेनाकृष्य धूमं पिबेत् । अपरं नासापुटं पिधाय तदपरेणाक्षिप्य तथैवोत्सृजेदित्यर्थः ॥ १० ॥

प्रागिति । नासागते शिरोगते वा दोषे उत्क्लिष्टे स्वस्थानाच्चलिते सति प्राक्पूर्वं नासया पिबेत् । अनुत्क्लिष्टे दोषे उत्क्लेशनार्थं वक्त्रेण प्राक् पिबेत् पश्चान्नासिकया । कण्ठरोधदोषोत्क्लेशनार्थं प्राङ्नासिकया पिबेत् पश्चाद्वक्त्रेणेति विपरीतम् । मुखेनेति —नासयास्येन वा पीतं धूमं वक्त्रेणैवोत्सृजेत् न तु घ्राणेनेव । कस्मान्न मुच्येत इत्याह—नासयेत्यादि । घ्राणेनोत्सृज्यमानधूमो दृष्टिविघाततिमिरादीन् करोति । तस्मान् मुखेनैवोत्सृजेत् । आक्षेपमोक्षैरिति । आक्षेपमोक्षैरादानविसर्गैस्त्रिभिस्त्रिभिस्त्रीन् वारान् धूमः पातव्यः । त्रिरिति—द्विस्त्रिचतुर्भ्यः सुच् ॥ ११—१२ ॥

अक्ष इति । अक्षः सकृदेकवारं स्निग्धं धूमं पिबेत् । मध्यमं धूमं द्वौ वारौ पिबेत् । अक्ष इत्यत्राप्यनुवर्त्तते । तीक्ष्णं धूमं त्रीन् वारांश्चतुरो वा दिवसस्य पिबेत् ।

मुस्तस्थौणेयशैलेय-नलदोशीरवालकम्।
वराङ्गकौन्तीमधुक-बिल्वमज्जैलवालुकम् ॥ १५ ॥
श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम्।
शल्लकी कुङ्कुमं माषा यवाः कुन्दुरकं तिलाः।
स्नेहः फलानां साराणां मेदोमज्जावसाघृतम् ॥ १६ ॥
शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम्।
न्यग्रोधोदुम्बराश्वत्थ-प्लक्षरोध्रत्वचः सिता ॥ १७ ॥
यष्टीमधु सुवर्णत्वक् पद्मकं रक्तयष्टिका।
गन्धाश्चाकुष्ठतगरास्तीक्ष्णे ज्योतिष्मती निशा * ॥ १८ ॥
दशमूलमनोह्वाऽऽलं लाक्षाश्वेताफलत्रयम्।
गन्धद्रव्याणि तीक्ष्णाणि गणो मूर्धविरेचनः ॥ १९ ॥
जले स्थितामहोरात्रमिषीकां द्वादशाङ्गुलाम्।
पिष्टैर्धूमौषधैरेवं पञ्चकृत्वः प्रलेपयेत् ॥ २० ॥
वर्तिरङ्गुष्ठवत् स्थूला यवमध्या यथा भवेत्।
छायाशुष्कां विगर्भान्तां स्नेहाभ्यक्तां यथायथम्।

---

अक्र इति क्त्वोऽर्थप्रयोगे कालेऽधिकरणे इति षष्ठी। मृदाविति—तत्र तेषु त्रिषु धूमेषु मध्यम् मृदौ प्रायोगिकाख्ये धूमे द्रव्याण्यगुरुप्रभृतीनि। प्लवो गोपालमदनकः। स्नेह इति—फलानामक्षोड़नालिकेरादीनां स्नेहः; तथा साराणां खदिरासनादीनाञ्च स्नेहः। मधुकमदनयोरेकयोनित्वादुक्तस्योपयोगो मदनस्यात्र विरुद्ध इति केचित्; तच्चायुक्तम्। द्रव्यान्तरत्वात् मदनस्य पिण्याकादिवत् तिलादेः। घृतं चात्र गव्यमेव ग्राह्यं मुख्यत्वात्। उक्तं हि—"गव्ये क्षीरघृते श्रेष्ठे" इति ॥ १४-१६ ॥

शमन इति। शमने धूमे शल्लक्यादीनि गन्धद्रव्याणि कुष्ठतगरवर्ज्यानि। तीक्ष्ण इति—तीक्ष्णे विरेचनाख्ये धूमे ज्योतिष्मत्यादीनि गन्धद्रव्याणि च, तीक्ष्णानि कुष्ठतगरादीनि, गणश्च शोधनादिगणः संग्रहोक्तो वेश्वापामार्गत्यादिको मूर्धविरेचनः ॥ १७-१९ ॥

सम्प्रति धूमवर्तिविधानमाह;—जल इति। रात्रिन्दिवं सलिले उषितां दर्भेण द्वादशाङ्गुलामिषीकां दर्भमूलं पञ्चकृत्वः पञ्चवारान् धूमोक्तरौषधैः पिष्टैः प्रकर्षेण लेपयेत्। तथाङ्गुष्ठवत् स्थूला यवमध्या वर्त्तिः स्यात्। एतदाकृतिविधानञ्च त्रिविधेऽपि

---

* निशेइति क्वचित् पाठः।

धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत् ॥ २१ ॥
शरावसम्पुटच्छिद्रे नाड़ीं न्यस्य दशाङ्गुलाम्।
अष्टाङ्गुलां वा वक्त्रेण कासवान् धूममापिबेत् ॥ २२ ॥
कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषः।
कर्णास्याक्षिस्रावकण्डूर्तिजाड्यं
तन्द्रा हिक्का धूमपं न स्पृशन्ति ॥ २३ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशतितमोऽध्यायः।

अथातो गण्डूषादिविधिमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

नेत्रके वर्त्तेः सुखप्रवेशार्थम्। तामिषीकां छायाविशुष्कां विगतगर्भामपनीतेषीकां तथा स्नेहेन घृतादिना यथास्वमभ्यक्तां तथा धूमनेत्रस्य यदङ्गुष्ठप्रमाणं छिद्रं तत्रार्पितां तथाग्निप्लुष्टामङ्गारप्रदीप्तां पातुं पानार्थं प्रयोजयेत् ॥ २०।२१ ॥

अधुनापरमपि धूमप्रकारमाह;—शरावेति। शरावयोः संपुटं युग्मं तस्य च्छिद्रे नाड़ीं दशाङ्गुलामष्टाङ्गुलप्रमाणां वा निक्षिप्य कासी धूममापिबेत्। तदयमत्रार्थः—अपगतधूमखदिरबदरादिदारुस्थिराङ्गारप्रखरपूर्णशरावे कासहरचूर्ण सस्नेहं गुलिकां वा न्यस्य मध्यकृतच्छिद्रशरावेण पिधाय नाड़ीमष्टाङ्गुलां दशाङ्गुलां वा निवेश्य कासवान् कासी वक्त्रेण मुखेन धूमं पिबेदिति ॥ २२ ॥

कास इति। कासादयो धूमपं न स्पृशन्ति। धूमं पातुरेते न सम्भवन्तीति भावः। तत्र पूतिर्गन्ध आस्यनासयोः। पाण्डुता मुखस्य। केशस्य दोषाः सितपिञ्जरत्वादयः। कर्णौ चास्यञ्चाक्षिणी च कर्णास्याक्षि स्रावश्च कण्डूश्चार्त्तिश्च जाड्यञ्च स्रावकण्डूर्तिजाड्यम्। कर्णादिषु प्रत्येकं स्रावादिचतुष्टयं योज्यमिति। शालिनीवृत्तम् ॥ २३ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्गसुन्दराख्यायां धूमपानविधिरध्यायः एकविंशः ॥ २१ ॥

---

इदानीं द्वाविंशाध्यायारम्भणप्रस्तावे गण्डूषादिविधानप्रदर्शनार्थमित्याह;—अथात इति। गण्डूषादयो विधीयन्ते यस्मिन् इति गण्डूषादिविधिः। आदिशब्देन कवलादिपरिग्रहः ॥ १ ॥

चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ।
रोपणश्च त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ २ ॥
अन्त्यो व्रणघ्नः स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ।
स्नेहैः संशमनस्तिक्त-कषायमधुरौषधैः ॥ ३ ॥
शोधनस्तिक्तकट्वम्ल-पटूष्णै रोपणः पुनः ।
कषायतिक्तकैस्तत्र स्नेहः क्षीरं मधूदकम् ॥ ४ ॥
शुक्तं मद्यं रसो मूत्रं धान्याम्लञ्च यथायथम् ।
कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ५ ॥
दन्तहर्षे दन्तचाले मुखरोगे च वातिके ।
सुखोष्णमथवा शीतं तिलकल्कोदकं हितम् ॥ ६ ॥
गण्डूषधारणे नित्यं तैलं मांसरसोऽथवा ॥ ७ ॥
ऊषादाहान्विते पाके क्षते वागन्तुसम्भवे ।
विषक्षाराग्निदग्धे च सर्पिर्धार्य्यं पयोऽथवा ॥ ८ ॥
वैशद्यं जनयत्यास्ये सन्दधाति मुखव्रणान् ।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ ९ ॥

---

चतुष्प्रकार इति । चत्वारः प्रकारा भेदा यस्य स चतुष्प्रकारो गण्डूषः स्निग्धादि-भेदेन । त्रय इति । तत्र तेषु गण्डूषेषु मध्याद्यथासंख्यं पवनपित्तश्लेष्मसु त्रयः स्निग्धादयो गण्डूषा योज्याः । तत्र वाते स्निग्धो गण्डूषः, पित्ते शमनः, कफे शोधन इत्यर्थः । अन्त्यो रोपणाख्यो व्रणघ्नो व्रणसाधने उपयुज्यते । इदानीमेषां लक्षणं निर्वक्ति,—स्निग्ध इति, अत्र एषु गण्डूषेषु मध्ये स्निग्धो मधुरादिसाधितैः स्नेहैर्भवति । संशमन इति—शमनस्तिक्तादिभिरौषधैः पटोलारिष्टजम्ब्वाम्रमधुककषायशर्करोदकक्षौद्रा-दिभिः स्यात् । शोधन इति—शोधनो गण्डूषस्तिक्तकट्वम्लादिभिरौषधैर्भवति । रोपण इति—रोपणस्तु गण्डूषः कषायतिक्तकः स्यात् । ननु द्रव्याणां शुष्कत्वाद्गण्डूषानुप-पत्तिरिति चेत् तत्राह ;—तत्रेति । तत्र तेषु पूर्वोक्तेषु गण्डूषेषु मध्ये स्नेहादिकं कल्कै-र्यथायुक्तं विपक्वं यथास्पर्शं शीतमुष्णं वा प्रयोजयेत् ॥ २—५ ॥

दन्त[illegible] इति । दन्तहर्षादौ कवोष्णमथवा शीतं दोषवशात् तिलकल्कोदकं हितम् । गण्डूषेति—गण्डूषधारणे नित्यं तैलं मांसरसो वा हितः । ऊषादियुक्ते पाके क्षते वागन्तुजे तथा विषे क्षाराग्निभ्यां दग्धे च सर्पिर्गण्डूषे हितं क्षीरं वा ॥ ६—८ ॥

वैशद्यमिति । माक्षिकगण्डूषधारणं मुखे वैशद्यं जनयति, न पैच्छिल्यम् । मुखव्रणांश्च सन्दधाति, तथा दाहं तृष्णाञ्च शमयति । धान्येति—धान्याम्लं गण्डूष

धान्याम्लमास्यवैरस्य-मलदौर्गन्ध्यनाशनम् ।
तदेवालवणं शीतं मुखशोषहरं परम् ॥ १० ॥
आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ।
सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ॥ ११ ॥
निवाते सातपे स्विन्नमृदितस्कन्धकन्धरः ।
गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत् ॥ १२ ॥
कफपूर्णास्यता यावत् स्रवद्घ्राणाक्षताऽथवा ।
असञ्चार्य्यो मुखे पूर्णे गण्डूषः कवलोऽन्यथा ॥ १३ ॥

मन्या-शिरः-कर्ण-मुखाऽक्षि-रोगाः
प्रसेककण्ठामयवक्त्रशोषाः ।
हृल्लास-तन्द्राऽरुचि-पीनसाश्च
साध्या विशेषात् कवलग्रहेण ॥ १४ ॥

कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् ।
युञ्ज्यात्तत् कफरोगेषु गण्डूषविहितौषधैः ॥ १५ ॥

---

उपयुक्तं वदनवैरस्यं, तथा मलदौर्गन्ध्यं चापनयति । तदिति—तदेव काञ्जिकमलवणं शीतं परमतिशयेनास्यशोषहरम् । आश्विति—क्षारेण स्वर्जिकादिना युक्तं जलं कफस्य चयमाशु भिनत्ति । सुखेति—कोष्णपानीयगण्डूषैर्वदनलाघवं सम्पद्यते । निवात इति—वातरहिते रव्यालोके स्थाने । स्कन्धौ च कन्धरा च स्कन्धकन्धरम् । पूर्वं स्विन्नं पश्चान्मृदितं स्कन्धकन्धरं यस्य स एवम् । तथा गण्डूषमपिबंस्तथा किञ्चिदुन्नतं मुखं यस्य स एवं विधः सन् गण्डूषं धारयेत् ॥ ९—१२ ॥

कियन्तं कालमित्याह,—कफेत्यादि । कफेन पूर्णं कफपूर्णमास्यं यस्य स कफपूर्णास्यस्तस्य भावः कफपूर्णास्यता यावद्भवेत् । अथवा स्रवत् घ्राणाक्षि यस्य स स्रवद्घ्राणाक्षः, बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्; तस्य भावः स्रवद्घ्राणाक्षता यावत् स्यात् तावद् गण्डूषान् धारयेत् । एवं गण्डूषाः पञ्च सप्त धारयितव्याः, यावत् स्वास्थ्यं स्यात् । मुखे पूर्णे सति यः सञ्चारयितुमशक्यः स्यात् स गण्डूष उच्यते । अन्यथा च सञ्चारयितुं शक्यते मुखे अपूर्णे यः स कवल उच्यते ॥ १३ ॥

मन्येति । मन्यादीनां रोगेण सम्बन्धः । प्रसेकादीनां द्वन्द्वः । आमयशब्दस्य कण्ठेन सम्बन्धो विविधकण्ठरोगसूचनार्थः । मन्यारोगादयो विशेषेण कवलधारणेन साध्याश्चिकित्स्याः । कल्क इति—कल्कादिभेदेन प्रतिसारणं त्रिधा स्यात् । कल्को जलादिपिष्टः । माक्षिकादिना यद्द्रवीक्रियते द्रव्यं सा रसक्रिया । चूर्णं प्रथितमेव । युञ्ज्यात्

मुखालेपस्त्रिधा दोषविषहा वर्ण्यकृच्च सः।
उष्णो वातकफे शस्तः शेषेष्वत्यर्थशीतलः॥ १६॥
त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः॥ १७॥
अशुष्कस्य स्थितिस्तस्य शुष्को दूषयति च्छविम्।
तमार्द्रयित्वाऽपनयेत् तदन्तेऽभ्यङ्गमाचरेत्।
विवर्जयेद्दिवास्वप्न-भाष्याग्न्यातप-शुक्क्रुधः॥ १८॥
न योज्यः पीनसेऽजीर्णे दत्तनस्य हनुग्रहे।
अरोचके जागरिते स च हन्ति सुयोजितः।
अकालपलितव्यङ्ग-वलीतिमिरनीलिकाः॥ १९॥
कोल-मज्जा-वृषान्मूलं शावरं गौरसर्षपाः।
सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ्निस्तुषा यवाः॥ २०॥
दर्भमूल-हिमोशीर-शिरीष-मिषि-तण्डुलाः।
कुमुदोत्पल-कह्लार-दूर्वा-मधुक-चन्दनम्॥ २१॥
कालीयक-तिलोशीर-मांसी-तगर-पद्मकम्।
तालीस-गुन्द्रा-पुण्ड्राह्व-यष्टी-काश-नतागुरुः।
इत्यर्द्धार्द्धोदिता लेपा हेमन्तादिषु षट् स्मृताः॥ २२॥

---

तदिति—तत् प्रतिसारणं श्लेष्मरोगेषु गण्डूषोक्तैरौषधैर्योज्यम्। सामान्योक्तावपि कफरोगविषयत्वात् शोधनगण्डूषोक्तैरिति वेद्यम्॥ १४। १५॥

मुखेति—मुखालेपस्त्रिप्रकारः, दोषघ्नो विषघ्नो वर्णकरश्च। उष्ण इति—स च मुखालेपो वातश्लेष्मण्युष्णो हितः। शेषेषु पित्ते वातपित्ते विषे च शिशिरो हितः। स च त्रिप्रमाणः। कथमित्याह, त्रिप्रमाण इति—चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः। उन्नतिरुत्सेधः॥१६।१७॥

अशुष्कस्येति। तस्य मुखालेपस्याशुष्कस्य स्थितिः। शुष्कस्तु मुखालेपश्छविं त्वचं दूषयति। मुखालेपमार्द्रयित्वा अपसारयेत्। तस्यान्ते तस्मिन्नपनीतेऽभ्यङ्गं कुर्यात्। विवर्ज्जयेदिति। मुखालेपी दिवास्वप्नादीन् वर्जयेत्। अह्नःस्वप्नादिसेवनात् कण्डू-त्वक्शोफ-पीनस-दृष्ट्युपघातादिभयं स्यात्। नेति—पीनसादौ मुखालेपो न योज्यः। स च मुखालेपः सुयोजितो विधिना सेवितोऽकालपलितादीन् पराकरोति॥ १८।१९॥

कोलेत्यादि। कोलमज्जादयोऽर्द्धश्लोकोक्ताः षण्मुखालेपा इत्येवं षट्सु हेमन्तादिषु ऋतुषु स्मृताः, मुनीन्द्रैरिति शेषः। तत्र बदरमज्जादयो हेमन्ते। व्याघ्र्यादयः शिशिरे। दर्भमूलादयो वसन्ते। कुमुदादयो ग्रीष्मे। कालीयकादयः प्रावृषि। तालीसादयः शरदि॥ २०—२२॥

मुखालेपनशीलानां दृढ़ं भवति दर्शनम्।
वदनं चापरिम्लानं श्लक्ष्णं तामरसोपमम् ॥ २३ ॥
अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विधम्।
मूर्धतैलं बहुगुणं तद् विद्यादुत्तरोत्तरम् ॥ २४ ॥
तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु।
अरुंषिकाशिरस्तोद-दाहपाकव्रणेषु तु ॥ २५ ॥
परिषेकः पिचुः केशशातस्फुटनधूपने।
नेत्रस्तम्भे च बस्तिस्तु प्रसुप्तार्दितजागरे।
नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ॥ २६ ॥
विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदौ।
शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ॥ २७ ॥
द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरःसमम्।
आकर्णबन्धनस्थानं ललाटे वस्त्रवेष्टिते।
चैलवेणिकया बद्ध्वा माषकल्केन लेपयेत् ॥ २८ ॥

---

मुखेति। मुखालेपाभ्यासवतां नराणां दर्शनं दृष्टिर्दृढं स्यात्। मुखञ्च विकसितमिव, तथा कोमलं पद्मतुल्यञ्च जायते। अभ्यङ्गेति—अभ्यङ्गादिभेदात् चतुर्धा शिरसि तैलं स्यात्। बहुगुणमिति—तच्चोत्तरोत्तरं बहुगुणं विद्यात्। अभ्यङ्गात् सेको बहुगुणस्ततोऽपि पिचुस्तस्मादपि बस्तिरिति क्रमेण। तत्रेति—तत्र तेषु मध्ये रौक्ष्यादिष्वभ्यङ्गः कार्यः। अरुंषिकेति। अरुंषिकादिषु परिषेकः। पिचुरिति—केशशातादिषु पिचुः प्रयोक्तव्यः। बस्तिरिति—बस्तिः पुनः प्रसुप्तादौ योज्यः ॥ २३—२६ ॥

विधिरिति। तस्य शिरोवस्तेर्विधानमुच्यते। निषण्णस्योपविष्टस्य नरस्य। क्व? पीठे जानुतुल्ये, तथा मृदौ न कठिने। किम्भूतस्य? शुद्धो वमनादिना, अक्तस्तैलादिना, स्विन्नः स्वेदेन देहो यस्य तस्य शुद्धाक्तस्विन्नदेहस्य। कदा? दिनान्तेऽपराह्णे विभावर्यां वा। चर्मपट्टं गव्यं माहिषं वा, तथा द्वादशाङ्गुलविस्तीर्णं, तथा शिरस्तुल्यं, तथा आकर्णं कर्णं यावद्बन्धनस्थानं यस्य तदेवंविधं चर्मपट्टं चैलवेणिकया संयम्य माषकल्केन लेपयेत्। कदा? ललाटे वस्त्रवेष्टिते। संग्रहे तूक्तम्,—"अथ शुद्धतनोः सायं रात्रौ वा निवातस्थस्य स्वभ्यक्तस्विन्नस्य सोपाश्रयासनोपविष्टस्य केशान्ते श्लक्ष्णं त्र्यङ्गुलं माषपिष्टेन सूक्ष्मेण सद्यः सुखाम्बुना मृदितेन उभयतः प्रदिग्धं वस्त्रपट्टं बध्नीयात्। ततस्तस्योपरि सन्धाय बस्तिं बस्तिमूलञ्च दृढमवलीकं समं चैलवेणिकया बद्ध्वा पुनर्माषपिष्टेनोपरिस्रौवि कृत्वा यथाव्याधिदोषदूष्यहितसिद्धमन्यतमं स्नेहं सुखोष्णमासेचयेदिति ॥ २७।२८ ॥

ततो यथाव्याधि शृतं स्नेहं कोष्णं निषिचयेत् ।
ऊर्ध्वं केशभुवो यावद् द्व्यङ्गुलं धारयेच्च तम् ॥ २९ ॥
आवक्त्रनासिकोत्क्लेदात् दशाष्टौ षट् चलादिषु ।
मात्रासहस्राण्यरुजि त्वेकं स्कन्धादि मर्दयेत् ॥ ३० ॥
मुक्तस्नेहस्य परमं सप्ताहं तस्य सेवनम् ।
धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयन् ।
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥ ३१ ॥
यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।
निमिषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥ ३२ ॥
कचसदनसितत्वपिञ्जरत्वं परिफुटनं शिरसः समीररोगान् ।
जयति जनयतीन्द्रियप्रसादं स्वरहनुमूर्द्धबलञ्च मूर्द्धतैलम् ॥ ३३ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने द्वाविंशतितमोऽध्यायः ॥ २२ ॥

---

तत इति । तत एवं कृते सति व्याधिवशेन पक्वं स्नेहं कोष्णमुपरि च्छिद्रेणावसेचयेत् । केशभूमेरुपरिष्टाद् द्व्यङ्गुलं यावत् । स च स्नेहः कियत् कालं धार्य्य इत्याह,—धारयेदिति । तच्च स्नेहं यावद् वक्त्रनासिकास्रुतिः स्यात्तावद् धारयेत् । दशेति—चल आदिर्येषान्ते चलादयस्तेषु यथासंख्यं दशाष्टौ षट् मात्रा सहस्राणि यावत् स्नेहं धारयेत् । वाते दशमात्रासहस्राणि, पित्तेऽष्टौ मात्रासहस्राणि, कफे षण्मात्रासहस्राणीत्यर्थः । अरुजे इति—अरुजे तु स्वस्थवृत्ते एकं मात्रासहस्रं धारयेत् । स्कन्धेति—मुक्तस्नेहस्यापनीतशिरोवस्तेः स्कन्धशिरोग्रीवादि मर्दयेत् । स्नेहवस्तिर्हि स्नेहशब्देनात्र गृह्यते । तत उष्णोदकोपचारी स्यादित्यादिकमाचरेत् । तत्र ह्यवोचत्,—"सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः" इति । परममिति—तस्य च स्नेहवस्तेः परमं सेवनं सप्तदिनानि । तस्मात् त्रिपञ्चसप्त वा अहानि कार्यः शिरोवस्तिरित्यवतिष्ठते । धारयेदिति—कर्णपूरणं धारयेत् । किं कुर्वन् ? कर्णमूलं विमर्दयन् कियत्कालम् ? यावत् पीडाया मार्दवं भवेत् । स्वस्थवृत्ते तु मात्राशतं यावद् बिभृयात् ॥ २९—३१ ॥

अथ मात्रायाः किं प्रमाणमित्याह,—यावदिति । दक्षिणं हस्ताग्रं कर्तृ जानुमण्डलं दक्षिणं पर्येति परिवर्तते । दक्षिणशब्दोऽत्र काकाक्षिगोलकन्यायेन द्वयेनापि युज्यते । कियत्कालेनेत्याह, निमिषोन्मेषमात्रेण समं न तु विश्रम्य सा मात्रा स्मृता, मुनिभिरिति शेषः ॥ ३२ ॥

कचेति । कचानां सदनादिभिः सम्बन्धः । परिफुटनं कचानामेव प्रक्लिन्नत्वात

# त्रयोविंशोऽध्यायः।

अथात आश्चोतनाञ्जनविधिमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥
सर्वेषामक्षिरोगाणामादावाश्चोतनं हितम्।
रुक्तोदकण्डूघर्षाश्रु-दाहरोगनिबर्हणम्॥
उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः॥ २॥
निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम्।
शुक्त्या प्रलम्बयान्येन पिचुवर्त्या कनीनिके॥ ३॥
दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत्।
ततः प्रमृज्य मृदुना चैलेन कफवातयोः।
अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु॥ ४॥

---

शिरसो मरुदामयांश्च हन्ति। इन्द्रियाणां चक्षुरादीनां प्रसादं जनयति। तथा स्वरादि-बलञ्च मूर्द्धतैलं जनयति॥ ३३॥

इति श्रीमृगाङ्कदत्तपुत्त्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-सुन्दराख्यायां गण्डूषादिविधिरध्यायो द्वाविंशतितमः॥ २२॥

---

त्रयोविंशाध्यायारम्भो ज़त्रूर्ध्वरोगप्रस्तावाल्लोचनाश्चोतनविधानप्रदर्शनार्थमित्याह,—अथात इति। आश्चोतनस्याञ्जनस्य तयोर्विधिर्यस्मिन्नध्याये स एवम्। शेषं पूर्व्ववत्॥ १॥

सर्व्वेषामिति। सकलानामपि नयनामयानां प्रथममाश्चोतनं परिषेको हितम्। यतस्तदाश्चोतनमुपयुक्तं रुजादिघ्नं स्यात्। संग्रहे चोक्तम्,—"अव्यक्तेष्वेव रुजादिष्वेवं तुल्यगुणं पक्ष्मपरिहारेणाक्षिकोशालेपनं तच्च बिडालकसंज्ञकमिति। उष्णमिति—तदाश्चोतनं मरुति उष्णम्। कफे किञ्चिदुष्णम्। रक्ते पित्ते च शीतं हितम्॥ २॥

सम्प्रत्याश्चोतनस्य विधिमाह—निवातस्थस्येति। निवातस्थानस्थितस्यातुरस्य वैद्यो वामेन पाणिनोन्मील्य लोचनमपाङ्गदेशे भाजनं निधाय अन्येन दक्षिणकरेण पिचुवर्त्या शुक्त्या प्रलम्बया दश द्वादश वा बिन्दून् द्व्यङ्गुलान्नातिनिकटान्नातिदूरात् कनीनिके अवसेचयेत्। तत इति—अनन्तरं कोमलेन वस्त्रखण्डेन प्रमृज्य शोधयित्वाऽन्येन शोधनाच्चैलेन कोष्णजलप्लुतेनाक्षि मृदु स्वेदयेन्नातिशयेन। कयोर्दोषयोः? वात-कफयोः। नतु पित्तरक्तयोरित्यर्थः॥ ३। ४॥

अत्युष्णतीक्ष्णं रुग्राग-दृङ्नाशायाक्षिसेचनम्।
अतिशीतन्तु कुरुते निस्तोदस्तम्भवेदनाः॥ ५॥
कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु।
विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम्॥ ६॥
गत्वा सन्धिशिरोघ्राण-मुखस्रोतांसि भेषजम्।
ऊर्ध्वगान्नयने न्यस्तमपवर्तयते मलान्॥ ७॥
अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले।
पक्वलिङ्गेऽल्पशोफाति-कण्डूपैच्छिल्यलक्षिते॥ ८॥
मन्दघर्षाश्रु रोगेऽक्ष्णि * प्रयोज्यं घनदूषिके।
आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः॥ ९॥
लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा।
अञ्जनं लेखनं तत्र कषायाम्लपटूषणैः॥ १०॥

---

अतीति। अत्यर्थमुष्णमतितीक्ष्णञ्चाश्चोतनं रुजे रोगाय दृग्विनाशाय च स्यात्। अतिशीतं त्वक्षिसेचनं निस्तोदादीन् विधत्ते। निस्तोदः सूच्येव व्यधः। स्तम्भोऽक्ष्णः स्तम्भनमिव, वेदनां शूलम्। कषायवर्त्मत्वं कुरुते। घर्षो वर्त्मनः परस्परं संश्लेषः। बह्वतिमात्रमाश्चोतनं कृच्छ्रेणोन्मेषणं विधत्ते। अत्यल्पमक्षिसेचनं विकारवृद्धिं कुरुते। अपरिस्रुतमक्षिसेचनं संरम्भं नेत्रक्षोभं विधत्ते॥ ५। ६॥

कया युक्त्या नेत्रे प्रयुक्तमौषधं दोषानपनयतीत्याह,—गत्वेति। सन्ध्यादीनां द्वन्द्वः। ततः स्रोतःशब्देन षष्ठीसमासः। सन्धिशब्देनेहाक्षिकोशसंबन्धिनः सन्धयो गृह्यन्ते। तेनाक्षिकोशसम्बन्धिस्रोतांसि शिरोघ्राणमुखस्रोतांसि गत्वा नयने क्षिप्तमौषधमूर्ध्वगान्मलानपवर्तयते॥ ७॥

अथेति। अथाश्चोतनादन्यदञ्जनं प्रयोक्तव्यम्। कीदृशस्यातुरस्य? शुद्धा तनुर्यस्य स तस्य। मले नेत्रमात्राश्रये न त्वधिकशरीरव्यापिनि तथा पक्वलिङ्गे। पक्वलिङ्गता कथं वेद्येति विशेषणद्वारेणाह। अल्पशोफेनातिकण्ड्वा पैच्छिल्येन च लक्षितेऽवगते पक्वलिङ्गे सति। कीदृशेऽक्ष्णि? मन्दा अल्पा घर्षाश्रुरोगा यस्य तस्मिन्। तथा घना दूषिका नेत्रमलो यस्मिन् नयने तस्मिन्। एतदपि पक्वलिङ्गमेव। पित्तेन कफेन रक्तेन चातुरे मारुतेन चातुरे विशेषेणाञ्जनं प्रयोज्यम्॥ ८। ९॥

लेखनमिति। अञ्जनञ्च लेखनादिभेदेन त्रिभेदम्। लिख्यते शस्त्रेणेव शुक्रार्मादीति लेखनम्। रोप्यते संरोह्यतेऽनेनाऽभिस्यन्दादीति रोपणम्। प्रसाद्यते निर्म्मलीक्रियतेऽनेनेति प्रसादनं। दृष्टेः प्रसादनं दृष्टिप्रसादनम्। संगृहीतस्य स्नेहनस्य यत् स्नेहन-

---

* रोगे इत्यत्र रागे इति क्वचित् पाठः।

रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम् ॥ ११ ॥ *

दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना ॥ १२ ॥

प्रशस्ता लेखने ताम्री रोपणे काललोहजा।

अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने ॥ १३ ॥

पिण्डो रसक्रिया चूर्णस्त्रिधवाञ्जनकल्पना।

गुरौ मध्ये लघौ दोषे ताः क्रमेण प्रयोजयेत् ॥ १४ ॥

हरेणुमात्रं पिण्डस्य वेल्लमात्रा रसक्रिया। †

तीक्ष्णस्य द्विगुणं तस्य मृदुनश्चूर्णितस्य च।

द्वे शलाके तु तीक्ष्णस्य तिस्रः सुशीतरस्य च ॥ १५ ॥

---

मञ्जनं कथितं तदिह रोपणदृष्टिप्रसादनयोरेवान्तर्भूतत्वात् पृथङ्नोक्तम्। तत्र तेषु त्रिष्वञ्जनेषु मध्याल्लेखनमञ्जनं कषायादिभिर्द्रव्यैः शुक्रार्मादिषु प्रयोज्यम् ॥ १० ॥

रोपणेत्यादि। रोपणमञ्जनं तिक्तकैर्द्रव्यैः स्यात्। तिक्तग्रहणमुपलक्षणार्थं संग्रहोक्तस्य। तेन कषायद्रव्यैः सस्नेहैरोपणमञ्जनं वेद्यम्। स्वादुशीतैर्द्रव्यैः प्रसादनमेव प्रसादनमञ्जनम्। स्वादुशीतद्रव्यैश्च यत् श्लक्ष्णाञ्जनं सन्तप्ते चक्षुषि प्रयुज्यमानं प्रत्यञ्जनसंज्ञां लभते ॥ ११ ॥

दशाङ्गुलेति। दशाङ्गुला राजमाषस्थूला शलाका प्रशस्यते। मध्ये तनुः तथा मुकुलाकारे आनने मुखे द्वे अपि यस्याः सा मुकुलानना। लेखनेऽञ्जने ताम्री शलाका प्रशस्यते। रोपणे काललोहोत्था कृष्णशस्त्रोद्भवा। अङ्गुली च हस्तावयवविशेषो रोपण एव शस्तः। एवं प्रसादने अञ्जने कनकोत्था सुवर्णोद्भवा रजतोद्भवा च शलाका प्रशस्ता ॥ १२। १३ ॥

अञ्जनकल्पना त्रिप्रकारा स्यात् कथमित्याह;—पिण्ड इति। पिण्डादिभेदेन त्रिप्रकारा अञ्जनकल्पना स्यात्। पिण्डादयो बहुदोषादिषु क्रमेण प्रयोज्याः। गुरौ दोषे पिण्डः प्रयोज्यो, मध्ये दोषे रसक्रिया, लघुदोषे चूर्णं इत्यर्थः ॥ १४ ॥

हरेणुमात्रमिति। तीक्ष्णद्रव्यकृतस्य पिण्डस्य हरेणुमात्रं प्रमाणं कथयन्ति मृदुद्रव्यकृतस्य पिण्डस्य द्विहरेणुमात्रं वदन्ति। रसक्रियाया विडङ्गं प्रमाणमाहुः। चूर्णं तीक्ष्णे द्विगुणां शलाकां, मृदौ त्रिगुणां शलाकामभिदधुः। तन्त्रान्तरे चोक्तम्—लेखन-

---

* तीक्ष्णाञ्जनाभिसन्तप्ते नयने तत्प्रसादनम्।
प्रयुज्यमानं लभते प्रत्यञ्जनसमाह्वयम् ॥ इत्यधिकः पाठः।

† पिण्डस्य तीक्ष्णद्रव्यस्य मृदुद्रव्यकृतस्य च। हरेणुमात्रं द्विगुणं प्रमाणं कथयन्त्यपि। रसक्रियायामप्याहुर्विडङ्गफलमात्रकम्। शलाकां द्विगुणां तीक्ष्णे चूर्णे च त्रिगुणां मृदौ। इति पाठान्तरम्।

निशि स्वप्ने न मध्याह्ने पानान्नोष्णगभस्तिभिः । *
अक्षिरोगाय दोषाः स्युर्वर्द्धितोत्पीड़ितद्रुताः ।
प्रातः सायञ्च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत् सदा ॥१६॥
वदन्त्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमञ्जनम् ।
विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ॥ १७ ॥
स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता ।
शीतसात्म्याद्दृगाग्नेयी स्थिरतां लभते पुनः ॥ १८ ॥
अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे ।
काममह्न्यापि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् ॥ १९
अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ।

---

मञ्जनं ताम्ररजतकांस्याद्यन्यतमेषु धार्यम्। रोपणं सुवर्णवटशङ्खान्यतमेषु। प्रसादनं स्फटिकप्लचचन्दनान्यतमेषु धार्य्यम्। एवं ह्यञ्जनमव्यापन्नगुणं भवति। वर्त्तिघर्षणाय शिला निम्नमध्याऽनुद्गारिणी पञ्चाङ्गुलायता त्र्यङ्गुलविस्तारेति ॥ १५ ॥

निशीति। निशि रात्रावञ्जनं न प्रयोज्यम्; तथा स्वप्ने स्वप्नकाले अञ्जनं न प्रयोज्यम्; तथा मध्यन्दिने अञ्जनं न प्रयोज्यम्; न च म्लाने लोचने अञ्जनं प्रयोज्यम्। केन म्लाने? उष्णाभिर्दीधितिभिः; यस्मादेषु कालेष्वञ्जनेन प्रयुक्तेन दोषा वृद्धिं नीतास्तथाऽन्यस्थानगतत्वादुत्पीड़ितास्तथा द्रुताः कालस्योष्णत्वाद्विलयं गता अक्षिरोगाय स्युः, तस्मादेषु कालेष्वञ्जनं न प्रयोज्यम्। यतः पूर्वोक्तेषु कालेषु पूर्वोक्ता दोषास्तस्मात् पूर्वाह्णे च तच्छान्त्यै तस्याक्षिरोगस्योपशमाय गताभ्रे रवौ सदैव नेत्रमञ्जयेत् ॥ १६ ॥

वदन्त्यन्ये इति। अन्ये त्वाचार्य्या एवं मन्यन्ते, तीक्ष्णमञ्जनं दिवा न प्रयोज्यं। कस्मादित्याह, यस्माच्चक्षुरादित्यं प्राप्य सीदति। किम्भूतम्? विरेकदुर्बलं तीक्ष्णाञ्जनेन विरेचितत्वात्। तस्माद्दिवसे तीक्ष्णमञ्जनं न प्रयोज्यम् ॥ १७ ॥

अतएवाह;—स्वप्नेनेति। यस्मात् स्वप्नेन रात्रौ तर्पिता, तथा कालस्य रात्र्याख्यस्य सौम्यत्वेन तर्पिता दृष्टिः पुनः स्थैर्यं प्राप्नोति, तीक्ष्णाञ्जनक्षोभितापि। कीदृग्दृष्टिः? आग्नेयी अग्न्युत्कटभूतसम्भवा, तथा शीतसात्म्या; तस्माद्रात्रावञ्जनं प्रयोज्यम्। आग्नेयीति सर्वत्राग्निकलिभ्यां ढग् वक्तव्य इति ढक्। शीतं सात्म्यं यस्याः पैत्तिकज्वरस्येव ॥ १८ ॥

तदेतदन्यमतव्यापकमिति दूषयन्नाह,—अत्युद्रिक्ते इति। अत्युत्कृष्टे कफे अथवा लेखनार्हे शुक्रार्मादौ रोगे दिनेऽपि नात्युष्णे तीक्ष्णमञ्जनं प्रयोजयेत्। काममनुगतमेतत्। कालस्यात्यौष्ण्यादञ्जनस्य तैक्ष्ण्याच्चातियोगेन दृष्ट्युपघातः स्यात् ॥ १९ ॥

अत एवाह,—अश्मन इति। पाषाणाल्लोहस्योत्पत्तिस्तस्मादेव चाश्मनः स्रवा-

---

* म्लाने नोष्णगभस्तिभिरिति क्वचित् पाठः।

उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ॥ २० ॥
न रात्रावपि शीतेऽति नेत्रे तोक्ष्णाञ्जनं हितम् ।
दोषमस्रावयत् स्तम्भकण्डूजाड्यादिकारि तत् ॥ २१ ॥
नाञ्जयेद्भीत-वमित-विरिक्ताशित-वेगिते ।
क्रुद्ध-ज्वरित-तान्ताक्षि-शिरोरुक्-शोक-जागरे ॥ २२ ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ।
अजीर्णेऽग्न्यर्कसन्तप्ते दिवा सुप्ते पिपासिते ॥ २३ ॥
अतितीक्ष्णमृदुस्तोक-बह्वच्छघनकर्कशम् ।
अत्यर्थशीतलं तप्तमंजनं नावचारयेत् ॥ २४ ॥
अथानुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः ।
अंजिते वर्त्मनी किञ्चिच्चालयेच्चैवमंजनम् ॥ २५ ॥
नेत्रं व्याप्नोति सहसा नचोन्मेषनिमेषणम् ।

---

तादियोगात्तीक्ष्णता । उपघातोऽपि कुण्ठत्वादिकस्तेनैव पाषाणेन न केवलं तैक्ष्ण्यम्,
तथा तेनैवाश्मशस्त्रन्यायेन नेत्रस्य तेजसोऽग्नेरश्मस्थानीयाज्जन्म रविसंज्ञात्तेजसः सका-
शात् तीक्ष्णता दर्शनपटुत्वमत्युष्णेन तु तेन तस्योपघातः; तस्माद् यदन्ये गदन्ति,
सामान्येनैव दिवाञ्जनं न प्रयोज्यमिति तदसदेव ॥ २० ॥

नेति । अपि च रात्रावपि नेत्रे कफाधिक्येनातिशीते कण्डूपैच्छिल्याद्यनुमिते
तीक्ष्णमञ्जनं न प्रयोज्यम् । यतो निशि तीक्ष्णमञ्जनमुपयुक्तं कालस्य सौम्यत्वाद् दोषा-
स्रवणेऽयोग्यमस्रावयदञ्जनं कण्डूजाड्यादिकृत् स्यात्, न तु शमकारि । तस्माच्छीतसात्म्या
दग्नाग्नेयो स्थिरतां लभते पुनरित्येतदप्यसत्; तस्मात् पूर्वोक्तमेवानवद्यम् ॥ २१ ॥

नाञ्जयेदिति । भीतादीनामक्षिणी वैद्यो नाञ्जयेत् । अशितोऽत्र सद्योभुक्तो
वैद्यः । सद्योभुक्तस्य नरस्य नयने नाञ्जयेदित्यर्थः । तान्ते सूक्ष्मभासुरादिदर्शना-
दभिघातत्वाच्च ग्लाने अक्षिणी यस्य स एवं तस्मिन् । अदृष्टेऽर्के जलदच्छन्नत्वात् । तथा
शिरःस्नातादिषु ॥ २२ । २३ ॥

साम्प्रतं यादृशमञ्जनं न योज्यं तद्दर्शयति,—अतीति । अतिशब्दस्य तीक्ष्णादिभि-
र्वनान्तैः सम्बन्धः । अत्यर्थशीतलमित्येतस्मादत्यर्थशब्दस्तप्तमित्यत्रानुवृत्तिक्रमेन सम्ब-
न्धेन योज्यः । अतितीक्ष्णादिगुणमञ्जनं न प्रयोजयेत् । तन्त्रान्तरे चाञ्जनविधिरुक्तः ।
सुखोपविष्टस्यातुरस्य सूपविष्टो वैद्यो वामाङ्गुष्ठेनोत्तरं वर्त्मोत्क्षिप्य कृष्णभागस्याधःकनी-
निकादपाङ्गं यावदञ्जनं नयेदिति ॥ २४ ॥

अथेति । अथैवमञ्जनस्वरूपमवेत्य नेत्रेऽञ्जिते सति दृष्टिगोलकमनुन्मीलयन्मध्ये
शनैः शनैः सञ्चारयेत् । कथम् ? वर्त्मनी चालयेत्, एवमञ्जनं नेत्रं व्याप्नोत्यनुप्रविशति

निष्पीडनञ्च वर्त्मभ्यां चालनं वा समाचरेत् ॥ २६ ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ २७ ॥
दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा ।
ऊर्ध्ववर्त्मनि संगृह्य शोध्यं वामेन चेतरत् ॥ २८ ॥
वर्त्मप्राप्ताञ्जनाद्दोषो रोगान् कुर्यादतोऽन्यथा ।
कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ।
तीक्ष्णाञ्जनाभितप्ते तु पूर्णं प्रत्यञ्जनं हितम् ॥ २९ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥

---

न च सहसा विध्यतिक्रमेणोन्मेषनिमेषणं कुर्यात्। च शब्दोऽवधारणे, नव समाचरेदित्यर्थः। वर्त्मभ्याञ्च निष्पीडनं न समाचरेत्। वाशब्दोऽवधारणे, चालनञ्च नव कुर्यात् ॥ २५—२६ ॥

अपेतेति। अपेतोऽपगत औषधसंरम्भो भेषजक्षोभो यस्मान्नेत्रात् तदेवमपेतौषधसंरम्भम्। अतएव निर्वृतमपेतदुःखानुबन्धि यदा लोचनं स्यात्तदा व्याध्यादियोग्यैर्जलैः प्रक्षालयेत्। तत्र व्याधिरभिष्यन्दादिः; दोषो वातादिः; ऋतुर्वसन्तादिः। दक्षिणेति। ततो नयनप्रक्षालनादनन्तरं दक्षिणाङ्गुष्ठेन सवस्त्रेण वामं नयनमूर्ध्ववर्त्मनि सम्यगादाय शोधनीयम्। वामेनाङ्गुष्ठेन सवाससेतरद्दक्षिणमूर्ध्ववर्त्मनि संगृह्य शोध्यम् ॥ २७। २८ ॥

किमिति शोध्यमित्याह,—वर्त्मेति। अतोऽन्यथा अशोध्यमाने वर्त्मनो प्राप्तञ्च तदञ्जनं वर्त्मप्राप्ताञ्जनं; तस्माद्दोषो रोगान् कुर्यात्, तस्मात्तच्छोध्यं नयनम्। कण्डूति— कण्डूश्च जाड्यञ्चेति समाहारद्वन्द्वः। तस्मिन् सति तीक्ष्णमञ्जनं योजयेत्; अथवा तीक्ष्णं धूमं योजयेत्। तीक्ष्णाञ्जनेति—पुनस्तीक्ष्णेनाञ्जनेनाभितप्ते लोचने पूर्णं प्रत्यञ्जनं चोक्तं हितमिति ॥ २९ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामाश्चोतनाञ्जनविधिरध्यायस्त्रयोविंशः ॥ २३ ॥

---

# चतुर्विंशतितमोऽध्यायः ।

अथातस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते ।
वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलेक्षणे ॥ २ ॥
कृच्छ्रोन्मीलशिराहर्ष-शिरोत्पाततमोऽर्जुनः ।
स्यन्दमन्थान्यतोवात-वातपर्ययशुक्रकैः ॥ ३ ॥
आतुरे शान्तरागाश्रु-शूलसंरम्भदूषिके ।
निवाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः ।
काले साधारणे प्रातः सायं चोत्तानशायिनः ॥ ४ ॥
यवमाषमयीं पालीं नेत्रकोशाद् बहिः समाम् ।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ।

---

अस्मादनन्तरं चतुर्विंशाध्यायारम्भः ; आश्चोतनाञ्जनाभ्यां हि नयनस्य प्रायो दौर्बल्यं, अतस्तर्पणादिरुपयोगी युक्त इत्याह,—अथात इति । तर्पणञ्च पुटपाकश्च तर्पणपुटपाकौ तयोर्विधिस्तम् । शेषं पूर्ववत् ॥ १ ॥

नयन इति । चक्षुषि ताम्यति सति, तथा स्तब्धादिगुणे तर्पणं कार्यम् ; तथा शीर्णे पक्ष्मणी यस्य तदेवम् । आविलमस्पष्टमीक्षणं दर्शनं यस्य तदेवम् । शीर्णपक्ष्म च तदाविलेक्षणञ्च तस्मिन् । तथा कृच्छ्रोन्मीलादयोऽक्षिरोगेषु वक्ष्यन्ते । कृच्छ्रोन्मीलश्च शिराहर्षश्च शिरोत्पातश्च तमश्चार्जुनश्च एतैरातुरे ; तथा स्यन्दश्च मन्थश्चान्यतोवातश्च वातपर्यायश्च शुक्रकश्च तैरातुरे, तथा नस्यानर्हे । यतो वक्ष्यति,—"तर्पणं पुटपाकञ्च नस्यानर्हे न योजयेत्", तथा शान्ता शमं गता रागाश्रुशूलसंरम्भदूषिका यस्मिन् नयने तस्मिन् । कीदृशि स्थाने ? निवाते विगतानिले । उपलक्षणञ्चेदम् । विगतातपरजोधूमादिक इत्यपि द्रष्टव्यम् । कीदृशयोः मस्तकदेहयोः ? शुद्धयोर्यथायोगं वमनविरेचननस्यैः कृतशुद्धयोरित्यर्थः । कीदृशि काले ? साधारणे वसन्तादिके । कदा ? सायं प्रातर्वा कीदृशस्यातुरस्य ? उत्तानशायिन इति । शयनस्यस्योत्तान-दोषदूष्याद्यपेक्षया । स्येत्यर्थः ॥ २—४ ॥

यवेति । यवैर्मिश्रा माषा यवमाषास्ते प्रकृता यस्यां सा यवमाषमयी ताम् । तादृशीं पालीं नेत्रकोशाद् बाह्यत उभयपार्श्वयोः समाननिम्नोन्नतां कृत्वा यथायोगं दोषदूष्याद्यनुरोधात् पक्वं घृतं निमीलिते अनुन्मीलिते लोचने क्षिपेत् । अथ पाल्या

सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलापितम् ॥ ५ ॥
नक्तान्ध्यवाततिमिर-कृच्छ्रबोधादिके वसाम् ।
आपक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्वतः ॥ ६ ॥
मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते ।
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ॥ ७ ॥
शतानि सप्त चाष्टौ च दश मन्थे दशाऽनिले ।
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥ ८ ॥
कृत्वाऽपाङ्गे ततो द्वारं स्नेहं पात्रे तु गालयेत् ।
पिबेच्च धूमं नेक्षेत व्योमरूपञ्च भास्वरम् ॥ ९ ॥
इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ।
स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ १० ॥
प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥

---

उच्छ्रायमाह,—द्व्यङ्गुलोच्चां द्व्यङ्गुलोच्छ्रायवतीम्, तथा दृढां निबिडाम् । यथा स्नेहो न प्रस्रवेदित्यर्थः । कीदृशं सर्पिः ? तप्तेन जलेन प्रकर्षेण विलापितं द्रवीकृतम् ॥ ५ ॥

नक्तान्ध्येति । रात्र्यन्ध्यादिषु वसां यथास्वौषधसिद्धां, तथैव विलापितामावपेत् । ( अथ स्नेहक्षेपादनन्तरं ) कथं आपक्ष्माग्रात् पक्ष्माग्राणि यावन्निमग्नानि तावत् सर्पिरावपेदिति । अथेति, अथ घृताद्यावपनादनन्तरं शनैः शनैरुन्मीलनं विदधतस्तस्यातुरस्य मात्राः पूर्वोक्ता विगणयेत् । तत्र तेषु वर्त्मादिके व्याधौ सर्पिषि क्षिप्ते शतसङ्ख्यादीर्मात्रा विगणयेत् क्रमेण । तत्र वर्त्मरोगे मात्राशतम्, सन्धिरोगे त्रीणि शतानि, सितरोगे पञ्च शतानि, असितरोगे सप्त शतानि, दृष्टिरोगे अष्टौ शतानि धारयेदिति । क्रमशो यथासंख्येन । मन्थाख्ये रोगे दश शतानि, वातरोगे दशैव शतानि, पित्तरोगे षट् शतानि, स्वस्थवृत्ते च षट् शतानि, कफे पञ्च शतानि धारयेत् ॥ ६—८ ॥

कृत्वेति । यथोक्तमात्रावधारणादनन्तरमपाङ्गदेशे पाल्या द्वारं कृत्वा स्नेहं भाजने निक्षिपेत् । ततः शक्तुपिण्ड्याऽक्षिकोशं प्रमृज्य स्नेहेरितकफोपशान्तये धूमञ्च पिबेन्न केवलं तर्पणं कुर्यात्, प्रक्षालितनेत्रं त्वेनं मात्रया भोजयेत् । न दिवसे, तथा व्योम न पश्येद् भास्वरं रूपञ्च । उपलक्षणञ्चेदम् । एवमातपमपि न पश्येत् ॥ ९ ॥

इत्थमिति । इत्थमनेन क्रमेण पवने प्रत्यहं तर्पणं दद्यात् । पित्ते पुनरेकान्तरं तर्पणं दद्यात् । कफे स्वस्थे च द्विदिनान्तरं योजयेत् । इत्येवं यावन्नयनस्य तृप्तिः स्यात् तावत्तर्पणं योज्यम् ॥ १० ॥

तृप्तस्य किं लक्षणमित्याह,—प्रकाशक्षमतेति । प्रकाशक्षमत्वादिकं तृप्तस्य सम्यक्

स्नेहपीता तनुरिव क्लान्ता दृष्टिर्हि सीदति।
तर्पणानन्तरं तस्माद्दृग्बलाधानकारिणम्।
पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव यक्ष्मसु॥ १२॥
सवाते स्नेहनः श्लेष्म-सहिते लेखनो हितः।
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः॥ १३॥
भूशय-प्रसहानूप-मेदो-मज्जा-वसामिषैः।
स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत्॥ १४॥
मृगपक्षियकृन्मांस-मुक्तायस्ताम्रसैन्धवैः।
स्रोतोजशङ्खफेनालैर्लेखनं मस्तुकल्पितैः॥ १५॥
मृग-पक्षि-यकृन्मज्जा-वसान्त्र-हृदयामिषैः।
मधुरैः सघृतैस्तन्यक्षीरपिष्टैः प्रसादनम्॥ १६॥
बिल्वमात्रं पृथक्पिण्डं मांसभेषजकल्कयोः।
उरुबूकवटाम्भोज-पत्रैः स्नेहादिषु क्रमात्॥ १७॥

---

तर्पितस्य लक्षणम्। प्रकाशक्षमता प्रभाभास्वरादिसहत्वम्। अतृप्ते वैपरीत्यं पूर्वा-
निर्दिष्टम्। अतितृप्ते सति कफोद्भवा कण्डूपैच्छिल्यादिका रुजः स्युः॥ ११॥
स्नेहेति। स्नेहपीता दृष्टिः क्लान्ता तनुरिव, यतोऽवसीदति तस्मात् कारणात्तर्प-
णानन्तरं पुटपाकं प्रयुञ्जीत। कीदृशम्? दृशोर्बलं दृग्बलं तस्याधानं प्रबन्धेन वृत्तिस्तत्
करोति तं दृग्बलाधानकारिणम्। हेतोर्द्वितीया। दृग्बलाधानकारित्वात् प्रयुञ्जी-
तेत्यर्थः। पूर्वोक्तेष्वेव तर्पणोक्तेष्वामयेषु इति। स च पुटपाको वाते स्नेहनो हितः,
कफसहिते मारुते लेखनो हितः, दृष्टिदौर्बल्यादिषु प्रसादनो हितः॥ १२। १३॥
इदानीमेषां पुटपाकानां कल्पनामाह,—भूशयेति। भूशया विलेशया भेक-
गोधाद्याः; प्रसहा गोखरादयः; अनूपा महामृगवारिचरवारिशयाः; तेषां मेदो-
मज्जावसामिषाणि तैः, तथा जीवनीयैर्जीवन्ती-काकोल्यादिभिश्च क्षीरपिष्टैः स्नेहनं
पुटपाकं कल्पयेद्वैद्यः॥ १४॥
मृगेति। मृगा हरिणाद्याः पक्षिणो विष्किरप्रतुदाः, तेषां यकृन्मांसानि तैः; तथा
भुक्तादिभिर्मस्तुकल्पितैर्लेखनं पुटपाकं कल्पयेद्वैद्यः। प्रसहानां मृगपक्षिणां स्नेहने
पुटपाके उपयुक्तत्वाज्जाङ्गला एव मृगपक्षिणोऽत्र ग्राह्याः। मृगपक्षीति। मृगपक्ष्यादीनां
यकृन्मज्जावसान्त्रहृदयामिषाणि तैः, तथा मधुरैर्मधुरवर्गोक्तैर्घृतान्वितैः स्तन्यक्षीरपिष्टैः
प्रसादनं पुटपाकं कल्पयेद्वैद्यः। अत्र स्तन्यं स्त्रिया एव॥ १५। १६॥
अधुना पुटपाकस्य कल्पनामाह,—बिल्वमात्रमिति। मांसस्य भेषजकल्कस्य तयोः
पृथक् बिल्वफलमात्रं पिण्डमेरण्डादिपत्रैर्वेष्टयित्वा कृष्णमृत्तिकालिप्तं वृद्धवैद्यव्यवहारात्

वेष्टयित्वा मृदालिप्तं धवधन्वनगोमयैः ।
पचेत् प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम् ॥ १८ ॥
नेत्र तर्पणवत् युञ्ज्यात् शतं द्वे त्रीणि धारयेत् ।
लेखनस्नेहनान्त्येषु पूर्वौ कोष्णौ हिमोऽपरः ॥ १९ ॥
धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत् ॥ २० ॥
तर्पणं पुटपाकञ्च नस्यानर्हे न योजयेत् ।
यावन्त्यहानि युञ्जीत द्विस्ततो हितभाग् भवेत् ।
मालतीमल्लिकापुष्पैर्बद्धाक्षो निवसेन्निशि ॥ २१ ॥
सर्वात्मना नेत्रबलाय यत्नं कुर्वीत नस्याञ्जनतर्पणाद्यैः ।
दृष्टिश्च नष्टा विविधं जगच्च तमोमयं जायत एकरूपम् ॥२२॥

इत्यष्टाङ्गहृदये सूत्रस्थाने चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

---

द्व्यङ्गुलोत्सेधं मृत्तिकालेपं कृत्वा क्रमेण धवादीन्धनैः प्रदीप्तैः पचेत् । तत्र स्नेहने पुटपाके एरण्डपत्रैर्वेष्टनं धवकाष्ठैः प्रदीपनम् । प्रसादने जलजपत्रैर्वेष्टनं गोमयेन्धनेन प्रदीपनमिति क्रमार्थः । अग्न्याभमिति । अग्निवर्णं सत् पक्वं ज्ञात्वा अपनीतपत्रं विधाय वाससा निष्पीड्य तत् रसं नयने तर्पणमिव युञ्ज्यात् । शतमिति । लेखनादिषु शतादीनि धारयेत् । तत्र लेखने शतं मात्राणां धारयेत् । स्नेहने द्वे शते । अन्त्ये प्रसादने त्रीणि शतानि धारयेत् । पूर्वौ स्नेहनलेखनौ कोष्णौ योज्यौ । हिमोऽपरः प्रसादनाख्यः ॥ १७—१९ ॥

धूमेति । तयोराद्ययोः पुटपाकयोरन्ते धूमपः स्यात्, स्नेहैरितकफोपशान्त्यै न तु प्रसादनान्ते इत्येवशब्दार्थः । योगा इति, तत्र तेषु च पुटपाकेषु योगास्तर्पण इव स्युः । तृप्तिवदिति सप्तम्यन्ताद्वतिः । योगा इति बहुवचननिर्देशात् सम्यग्योगायोगातियोगा गृह्यन्ते ॥ २० ॥

तर्पणमिति । तर्पणपुटपाकौ नस्यायोग्ये न योजयेत् । नस्यानर्हे योजयेन्नतु नावनमित्यादुक्ताः । यावन्तीति—यावन्मात्राणि दिनानि तर्पणपुटपाकौ कुर्वीत तावन्त्यहानि ततो द्विगुणानि च दिनानि हितसेवी स्यात् । मालतीति—कृततर्पणपुटपाको मालत्यादिपुष्पैर्बद्धाक्षः सन् विभावरीं वसेत् । मालती सुमनाः ; मल्लिका गन्धवार्षिका ॥ २१ ॥

सर्वात्मनेति । सर्वेण प्रकारेण नेत्रबलाय चक्षुःसामर्थ्याय नस्यादिभिर्यत्नं कुर्यात् । दृष्टिश्चेति चः हेतौ, यतो दृष्टिर्यदि न स्यात्, ततो जगद् विविधमपि तमोमयमन्धकाररूपमेकलक्षणं सम्पद्यत इति । उपजातिवृत्तम् ॥ २२ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां तर्पणपुटपाकविधिरध्यायश्चतुर्विंशतितमः ॥ २४ ॥

# पञ्चविंशतितमोऽध्यायः ।

अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
नानाविधानां शल्यानां नानादेशनिवेशिनाम् ।
आहृतावभ्युपायो यस्तद्यन्त्रं यच्च दर्शने ॥ २ ॥
अर्शोभगन्दरादीनां शस्त्रक्षाराग्नियोजने ।
शेषाङ्गपरिरक्षायां तथा वस्त्यादिकर्मणि ।
घटिकालावुशृङ्गञ्च जाम्बवोष्ठादिकानि च ॥ ३ ॥
अनेकरूपकार्य्याणि यन्त्राणि विविधान्यतः ।
विकल्प्य कल्पयेद् बुद्ध्या यथास्थूलन्तु वक्ष्यते ॥ ४ ॥
तुल्यानि कङ्कसिंहर्क्ष-काकादिमृगपक्षिणाम् ।
मुखैर्मुखानि यन्त्राणां कुर्य्यात्तत्संज्ञकानि च ॥ ५ ॥

---

अथेदानीं पञ्चविंशाध्यायारम्भो यन्त्रप्रविधानप्रदर्शनार्थः । यतो वस्तिनस्याञ्जन-
चारादीनि यन्त्राश्रयाण्येवेत्याह,—अथात इति । यन्त्रस्य विधिः यन्त्रविधिः । शेषं पूर्व-
वत् । अर्शोभगन्दरादिषु नीरुजेऽङ्गे यम्यते नियम्यते शस्त्रक्षाराग्निकर्मेति यन्त्रम् ॥ १ ॥
एतदेव स्पष्टयन्नाह,—नानेति । अनेकप्रकाराणि यानि शल्यानि शल्य-वेणुपाषा-
णादि-रूपाणि विविधेषु शरीरप्रदेशेषु निविशन्ते, तेषामाहरणे आक्रष्टुं योऽभ्युपाय-
स्तद्यन्त्रमुच्यत इति शेषः । तथा अर्शोभगन्दर-नाडीव्रणादीनां शस्त्रादियोजने सति
शेषस्य नीरुजाङ्गस्य परिरक्षायां रक्षानिमित्तम् । स्वस्थस्याङ्गस्य शल्यबाधानिवृत्त्यर्थ-
मित्यर्थः । तथा वस्तिनस्यादिकर्मणि य उपायस्तच्च यन्त्रम् । तथा घटिकादि च यन्त्रं
पिचुना रक्ताद्याकर्षणाय च । जाम्बवोष्ठसन्दंशादीनि च यन्त्राणि ॥ २ । ३ ॥
यन्त्राणां किं रूपं किं कार्य्यमित्याह,—अनेकेति । रूपाणि च कार्य्याणि च रूप-
कार्य्याणि, अनेकानि विचित्राणि रूपकार्य्याणि येषां तानि यानि नानाप्रकाराणि तत्र
रूपं कङ्कमुखस्वस्तिकाद्याकारत्वम् । कार्य्यमस्थ्यादिलग्नशल्यहरणादिकम् । यतश्चैवं
नानाविधत्वं यन्त्राणां, अतस्तानि बुद्ध्या विकल्प्य कार्य्यानुरोधात् कल्पयेत् । ननु यन्त्राणां
दिङ्मात्रेऽप्यनभिज्ञः कथमिव कल्पनां कर्त्तुं पारयेदित्याह,—यथेति । यानि यानि
स्थूलानि यथास्थूलम्, यथा सादृश्य इत्यव्ययीभावः । यथास्थूलयन्त्रकरणेन व्युत्पन्नमतिः
शेषाणामपि यन्त्राणामुत्पादने विकल्पं कर्त्तुं समर्थो भवत्येवेति भावः ॥ ४ ॥
अथ यन्त्राण्याह,—तुल्यानीति । येन पार्श्वेन शल्यमुद्ध्रियते तद्‌ यन्त्राणां मुखं

अष्टादशाङ्गुलायामान्यायसानि च भूरिश: ।
मसूराकारपर्यन्तै: कण्ठे बद्धानि कीलकै: ॥ ६ ॥
विद्यात् स्वस्तिकयन्त्राणि मूलेऽङ्कुशनतानि च ।
तैर्दृढैरस्थिसंलग्न-शल्याहरणमिष्यते ॥ ७ ॥
कीलबद्धविमुक्ताग्रौ सन्दंशौ षोड़शाङ्गुलौ ।
त्वक्-शिरा-स्नायु-पिशित-लग्न-शल्यापकर्षणौ ॥ ८ ॥
षड़ङ्गुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम् ।
मुचुण्डीसूक्ष्मदन्तर्जुर्मूले रुचकभूषणा ।
गम्भीरव्रणमांसानामर्म्मण: शेषितस्य च ॥ ९ ॥
द्वे द्वादशाङ्गुले मत्स्य-तालवद् द्वेकतालके ।
तालयन्त्रे स्मृते कर्ण-नाडीशल्यापहारिणी ॥ १० ॥

---

वेद्यम्। कङ्कादीनां पक्षिमृगादीनां मुखैस्तुल्यानि यन्त्राणां मुखानि कुर्यात्। आदिशब्देन तरक्षुहरिणादिपरिग्रह: । तानि तत्संज्ञकानि । च एवार्थे, तानि यन्त्राणि तन्नामान्येव । यथा कङ्कमुखं सिंहमुखमित्यादि । स्वस्तिकाख्यानि यन्त्राणि विद्यात् । कीदृशानि ? अष्टादशाङ्गुलदैर्घ्याणि। भूरिशो बाहुल्येनायसानि शस्त्रमयानि । दन्तादिमयानामपि क्वचिद्दर्शनाद् भूरिश इत्युक्तम् । तथा कण्ठप्रदेशे कीलकैर्बद्धानि । कीदृशै: कीलकै: ? मसूराकारा: पर्यन्ता येषां तै: । यत्र प्रदेशे यन्त्राणां हस्तग्रहस्तत् तन्मूलम्, तत्राङ्कुशवत् नतानि परिणतानि, तै: कङ्कमुखादिभिरस्थिसंलग्नशल्यस्य काण्डफलादेराहरणमाकर्षणमिष्यते ॥ ५—७ ॥

कीलेति । कीलेन मसूराकारान्तेन बद्धं विमुक्तमग्रं मुखं ययोस्तौ कीलबद्ध-विमुक्ताग्रौ सन्दंशौ भवत: । कीदृशौ ? षोड़शाङ्गुलप्रमाणौ । क उपयोग एतयो: स्यादित्याह,—त्वगित्यादि । त्वगादीनां द्वन्द्व: । त्वक्-शिरा-स्नायु-पिशित-लग्नञ्च तच्छल्यञ्च, तस्यापकर्षणे आहरणे तावुपयुज्येते ॥ ८ ॥

षड़िति। षोड़शाङ्गुलसन्दंशद्वयादन्य: सन्दंश: सूक्ष्मशल्यानां नासारोमादीनां हरणे आकर्षणे, तथा उपपक्ष्मणां वर्त्मादिभवानामाहरणे युज्यते । मुचुण्डीति—स च मुचुण्डीसंज्ञ: । किम्भूता मुचुण्डी ? सूक्ष्मा दन्ता यस्या: सा सूक्ष्मदन्ता, तथा ऋजु: अवक्रा । न च सन्दंशवद्वक्रा बद्धा द्विबाहुरित्यर्थ: । तथा मूले हस्तग्रहणस्थाने रुचकमङ्गुलीयकरूपं भूषणं यस्या: सा रुचकभूषणा, रुचकपीडनेन सा कर्म करोतीत्यर्थ: । गम्भीरश्चासौ व्रणश्च गम्भीरव्रणस्तस्मिन् मांसानि तेषामधिमांसमेतद्विषये आहरणे अर्मणश्च शेषितस्य च्छिन्नशेषस्याहरणे मुचुण्डी ॥ ९ ॥

द्वे इति । द्वे तालयन्त्रे भवत: । किंप्रमाणे ? द्वादशाङ्गुले । संस्थानमाह, मत्स्यतालवत् मीनगलतालवत् द्वितालकम् । द्वयो: पार्श्वयोर्मत्स्यमुखसदृशमपर-

नाडीयन्त्राणि शुषिराण्येकानेकमुखानि च ।
स्रोतोगतानां शल्यानामामयानाञ्च दर्शने ॥ ११ ॥
क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च ।
तद्विस्तारपरीणाह-दैर्घ्यं स्रोतोऽनुरोधतः ॥ १२ ॥
दशाङ्गुलार्द्धनाहान्तः-कण्ठशल्यावलोकने ।
नाडी पञ्चमुखच्छिद्रा चतुष्कर्णस्य संग्रहे ।
वारङ्गस्य द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः ॥ १३ ॥
वारङ्गकर्णसंस्थानानाहदैर्घ्यानुरोधतः ।
नाडीरेवंविधाश्चान्या द्रष्टुं शल्यानि कारयेत् ॥ १४ ॥
पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशाङ्गुला ।
चतुर्थसुषिरा नाडी शल्यनिर्घातिनी मता ॥ १५ ॥

---

मेकतालकमेकपार्श्वे मत्स्यमुखाकारमेव । ते द्वे तालयन्त्रे स्याताम् । कर्णेत्यादि । कर्णनाड़ीशल्यमपहरतः कर्णनाड़ीशल्यापहारिणी ॥ १० ॥

नाड़ीति । नाडीयन्त्राणि वस्तिनेत्रादिवत् सुषिराणि स्युः । एकञ्च अनेकञ्च एकानेकं मुखं येषां तानि च कानिचिदेकमुखान्येकद्वाराणि कानिचिदनेकमुखान्यनेकद्वाराणि । एतत् कर्माचष्टे, स्रोत इत्यादि । तानि च कर्णादिस्रोतोगतानां शल्यानां दर्शननिमित्तं विदधीत ; तथा कण्ठादिस्रोतोगतानां रोगाणां दर्शने दर्शननिमित्तं विदधीत ; तथा क्रियाणां शस्त्रचाराग्निप्रचालनौषधप्रणिधानादीनां सुकरत्वार्थम् ; तथा विष-दिग्धाङ्गादीनामाचूषणाय विदधीत । तद्विस्तारेत्यादि । तेषां नाडीयन्त्राणां विस्तारञ्च परीणाहञ्च दैर्घ्यञ्च तानि स्रोतोवशाद्भवन्ति । यथानुवासनोत्तरवस्ति-नस्य-नाड़िकादिषु निर्द्दिष्टम् ॥ ११-१२ ॥

दशेति । कण्ठे शल्यं कण्ठशल्यम् । कण्ठाभ्यन्तरशल्यावलोकानर्थं दशाङ्गुला नाड़ी अर्द्धनाहा पञ्चाङ्गुलपरिणाहा । पञ्चेति । पञ्चमुखानि च्छिद्राणि यस्याः सा चतुष्कर्णस्य वारङ्गस्य संग्रहे संग्रहणनिमित्तमिदं यन्त्रम् । चत्वारः कर्णा यस्य वारङ्गस्येति समासः । तत्र शरादिदण्डप्रवेशः शिखाकारः कीलको वारङ्ग उच्यते । द्विकर्णवारङ्गस्य संग्रहार्थे त्रिच्छिद्रा नाडी स्यात् । त्रीणि च्छिद्राणि यस्याः सा त्रिच्छिद्रा । छिद्रशब्दस्योप-लक्षणार्थत्वात् त्रिमुखेत्येतदपि द्रष्टव्यम् । तस्य वारङ्गस्य प्रमाणं तत्प्रमाणं तस्माद् वारङ्गप्रमाणतस्तदनुसारेण नाडीप्रमाणं ज्ञेयम् ॥ १३ ॥

वारङ्गकर्णेति । वारङ्गकर्णस्य संस्थानं चानाहश्च दैर्घ्यञ्च तान्येव वारङ्गकर्ण-संस्थानाऽनाहदैर्घ्याणि तेषामनुरोधः, तस्मादेवम्प्रकारा अन्या अपि नाडीः शल्यानि शरीरान्तर्गतानि द्रष्टुं कारयेत् ॥ १४ ॥

पद्मेति । मूर्ध्नि मूर्धभागे पद्मकर्णिकया जलजकर्कटिकया सदृशी । कियत्

अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम्।
नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम्॥ १६
द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रन्तु कर्मणि।
मध्येऽस्य त्र्यङ्गुलं छिद्रमङ्गुष्ठोदरविस्ततम्।
अर्धाङ्गुलोच्छ्रितोद्वृत्त-कर्णिकन्तु तदूर्ध्वतः॥ १७॥
शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीड़नम्।
सर्वथापनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरे॥ १८॥
घ्राणार्वुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया।
प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत्॥ १९॥
अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम्।
द्विच्छिद्रं गोस्तनाकारं तद् वक्त्रविवृतौ सुखम्॥ २०॥

---

प्रमाणा? द्वादशाङ्गुला, तथा चतुर्थश्चतुर्भागः सुषिरो यस्याः, अङ्गुलसुषिरेति यावत्। सा नाडी शल्यनिर्घातिनी मता, मुनीनामिति शेषः॥ १५॥

अर्शोयन्त्रं दर्शयितुमाह,—अर्शसामिति। अर्शसां सम्बन्धि यन्त्रकं गोस्तनाकृति चतुरङ्गुलं मानतो दैर्घ्येण स्यात्। यन्त्रकमित्याकर्षकं स्यात्। नाहे परिणाहे च पञ्चाङ्गुलं यत् पञ्चाङ्गुलं दीर्घेण सूत्रेण वेष्ट्यते तत्प्रमाणं स्थौल्यमित्यर्थः। पुंसामेव पञ्चाङ्गुलं नाहे स्यात्। स्त्रीणां परिणाहे तु षडङ्गुलं यन्त्रकं स्यात्, स्वभावत एव तासां गुदस्य महत्त्वात्। व्याधेर्दर्शने द्विच्छिद्रमुभयपार्श्वे द्विच्छिद्रं यन्त्रम्। कर्मणि शस्त्रक्षाराद्यवचारणे एकच्छिद्रं यन्त्रकम्। अस्य यन्त्रस्य मध्ये त्र्यङ्गुलं छिद्रमङ्गुष्ठमध्यतुल्यविस्तारं, तथा तदूर्ध्वतोऽर्द्धाङ्गुलोच्छ्रिता उद्वृत्ता कर्णिका यस्य तदेवम्॥ १६। १७॥

शम्याख्यमिति। शम्याख्यं शमीसंज्ञं तृतीयं यन्त्रकं तादृग् गोस्तनाकारमित्यादिलक्षणलक्षितयन्त्रसदृशं स्यात्। अत्र विशेषमाह,—अच्छिद्रमित्यादि। अत्र यन्त्रे छिद्रं न विधेयमित्यर्थः। इदञ्च यन्त्रमर्शःप्रपीडनं स्यात्। सर्वथेति। सर्वथा भगन्दरे भगन्दरयन्त्रे ओष्ठमपनयेत। कुतः प्रभृति? छिद्रादूर्ध्वम्। उपरिष्टादर्द्धाङ्गुलमपकर्षेदित्यर्थः। कर्णिका तु कार्यैव॥ १८॥

घ्राणेति। घ्राणार्वुदे घ्राणार्शसि चैकच्छिद्रा नाड़ी दैर्घ्येणाङ्गुलद्वयप्रमाणा तथा प्रदेशिनीतुल्यः परीणाहो यस्याः सैवम्। सा च भगन्दरयन्त्रतुल्या स्यात् अपनीतौष्ठेत्यर्थः॥ १९॥

अङ्गुलीति। अङ्गुलीत्राणकाख्यं यन्त्रं दन्तमयं काष्ठमयं वा चतुरङ्गुलप्रमाणमर्शसां यन्त्रसदृशं द्विच्छिद्रं गोस्तनाकृति स्यात्। तच्च वक्त्रस्य विवृतौ प्रसारणे। अङ्गुलेर्दन्तेभ्यो रक्षणार्थत्वादङ्गुलित्राणमिति नाम॥ २०॥

योनिव्रणेक्षणं मध्य सुषिरं षोडशाङ्गुलम् ।
मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम् ।
चतुःशलाकमाक्रान्तं मूले तद्विकसेन्मुखे ॥ २१ ॥
यन्त्रे नाडीव्रणाभ्यङ्ग-चालनाय षडङ्गुले ।
बस्तियन्त्राकृती मूले मुखेऽङ्गुष्ठकलायखे ।
अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ॥ २२ ॥
द्विद्वारा नलिका पिच्छनलिका वोदकोदरे ।
धूमबस्त्यादियन्त्राणि निर्दिष्टानि यथायथम् ॥ २३ ॥
त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम् ।
अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चचकाकृति ॥ २४ ॥
स्याद्द्वादशांगुलोऽलावुर्नाहे त्वष्टादशांगुलः ।
चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्तहृत् ॥ २५ ॥

---

योनीति । योनिव्रणमीक्ष्यतेऽनेन तद् योनिव्रणेक्षणं यन्त्रकम् । मध्ये मध्यभागे सुषिरम्, तथा दैर्घ्येण षोडशाङ्गुलम्, तथा मुद्रिकया ऊर्म्मिकया सञ्चारिण्या बद्धं युक्तम्, तथा चत्वारी भित्ताः पत्राणि यस्य तच्चतुर्भित्तम् । मूले शलाकाक्रमणात् मुखे विकसेत् प्रसरेत् ॥ २१ ॥

यन्त्रे इति । यन्त्रे द्वे षडङ्गुले भवतः । किमर्थम् ? अभ्यङ्गश्च चालनञ्च अभ्यङ्ग-चालने तदर्थमुपयुज्येते । आकरणमाकृत्, सम्पदादित्वात् क्विप् । वस्तियन्त्रस्य चाकृती आकारौ ययोस्ते वस्तियन्त्राकृती वृत्तगोपुच्छाकारे, तथा यथासंख्यं मूले मुखे अङ्गुष्ठ-कलायखे । मूलेऽङ्गुष्ठतुल्यच्छिद्रे मुखे कलायसमच्छिद्रे । अग्रतोऽकर्णिके कर्णिकारहिते इति वस्तियन्त्राद्विशेषः । मूले तु कर्णिके द्वे अपि पुटकयोजनार्हे कार्ये एवेत्यग्रग्रह-णम् । मूले मूलदेशे निबद्धं योजितं मृदु चर्म वस्तिपुटकाकारं ययोस्ते निबद्धमृदु-चर्मणी ॥ २२ ॥

द्विद्वारेति । उदकोदरे जलस्रावणार्थं नलिका द्विद्वारा उभयमुखी स्यात्, अथवा पिच्छनलिका मयूरपिच्छजेत्यर्थः । धूमेति—धूमादियन्त्राणि यथायथं यथास्वं धूमपा-नाद्यध्यायेषूक्तानि । त्र्यङ्गुलास्यमिति । शृङ्गं त्र्यङ्गुलमुखं दुष्टवातविषरक्ताम्बुदुष्टस्तन्या-देश्चूषणे चूषणनिमित्तमष्टादशाङ्गुलं स्यात् । अष्टादशेति द्व्यष्टन इत्यादिना आकारा-देशः । तथा अग्रे प्रान्ते सर्षपप्रमाणच्छिद्रम् । यः प्रदेशश्चूषणाय शरीरे योज्यते तदग्रम् । तथा सुष्ठु, नद्धं सम्यग्बद्धम् । चूचुकस्य स्त्रीकुचाग्रस्याकृतिराकारो यस्य तदेवम् ॥ २३ । २४ ॥

स्यादिति । अलावुस्तुम्बं द्वादशाङ्गुलो दैर्घ्येण स्यात् । परिणाहेऽष्टादशाङ्गुलः । चत्वारि वा त्रीनि वा अङ्गुलानि यस्य तच्चतुस्त्र्यङ्गुलं तत्तादृशं वृत्तं वर्तुलं मुखं यस्य स

तद्वद् घटी हिता गुल्म-विलयोन्नमने च सा ॥ २६ ॥
शलाकाख्यानि यन्त्राणि नानाकर्माकृतीनि च ।
यथायोगप्रमाणानि तेषामेषणकर्मणी ॥ २७ ॥
उभे गण्डूपदमुखे स्रोतोभ्यः शल्यहारिणी ।
मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले ॥ २८ ॥
शङ्कवः षड्, भौ तेषां षोडशद्वादशाङ्गुलौ ।
व्यूहनेऽहिफणावक्त्रौ द्वौ दशद्वादशाङ्गुलौ ।
चालने शरपुङ्खास्यावाहार्ये बडिशाकृती ॥ २९ ॥
नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः ॥ ३० ॥
अष्टाङ्गुलायतस्तेन * मूढगर्भं हरेत् स्त्रियाः ॥ ३१ ॥
अश्मर्याहरणे सर्प-फणावद् वक्त्रमग्रतः ।
शरपुङ्खमुखं दन्तपातनं चतुरङ्गुलम् ॥ ३२ ॥
कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने ।

---

एवम्, तथा अन्तर्मध्ये दीप्तो ज्वलितः पिचुर्भूर्जादिगर्भ इत्यर्थः । स ईदृशो दुष्टकफरक्तहरः स्यात् । तद्वदिति । तद्वत् तेनालाबुना तुल्यदैर्घ्यानाहादिस्तुल्यकार्याकारा च घटी स्यात् । सा च गुल्मस्य विलये उन्नमने च हिता न केवलं कफरक्तहृदिति चार्थः ॥ २५ । २६ ॥

शलाकेति । शलाकासंज्ञानि यन्त्राणि विविधकर्माणि विविधाकाराणि यथायोग्यप्रमाणानि स्युः । तेषामिति—तेषां मध्ये उभे गण्डूपदतुल्यास्ये इव एषणकर्मणी । स्रोत इति—तथा स्रोतोभ्यः शल्यहारिणी शलाकायन्त्रे भवतः । किम्भूते ? मसूरेत्यादि । मसूरदलमिव वक्त्रं ययोस्ते मसूरदलमुखे, द्वे शलाके अष्टाङ्गुले नवाङ्गुले वा स्याताम् । शङ्कवः षट् स्युः । उभाविति—तेषां मध्ये द्वौ षोडशाङ्गुलौ द्वादशाङ्गुलौ वा भवतः । व्यूहने व्यूहनकर्मणि सर्पफणामुखौ । चालन इति—द्वौ शङ्कू दशाङ्गुलौ द्वादशाङ्गुलौ वा भवतः । चालने काण्डवाज इव मुखं ययोस्तौ शरपुङ्खास्यौ भवतः । आहार्ये इति—आहार्ये आकर्षणे बडिशाकारौ ॥ २७—२९ ॥

षट् शङ्कूनाख्याय गर्भशङ्कुमाह । नत इति । नतोऽग्रे अग्रतोभागे, तथा शङ्कुना समः कीलकाकारोऽष्टाङ्गुलदीर्घः स गर्भशङ्कुरिति स्मृतः, मुनिभिरिति शेषः । तेन शङ्कुना मूढगर्भमनिःसरन्तं हरेत् ॥ ३० । ३१ ॥

अश्मरीति—अश्मर्याकर्षणे सर्पफणावदग्रे वक्त्रं स्यात् । सर्पफणाख्यमेवैतद् यन्त्रम् । शरेति—शरपुङ्खमुखाख्यं चतुरङ्गुलं दन्तपातनं स्यात् । अनेन हि

---

* अष्टादशाङ्गुलस्तेनेति वा पाठः ।

पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले ॥ ३३ ॥
द्वे षट्सप्ताङ्गुले घ्राणे द्वे कर्णेऽष्टनवाङ्गुले ।
कर्णशोधनमश्वत्थ-पत्रप्रान्तं स्रुवाननम् ॥ ३४ ॥
शलाकाजाम्बवौष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ।
युञ्ज्यात् स्थूलाणुदीर्घाणां शलाकामन्त्यवर्त्मनि ।
मध्योर्ध्व-वृत्त-दण्डाञ्च मले चार्द्धेन्दुसन्निभाम् ॥ ३५ ॥
कोलाऽस्थि-दल-तुल्याऽस्या नासाऽर्शोऽर्वुद-दाह-कृत् ॥३६॥
अष्टाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ।
कनीनी-मध्यमाऽनामी-नखमान-समैर्मुखैः ॥ ३७ ॥
स्वंस्वमुक्तानि यन्त्राणि मेढ्रशुद्ध्यञ्जनादिषु ॥ ३८ ॥
अनुयन्त्राण्ययस्कान्त-रज्जु-वस्त्राऽश्म-मुद्गराः ।
पट्टान्त्र * जिह्वाबालाश्च शाखा-नख-मुख-द्विजाः ॥ ३९ ॥

दन्ताश्चलन्तः पात्यन्ते कृम्यादिभक्षिता वा । कार्पासेति—प्रमार्जने क्षालने क्षारक्लेदादेः षट् शलाकाः स्युः । किम्भूताः ? कार्पासेन विहितमुष्णीषं शिरोवेष्टनमिव यासां तास्तथोक्ताः । पायाविति । पायावासन्नदूरार्थे दशद्वादशाङ्गुले आसन्नार्थे दशाङ्गुले दूरार्थे द्वादशाङ्गुले द्वे भवतः, इत्यर्थः । द्वे इति—घ्राणे षट्सप्ताङ्गुले द्वे आसन्नदूरार्थे अत्राप्यनुवर्त्तते । तथैव कर्णे अष्टनवाङ्गुले भवतः । भवतः । कर्णेति—कर्णशोधनाख्यं यन्त्रं अश्वत्थपत्रस्येव प्रान्तो यस्य तत्तथा । तथा स्रुवस्येवाननं यस्य तदेवम् ॥ ३२—३४ ॥

शलाकेति । शलाकाश्च जाम्बवौष्ठानि च तेषां पृथक् त्रयं क्षारे क्षारपातने अग्निदाहकरणे च युञ्ज्यात् । किम्भूतानां ? शलाकाजाम्बवौष्ठानाम् । स्थूलाश्च अणवश्च दीर्घाश्च तेषाम् । तत्र शलाकास्तिस्रो जाम्बवौष्ठानि च त्रीणि क्षारे, तथा दाहने । एवं द्वादशैतानि शलाकाख्यानि यन्त्राणीति । शलाकेति—अन्त्यवर्त्मनि अन्तवृद्धौ शलाकां युंज्यात् । कीदृशीम् ? मध्यादूर्ध्वं वृत्तो दण्डो यस्यास्ताम् । तथा मूले मूलभागे अर्धेन्दुसन्निभामर्धचन्द्राकाराम् । कोलेति—बदरास्थिखण्डसमं मुखं यस्याः सा कोलाऽस्थिदलतुल्याऽस्या । सा नासार्शःसु नासार्बुदेषु च दाहं करोति । अष्टाङ्गुलेति—क्षारौषधक्रमे तिस्रः शलाका निम्नमुखा अष्टाङ्गुलाः स्युः । कीदृश्यः ? कनीनी च मध्यमा चानामी च तासां नखास्तेषां मानं प्रमाणं तेन मानेन समैस्तुल्यैर्मुखैरुपलक्षिताः स्युः । स्वमिति—मेढ्रादिषु विषये उत्तरबस्त्यादिषु स्वं स्वं यथास्वं यन्त्राणि गदितानि । आदिशब्देन नावनादिपरिग्रहः । अनुयन्त्राणीति—अयस्कान्तादीन्येकोनविंशत्यनुयन्त्राणि

* वध्रान्त्रेति वा पाठः ।

कालः पाकः करः पादौ भयं हर्षश्च तत्क्रियाः ।
उपायवित् प्रविभजेदालोच्य निपुणं धिया ॥ ४० ॥
निर्घातनोन्मथन-पूरण-मार्गशुद्धि-
संव्यूहनाहरण-बन्धन-पीडनानि ।
आचूषणोन्नमन-नामन-चालभङ्ग-
व्यावर्त्तनर्जुकरणानि च यन्त्रकर्म ॥ ४१ ॥
निवर्त्तते साध्ववगाहते च ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्वेष्वधिकारि यच्च ॥४२॥

इत्यष्टाङ्गहृदये सूत्रस्थाने पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः ।

अथातः शस्त्रविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
षड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ।
शस्त्राणि रोमवाहीनि बाहुल्येनाङ्गुलानि षट् ॥ २ ॥

---

कल्पयेत्, स्वल्पयन्त्रकार्यकरणात् । तेषां क्रियास्तत्क्रियाः निर्घातनादिका बुद्ध्या निपुणमालोच्य प्रविभजेत् । निर्घातनादिकर्माणि प्रविभज्य युञ्ज्यादित्यर्थः ॥ ३५—४० ॥

तान्येव यन्त्राणां कर्माण्याह,—निर्घातनेत्यादि । निर्घातनादि यन्त्रस्य कर्म । निर्घातनं ताडनं परिपातनम्, उन्मथनमुन्मूलनम् । एवमन्यदपि चिन्त्यम् । चः समुच्चये; तेन प्रचालनादीनि समुच्चीयन्ते । निवर्त्तत इति । निवर्त्तनादिभिश्चतुर्दशभिः कारणैर्यन्त्रेषु मध्ये कङ्कमुखं श्रेष्ठमिति, यस्माच्च सर्वेषु प्रदेशेष्वधिकारि अधिक्रियत इति । वसन्ततिलकोपजाती वृत्ते ॥ ४१-४२ ॥

इति श्रीमद्गाङ्गदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां यन्त्रविधिरध्यायः पञ्चविंशतितमः ॥ २५ ॥

---

अथात इति । अथेदानीं षड्विंशाध्यायारम्भः शस्त्रस्वरूपविज्ञानार्थः । बाहुल्येन शस्त्राणि षडङ्गुलानि भवन्ति; तथा षड्विंशतिसङ्ख्यानि, तथा सुकर्मारैः कर्मकुशलैर्यथाविधि सम्यङ् निष्पादितानि, तथा रोमवाहीनि लोमशातनसमर्थानि, तथा

सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ।
अकरालानि सुध्मातसुतीक्ष्णावर्त्तितेऽयसि ॥ ३ ॥
समाहितमुखाग्राणि नीलाम्भोजच्छवीनि च ।
नामानुगतरूपाणि सदा सन्निहितानि च ॥ ४ ॥
स्वोन्मानार्द्ध-चतुर्थांश-फलान्येकैकशोऽपि च ।
प्रायो द्वित्राणि युञ्जीत तानि स्थानविशेषतः ॥ ५ ॥
मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति ।
लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ॥ ६ ।
वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।
ऋज्वग्रमुन्नते शोफे गम्भीरे च तदन्यथा ॥ ७ ॥
नताग्रं पृष्ठतो दीर्घं ह्रस्ववक्त्रं यथाऽऽशयम् ।
उत्पलाध्यर्द्धधाराख्ये छेदने भेदने तथा ।
सर्पास्यं घ्राणकर्णाऽर्शश्छेदनेऽद्धाङ्गुलं फले ॥ ८ ॥

---

सुरूपाणि शोभनाकाराणि, तथा सुधाराणि शोभनधाराणि तथा सुखेन गृह्यन्ते सुख-
ग्रहाणि च कारयेत् । क ? अयसि । कीदृशे ? सुष्ठु ध्मातं सुध्मातं सुतीक्ष्णं, तथा
आवर्त्तितञ्च यदयः शस्त्रं तस्मिन् । कीदृशानि च शस्त्राणि ? अकरालानि सुदर्शनानि ।
समाहितं सुष्ठु कृतं मुखाग्रं फलं येषां तानि समाहितमुखाग्राणि, तथा नीलोत्पलद्युु-
तीनि, तथा नामानुगतं रूपं येषां तान्यन्वर्थनामानीत्यर्थः, तथा सर्वकालं सन्निहितानि
समीपस्थानि । स्वञ्च तदुन्मानञ्च स्वोन्मानमात्मीयं प्रमाणं तस्मात् सकाशादर्द्ध तस्य
चतुर्थांशोऽष्टभागोऽङ्गुलषट्कस्य सप्तमांशद्वयसहितं यवदशकं तत्परिमाणं फलं येषां
तान्येवम् । अपि चेति समुच्चये । एवंविधानि शस्त्राण्येकैकशः स्थानविशेषाद्द्वित्राणि
प्रयुञ्जीत । एकैकश इत्येकं बहुव्रीहिवदिति द्वित्वसुब्लोपौ ; ततः शस् प्रत्ययः ॥ १—४ ॥
मण्डलाग्रमिति । तेषां शस्त्राणां मध्ये मण्डलाग्रं नाम शस्त्रम् । कीदृशम् ? फलो-
द्देशे तर्जन्या अन्तर्नखस्तर्जन्यन्तर्नखस्तस्येवाकृतिर्यस्य तदेवम् । क एतद्योज्यमित्याह,—
लेखने छेदने पोथक्यादिषु योज्यम् । आदिशब्देन वर्त्मरोगादयो गृह्यन्ते । वृद्धिपत्र-
मिति—वृद्धिपत्रं नाम शस्त्रं क्षुराकारं स्यात् । तच्च छेदनादिषु योज्यमिति प्रकृतम् ।
फलपरिमाणं तूक्तमेव । कीदृक् ? ऋजु स्पष्टमग्रं यस्य तदृज्वग्रं । तदुन्नते शोफे स्यात् ।
गम्भीरे तु शोफे तद्वृद्धिपत्रमन्यथा । कथमन्यथेत्याह,—नताग्रमित्यादि । पृष्ठदेशे
नतमग्रं यस्य तन्नताग्रं भवतीति । दीर्घेति—उत्पलञ्च अध्यर्द्धधारञ्च ते आख्ये ययोस्ते
उत्पलाध्यर्द्धधाराख्ये शस्त्रे यथाक्रमं दीर्घह्रस्ववक्त्रे भवतः । उत्पलपत्रं दीर्घमुख-
मध्यर्द्धधारन्तु ह्रस्ववक्त्रमित्यर्थः । तच्छेदने, तथा भेदने च योज्यम् । सर्पेति—सर्पवक्त्रं

गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषिणी ॥ ९ ॥
भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ।
वेतसं व्यधने स्राव्ये शरार्यास्यं त्रिकूर्च्चके ॥ १० ॥
कुशाटा वदने स्राव्ये द्व्यङ्गुलं स्यात्तयोः फलम् ।
तद्वदन्तर्मुखं तस्य फलमध्यर्द्धमङ्गुलम् ।
अर्द्धचन्द्राऽऽननं चैतत्तथाऽध्यर्द्धाङ्गुलं फले ।
व्रीहिवक्त्रं प्रयोज्यञ्च तच्छिरोदरहयोर्व्यधे ॥ १२ ॥
पृथुः कुठारी गोदन्त-सदृशार्द्धाङ्गुलानना ।
तयोर्द्ध्व दण्डया विध्येदुपर्य्यस्थां स्थितां शिराम् ॥ १३ ॥
ताम्री शलाका द्विमुखी मुखे कुरुबकाकृतिः ।
लिङ्गनाशं तया विध्येत् कुर्यादङ्गुलिशस्त्रकम् ॥ १४ ॥
मुद्रिकानिर्गतमुखं फले त्वर्द्धाङ्गुलायतम् ।
योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ १५ ॥

---

नाम शस्त्रं नामानुगताकारं घ्राणार्शश्छेदने कर्णार्शश्छेदने च योज्यम् । तथेति समुच्चये । भेदनेऽपि योज्यम् । तच्च फलेऽर्द्धाङ्गुलं भवति । गतेरिति—एषणी नाम शस्त्रं गतेर्व्रणानामन्वेषणे योज्यम् । कीदृशी ? श्लक्ष्णा कोमलस्पर्शा । तथा गण्डूपदमुखमिव मुखं यस्याः सा गण्डूपदमुखा ॥ ५—९ ॥

द्वितीयामेषणीमाह,—भेदनार्थे इति । अपरा एषणी भेदनार्थे सूचीमुखा स्यात् । मूले निविष्टं कृतं खं छिद्रं यस्याः सा मूलनिविष्टखा । वेतसं वेतसपत्राकारं शस्त्रं षडङ्गुलं, पूर्वोक्तफलं, तच्च व्यधने योज्यम् । स्राव्ये इति । शरारिः आटिः पक्षिविशेषः । शरार्यास्यं नाम शस्त्रं त्रिकूर्च्चके च स्राव्ये योज्यम् । कुशाटेति—कुशाटा नाम शस्त्रं वदने स्राव्ये योज्यम् । तयोः शरारिकुशाटयोः फलं द्व्यङ्गुलप्रमाणं स्यात् । तद्वदिति—अन्तर्मुखं नाम शस्त्रं तद्वत् कुशाटातुल्यम् । तस्यान्तर्मुखस्य फलमध्यर्धमङ्गुलं स्यात् । अर्द्धेति—तथा कुशाटातुल्यं तदप्यर्द्धचन्द्रास्यसंज्ञं शस्त्रम् । चः समुच्चये तथा भिन्नक्रमे । अध्यर्द्धेति—व्रीहिवक्त्रमप्यध्यर्धाङ्गुलफलं स्यात् । तच्च सिराव्यधे उदरव्यधे च योज्यम् । पृथुरिति । कुठारी नाम शस्त्रं पृथुर्विस्तीर्णसंस्थानदण्डा, तथा गोदन्तसदृशमर्धाङ्गुलमाननं यस्याः सत्वम् । तया कुठारिकयोर्ध्वदण्डया सत्या सिरामस्थ्नामुपरि स्थितां विध्येत् ॥ १० । १३ ॥

ताम्रीति । ताम्रमयी शलाका द्विमुखा स्यात् । सा च मुखे कुरुबकाकृतिः रक्तसहचरपुष्पमुकुलाकारा । तया शलाकया लिङ्गनाशं कफोत्थपटलसंज्ञं विध्येत् । कुर्यादिति—अङ्गुलिशस्त्रकं कुर्यात् । कीदृशम् ? मुद्रिकाया ऊर्म्मिकाया निर्गतं

तत्प्रदेशिन्यग्रपर्व-प्रमाणार्पणमुद्रिकम् ।
सूत्रबद्धं गलस्रोतोरोग-च्छेदनभेदने ॥ १६ ॥
ग्रहणे शुण्डिकार्म्मादेर्बडिशं सुनताननम् ॥ १७ ॥
छेदेऽस्थ्नां करपत्रन्तु खरधारं दशाङ्गुलम् ।
विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम् ॥ १८ ॥
स्नायुसूत्रकचच्छेदे कर्त्तरी कर्त्तरीनिभा ॥ १९ ॥
वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् ।
सूक्ष्मशल्योद्धृति-च्छेद-भेद-प्रच्छन्न-लेखने ॥ २० ॥
एकधारं चतुष्कोणं प्रबद्धाकृति * चैकतः ।
दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम् ॥ २१ ॥
वृत्ता गूढ़दृढ़ाः पाशे तिस्रः सूच्योऽत्र सीवने ।

---

निष्क्रान्तं मुखं यस्य तन्मुद्रिकानिर्गतमुखम् । फले तु तस्मिन्मुखेऽर्द्धाङ्गुलदीर्घं यीगतः संस्थानेन व्रीहिपत्रेण मण्डलाग्रेण वा तुल्यम् । कियत्प्रमाणास्य मुद्रिका कार्येत्याह,—तत्प्रदेशिन्यग्रेत्यादि । तस्य वैद्यस्य या प्रदेशिनी तस्या यदग्रं पर्व तस्य यत् प्रमाणं तेनार्प्यत इति तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणी मुद्रिका यस्मिंस्तद्भिषक्तर्जन्यग्रपर्वप्रमाणा-र्पणमुद्रिकम्, तथा सूत्रेण बद्धं सूत्रबद्धम् । सूत्रेण ·बद्ध्वा मणिबन्धे योज्यमित्यर्थः । गलस्रोतोरोगाणां छेदने भेदने च तद् योज्यम् ॥ १४—१६ ॥

ग्रहण इति । बडिशं नाम शस्त्रं शुण्डिकार्मादेर्ग्रहणे योज्यम् । आदिशब्देन प्रति-जिह्वादेर्ग्रहणम् । कीदृशं तत् ? सुनतमङ्कुशवदानतमाननं मुखं यस्य तदेवम् । छेद इति—क्रकचं नाम शस्त्रं खरधारं, तथा दशाङ्गुलं दैर्घ्येण, द्व्यङ्गुलं विस्तारेण । सूक्ष्मा दन्ता यस्य तत्सूक्ष्मदन्तम्, तथा त्सरुर्मुष्टिर्बन्धनं ग्रहणम् । शोभने त्सरुबन्धने यस्य तत्सुत्सरुबन्धनम् । अभिधानकोषे यद्यपि त्सरुरसिमुष्टिरित्यभ्यधायि तथापि मुष्टिमात्रग्रहोपलक्षणार्थत्वान्मुष्टावप्युपपन्नमेव ॥ १७ । १८ ॥

स्नायुिति । कर्त्तरी नाम शस्त्रं कर्त्तरीसदृशं स्नाय्वादिभेदे योज्यम । वक्रेति—नखशस्त्रं नखच्छेदकं प्रसिद्धम् । तच्च वक्रा ऋजुश्च धारा यस्य तदेवम् । तस्यैकं मुखं वक्रमन्यदृजु स्पष्टम् । तथा नवाङ्गुलं नवाङ्गुलप्रमाणं न तु षडङ्गुलम् । एतच्च सूक्ष्म-शल्यस्य कण्टकादेरुद्धरणादौ नखच्छेदने भेदने च योज्यम् ॥ १९ । २० ॥

अधुना दन्तलेखनशस्त्रमाह ;—एकधारमिति । एकधारमेकस्मिन् प्रदेशे, तथा चतुष्कोणं, तथा एकत एकस्मिन् देशे प्रबद्धा आकृतिर्यस्य तद्दन्तलेखनकं । तेन दन्त-शर्करां शोधयेत् । अधुना सूचीशस्त्रमाह ;—वृत्ता इति । अत्र एषु शस्त्रेषु मध्ये सीवने

---

* प्रबद्धेत्यापि वा पाठः ।

मांसलानां प्रदेशानां त्र्यस्रा त्र्यङ्गुलमायता ॥ २२ ॥
अल्पमांसाऽस्थिसन्धिस्थ-व्रणानां द्व्यङ्गुलायता।
व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्मसु ॥ २३ ॥
सा सार्द्धद्व्यङ्गुला सर्ववृत्तास्ताश्चतुरङ्गुलाः।
कूर्चो वृत्तैकपीठस्थाः सप्ताऽष्टौ वा सुबन्धनाः।
संयोज्यो नीलिका-व्यङ्ग-केश-शातन-कुट्टने ॥ २४ ॥
अर्द्धाङ्गुलैर्मुखैर्वृत्तैरष्टाभिः कण्टकैः खजः।
पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक् ॥ २५ ॥
व्यधने कर्णपालीनां यूथिका मुकुलानना ॥ २६ ॥
आरार्द्धाङ्गुलवृत्ताऽऽस्या तत्प्रवेशा तथोर्ध्वतः।
चतुरस्रा तया विध्येच्छोफं पक्वामसंशये ॥ २७ ॥

---

सीवनविषये तिस्रः सूच्यः स्युः। किम्भूताः? वृत्ता वर्तुलाः पार्श्वे गूढ़ाः, तथा दृढाः सारत्वात्। आसाञ्च प्रत्येकं संस्थानविशेषेण विशेषोपयोगमाह,—मांसलानां बहुमांसानां शरीरदेशानां त्र्यस्रा मुखे सूची स्यात्। संग्रहेऽप्यवोचत्,—त्र्यस्राऽग्रेति। त्र्यस्रेति चिन्त्यम्। तथा त्र्यङ्गुलमायता त्र्यङ्गुलदीर्घेत्यर्थः। वृत्तत्वं दृढपार्श्वत्वं चोक्तमेव। सामान्यलक्षणेन अल्पमांसानां व्रणानां सन्ध्यस्थिसंस्थितानाञ्च द्व्यङ्गुलमायता दीर्घा। वृत्तमुखत्वं चास्याः सामान्योक्तम्। तृतीयामाह,—व्रीहीत्यादि। व्रीहिमुखा चापवत् कुटिला दैर्घ्येण द्वे अङ्गुले सार्द्धे स्यात्। सा च पक्वाशये आमाशये मर्मसु च व्रणानां सीवने योज्या। अधुना कूर्चं लिलक्षयिषुराह,—सर्वेति। ताः सूचयः सर्वतो वर्त्तुला दैर्घ्येण चतुरङ्गुलाः कूर्चः इत्युच्यते। किम्भूताः? वृत्ते एकस्मिन् पीठे संस्थिताः, तथा सप्तसङ्ख्या अष्टौ वा, तथा शोभनं बन्धनं यासां ताः सुबन्धनाः। अतएवेदं शस्त्रं सूचीकूर्चसंज्ञमिति। तथा चार्शश्चिकित्सिते जगाद,—"अर्शोभ्यो जलजाशस्त्रसूचिकूर्चैः" इत्यादि। स च बद्धसप्ताष्टसूचिकः कूर्चो नीलिकादिषु कुट्टनविषये योज्यः। उपलक्षणत्वाच्चास्य श्वित्रेन्द्रलुप्तादिष्वपि योज्यः ॥ २१—२४ ॥

अर्द्धाङ्गुलैरिति। अष्टाभिः कण्टकैः खज उच्यते। कीदृशैः? अर्द्धाङ्गुलप्रमाणं मुखं येषां तैरर्धाङ्गुलमुखैः, तथा वर्त्तुलैः। तेन खजेन हस्ताभ्यां विलोड्यमानेन नासिकातोऽस्रं हरेत्। व्यधन इति कर्णपालीनां व्यधने यूथिका नाम शस्त्रं स्यात्। कीदृशी? मुकुलानना ॥ २५। २६ ॥

आरेति। अर्द्धाङ्गुलप्रमाणं वृत्तं मुखं यस्याः सा अर्द्धाङ्गुलवृत्ताऽऽस्या, तथा स एव अर्द्धाङ्गुलप्रमाणः प्रवेशो यस्याः सा तत्प्रवेशा। तथा ऊर्ध्वत इति। वृत्तार्द्धाङ्गुलादुपरिष्टात्तथैव वाऽर्द्धाङ्गुलप्रमाणव चतुरस्रा स्यात्। सा आरा नाम शस्त्रम्, तया

कर्णपालीञ्च बहुलाम्बहुलायाश्च शस्यते ।
सूची त्रिभागसुषिरा त्र्यङ्गुला कर्णवेधनी ॥ २८ ॥
जलौकः-क्षार-दहन-काचोपल-नखादयः ।
अलौहान्यनुशस्त्राणि तान्येवञ्च विकल्पयेत्।
अपराण्यपि यन्त्रादीनुपयोगञ्च यौगिकम् ॥ २९ ॥
उत्पाट्य-पाट्य-सीव्यैष्य-लेख्य-प्रच्छन्न-कुट्टनम् ।
छेद्यं भेद्यं व्यधो मन्थो ग्रहो दाहश्च तत्क्रियाः ॥ ३० ॥
कुण्ठ-खण्ड-तनु-स्थूल-ह्रस्व-दीर्घत्व-वक्रताः ॥
शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्त्तिताः ॥ ३१ ॥
छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलाऽन्तरे ।
तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात् सुसमाहितः ॥ ३२ ॥
विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च ॥ ३३ ॥

---

आरया शोफं विध्येत् । कदा ? पक्वामसंशये किमयं पक्वः शोफ उताम इति सन्देहे । बहुलाञ्च कर्णपालीं तया विध्येत् । बहुलाया इति—बहुलाया अतिमांसलायाः कर्णपाल्याश्च सूची शस्यते न केवलमारा । कीदृशी सूची ? त्रिभागः प्रान्तभागात् सुषिरो यस्याः सैव, तथा त्र्यङ्गुला दैर्घ्येण । सा च कर्णवेधनी स्यात् ॥ २७ । २८ ॥

जलौक इति । जलौकःप्रभृतीन्यनुशस्त्राणि रक्तस्रावादिकार्यकरणात् । तानि चालौहानि लौहवर्जितानि । आदिशब्देनाऽयस्कान्तशाकशेफालिकापत्रादीनां ग्रहणम् । एवं चोक्तेन न्यायेनाऽन्यान्यपि यन्त्रादीनि विकल्पयेत्, आदिशब्देन शस्त्राणां ग्रहणम् । उपयोगञ्च,यौगिकं साधुतरं बुद्ध्या निरूपयेत् ॥ २९ ॥

उत्पाट्येत्यादि । उत्पाट्यादीनि तत्क्रियाः, तेषां षड्विंशतिशस्त्राणां क्रियाः कर्माणि तत्क्रियाः । (१) उत्पाट्यमूर्ध्वनयनं यन्त्रं धार्यम् । तत्र नखशस्त्रं योज्यम् । पाटने वृद्धिपत्रादि । सीवने सूच्यः । लेखने मण्डलाग्रादिः । भेदने एषणी सूचीमुखा । व्यधने वेतसादि । मन्थने खजः । ग्रहे सन्दंशः । दाहे शलाकादिरिति ॥ ३० ॥

शस्त्रदोषानाह,—कुण्ठेत्यादि—स्पष्टम् । अधुना शस्त्राणां ग्रहणविधिं दर्शयति,—छेदेत्यादि । छेदभेदनलेख्यार्थं तर्जनीमध्यमाऽङ्गुष्ठैर्मिलितैः शस्त्रं वृन्तफलान्तरे वृन्तफलमध्यभागे गृह्णीयात् । कीदृक् ? सुसमाहितस्तद्गतमनाः । विस्रावणानीति—विस्रावणकार्याणि शरार्यास्यादीनि शस्त्राणि वृन्ताग्रे तर्जन्यङ्गुष्ठाभ्यां गृह्णीयात् ।

---

(१) तानि षड्विंशतिशस्त्राणि संग्रहोक्तानि तद्‌ यथा-दन्तलेखनमण्डलाग्रवृद्धिपत्रखरशरारिमुख-त्रिकूर्च्चकुठारिका-व्रीहिमुखशलाकावेतसपत्राराकर्णव्यधन-सूचीकूर्च्च-खजैषणीवडिशनखशस्त्राणीति । इत्यधिक पाठः ।

तलप्रच्छन्नवृन्ताऽग्रं ग्राह्यं व्रीहिमुखं मुखे ।
मूलेष्वाहरणार्थं तु क्रिया-सौकर्यतोऽपरम् ॥ ३४ ॥
स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः ॥
क्षौम-पत्रोर्ण-कौशेय-दुकूल-मृदु-चर्मजः ॥ ३५ ॥
विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः ।
शलाकापिहितास्यश्च शस्त्रकोशः सुसञ्चयः ॥ ३६ ॥
जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ॥ ३७ ॥
दुष्टाम्बु-मत्स्य-भेकाऽहि-शवकोथ-मलोद्भवाः ।
रक्ताः श्वेता भृशं कृष्णाश्चपलाः स्थूलपिच्छिलाः ॥ ३८ ॥
इन्द्रायुधविचित्रोर्ध्व-राजयो रोमशाश्च ताः ।
सविषा वर्जयेत्ताभिः कण्डूपाक-ज्वर-भ्रमाः ॥ ३९ ॥
विषपित्ताऽस्रनुत् कार्य्यम् तत्र शुद्धाम्बुजाः पुनः ।

---

तलेत्यादि—गृह्णीयादित्यनुवर्त्तते। तलशब्देन पाणितलमुच्यते, आदिलोपाख्यया तल-युक्त्या। तलेन प्रच्छन्नं वृन्तमग्रं यस्य तत् व्रीहिमुखं मुखे गृह्णीयात्। मूलेष्विति—शेषं शस्त्रं क्रियासौकर्यतो गृह्णीयात्। सुकरस्य भावः सौकर्यम्। यथा सुकरा पाटनादिका क्रिया स्यात् तथा विदधीतेत्यर्थः ॥ ३१—३४ ॥

शस्त्रकोशमाचष्टे,—स्यादिति। नवाङ्गुलविस्तारः शस्त्रकोशः स्यात्, तथा सुष्ठु घनो निबिड़ः, तथा द्वादशाङ्गुलप्रमाणो दैर्घ्येण, तथा क्षौमादिजः, तथा विन्यस्तः कृतः पाशो यस्य स विन्यस्तपाशः, तथा सुष्ठु स्यूतः, तथा सान्तराणि सव्यवधानानि ऊर्णास्थानि शस्त्राणि यस्मिन् स सान्तरोर्णास्थशस्त्रकः, तथा शलाकया पिहितं स्थगितमास्यं यस्य स एवम्, तथा शोभनः सञ्चयो यस्य शस्त्रकोशस्य स सुसञ्चयः, नापितभाण्डिकावत्। तन्त्रान्तरे चोक्तम्,—"निशानी तु शस्त्राणां स्निग्धा शिलका माषमुद्गप्रभा" इत्यादि ॥ ३५—३६ ॥

सुकुमारबालानामस्रविस्रावणाय जलौकसो निर्दिदिक्षुराह,—जलौकस इति। सुखिनां सुखोचितानां रक्तस्रावणाय जलौकसो योजयेत् ॥ ३७ ॥

ताश्च द्विप्रकाराः, सविषा निर्विषाश्च। तत्र सविषाणां सापायत्वात् ता एव तावद्वर्जयति,—दुष्टेत्यादि। दुष्टाम्बूद्भवाश्च जलौकसः सविषा इति वर्जयेत्, तथा मत्स्य-भेक-सर्पादि-शवकोथोद्भवाः, तथा तेषामेव मत्स्यादीनां ये मला मूत्रपुरीषादयस्तदुद्भवाश्च सविषा इति वर्ज्जयेत्। सविषाणां लक्षणमाह,—रक्ता इत्यादि। यावल्लोमशान्ताः सविषा यतस्ता वर्ज्जयेत् ता न योजयेत्। ताभिरिति। ताभिर्हि योजिताभिः कण्ड्वादयः स्युः। उपलक्षणञ्चेदम्; दाहशोषमूर्च्छादयोऽपि स्युः। तासु मोहाद

निर्विषाः शैवलश्यावा वृत्ता नीलोर्द्ध्वराजयः ।
कषायपृष्ठास्तन्वङ्ग्यः किञ्चित् पीतोदराश्च याः ॥ ४० ॥
ता अप्यसम्यग् वमनात् प्रततञ्च निपातनात् ।
सीदन्तीः सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ॥ ४१ ॥
अथेतरा निशाकल्क-युक्तेऽम्भसि परिप्लुताः ।
अवन्तिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥ ४२ ॥
लागयेद् घृतमृत्स्तन्य-शस्त्ररक्तनिपातनैः ।
पिबन्तीरुन्नतस्कन्धाश्छादयेन् मृदुवाससा ॥ ४३ ॥
सम्पृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् ।
आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ॥ ४४ ॥

---

योजितासु विषादिजित् कार्यम्। शुद्धाम्बुजा इति । जलौकस इति वर्त्तते । शुद्धजलोद्भवाः सौगन्धिकोत्पल-कमल-विपुल-सलिल-शैवलजा जलौकसो निर्विषाः सुग्राः । आसाञ्च लक्षण-माह,—शैवलेत्यादि । शैवलमिव श्यावाः, तथा वृत्ताः, तथा नीलोर्ध्वराजयः, तथा कषायं न्यग्रोधादिवल्कलसदृशवर्णं पृष्ठं यासां ता एवम्, तथा तनुशरीराः किञ्चित् पीतवर्णजठराश्च निर्विषा वेद्याः ॥ ३८-४० ॥

ता इति । सुनिर्विषा अपि जलौकसो रक्तमत्ता इति त्यजेत् । न केवलं सविषा इति प्रतिपादनार्थोऽपिशब्दः । रक्तमत्तत्वे हेतुद्वयमाह,—असम्यग् वमनात्, दुष्टरक्तस्येति शेषः । प्रततञ्च लागनाद्द दुष्टरक्तपायित्वेन रक्तमत्ताश्च ताः सुग्राः । ताश्च कथं लक्ष्यन्त इत्याह,—सीदन्तीरित्यादि । जलं प्राप्य तोयपूर्णभाण्डमासाद्य सीदन्तीः, तथा चेष्टमाना इति ज्ञात्वा त्यजेत् ॥ ४१ ॥

अथेतरा इति । अथ परीक्षातोऽनन्तरं इतरा लागयेत् । किम्भूताः ? हरिद्राकल्कयुक्तजलपरिप्लुताः काञ्जिके तक्रे वा परिप्लुताः, पुनश्च जले समाश्वासिताः सात्मभूते जले प्लवनार्हाः सोत्साहाः सतीर्योजयेत् । अलगन्तीः कथं लागयेदित्याह,—घृतेत्यादि । शस्त्रेणाङ्गे रक्तं मोक्षयित्वा वा घृतादिपातनैस्ता योजयेत् । पातनशब्दः प्रत्येकं योज्यः । शस्त्रेणाङ्गे रक्तं मोक्षयित्वा वा ता योजयेत् । ताश्च पिबन्तीः सूक्ष्मवाससात्याच्छादयेत् । एवं हि तासां मक्षिकाद्यनुपद्रवात् सम्यग्योजना स्यात् । अथ किमेताः पिबन्त्युत नेति कथं ज्ञायत इत्यत्र विशेषणद्वारेण हेतुमाह,—उन्नतस्कन्धा इति । उन्नतः स्कन्धो यासां ता एवम् । उन्नतस्कन्धत्वेन तासां पानं ज्ञायत इत्यर्थः ॥ ४२ । ४३ ॥

ननु शुद्धरक्तदुष्टरक्तयोरेकलोलीभूतत्वाच्छुद्धरक्तधात्वाकर्षणाज्जलौका दोषाय स्यादि-त्याह,—सम्पृक्तादिति । दुष्टशुद्धास्रान्मिलितादपि दुष्टरक्तं जलौकाः पूर्वमादत्ते न शुद्धं देहधातुस्थमिति । दृष्टान्तेन दर्शयति,—हंस इत्यादि । हंसो यथा क्षीरजलात् मिश्रितात् प्राग्दुग्धमादत्ते न तु जलं, तथा जलौकाः प्राग्शुद्धं रक्तमादत्ते पश्चादितरदिति

दंशस्य तोदे कण्डूां वा मोचयेद् वामयेच्च ताम्।
पटुतैलाक्तवदनां श्लक्ष्णकण्डनरूक्षिताम् ॥ ४५ ॥
रक्षन् रक्तमदाद्भूयः सप्ताहन्ता न पातयेत् ॥ ४६ ॥
पूर्ववत् पटुता दार्ढ्यं सम्यग्वान्ते जलौकसाम्।
क्लमोऽतियोगान् मृत्युर्वा दुर्वान्ते स्तब्धता मदः ॥ ४७ ॥
अन्यत्राऽन्यत्र ताः स्थाप्या घटे मृत्स्नाम्बु गर्भिणि।
लालादिकोथनाशार्थं सविषाः स्यु,स्तदन्वयात् ॥ ४८ ॥
अशुद्धौ स्रावयेद्दंशान् हरिद्रागुडमाक्षिकैः।
शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः ॥ ४९ ॥
दुष्टरक्तापगमनात् सद्यो रोगरुजां शमः।
अशुद्धं चलितं स्थानात् स्थितं रक्तं व्रणाशये।

---

न्याय्यमेतत्। दंशस्येति—दंशस्य तोदे सति कण्डूां वा सत्यां मोचयेत्। शुद्धरक्ताकर्षणार्थमतियोगभयाच्च। तामित्येकवचननिर्देशादेकैकां मोचयेन्न तु सर्वाः सकृदेवेति गमयति। अथ पानलौल्याद् दंशं न त्यजेत्; ततो हरिद्राचूर्णं लवणचूर्णं वा आनने दत्त्वा मोचयेत्। मोचिताश्च जलौकसं वामयेत्। वमनविधानमाह,—पटुतैलाऽक्तवदनामिति। सैन्धवयुतेन तैलेन रूक्षितास्यां, तथा सूक्ष्मेण तण्डुलकण्डनेन रूक्षितामवकीर्णा वामयेत्। तण्डुलशब्दस्यात्र लोपो ज्ञेयः, तन्त्रयुक्त्या ॥ ४४-४५ ॥

रक्षन्निति। ताः कृतवमना जलौकसो रक्तमदाद् रक्षन् पुनः सप्ताहं न योजयेत्। पूर्ववदिति—जलौकसां सम्यग्वान्ते सति पूर्ववदलगितानामिव पटुतादि भवति। क्लम इति—अतियोगाद् वमनस्य क्लमो मृत्युर्वा स्यात्। दुर्वान्त इति—दुर्वान्ते सति स्तब्धता मदश्च स्यात् ॥ ४६-४७ ॥

अन्यत्रेति। ताश्चान्यस्मिन्नन्यस्मिन् घटे त्र्यहात् पञ्चाहाद् वा स्थाप्याः। किम्भूते? मृत्स्नापृक्तेन जलेन गर्भिणि तद्युक्ते इत्यर्थः। प्रशस्ता मृत् मृत्स्ना। सस्नौप्रशंसायामिति स्नप्रत्ययः। अनेकभाजनस्थापने कोऽर्थ इत्याह,—लालादिकोथनाशार्थम्। आदिशब्देन मूत्रपुरीषादिपरिग्रहः। लालादीनां जलौकसा सम्बन्धः। कोथः कुथितत्वं क्लिन्नता तन्नाशाय। तदन्वयात् लालादियोगात्ताः सविषाः स्युः ॥ ४८ ॥

अशुद्धाविति। अशुद्धौ अशुद्धलिङ्गानुमिते रक्ते सति दंशान् हरिद्रादिभिः स्रावयेत्। शतधौतेति। अनन्तरं शतधौतघृतसम्पृक्ताः पिचवः, योज्या इति शेषः। शतशब्दोऽनेकपर्यायः, बहुकृत्वो धौतेत्यर्थः; तथा शिशिरा लेपा यष्टीचन्दनोशीरादयो योज्याः, दंशस्थितचलितरक्तप्रसादनायेति भावः। दुष्टरक्तेति—दुष्टरक्तस्यापगमान्निःसरणात् सद्यो रोगरुजादिशमः स्यात्, उपलक्षणं चेदम्, श्वयथु-शैथिल्य-दाह-शमोऽपि भवत्येव।

अम्लीभवत् पर्युषितं तस्मात्तत् स्रावयेत् पुनः ॥ ५० ॥
युञ्ज्यान्नालाबुघटिका रक्ते पित्तेन दूषिते ।
तासामनलसंयोगात् युञ्ज्याच्च कफवायुना ॥ ५१ ॥
कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत् ।
स्कन्नत्वाद् वातपित्ताभ्यां दुष्टं शृङ्गेण निर्हरेत् ॥ ५२ ॥
गात्रं बद्ध्वोपरि दृढ़ं रज्ज्वा पट्टेन वा समम् ।
स्नायुसन्ध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ॥ ५३ ॥
अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ।
न गाढघनतिर्यग्भिर्न पदे पदमाचरेत् ॥ ५४ ॥
प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः ।
हरेच्छृङ्गादिभिः सुप्तमसृग् व्यापि शिराव्यधैः ॥ ५५ ॥
प्रच्छानं पिण्डिते वा स्यादवगाढे जलौकसः ।
त्वक्स्थेऽलाबुघटीशृङ्गं शिरैव व्यापकेऽसृजि ।
वातादिधाम वा शृङ्गं जलौकोऽलाबुभिः क्रमात् ॥ ५६ ॥

---

अशुद्धमिति—अशुद्धं रक्तं स्वाशयाच्चलितं व्रणस्थाने स्थितं पर्युषितं तद्यम्लीभवेत् यत-स्तस्मात्तद्रक्तं भूयः स्रावयेत् ॥ ४९ । ५० ॥

युञ्ज्यादिति । रक्ते पित्तेन दूषिते सति अलाबुघटिका न लागयेत् । तासामलाबूनां घटिकानां चाग्निसंयोगात् पित्तरक्तकोपोत्पत्तेरिति भावः । तास्तु कफवायुना दुष्टेऽसृजि युञ्ज्यात् । कफेनेति—कफेन दुष्टं रक्तं सत् शृङ्गैर्नाऽकर्षेत्, स्कन्नत्वात् स्यानत्वाद्धेतोः । शृङ्गस्य चाग्निसंयोगाभावेन कफविलयने सामर्थ्याभावात् । वातेत्यादि —वातपित्ताभ्यान्तु दुष्टं रुधिरं शृङ्गेण निर्हरेत् ॥ ५१ । ५२ ॥

गात्रमिति । गात्रं रज्ज्वा पट्टेन वा दृढं बद्ध्वा उपरि प्रच्छनीयप्रदेशस्यं, तथा स्नाय्वादि परिहरन् प्रच्छानं कुर्यात् । कथम् ? अधोदेशात् प्रवृत्तैः पदैरुपरिगामिभिरूर्ध्वं प्रसारिभिः । किम्भूतैः पदैः ? न गाढैर्न खरैर्न निरन्तरैर्न च तिर्यग्भिस्तिरश्चीनैः, तथा पदे पदं नाचरन् । पदस्योपरि पदमकुर्वन्नित्यर्थः । एकदेशस्थितं रक्तं प्रच्छानेनाकर्षेत् । ग्रथितं जलजन्मभिर्हरेत्—ग्रथितं ग्रन्थ्यर्बुदादिषु रक्तं जलौकाभिर्हरेत् । शृङ्गादिभिः सुप्तं निश्चेतनसंस्थानं प्रसुप्त्यादिविकारि शृङ्गादिभिर्हरेत् । व्यापि शिराव्यधैः—व्यापि सर्वशरीरस्य लोहितं सिराव्यधेनाकर्षेत् ॥ ५३—५५ ॥

प्रच्छानमिति । पिण्डिते रक्ते प्रच्छानं वा स्यात् । अवगाढे रक्ते जलौकसः सुग्राः । त्वक्स्थे इति—त्वक्स्थे उत्ताने रक्तेऽलाबुघटीशृङ्गाणि सुग्राः । सिरेवेति—सर्वशरीर-

स्रुताऽसृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ।
सतोदकण्डूः शोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ५७ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

## सप्तविंशतितमोऽध्यायः ।

अथातः सिराव्यधविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
मधुरं लवणं किञ्चिदशीतोष्णमसंहतम् ।
पद्मेन्द्रगोप-हेमाऽवि-शश-लोहित-लोहितम् ।
लोहितं प्रवदेच्छुद्धं तनोस्तेनैव च स्थितिः ॥ २ ॥

---

व्यापके रक्ते सिरेव । सिरायां मतविकल्पो नास्त्येव इत्यव शब्दार्थः । वातादीति—अथवा वातादिस्थानस्थितं रक्तं यथाक्रमं शृङ्गादिभिर्हरेत् ॥ ५६ ॥

स्रुतेत्यादि । स्रुतरक्तस्य नरस्य शीतलैः प्रलेपादिभिस्तोदकण्डूयुतः शोफो वा स्यात् । तं सर्पिषोष्णेन सेचयेत् । तं तादृशं शोफं घृतेनोष्णेन सेचयेदिति ॥ ५७ ॥

इति श्रीमृगाङ्कदत्तपुत्र श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-सुन्दराख्यायां शस्त्रविधिरध्यायः षड्विंशतितमः ॥ २६ ॥

---

अनन्तरातीताऽध्याये शृङ्गादीन् लोहितावसेचनोपायानुक्त्वा प्रच्छानेनैकदेशस्थेत्यादिना वाक्येन तेषां विषयो दर्शितः । सिराव्यधस्य तु बहुवक्तव्यत्वात् पृथगध्यायो युक्त इत्याह,—अथात इति । सरत्याभी रक्तमिति सिरास्तासां व्यधस्तस्य विधिस्तमध्यायं व्याख्यास्यामः । शेषं पूर्ववत् ॥ १ ॥

मधुरमिति । लोहितं मधुरादिगुणं, तथा किञ्चिल्लवणं, तथा अशीतोष्णम् । नञ् ईषदर्थे ; ईषच्छीतमीषदुष्णमसंहतं द्रवं शुद्धं स्यात् । सम्प्रति वर्णेन शुद्धलोहितलक्षणमाह,—पद्मेत्यादि । इन्द्रगोपः कीटकविशेषः ; हेम कनकम् ; अविर्मेषः, शशः शशकस्तयोर्लोहितशब्देन रक्तवाचिना सम्बन्धः । पद्मादीनां द्वन्द्वः, पद्मेन्द्रगोपहेमाविशशलोहितमिव लोहितं रक्तवर्णं यद्रक्तं, तच्छुद्धं स्यात् । तच्च तनोः शरीरस्य प्रभव उत्पत्तिहेतुः । तेनैव रक्तेन च तनोः स्थितिः प्रबन्धविच्छेदलक्षणा । अनेकदृष्टान्तोपादानञ्च शुद्धरक्तस्यानेकवर्णदर्शनात् ॥ २ ॥

तत् पित्तश्लेष्मलैः प्रायो दूष्यते कुरुते ततः ।
विसर्प-विद्रधि-प्लीह-गुल्माग्निसदन-ज्वरान् ॥ ३ ॥
मुख-नेत्र-शिरोरोग-मद-तृड्-लवणास्यताः ।
कुष्ठवातास्रपित्तास्र-कट्वम्लोद्गीरणभ्रमान् ॥ ४ ॥
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ।
सम्यक् साध्या न सिध्यन्ति ते च रक्तप्रकोपजाः ॥ ५ ॥
तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत् सिराम् ॥ ६ ॥
न तूनषोड़शातीत-सप्तत्यब्दस्रुताऽसृजाम् ।
अस्निग्धास्वेदितात्यर्थ-स्वेदितानिलरोगिणाम् ॥ ७ ॥
गर्भिणी-सूतिकाजीर्ण-पित्तास्रश्वासकासिनाम् ।
अतीसारोदर-च्छर्दि-पाण्डुसर्वाङ्गशोफिनाम् ॥ ८ ॥
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ।
नायन्त्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम् ।
नातिशीतोष्णवाताभ्रेष्वन्यत्राऽऽत्ययिकाद् गदात् ॥ ९ ॥
शिरोनेत्रविकारेषु ललाट्यां मोक्षयेत् सिराम् । ललाट्य

---

तदिति । तच्च रक्तं बाहुल्येन पित्तश्लेष्मलैर्दूष्यते । पित्तलैः क्षारोष्णतीक्ष्णादिभिः, श्लेष्मलैर्माषतिलादिभिः तथा पुराकृताद्दैवादपि । शरत्कालस्वभावात् कदाचिद् वातलैर्दूष्यत इति प्रायोग्रहणम् । कुरुत इति—ततो दूषणात् कारणाद् विसर्पादीन् भ्रमान्तान् कुरुते, तथा शीतोष्णादिभिरुपक्रान्ताश्च ये गदाः सम्यक् चिकित्सिताः साध्या अपि रोगा ये न सिध्यन्ति ते च रक्तप्रकोपजाः । न केवलं विसर्पादय इति चार्थः । आदिशब्देन स्तम्भवेदनादिपरिग्रहः ॥ ३—५ ॥

तेष्विति । तथा तेषु विसर्पादिषु रोगेषु रक्तमुल्बणं स्रावयितुं सिरां व्यधयेत् । अदन्तत्वादत्र वृद्धेरभावः । ऊनषोडशवर्षादीनां सिरां न व्यधयेत् । स्नेहपीते पीतस्नेह इत्यर्थः । आहिताग्न्यादित्वात् परनिपातः । तथा पञ्चसु वमनादिषु कर्मसु विहितेषु सत्सु सिरां न व्यधयेत्, तथा अयन्त्रितामबद्धां सिरां न व्यधयेत् । न तिर्यङ् न चानुत्थितां नातिशीते नात्युष्णे नातिवाते न च मेघोदये सिरां व्यधयेत् । आत्ययिकाद् रोहिणीविषादिकादन्यत्र न व्यधयेत् । आत्ययिके तु रोगे शीतोष्णवृष्टीनां यथायथं प्रतिकारं विधाय सिरां मोक्षयेदेव ॥ ६—९ ॥

शिर इति । शिरोनयनविकारेषु ललाट्यां सिरां मोक्षयेत् । ललाटे भवा ललाट्या । शरीरावयवाद्यत् । एवमग्रेऽप्यपाङ्गे भवां नासिकासमीपे भवां वा ।

अपाङ्गयामुपनास्यां वा कर्णरोगेषु कर्णजाम् ॥ १० ॥
नासारोगेषु नासाग्रे स्थितां नासाललाटयोः ।
पीनसे मुखरोगेषु जिह्वोष्ठहनुतालुगाः ॥ ११ ॥
जत्रूर्ध्वं ग्रन्थिषु ग्रीवा-कर्ण-शङ्ख-शिरः-श्रिताः ॥ १२ ॥
उरोऽपाङ्गललाटस्था उन्मादेऽपस्मृतौ पुनः ।
हनुसन्धौ समस्ते वा सिरां भ्रूमध्यगामिनीम् ॥ १३ ॥
विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरे ।
तृतीयकेऽंसयोर्मध्ये स्कन्धस्याधश्चतुर्थके ॥ १४ ॥
प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुले स्थिताम् ।
शुक्रमेढ्रामये मेढ्रे, ऊरुगां गलगण्डयोः ॥ १५ ॥
गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुले ।
इन्द्रबस्तेरधोऽपच्यां द्व्यङ्गुले चतुरङ्गुले ॥ १६ ॥
ऊर्ध्वं गुल्फस्य सक्थ्यार्त्तौ * तथा क्रोष्टुकशीर्षके ।
पाददाहे खुडे हर्षे विपाद्यां वातकण्टके ।

कर्णरोगेष्विति—कर्णामयेषु कर्णजां कर्णसमीपभवां सिरां विध्येत् । नासारोगेष्विति—नासामयेषु नासाग्रे स्थितां विध्येत् । नासेत्यादि—पीनसे प्रतिश्याये नासाललाटयोः स्थितां सिरां विध्येत् । मुखरोगेष्विति—मुखरोगेषु जिह्वादिगाः सिरा विध्येत् । जत्रूर्ध्वमिति—जत्रूर्ध्वं वक्षोऽंसयोः सन्ध्यूर्ध्वं ये ग्रन्थयस्तेषु ग्रीवाद्याश्रिताः सिरा विध्येत् । उर इति—उन्मादे उरःस्था अपाङ्गस्था ललाटाश्रिताश्च विध्येत् । अपस्मृताविति,—अपस्मारे हनुसन्धौ स्थितां सिरां विध्येत् । समस्ते सर्वस्मिन् वा हनौ सिरां विध्येत् । सिरां भ्रूमध्यगामिनीं भ्रूमध्यस्थां वा अपस्मृतौ विध्येदिति वा शब्दोऽत्रानुवर्त्य योज्यः । विद्रधाविति—विद्रधौ पार्श्वशूले च पार्श्वस्थाः कक्षास्तनान्तरस्थाश्च सिरा विध्येत् । तृतीयके ज्वरे अंसयोर्मध्ये स्कन्धसन्धौ स्थितां सिरां विध्येत् । चतुर्थके ज्वरे स्कन्धस्याधोगतां सिरां विध्येत् । प्रवाहिकायां शूलयुक्तायां श्रोणितः कट्या द्व्यङ्गुले स्थितां सिरां विध्येत् । शुक्ररोगे मेढ्ररोगे च मेढ्रस्थितां सिरां विध्येत् । गलगण्डयोश्चोभयोः ऊरुस्थां सिरां विध्येत् । गृध्रस्यामिति—गृध्रस्यां जानुनोरधस्ताच्चतुरङ्गुले ऊर्ध्वं वा जानुनश्चतुरङ्गुले स्थितां सिरां विध्येत् । इन्द्रबस्तेरिति—अपचिसंज्ञे रोगे इन्द्रबस्तेरधो द्व्यङ्गुले सिरां विध्येत् । इन्द्रबस्तिर्जङ्घान्तरे वक्ष्यमाणः । चतुरङ्गुल इति—सक्थिपीडायां गुल्फस्योर्ध्वं चतुरङ्गुले विध्येत् । तथेति—क्रोष्टुकशीर्षके वातरोगविशेषे गुल्फस्योर्ध्वं चतुरङ्गुले विध्येत् ।

* सन्ध्यार्त्तौ इति वा पाठः ।

क्षिप्रे च द्व्यङ्गुले विध्येदुपरि क्षिप्रमर्मण: ॥ १७ ॥
गृध्रस्यामिव विश्वाच्यां यथोक्तानामदर्शने ।
मर्म्महीने यथासन्ने देशेऽन्यां व्यधयेत् सिराम् ॥ १८ ॥
अथ स्निग्धतनु: सज्ज-सर्वोपकरणो बली ।
कृतस्वस्त्ययन: स्निग्ध-रसान्नप्रतिभोजित: ॥ १९ ॥
अग्नितापातपस्विन्नो जानूच्चासनसंस्थित: ।
मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्पर: ॥ २० ॥
मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीड़येत् ।
दन्तप्रपीडनोत्कास *-गण्डाध्मानानि चाचरेत् ॥ २१ ॥
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नर: ।
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ।
एषोऽन्तर्मुखवर्ज्जानां सिराणां यन्त्रणे विधि: ॥ २२ ॥
तथा मध्यमयाऽङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया ।
ताड़येदुत्थितां ज्ञात्वा स्पर्शाङ्गुष्ठप्रपीड़नै: ।

पादेत्यादि—पाददाहादिषु क्षिप्रमर्मण उपरि द्व्यङ्गुले विध्येत् । गृध्रस्यामिति—विश्वच्यां
गृध्रस्यां इव शिरां विध्येत् । गृध्रस्यां जानुनीधस्तादिति । यथोक्तानामिति—यथोक्तानां
सिराणामदर्शने सति मर्मवर्जिते यथासन्ने स्थाने व्याधिवशादपरां विध्येत् ॥१०—१८॥
अथेत्यादि । अथेत्यानन्तर्ये । स्निग्धा तनुर्यस्य स स्निग्धतनु:, तथा सज्जानि प्रगुणा-
न्युपकरणानि वस्त्रपीडपादकस्नेहगैरिकादीनि यस्य स सज्जोपकरण:, तथा बली पुष्ट:,
तथा कृतं स्वस्त्ययनं बलिमङ्गलहोमादिकं यस्य स कृतस्वस्त्ययन:, तथा स्निग्धरसयुक्तेना-
ऽन्नेन प्रतिभोजित:, तथा अग्नितापश्चातपश्च ताभ्यां स्विन्न:, तथा जानुतुल्यमुच्चमासनं
तत्र संस्थित: समुपविष्ट:, तथा मृदुना सूक्ष्मेण वस्त्रपट्टेनात्तौ गृहीतौ बद्ध: केशान्तौ
यस्य स एवम्, तथा जानुनि स्थापितं कूर्परं येन स एवम्, तथा मुष्टिभ्यां वस्त्रगर्भाभ्यां
मन्ये अतिशयेन पीडयेत् ; तथा दन्तप्रपीडनाद्याचरेत् ॥ १९—२१ ॥
पृष्ठत इति । एनं चातुरं पृष्ठदेशे वसनमावेष्टयन्नरो यन्त्रयेत् । कथम् ? कन्धरायां
ग्रीवायां वस्त्रं परिक्षिप्य, तथा अन्तर्मध्ये वामतर्जनीं न्यस्य, सिराणां यन्त्रणे एष विधिरि-
तद्विधानम् । किम्भूतानाम् ? अन्तर्मुखवर्ज्जानाम् ॥ २२ ॥
तथेत्यादि । ततो यन्त्रणादनन्तरं वैद्योऽङ्गुष्ठविमुक्तया वामपाणिजया मध्यमयाऽ-
ङ्गुल्या ताडयेत् । स्पर्शेन वाऽङ्गुष्ठपीडनैर्वोत्थितां ज्ञात्वा ऊर्ध्वदण्डया सिराया मध्ये

* उत्कास इति वा पाठ: ।

कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया।
फलोद्देशे सुनिष्कम्पं सिरां तद्वच्च मोक्षयेत्॥ २३॥
ताडयन् पीड़येच्चैनां विध्येद् व्रीहिमुखेन तु॥ २४॥
अङ्गुष्ठेनोन्नमय्याऽग्रे नासिकामुपनासिकाम्।
अभ्युन्नत-विदष्टाग्र-जिह्वस्याधस्तदाश्रयाम्॥ २५॥
यन्त्रयेत् स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे।
पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे।
कुक्षेरारभ्य मृदिते विध्येद् बद्धोर्द्ध्व पट्टके ॥ २६॥

---

न्यस्य फलोद्देशे सुनिष्कम्पं वामहस्तगृहीतया कुठार्या सिरां लक्षयेत्। तद्वच्च मोक्षयेत्: यथैव लक्षयेत्तथैवेत्यर्थः॥ २३॥

ताड़यन्निति। व्रीहिमुखेन पुनस्ताडयन् विध्यंस्तया अङ्गुष्ठादिना पीडयेत्। एनां कुठारिकाविषयजां सिरां विध्येत्। ननु कुठारिकाविषये कथं व्रीहिवक्त्रस्य प्रयोगः; यतोऽपवादविषयं परिहृत्योत्सर्गाः प्रवर्त्तन्ते इति न्यायः। व्रीहिवक्त्रस्यैव सामान्येन प्रयोगोऽनुज्ञातः। तथाचाह,—"व्रीहिवक्त्रं प्रयोज्यं वा तत्सिरोदरयोर्व्यधे" इति। कुठार्याः पुनर्विशेषोऽभिहितः। "तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिरामिति," तस्माद युक्तमेतत्। अत्रोच्यते, ज्ञापकं कुठारिकाविषये व्रीहिवक्त्रस्य प्रयोगो न्याय्य एव। यदयमाचार्यो वक्ष्यति,—"मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम्" इति। अनेन हि वचनेन ग्रन्थकार इदं प्रत्यपादयत्। बहुमांसे शरीरावयवे व्रीहिमुखं व्रीहिमात्रं निक्षेप्यम्। अन्यत्र त्वाशयानुरोधेन व्रीहिवक्त्रस्य प्रयोगः कार्य इति। अनेनैवाभिप्रायेण शास्त्रकृता प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रच् वक्तव्य इत्यनेन मात्रच् कृतं। अन्यथा तु स्पष्टं कृत्वा "व्रीहिप्रमाणं व्रीह्यास्यं मांसले निक्षिपेद् व्यधः" इति पाठं कुर्यात्। तस्माद युक्तो व्रीहिमुखस्य कुठारिकाविषयेऽपि प्रयोग इति॥ २४॥

अङ्गुष्ठेति। अग्रे अग्रदेशे नासिकामङ्गुष्ठेनोन्नमय्य उपनासिकासन्नदेशस्थां सिरां विध्येत्। अभ्युन्नतेति। आभिमुख्येनोन्नतोपरि तालुदेशे नीता, तथा विशेषेण दन्तैर्दष्टा अग्रे जिह्वा अग्रजिह्वा येनासावभ्युन्नतविदष्टाग्रजिह्वस्तस्याधः प्रकृतत्वाज्जिह्वाया एवाधस्तात्तदाश्रयां जिह्वाधःस्थां सिरां विध्येत्। तदित्यनेन जिह्वाधः परामृश्यते। जिह्वाध आश्रयो यस्याः सिरायास्ताम्॥ २५॥

यन्त्रयेदिति। ग्रीवाश्रितानां सिराणां व्यधो ग्रीवाश्रितसिराव्यधस्तस्मिन् स्तनयोरूर्ध्वं यन्त्रयेद् वाससाऽऽवेष्टयेत्। पाषाणेति—पाषाणगर्भौ हस्तौ यस्य तस्य नरस्य भुजे जानुस्थे जानुन्येव स्थिते प्रसृते प्रसारिते। भुज इति वचनमतन्त्रम्; द्वावपि हि भुजौ गृह्येते। कुक्षेरारभ्य यावद् ग्रीवा तावन् मृदिते मलिते। कस्मिन्? ग्रीवाश्रितसिराव्यधार्हे अङ्गे। यथा बद्ध ऊर्ध्वं पट्टको यस्मिंस्तस्मिन् सिरां विध्येत्। प्रकृतत्वात् सिराम्॥ २६॥

विध्येद्धस्तसिरां बाहावनाकुञ्चितकूर्परे ।
बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणीम् ।
ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ॥ २७ ॥
विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् ॥ २८ ॥
प्रहृष्टे मेहने जङ्घा-सिरां जानुन्यकुञ्चिते ।
पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ॥ २९ ॥
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ।
द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः ॥ ३० ॥
बद्ध्वा विध्येत् सिरामित्थमनुक्तेष्वपि कल्पयेत् ।
तेषु तेषु प्रदेशेषु तत्तद् यन्त्रमुपायवित् ॥ ३१ ॥
मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।
यवार्द्धमस्थ्नामुपरि सिरां विध्यन् कुठारिकाम् ॥ ३२ ॥
सम्यग्विद्धे स्रवेद् धारां यन्त्रे मुक्ते तु न स्रवेत् ।
अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनैः ।

---

विध्येदिति । हस्तसिरां विध्येत् । कथम् ? बाहावनाकुञ्चितकूर्परे । अनाकुञ्चितः प्रसारितः कूर्परो यस्य बाहोस्तस्मिन् तथा सुखोपविष्टस्य सुखासीनस्य, तथा मुष्टिं बद्ध्वा । किम्भूताम् ? अङ्गुष्ठेन गर्भिणीमङ्गुष्ठगर्भिणीम् । गूढाङ्गुष्ठं मुष्टिं बद्ध्वेत्यर्थः ; तथा वेध्यस्थानादुपरि चतुरङ्गुल-परिमाणे स्थाने पट्टिकां बद्ध्वा विध्येत् । विध्येदिति—बाहुभ्यामालम्बमानस्यावलम्ब्य वस्तु भुजाभ्यामासनतः पार्श्वयोः सिरां विध्येत् ॥ २७ । २८ ॥

प्रहृष्टे इति । प्रहृष्टेऽस्तब्धे मेढ्रे तदाश्रितां सिरां विध्येत् । जङ्घासिरामिति—जानुन्यकुञ्चिते स्पष्टे स्थिते सति जङ्घायां सिरां विध्येत् । पादे इति—सुखं कृत्वा भूम्यादिदेशे स्थिते पादे सति पादसिरां विध्येत् ; तथा जानुसन्धेरधस्तादागुल्फं गुल्फं यावत् कराभ्यां गाढं कृत्वा पीडिते सति तस्य चरणस्योपर्युपरिष्टाद्द्वितीये चरणे ईषत्सङ्कुचिते, तथा आरूढे तत्काले आरोपिते सति, ततो हस्तवद्वेध्यस्थानादुपरि चतुरङ्गुले पट्टकं बद्ध्वा सिरा विध्येत् । इत्थमिति—इत्थमनेन प्रकारेण यन्त्रलक्षणोद्देशेनानुक्तमपि यन्त्रं तत्तद्देशमाहात्म्यात् क्रियासौकर्यार्थं तेषु तेषु शरीरावयवेषु स्वबुद्ध्या तत् तद् यन्त्रं यथायोगं कल्पयेदुपायज्ञो वैद्यः ॥ २९—३१ ॥

मांसले इति । मांसले शरीरावयवे व्रीहिमुखं शस्त्रं व्रीहिप्रमाणं निक्षिपेत् । अस्थ्नामुपरि यवार्द्धमात्रं कुठारिकां निक्षिपेत् । किंकुर्वन् ? सिरां विध्यन् । सम्यगिति सम्यग्विद्धे सति धारां स्रवेत् । यन्त्रे च मुक्ते सति न स्रवेत् । अल्पं विद्धा सती सिरा

सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्य्यते ॥ ३३ ॥
भी-मूर्च्छा-यन्त्रशैथिल्य-कुण्ठशस्त्राऽतितृप्तयः ।
क्षामत्व-वेगिताऽस्वेदा रक्तस्याऽस्रुतिहेतवः ॥ ३४ ॥
असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः ।
सागारधूम-लवण-तैलैर्दिह्याच्छिरामुखम् ॥ ३५ ॥
सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च ।
अग्रे स्रवति दुष्टाऽस्रं कुसुम्भादिव पीतिका ॥ ३६ ॥
सम्यक् स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ ३७ ॥
यन्त्रं विमुच्य मूर्च्छायां वीजिते व्यजनैः पुनः ।
स्रावयेन् मूर्च्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ ३८ ॥
वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ।
पित्तात्पीतासितं विस्रमस्कन्द्यौष्ण्यात् सचन्द्रकम् ॥ ३९ ॥
कफात् स्निग्धमसृक् पाण्डु तन्तुमत् पिच्छिलं घनम् ।
संसृष्टलिङ्गं संसर्गात् त्रिदोषं मलिनाविलम् ॥ ४० ॥

---

स्तोकं कालं वहति । दुर्विद्धा असम्यग्विद्धा तु सिरा सशब्दं स्रवेत् । दुःखेन कृच्छ्रेण धार्य्यते ॥ ३२—३३ ॥

भीति । भीमूर्च्छादयो रक्तस्याऽस्रवहेतवः । भीर्भयम् ; मूर्च्छा मोहस्तमसीव प्रवेशः । यन्त्रशैथिल्यमवगाढं कृत्वा यन्त्रपीडनम् ; तथा कुण्ठं भग्नं शस्त्रम् ; तथा अतितृप्तिरतिसौहित्यम् ; क्षामत्वं निर्बलता ; वेगिता सञ्जातवेगत्वम् ; अस्वेदः स्वेदायोगः । यतश्चैते रुधिरस्यास्रुतिहेतवः, अतो रक्तस्रुताविते परिहार्याः ॥ ३४ ॥

असम्यगिति । असम्यगस्रे स्रवति वेल्लादिभिः सिरावदनं दिह्यात् प्रलेपयेत् । सम्यगिति—सम्यक्प्रवृत्ते रक्ते सति सिरामुखं कोष्णाभ्यां तैललवणाभ्यां दिह्यात् लिपयेत् । अग्रे इति—यथा रागपीतिकामिश्रीभूतात् कुसुम्भादग्रे पूर्व्वं पीतिका स्रवति, तथा दुष्टादुष्टरक्तादेकलोलीभूतादग्रे पूर्वं पीतिका स्रवति ॥ ३६ ॥

अग्रग्रहणात् पश्चाददुष्टमपि रक्तमवश्यं स्रवतीत्याशङ्क्येदमाह,—सम्यक् स्रुत्वेति । यथावत् प्रस्रुत्य स्वयं यत्नेन विना यत्तिष्ठेन्न स्रवेत् शुद्धं तदिति नाहरेन्न स्रावयेत्, जीवितहेतुत्वात् ॥ ३७ ॥

यन्त्रमिति—मूर्च्छायां सत्यां यन्त्रं विमुच्य व्यजनैर्वीजिते समाश्वस्ते नरे सति पुनरस्रं स्रावयेत् । पुनर्मूर्च्छति त्वातुरेऽशुद्धमपि रक्तं तस्मिन्नहनि न स्रावयेत् ॥ ३८ ॥

वातेति—वातात् श्यावादि लक्षणं रक्तं स्यात् पित्तादिति । पित्तात् पीतादिलक्षणमस्रं स्यात् । अस्कन्दि अस्त्यानमुष्णत्वात् सचन्द्रकञ्च । कफात् स्निग्धादिलक्षणमसृक् स्यात् ।

अशुद्धौ बलिनोऽप्यस्त्रं न प्रस्थात् स्रावयेत् परम् ।
अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः ॥ ४१ ॥
तत्राऽभ्यङ्गरसक्षीर-रक्तपानानि भेषजम् ।
स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाऽम्बुना ॥ ४२ ॥
प्रक्षाल्य तैलप्लोताक्तं बन्धनीयं सिरामुखम् ।
अशुद्धं स्रावयेद् भूयः सायमह्न्यपरेऽपिवा ।
स्नेहोपस्कृतदेहस्य पक्षाद् वा भृशदूषितम् ॥ ४३ ॥
किञ्चिद्धि शेषे दुष्टाऽस्रे नैव रोगोऽतिवर्त्तते ॥ ४४ ॥
सशेषमप्यतो धार्य्यं न चातिस्रुतिमाचरेत् ।
हरेच्छृङ्गादिभिः शेषं प्रसादमथवा नयेत् ॥ ४५ ॥
शीतोपचारपित्तास्र-क्रियाशुद्धिविशोषणैः ।

---

संसर्गाद्दोषाणां संसृष्टलिङ्गं रक्तं स्यात् । त्रिदोषं रक्तं मलिनं कलुषं, तथा आविलं घनञ्च । एतच्च दोषत्रयसंसर्गलक्षणादधिकं लक्षणं मन्तव्यम् । न चैतावदेव त्रिदोषलक्षणं मन्तव्यम् ॥ ३९ । ४० ॥

अशुद्धमस्रं बलिनोऽपि किं पुनरबलिनः प्रस्थात् परमधिकं न स्रावयेत् । कस्मादित्याह,—अतिस्रुताविति । अतिस्रावे हि रक्तस्य मृत्युर्भवेत् वातरोगाश्च कृच्छ्राः स्युः । तत्र रक्तातिस्रुतावभ्यङ्गादीनि भेषजम् । स्रुते रक्ते सति यन्त्रं शनैर्विमुच्य मन्दं मन्दमपनीय सिरामुखं शीतोदकेन प्रक्षाल्य तैलप्लोताक्तं सद्द बन्धनीयम् । अशुद्धमिति—अशुद्धं वातादिदुष्टरुधिरलक्षणाद्दृष्टं ज्ञात्वा भूयः पुनः स्रावयेत् । कदा ? सायमपराह्णे तस्मिन् दिवसे ; अथवा अपरेऽह्नि द्वितीये दिवसे । स्नेहेति—अथवा स्नेहेनोपस्कृतो भावितो देहो यस्य तथाविधस्य भृशं दूषितमतिशयेन दुष्टं रक्तं पक्षादूर्द्ध्वं पुनः स्रावयेत् । एवमशुद्धं रक्तं यथायोगं सायमह्नि अपरे पक्षादूर्ध्वं वा प्रस्थपरिमाणमेव स्रावयेन्न ततोऽधिकमिति रक्तस्रुतौ ब्रूमः । प्रस्थपरिमाणञ्च तन्त्रान्तरे गदितम्,—"वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति ॥ ४१—४३ ॥

किञ्चिच्छेषं दुष्टरक्तं स्थापयेदुत सर्वं स्रावयेदिति संशयापनोदार्थमिदमाह,—किञ्चिदिति । यस्मात् किञ्चिच्छेषे दुष्टे रक्ते नैव रोगो दुष्टरक्तोद्भवो व्याधिरतिवर्त्तते क्रियापथमतिक्रम्य मार्गान्तरमसौ नासादयति ; अतो दुष्टमपि रक्तं सशेषं धार्यम् । न दुष्टरक्तस्याऽतिस्रुतिमाचरेत्, प्राणायतनत्वात् । सश्रुतोऽप्यभ्यगीष्ट,—"सशेषं दुष्टरुधिरमपि कुर्याद्द विचक्षणः । न चातिप्रस्रुतिं कुर्याच्छेषं संशमनैर्जयेत्" इति ॥ ४४ ॥

अथ किञ्चिच्छेषं रक्तमुपेक्षणीयमुत प्रतिक्रिया कापि कार्येत्याह,—हरेदिति । स्रुतशेषं दुष्टरक्तं शृङ्गतुम्बघटिकादिभिर्हरेन्न तु सिरया । अथवा शीतोपचारेण पित्त-

दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ।
रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम् ॥ ४६ ॥
रोध्र-प्रियङ्गु-पत्तङ्ग-माष-यष्ट्याह्व-गैरिकैः ।
मृत्कपालाञ्जनक्षौम-मषीक्षीरित्वगङ्कुरैः ।
विचूर्णयेद व्रणमुखं पद्मकादिहिमं पिबेत् ॥ ४७ ॥
तामेव वा सिरां विध्येद् व्यधात्तस्मादनन्तरम् ।
सिरामुखञ्च त्वरितं दहेत्तप्तशलाकया ॥ ४८ ॥

उन्मार्गगा यन्त्रनिपीडनेन
स्वस्थानमायांति पुनर्न यावत् ।
दोषाः प्रदुष्टा रुधिरं प्रपन्ना-
स्तावद्धिताहार-विहार-भाक् स्यात् ॥ ४९ ॥
नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितास्त्र-
मग्निर्विशेषादिति रक्षणीयः ॥ ५० ॥

---

रक्तक्रियया शुद्ध्या वमनविरेचनादिरूपया विशेषेण लङ्घनरूपेण तद्दुष्टं रक्तमनुद्रिक्तमेव प्रसादयेत् कलुषतां परित्यज्य तस्य प्रसन्नत्वमभ्युपपादयेन्न तु केवलं स्रुतशेषं रुधिरं शीतोपचारेण प्रसादयेत् । यावदनुद्रिक्तमप्रवृद्धं दुष्टं रुधिरमेवमनेनेव शीतोपचारादिना प्रसादं नयेन्न तु तन्निर्हरणे सिराव्यधादिना यतनीयम्, अनुद्रिक्तरक्तनिर्हरणस्य सापायत्वात् । रक्ते त्वतिष्ठति स्थितिमलभमाने त्वरितमेव स्तम्भनीं क्रियां वक्ष्यमाणां कुर्यात्, रक्तस्य प्राणायतनत्वात् ॥ ४५ । ४६ ॥

तदेतत् स्तम्भनविशेषमाह,—रोध्रेति । रोध्रादिभिः सिराव्रणमुखं विचूर्णयेत् । पद्मकादिहिमं शीतकषायं पिबेत् । तामिति—तामेव प्राग्विद्धां सिरां तस्मात् प्राग्व्यधादनन्तरमव्यवहितं विध्येत् । सिरेति—अथवा सिराद्वारं क्षिप्रं कृत्वाऽग्निनोपतप्तया शलाकया दहेत् ॥ ४७ । ४८ ॥

रक्तस्य स्रवणादनन्तरं यद् विधेयं तदाह,—यन्त्रनिपीडनेनोन्मार्गगाः स्वमार्गमुल्लङ्घ्य मार्गान्तरसमाश्रयणेनोत्पथं प्रतिपन्ना दोषाः । किम्भूताः ? प्रदुष्टाः, तथाविधं रक्तं प्राप्ताः पुनर्यावत् स्वाश्रयं न प्रतिपद्यन्ते तावद्धिताहारविहारभाक् स्यात् हितावाहारविहारौ भजेत् । भजी खिरिति खिः । इन्द्रवज्रा वृत्तम् ॥ ४९ ॥

नेति । रक्ते स्राविते अन्नपानं नात्युष्णशीतं हितम् । अत्युष्णं ह्यन्नपानं रक्तं प्रदूषयेत्; अतिशीतं त्वग्निं सादयेत्, तथा लघु स्वभावतो मात्रादिना च, दीपनीयं संस्कारादिना ।

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तृवेगम्।
सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥ ५१ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने सप्तविंशतितमोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः।

अथातः शल्याहरणविधिमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
वक्रजुतिर्य्यगूर्ध्वाधः शल्यानां पञ्चधा गतिः ॥ २ ॥

---

कुत एवमन्नपानं हितमित्याह,—यस्मात्तस्मिन् काले शरीरमनवस्थितं चलितवृत्ति रक्तं यस्य शरीरस्य तदेवम्भूतं भवति। तत्राऽसृक् शरीरस्याधारो, रक्तस्य च पित्तं, पित्तस्य च वह्निः। तथा च वक्ष्यति,—"पित्तं वह्निः" इति। तस्माद् विशेषेण महता यत्नेन वह्निर्नात्युष्णशीतादिना आहारविहारेण रक्षितव्यः ॥ ५० ॥

कृतसिराव्यधस्य पुरुषस्य लक्षणमन्तरेणोन्मार्गगामिनां दोषाणां स्वस्थानप्रतिपत्तौ कालो नावगम्यते। न च निर्हृतदुष्टरक्तः पुरुषो लक्षणं विना ज्ञायते, इति द्वयस्य परिज्ञानार्थमाह,—प्रसन्नेति। वर्णश्चेन्द्रियाणि च वर्णेन्द्रियाणि प्रसन्नानि वर्णेन्द्रियाणि यस्य तं प्रसन्नवर्णेन्द्रियम्, तथा इन्द्रियार्थान् शब्दादीन् स्वभावाभिप्रेतान् इच्छन्तमभि-लषन्तम्, तथा पक्तुर्वेगः सामर्थ्यम्। अव्याहतोऽनभिभूतः पक्तृवेगो यस्य तमव्याहत-पक्तृवेगमविनष्टपचनवेगम्, तथा सुखान्वितमारोग्ययुक्तम्। प्रकृतिमापन्नं पुष्टिबलाभ्यां युक्तम्। एवंविधं विशुद्धरक्तं पुरुषं वदन्तीति शरीरस्य लक्षणमुक्तम्। मधुरं लवण-मित्यादिना तु रक्तस्यैव विशुद्धिलक्षणमभिहितमिति। उपजातिर्वृत्तम् ॥ ५१ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-
सुन्दराख्यायां सिराव्यधविधिर्नामाध्यायः सप्तविंशतितमः ॥ २७ ॥

---

शिराव्यधविधेरनन्तरं शल्याहरणविधिरारभ्यते,—अथात इति। यतः सिराव्यधा-ध्याये शल्यरूपस्य रक्तस्य सकलकायव्यापिनः सिराव्यधोपायेन निर्हरणमुक्तं ; इदानीं प्रादेशिकस्य लोहादेः शल्यस्य प्रतिदेशस्थितस्य लक्षणं निर्हरणोपायादिश्च अस्मिन्नध्याये शल्याहरणविधौ निर्दिश्यत इत्याह—वक्रेति। वक्रादिभेदभिन्ना शल्यानां पञ्चप्रकारा गतिर्गमनम्। कदाचिच्छल्यानि वक्रं कृत्वा तिर्यग् वा ऊर्ध्वं वा अधो वा गच्छन्ति। कदाचिदृजु कृत्वा। एवमुभयथा तिर्यगूर्ध्वाधोभेदगमनाच्छल्यानां पञ्चधा गतिः ॥१।२॥

ध्यामं शोफं रुजावन्तं स्रवन्तं शोणितं मुहुः।
अभ्युन्नतं बुद्बुदवत् पिटिकोपचितं व्रणम्।
मृदुमांसं विजानीयादन्तःशल्यं समासतः॥ ३॥
विशेषात्त्वग्गते शल्ये विवर्णः कठिनायतः।
शोफो भवति मांसस्थे चोषः शोफो विवर्द्धते।
पीडनाच्चमता पाकः शल्यमार्गो न रोहति॥ ४॥
पेश्यन्तरगते मांस-प्राप्तवच्छ्वयथुं विना॥ ५।
आक्षेपः स्नायुजालस्य संरम्भस्तम्भवेदनाः।
स्नायुगे दुर्हरं चैतत् सिराध्मानं सिराश्रिते॥ ६॥
स्वकर्मगुणहानिः स्यात् स्रोतसां स्रोतसि स्थिते॥ ७॥
धमनीस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत्।
निर्याति शब्दवान् स्याच्च हृल्लासः साङ्गवेदनः॥ ८॥

---

सशल्यः कथं वेद्य इत्याह,—ध्याममिति। एवम्विधं व्रणमन्तःशल्यं विजानीयात्। समासतः संक्षेपेण ; ध्यामं श्यामवर्णम्, तथा शोफम् शोफान्वितं, रुजावन्तम्, तथा मुहुः शोणितं स्रवन्तम्, तथा अभ्युन्नतमाभिमुख्येनोच्छ्रितमुन्नतम्, तथा बुद्बुदेन तुल्यं वर्त्तते बुद्बुदवत्, तथा पिटकैरुपचितं व्याप्तम्, तथा मृदुमांसं कोमलमांसम्॥ ३॥

इति सामान्येनान्तःस्थितस्य शल्यस्य लक्षणमुक्त्वा त्वगादिगतस्य लक्षणमाह,—विशेषादिति। सामान्यलक्षणं पूर्वोक्तमन्तःशल्यस्य सर्वत्र विद्यते विशेषेण पुनस्त्वग्गते शल्ये शोफो विवर्णस्तथा कठिनो दीर्घश्च स्यात्। मांसस्थ इति—मांसगते शल्ये चोषः स्यात्। सर्व्वाङ्गीणस्तीव्रोऽरतिमान् दाहश्चोष उच्यते। तथा शोफो विवर्द्धते ; तथा पीडनस्याक्षमत्वं पाकश्च। शल्यमार्गश्च रोहं न याति॥ ४॥

पेशीति। पेशीमध्यगते मांसगतेन तुल्यं लक्षणं श्वयथुं वर्जयित्वा। मांसावयवविशेषो दीर्घतन्त्वाकृतिः पेशीत्युच्यते। आक्षेप इति—स्नायुगे शल्ये स्नायुजालस्याक्षेपाद्याः स्युः। आक्षेप आकर्षणम् ; संरम्भः क्षोभः ; स्तम्भः स्तब्धता ; वेदना शूलम्। तच्च स्नायुगं शल्यं दुःखेन निर्हर्तुं शक्यते। सिरेति—सिराश्रिते शल्ये सिराणामानाहः स्यात्। स्वकर्म्मेति—स्रोतोगते शल्ये स्रोतसां स्वकर्मगुणयोर्हानिः स्यात्। यथा कण्ठस्रोतसि स्थिते शल्ये पानाभ्यवहरणस्य निरोधो जायते गुणोऽपि यस्तस्याप्रदुष्टत्वादिलक्षणः सोऽप्यस्य हीयत इति। एवमन्येषां स्वकर्मगुणहानिर्व्याख्येया। अतिवाकत्वं चेति योज्यम्॥ ५—७॥

धमनीस्थ इति। धमनीस्थे शल्ये वायुर्लोहितं सफेनं प्रेरयेत् ; तथा सशब्दो मरुन्निर्याति। हृल्लासश्चाङ्गपीडायुक्तः स्यात्। सद्वर्प इति—अस्थिसन्धिप्राप्ते शल्ये बल-

सङ्घर्षो बलवानस्थि-सन्धिप्राप्तेऽस्थिपूर्णता ॥ ९ ॥
नैकरूपा रुजोऽस्थिस्थे शोफस्तद्वच्च सन्धिगे ।
चेष्टानिवृत्तिश्च भवेदाटोपः कोष्ठसंश्रिते ॥ १० ॥
आनाहोऽन्नशकृन्मूत्रदर्शनञ्च व्रणानने ।
विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥ ११ ॥
यथास्वञ्च परिस्रावैस्त्वगादिषु विभावयेत् ॥ १२ ॥
रुह्यति शुद्धदेहानामनुलोमस्थितन्तु तत् ॥ १३ ॥
दोषकोपाभिघातादि-क्षोभाद्भूयोऽपि बाधते ॥ १४ ॥
त्वङ्नष्टे यत्र तत्र स्युरभ्यङ्गस्वेदमर्द्दनैः ।
रागरुग्दाहसंरम्भा यत्र चाज्यं विलीयते ।

---

वान् संघर्षः क्षोभः स्यात् । तथाऽस्थिपूर्णता च जायते । नैकरूपेति—अस्थिस्थे शल्ये अनेकाकारा नानाविधा रुजो भग्नरुग्मर्दितपीडितावनुन्नप्रायाः स्युः शोफश्च । सन्धिगते शल्ये तद्वदेव अस्थिस्थशल्येन तुल्यं लक्षणं सन्धिस्थशल्याक्रान्तावयवस्य, तथा चेष्टाया व्यापारस्य निवृत्तिरूपरमश्च स्यात् । पूर्वमस्थिसन्धिगतस्य शल्यस्य लक्षणमुक्तम्, अधुना अनुरक्तशरीरसन्धिगतशल्यस्य लक्षणम् । अन्यो हि शरीरसन्धिः । तथा च राजयक्ष्मनिदाने वक्ष्यति,—"शरीरसन्धीनाविश्य" इति । आटोप इति—कोष्ठमुदरमाश्रिते शल्ये आटोपः क्षोभः, तथा आनाहो जठराध्मानम्, तथा व्रणमुखेऽन्नशकृन्मूत्रदर्शनं स्यात् । मर्मस्थं शल्यं मर्मविद्धोपलक्षणैर्विद्यात् । मर्मविद्धस्य च लक्षणं संग्रहे कथितम् । यथा,—"देहप्रसुप्तिर्गुरुता संमोहः शीतकामता । स्वेदो मूर्च्छा वमिः श्वासो मर्मविद्धस्य लक्षणम्" इति ॥ ८—११ ॥

यथास्वमिति । न केवलं सामान्यलक्षणेन ध्यामादिना, तथा त्वगादिस्थशल्यविशेषलक्षणेन त्वगादिस्थं शल्यं लक्षयेत् । यावद् यथास्वं परिस्रावैस्तथा रूपैर्विभावयेत् । रुह्यते इति—तत् प्राङ्निर्दिष्टं शल्यं रुह्यते रोहं याति । किम्भूतानां पुंसाम् ? वमनविरेचनादिभिः शुद्धदेहानाम् । रुह्यत इति कर्मकर्तरीति केचित् । तच्च न युक्तम् ; यतः कर्मस्थभावकानां कर्मस्थक्रियाणाञ्च कर्त्ता कर्म्मवद्भवति । न कर्मस्थभावकानां न च कर्तृस्थक्रियाणामित्युक्तम् । रुहिश्च कर्तृस्थक्रियः । तस्माद्रोहतीति रुट् रुडिवाचरतीति क्वदन्तोऽयम् । रूढाभासो ह्ययं न तु सम्यग्रूढः । तथाच वक्ष्यति,—दोषकोपेत्यादि । तस्मादस्य रूढाभासत्वादेषा व्युत्पत्तिर्युक्ता ॥ १२ । १३ ॥

दोषेति । यतस्तच्छल्यमसम्यग्रूढत्वाद्भूयोऽपि बाधते । प्राकृतबाधमपि पीडां जनयति । कुतो हेतोरित्याह,—दोषकोपश्चाभिघातश्च तावादी येषां धातूनां धावनलङ्घनादिशीलानां ते एवं तैः क्षोभः संरम्भस्तस्माद्दोषकोपक्षोभादभिघातादिक्षोभाद् बाधते ॥१४॥

त्वगादिनष्टे शल्ये मिथ्यारूढत्वाददृश्यतां प्राप्ते सति परिज्ञानार्थमिदमाह,—

आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत् ॥ १५ ॥
मांसप्रनष्टं संशुद्ध्या कर्शनात् श्लथतां गतम्।
क्षोभाद्रागादिभिः शल्यं लक्षयेत्तद्वदेव च।
पेश्यस्थिसन्धिकोष्ठेषु नष्टमस्थिषु लक्षयेत् ॥ १६ ॥
अस्थ्नामभ्यञ्जन-स्वेद-बन्ध-पीडन-मर्दनैः।
प्रसारणाकुञ्चनतः सन्धिनष्टं तथाऽस्थिवत् ॥ १७ ॥
नष्टे स्नायुशिरास्रोतोधमनिष्वसमे पथि।
अश्वयुक्तं रथं खण्ड-चक्रमारोप्य रोगिणम्।
शीघ्रं नयेत्ततस्तस्य संरम्भाच्छल्यमादिशेत् ॥ १८ ॥
मर्मनष्टं पृथङ्नोक्तं तेषां मांसादिसंश्रयात् ॥ १९ ॥
सामान्येन सशल्यन्तु क्षोभिण्या क्रियया सरुक् ॥ २० ॥
वृत्तं पृथु चतुष्कोणं त्रिपुटञ्च समासतः।

---

त्वगिति। तत्र तेषु त्वङ्नष्टादिषु शल्येषु मध्ये त्वङ्नष्टं यत्र प्रदेशे स्यात् तत्स्थानेऽभ्यङ्गादिभिर्लौहित्यशूलदाहक्षोभाः स्युः। यत्र वा स्थाने घृतं स्त्यानं योजितं विलीयते तत् स्थानं शल्यवत् सशल्यं वदेत्। अथवा लेपश्चन्दनादिना दत्तो यत्राश्वेव शुष्यति तत् स्थानं त्वग्देशं शल्यवज्जानीयात् ॥ १५ ॥

मांसेति। मांसप्रनष्टमदृश्यतां प्राप्तं संशुद्ध्या वमनविरेचनादिकया यत् कर्शनं कृशत्वं तस्मात् श्लथतां शिथिलत्वं प्राप्तं क्षोभादनेकप्रकाराद्वेदनारूपात्, तथा रागादिभिर्लक्षयेत्। तेन मांसप्रनष्टेन तुल्यं वर्त्तते। यथा शुद्ध्या कर्शनात् श्लथतां गतं क्षोभाद्रागादिभिर्लक्षयेदिति। अस्थिषु नष्टं शल्यमस्थ्नामभ्यञ्जन-स्वेदन-बन्धन-पीडन-मर्द्दनैः प्रसारणाकुञ्चनतो लक्षयेत्। सन्धिनष्टं शल्यमस्थिनष्टवल्लक्षयेत् ॥ १६। १७ ॥

नष्ट इति। स्नायुशिरास्रोतोधमनिषु नष्टे शल्ये असमे पथि विषमे मार्गे रथमारोप्य रोगिणं शल्यवन्तं शीघ्रं नयेदाश्वेव देशान्तरं प्रापयेत्। किम्भूतं रथम्? खण्डं चक्रं यस्य स खण्डचक्रस्तं खण्डचक्रम्। ततस्तस्य रथस्य संरम्भात् क्षोभाच्छल्यमादिशेल्लक्षयेत्। मर्म्मनष्टमिति—मर्मनष्टं शल्यं पृथङ्नाभिहितम्। कुतः? तेषां मर्मणां मांसादिरेव प्राङ्निर्द्दिष्टः, यतः संश्रयो न तु पृथङ्मर्माणि विद्यन्ते (१) ॥ १८। १९ ॥

एवं विशेषेण नष्टशल्यलक्षणमुक्त्वा सामान्येन नष्टशल्यं लक्षयितुमाह,—सामान्येनेति। सामान्येन सशल्यन्तु क्षोभिण्या क्रियया संरम्भोत्पादकेन कर्मणाश्वसनप्राणायामादिकेन यत् सरुक्स्थानं तत् सशल्यं जानीयात्। वृत्तमिति—वृत्तं वर्त्तुलम्; पृथु

---

(१) तथाच संग्रहे—मर्म्मप्रनष्टेऽप्यनन्यभावात् मांसादिभ्यो मर्म्मणामुक्तं परीक्षणं भवति। इत्यधिकः पाठः क्वचित्।

अदृश्यशल्यसंस्थानं व्रणाकृत्या विभावयेत् ॥ २१ ॥
तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ॥ २२ ॥
अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ॥ २३ ॥
सुखाहार्यं यतश्छित्त्वा ततस्तिर्यग्गतं हरेत् ॥ २४ ॥
शल्यं न निर्घात्यमुरः-कक्षावङ्क्षणपार्श्वगम् ।
प्रतिलोममनुत्तुण्डं छेद्यं पृथुमुखञ्च यत् ॥ २५ ॥
नैवाहरेद् विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥ २६ ॥
अथाहरेत् करप्राप्यं करेणैवेतरत् पुनः ।
दृश्यं सिंहाऽहि-मकर-वर्मि-कर्कटकाननः ॥ २७ ॥
अदृश्यं व्रणसंस्थानाद् ग्रहीतुं शक्यते यतः ।
कङ्क-भृङ्गाह्व-कुरर-शरारी-वायसाननैः ॥ २८ ॥

---

पार्श्वाभ्यां यत् परिच्छिद्यते ; चतुष्कोणं चतुरस्रम् ; त्रिपुटं त्र्यस्रम् ; समासतः संक्षेपेणादृश्यस्यानुपलक्ष्यस्य शल्यस्य संस्थानमाकृतिं व्रणाकृत्या व्रणसंस्थानेन विभावयेद् विद्यात् ॥ २० । २१ ॥

अधुनैषामाकर्षणोपायं निरूपयन्नाह,—तेषामिति । तेषामदृश्यानां शल्यानामाकर्षणोपायौ द्वौ प्रतिलोमानुलोमकौ । प्रतिलोमः शरीरान्तःप्रवेशविपर्ययः । अनुलोमः शरीरान्तःप्रवेशानुगतः ॥ २२ ॥

प्रतिलोमानुलोमयोर्विनिर्हरणविषयमाह,—अर्वाचीनेति । तयोः प्रतिलोमानुलोमयोर्विपर्ययस्तद्विपर्ययस्तस्माद्विपर्ययादर्वाचीनपराचीने निर्हरेत् । प्रतिलोमे अर्वाचीनमानयेदनुलोमे पराचीनमानयेदित्यर्थः । सुखाहार्य्यमिति—तिर्यग्गतं शल्यं यतो यस्माद्देहदेशाच्छित्त्वा विलुठ्य सुखाहार्यं सम्पद्यते सुखेनाहर्तुं शक्यते, ततस्तस्माद्देहदेशाच्छित्त्वा उद्धरेत् । छित्त्वेत्यत्र यद्यपि कर्म किञ्चिन्न निर्दिष्टं तथापि त्वङ्मांसादीनां योग्यत्वात्तेषामेव कर्मत्वं बोध्यम् । मांसादि छित्त्वोद्धरेदित्यर्थः । शल्यमिति—शल्यमुरोगतमुरःस्थं, कक्षास्थं, वङ्क्षणस्थं, पार्श्वस्थं न निर्घात्यं तन्न निर्घातनीयम्,—तथा प्रतिलोममननुलोमगतं, तथा अनुत्तुण्डं बाह्ये बुद्बुदवन्नोन्नतं, तथा छेद्यं शल्यं न निर्घात्यमहार्य्यम्, तथा पृथुमुखं विस्तीर्णाननञ्च न निर्घातनीयम् ॥ २३—२५॥

न च सर्वमेव शल्यमाहरणीयमित्याह,—नैवेति । विशल्यं हन्तीति विशल्यघ्नम् । तावज्जीवति यावत् सशल्यः, शल्यापाये तु म्रियते तन्नाऽऽहरेदेव, विशल्यस्य प्राणहरणत्वात् । एतत्स्वरूपञ्च मर्मविभागे स्पष्टं कृत्वा वक्ष्यते । नष्टं वेति—वाशब्दश्चार्थे । नष्टमदृश्यतां प्राप्तञ्च यन्निरुपद्रवं तन्निमित्तरोगरहितं नाहरेत्, प्रत्यपायभयात् । अथेति—करप्राप्यं हस्तप्राप्यं शल्यं करेणैवाहरेत्, नापरेण कङ्कमुखादिना । इतरकरप्राप्यन्तु

सन्दंशाभ्यां त्वगादिस्थन्तालाभ्यां शुषिरं हरेत् ॥ २९ ॥
शुषिरस्थन्तु नलकैः शेषं शेषैर्यथायथम् ॥ ३० ॥
शस्त्रेण वा विशस्यादौ ततो निर्लोहितं व्रणम्।
कृत्वा घृतेन संस्वेद्य बद्ध्वाऽऽचारिकमादिशेत् ॥ ३१ ॥
सिरास्नायुविलग्नन्तु चालयित्वा शलाकया ॥ ३२ ॥
हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना।
ततः स्थानान्तरं प्राप्तमाहरेत्तद् यथायथम् ॥ ३३ ॥
यथामार्गं दुराकर्षमन्यतोऽप्येवमाहरेत् ॥ ३४ ॥
अस्थिदष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ॥ ३५ ॥
इत्यशक्ये सुबलिभिः सुगृहीतस्य किङ्करैः ॥ ३६ ॥
तथाऽप्यशक्ये वारङ्गं वक्रीकृत्य धनुर्ज्यया।

---

शल्यं दृश्यं सिंहमुखादिभिर्यन्त्रैराहरेत्। अदृश्यमिति—अदृश्यं पुनः शल्यं व्रणस्य संस्थानादाकलय्य कङ्कमुखादिभिर्ग्रहीतुं शक्यते, यतस्ततस्तच्छस्त्रैर्हरेत्। यत्तदोर्नित्यसम्बन्धात्तदो लाभः ॥ २६—२८ ॥

सन्दंशाभ्यामिति। त्वगादिस्थं शल्यं सन्दंशाभ्यां निर्हरेत्। आदिग्रहणात् त्वक्सिरास्नायुमांसादीनां ग्रहणम्। तालाभ्यामिति—सुषिरं यच्छल्यं त्वगादिस्थं तत्तालाभ्यां हरेन्न स[ंद]ंशाभ्याम्। सुषिरस्थमिति—शुषिरस्थं पुनः शल्यं नलकैर्नाडीयन्त्रैराकर्षेत्। शेषमिति—शेषं शल्यं शेषैर्यन्त्रैर्यथायोगमाहरेत्। शस्त्रेणेति—शस्त्रेण वा पूर्वं विशस्य मांसादीन्छित्त्वा, ततोऽनन्तरमपनीतरक्तं व्रणं विधाय सर्पिषा स्वेदयित्वा, वस्त्रपट्टादिना सर्पिर्मधु बद्ध्वा, आचारिकं स्नेहविच्युतमुष्णोदकोपचारी स्यादित्यादिकमादिशेत् कथयेत् ॥ २९—३१।

सिरेति। सिरास्नायुविलग्नं पुनः शल्यं शलाकया चालयित्वा शिथिलीकृत्याहरेत्। हृदय इति—हृदये तदाश्रितं शल्यं तच्छीतजलेन त्रासितस्य स्थानान्तरगतं ज्ञात्वा यथायथं यथास्वं विशिष्टयन्त्रैर्निर्हरेत। यथेति—अन्यतोऽप्यन्यदेशस्थमपि शल्यं दुराकर्षं दुःखेनाक्रष्टुं शक्यते, तत् स्वमार्गं नयेत् तदेवमेवाहरेत्। यथा हृदयस्थं शल्यं स्थानान्तरं प्राप्तं निर्हार्य्यं तथा यथामार्गं मार्गानतिक्रमेणान्यदेशस्थमपि शल्यमाकर्षणीयम्। अस्थीति—अस्थिदष्टे अस्थ्नि दष्टे स्पष्टे सति शल्ये नरं बलवन्तं पद्भ्यां पीडयित्वा आक्रम्य तच्छल्यं विनिर्हरेत्। अस्थिनष्ट इति वा पाठः। इतीति—इत्यशक्ये अनेनापि प्रकारेणाक्रष्टुमशक्ये शल्ये किङ्करैर्भृत्यैर्महाबलैः सुगृहीतस्य सुष्ठु वष्टब्धस्य नरस्य शल्यं वैद्यः कङ्कमुखादिना निर्हरेत् ॥ ३२—३६ ॥

तथेति। तथाऽप्यशक्ये एवमपि शल्ये आहर्तुमशक्ये वारङ्गं शस्त्रादिमयस्य शल्यस्य

सुबद्धं वक्रकटके बध्नीयात् सुसमाहितः ॥ ३७ ॥
सुसंयतस्य पञ्चाङ्ग्या वाजिनः कशयाऽथ तम् ।
ताडयेदिति मूर्द्धानं वेगेनोन्नमयन् यथा ॥ ३८ ॥
उद्धरेच्छल्यमेवं वा शाखायां कल्पयेत्तरोः ॥ ३९ ॥
बद्ध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत् ॥ ४० ॥
श्वयथुग्रस्तवारङ्गं शोफमुत्पीड्य युक्तितः ।
मुद्गराहतया नाड्या निर्घात्योत्तुण्डितं हरेत् ॥ ४१ ॥
तैरेव चानयेन्मार्गममार्गोत्तुण्डितन्तु यत् ।
मृदित्वा कर्णिनां कर्णं नाड्यास्येन निगृह्य वा ॥ ४२ ॥
अयस्कान्तेन निष्कर्णं विवृतास्यमृजुस्थितम् ।
पक्वाशयगतं शल्यं विरेकेण विनिर्हरेत् ॥ ४३ ॥

---

शिखाकारं तद्द वक्रीकृत्य कुटिलतां प्रापय्य ततो धनुर्ज्यया स्नाय्वादिमय्या सुबद्धं कृत्वाऽनन्तरं वाजिनोऽश्वस्य वक्रकटके बध्नीयाद् वैद्यः । किम्भूतः ? सुसमाहितस्तद्गतमनाः । किम्भूतस्य वाजिनः ? सुसंयतस्य सुष्ठु शोभनं कृत्वा बद्धस्य । कथं सुसंयतस्य ? पञ्चाङ्ग्या पञ्चानामङ्गानां चतुर्णां पादानां मुखसहितानां समाहारः पञ्चाङ्गी बन्धविशेषस्तया पञ्चाङ्ग्या । बन्धस्यानन्तरं वाजिनं कशया चर्मवध्र्या इत्येवं ताडयेत् । यथा स वाजी मूर्द्धानमुन्नमयन्नुत्क्षिपन् वेगेन बलेनाक्रान्त्या शल्यमुद्धरेत् । एवमिति—अथैवमनेन प्रकारेण वारङ्गं वक्रतां नीत्वा धनुर्ज्यया सुबद्धं सम्पाद्य सुसमाहितो भिषग् वृक्षस्य शाखामानमय्य धनुर्ज्यया सुबद्धं तस्यां बध्नीयाच्छल्याकर्षणार्थम् । अत्र च या शाखा किङ्करहस्तादिमुक्तमात्रेऽर्द्धमुन्नमय्य मनाक् शल्यमुद्धरति, तादृशी कल्पनीया । बद्धेति—दुर्बलं तनु वारङ्गं यस्य शल्यस्य तच्छल्यं कुशाभिर्वंशादिकम्बिकाभिर्बद्ध्वा शल्यमाहरेत् ॥ ३७—४० ॥

श्वयथ्विति । श्वयथुना ग्रस्तमाच्छादितं वारङ्गं यस्य शल्यस्य तच्छल्यमाहरेत् । कथम् ? युक्तितो यथा युज्यते तथा शोफमुत्पीड्य ऊर्द्ध्वं पीडयित्वा । मुद्गरेति—उत्तुण्डितं शल्यं बुद्बुदवदभिमुखीभूतं नाड्या निर्घात्य चालयित्वा हरेत् । किम्भूतया ? मुद्गरेणाहतया । मुद्गरग्रहणमुपलक्षणार्थम् ; पाषाणादिभिरप्याहतया उत्तुण्डितमाहरेदिति वेद्यम् । तैरिति । तैरेव मुद्गरादिभिराहतैरमार्गेणोत्तुण्डितममार्गोत्तुण्डितं मार्गमानयेत् प्रापयेत् । मृदित्वेति—कर्णः कर्णौ वा विद्येते येषां ते कर्णिनो भल्लादयस्तेषां कर्णं मृदित्वा भङ्क्त्वा शल्यं निर्हरेत् । अथवा नाड्यास्येन नाडीमुखेन निगृह्य निर्हरेत् । नाडी पञ्चमुखच्छिद्रेत्येवमादिग्रन्थनिर्दिष्टैर्नाडीयन्त्रैर्निर्हरेदित्यर्थः । अयस्कान्तेनेति अयस्कान्तेन लोहाकर्षक-मणि-विशेषेण निष्कर्णं शल्यं, तथा विवृतमुखं ऋजु स्पष्टं कृत्वा-

दुष्ट-वात-विष-स्तन्य-रक्त-तोयादि-चूषणैः ॥ ४४ ॥
कण्ठस्रोतोगते शल्ये सूत्रं कण्ठे प्रवेशयेत्।
बिसेनाक्ते ततः शल्ये बिसं सूत्रं समं हरेत् ॥ ४५ ॥
नाड्याग्नितापितां क्षिप्त्वा शलाकामप्स्थिरीकृताम्।
आनयेज्जातुषं कण्ठाज्जतुदिग्धामजातुषम् ॥ ४६ ॥
केशोन्दुकेन पीतेन द्रवैः कण्टकमाक्षिपेत्।
सहसा सूत्रबद्धेन वमतस्तेन चेतरत् ॥ ४७ ॥
अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत्।
अप्यानस्कन्धघाताभ्यां ग्रासशल्यं प्रवेशयेत् ॥ ४८ ॥

---

ऽवस्थितं निर्हरेत्। पक्वाशयगतमिति—पक्वाशये स्थितं शल्यं विरेचनैर्विशेषेण निर्हरेत्। दुष्टेत्यादि—दुष्टवातादीनि चूषणैर्निर्हरेत् चूषणैरितिबहुवचननिर्देशाच्छृङ्गादिभिरिति बोध्यम्। कण्ठेत्यादि—कण्ठस्रोतःस्थे शल्ये सूत्रं कार्पासादिजं बिसेन कण्ठे प्रवेशयेत्। बिससंलग्नं सूत्रं कृत्वा शल्यनिर्हरणाय प्रवेशयेदित्यर्थः। आक्ते गृहीते शल्ये बिससंलग्ने ऽनन्तरं शल्यं बिससूत्रं समं तुल्यकालमाहरेत् ॥ ४१—४५ ॥

नाड्येति। जातुषे शल्ये कण्ठस्रोतःप्रविष्टे तज्जातुषं शल्यं कण्ठादानयेत्। कथमित्याह,—शलाकां कण्ठे क्षिप्त्वा। कथम्? नाड्या नाडीयन्त्रेण प्रक्षिप्य कण्ठदाहपरिहरणार्थम्। कीदृशीं शलाकाम्? अद्भिः स्थिरीकृतां निर्वापणद्वारेण। तां तथाविधां शलाकां कृत्वा नाड्यैव जातुषं शल्यं कण्ठादानयेदाकर्षेत्। जातुषमित्यत्र त्रपुजतुनोः षुगित्यण्, षुगागमश्च। जतुदिग्धामिति—अजातुषं दारुवेण्वादिमयं शल्यं कण्ठस्रोतःस्थितं जतुदिग्धां लाक्षालिप्तां शलाकामग्नितापितां नाड्या क्षिप्त्वा पूर्ववदपहरेत्। जतुदिग्धामित्युपलक्षणार्थम्; सिक्थादिदिग्धामपि। यथा शलाकया हर्तुं प्रयुज्यते तथा कृत्वेति वेद्यम् ॥ ४६ ॥

केशोन्दुकेनेति। कण्टकं मत्स्यादिकं मांससङ्गेन भुक्तं कण्ठस्रोतसि स्थितं द्रवैः पानीयादिभिः सह पीतेन केशोन्दुकेनापि क्षिपेत्। केशानां समूहः केशोन्दुकं तेन। किम्भूतेन केशोन्दुकेन? सूत्रबद्धेन सूत्रग्रथितेन। वमतो वमनमाचरतः। कण्टकमेकदेशसक्तसूत्रं सहसैवाक्षिपेत्। एवञ्च वमनद्रव्यसंस्कृतैर्द्रव्यैः केशोन्दुकं पातव्यमित्यवतिष्ठते। तेनेति—तेन कण्टकेनेतरत् केशोन्दुकं प्रमादपीतमाहरेत्। ततकण्ठश्च त्रिफलां मधुघृतसितोपेतामनुकण्ठं लिह्यात्। सुश्रुते चोक्तम्,—"अस्थिशल्यमन्यद्वा तिर्यक् कण्ठासक्तमवेक्ष्य केशोन्दुकं दृढदीर्घसूत्रबद्धं द्रवभक्तोपहितं पाययेद् आकण्ठाच्च पूर्णकोष्ठं वामयेच्च। वमतश्च कण्ठशल्यैकदेशे सक्तं सूत्रं सहसा त्वाक्षिपेन्मृदुना वा दन्तधावनकूर्चकेनाहरेत् प्रणुदेद्वेति ॥ ४७ ॥

अशक्यमिति। मुखनासागतं शल्यं मुखनासाभ्यामाक्रष्टुमशक्यमाहर्तुं यन्न शक्यते, तत् परतो नुदेत् प्रकृतलान्मुखात् परतो नासायाश्च परतः। तस्माद् येन केनचि-

सूक्ष्माक्षि-व्रण-शल्यानि चौमवालजलैर्हरेत् ॥ ४९ ॥
अपां पूर्णं विधुनुयादवाक्शिरसमायतम् ।
वामयेद् वाऽऽमुखं भस्मराशौ वा निखनेन्नरम् ॥ ५० ॥
कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी ।
क्षिपेदधोमुखं कर्णं हन्याद्वाचूषयेत वा ॥ ५१ ॥
कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना ।
शुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः ॥ ५२ ॥
जातुषं हेमरूप्यादि-धातुजञ्च चिरस्थितम् ।
उष्मणा प्रायशः शल्यं देहजेन विलीयते ॥ ५३ ॥
मृद्-वेणु-दारु-शृङ्गास्थि-दन्त-वालोपलानि च ।
शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि वा ॥ ५४ ॥
विषाणवेण्वयस्ताल-दारुशल्यं चिरादपि ।

---

दुपायेन कोष्ठं नयेदिति गम्यते । अप्पानमिति—ग्रासः शल्यमिव ग्रासशल्यं कण्ठासक्तमन्तःकोष्ठान्तं नयेत् । कथम् ? अपां पानमप्पानं तेन, तथा स्कन्धघातेन स्कन्धस्य मुष्ट्यादिना हननं स्कन्धघातः ॥ ४८ ॥

सूक्ष्मेति । अक्षिणी च व्रणश्च तत्र शल्यानि अक्षिव्रणशल्यानि, सूक्ष्माणि च तान्यक्षिव्रणशल्यानि च सूक्ष्माक्षिव्रणशल्यानि, तानि चौमादिभिर्निर्हरेत् । योग्यतावशात् कदाचित् चौमेन, कदाचित् कौशेयेन, कदाचिद् वालेन, कदाचिज्जलेन च निर्हरेत् ॥ ४९ ॥

नदीतडागादिपतितस्याकस्मान्नरस्यावश्यं यज्जलमन्तरे प्रविशेत्तज्जलं शल्यवदन्तःस्थितं निर्हार्यमिति तदुपायं दर्शयितुमाह,—अपामिति । अपां पूर्णं नरं विधुनुयात् । किम्भूतम् । अवाक्शिरसम् अवाक् अधः शिरो मूर्द्धा यस्य तम्, तथा आयतं दीर्घं कृत्वा, तथा तं नरं वामयेद् वैद्यः । अथवा आमुखं मुखं यावद् भस्मराशौ न्यसेत् । तथोक्तम्,—"उदकपूर्णस्य चक्राद्यारोपणेनोदकनिःसारः कार्यः" इति ॥ ५० ॥

कर्णं इति । कर्णेऽम्बुना पूर्णे सति तैलवारिणी क्षिपेत् । किं कृत्वा ? हस्तेन मथित्वा विलोड्य, तथा अधोमुखं कर्णं हन्याद् वा । अथवा चूषयेच्छृङ्गादिभिः ॥ ५१ ॥

कीट इति,—कीटे पिपीलिकाशतपद्यादौ स्रोतःस्थिते तोदगौरववेदनाभिरनुमिते कर्णं लवणाम्बुना पूरयेत् । अथवा शुक्तेन पूरयेत् । किम्भूतेन ? सुखोष्णेन । मृते पुनस्तस्मिन् कीटे क्लेदहरो विधिः कार्य्यः ॥ ५२ ॥

जातुषमिति । जातुषादिशल्यं देहजेनोष्मणा चिरं स्थितं प्रायशो विलीयते । मृद्वेणुदार्वादि शल्यं देहोष्मणा न विलीयते । उपलशब्दस्य नपुंसकत्वं चिन्त्यम् ।

प्रायो निभुज्यते तद्धि पचत्याशु पलासृजो ॥ ५५ ॥
शल्ये मांसावगाढ़े च स देशो न विदह्यते ।
ततस्तं मर्द्दनस्वेद-शुद्धिकर्षणबृंहणैः ॥ ५६ ॥
तीक्ष्णोपनाह-पानान्न-घनशस्त्रपदाङ्कनैः ।
पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः ॥ ५७ ॥
शल्यप्रदेशयन्त्राणामवेच्य बहुरूपताम् ।
तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथा हरेत् ॥ ५८

इत्यष्टाङ्गहृदये सूत्रस्थाने अष्टाविंशतितमोऽध्यायः ॥ २८ ॥

---

विषाणेति,—विषाणादिशल्यं प्रायो देहजेनोष्मणा न विलीयते, अपि तु निर्भुज्यते पृथग् भवति। चिरादपि न पच्यते। कुत इत्याह,—हि यस्माद् तद् विषाणादि-शल्यं शीघ्रमेव पलासृजी पचति। अतो मांसरक्तपाकाद्देहजेन चोष्मणा प्रायो निर्भुज्यते ॥ ५३—५५ ॥

शल्य इति। मांसावगाढ़े मांसान्तर्निगूढ़े शल्ये सति यदि स देशो न विदह्यते पच्यते, यत्र तु तिष्ठति शल्यं ततस्तं मर्द्दनेन स्वेदेन वा कदाचित् शुद्ध्या वमनादिकया, कदाचित् कर्षणेन कदाचिद् बृंहणेन, कदाचिद् बृंहणोपनाहेन, कदाचित् तीक्ष्णान्न-पानेन। तीक्ष्णशब्दस्य प्रत्येकं सम्बन्धः। कदाचिद् घनशस्त्रपदाङ्कनैः। शस्त्रस्य पदानि घनानि संहतानि च तानि शस्त्रपदानि च तेषामङ्कनं लक्षणं तैः। मर्द्दनादिभिरेकेन द्वाभ्यां सर्व्वैर्वा यथाक्रमं पूर्वं शल्यं पाचयित्वा ततः पाटनैर्व्रणभेदनैर्हरेत् ॥ ५६। ५७ ॥

शल्येत्यादि। शल्यानि धातुविषाणविस्वादिजानि, प्रदेशास्त्वङ्मांसादयः, यन्त्राणि स्वस्तिकादीनि, तेषां बहुरूपतामवेच्य नानाकारतां ज्ञात्वा तैस्तैरुपायैरुक्तानुक्तैर्विज्ञान-साधनैः कारणैर्मतिमान् भिषक् जानीयात् शल्यं, तथा आकर्षेदिति। संग्रहे चोक्तम्, —"व्रणे प्रसन्ने प्रान्तेषु नातिस्पर्शाऽसहिष्णुता। अल्पे शोफे च तापे च निःशल्यमिति निर्द्दिशेत्"। इति शल्याहरणविधिः ॥ ५८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-सुन्दराख्यायां शल्याहरणविधिर्नामाध्यायोऽष्टाविंशतितमः ॥ २८ ॥

---

# एकोनत्रिंशोऽध्यायः ।

अथातः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
व्रणः सञ्जायते प्रायः पाकाच्छ्वयथुपूर्वकात् ।
तमेवोपचरेत्तस्माद्रक्षन् पाकं प्रयत्नतः ।
सुशीतलेप-सेकास्र-मोक्ष-संशोधनादिभिः ॥ २ ॥
शोफोऽल्पोऽल्पोष्णरुक् सामः सवर्णः कठिनः स्थिरः ॥३॥
पच्यमानो विवर्णस्तु रागी बस्तिरिवाततः ।
स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः ॥ ४ ॥

---

अस्मादनन्तरं शस्त्रकर्म्मविध्यध्यायः प्रस्तूयते । यतोऽनन्तरातीतेऽध्याये शस्त्रेण वा विशस्यादावित्युक्तं, अतस्तस्यैव शस्त्रकर्म्मणो विधानं वक्तुं युक्तमित्याह,—अथात इति । शस्त्रस्य कर्म्म शस्त्रकर्म्म, शस्त्रावधारणाय क्रिया, तस्य विधिरितिकर्त्तव्यता, शस्त्रकर्म्मविधिस्तम् । शेषं पूर्व्ववत् ॥ १ ॥

अत्र ग्रन्थारम्भे निर्देष्टुं युक्तस्यापि शस्त्रविधेः पश्चाद् यद्ययं शस्त्रकर्म्मविधिस्ततः शस्त्रकर्म्मग्रन्थ एवादौ निर्देष्टुं युक्तः, प्राक् शस्त्रकर्म्मणश्चेष्टं भोजयेदन्नमातुरमित्यादि, न तु व्रणः सञ्जायते प्राय इत्यादि । तत्रोच्यते, शस्त्रकर्म्मविधेः पूर्व्वं विषयो निर्देष्टुं युक्तो यः शस्त्रकर्म्मविधेरुपाय इत्यस्यैव पूर्वमुपन्यासो युक्त इत्याह,—व्रण इति । प्रायो व्रणः पाकात् सञ्जायते । किम्भूतात् ? श्वयथुः पूर्वो यस्य पाकस्य स श्वयथुपूर्व्वकस्तस्मात् । यस्माश्वयथुपाकमन्तरेणापि शस्त्राद्यभिघाताद् व्रणो जायत इति प्रायो ग्रहणम् । यस्माच्छ्वयथुपूर्व्वकात् पाकाद्व्रणः सञ्जायते अतस्तमेव श्वयथुमुपचरेदुपक्रमेत् किं कुर्व्वन् ? पाकं प्रयत्नेन रक्षन् । कथम् ? सुशीतलेपादिभिः । सुशीताभ्यां स्पर्शतो वीर्यतश्च लेपसेकाभ्यां, तथा अस्रमोक्षणेन, तथा संशोधनेन वमनेन विरेचनेन वा । आदिग्रहणात् कषायपानघृतपानादीनां ग्रहणम् ॥ २ ॥

तस्य च शोफस्याऽऽमपच्यमानपाकाख्या अवस्थास्तिस्रो भवन्तीत्याह,—शोफ इति । आमो यः शोफः स प्रमाणतोऽल्पस्तथाऽल्पोष्णस्तथाऽल्परुगल्पशूलस्तथा सवर्णस्त्वक्समानवर्णस्तथा काठिनो न मृदुः पक्ववत्तथा स्थिरो न पक्ववच्चलः । स आमः साम इति सोत्विलोपे चत् पादपूरणमिति सुलोपः ॥ ३ ॥

पच्यमान इति । स शोफः पच्यमानो विवर्णो न त्वक्समानवर्णः, तथा रागी लोहितवर्णः, तथा बस्तिरिवाततस्तस्मी वातपूर्णदृतिवत् । छागादीनां मूत्राधारो बस्तिरित्युच्यते । तथा स्फुटतीव । सनिस्तोदः सह निस्तोदेन वर्त्तते सनिस्तोदः । नियतप्रबन्ध-

संरम्भारुचिदाहोषा-तृड् ज्वरानिद्रतान्वित: ।
स्त्यानं विष्यन्दयत्याज्यं व्रणवत् स्पर्शनासह: ॥ ५ ॥
पक्वोऽल्पवेगता* म्लानि: पाण्डुता बलिसम्भव: ।
नामोऽन्तेषून्नतिर्मध्ये कण्डूशोफादिमार्दवम् ।
स्पृष्टे पूयस्य सञ्चारो भवेद् बस्ताविवाम्भस: ॥ ६ ॥
शूलं नर्तेऽनिलाद्दाह: पित्ताच्छोफ: कफोदयात् ।
रागो रक्ताच्च पाक: स्यादतो दोषै: सशोणितै: ॥ ७ ॥
पाकेऽतिवृत्ते सुषिरस्तनुत्वग्दोषभक्षित: ।
बलीभिराचित: श्याव: शीर्यमाणतनूरुह: ॥ ८ ॥
कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक् ।

प्रवृत्ता रुङ् निस्तोदी विच्छिन्ना तु शूलमित्युच्यते । साङ्गेत्यादि—अङ्गानां मर्द: चोभ:, सहाङ्गमर्दविजृम्भिकाभ्यां वर्त्तते साङ्गमर्दविजृम्भिक:, तथा सरम्भादिभिर्युत: । अन्वित-शब्देन प्रत्येकं संरम्भादीनां सम्बन्ध: । संरम्भो वाग्विषयातीतानां स्वसंवेद्यानामनेक-रूपाणां साङ्गपीड़नविघट्टनच्छेदनदंशनादीनां रुजां प्रादुर्भाव: । सर्वाङ्गीणस्तीव्रो दाह: । अरतिमान् दाह उषा उच्यते ; तथा स पच्यमानो घृतं स्त्यानमुपयुक्तं विलीनयति ; तथा स्पर्शनं न सहते व्रणवत् ॥ ४ । ५ ॥

पक्व इति । पक्वे सत्यल्पवेगता भवति न तु संरम्भ:, तथा म्लानिर्म्लानत्वम्, तथा पाण्डुत्वं वलीनां चोद्भव:, यथा अन्तेषु पर्य्यन्तेषु नामो निम्नत्वं मध्ये उन्नति: । नामोऽन्तेष्वित्युक्त्यैव मध्ये उन्नतत्वं लब्धमेव पुनरुन्नतिग्रहणं त्वतिशयार्थम् । तेनोत्तुण्डत्वं गम्यते ; तथा, कण्ड्वादिमृदुत्वं स्यात्, तथा स्पृष्टे तस्मिन् सति पूयस्य सञ्चारो भवति । बस्तेरन्त:स्थितस्य यथाम्भस: सञ्चार: ॥ ६ ॥

शूलमिति । अनिलं विना शूलं न भवति ; पित्तमन्तरेण दाहो न स्यात् ; कफो-दयाद्विना शोफो न स्यात् । शोफ: कफादिति वक्तव्ये उदयग्रहणं विशेषद्योतनार्थम् । रक्ताद्दते रक्तं विना रागस्य लौहित्यस्य सम्भवो न ; तेन कफाधिकै: सर्वैर्दोषै: शोणित-सहितै: श्वयथुपाक: स्यादिति गम्यते ॥ ७ ॥

पाक इति । पाके चातिवृत्तेऽतिक्रान्ते सुषिरोऽन्तस्थ: शोफदेश: सम्पद्यते ; तथा तनुस्त्वगस्मिन् स तनुत्वक्, तथा दोषभक्षित: । दोषशब्देनेह पूय उच्यते ; तेन भक्षित-त्वात् सुषिरत्वं तनुत्वक्त्वं चास्य, तथा बलिभिराचितो व्याप्त:, तथा श्याववर्ण:, तथा शीर्यमाणतनूरुह: पतद्रोमा ॥ ८ ॥

कफजेष्विति । यद्यपि त्रिभिरेव दोषै: शोणितान्वित: पाको जायते तथापि कफ-जेष्वित्युक्तेरधिकतरकफेष्विति गम्यते । कफजेष्विति बहुवचननिर्देशाद् देहदेशबहुत्वाद्

* अल्पवेदना इति वा पाठ: ।

पक्वलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ॥ ९ ॥
त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत्।
रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ॥ १० ॥
अल्पसत्त्वेऽबले बाले पाकाद्वात्यर्थमुद्धते।
दारणं मर्मसन्ध्यादिस्थिते चान्यत्र पाटनम् ॥ ११ ॥
आमच्छेदे सिरास्नायु-व्यापदोऽसृगतिस्रुतिः।
रुजोऽतिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ॥ १२ ॥
तिष्ठन्नन्तः पुनः पूयः सिरास्नायुसृगामिषम्।
विवृद्धो दहति क्षिप्रं तृणोलुपमिवानलः ॥ १३ ॥
यश्छिनत्त्याममज्ञानाद् यश्च पक्वमुपेक्षते।
श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ॥ १४ ॥

---

येषु देहदेशेषु कफो जायते तेषु कफजेषु शोफेषु गम्भीरं पाकं दुर्लक्ष्यमतिशयेनान्तर्निगूढ़त्वादसृक् पाकमेति। अतएव पक्वलिङ्गं पक्वलक्षणमस्पष्टं दुर्लक्ष्यं स्यात्। तत्र शीतगुणयोगाच्छीतश्चासौ शोफश्च तस्य भावः शीतशोफता, तथा त्वक्समानवर्णत्वम्, तथा रुजः स्तोकत्वम्, तथा घनस्पर्शत्वं निविड़स्पर्शता स्यादश्मवत्। हस्तादिना स्पृष्टे पाषाणतुल्यः स्पर्श उपलभ्यते; तं तथाभूतं श्वयथुपाकं रक्तपाकमित्येवं प्राज्ञो धीमान् ब्रूयान्न तु शोफं पक्वमिति कथयेत्। कथम्? मुक्तसंशयः। शोणितपाको नात्र शोफ इत्येवं वदेदित्यर्थः ॥ ९। १० ॥

अल्पसत्त्व इति। अल्पसत्त्वे सति, तथा दुर्बले, तथा बाले, एतेषु जाते श्वयथौ, तथा पाकाद्वा अत्यर्थमुद्धतेऽतिक्रान्ते च श्वयथौ दारणं कार्यं व्रणप्रतिषेधदृष्टैर्दारणद्रव्यैः। यथा,—"गुग्गुल्वतसि-गोदन्त-स्वर्णक्षीरी-कपोतविट्। क्षारौषधानि क्षाराश्च पक्वशोफविदारणम्" इति। न केवलमल्पसत्त्व इत्यादिके श्वयथौ दारणं कार्यं, यावन्मर्म्मसन्ध्यादिस्थितेऽपि। पाटनं शस्त्रेण। अन्यत्रेति—दारणविषयानिर्दिष्टे स्थाने शस्त्रेण पाटनं कार्यम् ॥ ११ ॥

आमच्छेद इति। आमस्य शोफस्य शस्त्रेण च्छेदे सति सिरास्नायुव्यापदो भवन्ति, तथा असृजोऽतिस्रावः स्यात्, तथा रुजाया अतिवृद्धिस्तथा विदरणं विसर्पो वा क्षतोत्थः स्यात् ॥ १२ ॥

तिष्ठन्निति। अन्तरन्तरे तु पूयस्तिष्ठन् सन् सिरादीन् दहति। कः कमिव? अनलस्तृणोलुपमिव। य इति—यः पुरुषोऽज्ञानान्मोहादामं छिनत्ति, योऽपि पक्वमुपेक्षते न पाटयति तौ नरौ श्वपचतुल्यौ आतुरव्यापादनात्। तद्व्यापादनन्तु कुतो विधत्त इत्याह,—अनिश्चितकारिणावसमीक्ष्यविधायिनौ यतः ॥ १३। १४ ॥

प्राक् शस्त्रकर्मणश्चेष्टं * भोजयेदन्नमातुरम्।
पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाक्षमः।
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते।
अन्यत्र मूढगर्भाश्म-मुखरोगोदरातुरात् ॥ १५ ॥
अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम्।
संमुखो यन्त्रयित्वाशु न्यसेन्मर्मादि वर्जयन् ॥ १६ ॥
अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात्।
सकृदेवाहरेत्तच्च पाके तु सुमहत्यपि ॥ १७ ॥
पाटयेद्द्व्यङ्गुलं सम्यग्द्व्यङ्गुलत्र्यङ्गुलान्तरम्।
एषित्वा सम्यगेषिण्या परितः सुनिरूपितम्।
अङ्गुलीनालबालैर्वा यथादेशं यथाशयम् ॥ १८ ॥

प्रागिति। शस्त्रकर्म्मणः प्राक् पूर्वमातुरमिष्टमन्नं यद्व्रणेऽपथ्यमपि तद्बलाधानाथ भोजयेत्; तथा यो वेदनाक्षमः शस्त्रव्यथामसहिष्णुस्तमातुरं मद्योचितं तीक्ष्णं तीव्रमदं मद्यं पाययेत्। एवं सति यत्स्यात् तदाह,—नेति। न मूर्च्छत्यन्नसंयोगात् अन्नोपयोगान्न मुह्यति। तीक्ष्णमद्यपानान्मत्तः सन् शस्त्रं न्यस्तमङ्गे न बुध्यते न चेतयते। तत्क्षणं दर्शनया न कम्पत इत्यर्थः। अन्यत्रेति—अश्मशब्देनाश्मरी गृह्यते। मूढगर्भादिभिय आतुरस्तं वर्जयित्वा इष्टभोजनं मद्यपानञ्च कारयितव्यम् ॥ १५ ॥

अथेति। अथशब्देन मङ्गलवाचिना संगृहीतमर्थं सूचयति। यथा सुमुहूर्त्ते च दध्यक्षतान्नपानरत्नभरयार्चितविप्रं प्रणतेष्टदेवतमित्यादि। आहृतं ढौकितं समीपानीतमुपकरणं तत् कालयोग्यं यन्त्रशस्त्राग्निजाम्बवौष्ठपिचुप्लोतस्नेहनमधुकल्कादिकं यस्य तमातुरं प्राङ्मुखं पूर्वाभिमुखं वैद्यः संमुखः प्रत्यङ्मुखो यन्त्रयित्वा शस्त्रमाशु न विलम्बितं न्यसेन्निक्षिपेत्। मर्मादि वर्ज्जयन् मर्मसिरासंध्यादीन् परिहरन्, तथा अनुलोमं कृत्वा न प्रातिलोम्येन। किम्भूतं शस्त्रम्? सुनिशितमतितीक्ष्णम्। तच्च शस्त्रमापूयदर्शनादाहरेन्न त्वधिकं तत्रैव, स्थाप्यम्। तच्च सकृदेव न बहून् वारान् न्यसेत्। पाक इति—पाके तु सुमहत्यपि पाटयेत्। द्व्यङ्गुलं द्व्यङ्गुलपरिमाणं व्रणं सम्यक् कुर्यान्नाधिकम्। द्व्यङ्गुलेत्यादि—अङ्गुलद्वयमथवाऽङ्गुलत्रयमन्तरीकृत्य पुनरन्यं व्रणं कुर्यान्न त्वासन्नं तथा एषिण्या सम्यगेषित्वा परितः समन्तात् सुनिरूपितं सुपर्यालोचितम्। न केवलमेषिण्या यावदङ्गुल्या नालेन पद्मोत्पलादिजेन बालैर्वा वराहादिसम्बन्धिभिरन्वेष्य यथादेशं यथाशयं व्रणं कुर्यात् ॥ १६—१८ ॥

* श्रेष्ठमिति वा पाठः।

यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्यात् सुविभक्तं निराशयम् ।
आयतञ्च विशालञ्च यथा दोषो न तिष्ठति ॥ १९ ॥
शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथुः ।
असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥ २० ॥
तिर्यक् छिन्द्याल्ललाटभ्रू-दन्तवेष्टकजत्रुणि ।
कुक्षिकक्षाक्षिकूटौष्ठ-कपोलगलवङ्क्षणे ॥ २१ ॥
अन्यत्र च्छेदनात्तिर्यक् सिरास्नायुविपाटनम् ॥ २२ ॥
शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् ।
आश्वास्य परितोऽङ्गुल्या परिपीड्य व्रणन्ततः ॥ २३ ॥
क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ।

---

तच्च प्रदेशं दर्शयितुमाह,—यत इति। यतो यस्मिन् प्रदेशे गतां दूरयातां गतिं नाड़ीं जानीयात् तस्मिन् प्रदेशे व्रणं कुर्यात्। यत्र यत्र श्वयथुप्रदेशे उत्सङ्गमुन्नतिं विद्यात् तत्र तत्र प्रदेशे व्रणं कुर्यात्। किम्भूतं व्रणम्? सुष्ठु विभक्तौ पार्श्वापर-पार्श्वादिविभागौ यस्य तं तथाविधम्, तथा निराशयम्, न विद्यते आशयः पूयादेर्दोषस्य स्थानं यस्य तथाभूतं निराशयं कुर्यात्, तथा आयतं दीर्घम्, तथा विशालं विस्तीर्ण कुर्यात्। एवं कृते सति दोषः पूयाख्यो न तिष्ठति न संस्थानं लभते ॥ १९ ॥

शौर्यमिति। वैद्यस्य शस्त्रकर्म्मणि पाटनादौ शौर्य्यं धैर्य्यं शस्यते; तथा आशुक्रिया चतुरहस्तता, तथा तीक्ष्णं शस्त्रम्, तथा स्वेदश्च वेपथुश्च न विद्यमानौ तौ यस्य स एवम्; स्वेदाभावः कम्पाभावश्चेत्यर्थः। असम्मोहस्तत्कालोचितकार्यकरणे सम्यक् प्रवृत्तिः। ननु शौर्य्यं वैद्यस्य शस्यत इत्युक्त्यैव स्वेदकम्पाभावः प्रत्यपादि, तथा च स्वेदवेपथु भीरोरेव सम्भवतो न शूरस्येत्यनर्थकमस्वेदवेपथुरिति। अत्राचक्ष्महे,—सत्यमेवैतौ भीरुगुणौ किन्तु क्षणकालवशात् प्रकृतिवशाद्वा यस्य स्वेदो वेपथुश्च भवतस्तत्परिहारार्थमेतदुक्तम्। सकम्पसस्वेदस्य हि वैद्यस्य शस्त्रकर्म्मकर्त्तुमुद्यतस्य शस्त्रग्रहणमेव न तथा सम्पद्यते तद्वत्सकम्प-शस्त्रापि; तस्मात्तत्परिहारो युक्तः ॥ २० ॥

तिर्यगिति। ललाटादिदेशेषु तिर्यक्छेदः कार्यः। दन्तवेष्टको दन्तपिण्डिका दन्ताधार उच्यते। अन्यत्रेति—अन्यत्र प्रदेशे तिर्यक्छेदनात् सिराणां स्नायूनां व्यापत्तिः स्यात्। शस्त्र इति—शस्त्रेऽवचारिते न्यस्ते सति वाग्भिस्तत्कालोचिताभि-र्मधुराभिः स्वस्थो जातोऽसि इत्येवंप्रायाभिस्तथा शीताम्भोभिः परिषेकादिभिरातुरमा-श्वास्यानन्तरं व्रणं परितः समन्तादङ्गुल्या परिपीड्य पूयादिदोषनिर्हाराय अनन्तरं कषायेण मधुयष्ट्यादिसाधितेन क्षालयित्वा ततः प्लोतेन कार्पासादिजवस्त्रखण्डेन

गुग्गुल्वगुरुसिद्धार्थहिङ्गुसर्जरसान्वितैः।
धूपयेत् पटुषड्ग्रन्था-निम्बपत्रैर्घृतप्लुतैः॥ २४॥
तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च।
दिग्धां वर्त्तिं ततो दद्यात्तैरेवाच्छादयेच्च तम्॥ २५॥
घृताक्तैः सक्तुभिश्चोर्द्ध्वं घनां कवलिकां ततः।
निधाय युक्त्या बध्नीयात् पट्टेन सुसमाहितम्।
पार्श्वे सव्येऽपसव्ये वा नाधस्तान्नैव चोपरि॥ २६॥
शुचिसूक्ष्मदृढाः पट्टाः कवल्यः सविकेशिकाः।
धूपिता मृदवः श्लक्ष्णा निर्वलीका व्रणे हिताः॥ २७॥
कुर्वीतानन्तरं तस्य रक्षां रक्षोनिषिद्धये।

---

जलमपनीय पानीयार्द्रतां निर्हृत्यानन्तरं व्रणं गुग्गुल्वादिभिर्निम्बपत्रान्तैर्धूपयेत्। किम्भूतैः? घृतप्लुतैः। प्लुतग्रहणाद् बहुघृतैरिति द्योतयति। संग्रहे चोक्तम्,—"गुग्गुल्वादिभिरेव च शयनं धूपयेदेतैर्द्रव्यैश्च बहुघृतैः॥ २१—२४।

तिलेति। ततोऽनन्तरं वर्त्तिं कार्पासादिमयीं व्रणान्तः प्रवेशयेद् वैद्यः। किम्भूताम्? दिग्धाम्। कैः? तिलकल्काज्यमधुभिः। वातव्रणे तिलपिष्टदिग्धां, पित्तव्रणे घृतदिग्धां, कफव्रणे मधुदिग्धाम्। केचित्तु सर्व्वैरेव तैर्युगपद् दिग्धामित्याहुः। न च केवलं तिलादिभिर्यावद्यथास्वं यद्यस्य दोषस्य स्वमभेषजं तेन च दिग्धाम्। तैरेव तिलकल्कादिभिर्व्रणान्तःप्रविष्टां तां वर्त्तिमाच्छादयेत् स्थगयेत्॥ २५॥

घृताक्तैरिति। ऊर्द्ध्वं तदुपरिष्टाद् घृतयुक्तैः शक्तुभिराच्छादयेत्। संग्रहे चोक्तम्,—"नातिभृष्टयवशक्तुभिर्घृताक्तैर्भोजनान्तेऽम्भसा दक्षिणाङ्गुलीभिः सुमृदितैरेवाच्छादयेदिति। घनामिति—ततो व्रणान्तःप्रविष्टवर्त्तिच्छादनानन्तरं कवलिकां बहुवस्त्रखण्डपुटनिर्वर्त्तितां निधाय संस्थाप्य पट्टेन निबिड़वस्त्रखण्डेन प्रकृतत्वाद् व्रणं बध्नीयात्। कथम्? युक्त्या दोषकालानुगुणया। अतएव संग्रहे जगाद,—"वातश्लेष्मोद्भवांस्त्रिर्द्विर्वा वेष्टयेद् व्रणान्। सकृदेव परिक्षिप्य रक्तपित्ताभिघातजान्"। तथाचोक्तम्,—"शस्त्रक्षतरुजायान्तु प्रततायां यष्टीमधुकसर्पिषोष्णेन व्रणं सिञ्चेत्। उदकुम्भादापो गृहीत्वा प्रोक्षयेत् परित उपचरेत्" इति। कथं बध्नीयात्? सुसमाहितं कृत्वा च न हेलया। वामपार्श्वे दक्षिणपार्श्वे वा अधस्ताच्च न बध्नीयान्नैव चोपर्य्यूर्द्ध्वं बध्नीयात्॥२६॥

शुचीति। तथा शुचयः सूक्ष्मसूत्रा दृढाश्च पट्टा हिताः। तथा कवलिकाः सविकेशिकाश्च व्रणे हिताः। किम्भूताः? धूपितास्तथा मृदवस्तथा श्लक्ष्णास्तथा वलीरहिताः॥ २७॥

कुर्वीतेति। अनन्तरं रोगिणः कृतशस्त्रकर्म्मणो व्रणे रक्षां कुर्यात्। किमर्थम्? रक्षोनिषिद्धये पिशिताशनराक्षसादिनिषेधाय। तेभ्यश्च रक्षोभ्यो बलिमुपहरेत् दद्यात्।

बलिं चोपहरेत्तेभ्यः सदा मूर्द्ध्नावधारयेत् ॥ २८ ॥
लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।
वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ २९ ॥
ततः स्नेहदिनेहोक्तं* तस्याचारं समादिशेत् ॥ ३०
दिवास्वप्नो व्रणे कण्डू-राग-रुक्शोफ-पूय-कृत् ॥ ३१ ॥
स्त्रीणान्तु स्मृतिसंस्पर्श-दर्शनैश्चलितस्रुते ।
शुक्रे व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥ ३२ ॥
भोजनन्तु यथासात्म्यं यवगोधूमषष्टिकाः ।
मसूर-मुद्ग-तुवरी-जीवन्ती-सुनिषण्णकाः ॥ ३३ ॥
बाल-मूलक-वार्त्ताक-तण्डुलीयक-वास्तुकम् ।
कारवेल्लक-कर्कोट-पटोल-कटुका-फलम् ॥ ३४ ॥
सैन्धवं दाड़िमं धात्री घृतं तप्तहिमं जलम् ।
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ ३५ ॥

---

सदेति—सर्वकालं चौषधीर्मूर्द्ध्ना धारयेत् । ता एवाह,—लक्ष्मीमित्यादि । लक्ष्मीं पद्मचारिणीम् । गुहां पृश्निपर्णीम्; अतिगुहां शालपर्णीम्; जटिलां मांसीम्; ब्रह्मचारिणीं ब्रह्मयष्टिकाम्; वचामुग्रगन्धाम्; छत्रां शतपुष्पाम्; अतिच्छत्रां विषाणिकां ॥ २८ । २९ ॥

तत इति । ततोऽनन्तरं तस्य व्रणिन आचारमादिशेत् । कतमम्? स्नेहदिने-होक्तम् । स्नेहस्य दिनं स्नेहदिनं स्नेहपानोपलक्षितमहस्तत्रेहा चेष्टा तस्यामुक्तं स्नेहपान-विध्युपदिष्टम् "उष्णोदकोपचारी स्यात्" इत्यादिकम् ॥ ३० ॥

दिवेति । दिवास्वप्नो व्रणे कण्ड्वादिकृत्; तस्माद् व्रणिनाहःस्वप्नो न सेव्यः ।
स्त्रीणामिति—स्त्रीणान्तु स्मृतिसंस्पर्शदर्शनैः पूर्वं स्वस्थानाच्चलितं पश्चात् स्रुतं तस्मिंश्च-
लितस्रुते शुक्रे सत्यसंसर्गेऽपि तासामसम्बन्धेऽपि मैथुनमन्तरेणापि व्यवायजान् मैथुनोत्थान्
॥ ३१ । ३२ ॥ (line printed out of order:) दोषानवाप्नुयात्; तस्मात् स्त्रीस्मरणसंस्पर्शदर्शनादि वर्ज्जनीयमित्यर्थः ॥ ३१ । ३२ ॥

भोजनमिति । भोजनन्तु यथासात्म्यं यद् यस्य सात्म्यं यवादि, तथा जीवन्त्यादि-शाकञ्च, तथा सैन्धवादिकम् । पुराणशालिभक्तं स्निग्धं सस्नेहं, तथा अल्प जाङ्गलैर्मांसैः सह भुञ्जान उष्णोदकोत्तरं यथा भवत्येवं व्रणी शीघ्रं व्रणमपोहति ॥ ३३—३५ ॥

---

* स्नेहविधानोक्तं मित्यपि पाठः ।

अशितं मात्रया काले पथ्यं याति जरां सुखम् ।
अजीर्णे त्वनिलादीनां विभ्रमो बलवान् भवेत् ।
ततः शोफरुजापाक-दाहानाहानवाप्नुयात् ॥ ३७ ॥
नवधान्यं तिलान् माषान् मद्यं मांसं त्वऽजाङ्गलम् ।
क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३८ ॥
यच्चान्यदपि विष्टम्भि विदाहि गुरु शीतलम् ।
वर्गोऽयं नवधान्यादिर्व्रणिनः सर्व्वदोषकृत् ॥ ३९ ॥
मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद् व्रणम् ॥ ४० ॥
बालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ।
न तुदेन्न च कण्डूयेच्चेष्टमानश्च पालयेत् ॥ ४१ ॥
स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः ।
आशावान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ॥ ४२ ॥
तृतीयेऽह्नि पुनः कुर्यात् व्रणकर्म च पूर्ववत् ।
प्रक्षालनादि दिवसे द्वितीये नाचरेत्तथा ।

---

अशितमिति । मात्रया काले भुक्तं पथ्यं सुखेन जरां याति ; तस्मात् पथ्यं मात्रया काले भोक्तव्यम् । अजीर्णन्तु कथञ्चिन्न कार्यम् ; यतोऽजीर्णाद्व वातादीना बलवान् विभ्रमः क्षोभः स्यात् ; तस्मात् क्षोभाच्छोफादीन् प्राप्नुयात् ॥ ३७ ॥

नवधान्यमिति । नवधान्यादि त्यजेत् ; यतोऽयं नवधान्यादिवर्गो व्रणिनः सर्वान् दोषान् करोति । संग्रहे चोक्तम्,—"नवधान्यं विष्टम्भि माषकलाय-कुलत्थ-निष्पाव-शिम्बी-शीताम्बु-मदिराचुक्षीरपिष्ट-तिलविकृति-शुष्कशाकपिशित-हरितकाम्ल-लवण-कटुक-क्षार-व्यामिषाणि वर्ज्जयेत्" इति । शीतलं शीताम्ब्वादि ॥ ३८ । ३९ ॥

मद्यमिति । मद्यं तीक्ष्णोष्णादिगुणं द्राग् व्रणं व्यापादयेत् । तस्मात् मद्यमीदृशं वर्ज्यं नापरम् । तथा च तन्त्रान्तरे,—"सस्नेहं मधुरप्रायं नातितीक्ष्णमकर्कशम् । तनु यत् सुखपेयञ्च मार्द्वीकेषु तदुत्तमम्" इत्युक्तम् । तस्मान्मार्द्वीकादिप्रायं रोध्रासवादिकं वा यन्मद्यं तत् सात्म्यत्वात् किञ्चित् पेयमेव ॥ ४० ॥

बालोशीरैरिति । बालोशीरैर्यं नं व्रणं वीजयेत्, न चैनं परिघट्टयेत् ; तथा न व्यथयेत्, नापि कण्डूयेत् । व्यापारञ्च कुर्वन् व्रणिनं पालयेत् रक्षेत् ; तथा स्निग्धादीनां कथायित्तप्रिया आकर्णयन् रोगमुक्तये विहिताशोऽक्षाय व्रणमपोहति ॥ ४१ । ४२ ॥

तृतीय इति । तृतीये दिवसे पुनरपि प्रक्षालनादि कर्म्म पूर्ववत् पूर्वेण व्रणकर्म्मणा तुल्यं कुर्यात् । द्वितीये तु दिवसे प्रक्षालनादि नाचरेत् । किमित्याह,—तथा इति ।

तीव्रव्यथो विग्रथितश्चिरात् संरोहति व्रण: ॥ ४३ ॥
स्निग्धां रूक्षां श्लथां गाढ़ां दुर्न्यस्ताञ्च विकेशिकाम् ।
व्रणे न दद्यात् कल्कञ्च स्नेहात् क्लेदो विवर्द्धते ॥ ४४ ॥
मांसच्छेदोऽतिरुग्रौक्ष्याद्दरणं शोणितागम: ।
श्लथातिगाढ़दुर्न्यासैर्व्रणवर्त्मावघर्षणम् ॥ ४५ ॥
सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् ।
व्रणं विशोधयेत् शीघ्रं स्थिता ह्यन्तर्विकेशिका ॥ ४६ ॥
व्यम्लन्तु पाटितं शोफं पाचनै: समुपाचरेत् ।
भोजनैरुपनाहैश्च * नातिव्रणविरोधिभि: ॥ ४७ ॥
सद्य: सद्योव्रणान् सीव्येत् विवृतानभिघातजान् ।

---

तथा तेन प्रकारेण व्रणस्तीव्रव्यथ: सम्पद्यते । तथा विग्रथित: स प्रदेशो बहुभिर्ग्रन्थिभिर्युक्त: स्यात्, तथा चिराच्चिरेण संरोहं याति रूढ़: सम्पद्यते ॥ ४३ ॥

स्निग्धामिति । व्रणे व्रणाख्ये आधारे स्निग्धादिगुणयुक्तां विकेशिकां व्रणान्त:प्रवेशयोग्यां वर्त्तिं न दद्यात् । श्लथां शिथिलां गाढ़ां निविड़ां दुर्न्यस्तां विषमन्यस्ताम् । अत्र चातिशब्दोऽर्थवशाद्द गम्यमानो बोध्यत एव । संग्रहे स्पष्टं ह्यत्रोवाच,—"अतिस्नेहात् क्लेद:" इति । कल्कमप्यतिस्निग्धादिगुणयुक्तं व्रणे न योजयेत् । पिष्टमौषधं द्रवाप्लुतं कल्क इत्युच्यते । किमिति स्निग्धादिगुणयुक्तां विकेशिकां कल्कं वा न दद्यादित्याह,—स्नेहादिति । यत: स्नेहात् क्लेदवृद्धि: । मांसेति । अतिरूक्षत्वाच्च मांसच्छेदोऽतिव्यथा दरणञ्च, तथा विशेषाद्द रक्तस्रावश्च । श्लथादिगुणयुक्तेन च व्रणमार्गस्यावघर्षणं स्यात् ॥ ४४ । ४५ ॥

विकेशिका व्रणे कस्माद्दीयत इत्याह,—सपूतिमांसमिति । विकेशिका व्रणान्तरे स्थिता पूत्यादियुक्तं व्रणं विशोधयेत् यत: तस्माद्व्रणेऽसौ योज्या । उत्सङ्ग उन्नति: ; पूयादिभक्षितमांसादिप्रदेश: शून्यो देहस्य गतिरुच्यते । पूयश्चासौ गर्भश्च स विद्यते यस्य स पूयगर्भी तम् ॥ ४६ ॥

व्यम्लमिति । व्यम्लं विदग्धं पक्वं व्रणमपक्वमित्यज्ञानात् पाटितम् । तथाविधै: श्वयथुपाचनैरन्नपानैस्तथाविधैश्चोपनाहै: सौलवणकिण्वादिकल्पितैरुपाचरेत् । न च सर्वैरेवाविशेषणात्तैरुपाचरेदित्याह,—नातीत्यादि । व्रणातिविरोधीन्यतिश्वयथुपाचनान्यम्लकटुक-तीक्ष्णोष्ण-लवण-प्रायाणि द्रव्याणि, तथा एवम्प्रायाणि भोजनानि तैरुपचारैरपि तु किञ्चिदेव व्रणविरोधीनि यानि तैरुचितैरुपक्रमेदिति बोध्यम् । नातिशब्दप्रयोगात् ॥ ४७ ॥

---

* उपवासैरिति वा पाठ: ।

मेदोजान् लिखितान् ग्रन्थीन् ह्रस्वाः पालीश्च कर्णयोः ॥४८॥
शिरोऽक्षिकूटनासौष्ठ-गण्डकर्णोरुबाहुषु ।
ग्रीवा-ललाट-मुष्क-स्फिङ्-मेढ्र-पायूदरादिषु ।
गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च ॥ ४९ ॥
न तु वंक्षणकक्षादावल्पमांसचले व्रणान् ।
वायुनिर्वाहिणः शल्य-गर्भान् क्षारविषाग्निजान् ॥ ५० ॥
सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ।
प्रलम्बि मांसं विच्छिन्नं निवेश्य स्वनिवेशने ॥ ५१ ॥
संध्यस्थ्यवस्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ।
सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु ॥ ५२ ॥
सान्त्वयित्वा ततश्चार्त्तं व्रणे मधुघृतद्रुतैः ।
अञ्जनक्षौमजमषी-फलिनीशल्लकीफलैः ।
सरोध्रमधुकैर्दिग्धे युञ्ज्याद् बन्धादि पूर्ववत् ॥ ५३ ॥

---

सद्य इति । सद्योव्रणानभिघातजान् विस्तीर्णमुखान् सद्यस्तत्क्षणादेव सीव्येत् । सङ्कुचितवदनास्तु ते न सीव्याः । अभिघाताज्जन्म येषान्ते । सद्यो व्रणानित्यभिघातजेष्वपि चिरकालस्थितेषु नायं विधिरिति द्योतयति । मेदोजान् ग्रन्थीनालिख्य सूच्या सीव्येत् ॥ ४८ । ४९ ॥

नेति । वङ्क्षणादिस्थितानां व्रणानां गम्भीरादिप्रदेशत्वात् सीवनं प्राप्तं तन्निषिध्यते । मांसलेषु स्थितेषु च व्रणान् सीव्येत् इत्युक्त्यैवाल्पमांसे चले स्थाने व्रणान् न सीव्येदित्यर्थे लब्धेऽल्पमांसाचलाय व्रणान् न सीव्येदिति वचनमतिशयार्थम् । जातुचिदभिघातजान् विहतानप्येवम्विधान् व्रणान् न सीव्येदिति गमयति ; तथा वायुं निर्वहन्ति निःश्वसन्ति तान् वायुनिर्व्वाहिणो न सीव्येत्, तथा शल्यं गर्भे येषां तान् शल्यगर्भान्, तथा क्षारविषाग्निभ्यो जातान् व्रणान् न सीव्येत् ॥ ५० ॥

सीवनात् पूर्वं यत् क्रियते तद्दर्शयति,—सीव्येदिति । स्थानाच्चलितमस्थ्यपनीय निरस्य, तथा शुष्करक्तं तृणानि रोमाणि चापास्य, तथा शस्त्रादिना प्रकर्षेण लम्बि व्रणे यद् विद्यते मांसं तत् स्वनिवेशने आत्मीये स्थाने निवेश्य संस्थाप्य सन्ध्यस्थि स्वे स्थाने संस्थाप्य स्थिते रक्तेऽस्रवद्रूपत्वं प्राप्ते सति व्रणं सीव्येत् । केन ? स्नाय्वादिना, तथा वल्कलैः । वल्कलान्यश्मन्तकादित्वगुद्भवानि तैः । कथं सीव्येत् ? न दूरे न विप्रकृष्टे न चासन्न नाति निकटे गृह्णन्नाल्पं व्रणांशं न च बहु गृह्णन् ॥ ५१—५२ ॥

सान्त्वयित्वेति । ततः सीवनादनन्तरमातुरं सान्त्वयित्वा समाश्वास्य शीताम्बुस्पर्शव्यजनादिभिरनन्तरमुक्तैर्लिप्ते व्रणे सति । कैः ? अञ्जनादिभिः । किम्भूतैः ?

व्रणो निःशोणितौष्ठो यः किञ्चिदेवावलिख्य तम् ।
सञ्जातरुधिरं सीव्येत् सन्धानं ह्यस्य शोणितम् ॥ ५४ ॥
बन्धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च ॥ ५५ ॥
आविकाजिनकौशेयमुष्णं चौमन्तु शीतलम् ।
शीतोष्णं तूलसन्तान-कार्पास-स्नायु-वल्कजम् ॥ ५६ ॥
ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ।
भङ्गे च युञ्ज्यात् फलकं चर्म वल्क-कुशादि च ॥ ५७ ॥
स्वनामानुगताकारा बन्धास्तु दश पञ्च च ।
कोश-स्वस्तिक-मुत्तोली-चीन-दामाऽनुवेल्लितम् ॥ ५८ ॥
खट्वा-विबन्ध-स्थगिका-वितानोत्सङ्ग-गोफणाः ।

---

मधुघृताभ्यां द्रुतैराल्लोड़ितैः पूर्ववद् बन्धादि युञ्ज्यात् । तृतीयान्तात् वतिः । पूर्वोद्दिष्टेन कर्म्मणा तुल्यं कषायचालनादि कवलिकादिकञ्च योजयेदित्यर्थः ॥ ५३ ॥

व्रण इति । अविद्यमानशोणितौष्ठो यः स्यात्तमेवम्भूतं व्रणं किञ्चिदेवेषन्मात्रमेव शस्त्रेणावलिख्य ततः सञ्जातरुधिरं सन्तं सीव्येत्रत्वेवमेव । यस्मादस्य व्रणस्य सन्धानं शोणितमेव ॥ ५४ ॥

बन्धनानीति । बध्यते व्रण एभिरिति बन्धनान्याविकाजिनादीनि तेषु व्रणेषु देश-कालसात्म्यादीन् वीक्ष्य निरूप्य यथायोगमाविकाद्यन्यतमं युञ्ज्यात् ॥ ५५ ॥

तेषाञ्च बन्धनानां स्वरूपमाह,—आविकाजिनेत्यादि । अविरेवाविकस्तस्येदमावि-कम् । अवेः क इति कस्तस्येदमित्यण् । अजिनं चर्म्म ; कोशात् सम्भूतं कौशेयम् ; कोशाड्ढञिति ढञ् । आविकादिकं बन्धनत्रयमुष्णवीर्यम् । चौमन्तु बन्धनं शीतलं शीतवीर्यम् । तूलसन्तानादिजं शीतोष्णमुभयस्वभावम् । तूलं शाल्मलादिजं तस्य सन्तानः सन्ततिः सूत्ररूपता तेन निष्पादितम् ॥ ५६ ॥

ताम्रेत्यादि । मेदःकफाधिके व्रणे ताम्रादीनि लेखनार्थं युञ्ज्यात् । भङ्ग इत्यादि । न केवलं भङ्गे ताम्रादीनि मेदःकफाधिके व्रणे युञ्ज्यात् यावच्चशब्दात्तानि भङ्गेऽपि युञ्ज्यात् । न च केवलं ताम्रादीनि युञ्ज्यात् यावत् फलकादि च युञ्ज्यात् । कुशाशब्देन वंशादिकं निकोच्यते ॥ ५७ ॥

अधुना बन्धप्रकारान्निर्दिशति,—स्वनामानुगतेति । स्वञ्च तन्नाम च स्वनाम, तेनानुगतोऽनुबद्ध आकारः संस्थानविशेषो येषां ते पञ्चदश बन्धा वक्ष्यमाणाः । तु शब्दोऽवधारणार्थः । पञ्चदशैवेति न न्यूनाः । कोशादयः पञ्चाङ्गान्तास्तेषां बन्धानां मध्ये यो बन्धविशेषो यत्र यस्मिन् देहदेशे सुनिविष्टो भवेत् तं बन्धं कोशादिकं तत्र तस्मिन् देशे योजयेत् । तत्र कोशोऽङ्गुलीपर्व्वसु चर्म्मादिकृतः । स्वस्तिकं सन्धिकूर्चभ्रूस्तनान्तर-कर्णेषु । मुत्तोली ग्रीवामेढ्रयोः । चीनमपाङ्गयोः । दाम सन्धिवङ्क्षणादौ । काचाचिकपोलकर्णेषु ।

यमकं मण्डलाख्यञ्च पञ्चाङ्गी चेति योजयेत् ।
यो यत्र सुनिविष्टः स्यात् तं तेषां तत्र बुद्धिमान् ॥ ५९ ॥
बध्नीयाद् गाढमूरु-स्फिक्-कक्षा-वङ्क्षण-मूर्द्धसु ।
शाखा-वदन-कर्णोरः-पृष्ठ-पार्श्व-गलोदरे ।
समं मेहनमुष्के च नेत्रे सन्धिषु च श्लथम् ॥ ६० ॥
बध्नीयाच्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ।
गाढमेव समस्थाने भृशं गाढं तदाश्रये ॥ ६१ ॥
शीते वसन्ते च तथा मोक्षणीयौ त्र्यहात् त्र्यहात् ॥ ६२ ॥
पित्तरक्तोत्थयोर्बन्धो गाढस्थाने समो मतः ।
समस्थाने श्लथो नैव शिथिलस्याशये तथा ॥ ६३ ॥
सायंप्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते ॥ ६४ ॥

---

अनुवेल्लितं शाखासु । खट्वा हनुसन्धिगण्डेषु । विबन्धमुदरोरुपृष्ठेषु । स्थगिका-ङ्गुष्ठाङ्गुलीमेढ्रान्त्रवृद्धिषु । वितानं मूर्धादौ पृथुलाङ्गे । उत्सङ्गमङ्गविशेषे लम्बिनि बाह्वादौ । गोफणं नासौष्ठचिबुकांसकक्षेषु । यमकं यमलव्रणयोः । मण्डलं वृत्तेऽङ्गे । पञ्चाङ्गी जत्रूर्ध्वमिति योजना कार्या ॥ ५८ । ५९ ॥

सम्प्रत्येषां बन्धानां गाढशिथिलादिबन्धत्वं देशाद्यनुरोधान्निरूपयति,—बध्नीयादिति । ऊरुस्फिगादिषु देशेषु गाढं बध्नीयान्न तु श्लथम् । शाखेति । शाखावदनादिषु समं बध्नीयात् । च शब्दान्मेहनमुष्कयोश्च सममेव । नेत्र इति । नेत्रे नयने तथा सन्धिषु शिथिलं बध्नीयात् ॥ ६० ॥

बध्नीयाच्छिथिलेति । यत्र शिथिलस्थाने शिथिलो बन्ध उपदिष्टस्तत्र स्थाने यौ व्रणौ वातश्लेष्मोद्भवौ तौ समं कृत्वा बध्नीयात् न गाढं न शिथिलम् । यत्र स्थाने समो बन्ध उपदिष्टस्तत्र स्थाने वातश्लेष्मोद्भवौ व्रणौ गाढमेव बध्नीयात् । भृशमित्यादि तदित्यनेन गाढाशयः परामृश्यते । गाढबन्धोद्दिष्टे स्थाने वातश्लेष्मोद्भवौ व्रणौ भृशं सुतरां गाढं बध्नीयात् । ६१ ॥

शीत इति । तौ वातश्लेष्मोद्भवौ व्रणौ शीते हेमन्तशिशिराख्ये काले वसन्ते च त्र्यहात् त्र्यहात् त्रिदिनमन्तरीकृत्य मोक्षणीयौ मोक्षणार्हौ भवतः ॥ ६२ ॥

पित्तेत्यादि । पित्तरक्तोत्थयोर्व्रणयोर्गाढबन्धस्थाने समो बन्धो मतो न शिथिलः समस्थाने समो बन्धोऽप्युपदिष्टः शाखावदनादौ तत्रस्थयोः पित्तरक्तोत्थयोर्व्रणयोः शिथिलो बन्धः कार्यः । शिथिलस्य बन्धस्याशये यत्र शिथिलो बन्धः कार्यं इत्युक्तं तत्र नैव बन्धः कार्यं इत्येवकारोऽवधारणार्थः कृतः ॥ ६३ ॥

सायमिति—तयोः पित्तरक्तोत्थयोः सायं प्रातर्द्वौ कालौ मोक्ष इष्यते । ग्रीष्मे शरदि चान्यदोषोत्थव्रणस्यापि सायं प्रातर्मोक्ष इष्यते ॥ ६४ ॥

अबद्धो दंश-मशक-शीत-वातादि-पीड़ितः ।
दुष्टीभवेद् व्रणश्चात्र न तिष्ठेत् स्नेहभेषजम् ।
कृच्छ्रेण शुद्धिं रूढ़िं वा याति रूढ़ो विवर्णताम् ॥ ६५ ॥
बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ।
छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रणः ।
उत्थानशयनाद्यासु सर्वेहासु न पीड़येत् ॥ ६६ ॥
उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ।
समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ॥ ६७ ॥
स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ।
प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ॥ ६८ ॥

---

ननु बन्धेन विना व्रणी धार्य इत्याह,—अबद्ध इति । अबद्धो व्रणी दंशादिभिः पीड़ितो व्यथितः, तथा आदिशब्दात् रजोधूमादिभिर्व्यथितोऽदुष्टोऽपि व्रणी दुष्टीभवति । अत्र च व्रणे बन्धमन्तरेण व्रणघ्नः स्नेह उपयोजितो भेषजं वा योजितं चिरं न तिष्ठेत् । बन्धञ्च विना सम्यगुपचर्यमाणोऽपि व्रणः कष्टेन शुद्धिं याति, रूढ़िञ्च कृच्छ्रेण याति रूढ़ोऽपि सन् विवर्णतां याति, न शरीरवर्णतामित्यबन्धनात् दोषाः ॥ ६५ ॥

इदानीं बन्धनाद् गुणानाह—बद्धस्त्विति । तुरवधारणे । बद्ध एव व्रणो बन्धनमाहात्म्याच्चूर्णितोऽस्थिसमाश्रितो व्रणः, तथा भग्नोऽस्थिसमाश्रित एव व्रणः, तथा विश्लिष्टः सन्धिस्थानादन्यथागतो व्रणो नेत्रादिः तथा पाटितः सर्वदेशस्थितोऽपि, तथा छिन्नस्नायुसिरोऽप्याशु व्रणः सुखं सम्यग्रोहति ; तथा उत्थानशयनाद्यासु सर्व्वास्विहासु चेष्टासु न पीड़येन्न व्यथयेत् ॥ ६६ ॥

उद्वृत्तौष्ठ इति । ऊर्ध्ववृत्तौ वर्त्तुलावोष्ठौ यस्य स उद्वृत्तौष्ठो न समः, तथा समुत्सन्नः समन्तादुत्सन्न उन्नतो यो व्रणो न समः, तथा विषमः उद्वृत्तौष्ठसमुत्सन्नाभ्यां व्यतिरिक्तो विषमसंस्थानः, तथा कठिनो यो व्रणो न मृदुः, तथा अतिरुग् यो व्रणः, स सर्व उद्वृत्तौष्ठादिपञ्चप्रकारोऽपि बन्धमाहात्म्यादशुभरूपतां हित्वा व्रणः शीघ्रं शुद्धं याति रोहति । ननु उद्वृत्तौष्ठसमुत्सन्नावपि विषमशब्देनैव गृहीष्येते किमेताभ्यामुपात्ताभ्याम् ? अस्त्वेतत् ; किन्त्वनयोः पृथङ्निर्देशेनातिदुश्चिकित्स्यतरत्वं गमयति ॥ ६७ ॥

स्थिराणामिति । स्थिराणां व्रणादीनां दीर्घकालानुबन्धिनां, तथा अल्पमांसानामनुपचितपलानामतएव हेतोस्तथा रौक्ष्यादनुपरोहतां रूढ़िमगच्छतामौषधं कल्कस्नेहादिकं यदुपयुज्यते तत् पत्रैः क्षीरीभूर्जार्जुनकदम्बजैः प्रच्छाद्यं स्थगितव्यं यथादोषं दोषानतिक्रमेण ऋत्वतिक्रमेण च तद्वशाद् यथायोगम् । यथा वातव्रणे शीततो स्निग्धोष्णैः, पित्तव्रणे घर्म्मकाले शीतस्वभावैः कफव्रणे उष्णकाले रूक्षोष्णप्रायैः । एवं साधारणेऽपि काले मिश्रदोषे च कल्पनीयम् । किम्भूतः पत्रैः ? अजीर्णान्यजर्ज्जराणि तरुणानि

अजीर्णतरुणाच्छिद्रैः समन्तात् सुनिवेशितैः ।
धौतैरकर्कशैः चीरी-भूर्जार्जुनकदम्बजैः ॥ ६९ ॥
कुष्ठिनामग्निदग्धानां पिटिकामधुमेहिनाम् ।
कर्णिकाश्चोन्दुरुविषे चारदग्धा विषान्विताः ॥ ७० ॥
न मांसपाके च बध्नीयाद्गुदपाके च दारुणे ।
शीर्य्यमाणाः सरुग्दाहाः शोफावस्थाविसर्पिणः ॥ ७१ ॥
अरक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत् क्रिमीन् ।
ते भक्षयतः कुर्व्वन्ति रुजाशोफास्रसंस्रवान् ॥ ७२ ॥
सुरसादि प्रयुञ्जीत तत्र धावनपूरणे ॥ ७३ ॥
सप्तपर्णकरञ्जार्क-निम्बराजादनत्वचः ।
गोमूत्रकल्किता लेपः सेकः चाराम्बुना हितः ॥
प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ॥ ७४ ॥
न चैनं त्वरमाणोऽन्तः सदोषमुपरोहयेत् ।
सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ॥ ७५ ॥

---

प्रत्ययाण्यच्छिद्रानि च्छिद्ररहितानि तैरजीर्णतरुणाच्छिद्रैः, तथा समन्तात् सुनिविशितैः, तथा धौतैर्ज्जलादिना निर्म्मलीकृतैः, तथा अकर्कशैरकठिनैः ॥ ६८ । ६९ ॥

कुष्ठिनामिति—कुष्ठादीनां ये व्रणास्ते न बन्धनीयाः । तथा उन्दुरुविषे याः कर्णिकाः कोठरूपास्ताश्च न बध्नीयात् । तथा चारदग्धा ये व्रणास्ते न बन्धनीया । तथा मांसपाके व्रणास्तथा दारुणे च गुदपाके व्रणास्ते न बन्धनीयाः । मांसपाक इति मांसस्य पचियुट्-घञोरित्यलोपः । तथा शीर्य्यमाणाः शदनावस्थां भजमानाः । तथा सरुग्दाहास्तथा शोफावस्था अनेकावस्थां भजन्तोऽपि ये शोफावस्थावस्थितास्तथा विसर्पिणो विसर्पावस्थास्थिता ये व्रणास्ते च न बन्धनीयाः ॥ ७० । ७१ ॥

इदानीं सक्रिमीणां व्रणानां चिकित्सामाहअरक्षया अपालनेन यस्मिन् व्रणे मक्षिका क्रमिन्निक्षिपेत् । ते तत्रस्थाः क्रमयो व्रणं भक्षयन्तो रुजादीन् कुर्व्वन्ति ॥ ७२ ॥

सुरसादीति । तत्र तस्मिन् व्रणे सुरसादिगणं धावने पूरणे च तन्निमित्तं प्रयुञ्जीत । धावनं च पूरणं च तस्मिन् । तथा तस्मिन् व्रणे सप्तपर्णादीनां त्वचो गोमूत्र-कल्किताः पिष्टलेपो हितः । तथा चाराम्बुना सेको हितः । अथवा मांसपेश्या व्रणं प्रच्छाद्य पिधाय तान् क्रमीनाशु निर्हरेत् ॥ ७३ । ७४ ॥

नेति । नचैनं व्रणमन्तः सदोषं त्वरमाणो वैद्य उपरोहयेत् । कस्मादित्याह स इत्यादि—यतो यस्मात् सोऽन्तःस्थितदोषो व्रणो रूढोऽपि भूयः पुनस्तोकेनाप्यपचारेण विकृतिं याति ।

रूढेऽप्यजीर्णव्यायाम-व्यवायादीन् विवर्ज्जयेत् ॥ ७६ ॥
हर्षं क्रोधं भयं वापि यावदास्थैर्य्यसम्भवात् ।
आदरेणानुवर्त्त्योऽयं मासान् षट् सप्त वा विधिः ॥ ७७ ॥
उत्पद्यमानासु च तासु तासु वार्त्तासु दोषादिबलानुसारी ।
तैस्तैरुपायैः प्रयतश्चिकित्सेदालोचयन् विस्तरमुत्तरोक्तम् ॥७८॥

इत्यष्टाङ्गहृदये सूत्रस्थाने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

अथातः क्षाराग्निकर्म्मविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
सर्व्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।
छेद्यभेद्यादिकर्म्माणि कुरुते विषमेष्वपि ॥

---

रूढेऽपि सत्यजीर्णादीन् विवर्जयेत् । अयमजीर्णव्यायामादिपरिवर्जनलक्षणो विधिः षट् सप्त वा मासानादरेण रक्षणीयः ॥ ७६ ॥

तासु तासु वार्तास्ववस्थास्वनिर्द्दिष्टस्वरूपाभिधानासूत्पद्यमानासु जायमानासु तैस्तैरुपायैः साधनैश्चिकित्सेत् वैद्यः । यथा मक्षिकाभिः क्रिमिनिक्षेपात् क्रिमिप्राबल्ये जाते चिकित्सा विहिता । किम्भूतो वैद्यः, दोषादिबलानुसारी दोषादीनां बलं दोषादिबलं । आदिग्रहणाद्देशकालादयो गृह्यन्ते । तदनुसरत्येवंविधो यो वैद्यः । तथा प्रयतो यत्नपरः । तथा उत्तरे उत्तरतन्त्रे व्रणभग्नविधाने उक्तं निर्द्दिष्टं विस्तरमालोचयन् निरूपयन्न तु यदृच्छयेति भावः । इन्द्रवज्रा वृत्तम् ॥ ७७ । ७८ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने शस्त्रकर्मविधिरध्यायःएकोनत्रिंशः ॥ २९ ॥

---

अतोऽनन्तरं क्षाराग्निकर्म्मविधिरारभ्यते यथैव हि शस्त्रेण पाटनादीनि कृत्वा तत्साध्य आमय उपक्रम्यते तथैव क्षाराग्निभ्यामित्याह । क्षारश्चाग्निश्च क्षाराग्नी तयोः कर्म्म क्षाराग्निकर्म्म तस्य विधिः । शेषं पूर्व्ववत् । क्षारस्य बाह्याभ्यन्तरोपयोगित्वेन पूर्व्वमुपन्यासः ॥ १ ॥

सर्व्वेति । सर्व्वाणि च तानि शस्त्राण्यनुशस्त्राणि च तान्येवं तेषां सर्व्वशस्त्रानुशस्त्राणां मध्ये क्षारः श्रेष्ठो ज्यायान् । कुतोऽस्य श्रेष्ठतेत्याह यद्यस्माद् बहूनि छेद्यभेद्यादीनि कर्म्माण्यसौ करोति । आदिशब्देन लेखनपाटनादिपरिग्रहः ।

दुःखावचार्य्यशस्त्रेषु तेन सिद्धिमयात्सु च।
अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते॥ २॥
स पेयोऽर्शोऽग्निसादाश्म-गुल्मोदरगरादिषु।
योज्यः साक्षान्मषश्वित्र-बाह्यार्शःकुष्ठसुप्तिषु॥ ३॥
भगन्दरार्व्वुदग्रन्थि-दुष्टनाडीव्रणादिषु।
नतूभयोऽपि योक्तव्यः पित्ते रक्ते बलेऽबले॥ ४॥
ज्वरेऽतिसारे हृन्मूर्द्ध-रोगे पाण्डामयेऽरुचौ।
तिमिरे कृतसंशुद्धौ श्वयथौ सर्व्वगात्रगे॥ ५॥
भीरुगर्भिण्यृतुमती प्रोद्वृत्तफलयोनिषु।
अजीर्णेऽन्ने शिशौ वृद्धे धमनीसन्धिमर्म्मसु॥ ६॥
तरुणास्थिसिरास्नायु-सेवनीगलनाभिषु।
देशेऽल्पमांसे वृषण-मेढ्रस्रोतोनखान्तरे।

---

विषमेष्वपि देहदेशेषु। दुःखावचार्य्यशस्त्रेषु नासार्शोर्व्वुदादिषु। दुःखेनावचारयितुं शक्यं शस्त्रं येषु तेषु। अपिशब्दात्समेषु देहेषु युज्यते। तेन च शस्त्रेण सिद्धिमयात्-स्वसिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु। किम्भूतेष्वतिकृच्छ्रेष्वतिदुःखसाध्येषु। दुष्टव्रणादिषु रोगेष्वसौ क्षारो युज्यते योग्यः सम्पद्यते ततोऽपि हेतोः क्षारः श्रेष्ठः। यच्चेति। यस्माच्च क्षारः पानविषयेऽपि युज्यते शरीरान्तःस्थितरोगशान्त्यै। अपिशब्दा-द्बाह्येऽपि बाह्यरोगस्थितिशान्त्ये लेपे स युज्यते॥ २॥

अधुना क्षारस्य पेयलेपविषयविभागं दर्शयति। स इति। स क्षारः अर्शःसु विषये पेयः। तथाऽग्निसादे तथाऽश्मर्यां गुल्मादिषु च। आदिग्रहणादानाहशूलादिषु च। स क्षारो योज्यः साक्षाल्लेपनेन मषादिषु। आदिग्रहणाच्चर्म्मकीलासवर्त्म तिलकादि-परिग्रहः। पानलेपनभेदेन द्विविधोऽपि क्षारः पित्तादौ न योक्तव्यः। बले सप्राणे। अबले प्राणहीने। ज्वरे। अतिसारे। हृद्रोगे। मूर्धरोगे। पाण्डामये पाण्डुरोगे। अरुचावरोचके। कृतसंशुद्धौ कृतवमनविरेके। श्वयथौ सर्व्वगात्रगे सर्व्वाङ्गोच्छूने। तथा भीरौ। गर्भिण्याम्। ऋतुमत्याम्। प्रोद्वृत्तफलयोनिर्वक्ष्यमाणा उत्तरतन्त्रे गुह्यरोग-ज्ञाने। प्रकर्षेणोद्वृत्तं फलं रजोरूपं यस्या योनेः सा प्रोद्वृत्तफलयोनिः। रजएव फलं गर्भाख्यफलसाधनोपायत्वात्। प्रोद्वृत्तफलयोनेर्लक्षणमुक्तं यथा। वेगोदावर्त्तनाद्द योनिं प्रपीडयति मारुतः। स फेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति॥ इयं व्यापदुदावर्त्ते-त्यादि। शिशौ बाले। वृद्धे गतवयसि। तथा धमन्यादिषु शरीरदेशेषु। देशेऽल्पमांसे स्वल्पपिशिते। तथा वृषणादिषु शरीरदेशेषु। तथाक्ष्णोर्नेत्रयोर्वर्त्मरोगं वर्जयित्वाऽन्यत्र क्षारो न प्रयोज्यः। वर्त्तरोगे तु क्षारो योज्य एव। शीतवर्षोष्णदुर्दिने न च योज्यः।

वर्त्मरोगार्द्दितेऽच्णोश्च शीतवर्षोष्णदुर्दिने ॥ ७ ॥
कालमुष्ककशम्याक-कदलीपारिभद्रकान् ॥ ८ ॥
अश्वकर्णमहावृक्ष-पलाशास्फोतवृक्षकान्
इन्द्रवृक्षार्कपूतीक-नक्तमालाश्वमारकान् ॥ ९ ॥
काकजङ्घामपामार्ग-मग्निमन्थाग्नितिल्वकान्।
सार्द्रान् समूलशाखादीन् खण्डशः परिकल्पितान् ॥१०॥
कोशातकीश्चतस्रश्च शूकनालं यवस्य च।
निवाते निचयीकृत्य पृथक्तानि शिलातले ॥ ११ ॥
प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत्।
ततस्तिलानां कुन्तालैर्दग्ध्वाऽग्नौ विगते पृथक् ॥ १२ ॥
कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥
गालयेदर्द्धभारेण महता वाससा च तत्।
यावत् पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् ॥१४॥
गृहीत्वा क्षारनिस्यन्दं पचेल्लौह्यां विघट्टयन्।

शीतवर्षोष्णाहानि हेमन्तशिशिरप्रावृड्ग्रीष्माः। दुर्दिनं मेघाद्याकुलदिवसम्। एषु क्षारो न योज्यः ॥ ४—७ ॥

अधुना क्षारक्रियामाह—कालेति। कालमुष्कको मोचः। अश्वकर्णः कुशिकः। महावृक्षः स्नुही। आस्फोतो गिरिकर्णिका। वृक्षको नन्दीवृक्षः। इन्द्रवृक्षः कुटजः। पूतीकः पूतीकरञ्जः। नक्तमालः करञ्जः। अश्वमारः करवीरः। कालमुष्ककादीन् मूलादिसहितान् खण्डं खण्डं कल्पितान् परश्वादिना छिन्नान्। तथा कोशातकीश्चतस्रो यवस्य च शूको नालो द्रवद्रव यो भवति तांश्च निवाते देशे शिलातले शिलापृष्ठे पृथङ्मुष्ककादीन्निचयीकृत्य मुष्ककचये च सुधाश्मानि सुधाशर्कराः प्रक्षिप्य दीपयेज्ज्वालयेत्। कैः? तिलानां कुन्तालैः पलालैः काण्डैः। सुधाश्मानि चेति नपुंसकत्वं चिन्त्यम्। पृथग्दीपनं चैषामचिन्त्यप्रभावम्। एवं तानि दग्ध्वाऽनन्तरमग्नौ विगते सुधाश्मनां भस्मद्रोणं पृथक्कृत्वा व्यस्तं संस्थाप्येतरभस्मनः शम्याकादिद्रव्यभस्मनो द्रोणमादाय गृहीत्वा। किम्भूतं द्रोणम्? मुष्कक उत्तरोऽधिको यस्य तमादाय जलमूत्रयोः प्रत्येकमर्द्धभारेण तद्भस्म गालयेत्। कथं गालयेत्। महता विस्तीर्णेन वाससा। कियन्तं कालम्? यावत् क्षारनिष्यन्दः क्षारस्रावः पिच्छिलरक्ताच्छस्तथा तीक्ष्णो जातः सम्पन्नस्तदा तस्मिन्काले तं क्षारनिष्यन्दं गृहीत्वा लौह्यां स्नेहपाकविधिना पचेत्। किंकुर्वन्? दर्व्या कुण्डलसंज्ञया विघट्टयन्नालोड़यन्। ततोऽनन्तरं तस्मिन् क्षारनिष्यन्दे पच्यमाने ताः स्थापिताः

पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ॥ १५ ॥
शुक्तिक्षारपङ्कशङ्ख-नाभीश्चायसभाजने ।
कृत्वाग्निवर्णान् बहुशः क्षारोत्थे कुडवोन्मिते ॥ १६ ॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शकृद्दक्षशिखि-गृध्रकङ्ककपोतजम् ॥ १७ ॥
चतुष्पात्पक्षिपित्ताल-मनोह्वा लवणानि च ।
परितः सुतरां चातो दर्व्या तमवघट्टयेत् ॥ १८ ॥
सबाष्पैश्च यदोत्तिष्ठेद्बुद्बुदैर्लेहवद्घनः ।
अवतार्य्य ततः शीतो यवराशावयोमये ॥ १९ ॥
स्थाप्योऽयं मध्यमः क्षारो न तु पिष्ट्वा क्षिपेन्मृदौ ।
निर्वाप्यापनयेत् तीक्ष्णे पूर्व्ववत् प्रतिवापनम् ॥ २० ॥
तथा लाङ्गलिकादन्ति-चित्रकातिविषावचाः ।
स्वर्जिकाकनकक्षीरि-हिङ्गुपूतीकपल्लवाः ॥ २१ ॥

---

सुधाभस्मशर्करा या मुष्ककमध्ये प्रक्षिप्य दग्धास्तथा शुक्तीः प्राणिविशेषास्थीनि तथा क्षारपङ्कं प्रलेपकं खटिकासंज्ञं तथा शङ्खनाभीश्चाग्निवर्णान् कृत्वा क्षारोत्थे क्षारनिष्यन्दे पलाष्टकपरिमाणे क्वथितक्षारोत्थे आयसभाजने तीक्ष्णलोहपात्रगते बहून् वारान्निर्वाप्य शीतीकृत्य तेनैव क्षारनिष्यन्देन दृषदि पिष्ट्वा तस्मिन् पच्यमाने क्षारनिष्यन्दे प्रतीवापं विनिक्षिपेत् । द्रवद्रव्ये द्रव्यान्तरं श्लक्ष्णपिष्टं दीयते स प्रतीवाप उच्यते । नच केवलमेष एव प्रतीवापत्वेन क्षेप्तव्यो यावद्दक्षादीनामपि शकृत् श्लक्ष्णं कृत्वा विनिक्षिपेत् । दक्षः कुक्कुटः । शिखी मयूरः । गृध्रः श्येनः । कङ्ककपोतकौ पक्षिणौ । तथा चतुष्पदां गवादीनां तथा पक्षिणां पित्तं तथा अलमनोह्वालवणानिच । अलं हरितालम् । मनोह्वा मनःशिला । लवणं सैन्धवादि । एतानि श्लक्ष्णानि कृत्वा प्रतीवापं विनिक्षिपेत् । अथ प्रतीवापादनन्तरं परितः समन्ताद्दर्व्या अवघट्टयेत् । सबाष्पैरित्यादि । यदा यस्मिन् काले स क्षारनिष्यन्दः सबाष्पैः सोष्मभिर्बुद्बुदैर्घनो लेह इवोत्तिष्टेदुद्गच्छेत् । यदा सान्द्रतया पच्यमानः सन् लेहतुल्यो दर्वीप्रलेपी स्यादित्यर्थः । तदा तस्मिन् कालेऽवतार्यायोमये लोहभाण्डे स्थितो यवराशौ स्थाप्यः । किं कृत्वा ? अवतार्य चुल्लीतः । तथा शीतः सन् । अयं मध्यमः क्षारः ॥ ८—१९ ॥

मृदौ क्षारे सुधादीनि निर्वाप्य तस्मिन्निष्यन्दे प्रक्षिप्यैवापनयेदिसर्जयेन्न पिष्ट्वा विनिक्षिपेत् । तीक्ष्णे क्षारे पूर्व्ववन्मध्यमक्षारतुल्यं प्रतिवापनं निर्व्वाप्य पिष्ट्वा विनिक्षिपेदिति ॥ २० ॥

न चैतावदेवाऽत्र प्रतिवापनमित्याह । तथेत्यादि । लाङ्गलिकादीनि बिड़पर्यन्तानि

तालपत्री विड़ं चेति सप्तरात्रात्परं तु स: ।
योज्य: तीक्ष्णोऽनिलश्लेष्म-मेदोजेष्वर्बुदादिषु ॥ २२ ॥
मध्येष्वेव च मध्योऽन्य: पित्तास्रगुदजन्मसु ।
बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३ ॥
नातितीक्ष्णो मृदु: श्लक्ष्ण: पिच्छिल: शीघ्रग: सित: ।
शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ।
क्षारो दशगुण: शस्त्र-तेजसोरपि कर्म्मकृत् ॥ २४ ॥
आचूषन्निव संरम्भाद् गात्रमापीड़यन्निव ॥ २५ ॥
सर्वतोऽनुसरन् दोषानुन्मूलयति मूलत: ।
कर्म्म कृत्वा गतरुज: स्वयमेवोपशाम्यति ॥ २६ ॥
क्षारसाध्ये गदे च्छिन्ने लिखिते स्राविते ऽथवा ।

---

च तत्र प्रतिवापं विनिक्षिपेत् । सप्तरात्रात्परमनन्तरं स क्षारो योज्य: । इति क्षार-त्रैविध्यमुक्त्वा विषयं निर्दिदिक्षुराह । तीक्ष्ण: क्षारो वातश्लेष्ममेद:समुत्थेष्वर्बुदादिषु योज्य: । महत्स्वेव योज्य: । मध्येषु क्षारान्तरविधानम् । आदिग्रहणादन्येष्वपि तत्साध्येषु रोगेष्वयं क्षारो योज्य: । एष्वेवानिलकफमेदोजेषु विकारेष्वर्बुदादिषु मध्येषु, नोत्कृष्टेषु नापि हीनेषु मध्य: क्षारो योज्य: । अन्यो मृदु: क्षार:—पित्तरक्त-समुत्थेष्वर्श:सु योज्यो न तीक्ष्णमध्यौ क्षारौ । तस्मिन् क्षारे क्षीणपानीये घनीभूते क्षारे बलाधानाय पुनर्भूय: क्षाराम्बु, क्षारविधिस्रुतं जलमावपेद्दद्यात् ॥ २१—२३ ॥

अधुना क्षारगुणानाह । नातीति । क्षारे नातितीक्ष्णादयो दशगुणा भवन्ति शीघ्रं गच्छति प्रसरत्याशु व्याप्नोतीति शीघ्रग: । शिखरी शिखरमुपरिष्टात्पीटिकोत्थानं तद्वान् । सुखेन काञ्जिकादिना निर्व्वाप्यते शीतीक्रियते सुखनिर्वाप्य: । विष्यन्दी-ऽस्यास्तीति विष्यन्दीस्रुतिमान् । न विष्यन्दी न स्रुतिमान् । नचातिरुक् नचार्त्तिमान् । नातितीक्ष्णादयो दशगुणा यस्य स दशगुण: क्षार: । संग्रहे चास्य दशैव दोषा गदिता: । तद्यथा—अत्युष्णो-ऽतिशीतोऽतितीक्ष्णो-ऽतिमृदुरतितनुरतिघनो-ऽतिपिच्छिलो-ऽतिविसर्पी हीनौषधो हीनपाकश्चेति । शस्त्रे यत्कर्म्म छेदनपाटनलेखनादि तथा तेजसो वह्नेरपि यत्कर्म्म तत्साध्यव्याध्युपशमलक्षणं तत्करोति ॥ २४ ॥

अधुना त्वन्तरानुभवद्वारेण क्षारस्य गुणान्निर्दिशति आचूषन्निति । संरम्भात् क्षोभात् गात्रमाचूषन्निव तथा आपीड़यन्निव तथा सर्वत: सर्वस्मिन्ननुसरन् गच्छन् दोषान् शस्त्रसाध्यान् मूलत उन्मूलयत्युद्धरति । तथा कर्म्म स्वीयं दाहादिकं कृत्वा गतरुज: पुरुषस्य स्वयमेव यत्नं विनैवोपशाम्यति ॥ २५ । २६ ॥

क्षारेति । क्षारसाध्ये व्याधावर्शोऽर्बुदादौ च्छिन्ने द्विधाकृते लिखिते शस्त्रेण विघृष्टे स्राविते प्रच्छाद्य निर्हृतशोणिते । कर्म्मणि कृते क्षारो योज्यो नाकृते छेदादाविति क्षारस्य

क्षारं शलाकया दत्त्वा प्लोतप्रावृतदेहया ॥ २७ ॥
मात्राशतमुपेक्षेत तत्रार्शः स्वावृताननम् ।
हस्तेन यंत्रं कुर्वीत वर्त्मरोगेषु वर्त्मनी ॥ २८ ॥
निर्भुज्य पिचुनाच्छाद्य कृष्णभागं विनिक्षिपेत् ।
पद्मपत्रतनुः क्षार-लेपो घ्राणार्बुदेषु च ॥ २९ ॥
प्रत्यादित्यं निषण्णस्य समुन्नम्याग्रनासिकाम् ।
मात्रा विधार्यः पञ्चाशत् तद्वदर्शसि कर्णजे ॥ ३० ॥
क्षारं प्रमार्जनेनानु परिमृज्यावगम्य च ।
सुदग्धं घृतमध्वक्तं तत्पयोमस्तुकाञ्जिकैः ॥ ३१ ॥
निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् ।
अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च ॥ ३२ ॥

---

विषयो दर्शितः । क्षारं शलाकया दत्वा मात्राशतमुपेक्षेत न काञ्जिकादिना निर्वापणं कार्य्यमित्यर्थः । किम्भूतया शलाकया ? प्लोतेन चैलखण्डेन प्रावृतः स्थगितो देहः परिग्रहो यस्याः । तत्र क्षारसाध्येष्वर्शःसु क्षारपातं कृत्वा मात्राशतं यावत् तावद्धस्तेन यन्त्रमावृताननं छादितमुखं कुर्य्यात् ॥ २७ । २८ ॥

निर्भुज्येति । क्षारसाध्येषु वर्त्मरोगेषु वर्त्मनी निर्भुज्य कुटिलीकृत्य ततः क्षारस्पर्श-परिहाराय पिचुना कार्पासादिमयेन कृष्णभागं तारकप्रदेशमाच्छाद्य क्षारं विनिक्षिपेत् । तत्र च पद्मपत्रप्रमाणः क्षारलेपो देयो न गुदार्शःस्विव घनः । पद्मपत्रतनुरित्युप-मानानि सामान्यवचनैरिति समासः । घ्राणार्बुदेषु च पद्मपत्रतनुः क्षारलेपः ॥ २९ ॥

कथं तत्र लेपो देयस्तत्राह—प्रतीति । घ्राणजेष्वर्बुदेषु प्रत्यादित्यं रविसंमुखं निषण्णस्य संस्थितस्य तथा अग्रे नासिकाग्रनासिका तामुन्नम्योत्क्षिप्य । कियन्तं कालं लेपो धार्य इत्याह—मात्राः । पञ्चाशत् विधार्य्यः । वर्त्मसु चाल्पतरा मात्रा स्थानस्य सुकुमारत्वात् । कर्णजेऽर्शसि तद्वत्तेन घ्राणार्बुदेन तुल्यं स एव पद्मपत्रतनुः क्षारलेपस्ता-एव पञ्चाशन्मात्रा धार्यः ॥ ३० ॥

क्षारमिति । अनु पश्चात् क्षारलेपदाननियमितात् कालादनन्तरं क्षारं प्रमार्जनेन चैलादिना परिमृज्य शोधयित्वा सुदग्धं क्षारस्थानमर्शोर्बुदाद्यधिष्ठानमवगम्य सम्यग्दा-हलक्षणेन ज्ञात्वा तत्क्षारदग्धस्थानं घृतमधुलेपितं कृत्वा पयःप्रभृतिभिः साज्यैः सघृतैर्लेपयेत् ॥ ३१ ॥

अभिष्यन्दीनि—स्रुतिरूपक्लेदकारीणि भोज्यान्यन्नपानानि माषदध्यादीनि भोज्यानि भक्षयितव्यानि । किमर्थम् ? क्लेदनाय क्षारदग्धस्थानविशरणाय । यतः क्षारदग्धं क्लिन्नं सच्छीर्यते ॥ ३२ ॥

यदि च स्थिरमूलत्वात् चारदग्धं न शीर्य्यते ।
धान्याम्लवीजयष्ट्याह्व-तिलैरालेपयेत्ततः ।
तिलकल्कः समधुको घृताक्तो व्रणरोपणः ॥ ३३ ॥
पक्वजम्बुसितं सन्नं सम्यग्दग्धं विपर्य्यये ॥ ३४ ॥
ताम्रतातोदकण्ड्वादैर्दुर्गन्धम् तं पुनर्दहेत् ।
अतिदग्धे स्रवेद्रक्तं मूर्च्छादाहज्वरादयः ॥ ३५ ॥
गुदे विशेषाद् विण्मूत्र-संरोधोऽतिप्रवर्त्तनम् ।
पुंस्त्वोपघातो मृत्युर्वा गुदस्य शातनाद्ध्रुवम् ॥ ३६ ॥
नासायां नासिकावंश-दरणाकुञ्चनोद्भवः ।
भवेच्च विषयाज्ञानं तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७ ॥
विशेषादत्र सेकोऽम्लैर्लेपो मधु घृतं तिलाः ।
वातपित्तहरा चेष्टा सर्व्वैव शिशिरा क्रिया ॥ ३८ ॥
अम्लो हि शीतः स्पर्शेन चारस्तेनोपसंहितः ।

---

यदि च चारदग्धमभिष्यन्दिभिर्भोज्यैरुपयुक्तैः स्थिरमूलत्वाद्दृढमूलत्वाद्रोगाधिष्ठानं न शीर्य्यते ततो धान्याम्लस्य वीजमवयवविशेषस्तेन तथा मधुकतिलाभ्यामालेपयेत् तिलकल्को यष्टियुक्तो घृतान्वितो व्रणस्य रोपणः ॥ ३३ ॥

पक्वेति । पक्वजम्बूफलवदसितं कृष्णं तथा सन्नं निम्नं सम्यग्दग्धं स्थानं विद्यात् । विपर्य्यये पक्वजम्बुसितादिलक्षणविपर्य्यये तथा ताम्रतातोदकण्ड्वाद्यैरादिग्रहणात् शोफविस्फोटादिभिर्दुर्दग्धं स्थानं विद्यात् । तं तथाभूतं ज्ञात्वा पुनर्दहेत् भूयस्तत्र चारं पातयेदित्याहीयम् । अतिदग्धे सति रक्तं स्रवेत् । तथा मूर्च्छादयो जायन्त । आदिग्रहणात् विसर्पशोफोषाविस्फोटादयोऽपि ॥ ३४ । ३५ ॥

गुद इति । गुदेऽतिदग्धे विशेषेण विण्मूत्रयोः संरोधस्तथा तयोरेवातिप्रवर्त्तनं कदाचिद् भवति । विशेषग्रहणात् पूर्वोक्ता रक्तस्रावादयोऽपि । तथा पुंस्त्वोपघातः शुक्रक्षयात् कान्तागमनासामर्थ्यम् । अथवा गुदस्य शातनाद्विदारणान्निश्चयेन मृत्युर्भवति ॥ ३६ ॥

नासाय मिति । नासायां चारातिदग्धायां नासिकावंशस्य दरणाकुञ्चने उद्भवतस्तथा विषयाज्ञानं गन्धस्यावेदनं च भवेत् । तद्वत्तेन चारातिदग्धेन नासिकाविषयाज्ञानेन तुल्यं चारातिदग्धेषु श्रोत्रादिषु श्रोत्रचक्षूरसनेषु स्थानेषु विषयाज्ञानं स्यात् ॥ ३७ ॥

विशेषादिति । तस्मिन्नतिचारदग्धे विशेषेणाम्लैः काञ्जिकादिभिः सेको हितः । मधुघृततिलाश्च लेप इष्टः । तथा सर्व्वैव च शिशिरा क्रिया वातपित्तहरा इष्टा । संग्रहेचोक्तम् । पाययेतातियोगेन तं शीघ्रं सघृतं दधि । सगुड़ं वा दधिसरं तैलं वा सर्पिःतीपत्नमिति ॥ ३८ ॥

यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३९ ॥
अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसम्भवात्।
भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ४० ॥
त्वचि मांसे सिरास्नायु-सन्ध्यस्थिषु स युज्यते।
मषांगग्लानिमूर्द्धार्त्ति-मन्थकीलतिलादिषु ॥ ४१ ॥
त्वग्दाहो वर्त्तिगोदन्त-सूर्य्यकान्तशरादिभिः।
अर्शोभगन्दरग्रन्थि-नाड़ीदुष्टव्रणादिषु ॥ ४२ ॥
मांसदाहो मधुस्नेह-जाम्बवोष्ठगुड़ादिभिः।
श्लिष्टवर्त्मन्यसृक्स्राव-नीलसम्यग्व्यधादिषु ॥ ४३ ॥
सिरादिदाहस्तैरेव न दहेत्क्षारवारितान्।
अन्तःशल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ॥ ४४ ॥
सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत्।
तस्य लिङ्गं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥ ४५ ॥

---

अम्ल इति। तस्माद्धेतोः क्षारदग्धमम्लैः काञ्जिकादिभिर्निर्वापयेत्तराम्। तस्मादम्लः शीतस्पर्शेन तेन चाम्लेन क्षार उपसंहितो युक्त आश्वेव कटुकलवणभूयिष्ठतां त्यक्त्वा स्वादुतां याति। तराग्रहणमतिशयेनाम्लैर्निर्वापयेत् देशसात्म्यानुरोधात् कदाचित् क्षीरादिभिरपीति गमयति ॥ ३९ ॥

अग्निरिति। क्षारादप्यग्नेः प्रशस्यतरत्वम्। कुतः ? तेनाग्निना दग्धानां रोगाणामर्शःप्रभृतीनामसम्भवात्। भूयोऽग्निदग्धो रोगः प्ररोहं न याति। मूलादुन्मूलनादित्यर्थः। भेषजक्षारशस्त्रैश्च ये रोगा न शान्तास्तेषां प्रसाधनाज्ज्वलनो ज्यायान् ॥ ४० ॥

त्वचीति। सोऽग्निदाहस्त्वगादिषु युज्यते। तत्र मषादिषु रोगेषु त्वग्दाहः कार्य्यो वर्त्त्यादिभिः। वर्त्तिः पिचुवर्त्तिः। आदिग्रहणादन्येष्वपि क्षुद्ररोगाध्यायोक्तेषु त्वग्दाहो योज्यः। सिरादिभिरित्यादिग्रहणादन्यैरपि देशान्तरप्रसिद्धैस्त्वग्दाहः कार्यः ॥ ४१ ॥

अर्श इति। अर्शःप्रभृतिषु रोगेषु मधुस्नेहादिभिर्मांसदाहः कार्यः। आदिग्रहणेनार्बुदगण्डमालादयो गृह्यन्ते। तत्र कदाचिन्मधुना कदाचित् पृथक्स्नेहैः कदाचिज्जाम्बवौष्ठेन। जाम्बवोष्ठः शलाकाविशेषो यन्त्रविधावुक्तो येन क्षारो दीयते। कदाचिद्गुड़ेन कदाचिदेवंप्रायेणान्येनापि देशविशेषप्रसिद्धेन। तैरेव श्लिष्टवर्त्मादिषु सिरादाहः कार्य्यः। तैरेव मधुस्नेहादिभिः। क्षारवारितान्न दहेत्। न केवलं येषु क्षारो वारितस्तान्दहेद्यावदन्तःशल्यं तथान्तर्लोहितं येषां तान् ॥ ४२—४४ ॥

सुदग्धमिति। सुदग्धमग्निना रोगाधिष्ठानं ज्ञात्वा घृतमधुभ्यामभ्यक्तं कृत्वा स्निग्धशीतैर्मधुयष्टिशालिमूलादिभिः प्रलेपयेत्। तस्येत्यनेन सुदग्धं स्थानं परामृश्यते। तस्य

पक्वतालकपोताभं सुरोहं नातिवेदनम् ।
प्रमाददग्धवत् सर्व्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४६ ॥
चतुर्धा तत्तु तुत्थेन सह तुत्थस्य लक्षणम् ।
त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ४७ ॥
सस्फोटदाहतीव्रोषं दुर्दग्धमतिदाहतः ।
मांसलम्बनसंकोच-दाहधूपनवेदनाः ।
सिरादिनाशस्तृष्णमूर्च्छा-व्रणगाम्भीर्य्यमृत्यवः ॥ ४८ ॥
तुत्थस्याग्निप्रतपनं कार्यमुष्णं च भेषजम् ॥ ४९ ॥
स्त्यानेऽस्त्रे वेदनात्यर्थं विलीने मन्दता रुजः ।
दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम् ॥ ५० ॥

---

सुदग्धस्य स्थानस्य लिङ्गं लक्षणं स्थिते रक्ते दह्यमानावस्थाप्रवृत्तासृजि निवृत्ते सति शब्दवद्द् दशब्दवत् स्थानं भवेत् तथा लसिकान्वितम् । लसिका कुशशस्त्रादिविक्षते प्रथमं या दृश्यते जललवाकृतिः । तथा पक्वतालसदृशम् । सुखेन रोहति—सुरोहम् । तथा नातिवेदनं नातितीव्ररुक् । दुर्दग्धात्यर्थदग्धयोः प्रमाददग्धेन तुल्यं सर्व्वं लक्षणं बोध्यम् ॥ ४५ । ४६ ॥

न च लक्षणमन्तरेणैतत्सम्यग् ज्ञायत इति तल्लक्षणार्थं भेदान्तरदर्शनार्थमाह । चतुर्धेति । तत्प्रमाददग्धं चतुष्प्रकारम् । कथम्? तुत्थेन तुत्थदग्धलक्षणेन सह । अविमृष्यदग्धं हि कदाचित्सम्यग्दग्धलक्षणं कदाचिद्दुर्दग्धलक्षणं कदाचिदतिदग्धलक्षणं कदाचिच्च तुत्थदग्धलक्षणं स्यात् । तुत्थस्य तुत्थदग्धस्य लक्षणमिति कार्य्ये कारणमुक्तम् । त्वगित्यादि त्वग्विवर्णा सत्यत्यर्थमुष्यते रुज्यते न च स्फोटानां समुद्भूतिरिति तुत्थदग्धस्थानस्य लक्षणम् । यत्किञ्चिन्मात्रमेवाग्निना स्पृष्टं तत्तुत्थदग्धमित्युच्यते ॥ ४७ ॥

यत्र प्रदेशे स्फोटानामुद्भवो दाहयुक्ता तीव्रा उषा जायते तद्दुर्दग्धं रोगाधिष्ठानं विद्यात् । अतिदाहाद्रोगाधिष्ठानस्य मांसलंबनादयः स्युः । सङ्कोचः सिरादीनाम् । धूपनं धूमापनम् । वेदना रुजा । सिरादीनां नाशो व्यापदः । व्रणगाम्भीर्यं गम्भीरव्रणता । मृत्युर्मरणं च । सम्यग्दग्धलिङ्गं तूक्तमेव तस्य लिङ्गं स्थिते रक्तइत्यादिना तस्मात् तत्पुनर्न निर्द्दिष्टम् ॥ ४८ ॥

अधुना चतुर्व्विधस्यास्य चिकित्सितमाह । तुत्थस्येति । तुत्थदग्धस्याग्निना प्रतपनं कार्यम् । तथोष्णं भेषजमौषधम् । रक्तस्य विलयनार्थमेतत् । यतो हि तुत्थदग्धे त्वक्श्यं स्त्यानमसृग्भवतीति युक्त्या प्रतिपादयन्नाह ॥ ४९ ॥

स्त्यान इति । लोहिते स्त्याने सत्यतिशयेन रुग्भवति । विलीने रक्ते पीड़ाया मन्दता मन्दत्वं भवति । अतोहि तुत्थदग्धेऽग्निप्रतपनं योज्यम् । शीतमुष्णञ्च पर्यायेणौषधं वस्त्रादौ प्रथमं भेषजं युञ्ज्यात् ॥ ५० ॥

सम्यग्दग्धे तुगाक्षीरि-प्लक्षचन्दनगैरिकैः ।
लिंपेत्साज्यामृतैरूर्द्ध्वं पित्तविद्रधिवत्क्रिया ॥ ५१ ॥
अतिदग्धे द्रुतं कुर्य्यात् सर्व्वं पित्तविसर्पवत् ।
स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ५२ ॥
समाप्यते स्थानमिदं हृदयस्य रहस्यवत् ।
अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥ ५३ ॥

इत्यष्टाङ्गहृदये सूत्रस्थाने त्रिंशोऽध्यायः ॥ ३० ॥

इति वैद्यपतिसिंहगुप्तसूनुवाग्भट्टविरचितायामष्टाङ्गहृदय-
संहितायां प्रथमं सूत्रस्थानम् ॥

---

सम्यगिति । सम्यग्दग्धे तुगाक्षीर्य्यादिभिर्लेपयेत् । किम्भूतैः ? साज्यामृतैर्घृतं त-गुड़ूचियुक्तैः । आदावित्यनापि योज्यम् । आदौ तैर्लेपयेदूर्द्ध्वं मनन्तरं पित्तविद्रधिवत् क्रिया कार्य्येति शेषः । अतिदग्धे द्रुतं शीघ्रमेव सर्वं वहिरन्तश्च भेषजं पित्तविसर्प इव कुर्य्यात् । स्नेहदग्धेऽतितरां रूक्षं योजयेत् भृशतरं रूक्षं चात्र भेषजं तत्र तु योजयेत् । तु शब्दान्न केवलं भृशतरग्रहणाच्च बाहुल्येन रूक्षं प्रलेपादि तत्र योजयेत् किन्तु देहदेशादि-सात्म्यवशात् स्निग्धमपि यथावस्थं यथावत् योजयेत् ॥ ५१ । ५२ ॥

वक्तव्यं यदस्तु तस्य सर्व्वस्योक्तत्वादिदं स्थानं समाप्यते निष्पाद्यते । किम्भूतं स्थानम् । रहस्यवत् रहस्यमर्थं गुह्यरूपं तदस्यास्ति तद्रहस्यवत् । कस्य स्थानम् । हृदयस्य । हृदयमिव हृदयम् । हृदयशब्देनाष्टाङ्गहृदयमुपलक्ष्यते यथा सत्यभामा भामेति । कुत एतत् स्थानं रहस्यवदित्याह । यस्मादत्र स्थाने अर्थाः सूत्रिताः सूचिताः सूचनमात्रेणोक्ताः । किम्भूताः । सूक्ष्मा दुर्ज्ञानतरमतिसमभिगम्याः । यतस्त एवार्थाः सर्व्वस्मिंस्तन्त्रे प्रतन्यन्ते विस्तार्यन्ते । अस्मादिदं स्थानं तन्त्रसम्बन्धिनामन्यस्थानानां रहस्यवदित्युक्तमिति ॥ ५३ ॥

इति श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-
सुन्दराख्यायां क्षाराग्निकर्म्मविधिरध्यायः त्रिंशः ॥ ३० ॥

---

# अष्टाङ्गहृदयम्।

## शारीरस्थानम्।

### प्रथमोऽध्यायः।

अथातो गर्भाऽवक्रान्ति शारीरं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशनोदितः।

---

अथ सूत्रस्थानादनन्तरं शारीरस्थानमिदमारभ्यते। तत्रायं सम्बन्धः, पूर्वस्मिन् स्थाने कायादीन्यष्टावङ्गानि चिकित्सासाधनभूतानि सकलतन्त्रसारभूतानि सूत्रितानि कायबालेत्यादिना ग्रन्थेन। कायश्च निजागन्तूनां व्याधीनामधिष्ठानम्। तस्य च कायस्य चतुर्वर्गसाधनस्य पालनार्थं हेतुलिङ्गौषधस्कन्धभेदेन त्रिस्कन्धोऽयं ग्रन्थो ग्रन्थकृता प्रणीतः। ततश्च कायस्य प्रथमं सूत्रितत्वात् प्राधान्याच्च प्राक् सूत्रस्थानादनन्तरं शारीर-स्थानमिदमारभ्यत इत्याह,—अथात इति। शरीरमधिकृत्य कृतो ग्रन्थः शारीरः। गर्भाव-गर्भस्यावक्रान्तिरवक्रमणं सम्प्राप्तिः, यथा अगर्भो गर्भतां सम्पद्यत इत्यर्थः। तस्याऽध्यायाऽनुवाकयोर्लुगिति क्रान्तिर्विद्यते यस्मिन् अध्याय इति मत्वर्थे छप्रत्ययः। व्याख्याता एव ॥ १ ॥
लुक्। अथादिशब्दादीनामर्था आयुष्कामीयाध्याये स्त्रीणां यदपत्यमार्गाच्छुद्ध-

शुद्धे इति। शुक्रमन्त्यो धातुः; ऋतौ भवमार्त्तवम्; शुक्रं चार्त्तवञ्च शुक्रा-मीषत्कृष्णं विगन्धञ्च वायुप्रेरितं लोहितं प्रवर्त्तते तदार्त्तवमुच्यते। र्त्तवं, पित्रोः सम्बन्धि गर्भबीजं, तस्मिन् शुक्रार्त्तवे शुद्धे वातादिभिरदूषितेऽधिष्ठानभूते सत्त्वो जीवो गर्भः सम्पद्यते। किल नासौ गर्भः, अथच गर्भतामासादयति। कीदृशः सत्त्वः ? स्वकर्मेत्यादि। कर्माणि पूर्वजन्मार्जितानि शुभाशुभानि, स्वानि च तानि

गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ २ ॥
बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्त्वानुगैश्च सः।
मातुश्चाहाररसजैः क्रमात् कुक्षौ विवर्द्धते ॥ ३ ॥

---

कर्माणि, क्लेशयन्ति लोकान् दुःखयन्तीति क्लेशाः, ते चाविद्याऽस्मितारागद्वेषाभिनिवेशाः। अतथावस्तुनि तथेति ख्यातिरविद्या। अहमस्मीत्यभिमानोऽस्मिता। एकानेकदर्शनशक्त्योरेकात्मताऽस्मिता। सुखानुशायी रागः। दुःखानुशायी द्वेषः। स्वरसवाही विदुषोऽपि तथा गूढोऽभिनिवेशः (१)। स्वकर्माणि च क्लेशाश्च स्वकर्मक्लेशास्तैर्नोदितः प्रेरितो गर्भः सम्पद्यते नतु कर्मक्लेशवियुक्तः। अतएव वीतरागाणां जन्मासम्भवः कर्मक्लेशरहितत्वात्। तथाचोक्तम्,—"चित्तमेव हि संसारि रागादिक्लेशदूषितम्। तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते" इति। अथ किं शुद्धे शुक्रार्त्तवे स्वकर्मक्लेशनोदित एव गर्भः सम्पद्यते, अथ वा अन्यदपि किञ्चिदपेक्षत इत्याह,—युक्तिवशादि। योजनं युक्तिरुपादेयस्यार्थस्येतिकर्त्तव्यतासाधनोपायार्थम्। युक्तेर्वशः सामर्थ्यं प्रभावो युक्तिवशस्ततः शुद्धे शुक्रार्त्तवे स्वकर्मक्लेशनोदित एव स सत्त्वो गर्भः सम्पद्यते नान्यथा। कथमित्याह,—अग्निरिवारणौ। तथाहि, मथ्यमन्थन-मन्थानादिसामग्रीमन्तरेणारणावग्निर्यथा न जायते, तथा गर्भोऽपि यथोक्तसामग्रीवैकल्यात् न भवति। सकलसामग्रीसद्भावादेव भवतीति भावः॥ २॥

तदेवं गर्भस्य सम्पत्तिमभिधाय यथा तस्य कुक्षौ वृद्धिः स्यात् तथा वक्ति,—बीजेति। बीजात्मकैर्गर्भजननसंमुखभावैः शुक्रार्त्तवरूपतः परिणतैः। कैः? महाभूतैराकाशादिभिः सत्त्वरजस्तमोमयैः। तत्र सत्त्वबहुलमाकाशम्। तमोरजोबहुलो वायुः, सत्त्वरजोबहुलोऽग्निः; सत्त्वतमोबहुला आपः; तमोबहुला पृथ्वी; इत्येवं रूपैः स गर्भः कुक्षौ विवर्द्धते विशेषेण वृद्धिं याति। किम्भूतैः? सूक्ष्मैरतीन्द्रियैर्योगिदृश्यैः, तथा सत्त्वं चेतोऽनुगच्छन्ति सत्त्वानुगानि तैः। यत्र सत्त्वं तिष्ठति तत्रावश्यं तान्यपि तिष्ठन्ति सत्त्वानुशायित्वात् तेषाम्। तथा चोक्तम्,—अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचित् न वियुक्तपूर्वः" इत्यादि। चशब्दो हेतुसमुच्चयार्थः। न केवलं महाभूतैर्हेतुभूतैर्गर्भो विवर्द्धते यावन्मातुश्चाहाररसजैरित्यतो वक्ष्यमाणाद्धेतोरपि वर्द्धत इत्यर्थः। मातुरित्यादि। मातुः सम्बन्धिभिराहाररसजैश्च कुक्षौ विवर्द्धते। चशब्दोऽत्रानुक्तसमुच्चयार्थः। न केवलं पूर्वोक्ताद् यथा निर्दिष्टाद्धेतोर्गर्भः कुक्षौ विवर्द्धते यावदनिर्दिष्टादपि मातुः सौमनस्यादेः कललार्बुदपेश्याद्यवस्थाभावेन विशेषतो वृद्धिं यातीति। कथं वर्द्धत इत्याह, क्रमात् न झटित्येव। ननु मातुश्चाहाररसजैरिति कथमुक्तम्? यतः पञ्चभूतात्मक एवाहाररसो न च यदात्मकोऽसौ स तस्यैव जन्मकारणं भवितुमर्हत्यव्यतिरिक्तत्वात्। तस्मादेवमयं व्याख्यातव्यः। आहाररसे जातैराहाररसजैः। सप्तम्यन्तादुपपदाज्जनेर्डः। मातुराहाररसात्मना परिणतैरिति॥ ३॥

---

(१) अभिनिवेशस्त्रास इति वाचस्पतिमिश्रः।

तेजो यथार्करश्मीनां स्फटिकेन तिरस्कृतम् ।
नेन्धनं दृश्यते गच्छत् सत्वो गर्भाशयं तथा ॥ ४ ॥
कारणानुविधायित्वात् कार्य्याणां तत्स्वभावता ।
नानायोन्याकृतीः सत्वो धत्तेऽतो द्रुतलोहवत् ॥ ५ ॥
अतएव च शुक्रस्य बाहुल्याज्जायते पुमान् ।

---

ननु सत्वः कुक्षौ प्रविष्टो गर्भतामाप्नोतीत्युक्तं न चास्य प्रवेश उपलभ्यत इत्यत्राह,— तेज इति । न केवलं दृश्यत्वादृश्यत्वाभ्यां वस्तुसद्भावासद्भावौ व्यवस्थाप्येते येनादृश्यत्वात् सत्वस्य कुक्षौ प्रवेशासम्भवः । किं तर्हि, तत्कार्य्यान्यथानुपपत्यापि वस्तुसद्भावो व्यवस्थाप्यत एव । यथाऽर्करश्मीनां सम्बन्धि तेजः स्फटिकेन सूर्य्यकान्ताख्येन तिरस्कृतं व्यवहितं स्फटिकस्याधस्तात् स्थितमिन्धनं गच्छत् व्रजत् न दृश्यते । अथच तेजःकार्य्यमिन्धनगतं दृश्यते, नान्यसम्बन्धि कार्य्यम् । तदेवं तेजःकार्य्यान्यथानुपपत्त्या तेजस इन्धनगमनं, तथा तत्र तस्य सद्भावोऽप्यधिगम्यते । एवं सत्वो गर्भाशयं गच्छन् व्रजन् न दृश्यत एव । वस्तु-प्रभावाद् गच्छति च । सत्वशब्द उपलक्षणार्थो महाभूतान्यपि तदन्तर्गतानि न दृश्यन्त एव, अथ च कार्य्येणोपलभ्यन्त एव । तदेवं सत्वानुयायिभिर्महाभूतैर्गर्भः कुक्षौ विवर्द्धते, न तु केवलैः सत्वानधिष्ठितैः । चेतोऽवक्रान्त्या हि क्रमात् कललादिना वस्तुजातं विवृद्धिं विपुलतामापद्यते नान्यथा मृतशरीरवत् ॥ ४ ॥

ननु सत्वो भूतानुग एकरूप एव कथमनेकजात्याकृत्या नरतुरगोरगगजगवयादिमत्या आलिङ्गितः सम्पद्यत इत्यस्मिन् पर्य्यनुयोग इदमाह,—कारणेति । कारणं हेतुमवश्य-मनुविदधातीति कारणानुविधायीनि । आवश्यके णिनिः । कारणस्वभावानि कार्य्याणि भवन्ति सर्व्वाण्येव, तस्माद्धेतोः कार्य्याणां तत्स्वभावता । स्वभावशब्दः सदृशार्थः । तच्छब्देन कारणं परामृश्यते ; तस्य कारणस्य स्वभावता तत्सादृश्यम् । तस्मात् कार्य्य-कारणसादृश्याद्धेतोः सत्वो महाभूतानुग एकरूप एवानेकरूपनानायोन्याकृतीः प्रतिविम्ब-विशेषान् धत्ते धारयति । कथमिव ? द्रुतलोहवत् । यथाहि, रूप्यादिवस्तुजातमग्निना द्रुतरूपतां गतमेकरूपमेव सिकतादिकल्पितायां नानारूपायां मनुष्याद्याकृतौ निषिक्तं तां तां आकृतिं यथाकल्पितां धत्ते, एवं स सत्वो नानायोनौ गच्छन् तां तां यथास्वमाकृतिं धारयति ॥ ५ ॥

अत इति । अतएव च पूर्व्वोक्तात् कार्य्यकारणसादृश्याद्धेतोः शुक्रस्य पुंरेतसो बाहु-ल्याद् बहुत्वात् सामर्थ्यलभ्यत्वाच्च स्त्रीरेतसो रजसोऽल्पत्वात् पुमान् जायते न स्त्री, तथा-विधस्य कारणस्याभावात् ; तथा पूर्व्वोक्तात् कार्य्यकारणसादृश्यात् स्त्रीरेतसो रक्तस्य बाहुल्याद् बहुत्वात् सामर्थ्यलभ्यत्वाच्च पुंरेतसोऽल्पत्वात् स्त्री जायते न पुमान्, तथाविधस्य कारणस्याभावात् । पुंरेतो हि बलवदल्पं स्त्री रजोऽभिभूय पुङ्गर्भस्य कारणतां याति । यदा तु स्त्रीरजसो बलवत्त्वमल्पत्वञ्च पुंरेतसस्तदा स्त्रीरजोऽल्पन्तु पुंरेतोऽभिभूय स्त्री-रूपाख्यस्य गर्भस्य कारणतामापद्यते । यदा तु शुक्रार्त्तवयोः साम्यं तुल्यत्वं भवति तदा

रक्तस्य स्त्री तयोः साम्ये क्लीबः शुक्रार्त्तवे पुनः ।
वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ॥ ६ ॥
वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ॥ ७ ॥
मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ८ ॥

---

न स्त्री पुमान् जायते, अपितु लिङ्गद्वयालिङ्गितः क्लीबः षण्डो जायते। एवं पितुः सम्बन्धि शुक्रं स्त्रीरक्तमिश्रितं गर्भकारणं, न केवलं पितृसम्बन्ध्येव मातुर्वा। दारुवाहिना तूक्तम्,—"स्त्रीपुंसयोः सुसंयोगे यद्यादौ विसृजेत् पुमान्। शुक्रं ततः पुमान् वीरो जायते बलवान् दृढः। अथ चेद् वनिता पूर्वं विसृजेद्रक्तसंयुतम्। ततो रूपान्विता कन्या जायते दृढसंहता" इति। अतएव च पुङ्गर्भाः केचित् किञ्चिन्मातृसदृशा दृश्यन्ते, स्त्रीगर्भाश्च केचित् किञ्चित् पितृसदृशा दृश्यन्ते। ननु रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च। अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रजायते इत्यविशिष्य निर्दिष्टम्। ननु पुंशुक्रात् गर्भः प्रजायते इत्येवं निर्दिष्टम्, उभयोरपि च स्त्रीपुंसयोरवश्यं सप्तधातुकत्वमभ्युपगन्तव्यं नतु पुंस एव। तदेवं तरुणीनां कुसुमशराक्रान्तमानसानां तथाविधेन पुरुषसंयोगेन विनापि केवलात् स्मृतिसंस्पर्शदर्शनाच्चलितप्रस्तुतरेतसां किमिति गर्भो न जायते। शुक्रार्त्तवं हि गर्भकारणम्; तच्च सन्निहितमेवेति केचित्। तान् ब्रूमहे,—पुंशुक्राभावात्। पुंशुक्रं हि स्त्रीरेतोरक्तयुक्तं गर्भकारणम्। न च तदत्रास्ति। तदभावाद् गर्भस्यानुत्पत्तिः। तथा च संग्रहेऽप्यध्यगीष्ट,—"योषितोऽपि स्रवन्त्येव शुक्रं पुंसः समागमे। गर्भस्य तु न तत् किञ्चित् करोतीति न चिन्त्यते" इति। साम्प्रतं यथाऽनेकगर्भत्वं तुल्यकालं स्यात् तथा प्रतिपादयितुमाह,—शुक्रेति। वातेन यथास्वं शुक्रार्त्तवे बहुशो भिन्ने बहुधाकृते सति बह्वपत्यता भवति। यथास्वमिति। यदा शुक्रमाधिक्येन वर्त्तमानं वातेन बहुधा भिद्यते, तदा पुंगर्भानेकत्वम्। यदा तु स्त्रीरज आधिक्येन वर्त्तमानं वायुना बहुधा भिद्यते, तदा स्त्रीगर्भानेकत्वम्। इति बह्वपत्यता भवति। शूकरसारमेयादिजातिषु त्वनेनैव हेतुना सदाऽनेकापत्यता ॥ ६ ॥

ननु कथं वियोनयो विकृताकाराश्च गर्भाः स्युरित्याह,—वियोनीति। वियोनयश्च विकृताकाराश्च वियोनिविकृताकारास्ते तथाविधा गर्भा जायन्ते। कथमित्याह,—विकृतैर्मलैः। वातादिभिर्दुष्टैरुन्मार्गगामिभिः ॥ ७ ॥

मासीति। स्त्रीणां मासि मासि प्रतिमासं रजोरक्तं त्र्यहं स्रवति त्रीणि दिनानि प्रवर्त्तते। ननु शुद्धे शुक्रार्त्तवे इति पूर्वं शुक्रमेवोद्दिष्टं ततस्तस्यैव निर्देशो न्याय्य इति शुक्रमानुपूर्वीप्राप्तमुल्लङ्घ्य कस्माद् रक्तं निर्दिष्टम्? उच्यते, बहुवक्तव्यत्वात्। रक्ते हि बहुवक्तव्यमस्ति, अतस्तदेव प्राग्वक्तुं युक्तम्। त्र्यहमिति कालाध्वनोरिति द्वितीया। किं तत् रजः? रसाज्जातं रसजम्। ननु रक्तं रसजमेव। वक्ष्यति हि,—"रसाद् रक्तं ततो मांसम्" इत्यादि, तत् किमर्थं रसजमित्युक्तम्? ब्रूमहे,—रसादाहाररसात् परिणमतो जातं रसजमित्यत्र निर्दिष्टं न तु रसधातोरित्यचोद्यमेतत्। कुतः प्रभृति तद्रजः

पूर्णषोड़शवर्षा स्त्री पूर्णविंशेन सङ्गता।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥ ९ ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ १० ॥
वातादिकुणपग्रन्थि-पूयक्षीणमलाह्वयम्।
वीजासमर्थं रेतोऽस्रं स्वलिङ्गैर्दोषजं वदेत ॥ ११ ॥

---

प्रवर्त्तेत इत्याह,—वत्सरादित्यादि। द्वादशाद्वर्षादूर्ध्वमनन्तरं स्रवति। पञ्चाशतो वर्षादूर्द्ध्वं परेण क्षयं याति। द्वादशानां पूरणं वर्षमिति तस्य पूरणे डडिति डट्। द्वादशादिति प्रायिकमेतत्, एकादशवार्षिकाणामपि स्त्रीणां रक्तप्रवृत्तिदर्शनात्। पञ्चाशतः क्षयमित्याचाप्येवमेव चिन्त्यम् ॥ ८ ॥

पूर्णेति। पूर्णानि षोड़शवर्षाणि यस्याः सेवम्विधा स्त्री पूर्णविंशेन नरेण सङ्गता मिथुनतां याता सती गर्भाशयादिषु शुद्धेषु वीर्यवन्तं सामर्थ्ययुक्तं पुत्रं सूते जनयति। प्रायिकं चेतदर्वागपि साधुगर्भदर्शनात्। अतएवायमेव तन्त्रकारोऽन्यथा संग्रहे जगाद ;—"षोड़शवर्षायाः पञ्चविंशतिवर्षः पुत्रार्थं यतेत" इति। विंशतेः पूरण इति डटिति विंशतेरिति तिलोपे विंशशब्दः। पूर्णो विंशो यस्येति पूर्णविंशः। गर्भस्याशयो गर्भाशय स्तस्मिन् शुद्धे निर्म्मले वातादिभिरदुष्टे। तथामार्गे प्रकृतत्वादपत्यमार्गे वातादिभिरदुष्टे। तथा रक्ते स्त्रीरजसि शुद्धे। तथा शुक्रे पुम्बीजे शुद्धे। तथाऽनिले शुद्धे पित्तादिभिरनाहृते। तथा हृदि शुद्धे दोषानधिष्ठितेऽसन्तप्ते। तत इति। ततः पूर्वोक्तात् वयःपरिमाणात् न्यूनाब्दयोर्हीनवर्षयोः स्त्रीपुरुषयोः पञ्चदशाष्टादशवर्षयो रोगी भवति। रोगीत्यतिशये इनिर्मत्वर्थीयः। तथोत्पन्नोऽल्पायुरधन्यश्चाप्रशस्तो गर्भो भवति न भवत्येव वा ॥ ९। १० ॥

ननु दम्पत्योः शुक्रार्त्तवसंयोगेऽपि सति क्वचिद्द गर्भसम्भूतिर्न दृश्यते तत् कथमेतदित्याशङ्कायामाह ;—वातादीति। आदिशब्देन पित्तश्लेष्मणोः परिग्रहः। वातादयश्च कुणपश्च ग्रन्थिश्च पूयश्च क्षीणश्च मलश्चेति द्वन्द्वः। एतान्याह्वयः संज्ञा यस्य रेतोऽस्रस्य तदेवं। आह्वयशब्दः प्रत्येकं वातादिषु योज्यः। रेतश्चास्रञ्च रेतोस्रं वाताद्याह्वयम्। वातसंज्ञं शुक्रं वातशुक्रम्। एवं पित्तशुक्रं कफशुक्रम्। एवं कुणपगन्धित्वात् कुणपं नाम शुक्रं कुणपशुक्रं तद्द रक्तेन दुष्टेन भवति। एवं ग्रन्थिशुक्रं पूयशुक्रं क्षीणशुक्रम्। मलाह्वयन्तु द्विधा मूत्रपूरीषभेदात्। मूत्रसदृशं शुक्रं मूत्रशुक्रम्। एवं पुरीषशुक्रम्। आर्त्तवमपि शुक्रवद्दोषदूषितमवीजमेव। तस्य लिङ्गं नाम च शुक्रवद्वेद्यम्। यथा;—वातार्त्तवं पित्तार्त्तवमित्यादि यावत् पुरीषार्त्तवमिति। साध्यासाध्यविभागश्च तद्वदेव। शुक्रार्त्तवदोषेषु च चिकित्सामपि तुल्यां ब्रूते। यत्र तु विशेषं वक्ष्यति तत्र विशेषमभिधास्यति। स्वलिङ्गैरिति। स्वानि च तानि लिङ्गानि यथा,—"पिबेद्द ग्रन्थ्यार्त्तवे पाठा" इत्यादि। यथा रूक्षश्यावारुणादीनि लक्षणानि च स्वलिङ्गानि यथास्वं वातादीनां स्वरूपाणि।

रक्तेन कुणपं श्लेष्मवाताभ्यां ग्रन्थिसन्निभम् ।
पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः ॥ १२ ॥
कृच्छ्राण्येतान्यसाध्यन्तु त्रिदोषं मूत्रविट्प्रभम् ।
कुर्याद् वातादिभिर्दुष्टे स्वौषधं कुणपे पुनः ॥ १३ ॥
धातकीपुष्प-खदिर-दाड़िमार्जुनसाधितम् ।
पाययेत् सर्पिरथवा विपक्वमसनादिभिः ॥ १४ ॥

---

वायोः । विस्रगन्धोष्णादीनि पित्तस्य । स्निग्धपाण्डुपिच्छि...न कफस्य । तैः स्वलिङ्गैर्वातादिदोषजं वदिज्जानीयाद् वैद्य इति शेषः । रक्तेन दुष्टेन कुणपगन्धित्वात् कुणपं कुणपसंज्ञमन्वर्थं रेतोऽसं भवति । एवं ग्रन्थ्यादीनामप्यन्वर्थसंज्ञता बोध्या । श्लेष्म-वाताभ्यां दुष्टाभ्यां ग्रन्थिसन्निभं ग्रंथ्याकारम् । रक्तपित्ताभ्यां पूयसदृशं रेतोऽस्रं पूयाख्यं भवति । क्षीणं नाम रेतोऽस्रं मारुतपित्ततो भवति । मारुतपित्ताभ्यां दुष्टाभ्यां दुष्टं तद्दूषणात् क्षीणतां नीतमित्यर्थः ॥ ११ । १२ ॥

कृच्छ्राणीति । पूर्वोक्तानीमानि वातादिशुक्रार्त्तवाणि क्षीणशुक्रार्त्तवान्तानि कृच्छ्र-साध्यत्वात् कृच्छ्राणि । असाध्यं त्विति । मूत्रञ्च विट् च मूत्रविशौ । तयोरिव प्रभा यस्य तदेवं ; रेतोस्रमुभयमपि मलसंज्ञं त्रिदोषदुष्टमसाध्यं साधयितुमशक्यम् । इदानीमुपक्रममाह ;—कुर्यादिति । स्वमात्मीयञ्च तदौषधञ्च स्वौषधम् । वाता-द्यौषधमित्यर्थः । तेन वायोः कुपितस्य यदौषधं प्रशमोपायः स्निग्धोष्णाम्ललवणादि । पित्तस्य मधुरशीतकषायादि । श्लेष्मणः कटुक-रूक्ष-कषायादि, तत्तस्य भेषजमित्यवतिष्ठते । विशेषतस्तु वातजे शुक्रदोषे यव-सुक्तसैन्धव-कटूषणाम्ल-लवण-क्षारप्रतीवापं सर्पिःपानम् । विल्वविदारीसिद्धं क्षीरयुक्तमास्थापनम् । मधुभद्रदारुसिद्धं तैलमनुवासनम् । क्षीर-कुलीररससिद्धं तैलमनुवासनमुत्तरवस्तिश्च । पैत्तिके काण्डेक्षु-श्वदंष्ट्रा-गुडूची क्वाथसिद्धं मूर्व्वा-मधुक-प्रतीवापं सर्पिःपानम् । त्रिवृच्चूर्णः सघृतो विरेकः । पयस्या-श्रीपर्णीसिद्धं क्षीरयुक्तमास्थापनम् । मधुकमुद्गपर्णीसिद्धं तैलमनुवासनमुत्तरवस्तिश्च । श्लैष्मिके पाषाणभेदाश्मन्तकामलकक्वाथसिद्धं पिप्पलीमधुकचूर्णप्रतीवापं सर्पिःपानम् । मदनफलकषायो वमनम् । दन्तीविड़ङ्गचूर्णस्तैललीढ़ो विरेकः । राजवृक्षमदनफल-कषायप्रगाढ़मास्थापनम् । मधुकपिप्पलीसिद्धं तैलमनुवासनमुत्तरवस्तिश्च । वातजे पुष्पदोषे भार्गीभद्रदारुसिद्धं सर्पिःपानम् । काश्मर्य्यक्षुद्रसहासिद्धं वा क्षीरं मधुका-श्रगालविन्नाकल्कं पयःसर्पिःसहितं प्रियङ्गुतिलकल्कं वा योनौ धारयेत् । सरलमुद्ग-पर्णीकषायः प्रक्षालनम् । पित्तजे काकोलीद्वय-विदारीमूल-क्वाथमुत्पलपद्मक्वाथं मधुकपुष्पकाश्मर्य्यफलक्वाथं वा सशर्करं पिबेत् । श्वेतचन्दनक्वाथं वा सक्षौद्रमित्यादिकं संग्रहे बोध्यम् । इदानीं कुणपचिकित्सामाह,—कुणपे इति । कुणपाह्वये तु रेतसि धातक्यादिद्रव्यसाधितं घृतं पाययेत् वैद्य इति शेषः । अथवाऽसनादिभिरसनादिगणो-द्दिष्टैर्भेषजैर्विपक्वं घृतं पाययेत् । ननु कुणप इति सामान्योक्तावपि कथं रेतसीति

पलाशभस्माश्मभिदा ग्रन्थ्याभे पूयरेतसि।
परूषकवटादिभ्यां क्षीणे शुक्रकरी क्रिया ॥ १५ ॥
स्निग्धं वान्तं विरिक्तञ्च निरूढमनुवासितम्।
योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिभिः ॥ १६ ॥ *
संशुद्धो विट्प्रभे सर्पिर्हिङ्गुसेव्यादिसाधितम्।
पिबेत् ग्रन्थ्यार्तवे पाठा-व्योषवृक्षकजं जलम् ॥ १७ ॥
पेयं कुणपपूयास्रे चन्दनं वक्ष्यते तु यत्।

---

विशेषो लभ्यते। ब्रूमः, रेतःप्रकरणात्। अपिच कुणपास्रस्य पुरस्तादुपक्रमं वक्ष्यति। पेयं कुणपपूयास्र इति। तस्माद्रेतस एवेह ग्रहणं युक्तम्। पुनर्ग्रहणमत्र वातादिदुष्टे रेतस्यस्योक्तां क्रियां न कुर्यादिति द्योतयति ॥ १३ । १४ ॥

साम्प्रतं ग्रन्थिसंज्ञे रेतस्युपक्रमं ब्रूते,—पलाशेति। पलाशस्य भस्म पलाशभस्म। अश्मभित् पाषाणभेदः, पलाशभस्म च अश्मभिच्च तेन विपक्वं घृतं ग्रन्थ्याभे ग्रन्थिनाम्नि रेतसि पाययेत्। पूयेति। पूयाख्ये रेतसि परूषकवटादिभ्यां विपक्वं घृतं पाययेत्। परूषकश्च वटश्च परूषकवटौ तावादी ययोस्तौ परूषकवटादी ताभ्याम्। परूषकं वराद्राक्षेति परूषकादिः, तथा न्यग्रोधपिप्पलेति वटादिः। क्षीण इति। क्षीणं क्षीणत्वात् क्षीणाह्वये रेतसि शुक्रकरी क्रिया कार्येति शेषः। शुक्रलमतिशयेन सेव्यमित्यर्थः ॥ १५ । १६ ॥

संशुद्ध इति। संशुद्धः कृतवमनविरेचनो विट्प्रभे मलसदृशे रेतसि आतुरो घृतं पिबेत्। किम्भूतम्? हिङ्गुसेव्यादिसाधितम्। अत्रादिशब्दो व्यवस्थावाची; तेन संग्रहोक्तस्य हिङ्गूशीर-चित्रक-प्रियङ्गु-समङ्गा-मृणालसिद्धं त्वगेलाचोचचूर्णप्रतीवापमित्यस्य पाठस्य सूचना भवति। हिङ्गुसेव्याग्निसाधितमित्यपरे पेठुः। नन्वसाध्यन्तु त्रिदोषं मूत्रविट्प्रभमित्युवाच तन्त्रकृत्, तत् किमित्यस्य चिकित्सोपदिष्टा? ब्रूमः, किञ्चित् साध्यताप्यस्यास्तीति प्रतिपादयितुं चिकित्सामुपदिदेश शास्त्रकारः। अतएव मूत्रप्रभस्यासाध्यत्वात् चिकित्सां नोपादिशत्। मूत्रप्रभार्त्तव-विट्प्रभार्त्तवयोरप्यसाध्यत्वादेवोपक्रमं नाभ्यधात्। वाताद्यार्त्तवेषु स्वौषधं कुर्यादित्युक्तम्। कुणपग्रन्थ्याद्यार्त्तवेषु विशेषेण चिकित्सां वक्ष्यति;—ग्रन्थ्यार्त्तवे इति। ग्रन्थ्यार्त्तवे ग्रन्थिनाम्न्यार्त्तवे स्त्रीरजसि जलं पिबेत्। किम्भूतम्? पाठादिजातम्। पाठा प्राचीना, व्योषं त्रिकटुकम्, वृक्षकः कुटजः ॥ १७ ॥

पेयमिति। कुणपाख्ये रजसि पूयाख्ये वापि चन्दनं पेयम्। अत्र द्रवानुक्तौ जलं देयमिति परिभाषया जलेन पातव्यमिति बोध्यम्। क्षीणार्त्तव इह चिकित्सितं नोक्तं तत्र स्वधियोह्यम्। यथा क्षीणरेतसि शुक्रकरी क्रिया कार्येत्युक्तं, तथा क्षीणे रक्त

---

* पाठोऽयं न सर्व्वसम्मतः।

गुह्यरोगे च तत्सर्व्वं कार्यं सोत्तरबस्तिकम् ॥ १८ ॥
शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु ।
घृतमाक्षिकतैलाभं सद्गर्भायाऽऽर्त्तवं पुनः ।
लाक्षारस-शशास्राभं धौतं यच्च विरज्यते ॥ १९ ॥
शुद्धशुक्रार्त्तवं स्वस्थं संरक्तं मिथुनं मिथः ।
स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितबस्तिकम् ॥ २० ॥
नरं विशेषात् क्षीराज्यैर्मधुरौषधसंस्कृतैः ॥ २१ ॥

---

रक्तकरी क्रिया कार्येति। न च केवलमेतत् पूर्वोक्तमेव चिकित्सितं कार्य, यावद् गुह्यरोगप्रतिषेधे यद्वक्ष्यते भणिष्यते तदपि सर्वं साधनं यथायोगं वमनादि योनौ पिचुकधारणादिकञ्च कार्यम्। किम्भूतम्? सोत्तरवस्तिकम्। उत्तरवस्तिरपि तत्र कार्य इत्यर्थः। सोत्तरवस्तिकमिति तेन सहेति तुल्ययोग इति बहुव्रीहिः। शेषाद् विभाषेति कप्। वोपसर्ज्जनस्येति सभावः। उत्तरवस्तिरपि तत्रौषधमित्यर्थः ॥१८॥

बीजासमर्थं रेतोसमभिधाय साम्प्रतं शुद्धं यच्छुक्रार्त्तवं बीजसमर्थं तल्लक्षणार्थमाह,—शुक्रमिति। शुद्धे शुक्रार्त्तवे इति पूर्वं शुक्रस्योपदेशात् प्राधान्याच्च शुक्रस्य पूर्वमुपन्यासः। तत्राहाररसस्य सम्यक्परिणतस्य क्रमान्मज्जानमनुप्राप्तस्य सारः शुक्रसंज्ञां लभते; तच्च क्षीरे इव सर्पिरिक्षुरसे इव गुड़ः। शरीरे शुक्रधरां कलामाश्रित्य सर्वाङ्गव्यापितया स्थितं विशेषतश्च मज्जमुष्कस्तनेषु हर्षोदीरितं सङ्घट्टनेन हृदयाविशात् पिण्डीभूतमङ्गादङ्गात् प्रवर्त्तते, तच्च शुक्लादिगुणयुक्तं शुक्रम्, तथा घृताभं माक्षिकाभं तैलाभं वा सद्गर्भाय शोभनगर्भार्थं भवति। तत्र घृताभेन गौरवर्णत्वं गर्भस्य, माक्षिकाभेन श्यामवर्णत्वम्, तैलाभेन कृष्णवर्णत्वं भवति। आर्त्तवमिति। रक्तमेव स्त्रीणां मासि मासि गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्त्तमानमार्त्तवमाचक्षते। अतिप्रसङ्गेनावृतौ वा प्रवर्त्तमानं तदेवासृग्दरादिसंज्ञां लभते। यदार्त्तवं लाक्षारसाभमलक्तकरससदृशं, तथा शशरुधिरसदृशम्, तथा यच्च धौतं सत् विरज्यते वस्त्रादिलग्नं धौतं सल्लौहित्यं जहातीत्यर्थः, तदीदृशमार्त्तवन्तु सद्गर्भाय सम्पद्यते ॥ १९ ॥

शुद्धशुक्रार्त्तवलक्षणमुक्त्वा इदानीं गर्भसम्भवात् पूर्वमितिकर्त्तव्यतामाह,—शुद्धेति। शुक्रं चार्त्तवञ्च शुक्रार्त्तवे। शुद्धे शुक्रार्त्तवे यस्य मिथुनस्य तच्छुद्धशुक्रार्त्तवं स्त्रीपुरुषयुगलं समुपाचरेदिति सम्बन्धः। तथा स्वस्थमरोगं रोगलेशेनाप्यनाक्रान्तम्, तथा मिथः परस्परं संरक्तमनुरागयुक्तमन्योऽन्यदर्शनेन कुसुमचापाविष्टमिवञ्चित्तम्। स्नेहैः पुंसवनैर्यथाभिमतगर्भग्रहणप्रभावैः फलसर्पिर्महाकल्याणकादिभिः स्निग्धम्, शुद्धं कृतवमनविरेचनम्, तथा शीलितवस्तिकम्। शीलिता अभ्यासेनानुष्ठिता वस्तयो येन मिथुनेन तच्छीलितवस्तिकम्। न सकृदेवानुष्ठितवस्तिकमित्यर्थः ॥ २० ॥

एवं दम्पत्योस्तुल्यामितिकर्त्तव्यतामभिधाय इदानीमनयोः पृथगुपक्रमं वक्ति,—नरमिति। विशेषाद् विशेषेणातिशयेन नरं क्षीरघृतैश्च समुपाचरेदिति सम्बन्धः।

नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत् ॥ २२ ॥
क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम्।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ॥ २३ ॥
पद्मं सङ्कोचमायाति दिनेऽतीते यथा तथा।
ऋतावतीते योनिः सा शुक्रं नातः प्रतीच्छति ॥ २४ ॥
मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः।
ईषत् कृष्णं विगन्धञ्च वायुर्योनिमुखान्नुदेत् ॥ २५ ॥

---

विशेषादित्यनेनैतद्द्योतयति। विशेषेण नरं क्षीराज्यैः समुपाचरेन्न पुनर्नारीमपि तैः समुपाचरेदिति। किम्भूतैः ? मधुरौषधसंस्कृतैः। मधुराणि मधुरप्रायाणि मधुरप्रभावानि च तान्यौषधानि जीवनीयादीनि तैर्मधुरौषधैः संस्कृतैः सिद्धैरित्यर्थः ॥ ११ ॥

नारीमिति। नारीं तैलेन माषैश्च समुपाचरेत्। चशब्दोऽत्र भिन्नक्रमः; पित्तलैश्च समुपाचरेदित्यर्थः। पित्तलानि हि रक्तवृद्धिहेतवः। उक्तं हि,—"आश्रयाश्रयिणां मिथः। यदेकस्य तदन्यस्य वर्द्धनक्षपणौषधम्" इति। एवञ्च तैलं पित्तलत्वादेवोपन्यस्तम्। विशेषादित्यत्राऽप्यनुवर्त्तते। क्षीराज्याभ्यामपि विशेषेण नारीं तैलादिभिः समुपाचरेदित्यर्थः। पुरुषस्य तु रजसोऽभावात् तद्वृद्धिहेतवस्तैलादयो नोपयुज्यन्त एव ॥ २२ ॥

एवं पूर्वोक्तसकलसामग्रीयुक्तादपि मिथुनाद् विशिष्टकालमन्तरेण गर्भस्यासम्भव इति स्त्रीमधिकृत्य तद्गर्भग्रहणयोग्यं कालं दर्शयितुमाह,—क्षामेति। कार्श्यं हेतुं विना क्षामं, तथा प्रसन्नं निर्म्मलं वदनं मुखं यस्याः सैवम्भूता ताम्। श्रोणिश्च पयोधरौ च श्रोणिपयोधरम्, स्फुरत् कम्पमानं श्रोणिपयोधरं यस्यास्तां। श्रोणिः कटिः। स्रस्ते चलिते इवाक्षिणी कुक्षिश्च यस्यास्ताम्, तथा पुंसि कामोऽभिलाषो यस्यास्ताम्, एवम्विधां स्त्रियमृतुमतीमृतुयुक्तां विद्यात्। तस्याः स गर्भग्रहणकाल इत्यर्थः। पुंस्कामामिति सम्पुंस्कानां सो वक्तव्य इति मकारस्य सकारादेशात् षत्वाभावः ॥ २३ ॥

सर्वञ्च हेतुमद्ब्रूयादित्यागमः; अत आह,—पद्ममिति। यथा दिवा प्रफुल्लं पद्ममनन्तरं दिवसातिक्रान्तौ सङ्कोचमायाति मुकुलभावं प्राप्नोति तत्स्वभावत्वात् तस्य। तेनैव प्रकारेण ऋतावतीतेऽतिक्रान्ते द्वादशरात्रस्वभावे योनिः सङ्कोचमायाति। सा च योनिः संकुचितत्वाच्छुक्रं न प्रतीच्छति ॥ २४ ॥

विवृताविवृतमुखत्वं हि योनेर्गर्भग्रहणाग्रहणहेतुः, तच्च वायोः क्रियावतः कालसहायस्यायत्तमित्याह,—मासेनेति। मासेन यदुपचितमाहाररसतो वृद्धिं प्राप्तं रक्तं तत् पुनर्मासोपचितं रक्तमृतौ वायुर्योनिमुखान्नुदेत् प्रेरयेत्। विधौ लिङ्। तदा योनिमुखं विवृतं सम्पद्यते। केन नुदेत् ? धमनीभ्यां स्रोतोविशेषाभ्याम्। किम्भूतं रक्तम् ? ईषत् कृष्णं, तथा विगन्धं विस्रगन्धरहितम्। प्रकृतिस्थप्रेरकपवनसम्पर्कादीषत्कृष्णता न तु कुपितसमीरणप्रेरणासंश्लेषवशादिवात्यन्तं कृष्णता, नापि पित्तेन, तथाभूतेन युक्तं येन

ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ।
मृजालङ्काररहिता दर्भसंस्तरशायिनी ॥ २६ ॥
क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ।
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ॥ २७ ॥
चतुर्थेऽह्नि ततः स्नात्वा शुक्लमाल्याम्बरा शुचिः ।
इच्छन्ती भर्तृसदृशं पुत्रं पश्येत् पुरः पतिम् ॥ २८ ॥
ऋतुस्तु द्वादशनिशाः पूर्वास्तिस्रश्च निन्दिताः ।

---

विस्रगन्धि स्यात् । नापि श्लेष्मणा, तथा भूतेन युक्तं येन तद्वर्णयुक्तं स्यात् । तस्माच्छुद्धं विशिष्टे काले योनिमुखात् प्रवर्त्तमानं रक्तमार्त्तवसंज्ञां लभते । तदेव वान्यदा योनिमुखात् प्रवर्त्तमानमसृग्दरसंज्ञामासादयति । शुद्धञ्च रक्तं पुष्पसंज्ञं गर्भाख्यस्य फलस्य भविष्यतोऽभिव्यञ्जकत्वात् ॥ २५ ॥

अतएवाह,—तत इति । पुष्पेक्षणात् पुष्पस्य दर्शनादेव दर्शनानन्तरं स्त्री त्र्यहं त्रीणि दिनानि कल्याणं शुभमवश्यं ध्यायति चिन्तयतीति कल्याणध्यायिनी स्यात् । आवश्यके णिनिः । तथा मृजा स्नानक्रिया, अलङ्कारः कटकादिः पुष्पादिर्वा, अलंक्रियते भूष्यते शरीरमेभिरिति कृत्वा गन्धमाल्यस्याप्यलङ्कारत्वम् । तथा च वक्ष्यति,—"गन्धमाल्यादिकां भूषाम्" इति । मृजालङ्काराभ्यां रहिता वर्ज्जिता, तथा दर्भाणां संस्तरः शय्या तत्र शेते दर्भसंस्तरशायिनी । व्रत इति णिनिः । तथा त्र्यहं क्षैरेयं क्षीरसिद्धं यावकं यवान्नविशेषं पर्णे शरावे हस्ते वा भुञ्जीत भक्षयेत् । कियन्मात्रम् । स्तोकमल्पमात्रम् । तत् क्षैरेयमुपयुक्तं कीदृशं स्यादित्याह,—कोष्ठेत्यादि । शोधनञ्च कर्षणञ्च शोधनकर्षणम् । कोष्ठस्य शोधनकर्षणमिति षष्ठीसमासः । शरीरस्य महास्रोतो मध्यमो भाग आमपक्वाशयः कोष्ठशब्दवाच्यः स एव गर्भाधिष्ठानमतस्तस्यैव शोधनम् । तथा तदङ्गानां कर्षणमिति व्याख्येयम् । न पुनः कोष्ठस्य शोधनमन्येषां चाङ्गानां कर्षणम् । यथा हि त्रिवृतादिना विरिच्यते नैवमनेन यावकेन । वस्तुस्वाभाव्यात् कोष्ठशोधनकर्षणमात्रमेव क्रियते । क्षैरेयमिति क्षीराड्ढञीति ढञ् । याव एव यावक इति यावादिभ्यः कनिति कन् । तथा ब्रह्मचारिणी त्यक्तव्यवाया स्यात् ॥ २६ । २७ ॥

चतुर्थ इति । ततस्त्र्यहादूर्ध्वं चतुर्थे वासरे स्नाता तथा शुक्लानि माल्यान्यम्बराणि च यस्याः सैवं । तथा शुचिरन्तर्बहिश्च पवित्रा सती पुरः पूर्वं पतिं पश्येत् । संग्रहेऽप्युक्तम् । चतुर्थे त्वहन्युद्वर्तिता शीतसलिलस्नाताऽनुलिप्तालङ्कृता शुक्लमाल्याम्बरा कृतमङ्गलस्वस्त्ययना एवंविधमेव भर्त्तारं पश्यदनन्यमनाः । तथा हि । यादृशं पश्यति चिन्तयति वा तादृशमेव पुत्रं प्रसूत इति ॥ २८ ॥

तत् किं त्र्यहमेव ऋतुरुतैव पुष्पदर्शनाद्योत्तरकालमपीत्याशङ्क्याह,—ऋतुरिति । ऋतुदर्शनात् प्रभृति यावद् द्वादशरात्रयस्तावदृतुर्योषितो न पुनस्त्र्यहमेव यत्र पुष्पं

**एकादशी च युग्मासु स्यात् पुत्रोऽन्यासु कन्यका ॥२९॥**
**उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम् ।**
**नमस्कारपरायास्तु शूद्राया मन्त्रवर्ज्जितम् ॥ ३० ॥**
**अवन्ध्य एवं संयोगः स्यादपत्यञ्च कामतः ॥ ३१ ॥**
**सन्तोऽप्याहुरपत्यार्थं दम्पत्योः सङ्गतं रहः ॥ ३२ ॥**
**दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ॥ ३३ ॥**

---

प्रवर्त्तत इति तुशब्देन दर्शयति। अत्रास्मिन् द्वादशनिशावधावृतुकाले याः पूर्व्वास्तिस्रो निशा यासु प्रायः पुष्पं प्रवर्त्तते ता निन्द्या गर्ह्याः सद्भिः। न तत्र सन्मतिः स्त्रियं सङ्गच्छेत्। अतएवात्र ब्रह्मचारित्वोपदेशः। तथैकादशी निशा निन्द्याऽप्रशस्ता। चशब्दोऽत्रानुक्ताया-स्त्रयोदश्याः समुच्चयार्थः। त्रयोदश्यां हि मिथुनीभावे नपुंसकस्योत्पत्तिरिति केचिदाहुः युग्मासु चतुर्थ-षष्ठाष्ट-दशम-द्वादश-लक्षणासु निशासु सङ्गमे पुत्रः स्यादचिन्त्यत्वाद्धेतु-भावस्य। तासु हि रात्रिष्वार्त्तवमल्पीभवति। अन्यास्वयुग्मासु निशासु पञ्चमीसप्तमी-नवमीषु कन्या जायते। तदा हि शुक्रमल्पीभवति पूर्वोक्ताद्धेतोः। यदि पुनराहारादि-वशात् शुक्रस्याधिकत्वं युग्मासु युग्मासु च न्यूनता स्यात्तदा पुमान् स्यात्कृतिर्दुर्बलो हीनाङ्गो वा जायते। स्त्री च पुरुषाकृतिर्दुर्ब्बला हीनाङ्गा वा। उक्तं हि,— "स्त्रियाः शुक्रेऽधिके स्त्री स्यात् पुमान् पुंसोऽधिके भवेत्। तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धञ्च सेवयेत्"। एकादशीत्रयोदश्योस्तु नपुंसकमिति। तदेवं दम्पती पुङ्गर्भ-मिच्छन्तौ युग्मासु निशासु पुंसवनादिकं कर्माऽऽचरेतां। स्त्रीगर्भमिच्छन्तौ अयुग्मासु रात्रिषु ॥ २९ ॥

उपाध्याय इति। अथेत्यानन्तर्य्ये मङ्गलसूचकौ निर्दिष्टः। अतएवायमर्थः। ऋतुकालादनन्तरं मङ्गलपूर्व्विकां सर्व्वामिमां वक्ष्यमाणामितिकर्त्तव्यतां कुर्यादिति। उपाध्यायः पुरोहितोऽथर्ववेदवित् पुत्रीयं पुत्राय हितं विधिमिष्टिं कुर्वीत। कथम्? विधिवत् न यथा कथञ्चित्। विधिवदिति प्रशंसायां मतुप्, क्रियाविशेषणं चेतत्। तेन प्रशस्तं वेदोक्तमन्यूनातिरिक्तं विधानं यथा भवति तथा विधिं कुर्वीत इत्यवतिष्ठते ब्राह्मणादिवर्णत्रयस्यैवं विधिं कुर्व्वीत। शूद्रायाः पुनर्नमस्कारपराया नमस्कारप्रधानाया यथोक्तं सर्वं विधिं मन्त्रवर्ज्जितं कुर्यात्। पुत्रीयमिति पुत्राच्चेति छः ॥ ३० ॥

अवन्ध्य इति। एवं यथोक्तविध्यनुष्ठाने दम्पत्योर्यः संयोगो मिथुनीभावः स न वन्ध्यः स्यात्। अपि तु सफलो गर्भसम्भवहेतुर्भवेदित्यर्थः। न केवलं दम्पत्योः संयोग एव निष्फलो न भवेदपत्यञ्च कामतो यथाभिमतं पुङ्गर्भरूपं स्त्रीगर्भरूपं वा स्यात् ॥ ३१ ॥

अतएवाह,—सन्त इति। रहःशब्देन ग्राम्यवचसाऽत्र ग्राम्यधर्म्मं सूचयति। हि यस्मात् सन्तः साधवोऽपत्यार्थमपत्यजननार्थं दम्पत्योः स्त्रीपुरुषयोः रह एकान्ते विशिष्ट-कालोचितं विशिष्टसंयोगं सङ्गतमाहुः ॥ ३२ ॥

इच्छेतां यादृशं पुत्रं तद्रूपचरितांश्च तां।
चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३४ ॥
कर्मान्ते च पुमान् सर्पिः क्षीरशाल्योदनाशितः।
प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३५ ॥
आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः।
तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥ ३६ ॥
अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वाम्।
दधातु विधाता त्वां दधातु ब्रह्मवर्चसा भवति ॥ ३७ ॥

---

न ग्राम्यसुखलिप्सायै न चापत्यमात्रायेत्याह,—दुरपत्यमिति। दुष्टापत्यं स्त्रीगर्भः पुंगर्भो वा महत्यपि गोत्रे जातसुतकृष्टेऽपि कुले उत्पन्नमङ्गारकार्यकरणसामर्थ्यात् समस्तकुलविनाशहेतुत्वात् कुलाङ्गार इत्युच्यते ॥ ३३ ॥

इच्छेतामिति। तौ दम्पती यादृशं पुत्रमिच्छेतां कामयेतां तद्रूपचरितान् जनपदांश्चिन्तयेताम्। रूपं वर्णसंस्थानप्रमाणाकृत्यादि, तथा चरितं श्रद्धा-श्रुत-सत्यार्जवा-नृशंस्य-दान-दया-दाक्षिण्य-स्वभावादि, तस्य मनीषितस्य सदृशे रूपचरिते येषां तान् जनपदांश्चिन्तयेतां ध्यायेताम्। पुत्रशब्दोऽपत्यमात्रोपलक्षणार्थोऽत्र। तथाहि दुहितरमपि कश्चिदिच्छत्येव। किम्भूतौ तौ पितरौ ? तदाचारपरिच्छदौ। आचरणमाचारः कुलानुरूपस्य देशानुरूपस्य चेतिकर्त्तव्यतालक्षणस्य कर्म्मणोऽनुष्ठानम्। परिच्छदो मनुजगवाश्व-धन-धान्य-वस्त्रालङ्काररत्न-रथायुध-गृहोद्यान-वीणापणव-गायनशय्यास्तरणादिः। आचारश्च परिच्छदश्चाचारपरिच्छदौ। तदित्यनेनाभिलषितापत्यं परामृश्यते। तस्येवाचारपरिच्छदौ ययोस्तौ दम्पती इच्छासदृशरूपचरितान् जनपदान् ध्यायेताम् ॥ ३४ ॥

कर्म्मान्त इति। कर्म्मान्ते च पुत्रीयविध्यनुष्ठानावसाने च पुमान् स्त्रीतः प्राक्पूर्वं शय्यामारोहेदाक्रमेत्। किम्भूतः ? सर्पिःक्षीरशाल्योदनाशितः। सर्पिर्मिश्रक्षीरशाल्योदनेनाशितो भोजितः। कथमारोहेत् ? दक्षिणेन पादेन। मौहूर्तिकाज्ञया ज्योतिःशास्त्रविदाऽऽदिष्टः। स्त्री तु वामेन पादेन तस्य दक्षिणपार्श्वतः शय्यामारोहेत्, मौहूर्तिकाज्ञयेति योज्यम्। तत्रवधारणे; उभयत्रापि पुमान् दक्षिणेनैव पादेन प्रागेव। स्त्री पश्चादेव वामेनैव पादेन। पुंसो दक्षिणपार्श्वत एव शय्यामारोहेत् नान्यथाक्रमेति। पुमान् सर्पिःक्षीरशाल्योदनाशित इत्युक्तम्। स्त्रियास्तु तत्कालोचितमाहारं निरूपयन्नाह,—तैलञ्च माषश्च ताभ्यामुत्तरोऽधिक आहारो यस्याः सैवम्। उत्तरशब्दोऽत्र तैलमाषौ पित्तलौ रक्तवृद्धिहेतुतया अत्यन्तं सेवितव्यौ न पुनस्तथा शुक्रवृद्धिकराण्यन्यान्यपि क्षीरादीनि द्रव्याणीति प्रतिपादयति। तत्र च मन्त्रं वक्ष्यमाणं प्रयोजयेत् पठेत् ॥ ३५। ३६ ॥

तमेव मन्त्रमाह,—अहिरिति। सान्त्वयित्वेति। ततो मन्त्रपाठादनन्तरं परस्परं सान्त्वयित्वा प्रियवचनादिना प्रीतिमुत्पाद्य संविशेतां मिथुनीभावं गच्छेताम्। किम्भूतौ ?

ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्य्यस्तथाऽश्विनौ ।
भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ॥ ३८ ॥
सान्त्वयित्वा ततोऽन्योऽन्यं संविशेतां मुदान्वितौ ।
उत्ताना तन्मना योषित्तिष्ठेदङ्गैः सुसंस्थितैः ॥ ३९ ॥
तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ।
लिङ्गन्तु सद्योगर्भाया योन्यां बीजस्य संग्रहः ॥ ४० ॥
तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानानुबन्धनम् ।
हृदयस्पन्दनं तन्द्रा तृड् ग्लानिर्लोमहर्षणम् ॥ ४१ ॥
अव्यक्तः प्रथमे मासि सप्ताहात् कललो भवेत् ।
गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ ४२ ॥
बली पुरुषकारो हि दैवमप्यतिवर्त्तते ॥ ४३ ॥

---

मुदा हर्षेणान्वितौ युतौ। तत्र च संवेशने योषिदुत्ताना तच्चित्ता चाऽवयवैः सुसंस्थितैस्तिष्ठेत् । किमेवं सति भवतीत्याह,—तथेति । हि यस्मात् तथा तेन प्रकारेण सा बीजं गृह्णाति दोषैर्वातादिभिः स्वस्थानावस्थितैः सद्भिः । संग्रहे तूक्तम्,—"न चासावधस्तिष्ठेत्" इति । तथाहि, स्त्रीचेष्टः पुमान् जायते पुंचेष्टा वा स्त्री च । न च न्युब्जां पार्श्वगतां वा सेवेत । न्युब्जाया वातो बलवान् स योनिं पीड़यति । दक्षिणपार्श्वगायाः श्लेष्मा पीड़ितच्युतोऽपि दधाति गर्भाशयम् । वामपार्श्वगायास्तु पित्तं विदहति रक्तशुक्रे । तस्मादुत्ताना बीजं गृह्णीयादिति । लिङ्गमिति । सद्यस्तत्क्षणात् गर्भो यस्याः सैवं, तस्याः सद्योगर्भाया लक्षणं बीजस्य गर्भाख्यस्य योन्या करणभूतया संग्रहः सम्यग् ग्रहणम् ; तथा तृप्तिरिव तृप्तिः । गुरुत्वं स्फुरणञ्च कुक्षेर्भवति ; तथा शुक्रं चास्रञ्च शुक्रास्रे । अननुबन्धनं प्रवर्त्तनम् । नानुबन्धनम् अननुबन्धनं, शुक्रास्रयोर्योनिमुखादवमनं बहिर्निःसरणमत्र च योन्या गृहीतबीजत्वम् ; तथा हृदयस्पन्दनादयः पञ्च सद्योगर्भाया हेतवो भवन्ति । लोमहर्षणञ्च हर्षवशाद्‌ भवति । तथा च संग्रहे,—"प्रहर्षो ह्लासः" इत्यादि ॥ ३७—४१ ॥

इदानीं गर्भस्यावस्थाः प्रदर्शयितुमाह,—अव्यक्त इति । सप्ताहादर्वाक् गर्भगोलकः श्लेष्मपिण्डीभूतो भवेत् सप्ताहादनन्तरं यावन्मासस्तावदव्यक्ताकृतिः कललीभवेत् । अत्र कललीभूते यावत् स्त्रीपुरुषादुत्पत्तिलक्षणा व्यक्तिर्न भवति तावद्‌ व्यक्तेः प्राक् प्रथमे मासि पुंसवनादि प्रयोजयेत् ॥ ४२ ॥

ननु शुद्धे शुक्रार्त्तवे सत्वः स्वकर्म्मक्लेशनोदितः गर्भः सम्पद्यत इत्युक्तम् ; तत्र यदि प्राक्तनेन कर्म्मणा स्त्रीगर्भः कर्त्तुमाक्षिप्तस्तदा पुरुषप्रयत्न सत्यपि पुंगर्भः कर्त्तुं न शक्यते । तस्मात् पुंसवनमनर्थकमित्याशङ्क्याह,—बलीति । हि यस्मात् पुरुषकारो बलवान् दुर्बलं दैवमतिवर्त्ततेऽतिक्रम्य । अपिशब्दात् पुरुषकारोऽपि दुर्बलं दिष्टं बलीयोऽतिक्रम्य

पुष्ये पुरुषकं हैमं राजतं वाथ वायसम् ।
कृत्वाऽग्निवर्णं निर्वाप्य चीरे तस्याञ्जलिं पिबेत् ॥ ४४ ॥
गौरदण्डमपामार्गं जीवकर्षभशैर्यकान् ।
पिबेत् पुष्ये जले पिष्टानेक-द्वि-त्रि-समस्तशः ॥ ४५ ॥
चीरेण श्वेतबृहती-मूलं नासापुटे स्वयम् ।
पुत्रार्थं दक्षिणे सिञ्चेद् वामे दुहितृवाञ्छया ॥ ४६ ॥
पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ।
नासयास्येन वा पीतं वटशृङ्गाष्टकं तथा ।
ओषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत् ॥ ४७ ॥

---

वर्त्तते इति प्रतिपादयति । अतएव प्राक्कृतेन कर्म्मणा बलीयसा आक्षिप्तस्य स्त्रीगर्भस्य पुंसवनादिदानेन पौरुषेण कर्म्मणा शतशोऽपि प्रयोजितेन न कथञ्चित् पुंगर्भता कर्तुं पार्यत इति । उक्तञ्च,—"दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते । दैवेन चेतरत् कर्म्म प्रकृष्टेनोपहन्यते" इति । अत्र पुंसवनादि सम्यक् प्रयोजितं सिद्ध्यसिद्ध्यनुमीयमानं प्राक्कृतस्य कर्म्मणो हीनबलत्वं प्रबलत्वमवगमयति ॥ ४३ ॥

अधुना पुंसवनप्रयोगमाह,—पुष्येति । पुष्ये पुष्यनक्षत्रयुक्ते काले पुरुषकं पुत्तलकं हैमादिकृतमग्निवर्णं कृत्वा सुध्माततया ततः चीरे निर्वाप्य निवेश्य तस्य चीरस्याञ्जलिं पलचतुष्टयाख्यं पिबेत् । पुरुषकमिति पुरुष इवेत्यस्मिन्नर्थे इवे प्रतिकृताविति कन् । हैममिति हिम्नो विकारार्थे अण् नस्तद्धित इति टिलोपः । राजतमिति प्राणिरजतादिभ्योऽञित्यञ् । आयसमिति तस्येदमित्यण् । गौरेति । गौरदण्डादीं श्चतुरो द्रव्यविशेषान् पिबेत् । किम्भूतान् ? जले पिष्टान् कल्कीकृतान् । कथं कृत्वा ? एक-द्वि-त्रि-समस्तशः । एकादिषु प्रत्येकं शस्प्रत्ययार्थयोगः । तेनैकमेकं कृत्वा द्वौ द्वौ कृत्वा त्रीं स्त्रीन् कृत्वा चतुरश्चतुरः कृत्वैतान् पिबेदित्यर्थोऽवतिष्ठते । कदा प्राश्यम् ? पुष्ये पुष्ययुक्ते काले ॥

चीरेणेति । शुक्लपुष्पकण्टकारिकाया मूलं चीरेण कल्कीकृत्य स्वयं स्त्री दक्षिणे नासापुटे पुत्रार्थं पुत्रसम्पत्तये सिञ्चेत् । दुहितृवाञ्छया सुताकाम्यया वामे नासापुटे सिञ्चेत् । पयसेति । पयसा लक्षणामूलं कल्कीकृत्य पीतं पुत्रोत्पादप्रदं पुत्रस्थितिप्रदञ्च भवति । कथं पीतम् ? नासया आस्येन वा, कदाचिन्नासिकया कदाचिदास्येन । यस्याः पुत्रो नोत्पद्यते तथा उत्पन्नो वा स्थितिं न लभते चिरं न जीवति, तयैवं पातव्यमित्यर्थः । वटशृङ्गाष्टकं, तथा तेनव प्रकारेण नासया आस्येन वा पीतं पुत्रोत्पादस्थितिप्रदं भवति । न्यग्रोधस्य प्रथमोद्भिन्नः प्ररोहो वटशृङ्गस्तस्याष्टकमिति । प्रभावस्याचिन्त्यत्वादेतत्संख्यावच्छिन्नत्वम् । जीवनीया या ओषध्यो जीवन्तीकाकोल्याद्या दश याः शोधनादिगणसंग्रहोक्तास्ता बाह्यान्तरुपयोजयेत् । तत्र स्नानोद्वर्त्तनादिना बाह्य उपयोगः । आहारपानादिनाऽन्तरुपयोगः ॥ ४४—४७ ॥

उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक् ।
नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥ ४८ ॥
अतिव्यवायमायासं भारं प्रावरणं गुरु ।
अकालजागरस्वप्न-कठिनोत्कटकासनम् ॥ ४९ ॥
शोक-क्रोध-भयोद्वेग-वग-श्रद्धा-विधारणम् ।
उपवासाध्व-तीक्ष्णोष्ण-गुरु-विष्टम्भि-भोजनम् ॥ ५० ॥
रक्तं निवसनं श्वभ्र-कूपेक्षां मद्यमामिषम् ।
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ॥ ५१ ॥
तथा रक्तस्रुतिं शुद्धिं बस्तिमामासतोऽष्टमात् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन् म्रियेत वा ॥ ५२ ॥
वातलैश्च भवेद्गर्भः कुब्जान्ध-जड़वामनः ।
पित्तलैः खलतिः पिङ्गः श्वित्री पाण्डुः कफात्मभिः ॥५३॥
व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ॥ ५४ ॥

---

उपचार इति । उपचार उपचरणम् ; प्रिया इष्टा हिताः पथ्या आहारविहारास्तैः प्रियहितैय उपचारी भर्त्रा पत्या कृतो भृत्यैश्च य एवम्भूतः कृतः स गर्भधृक् । तदनुष्ठानाद्गर्भः स्थितिं दधातीत्यर्थः । एनाञ्च स्त्रियं नवनीतादिभिर्यथासात्म्यं सदोपाचरेत् ॥ ४८ ॥

अतीति । गर्भिणी स्त्री अतिव्यवायादीनुत्तानशयनान्तांस्त्यजेत् । न केवलमेतान् अन्यच्चाहारादिवस्तुजातं स्त्रियो बहुशः प्रसूतास्तत्कालव्यापारनिपुणा वा याः काश्चन स्त्रियो नेच्छन्ति तदपि वर्जयेत्, तथा रक्तस्रुतिं शुद्धिञ्च वमनविरेचनरूपां त्यजेत् । बस्तिमनुवासनमष्टमं मासं मर्यादीकृत्य वर्जयेत् । अष्टमे मासि बस्तिं प्रयोजयेदेवेत्यर्थः । एभिर्वर्ज्यवस्तुभिरासेव्यमानैर्गर्भ आमोऽसम्पूर्णः स्रवेत् पतेत् । कुक्षौ वा शुष्येत् म्रियेत वा मृत्युं वा गर्भः प्राप्नुयात् ॥ ४९—५२ ॥

वातलैरिति । वातलैश्चाहारैर्मात्रासेवितैः कुब्जोऽन्धो जड़ो वामनो वा गर्भो भवति । पित्तलैराहारैर्मात्रासेवितैः खलतिः खल्वाटः पिङ्गो वा स्यात् । कफलक्षिराहारैर्मात्रासेवितैः श्वित्रवान् पाण्डुर्वा स्यात् ॥ ५३ ॥

व्याधीनिति । अस्याश्च गर्भिण्या ये व्याधयो जायन्ते तान् व्याधीन् मृदुसुखैरौषधैः, तथाऽतीक्ष्णैर्जयेत् । मृदूनि च तानि सुखानि । मृदून्यकर्कशानि वीर्य्यादिभिर्नोत्कृष्टसामर्थ्यानि सुकुमारोचितानि । सुखानि सुखोपभोग्यानि प्रियाणीति यावत् । ननु मृदूनि परिहृत्यातीक्ष्णानि चेति निर्देष्टव्यं किमुभयोपादानेन ? यतो मृदून्यकर्कशान्यतीक्ष्णान्यपि अकर्कशानीत्यनर्थान्तरमेतयोः । अत्रोच्यते, मृदून्यकर्कशानि शर्करादीनि

द्वितीये मासि कललाद् घनः पेश्यथवाऽर्बुदम् ।
पुंस्त्रीक्लीबाः क्रमात्तेभ्यः तत्र व्यक्तस्य लक्षणम् ॥ ५५ ॥
क्षामता गरिमा कुक्षौ मूर्च्छाच्छर्दिररोचकः ।
जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ॥ ५६ ॥
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ।
पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः ॥ ५७ ॥
मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ।
सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविधारणम् ॥ ५८ ॥

---

उत्कृष्टशक्तीनि। मरिचादीन्यतीक्ष्णानि। तीक्ष्णानि पुनस्तीक्ष्णगुणयुक्तानि राजिकादीनि दोषोत्क्लेशकराणि भेषजानि भवन्तीति द्वयोरुपादानं युक्तम्। तन्त्रान्तरे तूक्तम्,—"इत्यनात्ययिके व्याधौ विधिरात्ययिके पुनः। तीक्ष्णैरपि क्रियायोगः स्त्रियं यत्नेन पालयेत्" इति। यच्च व्यवायादि गर्भिण्याः परिहार्यत्वेन निर्दिष्टं, तथा व्याधौ चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेदिति तदस्मिन् काले विशेषेणेति द्रष्टव्यम्। तथा चान्यदातिव्यवायादिसेवनान्न तथा प्रत्यवायभयम्, तथा तीक्ष्णौषधप्रयोगाच्च। अतएव तथा रक्तस्रुतिं शुद्धिं वस्तिमामासतोऽष्टमादित्येतत् पृथङ्निर्दिष्टमतिव्यवायादिपरिहार्यगणमध्य ॥ ५४ ॥

प्रथमे मासि अव्यक्तलिङ्गः कललावस्थो गर्भो भवेत्। द्वितीये तु मासि गर्भः कीदृशः स्यादित्याह,—द्वितीये इति। द्वितीये मासि कललाद्घनः पेश्यथवाऽर्बुदं गर्भः स्यादिति योज्यम्। तेभ्यो घनादिरूपेभ्यः क्रमात् परिपाट्या पुंस्त्रीक्लीबाः सम्पद्यन्ते। घनात् पुमान्, पेशीतः स्त्री, अर्बुदात् क्लीवः षण्ढः, न स्त्री न पुमानिति। तत्रेति। तत्र व्यक्ताव्यक्तयोर्मध्याद् व्यक्तो निर्धार्यते। व्यक्तस्य गर्भस्य वक्ष्यमाणं लक्षणं क्षामतेत्यादिकम्। गरिमा गुरोर्भाव इति। पृथ्वादिभ्य इमनिज्वेति इमनिच्। प्रियस्थिरेत्यादिना गरादेशः। विदाहोऽन्य इति। अन्ये आचार्या विदाहो देहे भवतीत्याहुः। नानाप्रकाराश्च श्रद्धाः पथ्यापथ्यविषया अभिलाषाः। व्यक्तस्य गर्भस्य लक्षणम् संग्रहे तूक्तम्,—"तस्याश्च रजोवाहिनां स्रोतसां वर्त्मान्युपरुध्यन्ते गर्भेण तस्मात्ततः परमार्त्तवं न दृश्यते। ततस्तदधः प्रतिहतमपरं चापरं चोपचीयमानमपरेत्याहुरिति ॥ ५५—५७ ॥

गर्भिण्याश्च श्रद्धासु उत्पन्नासु किमपथ्यं तस्यै देयं न वेत्येवं सन्देहे तद्व्युदासार्थमाह,—मातृजमिति। हि यस्मादस्य गर्भस्य यत्हृदयं चेतनाधिष्ठानं तन्मातृजम्। तथा चोक्तम्,—मृद्वत्र मातृजं रक्तं इत्यादि। तच्च गर्भहृदयं मातृहृदयेन सम्बद्धं संयुक्तं भवति। ततश्च गर्भिणीहृदयेन सन्तप्तेन गर्भहृदयमपि सन्तप्यते। परस्परं हृदयस्य सम्बद्धत्वात्। अतएव च गर्भिणी द्विहृदया दौहृदिनीत्युच्यते। अतएव च परायत्तहृदयत्वात् तत्काले स्वस्वभावोचितमभिलाषं विहाय नानाभिलाषा जायन्ते। यतश्चैवं तेन कारणेन गर्भिण्या श्रद्धाविमाननमभिलाषाप्रतिपूरणं नेष्टम् ॥ ५८ ॥

देयमप्यहितं तस्यै हितोपहितमल्पकम् ॥ ५९ ॥
श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा ॥ ६० ॥
व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ।
मूर्द्धा द्व सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ।
सममेव हि मूर्द्धाद्यैर्ज्ञानञ्च सुखदुःखयोः ॥ ६१ ॥
गर्भस्य नाभौ मातुश्च हृदि नाड़ी निबध्यते ।
यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥ ६२ ॥
चतुर्थे व्यक्तताङ्गानां चेतनायाश्च पञ्चमे ।

---

तदर्थमाह,—देयमिति । तस्य गर्भिण्या हितेन पथ्येन युक्तमहितमपथ्यमपि विदाहिविष्टम्भादि पूर्वनिषिद्धं यत् तदपि देयम् । अपिशब्देन किमु तस्यै प्रार्थ्यमानाय हितं देयमिति गमयति । किं मात्रामनपेक्ष्यैवाहितं देयम् नेत्याह,—अल्पमतिशयेनाल्पकम् ॥ ५९ ॥

ननु यद्यहितं तत् कस्माद्दीयत इत्याह,—श्रद्धेति । यदि चिरकालोषितः कुक्षौ गर्भस्तदा तस्य गर्भस्य विकृतिर्विरूप्यं भवेत् । अथाचिरोषितो गर्भस्तदा तस्य गर्भस्य च्युतिर्विनाशो भवेत् । अतएव श्रद्धाविमानना नोचिता । निदानकुपितपवनत्वाद्धेतोः । लब्धदौहृदा वीर्यवन्तं चिरायुषञ्च सुतं सूते ॥ ६० ॥

व्यक्तीति । अस्य गर्भस्य तृतीये मासि गात्रपञ्चकं व्यक्तीभवत्यव्यक्तरूपं व्यक्तं तदानीं सम्पद्यत इति चार्थः । तदेव पञ्चाङ्गमाह, मूर्धा द्वे सक्थिनी बाहू इति सर्वेषां चाङ्गानां सूक्ष्माणां चतनाधिष्ठानानां जन्मोत्पत्तिरन्यत्र जन्मोत्तरकालजेभ्यो दन्तादिभ्यः । तथा सममेव तुल्यकालमेव मूर्द्धाद्यैः सुखदुःखयोर्ज्ञानं भवति । तदानीं सुखसम्बिद् दुःखसम्बिच्च गर्भस्य जायत इत्यर्थः । चः समुच्चये । हि यस्मादर्थे ॥ ६१ ॥

अत्र मात्राऽभ्यवहृताभ्यामन्नपानाभ्यां कथं गर्भो वर्द्धत इत्याह,—गर्भस्येति । एकव नाड़ी गर्भस्य नाभौ मातुश्च हृदये निबध्यते अदृष्टवशात् संश्लिष्यते । यया नाड्या स गर्भः पुष्टिमाप्नोत्यावहति । क इव? केदार इव । कुल्यया लघुनाड्या जलं वहन्त्या केदारस्थः शाल्यादिर्यथाऽभिवर्द्धते तथैव मातृहृदयाश्रितया नाड्या मात्राभ्यवहृतादाहाराज्जाठराग्निना पच्यमानात् प्रसादाख्येन रसेन । यस्माद् व्यक्तीभवदङ्गप्रत्यङ्गस्य नाभ्यां प्रतिबद्धा नाड़ी नाड्यामपरामपरस्यां मातृहृदयम्, ततो मातृहृदयादाहाररससारी धमनीभिः स्यन्दमानोऽपरामुपैति । ततः क्रमान्नाभितश्च स पुनर्गर्भस्य पक्वाशये कायाग्निना पच्यमानः प्रसादबाहुल्याद्बालादिपुष्टिकरः सम्पद्यते ; तथा रोमकूपैरुपस्नेह एव प्रविशति । साक्षादन्नपानाननुप्रवेशाद् रसस्य कफमलत्वाद् गर्भस्य स्थूलमूत्रपुरीषाद्यसम्भवः ॥ ६२ ॥

चतुर्थ इति । गर्भस्येत्यनुवर्त्तते । चतुर्थे मासि गर्भस्य सर्वेषामङ्गानां सूक्ष्मत्वादव्यक्तरूपाणां व्यक्तता भवति । चेतनायाः पुनर्मनोद्वितीयनामिकाया अव्यक्तरूपायाः पञ्चमे

षष्ठे स्नायु-सिरा-रोम-बल-वर्ण-नख-त्वचाम् ॥ ६३ ॥
सर्वैः सर्व्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे।
गर्भेणोत्पीड़िता दोषास्तस्मिन् हृदयमाश्रिताः।
कण्डूं विदाहं कुर्व्वन्ति गर्भिण्याः किक्किसानि च ॥६४॥
नवनीतं हितं तत्र कोलाम्बुमधुरौषधैः ॥ ६५ ॥
सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम्।
चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ॥ ६६ ॥
श्रेष्ठया चैण-हरिण-शश-शोणित-युक्तया।
अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ॥ ६७ ॥
पटोल-निम्ब-मञ्जिष्ठा-सुरसैः सेचयेत्पुनः।

---

मासि व्यक्तता जायते। षष्ठ इति। षष्ठे मासि अव्यक्तरूपाणां स्नायुादीनां व्यक्तता जायते ॥ ६३ ॥

सप्तमेति। सप्तमे मासि सर्वैः सकलैर्भावैर्वस्तुभिः सर्वाङ्गसम्पूर्णो गर्भः पुष्यति पोषं याति; अङ्गसम्पूर्णः पुष्यतीत्येतावतेव प्रकृतार्थावगतेः सर्वग्रहणमधिकार्थद्योतनाय। तेन सर्वेण जन्मजीवनलक्षणेनार्थेनाङ्गस्य सम्पूर्णो भवतीत्यवतिष्ठते। अकालप्रसवत्वात्तु न तथा गर्भस्य जन्मजीवनलक्षणो योऽसावर्थः सोऽप्यस्मिन् भवतीति ज्ञाप्यते। तथा चास्मिन् मासि गर्भो जातो जीवति किन्त्वकालप्रसवत्वान्न तथा दीर्घजीवितत्वादिकं स्यात्। वक्ष्यति हि,—"कालः सूतेरतः परम्" इति। अमुमेव च न्यायं चेतसि विधायाऽष्टमे मास्योजःस्वरूपनिगदनप्रस्तावे जातो न जीवति शिशुरिति वक्ष्यति। अन्यथा अकालप्रसवत्वादेवास्मिन् गर्भस्य जीवनं न सम्भाव्यत एव। जातो न जीवतीत्येतद् वाक्यमनर्थकमिव स्यात्; तस्मात् सप्तमे मासि जातो जीवतीति सुप्रतिपादितमेतत्। गर्भेणेति। गर्भेणोत्पीड़िता दोषा वातादयस्तस्मिन् काले हृदयमाश्रिता गर्भिण्याः कण्डूं विदाहं कुर्व्वन्ति, तथा किक्किसानि कुर्वन्ति ऊरुस्तनोदरे वलिविशेषा रेखाकारास्तत्काले प्रायो ये जायन्ते ते किक्किससंज्ञाः। केचित् शूकैरिव पूर्णता किक्किसानीति व्याख्यायि। पाणिपादांसमूलेषु विविधः सन्तापो विदाह उच्यते ॥ ६४ ॥

नवनीतेति। तत्र तेषु कण्ड्वादिषु उपशमार्थं नवनीतं हितमन्तर्वत्न्युपयोगितया। कीदृशम्? कोलाम्बुना मधुरौषधैर्द्राक्षाभिश्च कल्कीकृतैः सिद्धं पक्वम्, तथा तत्र भोजनं हितम्। किम्भूतम्? अल्पं पटु लवणं स्नेहश्च यत्र तदेवम्। तथा लघु मात्रास्वभावाभ्यां, तथा स्वादु मधुरम्, तथा चन्दनोशीरयोः कल्कः पिष्टी जलेनालोड़ितस्तेनोरुस्तनोदरं लिम्पेत्। श्रेष्ठया त्रिफलया वा ऊरुस्तनोदरं लिम्पेत्। किम्भूतया? एणादिरुधिरपिष्टया, तथा अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्याऽभ्यक्तां कृत्वा अङ्गमनन्तरं पटोल-निम्ब-मञ्जिष्ठा सुरसैर्मर्दयेत्। अश्वघ्नः करवीरः। सेचयेत् पुनः परिषेकञ्च कुर्य्यात्।

दार्व्वीं-मधुक-तोयेन मृजाञ्च परिशीलयेत् ॥ ६८ ॥
ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ।
तेन तौ म्लानमुदितौ तत्र जातो न जीवति ।
शिशुरोजोऽनवस्थानान्नारी संशयिता भवेत् ॥ ६९ ॥
क्षीरपेया च पेयात्र सघृतान्वासनं घृतम् ।
मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥ ७० ॥
शुष्कमूलक-कोलाम्ल-कषायेण प्रशस्यते ।
शताह्वाकल्कितो बस्तिः सतैलघृतसैन्धवः ॥ ७१ ॥
तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम् ॥ ७२ ॥

---

दार्व्वीमधुकतोयेन दारुहरिद्रामधुयष्टिकाभ्यां क्वथितेन जलेन, तथा मृजां शुद्धिं स्नानादिकां शीलयेत् । संग्रहे तूक्तम्,—"परिषेकैः पुनर्मालतीमधुकसिद्धेनाम्भसा" । कण्डूयनं वर्जयेत् । लम्भे दवैरूप्यपरिहारार्थं स्नानोद्वर्त्तनं शीलयेत् । मधुरं चाहारमल्पस्नेह-लवणमल्पोदकानुपानं भुञ्जीतेति ॥ ६५—६८ ॥

ओज इति । ओजः सर्व्वधातूनां तेजः कर्तृ मातापुत्रौ कर्म्मभूतौ । माता च पुत्रश्चेति द्वन्द्वः ; आनङृतो द्वन्द्व इत्यानङादेशः । कथं सञ्चरति ? मुहुर्मुहुः क्रमात् क्रमेण । कदाचिद् गर्भिणीमोजः सञ्चरति कदाचित् पुत्रमिति । एवं कादाचित्केन ओजःसञ्चरणेन तौ मातापुत्रौ म्लानमुदितौ स्याताम् । तथा पूर्व्वनिरूपितया गर्भ-गर्भिण्युभयसम्बद्धया नाड्योभयत्र सञ्चरत्तदोज उभयसम्बन्धि यदा गर्भं सञ्चरति तदा गर्भो मुदितो हर्षितो भवेत् ओजःसम्पत्त्या गर्भिणी च म्लाना भवेत् । यदा च तदोजो गर्भिणीं सञ्चरति तदा तथैवौजःसम्पत्त्या गर्भिणी मुदिता भवेत्, शिशुर्म्लानो भवेदोजःसम्पत्त्यभावात् । तस्मिन् काले शिशुर्बालो जात उत्पन्नो न जीवति । कुतः ? ओजोऽनवस्थानात् । ओजसस्तदानीं शिशावनवस्थितत्वादचिरकालप्ररूढ-त्वात् । गर्भिण्यान्तु न सर्व्वमचिरकालमनवस्थितमोजो यथा गर्भे ; तस्मान्न तस्या निरोजस्त्वम् । अतएवाह;—नारी संशयिता भवेत् । कदाचिज्जीवति कदाचिन्न जीव-तीति संशयितेत्यर्थः ॥ ६९ ॥

क्षीरेति । अत्राष्टमे मासि क्षीरसंस्कृता पेया पातव्या । किम्भूता ? सघृता । तथा अन्वासनं घृतं शस्यते । कीदृक् ? मधुरैर्द्राक्षादिभिः साधितं पक्वम्, तथा तेनैव प्रकारेण पुराणशकृतः शुद्ध्यर्थं बस्तिर्निरूहः प्रशस्यते युज्यते । तत्र च बस्तौ कः कषायः कः कल्क इत्याह,—शुष्कमूलकादीनां कषायेण, तथा शताह्वाकल्कितः, तथा सह तैलेन घृतेन सैन्धवेन च ॥ ७० । ७१ ॥

तस्मिन्निति । एकञ्च तदहश्च एकाहम् । राजाहःसखिभ्यष्टजिति टच, अह्नष्ट-खोरेवेति टिलोपः । एकाहेन यातोऽतिक्रान्तोऽन्तरितोऽष्टमो मासः एकाहयातस्तस्मिन्

वर्षाद् विकारकारी स्यात् कुक्षौ वातेन धारितः ॥ ७३ ॥
शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः।
बहुस्नेहा यवागूर्वा पूर्वोक्तं चानुवासनम् ॥ ७४ ॥
तत एव पिचुं चास्या योनौ नित्यं निधापयेत्।
वातघ्नपत्रभङ्गाम्भः शीतं स्नानेऽन्वहं हितम् ॥ ७५ ॥
निःस्नेहाङ्गीं न नवमान् मासात् प्रभृति वासयेत् ॥ ७६ ॥
प्राग्दक्षिणस्तनस्तन्या पूर्वं तत् पार्श्वचेष्टिनी।

---

अष्टमे मासि पुनरेकदिवसातिक्रान्तेऽप्यतः परं सूतेः प्रसवस्य कालो यावद् वर्षम्। अपिशब्दाद् याते त्वष्टमे मासि अतः परं सूतेः काल इति गम्यते; अष्टमान्मासादनन्तरं नवमदशमैकादशद्वादशमासान् यावत्। एषु मासेषु गर्भो जातो दीर्घायुरादियुक्तो जीवति ॥ ७२ ॥

वर्षादिति। आनन्तर्ये पञ्चमी। वर्षाद् द्वादशमासादनन्तरं गर्भः कुक्षौ वातेन धारितो रुद्धनिष्क्रमणो विकारकारी भवेत्, विकारमवश्यं करोति। गर्भस्य सन्निवेशोऽपि संग्रहे प्रोक्तो यथा,—"गर्भस्तु मातृपृष्ठाभिमुखो ललाटे कृताञ्जलिः संकुचिताङ्गो गर्भकोष्ठे दक्षिणं पार्श्वमाश्रित्यावतिष्ठते पुमान् वामं स्त्री मध्यं नपुंसकम्। तत्रावस्थितश्च गर्भो मातरि स्वपत्यां स्वपिति प्रतिबुद्धायां प्रतिबुध्यते" इति ॥ ७३ ॥

शस्त इति। नवमे मासि स्निग्धो मांसरसयुक्त ओदनः शस्तो हितः। अथवा पेया बहुस्नेहा शस्तेति लिङ्गविपरिणामेन सम्बन्धः। पूर्वोक्तमनुवासनं घृतं मधुरः साधितमित्यादि तच्च शस्तम् ॥ ७४ ॥

तत इति। तत एवान्वासनघृतात् पिचुं नक्तकमस्या गर्भिण्या योनौ नित्यं सदा निधापयेत्तत्र स्थापयेद्, वातविजयार्थम्। पवनेनानाक्रान्तयोनिर्हि सुखं गर्भं सूते; तथा वातघ्नानां द्रव्याणां पत्राणि तेषां भङ्गः समूहस्तेन क्वथितमम्भः शीतं कृत्वा स्नानेऽन्वहमहरहर्गर्भिण्यै हितम्। अन्वहमित्यनर्थेति टच् ॥ ७५ ॥

निःस्नेहाङ्गीमिति। निःस्नेहाङ्गीमस्नेहगात्रां तां गर्भिणीं गर्भप्रसवकालं यावन्न वासयेत्, अपि तु सस्नेहाङ्गीं स्थापयेत्। निःशब्देन निरस्तः स्नेहो यस्मादङ्गात्तदेवं निःस्नेहमङ्गं यस्याः सा निस्नेहाङ्गी ताम्। अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति ङीप्। कुतः? कालादारभ्य नवमान्मासात् प्रभृति। यद्यपि कालोऽत्र न निर्दिष्टस्तथापि नवमान्मासादारभ्य सामर्थ्याद् यावन्मुक्तगर्भशल्या स्यात् तावन्निःस्नेहाङ्गीं गर्भिणीं न स्थापयेदिति लभ्यते। सस्नेहाङ्गधारणञ्च तस्याः कुपितवायोर्नित्यं सन्निहितत्वात् ॥ ७६ ॥

इदानीं गर्भिण्या यैर्लक्षणैरव्यभिचारिभिः पुत्रदुहितृनपुंसकयमकप्रसवोऽनुमीयते तान्याह,—प्रागिति। प्राक्पूर्वं दक्षिणे स्तने स्तन्यं क्षीरं यस्याः प्रादुर्भवति सा पुत्रं सूते इति सम्बन्धः। तथा पूर्वं तत्पार्श्वचेष्टिनी। तच्छब्देन दक्षिणं पार्श्वं परामृश्यते। तेन दक्षिणेन पार्श्वेन चेष्टितं गमनस्वपनादिकं यस्याः सा तत्पार्श्वचेष्टिनी पुत्रं सूते

पुन्नामदौहृदप्रश्न-रता पुंस्वप्नदर्शिनी ॥ ७७ ॥
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ।
पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसङ्गतिम् ।
नृत्य-वादित्र-गान्धर्व-गन्धमाल्य-प्रिया च या ॥ ७८ ॥
क्लीबं तत् सङ्करे तत्र मध्यं कुक्षेः समुन्नतम् ।
यमौ पार्श्वद्वयोन्नामात् कुक्षौ द्रोण्यामिव स्थिते ॥ ७९ ॥
प्राक् चैव नवमान् मासात् सूतिकागृहमाश्रयेत् ।
देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ॥ ८० ॥
तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ॥ ८१ ॥

---

इति सर्व्वत्र योज्यम् । तथा गच्छन्त्याः पूर्व्वं दक्षिणपादोत्क्षेपो हस्तकरणीये च पूर्व्वं दक्षिणेन पाणिना चेष्टत इति तत्पार्श्वचेष्टा बोध्या । पुन्नामेत्यादि । पुंलिङ्गोपलक्षितं नाम पुन्नाम ; दौहृदश्च प्रश्नश्च दौहृदप्रश्नौ, पुनाम्नोर्दौहृदप्रश्नयो रताभियुक्ता ; पुन्नाम्नि दौहृदे रता । दौहृदकाले योऽभिलाषविशेषो गर्भिण्याः स दौहृदशब्दवाच्यः । तथा पुन्नाम्नि प्रश्नेऽभिरता पुनः पुनः पुन्नामप्रश्नं करोति, तथा पुन्नामधेयान् स्वप्नान् पुरुष-गज-वाजि-वराहादीन् आम्र-दाड़िमाशोक-वृक्षादीन् वा द्रष्टुं शीलं यस्याः सैवम्, तथा उन्नते दक्षिणे गर्भकोष्ठाख्ये कुक्षौ, तथा गर्भे गर्भस्थाने परिमण्डले वर्त्तुले सति पुत्रं सूते । अन्यथा, पुत्रप्रसवसूचकाङ्कितैर्विपरीत्ये च लक्षणे कन्यां सूते, यथा प्राग् दक्षिणस्तनस्तन्येत्यादि पुत्रप्रसवसूचकं लक्षणं अतोऽन्यथा प्राग्वामस्तनस्तन्येत्यादिलक्षणं गर्भिण्याः कन्याप्रसवसूचकम् । न केवलं पुत्रप्रसवलक्षणाद् विपर्य्ययेण कन्यां सूते, यावद् या चेच्छति नृसङ्गतिम् या च गर्भिणी पुरुषेण सह सङ्गतिमिच्छति कामयते सापि कन्यां सूते ; तथा या च नृत्यादिप्रिया सा कन्यां सूते ॥ ७७ । ७८ ॥

इदानीं षण्डप्रसवलक्षणमाह,—क्लीबमिति । तदित्यनेनात्र पुत्रप्रसूतिलक्षणं दुहितृ-प्रसूतिलक्षणञ्च द्वयमपि परामृश्यते । द्वयस्यैतस्य लक्षणस्य सङ्करे सङ्कीर्णलक्षणतायां क्लीबं नपुंसकं गर्भं सूते ; तस्मिन् क्लीबे गर्भे कुक्षिस्थिते कुक्षेर्मध्यं समुन्नतं भवति । यमौ द्वौ गर्भौ गर्भिणी सूते । कथमिति तल्लक्षणार्थमाह,—पार्श्वद्वयोन्नामात् पार्श्वद्वयोत्क्षेधात् । अतएव कुक्षावुदरे द्रोण्यामिव स्थिते । द्रोणीमध्यनिम्ना कुक्षिरपि पार्श्वद्वयोन्नत्या मध्यनिम्ना भवति ॥ ७९ ॥

प्रागिति । सा गर्भिणी सूतिकागृहं सूतिकागारं नवमान्मासात् पूर्वमेवाश्रयेत् । कुत्र देशे कृतमित्याह, देशे प्रशस्ते प्राक्प्रवणे उदक्प्रवणे वा वास्तुविद्याविद्भिः परीक्ष्य कल्पितम् । कीदृशम् ? सम्भारैः सम्पन्नं सकलोपकरणैर्युक्तम्, तथा साधकेऽहनि शुभपुण्यनक्षत्रे दिवसे सति ॥ ८० ॥

तत्रेति । तत्र सूतिकागृहे स्थितां सूतिमुदीक्षेत । अहमत्र प्रसविष्ये इति चेतसि विधाय सा गर्भिणी तत्रासीतेत्यर्थः । किम्भूता ? सूतिकापरिवारिता अनेकवार-प्रसवानु

अद्य श्वः प्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ।
अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता ॥ ८२ ॥
वेदनोरूदर-कटी-पृष्ठ-हृद्-बस्ति-वंक्षणे ।
योनि-भेद-रुजा-तोद-स्फुरण-स्रवणानि च ॥ ८३ ॥
आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः ॥ ८४ ॥
अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ।
हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णाम्बुसेचिताम् ॥ ८५ ॥
पाययेत् सघृतां पेयां तनौ भूशयने स्थिताम् ।
आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनः पुनः ।
अधोनाभेर्विमृद्नीयात् कारयेज्जृम्भचंक्रमम् ॥ ८६ ॥

---

भूत-तत्कालोचित-व्यवहार-कुशलाभिः स्त्रीभिः परिवारिता । संग्रहे तूक्तम्,—"बहुशः प्रसूताभिरनुरक्ताभिरविषादिनीभिरविसम्वादिनीभिः क्लेशसहाभिः परिवृता स्वस्त्ययनपराऽनुलोमनैराहारविहारैरनुलोमितवातमूत्रपुरीषा प्रसवकालमुदीक्षेत । स्वल्पेऽपि च विण्मूत्रविबन्धे फलवर्तीः प्रयोजयेदिति ॥ ८१ ॥

इदानीमासन्नप्रसवाया लक्षणमाह,—अद्येति । अद्य वा श्वो वा आसन्नः प्रसवस्तस्मिंन्नासन्नप्रसवे ग्लान्यादयो भवेयुः, गर्भिण्या इति सम्बन्धः । ग्लानिः हर्षक्षयः, तथा कुक्षी च अक्षिणी च कुक्ष्यक्षि, तस्य श्लथता शिथिलत्वं स्वस्थानाच्चलितत्वमिव, तथा क्लम उपतापः, तथा अधो गुरुत्वादीनि भवन्ति, तथा ऊर्वादिषु वेदना पीडा भवति, तथा योनिभेदादयः स्युः ॥ ८२ । ८३ ॥

आवीनामिति। अतोऽस्माद्योनिभेदादेरनु पश्चादावीनां गर्भनिष्क्रमणकालशूलविशेषाणां जन्मोत्पादः । ततोऽनन्तरं गर्भोदकस्रुतिस्तत्काले योनितो जलस्रावमात्रः स गर्भोदकसंज्ञः ॥ ८४ ॥

अथेति । अथ गर्भोदकस्रुतेरनन्तरं तां गर्भिणीमुपस्थितगर्भामभिमुखीभूतगर्भामाविजन्मोदकस्रावादिना ज्ञात्वा सघृतां पेयां पाययेत् । किम्भूताम् ? कृतकौतुकमङ्गलाम् विशिष्टकाले यो रक्षाबन्धो बाह्वादौ बध्यते स कौतुकशब्दवाच्यः । कौतुकाख्यं मङ्गलं कौतुकमङ्गलम् । कृतं कौतुकमङ्गलं यस्यास्ताम्,—तथा हस्तस्थं पुन्नामदाड़िमादि फलं यस्यास्तां, तथा सुष्ठु अभ्यक्तां, तथा उष्णाम्बुसेचिताम् । इत्यस्यानन्तरं पाययेत् पेयामिति पठन् अनुष्णाम्बुसेचनादनन्तरं पेयापानं कार्यमिति बोधयति । तनाविति । तनौ मृदुनि भूशयने स्थितां मृद्नीयान्न खट्वादिशयनस्थिताम् । तथा संग्रहे चोक्तम्,—"सुरक्तारूपक्षचर्मप्रच्छन्ने मृदुनि भूशयने शयानामित्यादि । कुतः अङ्गात् प्रभृति विशेषेण मृद्नीयात् । नाभेरधो नोर्द्ध्वं नाभेः । 'किम्भूतां ताम् ? आभुग्नसक्थिम् । आ समन्तात् भुग्ने कुटिले सक्थिनी यस्याः सा आभुग्नसक्थिस्ताम्

गर्भः प्रयात्यवागेवं तल्लिङ्गं हृद्विमोचतः ।
आविश्य जठरं गर्भो बस्तेरुपरि तिष्ठति ॥ ८७ ॥
आव्यो हि त्वरयन्त्येनां खट्वामारोपयेत्ततः ॥ ८८ ॥
अथ संपीडिते गर्भे योनिमस्याः प्रसाधयेत् ॥ ८९ ॥
मृदुपूर्वं प्रवाहेत वाढमाप्रसवाच्च सा ॥ ९० ॥
हर्षयेत्तां मुहुः पुत्रजन्मशब्दजलानिलैः ॥ ९१ ॥

---

तथाविधां मृद्नीयात् ; तथा पुनः पुनरभ्यक्ताङ्गीं वातकोपभयात्, तथा जृम्भञ्च चंक्रमञ्च तत् कारयेत् । जृम्भो जृम्भणम् । चंक्रमश्चंक्रमणं द्रुतगमनम् ॥ ८५ । ८६ ॥

किमेवमनुष्ठिते सति भवतीत्याह——गर्भ इति । एवमनया इतिकर्त्तव्यतयाऽनुष्ठितया गर्भोऽवाक् प्रयातूर्ध्वादधो गच्छति, हृत्स्थानं परित्यज्याधोऽवस्थितिं करोतीत्यर्थः । संग्रहे तूक्तम्,—दद्यात् कुष्ठ-लाङ्गलकी-वचा-चव्य-चित्रक-चिरबिल्व-चूर्णमुपाघ्रातुं मुहुर्मुहुर्योजयेत्, तथा भूर्जपत्रशिंशपासर्जरसानामन्यतमं धूममन्तरान्तरा च । पार्श्व-पृष्ठ-कटी-सक्थि-देशान् कोष्णेन तैलेनाभ्यज्यानुसुखमस्या विमृद्नीयात् ; एवमवाक् परिवर्त्तते गर्भ इति । मुसलेनोदूखलं धान्यपूर्णमाहननीयं गर्भस्यावाक्स्थितये इति केचिदाहुस्तदयुक्तम् । यतः गर्भिण्यास्तावद्व्यायामवर्जनं सततमुपदिष्टम् । विशेषतश्च प्रसवकाले प्रचलितसर्वधातुदोषायाः सुकुमाराशयाया नार्या मुसलव्यायामप्रेरितो हि वायुः प्राणान् हिंस्यादिति । विमर्दनादिक्रियाश्च गर्भिण्यास्तावत् कारयेत्, यावद्गर्भनिष्क्रमणं भवति । अथ मातृहृदयात् मुक्तो गर्भः केन लक्षणेन ज्ञायत इत्याह,—तल्लिङ्गमित्यादि । तदित्यनेन गर्भः परामृश्यते । तस्य गर्भस्य लिङ्गम् । गर्भस्य-तल्लिङ्गं यत् हृद्विमोचतो हृदयमोचनादनन्तरं स गर्भो जठरमाविश्य बस्तेरुपरि तिष्ठति ॥ ८७ ॥

आव्य इति । आव्यः प्रसवकालशूलविशेषाः, यस्मादेनां गर्भिणीमभित्वरयन्ति अनवरतमुत्पद्यमानत्वात्, ततस्तस्मादेनां गर्भिणीं खट्वामारोपयेदारोहयेत् । अथेति । अथ खट्वारोहणादनन्तरं खट्वास्थितायाः गर्भे सम्पीड़िते वायुना योनिमुखाक्रान्ततया अस्या गर्भिण्या योनिं प्रसाधयेदभ्यङ्गादिदानेन विकासयेत् । मृदुपूर्वमिति । ततः सा गर्भिणी गर्भं मृदु कृत्वा पूर्वं प्रवाहेत, यावद्योनिमुखेनागतो गर्भः, गर्भं योनिद्वारमागतं ज्ञात्वा वाढ़ं भृशं प्रवाहेत, आप्रसवात् प्रसवं यावत् । तथा चोक्तं संग्रहे,—"शनैः शनैश्च पूर्वं प्रवाहिष्ठाः निर्गमे वाढम् । गर्भस्य योनिमुखप्रतिपत्तौ वाढ़तरम्" । आप्रसवादित्याङ्मर्यादावचन इत्याहुः । कर्म्मप्रवचनीयत्वे पञ्चम्यपाङ्परिभिरिति पञ्चमी ॥ ८८—९० ॥

हर्षयेत्तामिति । तां गर्भिणीमनन्तरं हर्षयेत् सुमनसं मुहुः कारयेत् । केन ? पुत्रजन्मशब्देन प्रसूतासि सुभगे धन्यं पुत्रमित्येवं रूपेणासकृत् स्त्रीभिरुच्चारितेन, तथा जलेन शीतलेन, तथा अनिलेन । संग्रहेऽप्युक्तम् । एनां ब्रूयाच्च सुभगे शनैः प्रानः

प्रत्यायान्ति तथा प्राणाः सूतिक्लेशावसादिताः ॥ ९२ ॥
धूपयेद्गर्भसंगे तु योनिं कृष्णाहिकञ्चकैः ।
हिरण्यपुष्पीमूलञ्च पाणिपादेन धारयेत् ॥ ९३ ॥
सुवर्चलां विशल्यां वा जरायूपतनेऽपि च ।
कार्यमेतत्तथोत्क्षिप्य बाह्वोरेनां विकम्पयेत् ॥ ९४ ॥
कटीमाकोटयेत्पार्ष्ण्या स्फिचौ गाढं निपीड़येत् ।
तालुकण्ठं स्पृशेद् वेण्या मूर्ध्नि दद्यात् स्नुहीपयः ॥ ९५ ॥
भूर्ज-लाङ्गलिकी-तुम्बी-सर्पत्वक्-कुष्ठ-सर्षपैः ।
पृथग् द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥ ९६ ॥

---

प्रवाहस्व शोभनस्ते सुखवर्णः पुत्रं जनयिष्यसीति। तथा अन्या तु वासकर्णेऽस्या मन्त्रमिमं जपेत्। "क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः। सगर्भा त्वां सदा पातु वैशल्यं वा दधत्यपि" इति। प्रसूवत्वमविक्लिष्टमविक्लिष्टा शुभानने। कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम्" इति। तथा,—इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि। उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते। इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुञ्चतु स्त्री। तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम्" इति। अपरा स्त्री गर्भिणीमनुशिष्यात् अनागतायां वेदनायां मा प्रवाहिष्ठाः। अकालप्रवाहणं हि विरूमूत्रादिवेगानामिव उदीरणमनर्थकरमहितञ्च। गर्भस्य श्वास-कास-शोष-कुब्जतादि-करत्वादिति। अथ किं हर्षाद्युत्पादनेन स्यादित्याह,—प्रत्यायान्तीति। तथा तेन प्रकारेण हर्षादिजननेन प्राणाः सूतेः क्लेशा आवयस्तत्कृतानि दुःखानि तैरवसादिता ग्लानिं नीताः प्रत्यायान्ति पुनर्नवीभवन्ति ॥ ९०—९२ ॥

धूपयेदिति। गर्भस्य सङ्गे सक्तौ योनिं कृष्णसर्पनिर्मोकेन धूपयेत्, धूपनं योनौ कुर्यात्। धूपयेदिति गुपूधूपेत्यादिना आयप्रत्ययः, ततो विधौ लिङ्। तथा हिरण्यपुष्पीमूलं पाणिना पादेन च सा गर्भिणी धारयेत्। अथवा सुवर्चलां विशल्यां वा धारयेत्। एतद्गर्भसङ्गोक्तं जरायोरपराख्यस्यापतनेऽनिष्क्रान्तौ कार्यं विधातव्यम्; न केवलं गर्भसङ्गोक्तं कार्यं, यावदेनामपतितजरायुं बाह्वोर्दोर्भ्यामुत्क्षिप्य विकम्पयेत्। संग्रहे तूक्तम्—"न चेदपरा पतति, ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवदुत्पीड्यान्येन पृष्ठत उपसंगृह्य विधुनुयात्" इति; तथा पार्ष्ण्या कटीमाकोटयेदिति, पुनः पुनः कट्यां पार्ष्णिघातं कुर्यादित्यर्थः; तथा स्फिचौ युतौ सुष्ठु निपीड़येत्; तथा वेण्या केशरचनाविशेषाख्यया तालुकण्ठं स्पृशेत्। संग्रहेऽप्युक्तम्,—"वेण्याङ्गुल्या वा केशवेष्टितया वा तालुकण्ठं परामृशेत्" इति। तथा मूर्ध्नि मस्तके स्नुहीपयः सुधादुग्धं दद्यात्; तथा भूर्जादिभिर्द्रव्यैः पृथक् प्रत्येकमथवा द्वाभ्यां कृत्वा समस्तैर्वा योन्या लेपनं धूपनञ्च कार्यमिति शेषः।

कुष्ठ-तालीश-कल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थानां बिल्वजेनासवेन वा ॥ ९७ ॥
शताह्वा-सर्षपाजाजी-शिग्रु-तीक्ष्णक-चित्रकैः ।
सहिङ्गुकुष्ठमदनैर्मूत्रे चीरे च सार्षपम् ॥ ९८ ॥
तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ।
शतपुष्पा-वचा-कुष्ठ-कणा-सर्षप-कल्कितः ॥ ९९ ॥
निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।
तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात् ॥ १०० ॥
कुशला पाणिनाऽक्तेन हरेत् कॢप्तनखेन वा ॥ १०१ ॥

---

कुष्ठतालीशपत्रयोः कल्कं वा सुरामण्डेनोपरिस्थितेन तां पाययेत्, अथवा कुलत्थानां यूषेण क्वाथेन पाययेत् । बिल्वजेनासवेन वा बिल्वं वारिणा आसुत्य धान्यराशौ धारितं तच्छीतकषायो बिल्वज आसव उच्यते । संग्रहेऽप्युक्तम्,—"भूर्जपत्र-काच-मणि-सर्पनिर्मोकैश्च योनिं धूपयेत्, भूर्जगुग्गुलुभ्यां वा ; शालिमूलहिङ्गुना वा सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनी-निम्ब-सर्पनिर्मोकैश्च कुक्ष्यादि धूपयेत् (१) ; गुड़-नागरकल्केन वा लिम्पेत् । तदेव वा भक्षयेत् । लाङ्गलीमूलकल्केन वा पाणिपाद-मुदरञ्च लिम्पेदिति । तथोक्तम्,—"कुष्ठलाकल्कं वा सुरया पाययेत् । अर्कालर्क-कषायं वा सुरोन्मिश्रम् । कुष्ठलाङ्गलकीमूलकल्कं वा मद्यमूत्रान्यतरेण । शतपुष्पा-कुष्ठ-मदन-हिङ्गु-सिद्धस्य च तैलस्य पिचुं ग्राहयेत्" इति ॥ ९३—९७ ॥

शताह्वेति । शताह्वादिभिर्द्रव्यैः सार्षपं तैलं मूत्रे चीरे चोभयस्मिन् सिद्धं पक्व-मनुवासनं हितम् । क्व ? पायौ गुदे, अथवा योन्यां गर्भनिष्क्रमणद्वारे । तथा शताह्वादिभिर्द्रव्यैः कल्कितैर्निरूहो बस्तिः कल्पोक्तो यौगिकः । सह स्नेहेन लवणेन वा वर्त्तमान आशु शीघ्रमेव अपरां जरायुसञ्ज्ञां पातयति ; यस्मात्तत्सङ्गेऽनिलो हेतुर्वायुः कारणम् । तज्जयात् वातजयात् सा अपरा निर्याति कुक्षितो बहिर्निष्क्रामति । पवनविजये च बस्तिः प्रधानम् । तथा चोक्तम्,—वातोल्वणेषु दोषेषु वाते वा बस्ति-रिष्यते" इत्यादि । संग्रहे तु गर्भिण्या आस्थापनेऽनुवासने च सन्निवेशविशेष उक्तः । यथा, गर्भिणीन्तु न्युब्जामास्थापयेदनुवासयेच्च, तथा अस्या विवृतमार्गतया सम्यगौषध-मनुप्रविशतीति ॥ ९८—१०० ॥

कुशला इति । अथवा कुशला तद्व्यापारनिपुणा योषित् पाणिना सर्पिषाऽ-भ्यक्तेन तां हरेत् । किम्भूतेन पाणिना ? कॢप्तनखेन कॢप्ताः कल्पिताः शस्त्रेण नखा यस्य तेन तथाविधेन पाणिना तां बलानुसारतः आकर्षेत् । संग्रहेऽप्युक्तम्,—"शाल्मली-

---

(१) अनभ्यक्तां वा कटुतैलसिद्धैः कल्कीकृतैर्वा तलाकेरालिम्पेत् । इत्यधिकः पाठः ।

मुक्तगर्भाऽपरां योनिं तैलेनाङ्गञ्च मर्दयेत् ॥ १०२ ॥
मक्कल्लाख्ये शिरोबस्ति-कोष्ठशूले तु पाययेत् ।
सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ।
धान्याम्बु, वा गुड़-व्योष-त्रिजातक-रजोन्वितम् ॥ १०३॥
अथ बालोपचारेन बालं योषिदुपाचरेत् ॥ १०४ ॥
सूतिका क्षुद्वती तैलाद् घृताद्वा महतीं पिबेत् ।
पञ्चकोलकिनीं मात्रामनु चोष्णं गुड़ोदकम् ॥ १०५ ॥
वातघ्नौषधतोयं वा तथा वायुर्न कुप्यति ।
विशुद्ध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ॥ १०६ ॥
स्नेहायोग्या तु निःस्नेहममुमेव विधिं भजेत् ।
पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥ १०७ ॥

पिच्छया वा सन्ततया योनिं पूरयित्वा विधुनुयात्" इति । मुक्तगर्भेति । गर्भश्चापरा च गर्भापरं, मुक्तं गर्भापरं यया योन्या तां तैलेन मर्दयेत् । अङ्गं शरीरञ्च मर्दयेत् ॥ १०१ । १०२ ॥

मक्कल्लाख्ये इति । मक्कल्लाख्ये रोगे उत्पन्ने शिरोवस्तिकोष्ठशूललक्षणे सति यवक्षारं सूक्ष्मचूर्णितं घृतेन अथवोष्णजलेन तां सूतां पाययेत् ; धान्याम्बु, वा तां पाययेत् । किम्भूतम् ? गुड़व्योषत्रिजातकरजोन्वितम् । गुड़ इति सामान्योक्तावपि पुराणोऽत्र गुड़ो ग्राह्यः पथ्यत्वात् । मक्कल्लाख्यो रोगः । शिरोवस्तिकोष्ठशूल इति लाघवेन तल्लक्षताऽस्य लक्षणमुक्तम् ॥ १०३ ॥

अथेति । अथ बालं जातमात्रमेवोपाचरेदुपपादयेत् । का ? योषित् बहुज्ञत्वः प्रसूता न पुमान् । केन ? बालोपचारेण बालोपचरणीयोक्तेनाहारविहारादिना । सूतिकेति । सूतिका क्षुद्वती बुभुक्षिता सती तैलादथवा घृतात् महतीं मात्रां पिबेत् । किम्भूताम् ? पञ्चकोलकं विद्यते यस्या मात्रायास्तां पञ्चकोलकिनीम् । सूक्ष्मचूर्णीकृतपञ्चकोलकयुक्तां तां मात्रां पिबेदित्यर्थः । अष्टभिर्यामैर्या जरां गच्छति सा स्नेहमात्रा महती । अनु चोष्णं गुड़ोदकं पिबेदिति योज्यम् ॥ १०४ । १०५ ॥

वातघ्नेति । वातहरद्रव्यक्वाथं वा पश्चात् पिबेत् ; तदेवं कृते सति वायुन कुप्यति न कोपं याति । शून्यं कोष्ठं प्राप्य दुष्टं रक्तञ्च विशुध्यति । अयमेव क्रमो द्विरात्रं त्रिरात्रं वा यथायोगं कार्यः । स्नेहेति । स्नेहपानायोग्या तु स्त्री या स्नेहं नार्हति सा निःस्नेहं स्नेहं विना अमुमेव पूर्वोक्तं विधिं भजेत् । पीतवत्याश्च तस्या जठरं यमकाक्तं तैलघृताभ्यामभ्यक्तं विवेष्टयेत् वाससेति शेषः । पीतवत्या इत्यविशेषनिर्देशः ; कदाचित् स्नेहयोग्या स्नेहं पीतवती स्नेहायोग्या तूष्णं गुड़ोदकं पीतवती, अथवा वातघ्नौषधतोयं पीतवतीति सामान्यो यो निर्देशस्तस्यार्थः ॥ १०६ । १०७ ॥

जीर्णे स्नाता पिबेत् पेयां पूर्वोक्तौषधसाधिताम्।
त्र्यहादूर्ध्वं विदार्यादि-वर्गक्वाथेन साधिता ॥ १०८ ॥
हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाऽथवा।
सप्तरात्रात् परं चास्यै क्रमशो बृंहणं हितम् ॥ १०९ ॥
द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत् ॥ ११० ॥
यत्नेनोपचरेत् सूतां दुःसाध्या हि तदामयाः।
गर्भवृद्धिप्रसव-रुक्-क्लेदास्र-स्रुति-पीड़नैः ॥ १११ ॥
एवञ्च मासादध्यर्धान्मुक्ताहारादियन्त्रणा।
गतसूताभिधाना स्यात् पुनरार्त्तवदर्शनात् ॥ ११२ ॥
इत्यष्टाङ्गहृदये शारीरस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

जीर्णे इति। स्नेहे जीर्णे कवोष्णगुड़ोदके वातघ्नौषधतोये वा अनन्तरं स्नाता सती पूर्वोक्तौषधसाधितां पञ्चकोलकृतां पेयां पिबेत्। त्र्यहादूर्द्ध्वमनन्तरं विदार्यादिवर्गोक्तौषधैः सिद्धा यवागूः पेया स्नेहाढ्या हिता, अथवा सात्म्यतः सात्म्यवशात् पयसा चीरेण साधिता यवागूर्हिता। सप्तरात्रात् परमनन्तरं क्रमशो न सहसा तस्यै बृंहणं हितम्। बृंहणञ्च जीवनीय-बृंहणीयमधुरवर्गसिद्धैरभ्यङ्गोद्वर्त्तनपरिषेकावगाहनैर्हृद्यैश्चान्नपानैर्विधातव्यम् ॥ १०८। १०९ ॥

द्वादशेति। द्वादशाहेऽनतिक्रान्तेऽपरिसमाप्ते पिशितं मांसं नोपयोजयेन्नाभ्यवहारयेत्, स्कन्दादिद्वादशग्रहाभिषङ्गपरिहारार्थम्। मांसभोजनेन हि कदाचित्तैरभिषङ्गो भवेत्, तेषां मांसादत्वात् ॥ ११० ॥

यत्नेनेति। सूतां स्त्रीं यत्नेन तात्पर्य्येणोपचरेदुपक्रमेत्। कुतो हेतोरित्याह,—हि यस्मात् तस्या आमया रोगा दुःसाध्याः कृच्छ्रेणोपक्रम्याः। किमिति कृच्छ्रसाध्या इत्याह,—गर्भेत्यादि। वृद्धिश्च प्रसवश्च वृद्धिप्रसवौ, गर्भस्य वृद्धिप्रसवौ च रुक् च क्लेदास्रस्रुतिश्च पीड़नञ्च गर्भवृद्धिप्रसवरुक्-क्लेदास्र-स्रुति-पीड़नानि तैर्हेतुभूतैस्तदामया दुःसाध्याः। रुक् प्रवाहवेदना ॥ १११ ॥

एवमिति। एवमनेन प्रकारेण सार्द्धं मासमुपस्कृता क्रमेण मुक्ताहारविहारयन्त्रणा स्यात्। अध्यर्द्धमासात् परेण गतसूताभिधाना व्यपेतप्रसूतिव्यपदेशा पुनरार्त्तवदर्शनाद्भवेत्। संग्रहे तूक्तम्,—"जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते। वायोर्मार्गनिरोधाच्च गर्भस्थो न प्ररोदिति" इति ॥ ११२ ॥

इति श्रीमृगाङ्कदत्तविरचितायामष्टाङ्गहृदयटीकायां शारीरस्थाने गर्भाऽवक्रान्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः ।

अथातो गर्भव्यापदं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
गर्भिण्याः परिहार्याणां सेवया रोगतोऽपि वा ।
पुष्पे दृष्टेऽथवा शूले बाह्यान्तःस्निग्धशीतलम् ॥ १ ॥
सेव्याम्भोज-हिम-क्षीरि-वल्क-कल्काज्यलेपितान् ।
धारयेद् योनिबस्तिभ्यामार्द्रार्द्रान् पिचुनक्तकान् ॥ २ ॥
शतधौतघृताक्तां स्त्रीं तदम्भस्यवगाहयेत् ।
ससिता-क्षौद्र-कुमुद-कमलोत्पल-केसरम् ॥ ३ ॥

---

गर्भाऽवक्रान्तिशारीरादनन्तरं गर्भव्यापच्छारीरमारभ्यते । गर्भस्य व्यापत्प्रतीकारविज्ञानार्थमाह,—अथात इति । गर्भस्य व्यापत् गर्भव्यापत्, सा विद्यते यस्मिन्निति छः, तस्याध्यायानुवाकयोर्लुगिति लुक् । यद्यपि चात्र गर्भव्यापदश्चिकित्सा-प्युक्ता न केवलं व्यापत्, तथापि बाहुल्यादिदमुक्तमिति वेद्यम् । अथादीनां पूर्ववद् व्याख्या । गर्भिण्या इति । गर्भिण्याः परिहार्याणामाहारविहाराणां पूर्व्वोक्तानामतिव्यवायादीनां सेवनेन पुष्पे दृष्टे, अथवा रोगतः पुष्पे दृष्टे । रोगस्य च स्वभावापथ्यसर्षपशाकमन्यकदध्यादेराहारात् मात्रादेशकालादिवशाद् वा सम्भवः । गर्भाख्यफलहेतुत्वाद्रक्तं पुष्पमुच्यते । तस्मिन् दृष्टे चक्षुर्गोचरं प्राप्ते, अथवा शूले दृष्टे प्रश्नादिनोपलब्धे सति । दृशिरत्रोपलब्धिवचनः ; बाह्यान्तःस्निग्धशीतलं साधनमन्नपानप्रदेहपरिषेकादि कार्यम् । बहिः स्नानावगाहादौ, अन्तश्च भोजनानुपानादावित्यर्थः । रोगत इति तृतीयार्थे तसिः । तथा स्त्री योनिबस्तिभ्यां पिचुनक्तकान् धारयेत् ? किम्भूतान् ? सेव्यादिभिर्लेपितान् । सेव्यमुशीरम्, अम्भोजं पद्मम्, हिमं चन्दनम् ; क्षीरं विद्यते येषां ते क्षीरिणो वृक्षाः पिप्पलादयः, येषां शस्त्रादिच्छिन्नानां क्षीरं दृश्यते । वल्कं वल्कलम्, सेव्यञ्चाम्भोजञ्च हिमञ्च क्षीरिवल्कञ्च तेषां कल्कं चाज्यञ्च तैर्लेपितान् । पुनः किम्भूतान् ? आर्द्रार्द्रानतिशयेनाऽऽर्द्रीकृतान् । पिचुशब्देन विकेशिकासदृशः कार्पासमयो नक्तकश्चं खण्डः ॥ १ । २ ॥

शतेति । शतशब्दो बहुवारपर्यायः, संख्यावाचीत्यन्ये । तथा च संग्रहेऽधीतम्,—"सहस्रधौतसर्पिषाऽधो नाभेः सर्वतः प्रदिह्यात्" इति । शतधौतेन बहुधा प्रक्षालितेन घृतेनाभ्यक्तां स्त्रीं तदम्भस्यवगाहयेत्, तत्र तां निमज्जनं कारयेत् । तदित्यनेन हि सेव्यादिद्रव्यपरामर्शः । स्त्रीमिति वाम्शसोरितीयङ् विकल्पात् पूर्वरूपम् । तथा क्षीरं घृतञ्च लिह्यात् । किम्भूतम् ? ससितेत्यादि । सह सितया, तथा क्षौद्रेण, तथा

लिह्यात् क्षीरघृतं खादेच्छृङ्गाटक-कसेरुकम् ।
पिबेत् कान्ताब्जशालूक-बालोदुम्बरवत् पयः ॥ ४ ॥
शृतेन शाली-काकोली-द्विबला-मधुकेक्षुभिः ।
पयसा रक्तशाल्यन्नमद्यात् समधुशर्करम् ।
रसैर्वा जाङ्गलैः शुद्धि वर्जं चास्त्रोक्तमाचरेत् ॥ ५ ॥
असम्पूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत् ।
आमान्वये च तत्रेष्टं शीतं रूक्षोपसंहितम् ॥ ६ ॥
उपवासो घनोशीर-गुडूच्यम्बुधान्यकाः ।
दुरालभा-पर्पटक-चन्दनातिविषाबलाः ॥ ७ ॥

---

कुमुदकमलोत्पलानां केशरेण किञ्जल्केन सहितम् । अन्ये तु क्षीराद् घृतं क्षीरोद्भवं घृतं क्षीरघृतमिति मन्यन्ते । तथा खादेच्छृङ्गाटकं कसेरुकञ्च, तथा पयः क्षीरं पिबेत् । किम्भूतम् ? कान्तेत्यादि । कान्ता गन्धप्रियङ्गुः ; अप्सु जातमब्जम् कमलादि ; शालूकमुत्पलमूलम् ; बालमुदुम्बरमपक्वमुदुम्बरफलं । कान्ता चाब्जञ्च शालूकमूलञ्च बालोदुम्बरञ्च तानि विद्यन्ते यस्य पयसस्तदेवं तैः शृतं क्षीरं पिबेदित्यर्थः । यैर्हि तत् पयः शृतं तानि तत्रावश्यं विद्यन्ते । क्षीरश्रपणविधिश्चातीसारचिकित्सोक्तः पयस्त्र्यत्क्वाथ्य मुस्ता वा विंशतिमित्याद्यनुसारेणात्र कल्प्यः । तन्त्रान्तरे त्वेवमुक्तम्,—"द्रव्यादष्टगुणं क्षीरं क्षीराच्चोयं चतुर्गुणम् । क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः" इति । अन्ये तु कान्तादिद्रव्याणां चूर्णेन युक्तं कल्केन वा युक्तं पयः पिबेदित्याहुः । पयसा रक्तशाल्यन्नं समधुशर्करं सुशीतं भुञ्जीत । किम्भूतेन क्षीरेण ? शाल्यादिभिः शृतेन सिद्धेन । देशसात्म्याद्यनुरोधाज्जाङ्गलैर्वा रसैः शाल्यन्नमद्यात् । शुद्धेति । शुद्धिं वर्जयित्वा अस्त्रोक्तं रक्तपित्ताभिहितं यत् साधनं तद् बाह्यान्तराचरेत् सेवेत । अस्र-शब्दस्योपलक्षणार्थत्वाद्रक्तपित्तं गम्यते ॥ ३—५ ॥

असम्पूर्णेति । असम्पूर्णास्त्रयो मासाः यस्या गर्भिण्याः सैवं । तस्याः पुष्पदर्शने सति गर्भः प्रायो न तिष्ठति, असञ्जातसारत्वात् । तस्मात् प्रत्याख्याय प्रत्याख्यानं कृत्वा प्रसाधयेत् प्रकर्षेण यत्नेन साधयेत्, आमान्वये च । अत्रापि प्रत्याख्याय प्रसाधयेदित्यनुवर्त्तते । आमानुगते रक्तदर्शने सम्पूर्णत्रिचतुरादिमासाया अभिसञ्जात-सारेऽपि गर्भे सति विरुद्धोपक्रमत्वात् प्रत्याख्याय साधनं कारयेत् । तथा हि, रूक्ष-तीक्ष्णोष्णकटुप्रायमामघ्नं गर्भिण्या विरुद्धं शीतस्निग्धप्रायं चामस्य । एवमप्यामरक्तयो-र्द्वयोर्यदविरुद्धं तदुपदेष्टुमाह,—तत्रेति । तत्र आमान्वये सामतायां सत्यां शीतं यदन्नपानादि तत् सर्वं बाह्यतोऽन्तश्च हितम् । शीतं रक्तस्य पथ्यं, आमस्य विरुद्धत्वा-दपथ्यमित्याशङ्काह,—रूक्षोपसंहितं रूक्षेण तिक्तकषायादिना युक्तम्, तथा देशसत्त्वा-द्यनुरोधादुपवासो हितो न केवलं शीतं रूक्षोपसंहितं, तथा घनादयो द्रव्यविशेषाः सलिले

क्वथिताः सलिले पानं तृणधान्यादिभोजनम्।
मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत्॥ ८॥
गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत्॥ ९॥
गर्भकोष्ठविशुद्ध्यर्थमर्तिविस्मरणाय च।
लघुना पञ्चमूलेन रूक्षां पेयां ततः पिबेत्॥ १०॥
पेयाममद्यपा कल्के साधितां पाञ्चकौलिके।
बिल्वादिपञ्चकक्वाथे तिलोद्दालकतण्डुलैः॥ ११॥
मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः।
लघुरस्नेहलवणो दीपनीययुतो हितः॥ १२॥
दोषधातुपरिक्लेद-शोषार्थं विधिरित्ययम्।
स्नेहान्नबस्तयश्चोर्द्ध्वं बल्य-जीवन-दीपनाः॥ १३॥

क्वथिताः पाने हिताः। घनो मुस्तः, अरलुः श्योनाकः, तथा तृणधान्यानि नीवार-कोद्रव-श्यामाकादीनि, भोजनमाहारः, तत्रामान्वये हितम्। कैः सह? मुद्गादि-यूषैः। आदिग्रहणेन मकुष्टमसूरादयः शिम्बीधान्यविशेषाः पित्तश्लेष्महरा गृह्यन्ते। सामतायामेवोत्पन्नायामयमुपक्रमः। आमे तु जिते स्निग्धादि पूर्ववत्, पूर्वस्मिन्निव पूर्ववत् सप्तम्यन्ताद्वतिः। यथा प्रथमं रक्तदर्शने स्निग्धशीतं हितं, तथा अत्रापि पूर्वनिर्दिष्टं स्निग्धादि हितमित्यर्थः। स्निग्धशीतानि बाह्यान्तरुपयोज्यानि॥ ६—८॥

गर्भे इति। गर्भिण्या एवमासेवमानाया अप्यदृष्टवशाद् गर्भे निपतिते निःशेषेण पतिते सति तीक्ष्णं कर्कशं मद्यं सामर्थ्येन पिबेत्, बहु पिबेदित्यर्थः। किमर्थमित्याह-गर्भेत्यादि। गर्भकोष्ठविशुद्ध्यर्थमर्त्तेः पीडाया विस्मृत्यर्थञ्च। ततो मद्यपरिपाना-दनन्तरं रूक्षां पेयां पिबेत्। किम्भूताम्? लघुना पञ्चमूलेन बृहत्यादिना कृताम्। अमद्यपा तु या स्त्री सा गर्भे निपतिते पेयां पिबेन्न तु मद्यम्। क्व साधिताम्? कल्के। किं सम्बन्धिनि? पाञ्चकौलिके। पञ्चकोलस्यायं पाञ्चकौलिकस्तस्मिन्। पञ्चकोलकं कल्कीकृत्य तत्र पेयां साधितामित्यर्थः। तथा बिल्वादिपञ्चकक्वाथे महत्-पञ्चमूलकषाये साधितां पेयां पिबेदिति योज्यम्। कैः साधिताम्? तिलोद्दालक-तण्डुलैः। उद्दालको व्रीहिविशेषः। मासैस्तुल्यानि दिनानि माससंख्या वासराः। यावन्तो मासा गर्भस्य तावन्त्यहानि गर्भे निपतिते सत्येवं पूर्वोक्तेन प्रकारेण पेयादिः क्रमः कार्यः। किम्भूतः? लघुरस्नेहलवणः। न विद्यते स्नेहलवणौ यस्य। तथा दीपनीयैरग्निकृद्भिश्चित्रकादिभिर्द्रव्यैर्युतः, स तथाविधस्तत्र क्रमो हितः॥९—१२॥

किमर्थः,—दोषेति। दोषौ पित्तकफावत्र गृह्येते, वातस्य क्लेदसम्भवाभावात्। दोषौ च धातवश्च तेषां परिक्लेदस्तस्य शोषार्थं शोषणायायं विधिरिति। स्नेहादिति—ऊर्द्ध्वं मतो दोषधातुपरिक्लेदशोषादनन्तरं स्नेहान्नबस्तयो हिताः। स्नेहश्चतुर्विधः पानादौ

संजातसारे महति गर्भे योनिपरिस्रवात् ।
वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ।
उपविष्टकमाहुस्तं वर्द्धते तेन नोदरम् ॥ १४ ॥
शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ।
वाते क्रुद्धे कृशः शुष्येद् गर्भो नागोदरन्तु तत् ।
उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १५ ॥

---

हितः, तथा अन्नं स्निग्धमरूक्षं हितम् वस्तयोऽपि स्निग्धा एव न रूक्षा हिता वातकोपभयात् । किम्भूताः स्नेहान्नवस्तयः ? बल्यदीपनजीवनाः । बल्या बलाय हिताः, दीपना वह्नेः सन्धुक्षणकृताः, तथा जीवना ओजोवृद्धिकराः ॥ १३ ॥

इदानीमुपविष्टकनागोदरयोर्गर्भयोर्हेतुलिङ्गौषधानि वितानयितुमाह,—सञ्जात इति । सञ्जातः सारो बलं यस्याऽसौ सञ्जातसारो बलवान् गर्भस्तस्मिन्, तथा महति प्रवृद्धे सति । गर्भिण्याः परिहार्यापरिहाराद् योऽसौ योनेः परिस्रवः परिस्रवणं तस्मात् । परिस्रव इति च सामान्येन निर्देशात् कदाचिद्रक्तरूपः कदाचिदन्यादृशोऽपि गर्भात् स्रवति । परिस्रवाच्च कारणाद् वृद्धिमप्राप्नुवन्नगच्छन् । कोष्ठ एव गर्भाधार एव तिष्ठति गर्भः ; यतो योनिपरिस्रवात् कारणाद्वायुः कुपितः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडीं प्रतिपीड्यावतिष्ठते । ततो नाड्यां दोषैः कुल्यायामिव तृणपात्रादिभिः प्रतिच्छन्नायां रसस्यासम्यग्वहनान्नाडीरोधाद्वृद्ध्यभावो गर्भस्य । किम्भूतः ? कोष्ठे तिष्ठति सस्फुरः । स्फुरणं स्फुरः, अज्विधौ भयादीनामुपसंख्यानमित्यच् । गाङ्कुटादिभ्योऽञ्णिन्ङिदिति ङित्वाद्गुणाभावः । सह स्फुरेण चलनेन वर्त्तत इति सस्फुरः । एतावन्मात्रविशेषावस्थः कोष्ठे तिष्ठति । तं तथाविधं गर्भमुपविष्टकसंज्ञमाहुः, मुनय इति शेषः । तेन तथाभूतेन गर्भेण कोष्ठे स्थितेन तस्या उदरं न वर्द्धते न वृद्धिं याति गर्भस्यैवावृद्धेः । नहि यद् यस्य वृद्धौ वर्द्धते तदवृद्धौ तस्य वृद्धिः स्यात् । तथाहि, चन्द्रवृद्धेरिव समुद्रवेलाया वृद्धिः । उपविष्टकावस्थश्च गर्भो न वर्द्धते । अतस्तत्कारणाभावादुदरस्याप्यवृद्धिः ॥ १४ ॥

एवमुपविष्टकमुक्त्वा नागोदराख्यं वक्तुमाह,—शोकेत्यादि । शोक इति । शोकोपवासरूक्षाद्यैर्गर्भगर्भिण्यपचयकारिभिः पवनप्रकोपकारिभिर्हेतुभिर्वाते क्रुद्धे कुपिते, अथवा गर्भगर्भिण्योरुपचयप्रदैराहारविहारैरुपचितयोर्गर्भगर्भिण्योरपि कदाचिदत्यर्थं रक्तस्रुतिकारणान्यासेवेत स्त्री । तदानीं तस्या योन्यतिस्रवो जायते । तस्माद् योन्यतिस्रवात् कारणादपि पवने कुपिते कृशो गर्भः सम्पद्यते । शुष्येदित्यत्र च शब्दो लुप्तनिर्दिष्टो द्रष्टव्यः । न केवलं कृशो भवति शुष्येच्चेत्यर्थः । त तथाभूतं गर्भं नागोदरसंज्ञकं केषाञ्चिन्मते चोपशुष्ककसंज्ञं विद्यात् । अत्र नागोदरसंज्ञके गर्भेऽन्तःस्थिते उदरं वृद्धमपि महदपि सङ्क्षीयते हानिं याति । स्फुरणं च चिराच्चिरेण भवति । उपविष्टके तु केवलमवृद्धिर्न तु हानिः ॥ १५ ॥

तयोर्बृंहण-वातघ्न-मधुर-द्रव्य-संस्कृतैः ।
घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ।
तैरेव च सुतृप्तायाः क्षोभणं यानवाहनैः ॥ १६ ॥
लीनाख्ये निस्फुरे श्येन-गो-मत्स्योत्क्रोश-बर्हिजाः ।
रसा बहुघृता देया माषमूलकजा अपि ॥ १७ ॥
बालबिल्वतिलान्माषान् शक्तूंश्च पयसा पिबेत् ।
समेद्यमांसं मधु वा कट्यभ्यङ्गं च शीलयेत् ॥ १८ ॥
हर्षयेत् सततं चैनामेवं गर्भः प्रवर्द्धते ॥ १९ ॥
पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत नैव वा ॥ २० ॥

---

तयोरिति। तयोरुपविष्टकनागोदराख्ययोर्गर्भयोर्घृतक्षीररसैस्तृप्तिर्गर्भिण्याः कार्येति शेषः। किम्भूतैस्तैः? बृंहणवातघ्नमधुरद्रव्यैः संस्कृतैः सिद्धैः। बृंहणानि च तानि वातघ्नानि च मधुराणि चैवम्भूतानि यानि द्रव्याणि द्राक्षाशर्करादीनि न तु व्यस्तानि बृंहणानि वातघ्नानि मधुराणि च। तत्र केवलबृंहणानि प्रियङ्गुप्रभृतीनि, न तु वातघ्नानि। वातघ्नानि च बृंहणानि न तु मधुररसानि। यथा नागरादीनि। मधुराणि च न वातघ्नानि नापि बृंहणानि। यथा तण्डुलीयमसूरादीनि। तदेतैर्व्यस्तगुणैर्द्रव्यैः संस्कृतेन घृतादिना तृप्तिर्न कार्या। किं तर्हि समस्तबृंहणादिगुणयुक्तैर्द्रव्यैः संस्कृतैरिति बोध्यम्। तथा संग्रहेऽधिजगे,—"तयोर्जीवनीय-बृंहणीय-मधुरौषध-सिद्धानां सर्पिषामुपयोग" इत्यादि। तथा तद्गर्भपुष्टये तां गर्भिणीमामगर्भांश्च खादयेत्, वैद्य इति शेषः। आमगर्भान् खादन्त्याः कदाचिद् गर्भिण्या जुगुप्सा स्यात्, अतो गर्भगर्भिण्योर्द्वयोरपि व्यापदौ भवेयुरिति ण्यन्तोऽत्र खादिर्निर्दिष्टः। वैद्यो हि तां तथा युक्त्या खादयेत् यथाऽसौ न जुगुप्सेत। आमगर्भा अपरिपूर्णगर्भा उच्यन्ते। तथा तैरेव बृंहणादिद्रव्यसंस्कृतैर्घृतक्षीररसैरामगर्भैश्च सुतृप्तायास्तृप्तिं प्राप्तायाः क्षोभणं कार्यम्। कैः? यानैः रथादिभिर्वाहनैर्गजतुरगादिभिः। तत्रारोप्य गर्भिणीं वेगेन नयेदित्यर्थः ॥ १६ ॥

अथ लीनाख्यस्य गर्भस्य चिकित्सामाह,—लीनाख्ये इति। अस्योपविष्टकनागोदराभ्यामेव हेतुलक्षणयोरुक्तत्वाद् यदेवेह निःस्फुरणत्वादि विशेषान्तरं तदेवेह तल्लक्षणोक्तम्। संग्रहे तु पपाठ,—"यस्याः पुनर्वातोपसृष्टस्रोतसो लीनो गर्भः प्रसुप्तो न स्पन्दते तं लीनमित्याहुः" इति। तत्र लीनाख्ये गर्भे सति गर्भिण्याः श्येनादिजा रसा बहुघृता देयाः। आदिशब्देन तित्तिरिकुक्कुटादीनां ग्रहणम्। तथा माषमूलकजा रसा बहुघृता देयाः; तथा सात्म्यादिवशात् बालबिल्वादीन् समस्तानेकध्यं कृत्वा क्षीरेण पिबेत्; तथा सह मेदुरमांसेन मार्द्वीकं वा पिबेत्। कट्यां चाभ्यङ्गं शीलयेदभ्यसेत्। हर्षयेदिति—सततं मुहुर्मुहुर्थेनां गर्भिणीमुपविष्टकनागोदरलीनाख्यगर्भोदरां हर्षयेत् मुदितां कुर्यात्। एवमनवेतिकाङ्क्षितया कृतया गर्भः प्रवर्द्धते वृद्धिं याति। पुष्टेति—अन्यथा

उदावर्तन्तु गर्भिण्याः स्नेहैराशुतरां जयेत्।
योग्यैश्च बस्तिभिर्हन्यात् सगर्भां स हि गर्भिणीम्॥ २१॥
गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा। *
मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशव्यथम्॥ २२॥
गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लमः।
अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः॥ २३॥
तस्याः कोष्णाम्बुसिक्तायाः पिष्ट्वा योनिं प्रलेपयेत्।
गुडं किण्वं सलवणं तथान्तःपूरयेन्मुहुः॥ २४॥
घृतेन कल्कीकृतया शाल्मल्यतसिपिच्छया।

ऽन्यप्रकारेण पूर्वोक्तविपर्ययेण रूक्षात्मना सेवितेन मातुराहाररसेनाल्पेन पुष्टश्च तना-मात्रावशेष एव वत्सरसन्दोहैः कृच्छ्राज्जायेत कष्टेन योनितो निष्क्रामेत्। नैव वेति, अथवा यावज्जीवं गर्भिण्याः कुक्षावेवावसीदेन्न ततो निष्क्रामेत् कुक्षावेवाव-तिष्ठेत्॥ १७—२०॥

उदावर्त्तमिति। गर्भिण्या यदुग्रदावर्त्ताख्यो व्याधिः स्यात् तं स्नेहैश्चतुर्भिर्यथायोग्यौ-षधसाधितैः पानादिना सेवितैराशुतरामचिरात्त्वरितं जयेत्; तथा योग्यैस्तत्कालोचित-बस्तिभिरनुवासनैर्जयेत्। ननु गर्भिण्या वर्ज्येषु बस्तिमामासतोऽष्टमादिति प्रागुक्तं, तत् कथमिह सामान्येनानुवासनं तत्कृदुपादिचदित्याह,—हन्यादित्यादि। स यस्मादु-दावर्तो गर्भेण सह गर्भिणीं हन्यात्, अतस्तमाशुतरां जयेत्॥ २१॥

गर्भ इति। दोषाणां वातादीनामुपचयः प्रवृद्धत्वम्। अतिशयेन दोषोपचयोऽति-दोषोपचयः, तस्माद्धेतोरथवा अपथ्यैः स्वभावमात्राकालादिविरुद्धस्वभावैरथवा दैवादन्य-जन्मार्जितशुभाशुभकर्मवशादन्तरुदरमध्ये गर्भे मृते सति गर्भिण्या उदरं शीतमुष्मरहितं भवति; तथा स्तब्धं निश्चलं, तथा ध्मातं दृतिवद्वातपूरितं, तथा भृशव्यथमतिवेदनं भवति; तथा गर्भास्पन्दी गर्भस्यास्फुरणं भ्रमस्तृष्णा च भवति; तथा कृच्छ्रात् कृच्छ्रेण गर्भिण्या उच्छ्वसनमूर्द्ध्वश्वसनं, तथा क्लमो ग्लानिः; तथा अरतिः स्थानासन-शयनादिष्वनवस्थितत्वम् चेतसः, तथा स्रस्ते च ते नेत्रे च तयोर्भावः स्रस्तनेत्रत्वम्, स्रस्ते स्थानाच्युते इव, तथा आवीनामासन्नप्रसवकालजशूलविशेषाणामसमुद्भवो-ऽनुत्पादः॥ ३२। २३॥

तस्या इति। तस्या अन्तर्मृतगर्भाया ईषदुष्णजलसिक्ताया योनिं प्रलेपयेत्प्रदेहयेत्। गुड़ादिकं पिष्ट्वा सामर्थ्याद्गुडादिकेनैव लेपयेदिति योज्यम्। तथा अन्तः पूरयेत्। शाल्मल्यतसिपिच्छयेति सम्बन्धनीयम्। योनेः प्रकृतत्वात्तस्या अन्तरभ्यन्तरे बहिश्च।

* गर्भेतिदोषोपचयादिति वा पाठः।

मन्त्रैर्योगैर्जरायूक्तैर्मूढगर्भो न चेत् पतेत् ॥ २५ ॥
अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ।
हस्तमभ्यज्य योनिञ्च साज्यशाल्मलिपिच्छया ॥ २६ ॥
हस्तेन सव्यं तेनैव गात्रञ्च विषमं स्थितम् ।
आञ्छनोत्पीड़संपीड-विक्षेपोत्क्षेपणादिभिः ।
अनुलोम्य समाकर्षेद्योनिं प्रत्यार्जवागतम् ॥ २७ ॥
हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।
पादेन योनिमेकेन भुग्नोऽन्येन गुदञ्च यः ।
विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः ॥ २८ ॥
मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ २९ ॥

---

कौटस्था पिच्छया । घृतेन कल्कीकृतया पिष्टया । एवं योनिर्मुहुर्मुहुरभ्यन्तरं पूरयित्वाऽनन्तरं मूढगर्भपातनार्थं मन्त्रान् सिद्धान् प्रयोजयेत् । तथा जरायूक्तान् जरायूपतने कथितांस्तांश्च योगान् योजयेत् । मन्त्रैः संग्रहोक्तैः चितिर्जलसित्यादिभिरथवा अथर्ववेदोक्तैश्च मन्त्रैर्जरायोः पातनार्थमुक्तैः । एवमनुष्ठीयमानेऽपि मूढगर्भो यदि न पतत्यथानन्तरमीश्वरं नृपमापृच्छ्य तदाज्ञां गृहीत्वा तं मूढगर्भमाशु गर्भिण्या आहरेदाकर्षेत् । कथम् ? हस्तमभ्यज्य लेपयित्वा । तथा योनिमभ्यज्य । केन इत्याह साज्येत्यादि । शाल्मल्याः पिच्छा निर्यासः । सहाज्येन वर्तत इति साज्या, साज्या चासौ शाल्मलिपिच्छा च तया हस्तं योनिं चाभ्यज्य यत्नेन गर्भमाहरेत् । हस्तेन सव्यमाकृष्टं तेनैव हस्तेन साज्यशाल्मलिपिच्छाक्तेन तं गर्भं समाकर्षेत् । गात्रमिति, गात्रं च गर्भस्य विषमं ज्ञात्वा स्थितमयथामार्गेण स्थितमाञ्छनादिभिरनुलोम्य स्पष्टत्वं प्राप्ते सति योन्यभिमुखमार्जवेन ऋजुमार्गेणागतं सन्तमाहरेत् । आञ्छनेनायामेन दीर्घतयास्थापनेन तथोत्पीडनेनोर्द्ध्वपीडनेन । तथा समन्तात् पीड़नेन । तथा विक्षेपेणाविशेषप्रेरणेन । उत्कर्षेण क्षेपणमुत्क्षेपस्तेन । आदिग्रहणादेवंप्रायैरन्यैरपि स्वबुद्धिपरिकल्पितैः स्पष्टत्वं प्राप्ते इति ॥ २४—२७ ॥

इदानीं शस्त्रोपायसाध्यां मूढगर्भचिकित्सामाह,—हस्तेति । हस्तेन पादेन शिरसा अतुल्यकालं कदाचिद्धस्तेन कदाचित्पादेन कदाचिच्छिरसा योनिं प्रति भुग्नः कुटिलो मूढगर्भः प्रपद्यते आयाति यः स एको विष्कम्भो नाम मूढगर्भः । तथा पादेनैकेन योनिं तथा द्वितीयपादेन गुदं पायुं भुग्नः सन् यो मूढगर्भः प्रपद्यते आयाति, सोऽपरो विष्कम्भकः । तावेतौ द्वौ विष्कम्भौ नाम मूढौ मूढगर्भौ शस्त्रदारणमर्हतः । हस्तेनाकृष्टुमशक्यत्वात्तयोः शस्त्रदारणं कार्यमित्यर्थः ॥ २८ ॥

अतएवाह ;—मण्डलेति । मण्डलं चाङ्गुलिश्च मण्डलाङ्गुली । मण्डलशब्देन मण्डलाग्रं शस्त्रमुपलक्ष्यते । अङ्गुलिशब्देन चाङ्गुलिशस्त्रम् । ते नामनी ययोः शस्त्रयोस्ते मण्ड-

वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववचारयेत् ॥ ३० ॥
पूर्वं शिर: कपालानि दारयित्वा विशोधयेत् ।
कक्षोरस्तालुचिवुके प्रदेशेऽन्यतमे तत: ॥ ३१ ॥
समालम्ब्य दृढं कर्षेत् कुशलो गर्भशङ्कुना ।
अभिन्नशिरसं त्वक्षि-कूटयोर्गण्डयोरपि ॥ ३२ ॥
बाहुं छित्वांससक्तस्य वाताध्मातोदरस्य तु ।
विदार्य कोष्ठमन्त्राणि बहिर्वा संनिरस्य च ॥ ३३ ॥
कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ३४ ॥
यद् यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डश: ।
तत्तच्छित्वा हरेत्सम्यग्रक्षेन्नारीं च यत्नत: ॥ ३५ ॥

---

लाङ्गुलिशस्त्रे शस्त्रविध्यध्यायोक्त ताभ्यां मण्डलाङ्गुलिशस्त्राभ्यां तयोर्विष्कम्भाख्ययोर्मूढगर्भयो: कर्म प्रशस्यते । ताभ्यां शस्त्राभ्यां दारणमेतयो: कार्यमित्यर्थ: । वृद्धिपत्रमिति—वृद्धिपत्रसंज्ञं शस्त्रं यस्मात्तीक्ष्णाग्रमतस्तद्योनौ नावचारयेत्तेन तत्र विदारणं न विधेयं प्रत्यपायभयात् ॥ २९ । ३० ।

दारणं यत्र तथा विधेयं तथाऽऽह,—पूर्वमिति । पूर्वं शिर:सम्बन्धीनि कपालानि विशोधयेत् । किं कृत्वा । शस्त्रेण दारयित्वा छित्त्वा, एवं शिर:कपालानि शोधयित्वा गर्भिणीकोष्ठवाह्यानि कृत्वा ततोऽनन्तरं कक्षोरस्तालुचिवुके प्रदेशेऽन्यतमे तद्विषये समालम्ब्य तं गर्भं गृहीत्वा दृढं कृत्वा आकर्षेत् । केन ? गर्भशङ्कुना । क: ? कुशलोऽभ्यस्तकर्मा वैद्य: । अभिन्नशिरसमविदारितोत्तमाङ्गं पुनर्गर्भमक्षिकूटयोस्तथा गण्डयोस्तद्विषयेऽन्यतमे प्रदेशे कदाचिदक्षिकूटप्रदेशे कदाचिद्गण्डप्रदेशे समालम्ब्य तं गर्भं दृढं गर्भशङ्कुना गृहीत्वा कर्षेत् ॥ ३१ । ३२ ।

बाहुमिति । अंसाभ्यां सक्त: अंससक्तस्तस्य बाहुं छित्त्वा आकर्षणं कुर्यात् । वामेनांसेन सक्तस्य वामं बाहुं दक्षिणेनांसेन सक्तस्य दक्षिणं बाहुं छित्त्वेत्यर्थ: । वातेनाध्मातं दृतिवत् पूरितमुदरं यस्य मूढगर्भस्यासौ वाताध्मातोदरस्तस्य तु कोष्ठमामपक्वाशयाश्रयं विदार्य्य पाटयित्वाऽन्त्राणि च बहि: सम्यङ्निरस्य बाह्यत: प्रक्षिप्य कर्षेत् ॥ ३३ ॥

कटीति । कटीसक्तस्येति तृतीयासमास: । कट्या सक्तस्य ककुन्दरया लग्नस्य । तद्वच्चेति । तेन वाताध्मातोदरेण तुल्यं कर्म दारणात्मकं कृत्वा तत्कपालानि तस्या: कट्या: कपालानि खण्डानि विदारयेत् इति ॥ ३४ ॥

विशेषेण गर्भस्याकर्षणमुक्त्वा सामान्येन मूढगर्भचिकित्सामाह, यदिति । यद्यदङ्गं मूढगर्भस्य वायुवशात् सज्जेत् संश्लिष्येत्तत्तदङ्गं खण्डशो लवशश्छित्त्वा दारयित्वा सम्यगाहरेत् । किलिकवेलया सकलगर्भशरीरच्छेदनादन्तस्थितमूढगर्भाया नार्या अपि बलवच्छस्त्रनिपातनादिघात: सम्भाव्यत इति खण्डश इत्युक्तम् । अत एवाह —

गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिलः ।
तत्राऽनल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ३६ ॥
छिन्द्याद्गर्भं न जीवन्तं मातरं स हि मारयेत् ।
सहात्मना न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥ ३७ ॥
योनिसंवरणभ्रंश-मक्कल्लश्वासपीडिताम् ।
पूत्युद्गारां हिमाङ्गीञ्च मूढगर्भां परित्यजेत् ॥ ३८ ॥
अथापतन्तीमपरां पातयेत् पूर्ववद् भिषक् ।
एवं निर्हृतशल्यान्तु सिञ्चेदुष्णेन वारिणा ॥ ३९ ॥
दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।
योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ॥ ४० ॥
दीप्यकाऽतिविषा-रास्ना-हिङ्गूला-पञ्चकोलकान् ।
चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्ततः ॥ ४१ ॥

---

रक्षेदित्यादि । नारीञ्च यत्नेन तात्पर्य कृत्वा रक्षेत् । यथा नार्या अङ्गं किञ्चिदपि न छिद्यते तथा विधेयमित्यर्थः ॥ ३५ ॥

गर्भस्येति—यस्माद्गर्भस्य चित्रां नानारूपां गतिमवस्थितिं विगुणः प्रकुपितः प्रभञ्जनः करोति, तस्माद् योऽनल्पमतिर्महाबुद्धिर्वैद्यः स तत्र तस्यां गतौ अवस्थापेक्षमाचरेत् । मूढगर्भं प्रत्यनुक्तमप्यवस्थितं कर्म कुर्यादित्यर्थः ॥ ३६ ॥

छिन्द्यादिति । जीवन्तं गर्भिण्यन्तर्गतगर्भलक्षणानभिज्ञो वैद्याभिमानी यः स तं गर्भं न दारयेत् । कुतो हेतोरित्याह,—यस्मात् स मातरं मारयेत् । कथम् ? सहात्मना मातरमात्मानञ्च स छिन्नो गर्भो व्यापादयेदित्यर्थः । न चाऽस्तजीवितो गर्भिण्या अन्तर्गतो गर्भः क्षणमपि मुहूर्त्तमात्रमप्युपेक्ष्योऽपि तु तस्य द्रागेव प्रतिक्रियां कुर्य्यात् ॥ ३७ ॥

इदानीमुपेक्ष्यमूढगर्भां स्त्रियमाह,—योनीति । योनेः संवरणं संवृतयोनित्वम्, तथा तस्या एव योनिर्भ्रंशः स्वस्थानाच्च्यवनम्, तथा मक्कल्लः शिरोबस्तिकोष्ठशूललक्षणः प्रागुक्तो व्याधिः तैर्योनिसंवरणादिभिः पीडिताम्, तथा पूत्युद्गाराम्, तथा हिमाङ्गीम् । एवंविधां मूढगर्भां त्यजेन्नोपक्रमेत् । अथ मूढगर्भाहरणादनन्तरमपरां जरायुसंज्ञाम-पतन्तीमनिष्क्रामन्तीं पूर्ववत् पातयेत् । पूर्वेण तुल्यं पूर्ववत् । पूर्वोक्तेन पातनोक्त-विधिना हिरण्यपुष्पीमूलञ्चेत्यादिनेत्यर्थः । एवमनन्तरोक्तेन विधिना निर्हृतं शल्यं गर्भ-जरायुसंज्ञं यस्यास्तां तु स्त्रियमुष्णेन जलेन सिञ्चेत् । ततः स्नानादनन्तरमभ्यक्तशरीरायै स्त्रियै योनौ स्नेहपिचुं दद्यात् । तेन दत्तेन स्नेहपिचुना अस्या योषितो योनिर्मृदुर्भवेत् । शूलं रुजा च प्रशाम्यति ॥ ३८—४० ॥

कटुकाऽतिविषा-पाठा-शाकत्वग्-हिङ्गुतेजिनी: ।
तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥ ४२ ॥
त्रिरात्रमेवं सप्ताहं स्नेहमेव तत: पिबेत् ।
सायं पिबेदरिष्टं वा तथासुकृतमासवम् ॥ ४३ ॥
शिरीषककुभक्काथ-पिचून् योनौ विनिक्षिपेत् ।
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥ ४४ ॥
पयो वातहरै: सिद्धं दशाहं भोजने हितम् ।
रसो दशाहञ्च परं लघुपथ्याल्पभोजना ॥ ४५ ॥
स्वेदाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत् ।
ऊर्द्ध्वं चतुर्भ्यो मासेभ्य: सा क्रमेण सुखानि च ॥ ४६ ॥
बलामूलकषायस्य भागा: षट् पयसस्तथा ।
यव-कोल-कुलत्थानां दशमूलस्य चैकत: ॥ ४७ ॥

---

दीप्यकेति । तत: स्नानाभ्यङ्गानन्तरं दीप्यकादिचूर्णं स्नेहेन घृतादिना प्रकृत्यादिवशात् यथायोग्येन तां स्त्रियं पाययेत् ; कल्कं वा दीप्यकादेर्जलेन पिष्ट्वा स्नेहेन तां पाययेत्; क्वाथं वा दीप्यकादेस्तां पाययेत्; तथा कटुकादीनि तद्वत् तां स्त्रियं पाययेत् । एतानि द्रव्याणि चूर्णीकृत्य स्नेहेन कल्कीकृत्य क्वाथीकृत्य वा पाययेत् । शाकं खरच्छदम्, त्वक् त्वचम्, तेजिनी तेजोवती । किमर्थं पाययेत् ? दोषस्यन्दार्थम् । दोषस्य रक्तादे: स्यन्द: स्रवणं तदर्थं पाययेत्, तथा वेदनाया: पीड़ाया उपशान्त्यर्थञ्च । त्रिरात्रमेवं मूढ़गर्भाकर्षणदिनात् प्रभृति कार्यम् । ततस्त्रिरात्रादनन्तरं सा मूढ़गर्भा सप्ताहं स्नेहमेव पिबेन्न तु रूक्षौषधमिति एवकारोऽवधारणार्थो द्योतयति । सायं दिनान्तेऽरिष्टं पूर्वोक्तलक्षणं पिबेत् ; तथा शोभनं कृत्वा कृतं निष्पादितमासवं मद्यविशेषं, तथा शिरीषककुभक्काथकृतान् पिचून् विकेशिकाप्रायान् कार्पासादिमयान् योनौ विनिक्षिपेत् । उपद्रवा ज्वरादयश्चान्ये ये भवेयुस्तानुपद्रवान् यथास्वमुपाचरेत्, यस्य ज्वरादेर्य आत्मीय उपक्रमस्तेन तेन तमुपक्रमेदित्यर्थ: ॥ ४१—४४ ॥

एतच्च पूर्वोक्तमासेव्याऽनन्तरं यत् कर्त्तव्यं मूढ़गर्भाया: स्त्रियास्तदाह,—पय इति । पय: क्षीरमनन्तरं तस्यै दशाहं भोजने हितम् । किम्भूतम् ? वातहरैरास्नादिभिर्द्रव्यै: सिद्धं शृतम् । दशाहादनन्तरं द्वितीयञ्च दशाहं रसो भोजने हित: । अत: परं दिनविंशतेरनन्तरं सा स्त्री लघुपथ्याऽल्पभोजना सती, तथा स्वेदाभ्यङ्गपरा तत्प्रधाना सती स्नेहान् बलातैलादिकान् भजेत् । ऊर्द्ध्वमनन्तरं चतुर्भ्यो मासेभ्य: पञ्चममासात् प्रभृति सा निष्क्रान्तमूढ़गर्भा स्त्री क्रमेण न तु सहसा, सुखान्यन्नपानाहारविहाररूपाणि भजेत् ॥ ४५ । ४६ ॥

निःक्वाथभागो भागश्च तैलस्य च चतुर्द्दश ।
द्विमेदा-दारु-मञ्जिष्ठा-काकोलीद्वय-चन्दनैः ॥ ४८ ॥
सारिवा-कुष्ठ-तगर-जीवकर्षभ-सैन्धवैः ।
कालानुसार्या-शैलेय-वचाऽगुरु-पुनर्नवैः ॥ ४९ ॥
अश्वगन्धा-वरी-क्षीर-शुक्ला-यष्टी-वरा-रसैः ।
शताह्वाशूर्पपर्ण्येला-त्वक्-पत्रैः श्लक्ष्णकल्कितः ॥ ५० ॥
पक्वं मृद्वग्निना तैलं सर्ववातविकारजित् ।
सूतिका-बाल-मर्मास्थि-क्षत-क्षीणेषु पूजितम् ॥ ५१ ॥
ज्वर-गुल्म-ग्रहोन्माद-मूत्राघातान्त्रवृद्धिजित् ।
धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥

---

अथ बलातैलं निरूपयति,—बलेति । बलाया मूलानि तेषां कषायः क्वाथस्तस्य भागाः षट् ; तैलैकभागापेक्षयैतद् बोध्यम् । पयसस्तथा क्षीरस्य षड़ेव भागाः ; यव-कोलकुलत्थानां दशमूलस्य चैकत एकत्र क्वथितानां निःक्वाथभागः यवादीनां तैलसमो निःक्वाथभाग एक इत्यर्थः । एवं त्रयोदशभागा भवन्ति । तैलस्य चतुर्द्दशो भागः । चतुर्द्दशानां पूरणः, तस्य पूरणे डडिति डट् । एतदेव स्पष्टीक्रियते शिष्याणां हितार्थम् । तत्र यदा षोड़शपलानि तैलस्य अपयितव्यानि तदा बलामूलपलानि चतुर्विंशतिर्भवन्ति । जलपलशतानि त्रीणि चतुरशीत्यधिकानि । ततश्चतुर्थांशेन षण्ण-वतिः क्वाथपलानि । क्षीरपलानि षण्णवतिः, यवादीनां पलानि चत्वारि, पानीय-पलानि चतुःषष्टिः, षोड़शपलानि कषायस्य । द्विमेदादीनि द्रव्याणि प्रत्येकमर्द्धकर्ष-प्रमाणानि रक्तिकया पञ्चमभागसहितया सघानकयाऽधिकानीति । कालानुसार्या उत्पलसारिवा ; क्षीरशुक्ला क्षीरविदारी ; वरा त्रिफला ; रसो बोलः । योऽयं यव-कोल-कुलत्थ-दशमूलैरेको भागः परिकल्पितः ; तत्र यव-कोल-कुलत्थानां त्रयोऽंशा दशमूलस्य दशांशा इति व्याख्येयम्, "कल्पयेत् सदृशान् भागान् प्रमाणं यत्र नोदितम्" इति वचनात् । संग्रहेऽप्युक्तम्,—"यव-कोल-कुलत्थ-दशमूलकषायस्य भागः" इति । ये तु यव-कोल-कुलत्थानां त्रयोऽंशा दशमूलस्य चतुर्थोऽंश इति भागोऽयं कल्प्य इत्याहुस्ते तु पौर्वापर्यं न पर्यालोचयन्त्येव ; यतः कल्पयेदित्यादिकया परिभाषया द्रव्याणामेषां समांशत्वं नियमितमेव । पृथक् पठ्राऽत्र यो निर्देशः स छन्दोऽनुरोधादेव बोध्यः । तथा चानेनैव तन्त्रकृता संग्रहे समस्तान्येवैतानि द्रव्याणि निर्दिष्टानि । अपिच दशमूल-स्याधिक्येन वातरोगहन्तृत्वं यथास्य तैलस्य, न तथा यवादिभिरिति सर्वथा पूर्वं व्याख्यान श्रेयः । मृदुशब्दोऽग्निविशेषणाय प्रयुक्तः । किल खरतरदहनसम्पर्कात् क्षीरबाहुल्येनास्य तैलस्य झटिति पाकातिक्रान्ततापि किञ्चित् सम्भाव्यते । एतच्च तैलमशेषवातरोगहन्तृ च

बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥ ५३ ॥
मधुकं शाकबीजञ्च पयस्या सुरदारु च ।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ ५४ ॥
वृक्षादनी पयस्या च लता चोत्पलसारिवा ।
अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥ ५५ ॥
बृहतीद्वयकाश्मर्यः क्षीरिशृङ्गत्वचो घृतम् ।
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६ ॥
शृङ्गाटकं विसं द्राक्षा कसेरु मधुकं सिता ।
सप्तैतान् पयसा योगानर्द्धश्लोकसमापनान् ।
क्रमात् सप्तसु मासेषु गर्भे स्रवति योजयेत् ॥ ५७ ॥
कपित्थ-बिल्व-बृहती-पटोलेक्षु-निदिग्धिजैः ।
मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाष्टमे ॥ ५८ ॥
नवमे सारिवाऽनन्ता-पयस्यामधुयष्टिभिः ।
योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ।
अथवा यष्टिमधुक-नागरामरदारुभिः ॥ ५९ ॥

---

तथा सूतिकादिषु प्रशस्तम्, तथा ज्वरादिजित्, तथा भगवतो धन्वन्तरेरभिमतमतिशयगुणवत्त्वात् । तथा योनिरोगं क्षयं चापहन्ति ॥ ४७—५२ ॥

बस्तिद्वार इति । गर्भिण्या मृताया यदि कुक्षिः प्रस्पन्दतेऽत्यन्तं चलति । क्व प्रदेशे ? बस्तिद्वारे तत्समीपे । कदा ? जन्मकाले गर्भप्रसवोन्मुखे काले । तदा कुशलो वैद्यः शीघ्रं कुक्षिप्रस्पन्दनादनन्तरं पाटयित्वा शिशुं बालमुद्धरेत् ॥ ५३ ॥

मधुकमिति । मधुकादिद्रव्योपलक्षितान् सप्त योगान् क्रमाद् यथानिर्दिष्टेन क्रमेण सप्तसु मासेषु गर्भे स्रवति तद्रक्षार्थं तान् योजयेत् । कीदृशान् योगान् ? अर्द्धश्लोकेन समापनं समाप्तिर्येषां तानर्द्धश्लोकसमापनान् । अश्मन्तको यमलपत्रकः, ताम्रवल्ली रामतरुणी, मञ्जिष्ठेत्येके; लता गन्धप्रियङ्गुः, गौरसारिवेत्यन्ये, उत्पलसारिवा कृष्णसारिवा । क्षीरिणां न्यग्रोधादीनां शृङ्गास्तथा तेषामेव त्वक् चेति द्वन्द्वः; द्वन्द्वाच्चुदषहान्तादिति टच् ॥ ५४—५७ ॥

कपित्थेति । कपित्थादीनां समाहारद्वन्द्वः । कपित्थादिद्रव्याणां मूलैः शृतं क्षीरमष्टमे मासि प्रयुञ्जीत ; नवमे मासि सारिवादिभिः सिद्धं क्षीरं प्रयुञ्जीत । दशमे मासि काकोल्यादिसिद्धं क्षीरमथवा यष्ट्यादिभिः सिद्धं योजयेत् ॥ ५८ । ५९ ॥

अवस्थितं लोहितमङ्गनाया वातेन गर्भं ब्रुवतेऽनभिज्ञाः ।
गर्भाकृतित्वात् कटुकोष्णतीक्ष्णैः स्रुते पुनः केवल एव रक्ते ॥६०॥
गर्भं जड़ा भूतहृतं वदन्ति मूर्त्तेर्न दृष्टं हरणं यतस्तैः ।
ओजोऽशनत्वादथवाऽव्यवस्थैर्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६१ ॥

इत्यष्टाङ्गहृदये शारीरस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथातोऽङ्गविभागं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

अवस्थितमिति । लोहितं वातेन हेतुनाऽवस्थितं कुक्षौ पवनेन रुद्धं, गर्भ ब्रुवते अनभिज्ञाः, नञत्र पर्युदासे अभिज्ञसदृशा इत्यर्थः । कुतस्तेषां भ्रान्तिरिति तद्बीजमाह,—गर्भाकृतित्वादिति । गर्भस्याकृतिः संस्थानमुन्नत्यादिकम्, तया हृल्लासदौहृदेत्यादिरक्तगुल्मनिदानोक्तं लक्षणं वातरुद्धलोहितावस्थितौ गर्भस्थितौ चोभयत्र समानम् । अतोऽल्पबुद्धित्वादवस्थितं लोहितं गर्भं ब्रुवते । कटुकोष्णादिभिरवस्थितलोहितस्रुतिहेतुभिः स्रुते केवल एव रक्ते गर्भरहिते जड़ा निर्बुद्धयो भूतहृतमिति गर्भं वदन्ति । पुनः शब्दः शिरसः कम्पं कृत्वा तेषामसम्भाव्याऽङ्गीकारेण सर्वजनप्रथितेन जड़त्वं सहेतुकं प्रतिपादयति । अत एवाह,—यतो यस्मात् मूर्त्तेः शरीरस्य हरणं तैर्भूतैर्न दृष्टं न क्वचिदुपलब्धमतोऽसम्भाव्यवस्तुप्रतिज्ञानात् तेषां जड़त्वमित्यर्थः । नन्वेतदपि कथमुच्यत इत्याह,—ओजोऽशनत्वात् । यस्मात् ते भूता ओजोऽशना ओजोभक्षणमर्यादाः, अथवा कदाचित् ते भूता उल्लङ्घितमर्यादाः स्युः । तस्मात्तथाभूतैरव्यवस्थैरव्यवस्थावस्थितैर्भूतैर्गर्भस्य माता नोपेक्ष्येत अपि तु क्रियेतैव । तथा हि, यथा गर्भमातोपचितशरीरा न तथा गर्भ इति । उपजातीन्द्रवज्राख्ये वृत्ते ॥ ६० । ६१ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां शारीरस्थाने गर्भव्यापन्नाम द्वितीयोऽध्यायः ॥ २ ॥

---

गर्भव्यापदोऽनन्तरमङ्गविभाग उच्यते ; अङ्गप्रत्यङ्गविज्ञाने हि सति सम्यग्गर्भस्याहरणादिकं कर्तुं शक्यते नान्यथेतीदमाह,—अथेति । अङ्गस्य शरीरस्य विभागो विभजनमङ्गप्रत्यङ्गादिना पृथक्करणमङ्गविभागः । अथेत्यादि पूर्ववत् ॥ १ ॥

शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च समासतः ।
षड़ङ्गमङ्गं प्रत्यङ्गं तस्याचिहृदयादिकम् ॥ २ ॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धः क्रमाद् गुणाः ।
खाऽनिलाऽग्न्यम्बुभूमीक-गुणवृद्ध्यन्वयः परे ॥ ३ ॥
तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता ।

---

अथ तान्येवाङ्गानि विभक्तुकाम आह,—शिर इति। षडङ्गं षडवयवमङ्गं शरीरम्। तान्येव षडङ्गान्याह,—शिरः, तथाऽन्तराधिः, तथा द्वौ बाहू वामदक्षिणौ, तथा सक्थिनी द्वे वामदक्षिणे इत्येवं समासतः संक्षेपेण षडङ्गं, विस्तरेण पुनरनेकावयवम्। अन्तराधिशब्देन शिरोबाहुसक्थिवर्जः सर्वो मध्यमभाग उच्यते। अन्तः आधीयन्ते निबध्यन्ते यथायथं शरीरस्यान्तः स्थाप्यन्ते प्राक्कृतेन कर्मणा शिरःप्रभृतयः पञ्चावयवा यस्मिन् सोऽन्तराधिः। तस्य षडवयवस्याङ्गस्याऽक्षिहृदयादिकं प्रत्यङ्गम्। आदिशब्देन कर्ण-नासा-पाणि-पादादि-परिग्रहः। अवयवमवयवं प्रति योऽवयवस्तत् प्रत्यङ्गमुच्यते ॥ २ ॥

शरीरं व्योमवायूादिपञ्चमहाभूतात्मकं चेतनादीनामधिष्ठानम्, अतस्तमेव प्रत्येकं महाभूतगुणमाह,—शब्द इति। शब्दादयः पञ्च गुणाः क्रमात् क्रमेण खादीनां पञ्चानां भवन्ति। खञ्च अनिलश्च अग्निश्च आपश्च भूश्च तासाम्। तत्र शब्दः खस्याकाशस्य गुणः, सुषिरेऽतिरिक्तस्पर्शादिगुणचतुष्टयायोगित्वेन शब्दमात्रस्यैवोपलम्भात्। स्पर्शो वायोः, रूपमग्नेः, रसोऽपां पानीयस्य, गन्धो भूमेः; तेषां गुणानां खाद्याश्रितत्वात् तेषां गुणा इत्युच्यन्ते। किमेकैक एवाकाशस्येव वायूादीनां यथोक्तो गुण उतान्येऽपि सन्तीत्याह,—एकगुणेति। एकेन गुणेन वृद्धिस्तयाऽन्वयः सम्बन्धः परे वायूादौ महाभूते, अथवा एकस्य गुणस्य वृद्धिस्तयाऽन्वयोऽनुगमस्तद्भावित्वं पर इति। चतुर्णां महाभूतानां परत्वोक्तिराकाशापेक्षया; तेन वायूादौ महाभूते एकगुणवृद्ध्यन्वयः। आकाशस्त्वेकगुण एव; तस्य परत्वासम्भवान्न तस्यैकगुणवृद्ध्यन्वयः। आकाशात् परेऽनन्तरे महाभूते वायूाख्ये एकगुणवृद्ध्यन्वयेन द्विगुणत्वाच्छब्दस्पर्शगुणत्वम्। ततः परे च महाभूतेऽग्न्याख्ये एकगुणवृद्ध्यन्वयेन त्रिगुणत्वाच्छब्द-स्पर्श-रूप-गुणत्वम्। ततः परे जलाख्ये महाभूते एकगुणवृद्ध्यन्वयेन चतुर्गुणत्वाच्छब्द-स्पर्श-रूप-रस-गुणत्वम्। ततः परे पृथिव्याख्ये महाभूते एकगुणवृद्ध्यन्वयेन पञ्चगुणवत्वात् शब्द-स्पर्श-रूप-रस-गन्धगुणत्वम्। एवं पञ्चानां खादीनामेकगुणवृद्ध्येकद्वि-त्रि-चतुः-पञ्च-गुणत्वं बोध्यम् ॥ ३ ॥

इदानीं यथाक्रमनिर्दिष्टेभ्यो भूतेभ्यो ये भावा भवन्ति तान् दर्शयति,—तत्रेति। तेषु पञ्चसु महाभूतेषु मध्ये अस्मिन् देहे मनुष्यादौ स्थूलतया परिणते नान्यस्मिन्नतीन्द्रिये भूतादौ। खादाकाशात् सत्वबहुलात् खानि छिद्राणि भवन्तीति शेषः। एवं श्रोत्रेन्द्रियाधिष्ठानं श्रोत्रम्, तथा शब्दो घोषः; तथा विविक्तता शून्यता रिक्तता; खादेव छिद्रविशेषः। यद्यपि छिद्रादिषु सर्व्वभूतानामेव व्यापारस्तथाऽप्याकाश-

वातात् स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ।
आप्या जिह्वा रसक्लेदा घ्राणगन्धास्थि पार्थिवम् ॥ ४ ॥
मृद्वत्र मातृजं रक्त-मांसमज्जगुदादिकम् ।
पैतृकन्तु स्थिरं शुक्रं धमन्यस्थिकचादिकम् ।
चैतनं चित्तमक्षाणि नानायोनिषु जन्म च ॥ ५ ॥

---

स्यैवात्र विशिष्टं कारणत्वम् । यथा घटादौ मृद्दण्ड-चक्र-सलिल-सूत्रादि-कारणसमुदायनिष्पन्नेऽपि मृद एव विशिष्टकारणत्वम् । अत एवासौ मृन्मय एवोच्यते । एवं सर्वेषु वक्ष्यमाणेषु वातादिजेषु स्पर्शादिषु बोध्यम् । वातादनिलाद्रजोबहुलात् स्पर्शादयो भवन्ति । स्पर्शः स्पर्शनम् ; त्वगिह स्पर्शनेन्द्रियाधिष्ठानम् ; तथोच्छ्वासः प्राणाख्यः ; वह्नेः सत्त्वरजोबहुलाद् दृगादयो भवन्ति ; दृग्दृष्टिश्चक्षुरिन्द्रियाधिष्ठानम् ; तथा रूपाख्यो गुणः, पक्तिः पाकः, उपलक्षणं चेदम् । तेजः-पित्तोष्म-मेधा-वर्ण-शौर्यादयोऽपि वह्नेरेव वेद्याः । अद्भ्यः सत्त्वतमोबहुलाभ्यो जाता आप्या जिह्वादयो भवन्ति । जिह्वाशब्देनात्र जिह्वाया विशिष्ट एकदेशो रसनेन्द्रियाधिष्ठानं विवक्षितो न सर्वैव जिह्वा । तथा रसाख्यो गुणः ; तथा क्लेदाख्यो भावः । उपलक्षणं चेदम्, स्वेदस्नेहमूत्रादयोऽप्याप्या एव । घ्राणादि पार्थिवं भवति । घ्राणं नासाया विशिष्ट एकदेशो घ्राणेन्द्रियाधिष्ठानम् । गन्धो गुणः, तथाऽस्थिभावा एतानि सर्वाणि पृथिव्याख्यात् तमोबहुलान्महाभूताज्जातानि ॥ ४ ॥

देहेऽस्मिन् किं मातृजं पितृजमित्याह,—मृदिति । अत्रास्मिन् देहेऽनेकसामग्रीकेऽपि यत् मृदु वस्तु तत् मातृजम्, मातुराधिक्येन कारणभाव इत्यर्थः । मातृजमिति पञ्चम्याससजाताविति जनेर्डः । किं पुनस्तन्मृद्वित्याह,—रक्तेत्यादि । आदिशब्देन नाभि-हृदय-यकृत्-प्लीहामाशयादीनां ग्रहणम् । ननु गुदस्य मांसप्रायत्वान्मांसग्रहणेनैव सिद्धं ग्रहणं, तत् किं गुदग्रहणेन ? ब्रूमः । मांसत्वस्याप्यस्यानियमात् पृथगुपादानं कृतम् । तथा च वक्ष्यति,—"मांस-मर्म-गुदोऽन्येषाम्" इति । यद् वस्तु स्थिरं तत् पैतृकं पितृजम् । किं तदित्याह,—शुक्रादिकम् । आदिशब्देन शिरा-स्नायुरोमादीनां ग्रहणम् । पैतृकमिति पितुर्यच्चेति ठक्, इसुसुक्तान्तादिति कादेशः । चेतना आत्मैव प्राक्तनशुभाशुभकर्मबीजचित्रमित्यर्थः । ततो जातं चैतनमात्मजम् । किं तदित्याह,—चित्तमित्यादि । चित्तमिन्द्रियसारथिः । तथाऽक्षाणि श्रोत्रादीनि । ननु चैतनान्यक्षाणीत्येतत् पूर्वापरव्याहतमिव मन्यामहे । यतः पूर्वमुक्तं खात् खानि देहेऽस्मिन्निति । तत्कथमिह चैतनान्यक्षाणीत्युच्यते । ब्रूमः । नात्र तत्र वाऽवधारणं कृतं यथा चैतनान्येवाक्षाणि खादेव खानीति । तस्मादाकाशं चेतना च द्वयमप्यक्षाणां कारणमित्यवेहि । तथा नानायोनिषु गजाजवाजिवत्सशशशम्बरप्रभृतिषु यज्जन्म संभवस्तदपि चैतनम् । उपलक्षणं चेदम् । कामक्रोधलोभभयमदहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाहंकारसुखदुःखायुःस्वरविशेषादयोऽपि हि चेतना एव ॥ ५ ॥

सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम्॥ ६॥
रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता॥ ७॥
सात्त्विकं शौचमास्तिक्यं शुक्लधर्मरुचिर्मतिः।
राजसं बहुभाषित्वं मान-क्रुध्-दम्भ-मत्सराः।
तामसं भयमज्ञानं निद्राऽऽलस्यं विषादिता॥ ८॥
इति भूतमयो देहस्तत्र सप्त त्वचोऽसृजः।

---

सात्म्यजमिति। सात्म्यं त्रिविधम्। व्याधिसात्म्यं देशसात्म्यं देहसात्म्यं च। तत्रेह व्याधिसात्म्यं न गृह्यते। यतो देहस्य सम्भवतः सम्भूतभावस्य चेयं विचारणा प्रस्तुता, कुतः किं सम्भवतीति, अतो व्याधिवर्जं देहप्रस्तावान्नोपयुज्यते। तस्माद्देशसात्म्यं देहसात्म्यं च गृह्यते। देहस्य हि सम्भवतः सम्भूतभावस्य नानाऽऽहारविहारादियदपथ्य-मप्यतिशयेन शीलितं तदप्यस्य देहस्योचिततां गच्छत् सुखानुबन्धत्वेन सात्म्यमुच्यते। तस्माद्देशसात्म्यं देहसात्म्यञ्च ग्रहीतुं युक्तम्। सात्म्याज्जातं सात्म्यजम्। किं तत्? आयुर्जीवितम्। तथा आरोग्यं धातुसाम्यम्। तथा अनालस्यं सर्वचेष्टासूद्योग उत्साहः। तथा प्रभा कान्तिः। तथा बलं शक्तिः। उपलक्षणञ्चेदम्। अलोलुपत्वेन्द्रियप्रसाद-स्वरवर्णवीर्यतेजःसम्पत्प्रहर्षाद्यपि हि सात्म्यजमेव॥ ६॥

रसजमिति। रसादाहाररसात् परिणताज्जातं रसजम्। किं तत्? जन्म सम्भवः। कस्य? वपुषः सकलस्य शरीरस्य। तथा वृत्तिर्वर्तनं जीवितानुबन्धः। रसेन हि विना जीवितस्याप्यभावः। तथा वृद्धिरायामविस्तराभ्यां यथासंस्थानस्य शरीरस्याधिक्यम्। तथा, अलोलता अलौल्यम्। अलोलता रसजेतिलिङ्गविपरिणामे सति सम्बन्धः। उदाहरणमात्रं चेदम्। उत्साहपुष्टित्वप्रयोऽपि हि रसजा एव॥ ७॥

सात्त्विकमिति। सत्त्वजं शौचादिकम्। शौचङ्कायवाङ्मनसां शुद्धिः। सत्यवाक्या-द्यभिधायित्वं वाक्शुद्धिः। मृज्जलादिना चालनादि शास्त्रोदितं कायिकं शौचम्। मानसन्तु शौचं जगद्बन्धुता करुणा शुद्धसन्तानत्वम् आस्तिक्यादि। शौचमिति इगन्ताच्च लघुपूर्वादित्यण्। आस्तिक्यमिति,—अस्ति परलोक इति मतिरस्येत्यास्तिकः। अस्ति-नास्तीत्यादिना ठक्। आस्तिकस्य भाव आस्तिक्यम्। ब्राह्मणादित्वात् ष्यञ्। तथा शुक्ले धर्मे निर्व्याजे रुचिर्भक्तिः, मतिः प्रज्ञा। उपलक्षणञ्चेदम्। शौच-कृतज्ञतादाक्षिण्य-व्यवसाय-शौर्य-गाम्भीर्य-स्मृति-मेधादयोऽपि हि सात्त्विका एव। राजसानि बहुभाषि-त्वादीनि। उपलक्षणञ्चेदम्। शौर्यदुरुपचारतालोलुपत्वहर्षकामादयोऽपि राजसा एव। तामसानि भयादीनि। उपलक्षणञ्चेदम्। प्रमादशोकादीन्यपि तामसान्येव। तत्र सत्त्वं मनस्तस्योपप्लवौ रजस्तमसी इति। सुश्रुते चोक्तम्,—"वाय्वाकाशाभ्यां वायुः, अग्न्याकाशाभ्यां पित्तं, अम्भःपृथिवीभ्यां श्लेष्मा" इति। आयुर्वेदावतारे तूक्तम्,—"शीतोष्णशमवृद्धग्राह्यं न पित्तं द्रुततायुतम्। करकाभः कफो भौमो नानिलानल-संहतः" इति॥ ८॥

पच्यमानात् प्रजायन्ते क्षीरात् सन्तानिका इव ॥ ९ ॥
धात्वाशयान्तरक्लेदो विपक्वः स्वंस्वमुष्मणा ।
श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत् ॥ १० ॥

---

अधुना देहाश्रितसर्वभावोपसंहारं कुर्वन् प्रधानो यो भावो देहस्य तस्य प्राधान्यं दर्शयन्निदमाह,—इति भूतमयो देह इति । सर्वेभ्यो देहाश्रितभावेभ्यो महाभूतानामेव प्राधान्यम् । तन्मयत्वाद्देहस्य सर्वभावाधारभूतस्य । इत्येवमनेन ग्रन्थेन भूतमयत्वं देहस्याभिधाय इदानीं देहस्य प्रतिभागशो निरूपयन्नाह,—तत्रेति । तत्र तस्मिन् महाभूतमये देहेऽसृजो रक्तात् सप्तत्वगुत्पादनसमर्थेन धातूष्मणा पच्यमानात् सप्त त्वचः प्रकर्षेण जायन्ते । कुतः का इव ? यथा क्षीरात् पच्यमानाच्छीतीभूतात्तदुपरि घनभागस्वभावाः सन्तानिका जालिका जायन्ते, तद्वत् असृजः पच्यमानात् सप्त त्वचो भवन्ति । तत्र "भासिनी लोहिनी श्वेता ताम्रा त्वग्वेदिनी तथा । स्यात् रोहिणी मांसधरा सप्तमी परिकीर्त्तिता ॥ व्रीहेरष्टादशांशाद्या द्वितीया षोडशांशका । द्वादशांशा तृतीया तु चतुर्थ्यष्टांशमात्रिका ॥ पञ्चमी पञ्चमांशा तु षष्ठी व्रीहिप्रमाणिका । व्रीहिद्वयप्रमाणा तु सप्तमी भिषजां मता ॥ दीर्घच्छायापञ्चकस्त्र भासिन्याधारतां गता । मन्यन्ते षट्त्वचः केचित्तासां बाह्योदकाश्रया ॥ द्वितीयाऽसृग्धरा सिध्मश्वित्राधारा तृतीयका । चतुर्थी सर्वकुष्ठानामधिष्ठानत्वमागता ॥ विद्रध्यलज्यधिष्ठाना पञ्चमी रोगकारिणी । षष्ठ्यत्र यस्यां छिन्नायां ताम्यत्यन्धं तमो विशेत् ॥ यामधिष्ठाय जायन्ते स्थूलमूलानि पर्वसु । अरूंषि कृष्णरक्तानि दुश्चिकित्स्यतमानि च" ॥ ९ ॥

इदानीं कला आह,—धात्विति । धातूनां रसादीनामाशया आधारा जलाशयवत् तेषामन्तराण्यन्तरालानि तेषु धात्वाशयान्तरेषु क्लेदो धात्वाशयान्तरक्लेदः स विपक्वः कलाख्य उच्यते कलासंज्ञां लभते । केन विपक्वः ? स्वंस्वमुष्मणा आत्मीयेनात्मीयेन वह्निना । यथा रसधात्वाशयान्तरस्थः क्लेदो रसधातूष्मणा विपक्वः कलैका भवति । यावच्छुक्रधात्वाशयान्तरस्थः शुक्रधातूष्मणा विपक्वः सप्तमी कला भवति । कीदृशी विपक्वः ? श्लेष्मणा स्नाय्वा अपरया च जरायूरव्यया छन्नश्छादितः । वादान्तशान्तेत्यादौ छदेर्ण्यन्तात् छन्नशब्दो निपातितः । किंवत् ? काष्ठसारवत् । यथा काष्ठस्य सारस्तथाऽयं धातुसारशेषोऽल्पत्वात् कलासंज्ञः । धात्वाशयान्तरमर्यादाः सप्त कलाः । तत्र आद्या मांसधरा यस्यां धमन्यः स्नायवः सिराः स्रोतांसि च प्ररोहन्ति प्रतानैर्व्यापिभिः कला । द्वितीयाऽसृग्धराऽस्यान्तु मांसान्तः शोणितं स्थितम् । विशेषतः सिराप्लीहयकृत्सु चतजं चतात् मांसात् प्रवर्त्तते क्षीरं क्षीरिवृक्षादिव चतात् । मेदोधरा तृतीयाऽत्र मेदोऽस्थ्नामुदरे स्थितम् । भवत्यणुषु मज्जान्तः स्थूलास्थिष्वथ मूर्द्धनि । मस्तुलुङ्गकपालान्तश्चतुर्थी तु कफाश्रया । तत्स्थः कफो द्रवयति सन्धीनस्थ्नां शरीरजान् । पञ्चमी स्यात्खिडाधारा सामपक्वाशयाश्रया । उण्डुकस्थं विसृजति मलं पित्तधरा पुनः । षष्ठी पक्वाशयान्तःस्था वह्न्यधिष्ठानभावतः ॥ पक्वाशयोन्मुखं कृत्वा बलात् पित्तस्य तेजसा । शोषयन्ती पचत्यन्नं तदेव च विमुञ्चति ॥ दोषदुष्टाच्च दौर्बल्यादाममेव विमुञ्चति ।

ताः सप्त सप्त चाधारा रक्तस्याद्यः क्रमात् परे।
कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ॥ ११ ॥
गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे।
कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोम-फुप्फुसम्।
यकृत्प्लीहोण्डुकं वृक्कौ नाभिडिम्बान्त्रबस्तयः ॥ १२ ॥

---

लभते ग्रहणीसंज्ञामस्याश्चाग्निबलं बलम् ॥ शरीरं धारयत्यग्निबलोपष्टम्भवृंहिता। अन्त्या कला शुक्रधरा मूत्रमार्गमुपाश्रिता। द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः। शरीरं व्याप्य सकलं सा शुक्रं वर्त्तयत्यपि ॥ १० ॥

कलाख्यं भावमाख्याय आधाराख्यान् भावानाह,—ता इति। न केवलं कलाः सप्त यावदाधारा अपि सप्त। रक्तादीनामस्मिन् देहे सम्भवन्तीति वाक्यशेषः। रक्तस्याद्यो रसाख्यो धातुः परेऽन्ये ये धातवः षट् ते। क्रमाद् यथाक्रमं कफादीनामाधाराः स्मृताः कथिताः। आमस्यान्नस्य य आधारः सोऽत्रामशब्देनोक्तः। तथा पक्वस्यान्नस्य पुरीषतां प्राप्तस्य य आधारः स पक्वशब्देनोच्यते। गर्भाशय इति,—गर्भाशयो गर्भाधारो यः सोऽष्टमः स्त्रीणामेव देहे सम्भवति न पुंसाम्। क्व शरीरदेशे स्त्रीणां सम्भवतीत्याह,—पित्तेत्यादि। पक्वशब्देनेह पक्वान्नमुच्यते। पित्तञ्च पक्वञ्च पित्तपक्वे तयोराशयावाधारौ पित्तपक्वाशययोरन्तरं मध्यं पित्तपक्वाशयान्तरं तस्मिन् गर्भस्याशयः। एषु रक्ताद्याधारेषु कोष्ठाङ्गान्युदरावयवात् हृदयादीनि स्थितान्याश्रितानि भवन्ति। तत्र, कफरक्तप्रसादात् स्यात् हृदयं स्थानमोजसः। चेतनानुगभावानां परमं चिन्तितस्य च ॥ मांसपेशीचयो रक्तपद्माकारमधोमुखम्। तस्य दक्षिणतः क्लोमयकृत्फुप्फुसमास्थितम् ॥ समानवायुप्रध्मातादृक्ताद्देहोष्मपाचितात्। किञ्चिदुच्छ्रितरूपस्तु जायते क्लोमसंज्ञितः ॥ तत्तुल्यहेतुजे प्लीहयकृतौ भिषजां मते। रक्तकिट्टादुण्डुकं स्यात् फुप्फुसो रक्तफेनजः ॥ मेदोऽसृजः पच्यमानात् स्यातां वृक्कौ प्रसादजौ। नाभिः सर्वशिराणां स्यादाधारः शकृतः पुनः ॥ डिम्बं स्याद्रक्तमांसस्य प्रसादादन्त्रसम्भवः। सार्द्धत्रिव्याममात्राणि पुरुषाणान्तु तानि च। स्त्रीणां त्रिव्याममात्राणि बस्तिर्मूत्रस्य चाशयः" इति। संग्रहे चोक्तम्,—"कफरक्तवाहिस्रोतसां महाभूतानाञ्च प्रसादादिन्द्रियाणि। तेष्वपि नेत्रे श्लेष्मणः प्रसादाच्छुक्लमण्डलं तत् पितृजम्। असृजः कृष्णमण्डलं तन्मातृजम्। मध्ये दृष्टिमण्डलं तदुभयात्मकम्। पञ्चवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पञ्च मण्डलानि। तत्सन्धयश्चत्वारो द्वावपाङ्गकनीनयोरिति। षट्पटलानि द्वे वर्त्मनी। बाह्यं चाश्रितमग्राम्भसो द्वितीयं मांसस्। तृतीयं मेदः। चतुर्थमस्थि। तेषां बहुलता दृष्टेः पञ्चमांशेन। बन्धगुणाश्चत्वारः सिराकण्डरामेदःकफात्मकाः। श्लेष्मा तु परं सर्वसन्धिबन्धनमित्युक्तं प्राक्। नेत्राश्रितं तेजो बाह्यतेजसा स्वयोनिना योगात्स्वस्वामिवाश्मना कर्मण्यं भवति। अतियोगादुपहन्यते। तच्च वैद्युतवत् वडवामुखवच्च अम्भोमध्यगमपि वीर्योत्कर्षात् तेजस्त्वं न जहाति ॥ ११। १२ ॥

दश जीवितधामानि शिरोरसनबन्धनम् ।
कण्ठोऽस्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदम् ॥ १३ ॥
जालानि कण्डराश्चान्ये पृथक् षोडश निर्दिशेत् ॥
षट् कूर्चाः सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः ॥ १४ ॥
शस्त्रेणैताः परिहरेच्चतस्रो मांसरज्जवः ।
चतुर्दशास्थिसङ्घाताः सीमन्ता द्विगुणा नव ।
अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह ॥ १५ ॥

---

अधुना यानि विशेषेण जीवितस्य स्थानानि देहावयवास्तान्याह,—दशेति । शिरश्च रसनञ्च शिरोरसनम् । रसनं जिह्वा । बध्यतेऽनेनेति बन्धनम् । शिरोरसनस्य बन्धनं शिरोरसनबन्धनम् । शिरोरसनबन्धनादीनि दश जीवितस्य स्थानानि । एतेषु स्थानेषु विशेषेण जीवितं शरीरेन्द्रियसत्वात्मसंयोगलक्षणमवतिष्ठते ॥ १३ ॥

जालानीति । जालानीव जालानि शरीरे षोडश आदिशेत् । कण्डराश्च पृथगेव षोडश ब्रूयादाचार्य इति शेषः । षट् कूर्चा अङ्गे स्युः । तथा सेवन्यः सप्तसङ्ख्या मेढ्रादिस्थिताः । ताः शस्त्रेण परिहरेत् प्रत्यपायभयात् । न तासु शस्त्रं पातयेदित्यर्थः । तत्र शिरास्नाय्वस्थिपिशितैश्चत्वारि मणिबन्धने । एकैकत्र गुल्फे च जालान्येवन्तु षोडश ॥ हस्तयोर्द्वे पादयोर्द्वे ग्रीवाभागेऽथ पृष्ठतः । प्रत्येकन्तु चतस्रः स्युः कण्डरा इति षोडश ॥ करयोर्द्वौ पादयोर्द्वौ ग्रीवायां मेहने तथा । एकैकमिति षट् कूर्चाः सीवन्यः सप्त कीर्तिताः ॥ एका मेढ्रेऽथ जिह्वायां भवेयुः पञ्च मूर्द्धनि । पृष्ठवंशे ह्युभयतश्चतस्रो मांसरज्जवः ॥ वाह्ये द्वे अन्तरे द्वे च गुल्फे जानुनि वंक्षणे । त्रिके शिरसि कक्षायां कूर्परे मणिबन्धने ॥ अस्थ्नां भवेयुः सङ्घाता अमी त्वत्र चतुर्दश । सीमन्ताः पञ्च मूर्ध्नि स्युर्गुल्फादिष्वस्थिसङ्घवत् ॥ अस्थ्नां शतानि षष्टीनि त्रीणि दन्तनखैः सह । पञ्च पादनखा सक्थिप्रत्यङ्गुल्यस्थिकत्रयम् । एवं पञ्चदशतानि शलाकाः पञ्च तु स्मृताः । एकस्तत्प्रतिबन्धश्च जङ्घायां कूर्चगुल्फके ॥ द्वे द्वे इति षडेव स्युः पार्ष्ण्यावूरौ च जानुनि । एकैकमित्येकसक्थ्नि पञ्चत्रिंशत्तथाऽपरे ॥ भुजयोः सक्थितुल्यानि भेदा एषान्तु नामतः । पाणिः स्यात् पादवत्तत्र हस्तमूलञ्च पार्ष्णिवत् ॥ मणिबन्धौ गुल्फतुल्यः कूर्चतुल्यौ द्वयेऽपि च । प्रकोष्ठौ जङ्घया तुल्यौ जानुवत् कूर्परौ भवेत् ॥ ऊरुवद्वाहुपृष्ठं स्यादन्तराधौ तु पार्श्वकाः । चतुर्विंशतिरेतेषु फलकान्यर्बुदानि च ॥ तावन्ति पृष्ठे त्रिंशत् स्युरुरस्यष्टौ त्रिभागके । एकैकं स्यादक्षकयोरंसयोस्तत्फलाख्ययोः ॥ नितम्बे तु द्वे भवेतां शतमेतत् सविंशति । गण्डयोः कर्णयोर्द्वे द्वे शङ्खयोश्चाथ तालुनि ॥ तथा जत्रुण्येकमेकं ग्रीवायान्तु त्रयोदश । कण्ठनाड्यान्तु चत्वारि हनुबन्धे द्वयं भवेत् ॥ द्वात्रिंशदेव दन्ताः स्युस्तत्सङ्ख्योलूखलानि च । त्रीणि घ्राणे षट् शिरसि शतमूर्ध्वमिति स्मृतम् ॥ शाखान्तराध्यूर्ध्वभेदादेवं षष्टिशतत्रयम् । कपालं रुचकं चैव तरुणं वलयं तथा ॥ नलकं पञ्चधेति स्युर्नितम्बे गण्डजानुनि । तालुमध्ये शिरस्यंसे कपालाख्यानि निर्दिशेत् ॥ दशना रुचकाख्याः स्युर्घ्राणे

धन्वन्तरिस्तु त्रीण्याह सन्धीनाञ्च शतद्वयम् ।
दशोत्तरं सहस्रे द्वे निजगादाऽत्रिनन्दनः ॥ १६ ॥
स्नायुर्नवशती पञ्च पुंसां पेशीशतानि च ।

---

कर्णेऽक्षिकोशके । तरुणानि पृष्ठपार्श्वे चरणे वलयानि तु । शेषाणि नलकाख्यानि समाख्यातान्यतीनि च ॥ १४ । १५ ॥

धन्वन्तरिरिति । धन्वन्तरिसंज्ञः पुनस्त्वक्छदस्थां शतानि त्रीण्येवाह नाधिकानि, तथा सन्धीनां शतद्वयं दशोत्तरं धन्वन्तरिराह इति योज्यम् । सङ्ख्यायन्ते सन्धयोऽत्र चतस्रोऽङ्गुलयः पदे । चतसृष्वङ्गुलीषु स्युः प्रत्येकं त्रय एव तु ॥ द्वावङ्गुष्ठे वंक्षणे स्यादेको गुल्फे तु जानुनि । सक्थ्न्येकस्मिन् सप्तदश तावन्तोऽपि द्वितीयके ॥ भुजयोः सक्थितुल्यानि यान्तराधो त्रिमि मताः । त्रयः कटीकपालेषु विंशतिश्चतुरुत्तरा ॥ पृष्ठे तद्वत्-पार्श्वयोश्च वक्षस्यष्टावथोर्द्ध्वतः । शिरोधरायामष्ट स्युः कण्ठनाड्यां त्रयः स्मृताः ॥ हृदय-क्लोमयकृतां नाडीष्वष्टादश स्मृताः । द्वात्रिंशद्दन्तमूलेषु चैकैके घ्राणकाकले ॥ मूर्ध्नि च द्वौ कर्णशङ्खे गण्डनेत्रे च वर्त्मनि । हनुसन्धौ च विज्ञेयौ द्वौ भ्रुवोर्योपरि स्मृतौ ॥ पञ्च मूर्द्धकपालेषु त्रीर्ध्वमेवं त्र्यशीतिका । सन्धयस्त्वष्टधा ज्ञेया मणिबन्धेऽथ जानुनि ॥ गुल्फेऽङ्गुलौ कोरसंज्ञा द्विजमूलेषु वंक्षणे । कक्षायां चोलूखलाख्या अंसपीठे गुदे भगे ॥ नितम्बे चैव सामुद्गा ग्रीवायां पृष्ठवंशके । प्रतराः स्युर्मूर्द्धकटीकपालेषु तु सीवनाः ॥ हनूभये काकतुण्डाः कण्ठस्य पन्नगस्तथा । हृदयक्लोमनेत्राणां नाड्यां मण्डलनामकाः । स्रोतःशृङ्गाटकाख्येषु शङ्खावर्त्ता इति स्मृताः ॥ अथात्रेयमतं ब्रूते,—सहस्रे इति । अत्रिनन्दनो द्वे सहस्रे सन्धीनां निजगाद प्रोवाच । स हि स्नायु-पेशी-सिराश्रितैः सन्धिभिः सह गणयति । एतच्च बाहुल्येनोक्तम् । तथा हि, नवसु स्नायुशतेषु नव शतानि सन्धीनां । पञ्चसु पेशीशतेषु पञ्च शतानि । सप्तसु सिराशतेषु सप्त शतानीत्येकविंशति-शतानि प्रायेण प्राप्नुवन्तीति मन्यामहे ॥ १६ ॥

स्नायुरिति । स्नायूनामस्मिन् देहे नवशती । नवानां शतानां समाहारो नवशती । द्विगोरिति ङीप् । नव शतानीत्यर्थः । तत्र "पदे पञ्च स्युरङ्गुल्यः, प्रत्यङ्गुलि तु तानि षट् । त्रिंशदेवं दश दश कूर्चे पादतले तथा ॥ गुल्फे चेति त्रिंशदेव जङ्घायां दश जानुनि । चत्वारिंशत् स्युरूरौ च वंक्षणे दश सक्थ्नि ॥ सार्द्धशतं द्वितीयेऽपि तद्वद् बाह्वोश्च सक्थिवत् । शाखास्वेवं षट्शतानि कट्यां द्वे विंशती स्मृते ॥ विंशतिर्मुष्कयो-र्मेढ्रबस्त्यन्तेषु च कीर्त्तिताः । अशीतिः पृष्ठभागे स्युः पार्श्वयोः षष्टिरन्ययोः ॥ चत्वार्यु-रस्यष्टदश त्वष्टावंसयुगे स्मृताः । मध्ये शतद्वयं त्रिंशद् द्वे द्वे मन्यावटौ स्मृते ॥ नेत्रोष्ठ-तालुनि तथा ग्रीवायां त्रिंशदीरिताः । जत्रूणि त्रीणि चत्वारि हन्वोः पञ्च तु कीर्त्तिताः ॥ जिह्वायां दन्तमांसेषु द्वादशैवाऽथ मूर्ध्नि षट् । एवं शतानि स्नायूनां नवैतेषु विनिर्दिशेत् ॥ आमपक्वाशयान्तेषु बस्तौ च सुषिराणि तु । प्रतानवन्ति शाखासु महास्नायूनि कण्डराः ॥ वृत्तानि पार्श्वपृष्ठोरःशिरसि स्युः पृथूनि च । सिरादिभ्योऽप्य-स्थितोऽपि रक्षेत् स्नायूनि यत्नतः" ॥ तथा चोक्तम्,—"न ह्यस्थीनि तथा हिंस्युर्न पेश्यो

अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रिताः ॥ १७ ॥
दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः ।
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ॥ १८ ॥
स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवत् ।

---

न च सन्धयः। व्यापादिता अपि शिरा यथा स्नायूनि देहिनाम् ॥ स्नायूनि यो वेत्ति सम्यग् बाह्यान्याभ्यन्तराणि च। स गूढं शल्यमाहर्तुं देहाच्छक्नोति देहिनः" इति। "पेश्यः सम्प्रति भण्यन्ते पञ्चाङ्गुल्योऽथ तासु ताः। प्रत्येकं तिस्र इत्येवं ताः पञ्चदश कीर्त्तिताः ॥ दश पादतले गुल्फे तथा पादस्य चोपरि। कूर्चे तु विंशतिः स्यात्तु जङ्घायां पञ्च जानुनि ॥ ऊरौ विंशतिरित्येवं शतं सक्थ्नि कतो भवेत्। शतं द्वितीयेऽपि तथा सक्थिवद् भुजयोर्मताः ॥ चत्वार्येवं शतानि स्युः शाखास्वेकैव मेहने। सीवन्याञ्च वृषणयोर्द्वे स्फिचोस्तु दश स्मृताः ॥ तिस्रो गुदे वस्तिमूर्ध्नि द्वे चतस्रस्तु कोष्ठगाः। नाभ्यामेकाऽथ हृद्येका स्यादथाऽऽमाशयेऽपि षट् ॥ यकृत्प्लीहोण्डुकेषु स्युश्चतस्रः पृष्ठतो दश। 'पार्श्वयोर्वक्षसि दश चतस्रश्चाक्षकांसयोः ॥ इत्यन्तराधौ षष्टिः स्युर्ग्रीवायां दश गण्डयोः। अष्टौ हनुप्रदेशेऽष्टावेकैका काकले तथा ॥ जिह्वायां मूर्ध्नि गलके द्वे ललाटेऽथ तालुनि। द्वे ओष्ठयोः कर्णयोर्द्वे नासायां द्वे च कीर्त्तिते ॥ पुरुषाणां भवेदेतत् पेशीनां शतपञ्चकम्। दशाधिकाः स्युः स्तनयोर्दश योनौ च योषिताम् ॥ प्रत्येकं स्तनयोः पञ्च तासां वृद्धिस्तु यौवने। योन्यन्तराश्रिते द्वे तु द्वे च वृत्ते सुखाश्रिते ॥ गर्भमार्गाश्रयास्तिस्रो यत्र गर्भोऽवतिष्ठते। शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता जायते स्त्रियाः ॥ तस्यास्तृतीये आवर्ते रोहितास्याकृतिर्भवेत्। गर्भशय्याऽथ तिस्रश्च भवेयुः सम्प्रवेशिकाः। शुक्रस्य चार्तवस्यैवं पेशीस्तत्त्वविदो विदुः" ॥ एताभिर्हि शरीरे तनु-बहल-स्थूलाणु वक्र-वृत्त-ह्रस्व-दीर्घ-स्थिर-मृदु-श्लक्ष्ण-कर्कशाभिः सन्ध्यस्थि सिरा-स्नायूनि प्रच्छादितानि। सिराधमनीनां चानेकशो विभज्यमानानां एकोनत्रिंशच्छतसहस्राणि नवशतानि षट्पञ्चशतानि भवन्ति। ताभिरिदं शरीरं गवाक्षितं पिनद्धमाततञ्च। तावन्ति च केशश्मश्रुलोमानि। तासां हि मुखानि तत्प्रतिबद्धानि। अतस्तानि ताभिराप्याय्यन्ते तैश्च ताः स्वेदमभिवहन्ति। तथा अभ्यङ्गालेपादिवीर्यं त्वचि विपक्वमन्तर्नयन्ति, स्पर्शञ्च गृह्णन्ति। स्रोतांसि पुनरसंख्येयान्येवेति। अन्ये त्वाहुः, शरीररोम्णां द्वासप्ततिः कोट्यो भवन्ति ॥ १७ ॥

इदानीं सिराः संख्यातुमाह,—दशेति। हृदि तिष्ठन्तीति हृत्स्थाः दश मूलसिराः। यतोऽन्यासां सिराणां सर्वासां मूलभूतत्वेनैव ताः स्थिताः ततः प्रधानभूता इत्यर्थः। हृत्स्था हृदयसम्बद्धाः। ताः सर्वं वपुः सकलं देहमोजो वहन्ति प्रापयन्ति। कथम् ? सर्वतः सर्वदा। वपुरोजो वहन्तीति वहेर्द्विकर्म्मकत्वाद् वपुरोजश्च कर्म्म। किम्भूतमोजः ? रसात्मकं रसस्वभावमाहारात् सारकिट्टतया परिणतात्, सारः। तन्निबद्धं हि चेष्टितम्। तासु दशसु सिरासु निबद्धं निश्चयेन स्थितं चेष्टितं वाक्कायमनोव्यापारः। हिशब्दो यस्मादर्थे। यस्मात् तन्निबद्धं चेष्टितं, अतस्ता मूलसिराः ॥ १८ ॥

भिद्यन्ते तास्ततः सप्तशतान्यासां भवन्ति तु ॥ १९ ॥
तत्रैकैकञ्च शाखायां शतं तस्मिन्न वेधयेत् ।
सिरां जालन्धरां नाम * तिस्रश्चाभ्यन्तराश्रिताः ॥ २० ॥
षोडशद्विगुणाः श्रोण्यां तासां द्वे द्वे तु वंक्षणे ।
द्वे द्वे कटीक-तरुणे शस्त्रेणाष्टौ स्पृशेन्न ताः ॥ २१ ॥
पार्श्वयोः षोडशैकैकामूर्द्ध्वगां वर्जयेत् सिराम् ॥ २२ ॥
द्वादशद्विगुणाः पृष्ठे पृष्ठवंशस्य पार्श्वगे ।
द्वे द्वे तत्रोर्द्ध्वगामिन्यौ न शस्त्रेण परामृशेत् ॥ २३ ॥

---

इदानीं संस्थानमासां निर्दिशति,—स्थूलेति । स्थूलं मूलं यासां ता एवम् । सुष्ठु सूक्ष्ममग्रं प्रान्तो यासां ता एवम् । स्थूलमूलत्वेन तासां व्यानवायुक्षिप्तो रसः शीघ्रमेव चान्तः प्रविशति । सूक्ष्मप्रान्तत्वेन रोमराज्यामभ्यन्तः प्रविश्य तेषां रोम्णां वृद्धिहेतुः सम्पद्यते । ततश्चाऽस्मिन् देहे स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवद् भिद्यन्तेऽनेकधा सम्पद्यन्ते । यथा वृक्षस्य पलाशरेखाणां प्रतानाः समूहाः स्थूलमूलाः सुसूक्ष्माग्रा अनेकधा जायन्ते तथैव एताः सिराः स्थूलमूलाः सुसूक्ष्माग्राः अनेकधा सम्पद्यन्ते नानारूपतः । ततस्तस्माद्धेतोः पलाशरेखाप्रतानवदनेकधा गमनादासां सिराणां सप्तशतानि भवन्ति । तुशब्दोऽवधारणे भिन्नक्रमे च । सप्तैव शतानि ॥ १९ ॥

तत्रेति । तासामेकैकस्मिन् सक्थ्नि शतम् । तस्मिन् सिराशते सिरां जालन्धरां नाम या जालानि धारयति तां न विध्येत् । तिस्रश्चेति । याश्चान्यास्तिस्रः सिरा अभ्यन्तराश्रिता अन्तर्मुखास्ता अपि न वेध्याः, इति चशब्दार्थः । एवं सक्थ्याश्रिते सिराशते चतस्रः सिरा न वेध्याः । द्वितीयेऽपि सक्थ्नि चतस्र एव । सक्थिवद् बाह्वोरपि । एवं चतुर्षु शिराशतेषु शाखास्वाश्रितेषु षोड़श सिरा न वेध्याः ॥ २० ॥

षोड़शेति । षट्त्रिंशच्छतमन्तराधौ । तत्र षोड़शद्विगुणाः श्रोण्यां द्वात्रिंशच्छ्रोण्यवयवाश्रिताः सिराः । तासां मध्ये द्वे द्वे तु वङ्क्षणे द्वयोर्वङ्क्षणयोः प्रत्येकं द्वे सिरे । द्वे द्वे कटीक-तरुणे द्वयोः कटीक-तरुणयोः प्रत्येकं द्वे सिरे । एवं श्रोण्याश्रिता अष्टौ सिराः शस्त्रेण न स्पृशेत् ॥ २१ ॥

पार्श्वयोरिति । पार्श्वयोः षोड़श सिराः ; तासामेकैकामूर्द्ध्वगां पार्श्वसन्धिसंज्ञां प्रत्येकं वर्जयेत् ॥ २२ ॥

द्वादशेति । द्वादशद्विगुणाः पृष्ठे चतुर्विंशतिः सिराः पृष्ठमाश्रिताः । तासां पृष्ठवंशस्य पार्श्वयोः पृष्ठवंशमुभयतो द्वे द्वे तत्रोर्द्ध्वगामिन्यौ । एवं चतस्रः शस्त्रेण न परामृशेत् ॥ २३ ॥

---

* शिराजालधरा नामेति क्वचित् पाठः ।

पृष्ठवज्जठरे तासां मेहनस्योपरि स्थिते ।
रोमराजीमुभयतो द्वे द्वे शस्त्रेण न स्पृशेत् ॥ २४ ॥
चत्वारिंशदुरस्यासां चतुर्दश न वधयेत् ।
स्तनरोहिततन्मूल-हृदये तु पृथग् द्वयम् ।
अपस्तम्भाख्ययोरेकां तथाऽपलापयोरपि ॥ २५ ॥
ग्रीवायां पृष्ठवत्तासां नीले मन्ये कृकाटिके ।
विधुरे मातृकाश्चाष्टौ षोडशेति परित्यजेत् ॥ २६ ॥
हन्वोः षोडश तासां द्वे सन्धिबन्धनकर्म्मिके ॥ २७ ॥
जिह्वायां हनुवत्तासामधो द्वे रसबोधने ।
द्वे च वाचःप्रवर्त्तिन्यौ नासायां चतुरुत्तरा ।
विंशतिर्गन्धवेदिन्यो तासामेकाञ्च तालुगाम् ॥ २८ ॥

---

पृष्ठेति । पृष्ठवज्जठरे पृष्ठेन तुल्याः सिराः, उदरे तत्संख्याश्चतुर्विंशतिरित्यर्थः । तासामुदराश्रितानां सिराणां मध्यात् मेहनस्य मेढ्रस्योपरि स्थिते रोमराजीमुभयत उभयपार्श्वयोर्द्वे द्वे सिरे । एवं चतस्रः शस्त्रेण न परामृशेत् ॥ २४ ॥

चत्वारिंशदिति । चत्वारिंशदुरसि सिराः ; तासां मध्ये चतुर्द्दश सिरा न वधयेत् । ता एव दर्शयति,—स्तनरोहितेत्यादि । तयोः स्तनयोर्मूले तन्मूले । तत्र स्तनरोहितयोः, तथा स्तनमूलयोः, तथा हृदये पृथक् प्रत्येकं द्वयं द्वे द्वे सिरे न विध्येत् । अपस्तम्भाख्ययोः प्रत्येकमेकां सिराम्, तथा अपलापयोः प्रत्येकां सिरां न विध्येत् ॥ २५ ॥

ग्रीवायामिति । ग्रीवायां पृष्ठवत् सिराणां संख्या चतुर्विंशतिः सिराः ; तासां सिराणां मध्यात् नीले द्वे मन्ये द्वे कृकाटिके द्वे विधुरे द्वे अष्टौ च मातृका मातृकाख्यानि मर्म्माणीत्येवं षोड़श परित्यजेन्न शस्त्रं तासु पातयेत् ॥ २६ ॥

हन्वोरिति । हन्वोर्द्वयोः षोडश सिरा संश्रिताः ; तासां सिराणां मध्याद् द्वे सिरे परित्यजेत् । किंकर्म्मिके ते आह,—सन्धिबन्धनकर्म्मणीति । बध्यतेऽनेनेति बन्धनम् । सन्धेर्बन्धनं सन्धिबन्धनम्, अर्थात् हनुसम्बन्धिनः सन्धेर्बन्धनं कर्म्म क्रिया ययोः सिरयोस्ते सन्धिबन्धनकर्म्मणी सिरे ॥ २७ ॥

जिह्वायामिति । जिह्वायां हनुवत् सिरासंख्या षोड़शैव सिराः ; तासां मध्ये जिह्वाया अधो ये द्वे स्थिते रसबोधने याभ्यां रसो ज्ञायते मधुरादिरसबोधिन्यौ । द्वे वाचःप्रवर्त्तिन्यौ ये सिरे । एवं चतस्रो जिह्वाश्रिताः सिराः परित्यजेत् । नासायामिति । नासायां चतुरुत्तरा विंशतिः सिराणामेवं चतुर्विंशतिः सिरा नासाश्रिताः

षट्पञ्चाशन्नयनयोर्निमेषोन्मेषकर्म्मिके ।
द्वे द्वे अपाङ्गयोर्द्वे च तासां षडिति वर्जयेत् ॥ २९ ॥
नासानेत्राश्रिताः षष्टिर्ललाटे स्थपनीश्रिताम् ।
तत्रैकां द्वौ तथाऽऽवर्त्तौ चतस्रश्च कचान्तगाः ॥ ३० ॥
सप्तैवं वर्जयेत्तासां कर्णयोः षोडशाऽत्र तु ।
द्वे शब्दबोधने शङ्खौ सिरास्ता एव चाश्रिताः ॥ ३१ ॥
द्वे शङ्खसन्धिगे तासां मूर्ध्नि द्वादश तत्र तु ।
एकैकां पृथगुत्क्षेप-सीमन्ताधिपतिस्थिताम् ॥ ३२ ॥
इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः ॥ ३३ ॥
अवेध्यास्तत्र कार्त्स्न्येन देहेऽष्टानवतिस्तथा ।
सङ्कीर्णा ग्रथिताः क्षुद्रा वक्राः सन्धिषु चाश्रिताः ॥ ३४ ॥

---

तासां मध्याद् द्वे गन्धवेदिन्यौ गन्धं वेदितुं शीलं ययोस्ते गन्धवेदिन्यौ सिरे, तथा एकां तालुगां सिरामेवं नासाश्रिताः सिरास्तिस्रः परित्यजेत् ॥ २८ ॥

षड़िति । षट्पञ्चाशन्नयनयोः सिराः ; तासां मध्यात् निमेषोन्मेषकर्म्मिके, निमेषोन्मेषौ निमीलनोन्मीलने कर्म्मणी ययोस्ते निमेषोन्मेषकर्म्मिके सिरे द्वे द्वे प्रत्येकम्, तथा अपाङ्गयोर्द्वे सिरे । एवं षट् सिरा वर्जयेत् तत्र शस्त्रं न पातयेत् ॥ २९ ॥

नासेति । नासानेत्रगता याः सिरा उक्ताः, तासां मध्यात् ललाटे षष्टिः सिरा भवन्ति ; तत्र तासां मध्यात् स्थपनीश्रितां स्थपनीनाममर्मविशेषस्तत्रस्थामेकां सिरां न विध्येत् । द्वे तथाऽऽवर्तौ मर्मणौ तयोरावर्त्तयोः स्थिते द्वे सिरे न विध्येत् । चतस्रश्च कचान्तगाः केशान्तस्थाः सिरा न विध्येत् । एवं सप्त सिरा ललाटे वर्जयेत् । कर्णयोरिति—कर्णयोर्द्वयोः षोडश सिराः । अत्र तस्मिन् षोड़शसंख्ये सिरोद्देशे कर्णयोराश्रिते द्वे सिरे शब्दबोधने याभ्यां शब्दो बुध्यते ज्ञायते ते वर्जयेत् । शङ्खौ सिरास्ता एव कर्णाश्रिताः ; तासां मध्यात् द्वे सिरे शङ्खसन्ध्याश्रिते वर्जयेत् । मूर्ध्नीति । मूर्ध्नि विषये द्वादश सिराः ; तत्र तु तासु द्वादशसु सिरासु मध्ये अष्टौ सिराः शस्त्रेण वर्जयेत् । ता एवाह,—एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम् । एवं प्रत्येकमुत्क्षेपयोर्द्वयोरेकैका सीमन्तेषु पञ्चस्वेकैका अधिपतावेका इत्यष्टौ ॥ ३०—३२ ॥

इतीति । इतिः समाप्तौ प्रकारे वा । अवेध्यसिराविभागविज्ञानार्थं तन्निमित्तं प्रत्यङ्गं शिरस्यन्तराधौ बाह्वादिषु याः सिरास्ताः वर्णिता उक्तास्ता वर्णयितुं समाप्ता इति । अथवा अनेन प्रकारेण पूर्वोक्तेन वर्णिताः ॥ ३३ ॥

अवेध्या इति । तत्र तासु सिरासु मध्ये कार्त्स्न्येन साकल्येनाऽष्टानवतिः सिरा अवेध्या वर्णिता देहे शरीरे । न केवलमेता एवाऽवेध्याः, यावत् सङ्कीर्णादयश्चेति

तासां शतानां सप्तानां पादोऽस्रं वहते पृथक्।
वातपित्तकफैर्जुष्टं शुद्धञ्चैव स्थिता मलाः।
शरीरमनुगृह्णन्ति पीडयन्त्यन्यथा पुनः॥ ३५॥
तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात् सिराः।
प्रस्पन्दिन्यश्च वातास्रं वहन्ते पित्तशोणितम्॥ ३६॥
स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः कफं पुनः।
गौर्यः स्निग्धाः स्थिराः शीताः संसृष्टं लिङ्गसङ्करे॥ ३७॥
गूढाः समस्थिताः स्निग्धा रोहिण्यः शुद्धशोणितम्॥३८॥
धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तराः।

तथाशब्दस्यार्थः। सङ्कीर्णाः परस्परं निबद्धाः; ग्रथिता इव ग्रथिताः; क्षुद्रा अल्पाः; सूक्ष्मा न महत्यः; वक्राः कुटिलाः। तथा सन्धिष्वस्थिसन्धिषु या आश्रितास्ता अपि न वेध्याः॥ ३४॥

तासामिति। तासां सिराणां सम्बन्धीनि यानि सप्त शतानि तेषां पादः पञ्चसप्तत्यधिकं शतमस्रं वहते। किम्भूतं रक्तम्? वातपित्तकफैर्जुष्टं सेवितं शुद्धञ्च तैरनाक्रान्तमदुष्टम्। पृथक् प्रत्येकं कृत्वा पादोऽस्रं वहते। एवं वातजुष्टं रक्तं सिराशतं पञ्चसप्तत्यधिकं वहति। पित्तजुष्टं रक्तं पञ्चसप्तत्यधिकं शतम्, तथा कफजुष्टं पञ्चसप्तत्यधिकं शतम्, तथा शुद्धं रक्तं पञ्चसप्तत्यधिकं शतं वहति। एवं पूर्व्वोक्तेनानेन प्रकारेण मलाः स्थिताः शरीरमनुगृह्णन्ति वर्त्तयन्ति। अन्यथा पुनर्व्यत्ययेन स्थिताः पीड़यन्ति विकारेण योजयन्ति॥ ३५॥

किंलक्षणाः सिरा वातादिजुष्टमस्रं वहन्तीत्याह,—तत्रेति। तत्र तासु सिरासु मध्ये याः श्यावारुणा वर्णेन, सूक्ष्मास्तथा क्षणात् पूर्णरिक्ताः तथा प्रस्पन्दिन्यः सिरास्ता वातास्रं वातरक्तं वहन्ते। पूर्णरिक्ता इति वायोश्चलत्वात् क्षणात् पूर्णाः क्षणात् रिक्ताः शून्या इव। किल स्पन्दनं सर्व्वासां विद्यते प्रकर्षेण तु वातरक्तवाहिनीनामिति प्रशब्देन द्योत्यते। पित्तेति। सिराः पित्तशोणितं वहन्ते। किंविधाः? स्पर्शोष्णाः स्पर्शेनोष्णा न शीताः, तथा शीघ्रवाहिन्यः, तथा नीलपीताः वर्णेन। कफं पुनर्गौर्य्यो वहन्ति। कफमिति कफशोणितं शोणितशब्दलोपात्। किंविधाः? स्निग्धाः स्निग्धच्छायाः, तथा स्थिरा न तु चलाः, तथा शीताः स्पर्शेन। लिङ्गसङ्करे यथानिर्द्दिष्टस्य लक्षणस्य सङ्कीर्णत्वे संसृष्टं कफवातजुष्टं वातपित्तजुष्टं कफपित्तजुष्टं त्रिभिरपि दोषैर्जुष्टं रक्तं सिरा वहन्ति सकलं शरीरं प्रापयन्ति॥ ३६। ३७॥

गूढा इति। गूढ़ा अन्तर्गताः, तथा समं कृत्वा स्थिताः समस्थितास्तथा स्निग्धाः स्निग्धच्छाया रोहिण्यः सिरापरसंज्ञा लोहिताभासा वा प्रसरणशीला वा शुद्धं शोणितं देहेऽस्मिन् वहन्ति॥ ३८॥

ताभिः परिवृता नाभिश्चक्रनाभिरिवाऽरकैः ।
ताभिश्चोर्द्ध्वमधस्तिर्य्यग् देहोऽयमनुगृह्यते ॥ ३९ ॥
स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् ॥ ४० ॥
स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।

---

धमन्य इति । धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तराश्चतुर्व्विंशतिरित्यर्थः । ताभिर्धमनीभिर्नाभिः परिवृता परिवेष्टिता । कथम् ? चक्रनाभिरिवाऽरकैः । यथा रथाङ्गस्य मध्यमभागो नाभिशब्दवाच्योऽरकैः परिव्रियते तद्वन्नाभिः, शरीरमध्यभागो धमनीभिः । ध्मानाद्धमन्यः स्रोतोविशेषा उच्यन्ते । ताभिर्धमनीभिरयं देह ऊर्द्ध्वमधस्तिर्य्यक् चानुगृह्यते । रसादिप्रापणकर्म्मणा ताः कायस्यानुग्रहं कुर्वन्ति ताभिरयं देह आप्यायते । आराम इव जलहारिणीभिः । केदार इव कुल्याभिः । संग्रहे चोक्तम् । तासां खलु धमनीनां मध्याद्दश धमन्य ऊर्द्ध्वं प्रसृता दशाऽधः प्रसृतास्तिर्य्यक् चतस्रः । ताभिर्यथास्वमङ्गावयवा ऊर्द्ध्वाधस्तिर्य्यक्समाश्रिता धार्य्यन्त आप्याय्यन्ते च । तासामूर्द्ध्वगा हृदयमभिप्रपन्नाः प्रत्येकं त्रिधा जायन्ते । एवं तास्त्रिंशत् । ततस्त्रिंशतो मध्याद्द्वे द्वे वातपित्तकफरक्तरसान् वहतः । एवं दश । द्वे द्वे शब्दरूपरसगन्धान् गृह्णीतः । एवमष्टाभिः शब्दरूपरसगन्धा गृह्यन्ते । द्वाभ्यां द्वाभ्यां भाषते घोषं करोति स्वपिति प्रतिबुध्यते च । एवमष्टौ । द्वे चाश्रु वहतः । तथैव द्वे स्तनाश्रिते नार्य्याः स्तन्यं नरस्य शुक्रं वहतः । अधोगमाः पक्वाशयस्था दश त्रिधा जायन्ते । एवं ता अपि त्रिंशत् । तत्राद्याः पूर्व्ववद्दश द्वे द्वे वातपित्तकफरक्तरसान्वहतः । द्वे वहतोऽन्नमन्नाश्रयेण द्वे मूत्रं द्वे तोयं द्वे शुक्रं वहतः । द्वे च मुञ्चतः । ते एव नारीणां आर्त्तवं वहतः द्वे वर्चोनिरसने स्थूलान्त्रप्रतिबद्धे । एवं द्वादश । शेषास्त्वष्टौ धमन्यस्तिरश्चीनाः स्वेदमभिवर्धयन्ति । तिर्य्यग्गामिन्यस्तु चतस्रो भिद्यमाना सुबहुधा भवन्तीति ॥ ३९ ॥

इदानीं स्त्रीपुरुषाणां दृश्यानि स्रोतांसि निरूपयितुमाह । स्रोतांसीति । स्रोतांसि पुंसां नव । द्वौ नासापुटौ । द्वौ कर्णौ । द्वे नेत्रे । पायुर्गुदम् । आस्यं मुखम् । मेहनं मूत्रनिष्क्रमणद्वारम् । स्त्रीणामेतानि तथाऽन्यानि त्रीणि । द्वौ स्तनौ । तथैको रक्तपथो रक्तमार्गः । प्रतिमासं यतो योनौ रक्तं प्रवर्त्तते । तदेवं स्त्रीणां त्रीणि स्रोतांसि पुंभ्योऽधिकानि ॥ ४० ॥

जीवितेति । एवं स्रोतांसि दृश्यान्यभिधाय शरीरे यान्यदृश्यानि स्रोतांसि तान्याह अन्तः शरीरस्याभ्यन्तरे त्रयोदश स्रोतांसि वदन्त्याचार्य्या इति शेषः । तानि स्रोतांसि जीवितायतनानि विशेषेण जीवितस्याधिष्ठानानि । किम्भूतानि ? प्राणधातुमलाम्भोऽन्नवाहीनि । प्राणाख्यं वातं वहन्ति यानि तानि प्राणवाहीनि । धातुवाहीनि रसादि धातून् यानि वहन्ति मलवाहीनि मूत्रशकृत्स्वेदान् यानि वहन्ति । तथाम्भोवाहीन्युदकवाहीनि । तथाऽन्नवाहीन्यन्नमभ्यवहृतं यानि वहन्ति । एवं त्रयोदश । संग्रहे चोक्तम् । तत्र प्राणवाहिनां हृदयं मूलं महास्रोतश्च ।

जीवितायतनान्यन्तः स्रोतांस्याहुस्त्रयोदश ॥ ४१ ॥
प्राणधातुमलाम्भोऽन्न-वाहीन्यहितसेवनात् ।
तानि दुष्टानि रोगाय विशुद्धानि सुखाय च ॥ ४२ ॥
स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ ४३ ॥
आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।

---

तानि क्षयरौक्ष्यपिपासाक्षुद्व्यायामवेगविधारणादिभिर्दुष्यन्ति । ततोऽतिसृष्टं प्रतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशब्दसूलमुच्छ्वसनं तत्र श्वासवत्साधनम् । उदकवाहिनां तालुमूलं क्लोम च । तान्यामयाऽतिपानशुष्कान्नविड्विग्रहादिभिर्दुष्यन्ति । ततोऽतितृष्णा मुखशोषः कर्ण-क्ष्वेड़नं तमोदर्शनं च । तत्र तृष्णोक्तमौषधम् । अन्नवाहिनामामाशयो मूलं वामपार्श्वं च । तेषां सर्वं मात्राशितीयोक्तमनुगच्छेत् । रसवाहिनां हृदयं मूलं दश धमन्यश्च । रक्तवाहिनां यकृत् प्लीहा च । मांसवाहिनां स्नावानि त्वक् च । मेदोवाहिनां वृक्कौ मांसं च । अस्थिवाहिनां जघनं मेदश्च । मज्जवाहिनां पर्वाण्यस्थीनि च । शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च । मूत्रवाहिनां वस्तिर्वंक्षणौ च । शकृद्वाहिनां पक्वाशयः स्थूलान्त्रं च । स्वेदवाहिनां मेदोमूलं रोमकूपाश्चेति । स्रोतसामेव विशेषाः सिरा धमन्यः । अपरे त्वन्यत्वमिच्छन्ति सिराधमनीस्रोतसाम् । सरणात्सिराः । ध्मानाद्धमन्यः । स्रवणात् स्रोतांसि । केवलं परस्परसन्निकर्षात् सदृशकर्मत्वाच्च विभक्तकर्मणामप्यविभाग इव लक्ष्यते । अन्ये पुनरेवमाचक्षते । स्रोतांसि सिरा धमन्यो रसायन्यो वाहिन्यो नाड्यः पन्थानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृतानि स्थानान्याशया निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां पर्य्यायेण नामानीति । अहितेति । अहितानामाहारविहारादीनां सेवनाच्छीलनात्तानि स्रोतांसि दुष्टानि रोगाय सम्पद्यन्ते । तत्साधनार्थं दोषादिविज्ञानीयोक्तमवगच्छेत् । विशुद्धान्यदुष्टानि स्रोतांसि सुखायारोग्याय सम्पद्यन्ते ॥ ४१ । ४२ ॥

स्वेति । स्वधातुर्यो यो यस्य स्रोतस आधारस्याधेयत्वेन स्थितो धातुस्तेन तेन स्वधातुना समः समानो वर्णो येषां स्रोतसां तानि स्वधातुसमवर्णानि । यथा रसधातुतुल्यवर्णानि रसवाहिस्रोतांसि । यावच्छुक्रधातुसदृशवर्णानि शुक्रवाहिस्रोतांसि । तथा स्रोतसां मध्ये स्रोतांसि कानिचिद्वृत्तानि वर्तुलानि कानिचित् स्थूलानि कानिचित् सूक्ष्माणि तथा आकृत्या संस्थानेन दीर्घाणि सर्वाण्येव । तथा प्रतानसदृशानि पत्ररेखातुल्यानि । पत्ररेखातुल्यरूपत्वेन शाखाप्रशाखाभिरनेकधा दूरं प्रसृतानीति गमयति ॥ ४३ ॥

यतश्चाहिताहारविहारसेवनं स्रोतोदुष्टिकारणमतस्तानि तद्दुष्टिकारणानि वक्ति । आहार इति । आहारः पानाशनादिलक्षणो दोषगुणैर्वातपित्तश्लेष्मगुणै रौक्ष्यादिभिर्यः समस्तुल्यः समानगुणः स स्रोतसां प्रदूषकः । विहारोऽपि यो वाग्देहमनश्चेष्टा-

धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ४४ ॥
अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।
विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ४५ ॥
बिसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ।
द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥
व्यधे तु स्रोतसां मोह-कम्पाध्मानवमिज्वराः ।
प्रलापशूलविण्मूत्र-रोधा मरणमेव वा ॥ ४७ ॥
स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।
उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥ ४८ ॥
अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ।

---

लक्षणः सोऽपि दोषगुणः समानगुणो यथायथं स्रोतसां प्रदूषकः । यश्चाऽऽहारस्तथा विहारो धातुभीरसाभिर्विगुणो विरुद्धगुणोऽसमानगुणो विपरीतगुणो यथायथमेव स्रोतसां प्रदूषकः ॥ ४४ ॥

स्रोतसां दुष्टिः कथं ज्ञायत इत्याह । अतीति । अतिशब्देन प्रवृत्तिर्यथा मूत्रवाहिस्रोतसां प्रमेहवद्बहुमूत्रता । सङ्गोऽप्रवृत्तिः । किञ्चिद्वा प्रवृत्तिर्मूत्रकृच्छ्रवत् । शकृद्वाहिनां स्रोतसामतीसारवत् पुरीषातिसरणमतिप्रवृत्तिः । संगः स्तोकं कृत्वा पुरीषस्य प्रवृत्तिः । अथवा सर्व्वथोदावर्त्तवत् पुरीषस्याप्रवृत्तिः । एवं मूत्रवाहिस्रोतसां मूत्रातिप्रवृत्त्यप्रवृत्ती । तत्स्रोतोदुष्टेर्लक्षणम् । तथैव पुरीषवाहिनां पुरीषातिप्रवृत्त्यप्रवृत्ती पुरीषवाहिस्रोतोदुष्टेर्लक्षणम् । एवमन्येषामपि स्रोतसां यथायथं वस्तुवाहिनां यथास्वं वस्त्वतिप्रवृत्त्यप्रवृत्ती तेषां दुष्टेर्लक्षणम् । अथवा सिराणां स्रोतसां ग्रन्थयः कुटिलभावत्वं दुष्टेर्लक्षणम् । विमार्गतो वेति । अथवा स्वं मार्गमुज्झित्वा मार्गान्तरासादनं स्रोतसां दुष्टेर्लक्षणम् ॥ ४५ ॥

बिसानामिति । बिसानां मृणालानां यथा सूक्ष्माणि द्वाराणि छिद्राणि दूरं प्रविसृतानि सकलबिसं गतानि तथैव स्रोतसां द्वाराणि मुखानि सूक्ष्माणि देहे दूरं प्रविसृतानि कृत्स्नं देहं प्रकर्षेण गतानि। यैर्द्वारैश्छिद्रैर्देहे शरीरेऽभ्यवहृतस्याहारस्य कायाग्निना पच्यमानस्य प्रसादभावो यः समुद्भवति स रसः प्रसादाख्य उपचीयते वृद्धिं नीयते ॥ ४६ ॥

व्यध इति । स्रोतसां तु व्यधे ताड़ने सति मोहादयो भवन्ति । मोहादीनामितरेतरद्वन्द्वः प्रलापादीनां च । विण्मूत्रयो रोधेन सम्बन्धः । अथवा मरणमेव भवति । अतोऽस्माज्जीवितसंशयाद्धेतोर्वैद्यः प्रत्याख्याय अक्रियायां ध्रुवो मृत्युरित्यादुक्त्वा शल्यमुद्धृत्य बहिर्निष्कास्य प्रसाधयेत् । कथम् । यत्नेन नावहेलया । केन प्रसाधयेत् । सद्यःक्षतविधानतः सद्योव्रणप्रतिषेधोक्तविधिना ॥ ४७ । ४८ ॥

दोषधातुमलादीनामुष्मेत्यात्रेयशासनम् ॥ ४९ ॥
तदधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता ।
सैव धन्वन्तरिमते कला पित्तधराह्वया ॥ ५० ॥
आयुरारोग्यवीर्य्यौजोभूतधात्वग्निपुष्टये ।
स्थिता पक्वाशयद्वारि भुक्तमार्गाऽर्गलेव सा ॥ ५१ ॥
भुक्तमामाशये रुद्ध्वा सा विपाच्य नयत्यधः ।
बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥ ५२ ॥

---

अन्नस्येति । तुरवधारणे । अनेकविधस्याहारस्याभ्यवहृतस्य पित्तमेव पक्ता । किम्भूतं पित्तम् । पाचकाख्यं पुरेरितं पूर्व्वं दोषभेदीयेऽध्याय उक्तम् । यथा पक्वामाशयमध्यगमित्यारभ्य यावत् पाचकं नाम तत्स्मृतमिति । तदीदृशं पित्तमाहारं पाचयतीति धन्वन्तरिमतम् । एवं दोषादीनामुष्माऽग्निरित्यत्रिपुत्रस्य शासनमाज्ञा । दोषा वातादयः । धातवो रसादयः । मला मूत्रपुरीषस्वेदाः । आदिशब्देन दूषिकादयः । तेषां दोषादीनां सम्बन्धी य उष्मा स एवान्नस्य पक्ता न तु पित्तं पाचकाख्यमिति ॥ ४९ ॥

तदिति । तस्याग्नेर्जाठरस्याधिष्ठानमाधारो यत्रासौ शारीरोऽग्निस्तिष्ठति साऽन्नस्य ग्रहणात्तत्संज्ञा ग्रहणीति मता । आमाशयस्थो विशिष्टो धमनीविशेष इत्यर्थः । सैव ग्रहणी, धन्वन्तरिमते कला पित्तधरा नाम कथ्यते । यत एवं ग्रहण्यग्नेराधारभूता तथाऽन्नग्रहणात्तत्संज्ञाऽत आयुरादिपुष्टये सम्पद्यते इति वाक्यशेषः । भूतधात्वोरग्निना सम्बन्धः । आयुरादीनां द्वन्द्वः । आयुः शरीरेन्द्रियसत्वात्मसंयोगविशेषः । आरोग्यं धातुसाम्यम् । वीर्य्यं शक्तिः कर्म्मणि सामर्थ्यम् । ओज आहारस्य परं प्रसादजं सर्वधात्वाप्यायकं यद्वस्तुजातं तदुच्यते । पुष्टिशब्द एषां प्रत्येकं योज्यः । आयुःपुष्टये आरोग्यपुष्टये वीर्य्यपुष्टये ओजःपुष्टये पञ्चमहाभूताग्निपुष्टये धात्वग्निपुष्टये चेति पिण्डार्थः । पक्वाशयस्य द्वास्त्स्यां स्थिता सा हि ग्रहणी भुक्तस्य सहसा पक्वाशयान्तःप्रवेशरोधिन्यर्गलेव । यथा द्वारि कपाटमार्गरोधिन्यर्गला स्थिता तथा भुक्तं ह्यभ्यवहृतं कण्ठनाडीलुठितं कायस्य महानिम्नदेशं कोष्ठाख्यमवतीर्णं ग्रहणी गृहीत्वाऽवतिष्ठते । अनन्तरं जाठरेणाऽग्निना विपक्वं शनैः पक्वाशये मुञ्चति । अत एवोच्यते । स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सेति ॥ ५१ ॥

पक्वादन्नादायुरादयः पुष्यन्ति नापक्वादित्याह । भुक्तमिति । भुक्तमभ्यवहृतमन्नमामाशय आमान्नस्थाने यत्रामन्नं तत्र सा ग्रहणी रुद्ध्वाऽवष्टभ्याधो नयति । किं कृत्वा । विपाच्य विविधैः प्रकारैः पाचयित्वा । बलवतीति । बलवती भुक्तं विपाच्याधो नयति । अबला पुनः सती सा आममेवापक्वमेव विमुञ्चति । ननु जाठराग्निरन्नं ग्रहणीस्थं पचति न ग्रहणी ततश्च कथमुक्तं सा विपाच्य नयत्यध इति । अत्रोच्यते । अग्निग्रहण्योराधाराधेयभावेन स्थितत्वादुपचर्यत एवैतदुक्तम् । ग्रहणी ह्यग्नेराधारः ।

ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबल: ।
दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥ ५३ ॥
यदन्नं देहधात्वोजोबलवर्णादिपोषणम् ।
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादय: ॥ ५४
अन्नं कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम् ।
द्रवैर्विभिन्नसंघातं नीतं स्नेहेन मार्दवम् ॥

---

तथा च प्रागुक्तम् । कला पित्तधराह्वयेति । पित्तं च वह्नि: । तथा चाधुनव वक्ष्यति । पित्तं वह्निरित्यादि । तदेवं वह्न्याधारा या कला साऽन्नग्रहणाद्ग्रहणीत्युच्यते । ततश्चाधारतया ग्रहणीमाश्रित्याग्नि: पाककरणसमर्थो भवति नाधारमन्तरेण केवल एव । तदेवमग्न्याधारस्य ग्रहण्याख्यस्य पाकनिर्वर्त्तनं प्रति कर्त्तृत्वं युक्तमेवेति । अत: सा विपाच्य नयत्यध इत्येतदुपपन्नमेव ॥ ५२ ॥

अग्निग्रहण्योराधाराधेयभावतयाऽवस्थानात् परस्परबलाधानेनोपकार्य्योपकारकभाव: सम्भाव्यत इत्याह । ग्रहण्या इति । हि यस्मादर्थे । यस्माद् ग्रहण्या यद्बलं सामर्थ्य तस्य हेतुरग्नि: । अग्नितो ग्रहण्या बलमुत्पद्यते । स चाप्यग्निर्ग्रहणीबल: । ग्रहणी बलं यस्याग्ने: स एवम् । अपिशब्दान्न केवलमग्निर्ग्रहण्या बलं ग्रहण्यप्यग्नेर्बलम् । अतो दूषितेऽग्नौ दुष्टा ग्रहणी रोगकारिणी सम्पद्यते । एवं चार्थाद् ग्रहण्यामपि दुष्टायामग्निर्दुष्यति । दुष्टश्च सोऽपि रोगकारी सम्पद्यते । एवं या पित्तधरा कला साऽदुष्टा सत्यायुरादीनां पुष्टये भवतीत्युक्तम् । अन्नग्रहणाद्ग्रहण्या एवं रूपता । तथान्नं विपक्वमेव देहधात्वादिपोषणं नापक्वम् ॥ ५३ ॥

तस्य चाऽन्नपाकस्य हेतुरग्निरत आह । यदिति । यदन्नमाहारो देहधात्वादि—पोषणं भवति तत्राग्निर्हेतु: कुत इत्याह । नहीत्यादि । हि यस्मादपक्वादाहाराद्रसरुधिरादयो न सम्भवन्त्यतो देहधात्वादिपोषणे सर्वत्राग्नि: कारणम् । पाकक्रियानिर्वर्तनात् । तदेवमन्वयव्यतिरेकाभ्यामवगम्यते । अन्नं देहधात्वादिहेतुरग्निप्रभावादेव । तस्मादग्नि: पाककारणम् । पक्वमन्नं देहादिपोषणम् । इति परस्परकारणत्वमनयो: ॥ ५४ ॥

न ह्यपक्वाद्रसादय इत्युक्तमत: पाकस्यैवेतिकर्त्तव्यतां निरूपयन्नाह अन्नमिति । काले प्रसृष्टे विण्मूत्र इत्यादिना ग्रन्थेन प्राङ्निरूपिते । अन्नमभ्यवहृतं कोष्ठं हृदयाद्यङ्गनिम्नस्थानं प्राणाख्येन वायुनाऽऽहृतमानीतम् । तथा द्रवैर्द्रवगुणोपलक्षितैस्तोयव्यञ्जनमद्यक्षीरादिभिर्विभिन्नसंघातमपनीतपिण्डितभावम् । तथा स्नेहेन घृतादिना मृदुत्वं प्रापितम् । तथा आमाशयस्थितमग्नि: पचति । नाभिस्तनान्तरं जन्तोरामाशय इति स्मृत इति व्याख्यात आमाशयस्तन्वान्तरे । किम्भूतोऽग्नि: । औदर्यो जठरभव: । तथा समानाख्येन वायुना सन्धुक्षित उद्दीपित: । स्त्रीवनभवधूम्रारेत्यादिनेव प्राणानिलाहृतत्वे लब्धे पुनरुक्तं स्पष्टार्थम् । कालग्रहणस्योपलक्षणार्थत्वान्मात्रादिसहायेन जाठराग्निना समानोद्दीपितेन पक्वमन्नं देहधात्वादि-

सन्धुक्षितः समानेन पचत्यामाशयस्थितम् ।
औदर्य्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम् ॥ ५५ ॥
आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ।
फेनीभूतं कफं यातं विदाहादम्लतां ततः ॥ ५६ ॥

---

पोषणम् । नन्वौदर्योऽग्निरदृश्यत्वान्न ज्ञायते कथं पचत्यतस्तदेव बाह्यं दृष्टान्तं निरूपयितुं ग्रन्थकृदाह । यथेत्यादि । तथा बाह्योऽग्निः स्थालीस्थं तोयतण्डुलं पचति । तोयं च तण्डुलाश्च तोयतण्डुलम् । द्वन्द्वैकवद्भावः । तथैवाऽसावौदर्योऽग्निः सन्धुक्षितः समानेनामाशयस्थितं चतुर्विधमन्नमशितपीतलीढखादितभेदभिन्नं प्राणानिलाहृतं पचति । ननु दोषभेदीयेऽध्याये पूर्वमुक्तम् । प्राणोऽत्र मूर्धग इत्यारभ्य यावन्निश्वासान्नप्रवेशकृदिति । अन्नस्य प्रवेशमाहरणं करोतीत्यन्नप्रवेशकृत् । प्राणानिलाहृतमित्यनेनाप्ययमर्थः प्रत्यपादि तत्किमेतत् । अत्रोच्यते । अन्नप्रवेशकृदित्यनेनान्नप्रवेशकरणमात्रमुक्तं नतु कोष्ठप्रापणमिति । प्राणस्य हि वायोर्मूर्धाश्रितस्योरो यावत् सञ्चार उक्तो न ततोऽधः । एवमन्नप्रवेशकरणं तावत् प्राप्तं यावदुरो नतु कोष्ठमिति । कोष्ठं प्राणानिलाहृतमित्यनेन तु कोष्टप्रापणाख्योऽर्थविशेष उक्तः । अतोऽयमप्येतद्वक्तुं युक्तम् । सन्धुक्षितः समानेनेति च न वाच्यम् । यतः प्रागुक्तं समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः इति । एवं जाठरेणाग्निना सहचरः समानो वायुः सन्धुक्षयतीत्यर्थोऽवतिष्ठते । तस्मात् सन्धुक्षितः समानेनेत्यनेन नार्थः । उच्यते । अर्थविशेषसम्प्रत्ययार्थमेतदुक्तम् । तथाहि । समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः । अन्नं गृह्णाति पचतीति समानस्यैव पाकक्रियां प्रति वह्निसंधुक्षणद्वारेण कर्तृत्वमुक्तं नाग्नेः । इह पुनः सन्धुक्षितः समानेनाग्निः पचति न समानो वायुरित्यपौनरुक्त्यमेव । यद्यपि चैकप्रत्ययजनितं न किञ्चिदस्ति तथाप्यन्नपाकक्रियां प्रत्यग्नेरेव कर्तृत्वं न समानादेः । समानादयो ह्युपकारका एव । अतो युक्तमिदमग्निः पचतीति ॥ ५५ ॥

तस्यान्नस्येदानीमग्निसमीपस्थस्य या अवस्थास्ताः कथयन् पुनस्तमेव पाकं निर्दिशति । आदाविति । आदौ प्रथमं षड्रसमपि । अपिशब्दात्तिक्तादिरसमप्यन्नमभ्यवहृतमशितपीतादिकं तत् पच्यमानं मधुरीभूतममधुरं मधुररससम्पन्नं सत् कफमीरयेत् । किम्भूतं कफम् ? फेनीभूतम् । पानीयादेरपि पच्यमानस्य प्रथमं फेनोत्पत्तिदर्शनादेवमुक्तम् । विदाहादम्लतां ततः पित्तमामाशयात् कुर्यात् च्यवमानम् । ततः प्रथमावस्थाया माधुर्यप्रायाया अनन्तरं मध्यमावस्थां प्राप्य जाठरेण वह्निना पक्वं षड्रसमप्यन्नमभ्यवहृतं अम्लतां यातं अनम्लमम्लं सम्पन्नं पित्तं विदध्यात् । कस्मात् पुनरम्लतां यातीत्याह,—विदाहात् । विरुद्धो विषमो वा दाहो विदाहः, ततो विदाहाद्धेतोरम्लतां यातम् । किम्भूतमन्नम् ? आमाशयाच्च्यवमानं नामाशयस्थितमेव । च्युत पुनस्तत आमाशयात् पक्वाशयं प्राप्तं जाठराग्निना पक्वं शोषितं, तथा पिण्डितं तदानीं पिण्डि सञ्जातं संहतं सम्पन्नं, तथा कटुकं जातमन्नमन्त्यां तृतीयामवस्थां प्राप्य मारुतं कुर्यादिति योज्यम् । एतच्च सर्वं स्वभावसिद्धं स्वसम्बन्धप्राप्यं कार्यानुमेयञ्च । अतएव रसषट्केऽपि यत्

पित्तमामाशयात् कुर्याच्च्यवमानं च्युतं पुनः ।
अग्निना शोषितं पक्वं पिण्डितं कटुमारुतम् ॥ ५७ ॥
भौमाऽऽप्याऽऽग्नेय-वायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ॥ ५८॥
यथास्वं ते च पुष्णन्ति पक्वा भूतगुणान् पृथक् ॥ ५९ ॥

---

द्रव्याणां विपाकत्रैविध्यं मधुराम्लकटुकलक्षणमुक्तं तदनया रीत्या उपपन्नतरं भवति। तथाहि,—षड्रसस्याऽप्यन्नस्य जाठराग्निना पच्यमानस्य रसत्रयोपलक्षितेन मधुराम्लकटुक-स्वभावेनावस्थात्रयेण परिणामो भवति। अथाऽन्नमित्यत्र कस्मात् अदोजग्धिर्ल्यप्ति-कितीति जग्धादेशो न ? ब्रूमः, अन्न इति निपातनाद्बहुलं छन्दसीति बहुलवचनाद्वा जग्धादेशाभावः। ननु विदाहादम्लतां गतमिति सामान्येनोक्तमयुक्तमिव भाति; यतो द्राक्षेक्षुशर्करादीनामविदाहित्वं श्रूयते। अपि च, विदाहादीनि च वर्जयेदिति तन्त्रकारः पठति। अनया च रीत्या अविदाहिद्रव्याभाव एव स्यात्। तस्माद् सामान्येनाऽविदाहित्वमभ्युपगम्यमानम् अन्यार्थमेव मन्यामहे। उच्यते, विदाहस्य द्वैविध्याददोषः। इह हि द्विविधो विदाहः प्रथितो, दोषस्थानकृतो द्रव्यकृतश्च। तत्र हि दोषस्थानकृतस्य ग्रहणम्। आमाशयाच्च्युतमग्निना पक्वमिति कथमुक्तम्? यतः पक्वाशयस्थस्याऽग्निना पाकोऽनुपपन्नः। दूरव्यवधानो ह्यग्निरामाशयस्थः, तस्मात् पक्वाशयस्थस्यान्नस्य न पक्वत्वमुपपन्नम्। अत्रोच्यते, पक्वाशयेऽप्यस्ति पाकस्तन्त्रकार-वचनात्। तथाहि, प्राग्बस्तिविधावभ्यधात्। यथा वा स्नेहपक्तिः स्याद्दतोऽत्युल्बण-मारुतान्। व्यायामनित्यान् दीप्ताग्नीनित्यादि। तदेवं पक्वाशयस्थस्याऽप्यनुवासनस्य स्नेहपाकोऽभिहितः। तस्मात् पक्वाशयेऽप्यग्निना पक्वस्य पुनः पाको युक्त एव। तन्त्रान्तरेषु मांसादीनामपि विक्लेददर्शनादन्यत्राऽपि पाकोऽनुभूत एव ॥ ५६ । ५७ ॥

जाठरस्याग्नेः कर्माऽभिधाय इदानीमन्येषामप्यग्नीनां कर्माऽभिधातुमाह,—भौमेति। भूमेरयं भौमः। आप्य इति चिन्त्यम्। आग्नेय इत्यग्नेर्ढगिति ढक्। वायव्य इति सास्यदेवतेत्यर्थे वाय्वृतुपित्रुषसो यदिति यत्। तत्रौपम्यार्थो बोध्यः। वायव्य इव वायव्य इति। के पुनस्ते इत्याह,—पञ्चोष्माण इति। किम्भूताः? सनाभसाः। सह नाभसेनोष्मणा पञ्चोष्माणः पञ्चाऽग्नयः। भौम ऊष्मा यावन्नाभस ऊष्मेति। तदेतेऽग्नयः पञ्चाहारगुणान् अनु पश्चात् पचन्ति। कुतोऽनु? प्रकृतत्वा-दौदर्याग्निनिर्वर्त्तितादन्नपाकात्। किम्भूतानाहारगुणान्? स्वान् स्वान् पार्थि-वादीन्। यो यस्य महाभूतोष्मणः पार्थिवादेरात्मीयो गुणस्तस्य तं गुणं स एव पार्थिवा-द्यूष्मा पचति। अनया चोक्त्या आहारः शरीरगतानां भावानां समानगुणानां गुणद्वारेण वर्द्धनहेतुर्विपरीतगुणानाञ्च चयहेतुरिति प्रतिपादयति ॥ ५८ ॥

यथेति। ते च गुणाः पञ्चमहाभूताश्रिताः यथास्वं ये येषां महाभूताना-मात्मीयास्ते यथास्वमात्मीयेन वह्निना पक्वा आत्मीयानेव देहस्थान् महाभूतगुणान् पुष्णन्ति। कथं पुष्णन्तीत्याह,—पृथक् प्रत्येकं कृत्वा नकं सर्वे न सर्वानिकः ॥ ५९ ॥

पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥ ६० ॥
किट्टं सारश्च तत् पक्वमन्नं सम्भवति द्विधा ।
तत्राच्छं किट्टमन्नस्य मूत्रं विद्याद् घनं शकृत् ॥ ६१ ॥
सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः ।
रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ॥ ६२ ॥

---

एवं प्रत्येकं भूतगुणपुष्टिं पञ्चोष्मपक्वाहारगुणकृतां स्पष्टीकुर्वन्नाह,—पार्थिवा इति। पार्थिवा महाभूतगुणाः पार्थिवानेव महाभूतगुणान् देहगान् पुष्णन्ति वृद्धिं नयन्ति। शेषाः पार्थिवगुणेभ्यो येऽन्ये महाभूतगुणा आप्यास्तैजसा वायव्या नाभसाश्च ते शेषान् पार्थिवगुणव्यतिरिक्तानाऽऽप्यादिमहाभूतगुणान् पुष्णन्ति आप्याययन्ति। गुणानाञ्च निराधाराणामसम्भवात् महाऽऽधारेण पृथिव्यादिना महाभूतेन सह पक्वा एते महाभूतगुणाः, तथाविधानेव महाभूतगुणान् पुष्णन्तीति सामर्थ्यलभ्योऽर्थः अत्र नोदयति। ननु पृथिव्यादिमहाभूतचतुष्टयव्यतिरिक्तस्योद्देशमात्रत्वादाकाशस्य सत्तैव दुर्घटा, कुतः पुनस्तस्योष्मणः सम्भव इति ? अत्रोच्यते, आकाशस्य सत्ता च द्रव्यनिर्णयप्रस्तावे प्राक् प्रतिपादितैव ; तथा नासिकाश्रोत्रास्यादिषु स्थानेषु स्थित उष्मा दाहपाकादीन् कुर्वन् नाभस उष्मेत्युपचर्यते। इत्यौपचारिक उष्माऽप्यस्योपपन्न एव, एवं पाञ्चभौतिका अग्नय एक उदराग्निः सप्त च धात्वग्नयो वक्ष्यमाणा इति त्रयोदशाऽग्नयः। ननु पार्थिवाद्यग्निभिः पक्वस्य पुनर्धातूष्मभिः पाकः। धातूनामपि पाञ्चभौतिकत्वात् तत्रापि पार्थिवाद्यग्निभावः। तेन पार्थिवाद्यग्निभिः पुनः पाक इत्येवमष्टादश प्राप्नुवन्ति। सत्यमेवैतत्, किन्तु त एव पञ्चोष्माणः पार्थिवादयः स्थानान्तरप्राप्ता धातूष्माण इति व्यपदेशमासादयन्ति। यथोदकं स्थानान्तरगतं लसीकादिव्यपदेशं लभते। तथा चोक्तम्,—"तच्छरीरगतं लसीकादिव्यपदेशं प्राप्नोति" इति। अन्ये त्वेवमाहुः, एते त्रयोदशाग्नयः, तथा सप्तसु सिराशतेषु सप्ताऽग्निशतानि पञ्चसु मांसपेशीशतेषु च पञ्चाग्निशतानीति। एवं पञ्चमहाभूतात्मकादाहाराद् यथास्वमग्निना पक्वाद्रस आहारसारः तत्रस्थमहाभूतगुणैर्देहगा महाभूतगुणा रसधात्वाश्रिता यथास्वमभिवर्द्धन्ते ॥ ६० ॥

किट्टमिति। तदन्नं पक्वं द्विधा सम्भवति द्विप्रकारं जायते। किट्टरूपं प्रसादरूपतया सारश्च। किट्टमपि जायते यदन्नस्य पक्वस्य तदच्छानच्छभेदेन द्विधेत्याह,—तत्रेति। तत्र तयोरच्छानच्छभेदभिन्नयोः किट्टयोर्मध्यात् यदच्छमन्नस्य किट्टं तन्मूत्रं विद्यात्। यत् घनं संहतमन्नस्य किट्टं तच्छकृत् पुरीषं जानीयात् ॥ ६१ ॥

सार इति। सारः पुनः प्रसादाख्यो भागो भूयः सप्तभिरग्निभिः पच्यते। उदराग्निना पञ्चभिश्च भूताग्निभिः पूर्वं पक्वः सन् पश्चात् सारीभूतो धातूष्मभिः पच्यत इति प्रतिपादनार्थं भूयोग्रहणम्। कथं पच्यते ? यथास्वं यस्य सारस्य रसादिसप्तधातुस्थस्य यो ऽग्निरात्मीयस्तेन स सारः पच्यत इत्यर्थः। रसधातुस्थः सारो रसधात्वग्निना पच्यत इति भावः। चतुर्विधोऽप्याहारोऽभ्यवहृतो जठराग्निना भूतसहायेन पक्वः किट्टसारतां याति। ततो यः सारः प्रसादाख्यः स पूर्वं हृदयं याति। ततो हृदयान्तःस्थेन

अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रजायते ॥ ६२ ॥

व्यानेन विक्षिप्त स्तत्स्ताभिः सिराभिर्दशभिर्मूलभूताभिः कृतस्नं शरीरमुच्यमानो रसधातुना सहैकतां प्राप्तो रसधात्वाशयस्थेन वह्निना भूताग्निसहायेन पच्यमानो रक्तधातुसारतया परिणमति । रक्तधातुसारतया परिणतो मांसधातुसारतया परिणमते । यावत् स एवाहाररसः क्रमेण गर्भतया परिणमतीति ॥ ६२ ॥

अमुमथ द्योतयितुमुवाच,—रसादिति । रसाद्धातुरसात् आहाररसेन सहैकतामापन्नाद्रक्तं प्रजायते । स धातुरसो रक्तीभूतो रक्ततया सम्पद्यते तावत् यावत् स एव गर्भत्वेनेति योज्यम् । अत्र नोदयन्ति । ननु यद्याहाररसो व्यानविक्षिप्तो रसधातुना सहैकतां प्राप्तः परिणामक्रमेण रक्तादीन् भावान् गर्भावसानान् परिणमति, तर्हि कथमुक्तं सारस्तु "सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः" इति । अत्रोच्यते, कार्ये कारणोपचारादेतदुक्तमित्यवेहि । सारकार्येषु रसरक्तादिषु सप्तभिर्धात्वग्निभिः पच्यमानेषु "सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः" इत्युक्तम् । तस्माद्रसादिधातव एव साराख्यान्मूलकारणादुत्थिताः परमार्थेन पच्यन्त इति बोध्यम् । ननु यदि क्रमेणाहाररसाद्रसो रसाद्रक्तं रक्तान्मांसमित्यादिकम आश्रीयते तत् कथमुक्तं व्यानेन रसधातुर्हि विक्षेपोचितकर्मणेति । अत्र हि युगपदिति निर्दिश्यते । युगपदेककालं व्यानेन रसो देहे विक्षिप्यते । विक्षिप्ताच्च रसात् सर्वधातूत्पत्तिरिति प्रत्यज्ञायि । इह च रसरक्तमांसादिक्रमेणाऽऽहाररसाद्धातुनिष्पत्तिरिल्युच्यते । तदेतत् परस्परं विरुद्धमिव लक्ष्यते । ब्रूमः, युगपच्छब्दोऽत्र शीघ्रक्रमार्थः । तथा चोवाच सांख्ये,—"युगपच्चतुष्टयस्यानुवृत्तिः क्रमेण च निर्दिष्टा" इति । अस्यार्थः । मनोबुद्ध्यहङ्कारास्त्रयश्चक्षुरादीनां मध्येऽन्यतम इत्येवं चतुष्टयमेतत् । अस्य च वृत्तिर्युगपन्निर्दिष्टा क्रमेण च । तत्र युगपद्वृत्तिरुत्पलपत्रशतपत्रसूचीभेदन्यायेन । क्रमेण च वृत्तिर्यथा । चक्षुरादिरूपादिकं पश्यति । मनस्तत्र संशेते । बुद्धिर्निश्चिनोति । अहं करोमीत्यहङ्कार उद्यमयति । तद्वदत्रापि युगपत् क्रमेण च विक्षेपो न विरुद्धः । अस्त्वेतत् । रसधातुरित्येतत् कथमुक्तम् । यतो रसाख्यो धातुस्तेन न विक्षिप्यते किन्तर्हि आहाररसोऽतएव धातुशब्दोपादानमनर्थकम । ब्रूमः, धातुशब्द आधाराभिधेयत्वेनेहोपात्तो रसस्य देहधारणत्वं दर्शयितुम् । सर्व्वेषां हि धातूनां यद्देहधारणस्वभावत्वं तदाहाररसाप्यायितानामेषां न त्वनाप्यायितानाम् । अतः स आहाररसो धातूनामाधार उद्भवस्थानम् । यथा लोके हेमादीनां य आधारः प्रतिनियतो विशिष्टा मृत् स धातुसंज्ञया भण्यते । इयं सुवर्णधातुरियं रजतधातुरिति । एवमाहाररसो व्यानेन विक्षिप्यते न रसाख्यो धातुरिति स्थितमेतत् । किञ्चाऽऽहाररसादेककालं सप्तसु धातुस्रोतःसु प्रवेशिताद्रक्तादयो धातव उत्पद्यन्त इति । यद्येष एककालधातुपोषणपक्ष आश्रीयते, तदानीमिदं विरुध्यते । पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधमिति । यतः सर्वे धातव आहाररसेन युगपद् व्यानविक्षिप्तेन स्वे स्वे स्रोतस्यवतिष्ठमानाः स्वातन्त्र्येणाऽऽप्यायिताः पुष्यन्त्यनाप्यायिताः क्षयं यान्ति । तदेवं कथं पूर्व्वस्य धातोर्वृद्धौ परस्य वृद्धिः पूर्व्वस्य धातोः क्षये परस्य क्षयः स्यात् ? नहि कदाचिद् घटते मेघे हते चन्द्रः सुहितः स्यादहते चाऽसुहितः स्यात् । तथा स्थूलस्य मेद एवोपचीयत इति

दृष्टम्। न च समं कृत्वा सप्तसु धातुस्रोत:सु विनिक्षिप्ते रसे मेदसोऽधिका वृद्धि: कथञ्चिदुपपद्यते। क्रमपरिणामपक्षे तु स्थूलस्याहाररसो रसधातुतया परिणमति। रसधातू रक्ततया रक्तधातुर्मांसतया मांसधातुर्मेदस्तया परिणमति। मेदस आहारपूर्णस्य स आहाररसो मेदस्त्वं प्राप्त: पुन: प्रतिस्रोतोन्यायेन मांसस्य विशेषवृद्धिं करोति। अनन्तरं रक्तस्य पश्चाद्रसस्य पुनश्च रसधातुरतिपूर्णो रक्तस्य वृद्धिं विधत्ते। रक्तधातुर्मांसस्य मांसधातुर्मेदस इत्येवं स्थूलस्य मेदोवद्रसादयो मांसावसाना अप्युपचीयन्ते। अस्थ्यादयश्चास्थ्यादिस्रोतसां मेदसावृतत्वान्न तथोपचीयन्ते। तस्मादाहाररसेन मेदोभावेन परिणमत उदकपरिपूर्णाभिनवमृत्कुम्भजललव-स्यन्दन्यायेनास्थ्यादयो धातव: केवलमाप्याय्यन्ते, न तु तथोपचीयन्ते। तथा च मुनि:,—"स्थूलस्य मेद एवोपचीयते न तथेतरधातव:" इति। अस्य चायमर्थो मेदसो येऽन्येऽस्थ्यादय: शुक्रावसानास्ते न तथोपचीयन्ते न पुन: पूर्वे रसादयो धातव: स्थूलस्यानुपचायिन इति। अतएवाह मुनि:,—"मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तन:। अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते" इति। अपिच यदि क्रमपरिणामपक्षो नीरङ्गीक्रियते, तदानीं गर्भस्य शुक्रधातुरसोत्पन्नस्य रसादयो मज्जावसाना धातवो न स्यु:। कारणानुविधायीनि हि कार्याणि भवन्तीति युक्तम्। क्रमपरिणामपक्षे पुन: शुक्रप्रसादस्य सर्वधातुप्रसादरूपतया परिणतत्वात्तच्छुक्रप्रसादो गर्भतया परिणमंस्तथारूप एव परिणमति, कार्याणां कारणानुरूपत्वात्। यथा बीजकारणे वटधवप्ररोहादौ सकलान्यदृश्यपदार्थजातानि, तथा रूपाण्यव्यक्तरूपतया तान्यवतिष्ठन्ते। यानि कार्यरूपतया परिणमन्ति तानि सर्वाण्यभिव्यक्तिं यान्ति कार्ये दृश्यन्ते। ननु क्रमपरिणामपक्षे धातोर्धात्वन्तरोत्पत्तावाश्रीयमाणायां यो यो धातुर्धात्वन्तरभावेन देहे परिणमति तस्य धातोर्धात्वन्तरभावेन परिणतत्वादभाव: स्यात् पूर्वस्य पूर्वस्य। शुक्रप्रसादस्यैव देहे सद्भाव: स्यान्न रसादीनां धातूनाम्। तथा चाहारविनिक्तावपि स्त्रीगमनासामर्थ्यं स्यात्। शुक्रस्याऽविद्यमानत्वात्। अत्रोच्यते, अनवच्छिन्नप्रवाहसंतानक्रमेणांऽशांशितया धातूनां धात्वन्तरभावोत्पत्तिर्न तुल्यकालं सर्वैरवयवैरुत्पत्तिरिति कृत्वा यो यो धातुर्धात्वंतरभावेन देहे परिणमति न तस्य धातो: पूर्वस्याभावो भवति, सर्वैरवयवैरपरिणतत्वात्। तदेव सर्वथा क्रमपरिणामपक्ष एवाऽऽश्रयितुं न्याय्य:। तथाचाऽष्टाङ्गसंग्रहेऽप्यधीतम्। तत्राऽऽहाररसो व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात् पच्यमान: स्वात्मभावप्रच्युतिसमनन्तरमेव प्राप्तरक्तादिसंज्ञ: कालवदस्खलितबलप्रसाणो देहमूर्जयन्नित्यादि। तथा चरकसंहितायां दृढबलोऽप्याह,—"रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च। अस्थ्नो मज्जा तत: शुक्रं शुक्राद्गर्भ: प्रसादज:" इत्युक्तवन्तमाचार्यं शिष्यस्त्विदमचोदयत्। "रसाद्रक्तं विसदृशात् कथं देहेऽभिजायते। रसस्य न च रागोऽस्ति, स कथं याति रक्तताम्॥ रसाद्रक्तात् स्थिरं मांसं कथं तज्जायते नृणाम्। रसाद्रक्तात्तथा मांसान्मेदस: श्वेतता कथम्। शलाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु। खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा। मज्ज्ञश्च परिणामेन यदि शुक्रं प्रजायते। कथं सर्वगतं शुक्रं प्रवदन्ति मनोषिण:। अथ प्रसादान्मज्ज्ञश्च शुक्रं भवति देहिनाम्। छिद्रं न दृश्यतेऽस्थ्नाञ्च तन्नि:सरति वा कथम्॥ एवमुक्तस्तु शिष्येण गुरु: प्राहेदमुत्तरम्। "तेजो रसानां सर्वेषामम्बुजानां यदुच्यते। पित्तोष्मण: स रागेण रसो रक्तत्वमृच्छति॥ वायुग्नितेजसा

कफः पित्तं मलं खेषु प्रस्वेदो नखरोम च ।
स्नेहोऽक्षि-त्वग्विशामोजो धातूनां क्रमशो मलाः ॥ ६४ ॥
प्रसादकिट्टौ धातूनां पाकादेवं द्विधार्च्छतः ॥ ६५ ॥
परस्परोपसंस्तम्भाद् धातुस्नेहपरम्परा ॥ ६६ ॥
केचिदाहुरहोरात्रात् षड़हादपरे परे ।

---

युक्तं रक्तं मांसत्वमृच्छति । श्लेष्माणञ्च समाश्रित्य मांसं वायुग्निसंयुतम् ॥ स्थिरतां प्राप्य शौक्ल्यञ्च मेदो देहेऽभिजायते । पृथिव्यग्न्यनिलादीनां सङ्घातः श्लेष्मणा कृतः ॥ खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् । करोति तत्र सौषिर्यमस्थ्नां मध्ये समीरणः ॥ मेदसा तानि पूर्यन्ते स्नेहो मज्जा ततः स्मृतः । तस्मान्मज्ज्ञश्च यः स्नेहः शुक्रं सञ्जायते ततः ॥ वाय्वाकाशादिभिर्भावैः शौषिर्यं जायतेऽस्थिषु । येन स्रवति तच्छुक्रं नवात् कुम्भादिवोदकम् ॥ स्रोतोभिः स्यन्दते देहात् समन्ताच्छुक्रवाहिभिः । हर्षेणोदीरितं रागात् संकल्पाच्च मनोभवात् ॥ बस्तौ सम्भृत्य निर्याति स्थलान्निम्नमिवोदकम् ॥" तथा चरकमुनिरपि साक्षादधिजगौ,—"स्रोतसा च यथास्वेन धातुः पुष्यति धातुना" इति । तथा धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्त इति । नग्नजिदप्याह ? तत्राहाररसात् पूर्वं रसधातुर्विवर्द्धते । रक्तं धातुरसाच्चैव रक्ताख्यान्मांसमेव च ॥ मेदोधातुस्ततो मांसादस्थ्याख्यो मेदसस्तथा । मज्जधातुस्ततोऽस्थ्याख्यान्मज्ज्ञः शुक्राख्य एव च ॥ शुक्रात् परञ्च गर्भस्य सम्भवः परिकीर्त्तितः" इति । तस्मात् क्रमपरिणामपक्ष एव युक्तः ॥ ६३ ॥

रसादीनां धातूनां प्रसादं दर्शयित्वा किट्टं यथाक्रमं दर्शयितुमाह ;—कफ इति । कफादयो धातूनां क्रमेण मलाः । रसस्य कफो मलः, रक्तस्य पित्तं मलः, खेषु नासिकाविवरादिषु यो मलोऽतः सम्भवति स मांसस्य मलः, यः शरीरे प्रस्वेदो रोमभ्यः सलिलसम्भवः स मेदसो मलः, नखा रोमाणि चाऽस्थ्नां मलः । मज्ज्ञः स्नेहो मलः, स्नेहः केषां सम्बन्धी ? नेत्रयोस्त्वचो विशः पुरीषस्य च, यदोजः सर्वधातूनां तेजः शरीरसम्भवं स शुक्रस्य मलः ॥ ६४ ॥

न केवलमाहारस्य प्रसादकिट्टतया द्वैविध्यं यावद्धातूनामप्याहाररसाप्यायितानां प्रसादकिट्टतया द्वैविध्यमिति दर्शयन्नाह,—प्रसादेति । रसादीनां धातूनामेवमनेन प्रकारेण यथादर्शितेन पाकादग्न्याहितात्प्रसादकिट्टौ द्विधा ऋच्छतो द्वैविध्यं व्रजतः । किट्टशब्दस्यात्र पुंस्त्वं लोकाश्रयत्वाल्लिङ्गस्येति बोध्यम् । अर्द्धर्चादिषु त्वपाठ एवाऽस्य ॥६५

परस्परेत्यादि । धातूनां स्नेहः सारो धातुस्नेहः । यथा आहाररसस्य धात्वात्मना परिणमतो यथायथं धात्वग्निभिः पच्यमानस्य क्षीरस्येव शतस्य सारस्तथा पाकवशाद्धातूनां यथोत्तरं यथारूपः स्नेहो जायते तस्य धातुस्नेहस्य परम्परा आहाररसाप्यायिततयाऽनुच्छिन्नप्रबन्धप्रवृत्ततया विशिष्टैव यथोत्तरं धातुस्नेहोत्कर्षक्रमपरिणतिः सा धातुस्नेहपरम्परा परस्परमुपसंस्तम्भादुपसंश्लेषाज्जायते । अतएव शोणितप्रभृतीनां धातूनामुत्तरोत्तरं गौरवं यथोत्तरं स्नेहोत्कर्षः ॥ ६६ ॥

मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः ॥ ६७ ॥
सन्ततं भोज्यधातूनां परिवृत्तिस्तु चक्रवत् ॥ ६८ ॥
वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ॥ ६९ ॥
प्रायः करोत्यहोरात्रात् कर्माऽन्यदपि भेषजम् ॥ ७० ॥
व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।

---

इदानीं परिणतिकालमाहारस्य निरूपयन्नाह,—केचिदिति ; केचिदाचार्या अहोरात्राद् रात्रिन्दिनेनान्नं शुक्रत्वं यातीत्याहुः । कैः ? पाकक्रमादिभिः ; पाकस्य जाठराग्निना भूताग्निभिर्धात्वग्निभिश्च रसरक्तादिपरिपाट्येत्येवंप्रकारः क्रमः स आदिर्येषां वीर्यप्रभावादीनां तैः । अपरे अन्ये आचार्याः षड्हात् षड्भिर्दिनैरन्नं पाकक्रमादिभिः शुक्रत्वं यातीति वदन्ति । परे अन्ये त्वहोरात्रात् प्रभृति मासः परः प्रमाणावधिस्तस्य रसादिपाकक्रमादिना परिणमतः शुक्रत्वगमने न तत ऊर्ध्वं कदाचिदपि । तथा च पराशरोऽष्टरात्रेणान्नं परिणमच्छुक्रत्वं यातीति सञ्जगाद । तथा च तद्ग्रन्थः,—"आहारोऽद्यतनो यश्च श्वो रसत्वं स गच्छति । शोणितत्वं तृतीयेऽह्नि चतुर्थे मांसतामपि ॥ मेदस्त्वं पञ्चमे षष्ठे त्वस्थित्वं सप्तमे व्रजेत् । मज्जतां शुक्रतामेति दिवसे त्वष्टमे नृणाम्" इति । तस्माद्धि पथ्यापथ्याभ्यामाहाराभ्यां नृणां ध्रुवम् । सप्तरात्रेण शुद्ध्यन्ति प्रदुष्यन्ति च धातव" इति ॥ ६७ ॥

अथैतदन्नं रसादिभावेन परिणमच्छुक्रत्वं याति, किं विच्छिन्नं कृत्वाऽथवा कालवशादनवरतं कृत्वा पाकक्रमेण ? अत आह,—सन्ततमिति । भोज्याश्च ते धातवो भोज्यधातवः । भोज्यशब्देनेह यस्य धातोर्य आहारस्तस्य सर्वस्य ग्रहणम् । उक्तं हि,—"धातवो धात्वाहाराः" इति । एतदुक्तं भवति,—"यस्य धातोर्यस्मादुत्पत्तिः स तस्याहारः" इति । भोज्यधातूनां परिवृत्तिः परिवर्तनं भ्रमणं गतिः सा चक्रवत् सन्तता अव्युच्छिन्नप्रबन्धस्वरूपाऽऽहाररसेनाप्यायितत्वात् ॥ ६८ ॥

एवं पूर्वोक्तेन कालावधिना वृष्याद्यपि यद् वस्तुजातं तदपि शुक्रत्वं यातीत्याशङ्कायामिदमाह,—वृष्यादीनीति । वृष्याणि क्षीर-रस-मधुक-माष-कुष्माण्ड-हंसादि-पत्त्यण्ड-प्रायाणि तथा आदिग्रहणाद् विष-गर-प्रशमन-मूढगर्भजरायुनिष्क्रमण-क्रिया-प्रायाणि । सद्यस्तत्क्षणादेव सुसूक्ष्मं दुर्लक्ष्यं तथाविधं प्रभावमासाद्य शुक्रबलादि कुर्वते न परिणमन्ति ॥ ६९ ॥

प्राय इति । वृष्यादिद्रव्यव्यतिरिक्तमन्यदपि भेषजं चूर्णगुटिकादि दीपनादिक्रियमहोरात्रेण प्रायः स्वं स्वं कर्म करोति । प्रायोग्रहणं किञ्चिद्भेषजमहोरात्रादपि ऊर्द्ध्वं किञ्चित्ततोऽपि अर्वाग् वीर्यादिवशात् कर्म करोतीति द्योतनार्थम् ॥ ७० ॥

आहाररसो रसधातुना सहैकतामापन्नो रसरक्तादिभावेन परिणमति यावच्छुक्रप्रसादो गर्भत्वेनेत्युक्तं, तत् कथं कदाचिदेकदेशे रोगकृद् रुधिरमांसादेरेकदेशे वृद्धिक्षयविकारकृद्भवतीति संशयापनोदार्थमिदमाह,—व्यानेनेति । आहाररसो जठराग्निना पक्वः प्रसादो धात्वाकारत्वाद्धातुवाच्यो यस्माद् व्यानेन सदा सर्वतः सर्वस्मिन् देहे

युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ ७१ ॥
क्षिप्यमाणः खवैगुण्याद्रसः सज्जति यत्र सः।
तस्मिन् विकारं कुरुते खे वर्षमिव तोयदः ॥ ७२ ॥
दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ॥ ७३ ॥
अन्न-भौतिक-धात्वग्नि-कर्मेति परिभाषितम् ॥ ७४ ॥
अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः।
तन्मलास्तु हि तदवृद्धि-क्षयवृद्धिक्षयात्मकाः ॥ ७५ ॥

---

विक्षिप्यते विशेषेण प्रेर्यते। सर्वत इत्याद्यादित्वात् तसिः। किम्भूतेन ? विक्षेपः प्रेरणमेवोचितं योग्यं कर्म्म यस्य तेन विक्षेपोचितकर्म्मणा। कथं विक्षिप्यते ? युगपदेककालं तथाऽजस्रमनवरतम्। स रसधातुराहाररसप्रसादाख्यो व्यानेन विक्षिप्यमाणः खवेगुण्यात् स्रोतोदुष्ट्येत्र प्रदेशे स्वरूपात् प्रच्युतोऽपि सज्जति सक्तः सम्पद्यते तस्मिन् प्रदेशे देहस्य विकारं कुरुते, न सर्वत्र। एतदेव दृष्टान्तद्वारेण स्पष्टयति—खे वर्षमित्यादि। यथा खे वियति तोयदो मेघो वातवशात् क्षिप्यते वर्षं वृष्टिं क्वचिदेकदेशे कुरुते न सर्वत्र। खस्य वैगुण्यं खवैगुण्यमिति षष्ठीसमासः। पूरणगुणेत्यादिना चात्र यथा समासनिषेधो न भवति तथा शिरोतीन्द्रियदौर्बल्यमित्यत्र प्रतिपादितमेव। तस्मिन् विकारं कुरुते इत्यत्रात्मनेपदं न प्राप्नोति। रसस्य कर्त्रभिप्रायाभावात्। नहि तस्य चित्तमुत्पद्यत इति करोतीति प्राप्नोति। ब्रूमः, औपचारिकोऽत्र कर्त्रभिप्रायः कल्प्यः। अनेनव न्यायेन व्रीहीन् आतपः शोषयतीत्याद्यपि उपपन्नम्। व्यानो रसधातुं यत्र नयति तत्र विकार इति तावद्रसस्य विक्षेपः ॥ ७१। ७२ ॥

दोषाणामिति। एवमिति दोषप्रकोपक्रमातिदेशार्थम्। यथा रसः क्षिप्यमाणः खवेगुण्याद् यत्र सज्जति तस्मिन् विकारं कुरुते; एवमनेन न्यायेन दोषाणामपि वातादीनां व्यानेन विक्षिप्यमाणानामेकदेशप्रकोपणं विकारकरणं स्यात्। अतएव सिध्म-दद्रु-श्वयथ्वादोरेकदेशे जायन्ते एवं क्षेप्याणां स्वभावस्थानामपि अस्वातन्त्र्याद् विकारकारित्वं भवति ॥ ७३ ॥

अन्नेति। भूतमेव भौतिकम्। विनयादित्वात् ठक्। अन्नञ्च भौतिकञ्च धातवश्च अन्नभौतिकधातवस्तेषामग्निरन्नभौतिकधात्वग्निस्तस्य कर्म कार्यमन्नभौतिकधात्वग्निकर्म। इतिः प्रकारे। इति पूर्वोक्तेन प्रकारेणाऽन्नभौतिकधात्वग्निकर्म्म परिभाषितमुक्तं निश्चयीकृतम्। तत्रान्नं कालेऽभ्यवहृतमित्यादिना कटुमारुतमित्यनेन ग्रन्थेन तथाऽन्नं सारकिट्टतया यत् परिणमतीत्यन्तेन ग्रन्थेन यन्निर्द्दिष्टं तदेतज्जाठराग्नेः कर्म्म। भौमाप्याग्नेयेत्यारभ्य शेषाः शेषांश्च देहगानित्येवमन्तेन ग्रन्थेन यन्निर्दिष्टं तद्भूताग्नेः कर्म्म। मारस्तु सप्तभिर्भूय इत्यारभ्य प्रसादकिट्टौ धातूनामित्यन्तेन यन्निर्दिष्टं तद्धात्वग्निकर्मेति ॥ ७४ ॥

अन्नस्येति। सर्वेषां पक्तॄणां मध्ये योऽन्नस्य पक्ता पाचको जाठराग्निः सोऽधिको मतो बलीयानभिप्रेतस्तन्त्रकृतामिति शेषः। कुतः श्रेष्ठ इत्याह,—तन्मला इत्यादि।

तस्मात्तं विधिवद् युक्तैरन्नपानेन्धनैर्हितैः ।
पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥ ७६ ॥
समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।
पित्ताभिमूर्च्छिते तीक्ष्णो मन्दोऽस्मिन् कफपीड़िते ॥७७॥
समोऽग्निर्विषमस्तीक्ष्णो मन्दश्चैवं चतुर्विधः ॥ ७८ ॥
यः पचेत् सम्यगेवान्नं भुक्तं सम्यक् समस्त्वसौ ।
विषमोऽसम्यगप्याशु सम्यक् क्वापि चिरात् पचेत् ॥ ७९ ॥
तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ।
मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात् पचेत् ।
कृत्वास्यशोषाटोपान्त्र-कूजनाऽऽध्मानगौरवम् ॥ ८० ॥

---

स जाठरोऽनलो मूलं प्रधानं येषां भूताग्न्यादीनां ते तन्मूलाः । मूलमिव मूलम् । यथा वृक्षादीनां प्रधानावयवो मूलं, सर्वेषां हि तदवयवानां जन्मादिषु तत् कारणम्, तेन विना तेषां जन्मासम्भवात् । यस्माच्चैवं मूलं सर्वावयवेभ्यः प्रधानमवयवस्तस्मात्ते भूतधात्वग्न्यस्तद्वृद्धिक्षयवृद्धिक्षयात्मकाः । वृद्धिश्च क्षयश्च वृद्धिक्षयौ ; तस्य जाठराग्नेर्वृद्धिक्षयाववयवोपचयापचयौ ताभ्यां यौ वृद्धिक्षयौ तद्वृद्धिक्षयवृद्धिक्षयौ तावात्मा स्वभावो येषां ते तद्वृद्धिक्षयवृद्धिक्षयात्मकाः । एतदुक्तं भवति,—"जाठरानलवृद्ध्या अपरेषामग्नीनां वृद्धिः, तत्क्षयेण तेषां क्षयः, तस्मात्तं पाचकमग्निं विधिवत् प्रशस्तेन विधानेन युक्तैर्योजितैरन्नपानेन्धनैर्हितैः पथ्यैः पालयेत् । अन्नपानान्येवेन्धनानि तैः । कथं पालयेत् ? प्रयतो यत्नवान् नावहेलया । हि यस्मात्तस्यान्नस्य पक्तुः स्थितौ सद्भावे आयुर्बलस्थितिः । तत्स्थितावायुरवतिष्ठते बलञ्च । तथा चोक्तम्,—"अग्निमूलं बलं पुंसां बलमूलं हि जीवितम्" इति ॥ ७५ । ७६ ॥

जाठराग्निमधुना चतुर्विधं वक्ति,—सम इति । समाने वायौ स्थानस्थे स्वाशयस्थिते सति समोऽग्निर्भवति । विमार्गगे मार्गमुत्क्रम्योत्पथप्रवृत्ते समाने सति विषमोऽग्निर्भवति । पित्तेनाऽभिमूर्च्छिते एकलोलीभूते समाने तीक्ष्णोऽग्निर्भवति । अस्मिन् समाने कफपीडिते श्लेष्माभिभूते मन्दोऽग्निर्भवति ॥ ७७ ॥

समोऽग्निरिति । एवं समादिभेदेन चतुर्विधोऽग्निर्भवति ; इदानीमस्य चतुर्विधस्याऽग्नेर्लक्षणं वक्ति,—य इति । वह्निरिति वक्ष्यमाणेन सम्बन्धः । यो वह्निः सम्यग् यथाविधि भुक्तमन्नं सम्यगेव पचेत् स सम एव भवतीति तु शब्दोऽवधारयति । अन्नमिति प्रकृतम् । योऽसम्यगपि देश-काल-मात्रा-विधि-भ्रष्टमप्यन्नं भुक्तमाशु पचेत्, सम्यगप्यन्नं भुक्तं चिरात् पचेत् स विषमः । योऽसम्यगप्यन्नं भुक्तं द्राक् पचेत् स तीक्ष्णः । यस्तु सम्यगप्यन्नमुपभुक्तं आस्यशोषादीन् कृत्वा चिरात् पचेत् स मन्दः । आटोपः क्षोभः । मन्देऽग्नौ सभक्तमेवौषधं प्रायेणोपयोक्तुं युज्यते । तथा च संग्रहे पपाठ,—यामैश्चतुर्भि-

सहजं कालजं युक्ति-कृतं देहबलं त्रिधा ॥ ८१ ॥
तत्र सत्त्वशरीरोत्थं प्राकृतं सहजं बलम्।
वयस्कृतमृतूत्थञ्च कालजं युक्तिजं पुनः ॥ ८२ ॥
विहाराहारजनितं तथोर्जस्करयोगजम् ॥ ८३ ॥
देशोऽल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः।
आनूपो विपरीतोऽस्मात् समः साधारणः स्मृतः ॥ ८४ ॥
मज्ज-मेदो-वसा-मूत्र-पित्त-श्लेष्म-शकृन्त्यसृक्।
रसो जलञ्च देहेऽस्मिन्नेकैकाञ्जलिवर्द्धितम् ॥ ८५ ॥
पृथक् स्वप्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम्।

---

र्वाभ्याञ्च भोज्यभषज्ययोः समे। पाकोऽग्नौ युक्तयोर्द्राक् तु तीक्ष्णे मन्दे पुनश्चिरात्। सभक्तमौषधं तस्मान्मन्दाग्नेरवचारयेत्” इति ॥ ७८—८० ॥

एवमग्निमुक्त्वा अग्न्यायत्तत्वाद्बलस्य बलत्रैविध्यं दर्शयति,—सहजमिति। सह जायत इति सहजम्। कालाज्जातं कालजम्। युक्तिभिरुपजातं युक्तिजम्। इति देहबलं त्रिधा ॥ ८१ ॥

तत्रेति। तत्र तेषु बलेषु मध्ये सत्त्वरजस्तमःसमुत्थं शरीरोद्भूतञ्च यद्बलं तत् प्राकृतं स्वाभाविकम्। सत्त्वशब्देन गुणत्रयमुपलक्ष्यते। शरीरं त्वग्रक्तादिसारमयं यद्वस्तुजात तत्। वयो बाल्ययौवनादि, तेन कृतं वयस्कृतं वयोऽनुसारेण निष्पादितम्। ऋतुभ्यो हेमन्तादिभ्य उद्भूतमृतूत्थम्। एतदुभयमपि कालजं बलम्। वयस्कृतमित्यत्रांतः कृकमीत्यनेन सः। विहरणं विहारो वाङ्मनश्चेष्टालक्षणोऽनेकप्रकारः; आहारः पूर्वमुक्तः; ताभ्यां विहाराहाराभ्यां जनितं विहाराहारजनितं यद्बलं तद्युक्तिजम्। युक्तिर्योग इतिकर्त्तव्यता ततो जातं युक्तिजम्, तथा ऊर्जस्कारास्त्रिमे योगाः। तद्‌ यथा बलवत्-पुरुषदेशे जन्म सुखश्च कालयोगो बीज-क्षेत्र-गुण-शरीराहार-सत्त्व-सम्पत्तयश्च, तथा योगाः रसायनवाजीकरणोक्ताः। तेभ्यो जातमूर्जस्करयोगजं यद्‌ बलं तदपि युक्तिजम् ॥८२।८३॥

सम्प्रति देशत्रैविध्यं दर्शयति,—देश इति। स्तोकजलवृक्षशैलाक्रान्तः स्वल्परोगदो जाङ्गलो देशः शुष्कसीतस्तया। तथा च, मरुदेशोद्भवा अल्परोगाश्चिरञ्जीविनश्च दृश्यन्ते। अस्माज्जाङ्गलाद् विपरीतो बहूदकतरुगिरिसमधिष्ठितो बहुरोगदश्चाऽऽनूपः। समस्तु देशो यो नात्यम्बुवृक्षपर्वतो न चात्यल्पवारि-तरु-गिरिः स साधारणो मध्यस्थरोगारोग्यः ॥८४॥

एवं भूमिलक्षणदेशमुक्त्वा मज्जादीनां परिमाणार्थमाह,—मज्जेति। मज्जादिद्रव्यं जलावसानमस्मिन् पुरुषे देहे एकैकाञ्जलिवर्द्धितम्; तेन मज्ज्ञ एकोऽञ्जलिर्द्वौ मेदसो यावज्जलस्य देहाश्रितस्य दशाञ्जलयः ॥ ८५ ॥

पृथगिति। ओजोमस्तिष्कशुक्राणां देहगानां पृथक् प्रत्येकं स्वप्रसृतं प्रमाणम्। स्त्रियाः स्तन्यस्य द्वावञ्जली रजसो रक्तस्यार्त्तवस्य चत्वारोऽञ्जलयः स्वेन मानेनाञ्जलि-प्रसृताविह हस्तसंस्थानविशेषवाचौ गृह्येते न तु चतुष्पलद्विपलपरिमाणौ मानवाचौ

द्वावञ्जली तु स्तन्यस्य चत्वारो रजस: स्त्रिया: ॥ ८६ ॥
समधातोरिदं मानं विद्याद् वृद्धिक्षयावत: ॥ ८७ ॥
शुक्रासृग्गर्भिणीभोज्य-चेष्टागर्भाशयर्त्तुषु ।
य: स्याद् दोषोऽधिकस्तेन प्रकृति: सप्तधोदिता ॥ ८८ ॥
विभुत्वादाशुकारित्वाद् बलित्वादन्यकोपनात् ।
स्वातन्त्र्याद् बहुरोगत्वाद् दोषाणां प्रबलोऽनिल: ॥ ८९ ॥

---

स्वशब्दप्रयोगात् । प्रसृतशब्दे तु मानवाचिनि गृह्यमाणे स्वशब्दोऽनर्थक एवेह स्यात् । ननु यथा मज्जादीनां समत्वाधिक्यहानयो विद्यन्ते, तथा पवनस्यापि । तथा च प्रागभ्यधायि,—उत्साहोच्छ्वासनि:श्वासेत्यादि । तथा वृद्धस्तु कुरुतेऽनिल इत्यादि । तथा लिङ्गं क्षीणेऽनिलेऽङ्गस्येत्यादि । तस्माद् द्वयोरपि प्रमाणं वाच्यं स्यात् तत् कथमिह नोक्तम् ? अत्रोच्यते, पवनस्यामूर्त्तत्वात् प्रमाणं वक्तुमयुक्तम् । तथा च चरक:,—"न मानोन्मानता वायोररूपत्वात् तु युज्यते" इति । तस्माल्लिङ्गैरेव समत्वाधिक्यहानयोऽनिलस्य वक्तुं युक्ता: ॥ ८६ ॥

समेति । समधातो: समप्रकृतेरिदं मानं विद्यान्नैकदोषाधिकप्रकृतीनां द्विदोषाधिकप्रकृतीनाञ्च । तेषां त्वत एव यथोक्तादञ्जलिप्रमाणादिकाद् यथायथं मज्जादीनां वृद्धिक्षयौ विद्यात् ॥ ८७ ॥

अधुना यदुक्तमायुष्कामीयाध्याये,—शुक्रार्त्तवस्थैर्जन्मादौ विषेणेव विषक्रिमे: । तैश्च प्रकृतयस्तिस्र:" इत्यादि तस्यैव विवरणमाह,—शुक्रेति । शुक्रं चासृक् चेत्यादि द्वन्द्व: । गर्भिणी सम्पद्यमानगर्भमाता तस्या भोज्यचेष्टे आहारविहारौ एतदादिषु यो दोषो वातादिरधिकस्तेन प्रकृति: सप्तधा: सप्तप्रकाराऽभिहिता सूत्रस्थाने । य इति जातावेकवचनम् । तेन यो दोषो यौ दोषौ ये दोषा इत्यर्थोऽवतिष्ठते । एकदोष-द्विदोष-त्रिदोष-प्रकृतिषु यथासंख्यमेको दोषो द्वौ दोषौ त्रयो दोषा अधिका इत्यर्थ: । ननु समधातोर्वातादीनां समत्वात् कथमिवाधिक्यं स्यात् । ब्रूम:, समधातोरपि समानानां त्रयाणामपि दोषाणां तस्मिन् काले स्वप्रमाणतो यथास्वं तुल्यत्वेनाधिकत्वं भवतीति युक्तं तत्राप्याधिक्यम् । अथवा दोषोऽधिक इति बाहुल्येनोक्तम्, तेन षट्स्वेव प्रकृतिषु दोषाधिकभावो न तु समधाताविति वेद्यम् ॥ ८८ ॥

अधुना वातस्य प्राधान्यं षड्भि: कारणै: प्रदर्श्य वातप्रकृतिं प्रागभिधत्ते,—विभुत्वादिति । विभुत्वाद् व्यापित्वात्, तथाऽऽशुकारित्वात्, तथा बलित्वात् । यथा हि, वायुर्व्यापी आशुकारी बली च न तथा पित्तश्लेष्माणौ तथाऽन्यकोपनात् स्वजातीयापेक्षयान्यौ पित्तश्लेष्माणौ वातेन यथा कोप्येते न ताभ्यां तथाऽयम् । तथा स्वातन्त्र्यात् प्रेरकत्वात् । यतो हि नाऽसावन्येन प्रेर्यते, अत: स्वतन्त्रोऽसौ । तथा बहुरोगत्वात् । यथा चोक्तम्,—"अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजा: । विंशति: श्लेष्मजाश्च" इति । एवं त्रयाणां दोषाणां मध्येऽनिल: प्रबल: प्रधानम् ॥ ८९ ॥

प्रायोऽत एव पवनाध्युषिता मनुष्या
दोषात्मकाः स्फुटितधूसरकेशगात्राः ।
शीतद्विषश्चल-धृति-स्मृति-बुद्धि-चेष्टा-
सौहार्द-दृष्टि-गतयोऽतिबहुप्रलापाः ॥ ९० ॥

अल्पपित्त-बल-* जीवित-निद्राः
सन्न-सक्त-चल-जर्जर-वाचः ।
नास्तिका बहुभुजः सविलासा
गीत-हास-मृगया-कलि-लोलाः ॥ ९१ ॥

मधुराम्ल-पटूष्ण-सात्म्यकाङ्क्षाः
कृशदीर्घाकृतयः सशब्दयाताः ।
न दृढ़ा न जितेन्द्रिया न चाऽऽर्या
न च कान्तादयिता बहुप्रजा वा ॥ ९२ ॥

नेत्राणि चैषां खरधूसराणि
वृत्तान्यचारूणि मृतोपमानि ।

---

प्राय इति। प्रायोग्रहणं क्वचिद् व्यभिचारार्थम्। अतएवाऽस्मादेव कारणात् पवनाध्युषिता वायुनाऽधिष्ठिता मनुष्याः प्राय एवंरूपा भवन्ति, कारणानुविधायित्वात् कार्याणाम्। दोषात्मका न तु गुणस्वभावा न शुभस्वभावा भवन्ति। शुक्रार्त्तवरूपावस्था आरभ्याऽऽजीवितं पवनाऽध्युषिता मानवाः स्फुटितधूसरकेशगात्राः। स्फुटितानि धूसराणि च केशगात्राणि येषां त एवम्। तथा शीतं द्विषन्तीति शीतद्विषः, उष्णाभिलाषित्वात्। तथा चला धृत्यादयो गत्यन्ता येषां ते तथोक्ताः, तथा अतिशयेन बहुः प्रलापः सम्भाषणं येषां त एवम्। वसन्ततिलका वृत्तम्। अल्पाः पित्तादयो निद्रान्ता येषां त एवम्, तथा सन्ना सक्ता चला जर्जरा वाग् येषां त एवम्। केषाञ्चित् सन्ना अवसादं नीता, केषाञ्चित् सक्ता भाषणे विलम्ब्य प्रवृत्ता, केषाञ्चिच्चला, केषाञ्चिज्जर्जरा भिन्नकांस्यस्वनसदृशी वागिति। तथा नास्ति परलोक इत्येवं मतिर्येषां ते नास्तिकाः। अस्ति नास्ति दिष्टमतिरिति ठक्। तथा बहुभुजोऽनल्पाशनाः, तथा सविलासाः सलीलाः, तथा गीतहासादिलीलास्तत्प्रियाः। स्वागता वृत्तम्। तथा मधुराम्लपटूष्णसात्म्या मधुराद्यभिलाषिणश्च, कृशाश्च ते दीर्घाकृतयश्च कृशदीर्घाकाराः, तथा सशब्दं यातं गमनं येषां ते सशब्दयाताः, न दृढा न दृढशरीराः, न जितेन्द्रियाः, न चाऽऽर्या असन्तः, कान्तानां स्त्रीणां न च दयिता अभिमताः ; न च बहुप्रजा अपि तु स्वल्पसन्ततयः। शेषं पूर्ववत्। स्यादौपच्छन्दसिकं वदन्ति सन्तः॥ एषाञ्च वातप्रकृतीनां नेत्राणि खराणि परुषाणि,

---

* अल्पपित्तकफ इति वा पाठः।

उन्मीलितानीव भवन्ति सुप्ते
शैलद्रुमांस्ते गगनञ्च यान्ति ॥ ९३ ॥
अधन्या मत्सराध्माताः स्तेनाः प्रोद्बद्धपिण्डिकाः ।
श्व-सृगालोष्ट्र-गृध्राऽऽखु-काकाऽनूकाश्च वातिकाः ॥ ९४ ॥
पित्तं वह्निर्वह्निजं वा यदस्मात्
पित्तोद्रिक्तस्तीव्रतृष्णाबुभुक्षः ।
गौरोष्णाङ्गस्ताम्रहस्ताऽङ्घ्रिवक्त्रः
शूरो मानी पिङ्गकेशोऽल्परोमा ॥ ९५ ॥
दयित-माल्य-विलेपन-मण्डनः
सुचरितः शुचिराश्रितवत्सलः ।
विभव-साहस-बुद्धि-बलान्वितो
भवति भीषु गतिर्द्विषतामपि ॥ ९६ ॥
मेधावी प्रशिथिल-सन्धि-बन्ध-मांसो
नारीणामनभिमतोऽल्पशुक्रकामः ।

---

तथा धूसराणि पांशुनेवाऽवकीर्णानि । वृत्तानि वर्त्तुलानि, अचारूणि मृतोपमानि च, तथा सुप्ते स्वप्ने उन्मीलितानीव उद्घाटितानीव भवन्ति । ते वातप्रकृतयः स्वप्ने सति शैलद्रुमान् गगनञ्च गच्छन्ति । इन्द्रवज्रा वृत्तम् ॥ तथा अधन्या अभव्याः, मत्सरेणाध्माता द्वेषपूर्णाः, तथा स्तेनाश्चौराः । प्रोद्बद्धपिण्डिका जङ्घायाः पश्चिमाङ्गभागात् प्रकर्षेणोन्नताः पिण्डिका एषां त एवम् । अनूकं स्वभावः स्वर-रूप-चेष्टानुकरणम्, श्वादीनामिवाऽनूकं येषां वातिकानां त एवम् । वातिका इति भूम्निमत्वर्थीयष्ठक् ॥ ९०—९४ ॥

अधुना पित्तप्रकृतिलक्षणं प्रस्तौति,—पित्तमिति । धन्वन्तरिमतेन पित्तमेव वह्निः, पाकादिकर्मकरणात् । अथवा वह्निजं वह्नेर्जातं पित्तमग्न्याधारत्वात् । किट्टरूपतया जातं अग्नेजो मलः पित्तम् । यदस्माद् यतश्च वमतो हेतोः पित्ताधिकः पुरुषस्तीव्रतृष्णाबुभुक्षो भवति, तथाधिकात् कारणादुत्पन्नत्वादस्मातुः रसधातुश्च तस्य द्रागेव शुष्यतीति भावः । तथा गौरोष्णाङ्गश्च, तथा ताम्रवर्णं हस्ताङ्घ्रिवक्त्रं यस्य स एवम् तथा शूरो मानी च, तथा कपिलकेशोऽल्परोमा च । शालिनी वृत्तम् ॥ दयितानि माल्यादीनि यस्य स एवम्, तथा सुचरितः शोभनचेष्टितः, तथा शुचिः कायवाङ्मनोव्यापारैर्मलिनैरसंसृष्टः, आश्रितानां वत्सलः प्रियकृत्, विभवादियुक्तश्च, तथा भीषु भयेषु द्विषतामपि गतिः शरण्यवान् भवति । अपिशब्दात् सुहृदां मध्यस्थानां किमु स गतिर्न भवतीति द्योतयति । द्रुतविलम्बितं वृत्तम् ॥ तथा मेधावी, अत्र प्रशंसार्थे अस्मायामेधास्रज इति विनिः ।

आवासः पलित-तरङ्ग-नीलिकानां
भुङ्क्तेऽन्नं मधुर-कषाय-तिक्त-शीतम् ॥ ९७ ॥
धर्मद्वेषी स्वेदनः पूतिगन्धि-
र्भूर्युच्चार-क्रोध-पानाशनेर्षः ।
सुप्तः पश्येत् कर्णिकारान् पलाशान्
दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ९८ ॥
तनूनि पिङ्गानि चलानि चैषां
तन्वल्पपक्ष्माणि हिमप्रियाणि ।
क्रोधेन मद्येन रवेश्च भासा
रागं व्रजन्त्याशु विलोचनानि ॥ ९९ ॥
मध्यायुषो मध्यबलाः पण्डिताः क्लेशभीरवः ।
व्याघ्रर्क्ष-कपि-मार्जार-यक्षानूकाश्च पैत्तिकाः ॥ १०० ॥
श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो
गूढ़-स्निग्ध-श्लिष्ट-सन्ध्यस्थिमांसः ।
क्षुत्-तृड् दुःख-क्लेश-धर्म्मैरतप्तो
बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः ॥ १०१ ॥
प्रियङ्गु-दूर्वा-शरकाण्ड-शस्त्र-गोरोचना-पद्म-सुवर्ण-वर्णः ।
प्रलम्बबाहुः पृथुपीनवक्षा महाललाटो घननीलकेशः ॥१०२॥

---

अग्नी शुक्रकामौ यस्य सः । पलितादीनामावासस्तान्यस्य बहूनि सन्तीत्यर्थः । स च मधुराद्यन्नं भुङ्क्ते । प्रहर्षिणी वृत्तम् ॥ धर्मं द्वेष्टीत्याभीक्ष्ण्येऽत्र णिनिः । स्विद्यतीति स्वेदनः । पूतिर्गन्धो यस्य स पूतिगन्धिः । गन्धस्येदित्यादिना इदादेशः । भूरयः प्रभूता उच्चारादयो यस्य स एवम् । स च पैत्तिकः सुप्तः सन् कर्णिकारादीन् पश्येत् । शालिनीवृत्तम् ॥ एषाञ्च पैत्तिकानां विलोचनानि तनुत्वादिगुणयुक्तानि भवन्ति ; तानि च क्रोधाद्यैर्द्रागेव लौहित्यं यान्ति । उपजातिर्वृत्तम् । ते च पैत्तिका मध्यायुष्यादि-युक्ता भवन्ति । व्याघ्रादीनामिवाऽनूकं येषां त एवम् ॥ ९५—१०० ॥

अथ श्लेष्मप्रकृतिलक्षणार्थमाह,—श्लेष्मेति । यस्माच्छ्लेष्मा सोमस्तेन हेतुना श्लेष्मलो नरः सौम्यो भवति, कारणानुविधायित्वात् कार्याणाम् । सोम इव सौम्यः । शाखादित्वाद् यञ् । तथा गूढ़-स्निग्ध-श्लिष्टानि सन्ध्यस्थिमांसानि यस्य स एवम् । तथा क्षुदादिभिरतप्तोऽक्षोभितो भवति, तथा बुद्ध्यान्वितः प्रशस्तसत्वश्च । सात्विकः सत्वप्रधानः,

मृदङ्गः सम-सुविभक्त-चारु-वर्ष्मा
बह्वोजो-रति-रस-शुक्र-पुत्र-भृत्यः ।
धर्मात्मा वदति न निष्ठुरञ्च जातु
प्रच्छन्नं वहति दृढ़ं चिरञ्च वैरम् ॥ १०३ ॥

समद-द्विरदेन्द्र-तुल्य-यातो
जलदाम्भोधि-मृदङ्ग-सिंह-घोषः ।
स्मृतिमानभियोगवान् विनीतो
न च बाल्येऽप्यतिरोदनो न लोलः ॥ १०४ ॥

तिक्तं कषायं कटुकोष्णरुक्ष-
मल्पं स भुङ्क्ते बलवांस्तथापि ।
रक्तान्त-सुस्निग्ध-विशाल-दीर्घ-
सुव्यक्त-शुक्लासित-पक्ष्मलाक्षः ॥ १०५ ॥

अल्पव्याहार-क्रोध-पानाशनेर्ष्यः
प्राज्यायुर्वित्तो दीर्घ-दर्शी वदान्यः ।

---

तथा सत्यं सन्दधाति प्रतिजानीत इति सत्यसन्धः । आतश्चोपसर्गे इत्यङ् । शालिनी-वृत्तम् ॥ प्रियङ्ग्वादितुल्येन वर्णेनैकैकेन युक्तः । कश्चित् प्रियङ्गुसमानवर्णः, कश्चित् दूर्वा-सदृशवर्णः, कश्चित् शरस्तम्बसदृशवर्णः, कश्चित् शस्त्रतुल्यवर्णः, कश्चित् गोरोचनातुल्यवर्णः, कश्चित् पद्मसमानवर्णः । कश्चित् सुवर्णसदृशवर्णः । तथा प्रलम्बबाहुर्दीर्घभुजः । तथा विस्तीर्णपीवरवक्षाः, तथा महल्ललाटमलिकं यस्य स तथा, तथा घननीलकेशः । उपजातिर्वृत्तम् ॥ मृदङ्गः कोमलावयवः । समः सुष्ठु विभक्तो विभक्तावयवश्चारुर्देहो यस्य स एवम् । बह्वस्त्रोजोरतिरसादयो यस्य स एवम् । तथा धर्मस्वभावः, निष्ठुरं न कदाचिद् वदति । प्रच्छन्नं गूढ़ं कृत्वा वैरं दृढ़ं चिरं वहति न तु शिथिलयति । प्रहर्षिणी वृत्तम् ॥ समदस्य द्विरदेन्द्रस्य तुल्यं यातं गमनं यस्य स एवम् । तथा जलदादि-सदृशशब्दः । तथा प्रशस्तस्मृतिः, शोभनाभियोगी, विनयी च भवति । बाल्येऽपि बालत्वेऽपि नाऽतिरोदनो न च लोलुपः । औपच्छन्दसिकं वृत्तम् ॥ स चान्नं तिक्तादि-रसयुक्तं बलक्षेपकं भुङ्क्ते । तथाऽल्पमपि भुङ्क्ते तथापि स्वभावाद् बली भवति । रक्ता-वन्तौ ययोस्ते रक्तान्ते तथा सुस्निग्धे विशाले दीर्घे च तथा सुव्यक्तौ शुक्लासितौ ययोस्ते सुव्यक्तशुक्लासिते, तथा पक्ष्मले एवम्भूते अक्षिणी यस्य स एवम् । इन्द्रवज्रा वृत्तम् ॥ अल्पा व्याहारादयो यस्य स एवम् । व्याहारो भाषणम् ; पानं पानीयादि ; अशनं भोजनम् ; ईहा कायिकचेष्टा । प्राज्ये प्रभूते आयुर्वित्ते यस्य स एवम् । दीर्घदर्शी भाविकार्यं पश्यतीदं कुर्वत इदमवश्यं सम्पद्यत इति । वदान्यो वल्गुभाषी दाता

आढ्यो गम्भीरः स्थूललक्षः क्षमावान्
आर्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः ॥ १०६ ॥
ऋजुर्विपश्चित् सुभगः सलज्जो
भक्तो गुरूणां स्थिरसौहृदश्च ।
स्वप्ने सपद्मान् सविहङ्गमालां-
स्तोयाशयान् पश्यति तोयदांश्च ॥ १०७ ॥
ब्रह्म-रुद्रेन्द्र-वरुण-तार्क्ष्य-हंस-गजाधिपैः ।
श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाऽश्व-गो-वृषैः ॥ १०८ ॥
प्रकृतीर्द्वयसर्व्वोत्था द्वन्द्वसर्वगुणोदये ॥ १०९ ॥
शौचास्तिक्यादिभिश्चैवं गुणैर्गुणमयो वदेत् ॥ ११० ॥

---

च ; आढ्यो दानादौ श्रद्धावान् ; गम्भीरो महाचित्तः ; स्थूललक्षो भूरिदाता ; क्षमावान् क्षान्तियुक्तः ; आर्यः सज्जनः ; निद्रालुर्बहुनिद्रः ; दीर्घसूत्रश्चिरकारी । कृतं जानातीति कृतज्ञः । वैश्वदेवी वृत्तम् ॥ ऋजुरकुटिलचित्तः ; विपश्चित् पण्डितः ; सुभगो जनप्रियः ; सुष्ठु लज्जत इति सुलज्जः ; गुरूणां पित्रादीनां भक्तः सेवकः, तथा स्थिरं दृढ़ं सौहृदं मैत्री यस्य स एवम् । स्वप्ने तोयाशयांस्तड़ागादीन् सजलजान् पक्षिपंक्तियुक्तांश्च पश्यति, तोयदांश्च पश्यति । उपजातिर्वृत्तम् । ब्रह्मादिभिः श्लेष्मप्रकृतयः समानाः, सिंहादिभिश्च । तार्क्ष्यो गरुड़ः ; गजाधिप ऐरावतः ॥ १०१—१०८ ॥

एवं पृथग् वातादिप्रकृतीस्तिस्रोऽभिधाय द्वन्द्वसर्वदोषप्रकृतिलक्षणाभिधित्सयेदमाह, —प्रकृतीरिति । द्वयात् संसर्गादुत्पन्नास्तिस्रः प्रकृतयः, सर्वोत्था सर्वदोषोद्भूतैका प्रकृतिरेवं प्रकृतयो द्वयसर्वोत्थाश्चतस्रः । गुणशब्दोऽत्र धर्म्मवचनो लिङ्गवचनो वा । द्वन्द्वशब्देन दोषद्वयं लक्ष्यते । सर्व्वशब्देन दोषत्रयम् । द्वन्द्वञ्च सर्वं च द्वन्द्वसर्वे तेषां गुणा दोषद्वयदोषत्रयाणां धर्म्मा लिङ्गानि वा तेषामुदयः प्रादुर्भावो द्वन्द्व-सर्व-गुणोदयस्तस्मिन् द्वन्द्व-सर्वगुणोदये सति द्वयसर्वोत्थाः प्रकृतीर्वदेदादिशेत् । द्वयञ्च सर्वं च द्वयसर्वे तेभ्य उत्थ उत्थानं यासां ताः । एवं द्वन्द्वदोषगुणोदये द्वन्द्वोत्थाः प्रकृतीर्वदेत्, सर्वदोषगुणोदये सर्वोत्थां प्रकृतिं वदेत् । उत्थ इत्युत्पूर्वात् तिष्ठतेः सुपिस्थ इति योगविभागात् कः । उदः स्थास्तम्भोः पूर्वस्येति पूर्वसवर्णादेशः । अनाद्यास्त्रयो नित्यातुरा दोषानुशयितशरीरत्वात् । विशेषतश्च द्वन्द्वप्रकृतयः । तेषु हि गुणमिश्रविकारिषु क्षुत्पिपासादिष्विवारोग्यव्यपदेशः ॥ १०९ ॥

एवं वातादिप्रकृतीर्निर्दिश्य सत्वादिप्रकृतीर्निर्दिदिक्षुराह,—शौचेति । चशब्दो भिन्नक्रमो गुणमयोश्चेत्यत्र द्रष्टव्यः । एवं वातादिप्रकृतिवत् पृथग्द्वन्द्वसर्वोत्थाः शौचास्तिक्यादिभिः सत्वादिगुणैः सप्त सत्वादिगुणमयोश्च प्रकृतीर्वदेत् । आदिग्रहणात् शुक्लधर्म्मरुच्यादिभिः सत्वादीनां गुणैर्यथायथं सत्वादिप्रकृतीर्वातादिप्रकृतयः परस्परमनुरुध्यन्ते

वयस्त्वाषोड़शाद् बालं तत्र धात्विन्द्रियौजसाम्।
वृद्धिरासप्ततेर्मध्यं तत्राऽवृद्धिः परं क्षयः॥ १११॥
स्वं स्वं हस्तत्रयं सार्धं वपुः पात्रं सुखायुषः॥ ११२॥
न च यद्युक्तमुद्रिक्तैरष्टाभिर्निन्दितैर्निजैः।
अरोमशासितस्थूल-दीर्घत्वैः सविपर्ययैः॥ ११३॥

---

सत्त्वादिप्रकृतयश्च वातादिप्रकृतीरनुरुध्यन्ते। एवं वातादिप्रकृतयः सप्त सत्त्वादिप्रकृतयोऽपि सप्तैव। जाति-कुल-देश-काल-वयोबल-प्रकृत्यात्म-संश्रयाश्च सप्तैव। तथा हि, दृश्यन्ते पुरुषाणां जात्यादिनियतास्ते ते भावविशेषाः परस्परविलक्षणाः सत्त्वाद्यसंख्येयभेदवशाच्च रूप-स्वर-चरितानुकरणमप्यनेकशब्दवाच्यमसङ्ख्यभेदं भवति। सत्त्वाद्यावेशस्त्वनन्तरजन्माभ्यासवासनया जन्यते। तस्माद्देव-मानुष-तिर्यक्-प्रेत-नारकाणाञ्च तद्विशेषाणाञ्च यथायथमेवानूकं पुरुषस्याऽन्वीक्षेत। यस्माच्छरीरं सत्त्वादीननुरुध्यते सत्त्वादयोऽपि शरीरम्। प्रकृतिविभागश्चायं तदनुरूपचिकित्साप्रवृत्तये वैद्यस्योपयुज्यते। तत्राद्यास्त्रयो नित्यातुराः दोषानुशयितशरीरत्वात्। विशेषतश्च द्वन्द्वप्रकृतयः। तस्माद् विपरीतगुणेन विधिना दोषोपक्रमणीयोक्तेन तानुपाचरेत्। समधातुप्रकृतिस्तु सर्वरसेन सात्म्येनोपचरणीयः। तथा च मुनिः,—"समसर्वरसं सात्म्यं समधातोः प्रशस्यते" इति॥ ११०॥

एवं वातादिप्रकृतीः सत्त्वादिप्रकृतीश्च परस्परानुरोधिनीर्निर्दिश्य तयोर्ज्ञानार्थमाह,—वय इति। कालकृता शरीरावस्था वयस्तच्च त्रिधा बालमध्यवृद्धभेदेनेत्याह,—वयः पुनराषोड़शाद्वर्षात् षोड़शं वर्ष यावत् बालम्। तदपि त्रिविधं क्षीरक्षीरान्नान्नवृत्त्या; तत्र बाले वयसि धातूनां रसादीनामिन्द्रियाणां चक्षुरादीनां, तथा सर्वधात्वाप्यायकस्यौजसो वृद्धिः। श्लेष्माधिक्याच्च बालस्य स्नेह-मार्द्दव-सौकुमार्याल्पक्रोध-सौभाग्यानि भवन्ति। आसप्ततेर्मध्यं वयः। आङ्त्र मर्यादायां नाऽभिविधौ। ततश्चैकोनसप्ततिं यावन्मध्यं वयः। तदपि त्रिविधम्। यौवनं सम्पूर्णत्वमपरिहानिः, तस्मिन् पित्तोद्रेकः, तेन दीप्ताग्निना प्रज्ञापरिपाकौ व्यवसायश्चेति भवति। तत्राऽत्रिंशतो यौवनमाचत्वारिंशतः सर्वधात्विन्द्रिय-बल-वीर्य-पौरुष-स्मरण-वचन-विज्ञान-प्रश्रय-गुण-सम्पूर्णत्वम्। अतःपरमपरिहानिः। तत्रेत्यादि। तस्मिन् मध्ये वयसि धात्वादीनामवृद्धिरवर्द्धनं भवति। परं क्षयः। परमेकोनसप्ततेराजीवितं यावद्धात्विन्द्रियौजसां क्रमेण क्षयः, तथा बल-वीर्य-पौरुष-वचन-स्मरण-विज्ञान-प्रश्रय-गुणानाञ्च, तथा वली-पलित-कास-श्वासाग्निसादादिभिरभिभूयमानं जीर्णं भवनमिवाऽभिवृष्टं सीदति। तस्मिन् मारुतोद्रेकस्तेन श्लथासारमांससन्ध्यस्थिता त्वक्पारुष्यमवनामः कायस्य वेपथुः श्लेष्मसिङ्घाणकोदीरणं धातुक्षयश्चेति॥ १११॥

स्वमिति। स्वं स्वमात्मीयमात्मीयं हस्तत्रयं सार्द्धं प्रमाणतो यद्वपुः शरीरं तत् सुखायुषोः पात्रं भाजनम्। न चेति। एवम्भूतमपि यद्वपुरुद्रिक्तैरधिकैर्निमित्तैर्निन्दितैरप्रशस्तैर्निजैः सहजैरष्टाभिर्न युक्तम्। कैः? अरोमशादिभिः। तेनाऽरोमशं यद्वपुस्तत्

सुस्निग्धा मृदवः सूक्ष्मा नैकमूलाः स्थिराः कचाः ।
ललाटमुन्नतं श्लिष्ट-शङ्खमर्धेन्दुसन्निभम् ॥ ११४ ॥
कर्णौ नीचोन्नतौ पश्चान्महान्तौ श्लिष्टमांसलौ ।
नेत्रे व्यक्तासितसिते सुबद्धे घनपक्ष्मणी ॥ ११५ ॥
उन्नताग्रा महोच्छ्वासा पीनर्जुर्नासिका समा ।
ओष्ठौ रक्तावनुद्वृत्तौ महत्यौ नोल्बणे हनू ॥ ११६ ॥
महदास्यं घना दन्ताः स्निग्धाः श्लक्ष्णाः सिताः समाः ।
जिह्वा रक्ताऽयता तन्वी मांसलं चिबुकं महत् ॥ ११७ ॥
ग्रीवा ह्रस्वा घना वृत्ता स्कन्धावुन्नतपीवरौ ।
उदरं दक्षिणावर्त्तगूढनाभि समुन्नतम् ॥ ११८ ॥
तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् ।
दीर्घाऽच्छिद्राङ्गुलि महत् पाणिपादं प्रतिष्ठितम् ॥ ११९ ॥

---

सुखायुषोर्न पात्रम् । तथा यदतिरोमशं तच्च सुखायुषोर्न पात्रम् । असितादिष्वप्येवं योज्यम् । एवमीषद्रोमादियुक्तं यद्वपुर्ह्रस्वयं साङ्गं तत् सुखायुषोः पात्रम् ॥११२।११३॥

सुस्निग्धा इति । केशाः सुस्निग्धादिगुणयुक्ताः, श्रेष्ठा इत्यनुक्तमप्यर्थाद्गम्यते । तथा चैवंगुणविशिष्टैरेतैर्युक्तं वपुः सुखायुषोः पात्रं भवति । एवं ललाटादिष्वपि चिन्त्यम् । ललाटमुन्नतमूर्ध्वं गतम्, तथा श्लिष्टावुल्बणौ शङ्खौ यस्मिंस्तदेवम्, तथा अर्धेन्दुसन्निभमर्द्ध-चन्द्राकारम् । कर्णेत्यादि—कर्णौ नीचोन्नतौ अधोनीचौ ह्रस्वौ ऊर्द्ध्वमुन्नतौ । पश्चान्म-हान्तौ विस्तीर्णौ, तथा श्लिष्टौ च तौ मांसलौ च; श्लिष्टौ रम्यौ मांसलावुपचितमांसौ । नेत्रे व्यक्तौ स्फुटावसितसितौ वर्णौ ययोस्ते एवम् । कृष्णो भागः कृष्ण एव शुक्लः शुक्ल एव न वर्णान्तरव्यामिश्रे । तथा सुबद्धे सुसन्धिनी, तथा घने संहते पक्ष्मणी ययोस्ते एवम् । उन्नतेत्यादि—नासिका घ्राणमुन्नतमग्रं यस्याः सैवम्; तथा महानुच्छ्वासो यस्याः सा; तथा पीना अशिथिला, तथा ऋजुरवक्रा, तथा समा अनिम्नोन्नता । ओष्ठौ रक्तौ, तथा अनुद्वृत्तौ वहिरनिर्गतौ । हनू महत्यौ, नोल्बणे नोन्नते । हनुशब्दस्य स्त्रीत्वमत्र चिन्त्यम् । महदित्यादि—आस्यं मुखं महत् । दन्ता द्विजा घना अविरलाः, स्निग्धरुचयः, श्लक्ष्णाः कोमलस्पर्शाः, सिताः शुक्लाः, समाः समपङ्क्तयः । जिह्वा रसना रक्ता, तथा आयता दीर्घा, तथा तन्वी न स्थूला । चिबुकं मांसलं महच्च । ग्रीवेत्यादि—ग्रीवा शिरोधरा ह्रस्वा अदीर्घा, घना निविडा, वृत्ता वर्तुला च । स्कन्धावंसावुन्नतौ च तौ पीवरौ च । उदरमित्यादि—दक्षिण आवर्त्तो यस्या नाभेः सा दक्षिणावर्त्ता, गूढा निम्ना नाभिर्यस्य तत् दक्षिणावर्त्तगूढनाभि जठरम्, तथा समुन्नतं सम्यगुन्नतं श्रेष्ठत्वेनोन्नतम् । तन्वित्यादि—तनवो रक्ता उन्नता नखा यस्य तदेवम्भूतं पाणिपादं प्रतिष्ठितं प्रशस्तं भवति; तथा

गूढवंशं बृहत्पृष्ठं निगूढाः सन्धयो दृढाः ।
धीरः स्वरोऽनुनादी च वर्णः स्निग्धः स्थिरप्रभः ।
स्वभावजं स्थिरं सत्त्वमविकारि विपत्स्वपि ॥ १२० ॥
उत्तरोत्तरसुक्षेत्रं वपुर्गर्भादिनीरुजम् ।
आयामज्ञानविज्ञानैर्वर्द्धमानं शनैः शुभम् ॥ १२१ ॥
इति सर्वगुणोपेते शरीरे शरदां शतम् ।
आयुरैश्वर्यमिष्टाश्च सर्व्वे भावाः प्रतिष्ठिताः ॥ १२२ ॥
त्वग्रक्तादीनि सत्त्वान्तान्यष्टाख्यष्टौ यथोत्तरम् ।

---

स्निग्धं स्निग्धच्छायम्, तथा आताम्रञ्च तत् मांसलञ्च आताम्रमांसलम्; समन्तात् ताम्रमाताम्रम्, मांसलमुपचितमांसम् । तथा दीर्घा आयता अच्छिद्राः परस्परसंश्लिष्टा अङ्गुलयो यस्य तदेवम्, तथा महद् विस्तीर्णम् ॥ ११४—११९ ॥

गूढवंशमिति । तथा गूढोऽदृश्यो वंशो यस्य तदेवंविधं पृष्ठं प्रशस्तम्. तथा बृहद् विस्तीर्णम् । सन्धयो निगूढा अन्तर्गताः, दृढा अतुटनशीलाः । धीरोऽकम्पनः । स्वरः शब्दः अनुनादी घण्टादिवदनुरणनन्यायेन । वर्णः स्निग्धोऽरूक्षः, स्थिरा प्रभा कान्तिर्यस्य स एवं प्रशस्तः । सत्त्वं स्वभावाज्जातं स्वभावजम् अनाहार्यं प्राकृतमवाह्यहेतुजं न मद्यादिहेतुजम् । स्थिरमहार्य्यम्, अतएव विपत्स्वपि अविकारि अक्षोभि । अपिशब्दात् किमुत सम्पत्सु न स्यात् । एवंविधं सत्त्वं स्वभावजमहार्य्यञ्च ॥ १२० ॥

उत्तरेति । क्षेत्रमिव क्षेत्रं शोभनं क्षेत्रं सुक्षेत्रम् । तत्र शरीरस्य यथावत् प्रशस्तं प्रमाणलक्षणं "स्वं स्वं हस्तत्रयं सार्द्धम्" इत्यादिग्रन्थोक्तम्, तथा तदवयवानां ललाटादीनां यथावत् प्रशस्तं गुणलक्षणं "ललाटमुन्नतम्" इत्यादि ग्रन्थोक्तम्, तथा प्रशस्तं सत्त्वलक्षणं "स्वभावजं स्थिरम्" इत्यादिग्रन्थोक्तम् । उत्तरोत्तरं सुक्षेत्रं यस्मिन् वपुषि तदुत्तरोत्तरसुक्षेत्रं प्रशस्तलक्षणभूमिकं वपुः शुभमित्यत्र योज्यम् । एतदुक्तं भवति,—"यथोक्तप्रमाणं सुक्षेत्रं वपुः शुभम्; ततोऽपि यथोक्तलक्षणललाटाद्यवयवं सुक्षेत्रं वपुः शुभतरम्; ततोऽपि यथोक्तसत्त्वलक्षणगुणं सुक्षेत्रं वपुः शुभतमम्; इत्युत्तरोत्तरं सुक्षेत्रशब्दस्यार्थः । तथा गर्भादिनीरुजम्—गर्भ आदिर्येषां बालयौवनादीनां वयोऽवस्थाविशेषाणां त एवम्, गर्भादयो नीरुजा यस्य वपुषस्तद्गर्भादिनीरुजं वपुः शुभम् । आयामेत्यादि—आयामो दैर्घ्यम्, ज्ञानं लौकिको व्यवहारलेशः, विज्ञानं विशिष्टं ज्ञानं शास्त्राभ्यासादिसमुत्थितं परमार्थावबोधपर्यन्तम्, तैर्यद् वपुः शनैर्न सहसा, वर्द्धमानं वृद्धिमाप्नुवत् तच्छुभम् ॥ १२१ ॥

इतीति । इत्येवं यथोक्तेन प्रकारेण सर्वगुणोपेते युक्ते शरीरे शरदां समानां शतमायुर्जीवितम्, तथा ऐश्वर्यम्, तथा इष्टाः शुभा ये केचिद्भावास्ते तत्र तथाभूते देहे सर्वे प्रतिष्ठिता व्यवस्थिता वर्षशतानुबन्धिनः ॥ १२२ ॥

बलप्रमाणज्ञानार्थं साराण्युक्तानि देहिनाम् ॥ १२३ ॥
सारैरुपेतः सर्वैः स्यात् परं गौरवसंयुतः ।
सर्वारम्भेषु चाऽऽशावान् सहिष्णुः सन्मतिः स्थिरः ॥१२४॥

---

एवं वपुषः प्रशस्तलक्षणमुक्त्वा बलप्रमाणज्ञानार्थमाह,—त्वगिति । त्वग्रक्तादीनि सत्त्वान्तानि देहिनां साराणि यथोत्तरमग्र्याणि उत्तरोत्तरश्रेष्ठान्युक्तानि । तेन त्वग्-रक्त-मांस-मेदोऽस्थि-मज्ज-शुक्र-सत्वानीति बोध्यम् । एवं वर्षशतमायुःप्रमाणम् । अस्मिन् काले सन्ति च पुनः स्वकर्मविशेषादूनाधिकवर्षशतजीविनो मनुष्याः ; तेषां यथोक्तैः प्रकृतिविशेषैरायुःप्रमाणमुपलभ्य वयस्त्रिधा विभजेदिति । किमर्थं साराण्युक्तानि ? बलप्रमाणज्ञानार्थम् ; तथा च, देहमात्रदर्शनादेव भिषङ् मुह्येत, अयमुपचयेन महाशरीरत्वाद् बलवान् अयं कृशत्वादल्पशरीरत्वादल्पबल इति । तच्चोभयमप्यन्यथा दृष्टं गजसिंहे । सारैरित्यादि, सर्वैरष्टभिरेतैः सारैर्युक्तः परमतिशयेन गौरवेण संयुतः स्यात् । सर्वेत्यादि—सर्वारम्भेष्वशेषचिकीर्षितकार्येषु आशावान् स्यात् । अस्मात् कर्त्तव्यात् कृतादिदमिदं सम्पद्यते इत्याशाशब्दार्थः । तथा सहिष्णुः सहनशीलः, अतएव शारीरमानसैर्दुःखैर्नासावभिभूयत इति भावः । तथा सन्मतिः सुधीः, तथा स्थिरः कर्त्तव्येषु स्थिरबुद्धिः । मुनिना च लक्षणमुक्तम् । तद् यथा,—"त्वग्-रक्त-मांस-मेदोऽस्थि-मज्ज-शुक्र-सत्त्वानि । तत्र स्निग्ध-श्लक्ष्ण-मृदु-प्रसन्न-सूक्ष्माल्पा गम्भीर-सुकुमारालोमा सप्रभेव च त्वक् त्वक्साराणां । सा सारता सुख-सौभाग्यैश्वर्योपभोग-बुद्धि-विद्याऽऽरोग्य-प्रहर्षाण्यायुष्यत्वञ्च परमाचष्टे । कर्णाक्षि-मुख-जिह्वा-नासौष्ठ-पाणि-पादतल-नख-ललाट-मेहनं स्निग्धं रक्तं श्रीमद्भ्राजिष्णु रक्तसाराणां, सा सारता सुख-मुदग्रतां मेधां मनस्वित्वं सौकुमार्यमनतिबलमक्लेशसहिष्णुतां चाऽऽचष्टे । शंख-ललाट-कृकाटिकाऽक्षि-गण्डहनु-ग्रीवा स्कन्धोदर-वक्षः-कक्ष-पाणि-पाद-सन्धयः स्थिर-गुरुमांसोपचितता मांससाराणां, सा सारता क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे । वर्ण-स्वर-नेत्र-केश-लोम-नखदन्तौष्ठ-मूत्र-पुरीषेषु विशेषेण स्नेहो मेदःसाराणां, सा सारता वित्तैश्वर्यसुखोपभोगप्रदानान्यार्जवं सुकुमारोपचारतां चाऽऽचष्टे । पार्ष्णि-गुल्फ-जानूरु-जत्रु-चिबुक-शिरः-पर्वस्थूलाः-स्थूलास्थि-नख-दन्ताश्चाऽस्थिसाराः । ते महोत्साहाः क्रियावन्तः क्लेशसहाः सारस्थिरशरीरा भवन्त्यायुष्मन्तश्च । तन्वङ्गा बलवन्तश्च स्निग्ध-वर्ण-स्वराः स्थूल-दीर्घ-वृत्त-सन्धयश्च मज्जसारा. । ते दीर्घायुषो बलवन्तः श्रुतविज्ञानवित्तापत्यसम्मानभाजनाश्च सदा भवन्ति । सौम्याः सौम्यप्रेक्षिणः क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्ध-वृत्त-सार-सम-संहत-शिखरि-दशनाः प्रसन्न-स्निग्ध-वर्णस्वरा भ्राजिष्णवो महास्फिचश्च शुक्रसाराः । ते स्त्रीप्रियाः प्रियोपभोगा बलवन्तः सुखैश्वर्यारोग्यवित्तसम्मानापत्यभाजश्च भवन्ति । स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षा धीराः समरविक्रान्तयोधिनस्त्यक्तविषादाः सुव्यवस्थितगतिगम्भीर-बुद्धिचेष्टाः कल्याणाभिनिवेशिनश्च सत्त्वसाराः । तेषां स्वलक्षणैरेव गुणा व्याख्याताः" । तत्र सर्वैः सारैरुपेताः पुरुषा भवन्त्यतिबलाः । परमगौरवयुक्ताः क्लेशसहाः सर्वारम्भे-

अनुत्सेकमदैन्यञ्च सुखं दुःखञ्च सेवते ।
सत्त्ववांस्तप्यमानस्तु राजसो नव तामसः ॥ १२५ ॥
दानशील-दया-सत्य-ब्रह्मचर्य-कृतज्ञताः ।
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद् गुणः ॥ १२६ ॥
इत्यष्टाङ्गहृदये शारीरस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

ष्वात्मनि जातप्रत्ययाः कल्याणाभिनिवेशिनः स्थिरसमाहितशरीरा सुसमाहितगतयः सानुनादस्निग्धगम्भीरमहास्वराः सुखैश्वर्यवित्तोपभोगसम्मानभाजो मन्दजरसो मन्द-विकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याश्चिरजीविनश्च भवन्ति । अतो विपरीतास्त्वसाराः । संग्रहे च प्रमाणमप्युक्तम् । यथा,—स्वाङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते । तिस्रोऽन्याः क्रमेणोत्तरोत्तरं पञ्चमभागहीनास्तन्नखहीना वा । चतुरङ्गुलायताः पृथक्-प्रपद-पादतल-पार्ष्णयः षट्पञ्च-चतुरङ्गुलविस्तृताः । चतुर्दशैवाऽऽयामेन पायश्चतुर्दशैव परिणाहेन । तथा गुल्फौ जङ्घामध्यञ्च । चतुरङ्गुलोत्सेधः पादः । अष्टादशाऽऽयामा जङ्घा ऊरुश्च । चतुरङ्गुलं जानु । विंशदङ्गुलपरिणाह ऊरुः । षडाऽऽयामौ मुष्कमेढ्रौ अष्टपञ्चपरि-णाहौ । षोडशविस्तारा कटी पञ्चाशत्परिणाहा । दशाङ्गुलं वस्तिशिरः । द्वादशा-ङ्गुलमुदरम् । दशविस्तारे द्वादशायामे पार्श्वे । द्वादशोत्सेधं त्रिकम् । अष्टादशोत्सेधं पृष्ठम् । द्वादशकं स्तनान्तरम् । द्व्यङ्गुलः स्तनपर्यन्तः । चतुर्विंशत्यङ्गुलविशालं द्वादशो-त्सेधमुरः । द्व्यङ्गुलं हृदयम् । अष्टकौ स्कन्धौ कक्षे च । षड्कावंसौ । षोडशकौ प्रबाहू पञ्चदशकौ प्रपाणी । दशाङ्गुलौ पाणी । तत्रापि पञ्चाङ्गुला मध्यमा । ततोऽर्द्धाङ्गुलहीने प्रदेशिन्यनामिके । सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ । चतुरङ्गुलोत्सेधा द्वाविंशतिपरिणाहा शिरोधरा । द्वादशोत्सेधं चतुर्विंशतिपरिणाहमाननम् । पञ्चाङ्गुलमास्यम् । चतुरङ्गुलं पृथक् चिबुकोष्ठ-नासा-दृष्ट्यन्तर-कर्ण-ललाटम् । शङ्खगण्डाश्चतुरङ्गुलाः । विभागाङ्गुल-विस्तारौ नासापुटौ । द्व्यङ्गुलायतमङ्गुष्ठोदरविस्तृतं नेत्रम् । तत्र शुक्लतृतीयांशः कृष्णः । कृष्णनवमांशा मसूरदलमात्रा दृष्टिः । षडङ्गुलोत्सेधं द्वात्रिंशत्परिणाहं शिर इति । सर्वं पुनः शरीरमङ्गुलानि चतुरशीतिः । तदायामविस्तारसमं समुच्यते । तत्र यथोक्त-परिमाणमिष्टम् । तथा स्नानानुलिप्तमापादानुपूर्व्यैशुष्यद्द वरमनिष्टं हीनमधिकं यथोक्त-प्रमाणादिति ॥ १२३ । ॥

सत्त्वादिप्रकृतीनां तिसृणां कथं सुखदुःखानुभवः स्यादित्याह,—अनुत्सेकमिति । अनुत्सेकं कृत्वा अभिमानं हित्वा सत्त्ववान् पुरुषः सुखं सेवतेऽनुभवति । अदैन्यमकार्पण्यं हित्वा दुःखं सेवतेऽनुभवति । तप्यमानस्त्विति—तुर्व्यतिरेके भिन्नक्रमे । राजसः पुनः पुरुषः तप्यमानोऽहमेवाऽमुना प्रकृष्टेनाऽनन्यसाधारणेन सुखेन सुखीत्येवं सुखं सेवते । अहङ्काराक्रान्तमानसोऽहमेवेदं दुःखं सोढुं शक्त इत्येवं राजसो नरो दुःखमनुभवति । तामसः पुनः पुरुषो नैव सुखं सेवते न दुःखमत्यन्तमूढत्वात् ; नासौ सुखेन सुखी, न च दुःखेन दुःखी ; प्राप्तदृप्तिसदो यथा पुरुषः । एवं द्वन्द्वप्रकृतिरपि सुखं न सेवते नापि दुःखमत्यन्तमूढत्वात् । समसत्वादिप्रकृतिस्त्वनुत्सिक्तोऽदीनः सन् सुखदुःखे सेवते ॥१२५॥

# चतुर्थोऽध्यायः ।

अथातो मर्मविभागं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
सप्तोत्तरं मर्मशतं तेषामेकादशाऽऽदिशेत् ।
पृथक् सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि ।
पृष्ठे चतुर्दशोर्ध्वं तु जत्रोस्त्रिंशच्च सप्त च ॥ २ ॥
मध्ये पादतलस्याहुरभितो मध्यमाङ्गुलिम् ।

---

इदानीं प्रधानफलदायि यत् प्रशस्तं लक्षणं वपुषः तद्दर्शयितुमाह,—दानेति। दानं धनादित्यागः, तच्छीलयत्यभ्यस्यति दानशीलः ? शीलिकामीत्यादिना णः। दया दीनेष्वभ्युपपत्तिः; मैत्री सर्वसत्त्वानामात्मभावनम्। न केवलं पूर्वोक्तं स्वं स्वं हस्तमित्यादि वर्द्धमानं शनैरित्येतत् पर्यन्तं यल्लक्षणं तच्छरीरस्याऽऽयुर्वृद्ध्यादिहेतुः यावदयं दानशीलादिगुणो मैत्र्यवसानः पुण्यायुर्वृद्धिकृद्गुणः। दानादयश्च यथासम्भवं केचित् पुण्यकृतः केचिदायुर्वृद्धिकृतः केचिदुभयकृतश्च। अन्येभ्यश्च महापुरुषलक्षणेभ्योऽस्यैव गुणस्य ज्यायस्त्वं प्रतिपादयता शास्त्रकृताऽध्यायावसाने ग्रन्थस्यास्य निर्देशः कृत इति ॥ १२६ ॥

इति श्रीमृगाङ्कदत्तविरचितायामष्टाङ्गहृदयटीकायां शारीरेषु
अङ्गविभागो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

अङ्गविभागादनन्तरं मर्मविभागाख्यः शारीरः प्रक्रम्यते, मर्मणामङ्गाश्रितत्वात्। यतो मर्माण्यङ्गप्रत्यङ्गसमाश्रितानि, अतस्तत्रैव व्याख्यातुं युक्तानि। बहुवक्तव्यत्वात् पृथगुच्यन्ते। तस्मादस्यैवाध्यायस्य प्रारम्भो युक्त इत्याह,—अथात इति। म्रियतेऽस्मिन्नङ्गे उपहते इति मर्म; मर्मणां विभागो मर्मविभागः, सोऽस्मिन्नध्यायेऽस्तीति मर्मविभागः। अर्श आदित्वादच्। शारीरस्थानप्रतिबद्धत्वाच्च शारीरः। शेषं पूर्ववत् ॥ १ ॥

सुखग्रहणाद्यर्थञ्च पूर्वं मर्म्मणां सङ्ख्यां वक्तुमाह,—सप्तोत्तरमिति। सप्त उत्तराण्यधिकानि यस्मिन् शते तदेवम्। तेषामिति—तेषां मर्मणां मध्ये पृथक् प्रत्येकं कृत्वा सक्थ्नोर्द्वयोर्बाह्वोश्च द्वयोरेकादशाऽऽदिशेत्। एवं चतुश्चत्वारिंशन्मर्माणि शाखासु विद्यात्। कोष्ठे जठरे त्रीणि मर्माणि। उरसि वक्षसि नवसङ्ख्यानि। पृष्ठे चतुर्दश। जत्रोरूर्ध्वं जत्रुण उपरिष्टात् त्रिंशत् तथा सप्त। एवं सप्तत्रिंशदित्यर्थः। जत्रोरिति पुंस्त्वमत्र चिन्त्यम्। अथवा अनित्यमागमशासनमित्यत्र नुम् न कृतः ॥ २ ॥

इदानीमेषां मर्म्मणामापादतलान्मस्तकं यावद् विशिष्टदेशसमाश्रयाणां विशिष्टसंज्ञा-

तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता ॥ ३ ॥
अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ।
तस्योर्ध्वं द्व्यङ्गुले कूर्चः पादभ्रमणकम्पकृत् ॥ ४ ॥
गुल्फसन्धेरधः कूर्च-शिरः शोफरुजाकरम् ।
जङ्घाचरणयोः सन्धौ गुल्फो रुक्स्तम्भमान्द्यकृत् ।
जङ्घान्तरे त्विन्द्रबस्तिर्मारयत्यसृजः क्षयात् ॥ ५ ॥
जङ्घोर्वोः सङ्गमे जानु-खञ्जता तत्र जीवतः ।
जानुनस्त्र्यङ्गुलादूर्ध्वमाण्यूरुस्तम्भशोफकृत् ॥ ६ ॥
उर्व्यूरुमध्ये तद्वेधात् सक्थिशोषोऽस्रसंक्षयात् ।
ऊरुमूले लोहिताख्यं हन्ति पक्षमसृक्क्षयात् ।
मुष्कवङ्क्षणयोर्मध्ये विटपं षण्डताकरम् ॥ ७ ॥

---

मध्यमाङ्गुलिमभितो मध्यमाङ्गुलेः पादसम्बन्धिन्या आभिमुख्येन यत् पादतलं पादपृष्ठं तत्र तलहृन्नाम मर्माऽऽहुः पूर्वाचार्या इति शेषः । मध्यमाङ्गुलिमित्यभितःशब्दयोगे द्वितीया । तत्र तस्मिन् विद्धस्याहतस्य पञ्चता मरणं भवति । कया ? रुजया वेदनया । अङ्गुष्ठेति—अङ्गुष्ठश्चाङ्गुलिश्च तयोर्मध्यस्थमङ्गुष्ठाङ्गुलिमध्यस्थितं क्षिप्रं नाम मर्म । तद् विद्धमाक्षेपमारणमाक्षेपकाख्येन वातव्याधिना मारयति । तस्योर्ध्वं तस्य क्षिप्राख्यस्य मर्मण उपरिष्टाद् द्व्यङ्गुले द्व्यङ्गुलं विमुच्य कूर्चो नाम मर्म, तद् विद्धं पादस्य भ्रमणं कम्पञ्च करोति ॥ ३ । ४ ॥

गुल्फेति । गुल्फसन्धेरधः कूर्चशिरो नाम मर्म ; तद्विद्धं शोफरुजाकरम् । जङ्घाचरणयोः सन्धौ सन्धिप्रदेशे गुल्फो नाम मर्म ; तद्विद्धं रुक्च स्तम्भञ्च मान्द्यञ्च तानि करोति । स्तम्भः स्तब्धत्वमिवाऽङ्गस्य । जङ्घान्तरे जङ्घामध्ये पार्ष्णिप्रभृतिद्वादशभिरङ्गुलैरिन्द्रबस्तिर्नाम मर्म, तद्विद्धं रक्तक्षयान्मारयति नाऽन्यथा । तस्माद्रक्तस्तम्भने यतितव्यमिति प्रतिपादनार्थमसृक्क्षयादिति हेतुरुपन्यस्तः । एष एव न्यायोऽन्यत्राप्यनुसर्त्तव्यः ; तेन यत्र यद्धेतुकं मारणादिकं मर्मव्यधे कथितं तत्र तच्चिकित्सायां यतितव्यमिति ॥ ५ ॥

जङ्घोर्वोरिति । जङ्घोर्वोः सङ्गमे सन्धौ जानु नाम मर्म, तत्र जानुनि विद्धे पुरुषो म्रियत एव । अथ जीवति ततोऽस्य जीवतः पुंसः खञ्जता स्यादित्यर्थात् प्रायेण मरणं पुरुषस्येति बोधयति । जानुनो जानुसन्धेस्त्र्यङ्गुलादूर्ध्वमाणी नाम मर्म ; तद् विद्धमूरुस्तम्भशोफकरम् । उर्व्यीत्यादि—उर्वी नाम मर्म ऊरुमध्ये । तद्वेधात्तदभिघातात् सक्थिशोष ऊरुकार्श्यञ्च । सक्थिशोषोऽस्रसंक्षयात् स्यात्, नान्यथा व्यधे सत्यपि । ऊरुमूले उर्व्या ऊर्ध्वं वङ्क्षणसन्धेरधस्तात् लोहिताख्यं नाम मर्म ; तद् विद्धं पक्षं हन्त्यसृक्क्षयात्, नान्यथा व्यधे सत्यपि । मुष्कवङ्क्षणयोर्मध्ये विटपं नाम मर्म ; तद् विद्धं पुंसः षण्डताकरं निरपत्यताकरम् ॥ ६ । ७ ॥

इति सक्थ्नोस्तथा बाह्वोर्मणिबन्धोऽत्र गुल्फवत्।
कूर्परं जानुवत् कौर्ण्यं तयोर्विटपवत् पुनः।
कक्षाक्षमध्ये कक्षाधृक् कुणित्वं तत्र जायते ॥ ८ ॥
स्थूलान्त्रबद्धः सद्योघ्नो विड्वातवमनो गुदः ॥ ९ ॥
मूत्राशयो धनुर्वक्रो बस्तिरल्पास्रमांसगः।
एकाधोवदनो मध्ये कट्याः सद्यो निहन्त्यसून् ॥ १० ॥
ऋतेऽश्मरीव्रणाद् विद्धस्तत्राप्युभयतश्च सः।
मूत्रस्राव्येकतो भिन्ने व्रणो रोहेच्च यत्नतः ॥ ११ ॥
देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः।
नाभिः सोऽपि हि सद्योघ्नो द्वारमामाशयस्य च।

---

इतीति। इत्येवमनेन प्रकारेण सक्थ्नोर्द्वयोः प्रत्येकमेकादश मर्माणि भवन्ति, तथा तेनैव प्रकारेण बाह्वोस्तलहृदादीन्येकादश मर्माणि भवन्ति। अथ किञ्चिन्मात्रमत्र विशेषमाह,—मणीत्यादि। अत्र बाहुमर्मसु गुल्फेन तुल्यो मणिबन्धः संज्ञामात्रभेदः। जानुतुल्यं कूर्परम्। तयोर्मणिबन्धकूर्पराख्ययोर्बाहुमर्मणोर्विद्धयोः कौण्यं पाणि-पाण्यङ्गुलिकुब्जत्वम्। विटपेत्यादि—कक्षा च अक्षश्च कक्षाक्षौ तयोर्मध्ये विटपेन तुल्यं कक्षाधृक्संज्ञं मर्म; तत्र विद्धे सति कुणित्वं बाहुपाण्यङ्गुलिकुब्जता जायते ॥ ८ ॥

इति शाखासु मर्माणि चतुश्चत्वारिंशदुक्त्वाऽन्तराधौ कथयति,—स्थूलान्त्रबद्ध इति। स्थूलान्त्र-सूक्ष्मान्त्र-भेदाद् द्विधाऽन्त्रं। तत्र स्थूलान्त्रबद्धो गुदो नाम मर्मविशेषः; स च विड्वातौ वातवर्चसी वमत्युद्गिरतीति विड्वातवमनः।. बाहुलकात् कर्तरि ल्युट्। स गुदः सद्यस्तत्क्षणादेव हन्ति। सद्योघ्न इति—अमनुष्यकर्तृके चेति ठक्। गुदशब्द-स्यात्र पुंस्त्वं चिन्त्यं, न चार्द्धर्चादिष्वयमस्ति ॥ ९ ॥

अधुना बस्त्याख्यमाह,—मूत्राशय इति। मूत्रस्याशय आधारो मूत्राशयः, यत्र मूत्रं तिष्ठति स धनुर्वक्रश्चापवत् कुटिलः। तेनास्य संस्थानमुक्तम्। स च बस्तिर्नाम मर्म-विशेषः। अस्रञ्च मांसञ्च अस्रमांसे, अल्पे अस्रमांसे गच्छति। अन्येभ्योऽपि दृश्यते इति डः। तत्रस्थो न बहुरक्तमांसप्रदेशस्थ इत्यर्थः। तथा एकमधोवदनं यस्याऽसावेकाधो-वदनः। कट्या मध्य इति स्थाननिर्देशः, कट्या मध्यप्रदेशेऽसाववतिष्ठते। ऋतेऽश्मरी-व्रणात् तं व्रणं वर्जयित्वा। तत्राऽप्यश्मरीव्रण उभयत उभयपार्श्वतश्च स विद्धस्तदाऽसौ सद्योऽसून् निहन्ति। तस्मिन् बस्तावेकपार्श्वतो भिन्ने विद्धे सति मूत्रस्रावी व्रणः स्यात्। स च यत्नत आदरेणोपक्रान्तो रोहति नान्यथा। देहेत्यादि। आमञ्च पक्वञ्च आमपक्वे, स्थानञ्च स्थानञ्च स्थाने, आमपक्वयोः स्थाने आमपक्वस्थाने, देहस्यामपक्वस्थाने च देहा-मपक्वस्थानानि तेषां मध्ये। तदेकत्वात् देहस्य देहमध्यदेशे, तयोस्तयोरामपक्वयोर्मध्ये-ऽन्तराले नाभिर्नाम मर्म सर्वासां सिराणां सकलशरीरगामिनामाश्रय आधारः। सोऽपि

सत्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम् ॥ १२ ॥
स्तनरोहितमूलाख्ये द्व्यङ्गुले स्तनयोर्वदेत् ।
ऊर्ध्वाधोऽसृक्कफाऽऽपूर्ण-कोष्ठो नश्येत् तयोः क्रमात् ॥१३॥
अपस्तम्भावुरःपार्श्वे नाड्यावनिलवाहिनी ।
रक्तेन पूर्णकोष्ठोऽत्र श्वासात् कासाच्च नश्यति ॥ १४ ॥
पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः ।
अधोंऽसकूटयोर्विद्यादपलापाख्यमर्मणी ।
तयोः कोष्ठेऽसृजा पूर्णे नश्येद् यातेन पूयताम् ॥ १५ ॥
पार्श्वयोः पृष्ठवंशस्य श्रोणीकर्णौ प्रतिष्ठितौ ।
वंशाश्रिते स्फिचोरूर्ध्वं कटीक-तरुणे स्मृते ।

---

हि सद्योघ्नः । अपिः समुच्चये । हिर्यस्मादर्थे । न केवलं गुदबस्ती सद्योघ्नौ यावन्नाभिरपि विद्धः सद्योघ्नः । नाभिशब्दस्य पुंस्त्वं चिन्त्यम् । द्वारमिति । हृदयं नाम यन्मर्म तदपि सद्योघ्नम् । तच्चामाशयस्य द्वारं मुखम्; तेन हि द्वारेणान्नपानमामाशये प्रविशति । तच्च सत्वादीनां सत्वरजस्तमसां, तथा विज्ञानस्येन्द्रियानां चार्थपञ्चकस्य, तथा आत्मनश्चेतसो धाम स्थानम् । तच्च स्तनोरःकोष्ठमध्यगम् । स्तनौ च उरश्च कोष्ठश्च स्तनोरःकोष्ठं तस्य मध्यं तत्र गच्छति स्थितिं बध्नाति । कोष्ठवक्षसोः स्तनयोश्च मध्ये स्थितमित्यर्थः ॥ १०—१२ ॥

स्तनरोहितेति । स्तनरोहितञ्च मूलञ्च प्रक्रतत्वात् स्तनस्यैव, ते स्तनरोहितस्तनमूले आख्ये संज्ञे ययोस्ते स्तनरोहितमूलाख्ये द्वे मर्म्मणी वदेत् । क्व प्रदेशे ते ? स्तनयोः । क्रमादिति वक्ष्यमाणमिहापि सम्बध्यते; तेन स्तनयोरूर्ध्वं द्व्यङ्गुले स्तनरोहिते, स्तनयोरधो द्व्यङ्गुले स्तनमूले । तयोः स्तनरोहितस्तनमूलाख्ययोर्मर्मणोर्विद्धयोः पुरुषोऽसृकफाऽऽपूर्णकोष्ठः क्रमाद् यथाक्रमं नश्येत् । तेन स्तनरोहिते विद्धे सति असृजा पूर्णकोष्ठो नरो नश्येत् । स्तनमूले विद्धे कफेन पूर्णकोष्ठो नश्येत् ॥ १३ ॥

अपस्तम्भाविति । उरसः पार्श्वे द्वे नाड्यावपस्तम्भाख्ये मर्मणी अनिलवाहिनी वातवहे । अत्र मर्म्मद्वये विद्धे रक्तेन पूर्णकोष्ठः श्वासकासाभ्यां विपद्यते ॥ १४ ॥

पृष्ठेति । पृष्ठवंशस्य तथा उरसः अनयोर्मध्येऽन्तराले, तयोरेव च पृष्ठोरसोर्ये पार्श्वे तयोरुपरिभागयोरंसकूटयोरधः अपलापाख्ये द्वे मर्म्मणी विद्यात् । तयोर्विद्धयोः रक्तेन कोष्ठे पूर्णे, तेन पूयतां यातेन गतेन लोहितेन नश्येत् । यावद्रक्तं पूयतां न यातं तावज्जीवति, न तु रक्तकोष्ठपूरणमात्रादेव म्रियत इति भावः ॥ १५ ॥

इदानीं पृष्ठे वक्ति,—पार्श्वयोरिति । पृष्ठवंशस्य पार्श्वयोरुभयतः श्रोणीकर्णौ प्रतिष्ठिते । वंशाश्रिते वंशप्रतिबद्धे स्फिचोरूर्ध्वमुपरिष्टात् द्वे अस्थिनी कटीक-तरुणी

तत्र रक्तक्षयात् पाण्डुर्हीनरूपो विनश्यति ॥ १६ ॥
पृष्ठवंशं ह्युभयतो यौ सन्धी कटिपार्श्वयोः ।
जघनस्य वहिर्भागे मर्मणी तौ कुकुन्दरौ ।
चेष्टाहानिरधःकाये स्पर्शाज्ञानञ्च तद्व्यधात् ॥ १७ ॥
पार्श्वान्तरनिबद्धौ यावुपरि श्रोणिकर्णयोः ।
आशयच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ ।
अधःशरीरे शोफोऽत्र दौर्बल्यं मरणं ततः ॥ १८ ॥
पार्श्वान्तरे निबद्धौ च मध्ये जघनपार्श्वयोः ।
तिर्यगूर्द्ध्वञ्च निर्दिष्टौ पार्श्वसन्धौ तयोर्व्यधात् ।
रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवः ॥ १९ ॥
स्तनमूलार्ज्जवे भागे पृष्ठवंशाश्रये सिरे ।
वृहत्यौ तत्र विद्धस्य मरणं रक्तसंच्चयात् ॥ २० ॥

---

एतत्संज्ञे द्वे मर्मणी स्मृते उक्ते । तत्र तस्मिन् मर्मद्वये विद्धे रक्तचयात् पाण्डुर्हीनरूपो विगतकान्तिः सन् नरो विनश्यति ॥ १६ ॥

पृष्ठवंशमिति । पृष्ठवंशस्योभयोः कटिपार्श्वयोर्यौ सन्धी जघनस्य बहिर्भागेनाऽन्तस्थौ कुकुन्दरौ निम्नाकारौ सन्धिमर्मणौ ; तद्व्यधात् तयोर्व्यधादधःशरीरे चेष्टाहानिः, गमनाकुञ्चनप्रसारणादावधःकायोऽशक्तः सम्पद्यते इत्यर्थः, तथा स्पर्शाज्ञानं स्पर्शासम्वित्तिर्भवति । पृष्ठवंशमुभयत इत्युभसर्वतसोरित्यादिना द्वितीया ॥ १७ ॥

पार्श्वेति । पार्श्वान्तरे पार्श्वमध्ये निबद्धौ प्रतिबद्धौ लग्नौ पार्श्वान्तरनिबद्धौ यौ, तथा श्रोणिकर्णयोरुपर्युपरिष्टात् मूत्रादीनां ये आशया आधारा वस्त्यादयस्तेषां छादनौ नितम्बौ नितम्बसंज्ञौ मर्म्मविशेषौ । तौ च तरुणास्थिगौ तरुणसंज्ञेऽस्थ्नि स्थिताविर्त्यथः । अत्रास्मिन् मर्म्मद्वये विद्धे सति अधःकाये शोफो भवति, तथा दौर्बल्यं प्रक्रतत्वादधःशरीर एव । दौर्बल्यमल्पबलत्वं स्वव्यापाराचमत्वम् । ततो दौर्बल्यादनन्तरं मरणं भवति ॥१८॥

पार्श्वेति । पार्श्वयोरन्तरं मध्यं तत्र निबद्धौ संश्लिष्टौ सन्धौ मर्म्मविशेषौ पार्श्वसन्धौ इति निर्द्दिष्टौ । ततश्चैकस्मिन् पार्श्वान्तर एकः सन्धिः, द्वितीयस्मिन् पार्श्वान्तरे द्वितीयः सन्धिः । क्व स्थितौ कथम् ? जघनस्य पार्श्वे जघनपार्श्वे । जघनपार्श्वयोर्मध्ये तिर्यगूर्ध्वञ्च । एवमेकस्मिन् जघनपार्श्वमध्य एकः सन्धिः, द्वितीयस्मिन् द्वितीयः स्थित इति । तयोर्व्यधात् पुंसो रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवोऽपरशरीरोत्पत्तिर्मरणमित्यर्थः ॥ १९ ॥

स्तनेति । स्तनयोर्मूलं स्तनमूलं, तस्यार्जवे भागे पृष्ठवंशाश्रये सिरे पृष्ठवंशस्योभयपार्श्वप्रतिबद्धे सिरे वृहत्याविति तत्संज्ञे मर्म्मणी ; तत्र मर्म्मद्वये विद्धस्य मरणं भवति रक्तसंचयात् नान्यथा ॥ २० ॥

बाहुमूलाभिसम्बन्धे पृष्ठवंशस्य पार्श्वयोः ।
अंसयोः फलके बाहु-स्वापशोषौ तयोर्व्यधात् ॥ २१ ॥
ग्रीवामुभयतः स्नाव्नी ग्रीवाबाहुशिरोऽन्तरे ।
स्कन्धांसपीठसम्बन्धावंसौ बाहुक्रियाहरौ ॥ २२ ॥
कण्ठनाड़ीमुभयतः सिरा हनुसमाश्रिताः ।
चतस्रस्तासु नीले द्वे मन्ये द्वे मर्म्मणी स्मृते ।
स्वरप्रणाशवैकृत्यं रसाज्ञानञ्च तद्व्यधे ॥ २३ ॥
कण्ठनाड़ीमुभयतो जिह्वानासागताः सिराः ।
पृथक् चतस्रस्ताः सद्यो घ्नन्त्यसून् मातृकाह्वयाः ॥२४॥
कृकाटिके शिरोग्रीवा-सन्धौ तत्र चलं शिरः ॥ २५ ॥
अधस्तात् कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ २६ ॥

---

बाहुमूलेति । बाह्वोर्मूले यत्र बाहू प्रतिष्ठितौ । मूले हि प्रतिष्ठा, वृक्षमूलवत् । पृष्ठवंशस्य पार्श्वद्वये बाहुमूलयोराभिमुख्येन सम्बद्धे संश्लिष्टे । के ते ? अंसयोः फलके । असमासनिर्देशश्छन्दोऽनुरोधात् । फलकस्य च नपुंसकत्वं लोकाश्रयत्वाल्लिङ्गस्येति । अंसफलकाख्ये द्वे मर्म्मणी ; तयोर्व्यधाद्द बाहुस्वापशोषौ भवतः । स्वाप इव स्वापो यथा सुप्तस्य निश्चेतनमङ्गं भवति, तथा बाहू अंसफलके विद्धे भवतः ॥ २१ ॥

ग्रीवामिति । ग्रीवाया उभयोः पार्श्वयोः स्नाव्नी द्वे अंसावुच्येते । क्व स्थितौ ? ग्रीवाबाहुशिरोऽन्तरे । ग्रीवायां तथा बाह्वोः शिरसश्च मध्ये तेषामन्तरालस्थितौ । प्रयोजनमाह,—स्कन्धेत्यादि । अंसयोः पीठे इव पीठे प्रतिष्ठाने, यत्रांसौ तिष्ठतः । स्कन्धौ च अंसपीठे च तेषां सम्बन्धः प्रयोजनं ययोस्तावेवांसौ विद्धौ बाह्वोः क्रिया आकुञ्चनप्रसारणादिका तां हरतस्तौ बाहुक्रियाहरौ ॥ २२ ॥

कण्ठेति । कण्ठनाड्या उभयपार्श्वयोः सिराः, याश्चतस्रो हन्वोः समाश्रिताः तासु मध्ये द्वे सिरे नीले नाम द्वे मर्म्मणी मन्ये नाम द्वे मर्म्मणी स्मृते तन्त्रकृद्भिरिति शेषः । तासां व्यधस्तद्व्यधस्तस्मिन् व्यधे स्वरप्रणाशादयो जायन्ते । स्वरस्य प्रणाशः स्वरप्रणाशः स्वरहानिः, अथवा वैकृत्यम् । तच्च प्रकृतत्वात् स्वरस्यैव, स्वरभावान्यथात्वमित्यर्थः । रसाज्ञानं रसानवबोधः ॥ २३ ॥

कण्ठनाड़ीमिति । कण्ठनाड्या उभयपार्श्वयोः सिरा जिह्वागताः, तथा नासागताः पृथक् प्रत्येकमेकस्मिन् पार्श्वे चतस्रः, द्वितीये पार्श्वे चतस्रः ; ता मातृकाह्वया मातृकासंज्ञा विद्धाः सद्योऽसून् घ्नन्ति । एतानि मातृकाख्यानि सिरामर्म्माणि ॥ २४ ॥

कृकाटिके इति । शिरश्च ग्रीवा च तयोः सन्धाने यौ सन्धी पार्श्वद्वये कृकाटिकाख्ये ते द्वे मर्म्मणी तत्र तस्मिन् मर्म्मद्वये विद्धे चलं सकम्पं शिरो भवति ॥ २५ ॥

फणावुभयतो घ्राण-मार्गश्रोत्रपथानुगौ ।
अन्तर्गलस्थितौ वेधाद् गन्धविज्ञानहारिणौ ॥ २७ ॥
नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवोः पुच्छान्तयोरधः ।
तथोपरि भ्रुवोर्निम्नावावर्त्तावान्ध्यमेषु तु ॥ २८ ॥
अनुकर्णं ललाटान्ते शङ्खौ सद्योविनाशनौ ॥ २९ ॥
केशान्ते शङ्खयोरूर्द्ध्वमुत्क्षेपौ स्थपनी पुनः ।
भ्रुवोर्मध्ये त्रयेऽप्यत्र शल्ये जीवेदनुद्धृते ।
स्वयं वा पतिते पाकात् सद्यो नश्यति तूद्धृते ॥ ३० ॥
जिह्वाऽक्षि-नासिका-श्रोत्र-ख-चतुष्टयसङ्गमे ।
तालुन्यास्यानि चत्वारि स्रोतसां तेषु मर्मसु ।
विद्धः शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ॥ ३१ ॥
कपाले सन्धयः पञ्च सीमन्तास्तिर्यगूर्द्ध्वगाः ।

---

अधस्तादिति । अधस्तात् कर्णयोः कर्णपृष्ठयोरधो निम्ने नोन्नते विधुराख्ये द्वे मर्म्मणी ; ते च विद्धे सती श्रुतिं शब्दश्रवणं हरतः श्रुतिहारिणी ॥ २६ ॥

फणाविति । फणौ नाम मर्म्मविशेषौ घ्राणमार्गस्योभयोः श्रोत्रपथानुगौ श्रोत्रमार्गप्राप्तौ, अन्तर्गलस्थितौ गलाभ्यन्तरे स्थितौ, फणाविव संस्थानं रूपमनयोः फणाविति नाम । तौ वेधाद्गन्धविज्ञानं गन्धोपलब्धिः तद्धरतस्तौ गन्धविज्ञानहारिणौ ॥ २७ ॥

नेत्रयोरिति । अपाङ्गौ नाम मर्म्मविशेषौ प्रसिद्धाविव । तथा तेनैवापाङ्गोद्दिष्टेन न्यायेन भ्रुवोः पुच्छान्तयोरुपरि निम्नावावर्त्तसंज्ञौ । एषु तु अपाङ्गावर्त्ताख्येषु चतुर्षु विद्धस्य नरस्यान्ध्यं भवति ॥ २८ ॥

अनुकर्णमिति । अत्रापि भ्रुवोः पुच्छान्तयोरुपरि ललाटावसानेऽनुकर्णं कर्णसमीपे शङ्खौ मर्म्मविशेषौ ; तौ विद्धौ पुरुषस्य सद्योविनाशनौ भवतः ॥ २९ ॥

केशान्त इति । केशावसाने शङ्खयोरूर्द्ध्वमुत्क्षेपौ मर्म्मणी । स्थपनी पुनर्मर्म्म भ्रुवोर्मध्ये । त्रयेऽप्यत्रास्मिन् मर्म्मत्रये द्वावुत्क्षेपावेका स्थपनी । एवम्भूते विद्धे पुरुषोऽनुद्धृते शल्ये जीवेत् । कालान्तरेण पाकात् पाकेन हेतुना स्वयं वा पतिते शल्ये सति न तूद्धरणहेतुना जीवेत् । पुरुषः सद्यः इत्यादि । उद्धृते तु शल्ये सद्य एव नरो नश्यति वायुकोपादिति भावः ॥ ३० ॥

जिह्वेति । जिह्वा च अक्षिणी च नासिका च श्रोत्रे च तद्देवं, तस्य खानि तेषां चतुष्टयं चत्वारि स्रोतांसि तस्य सङ्गमः सन्निपातस्तस्मिंस्तालुनि, यत्र जिह्वादीनां तर्पणानि स्रोतांसि सन्निपत्यावतिष्ठन्ति जिह्वादिस्रोतसां चत्वार्यास्यानि शृङ्गाटकाख्यानि ; तेषु मर्म्मसु विद्धः पुरुषः सद्यस्त्यजति जीवितम् विद्धमात्र एव प्राणैर्वियुज्यते ॥ ३१ ॥

भ्रमोन्मादतमोनाशैस्तेषु विद्धेषु नश्यति ॥ ३२ ॥
आन्तरो मस्तकस्योर्ध्वं सिरासन्धिसमागमः।
रोमावर्त्तोऽधिपो नाम मर्म्म सद्यो हरत्यसून् ॥ ३३ ॥
विषमं स्पन्दनं यत्र पीड़िते रुक् च मर्म्म तत् ॥ ३४ ॥
मांसास्थि-स्नायु-धमनी-सिरा-सन्धि-समागमः ॥
स मर्म्मेति च तेनाऽत्र सुतरां जीवितं स्थितम् ॥ ३५ ॥
बाहुल्येन तु निर्द्देशः षोढ़ैवं मर्म्मकल्पना।

---

कपाल इति। शिरःसम्बन्धिनः पञ्च सन्धयः, पञ्चानां कपालखण्डानां संश्लेषा ये शिरस्यवतिष्ठन्ते तिर्य्यगूर्द्ध्वगास्त एव सीमन्ताख्या मर्म्मविशेषाः; तेषु सीमन्ताख्येषु विद्धेषु भ्रमेण, तथा उन्मादेन, तथा मनोनाशेन विस्मृत्या नश्यति ॥ ३१ ॥

आन्तर इति। मस्तकस्याभ्यन्तरतो यः स्थितः, तथोर्द्ध्व प्रकृतत्वात् मस्तकस्योपरि सिरासन्धिसमागमः सिरासन्धीनां सन्निपातो रोमावर्त्तलक्षणः सोऽधिपो नाम मर्म्मविशेषः। मर्म्मणामधिपो यथार्थनामा, तदायत्तानि हि सर्वाणि मर्म्माणीत्यर्थः। सोऽधिपो विद्धो नरस्य सद्योऽसून् हरति पुरुषं मारयतीत्यर्थः ॥ ३३ ॥

इति सप्तोत्तरस्य मर्म्मशतस्य लक्षणान्युक्त्वा सामान्येन यन्मर्म्मलक्षणं तदाख्यातुमाह— विषममिति। यत्र यस्मिन् देहदेशे विषमं स्पन्दनं स्फुरणं तन्मर्म्म। यत्र च देहदेशे पीड़िते सति रुक् च विषमा भवति तच्च मर्म्म। अत्रापि विषममिति सम्बध्यते। विषमञ्च विषमा च विषमम्। नपुंसकमनपुंसकेनैकवच्चेति नपुंसकशेषः। तदेवं मर्म्मलक्षणं द्विधा मन्तव्यम्। कस्यचिन्मर्म्मणः सिराधमन्यादिकस्य विषमं स्पन्दनं प्रायो लक्षणम्। मांसास्थिजातीयस्य मर्म्मणः पीड़नात् प्रायः पीड़ोत्पत्तिर्लक्षणमिति। संग्रहे च मर्म्मविद्धस्य लक्षणमुक्तम्। यथा,—"देहप्रसुप्तिर्गुरुता सम्मोहः शीतकामता। स्वेदो मूर्च्छा वमिः श्वासो मर्म्मविद्धस्य लक्षणम्" इति। मरणकारित्वात् मर्म्म, मरणसदृशदुःखदायित्वाद्वा ॥ ३४ ॥

इदानीं मर्म्मणां मांसादिप्रभेदं लक्षणं षट्प्रकारमाह,—मांसेति। मांसादीनां सन्ध्यन्तानां सजात्यपेक्षो यः समागमः सन्निपातः स मर्म्माख्यो मर्म्मेति तस्यैव नाम। तदेवं मांसपेशीसमागमो मांसमर्म्म, अस्थ्नां समागमोऽस्थिमर्म्म, स्नायूनां समागमः स्नायुमर्म्म, धमनीनां समागमो धमनीमर्म्म, सिराणां समागमः सिरामर्म्म, सन्धीनां समागमः सन्धिमर्म्मेति। एष मांसादीनां यः समागमः स एव मर्म्मेत्युच्यते; तेन हेतुना अत्र सुतरां जीवितं स्थितं प्राणा व्यवस्थिताः ॥ ३५ ॥

ननु यदि मांसादीनां समागमो मर्म्मेत्यभिधीयते, तदानीमनेकसंख्यकानि मर्म्माणि शरीरे सम्भाव्येरन्, मांसपेश्यादिभावानामनेकसङ्ख्याश्रयत्वात्। तथा च, मांसपेशीशतानि पञ्च पुंसामुक्तानि, स्त्रीणान्तु विंशत्यधिकानि; एवमस्थ्यादीन्यनेकान्युक्तानि। ततश्च मर्म्मणामसंख्येयत्वं प्राप्नोति। एवञ्च सप्तोत्तरं मर्म्मशतमिति विरुध्यत इत्याह,—

प्राणायतनसामान्यादैक्यं वा मर्मणां मतम् ॥ ३६ ॥
मांसजानि दशेन्द्राख्य-तलहृत्-स्तनरोहिताः ॥ ३७ ॥
शङ्खौ कटीक-तरुणे नितम्बावंसयोः फले।
अस्थ्न्यष्टौ स्नायुमर्माणि त्रयोविंशतिराणयः।
कूर्च-कूर्चशिरोऽपाङ्ग-क्षिप्रोत्क्षेपांऽस-बस्तयः ॥ ३८ ॥
गुदापस्तम्भ-विधुर-शृङ्गाटानि नवाऽऽदिशेत्।
मर्माणि धमनीस्थानि सप्तत्रिंशत् सिराश्रयाः ॥ ३९ ॥

---

बाहुल्येनेति। सप्तोत्तरमेव मर्म्मणां शतमित्यनैकान्तिकं। किं तर्हि पूर्वोक्तेन न्यायेन बहूनि मर्म्माणि? सप्तोत्तरं मर्म्मशतमित्ययन्तु यो निर्देशः स बाहुल्येन भूयसा येषां मर्म्मणां मर्म्मत्वेन प्रसिद्धिस्तद्विषय एव। एवमनेन प्रकारेण मांसास्थ्यादीनां समागमो मर्म्मेति मर्म्मणां षोढ़ा षड़्विधा कल्पना भवति। कल्पनाशब्देनैतत् प्रतिपादयति, तदेवं मनुष्यस्य प्रसिद्धितो जीवितधामत्वेन मर्म्मणां कल्पना निरूपणा। प्राणेत्यादि। अथवा न मर्मणां षोढ़ा कल्पना। किं तर्हि? प्राणायतनसामान्या-ज्जीवितस्याधिष्ठानमित्येवं लक्षणात् ऐक्यमेकत्वं मर्मणां मतं न षट्त्वम्। एवमेकेव मर्म्मकल्पना। एवं संक्षेपविस्तारकौशलं मर्म्मसु दर्शितम् ॥ ३६ ॥

मांसादीनां सन्ध्यन्तानां यथास्वं प्रतिनियतानि मर्माणि संख्ययाऽभिधातुमाह,— मांसजानीति। जङ्घयोरिन्द्राख्ये द्वे मर्म्मणी, बाह्वोर्द्वे। एवं तलहृदाख्यानि चत्वारि, तानि पादयोर्द्वे हस्तयोर्द्वे इति। स्तनरोहिते द्वे प्रत्येकं स्तने एकैकम्। एवं दश मांसजानि ॥ ३७ ॥

शङ्खाविति। अस्थ्नि अष्टौ मर्माणि। शङ्खौ द्वे मर्मणी; कटीक-तरुणे द्वे; नितम्बौ द्वे; अंसयोः फलके द्वे; इत्येवमष्टौ मर्माणि। स्नाय्विति। स्नायुमर्माणि त्रयोविंशतिः। कथम्? आणयश्चत्वारि। प्रत्येकमूरुमध्ये एकैकम्; बाह्वोः प्रत्येक-मेकैकम्; एवं चत्वार्याणयः। कूर्चाख्यानि चत्वारि; हस्तयोर्द्वे, पादयोर्द्वे। कूर्च-शिरःसंज्ञानि चत्वारि; पादयोर्द्वे, हस्तयोर्द्वे इति चत्वारि। अपाङ्गाख्ये द्वे नेत्र-योर्बाह्यत इत्यादिना निर्दिष्टे। क्षिप्राख्यानि चत्वारि। अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमिति; तत्र पादद्वये द्विविधं हस्तद्वयं च। उत्क्षेपौ द्वौ; केशान्ते शङ्खयोरूर्द्ध्व मुत्क्षेपाविति। अंसाख्ये द्वे स्कन्धांसपीठसम्बन्धावंसाविति। बस्तिरेको मूत्राशय इत्यादिनोक्तः। एवं स्नायुमर्माणि त्रयोविंशतिः ॥ ३८ ॥

गुदेति। गुदः स्थूलान्त्रबद्ध एकः। अपस्तम्भाख्ये द्वे। अपस्तम्भावुरःपार्श्वे नाड्यावनिलवाहिनी इति। विधुराख्ये द्वे। अधस्तात् कर्णयोर्निम्ने विधुरे इति। शृङ्गाटकाख्यानि चत्वारि जिह्वाक्षिनासिकेत्यादिनोक्तानि। एवं धमनीस्थानि धमन्या-श्रितानि नव मर्माणि। सप्तत्रिंशदिति। सिराश्रया मर्मविशेषाः सप्तत्रिंशत्। कथ-

बृहत्यौ मातृका-नीले मन्ये कृकाटिके फणौ ।
विटपे हृदयं नाभिः पार्श्वसन्धी स्तनान्तरे ।
अपलापौ स्थपन्यूर्व्यश्चतस्रो लोहितानि च ॥ ४० ॥
सन्धौ विंशतिरावर्तौ मणिबन्धौ कुकुन्दरौ ।
सीमन्ताः कूर्परौ गुल्फौ कृकाट्यौ जानुनी पतिः ॥ ४१ ॥
मांसमर्म गुदोऽन्येषां स्नाव्नी कक्षाधरौ तथा ।
विटपौ विधुराख्ये च शृङ्गाटानि सिरासु तु ।
अपस्तम्भावपाङ्गौ च धमनीस्थं न तैः स्मृतम् ॥ ४२ ॥

---

मित्याह,—बृहत्यौ द्वे स्तनमूलार्जवे भाग इत्यादिनोक्ते । मातृकाख्यानि कण्ठनाडी-मुभयतो जिह्वानासागता इत्यादिनोक्तान्यष्टौ । नीलाख्ये द्वे सिरे । मन्याख्ये द्वे । तानि कण्ठनाडीमुभयतः सिराहनुसमाश्रितानि चतस्र इत्यादिनोक्तानि । कक्षाधरौ द्वौ । यथोक्तम्,—"कक्षावक्षमध्ये कक्षाधृक्" इत्यादि । फणौ द्वौ "फणावुभयतः" इत्यादिना कृतलक्षणौ । विटपे द्वे । मुष्कवङ्क्षणयोर्मध्ये एकम्, द्वितीयेऽप्येवम् । हृदयमेकम् । तस्य लक्षणं "द्वारमामाशयस्य च" इत्यादि । नाभिरेक एव । तल्लक्षणं देहामपक्वेत्यादि । पार्श्वसन्धी द्वौ पार्श्वान्तरनिबद्धौ चेत्यादिनोक्तौ । स्तनाधरे स्तनयो-रधोऽपलापौ द्वावेव पृष्ठवंशोरसोरित्यादिनोक्तौ । स्थपनी एकैव । तल्लक्षणं भ्रुवोर्मध्य इति । ऊर्व्यश्चतस्रः ऊर्वोर्द्वयोर्द्वे बाह्वोश्च । ऊर्व्यूरुमध्य इति तस्या लक्षणम् । इति सक्थ्नोस्तथा बाह्वोरिति चाऽऽतिदेशः । लोहितानि लोहिताक्षनामानि चत्वारि । ऊरुमूले लोहिताख्यम् । सक्थिवद् बाह्वोरिति तल्लक्षणम् ॥ ३९ । ४० ॥

सम्प्रति सन्धिमर्माण्याह,—सन्धाविति । सन्धौ विंशतिर्मर्माणि ; आवर्ताख्ये द्वे ; तयोर्लक्षणम्,—"तयोपरि भ्रुवोर्निम्नावावर्तौ" इति । मणिबन्धौ द्वौ ; तल्लक्षणम्,—"मणिबन्धोऽत्र गुल्फवत्" इति । कुकुन्दरौ द्वौ ; तल्लक्षणम्,—"जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ" इति । सीमन्ताख्यानि पञ्च ; तल्लक्षणम्,—"कपालसन्धयः पञ्च सीमन्ताः" इति । कूर्परौ द्वौ ; तल्लक्षणम्,—"कूर्परं जानुवत्" इति । कूर्परशब्द उभयलिङ्गः । गुल्फौ द्वे मर्मणी ; तयोर्लक्षणम्,—"जङ्घाचरणयोः सन्धौ गुल्फौ" इति । कृकाट्यौ द्वे ; तल्लक्षणम्,—"कृकाटिके शिरोग्रीवासन्धौ" इति । जानुनी द्वे ; तयोर्लक्षणम्,—"जङ्घोर्वोः सङ्गमे जानु" इति । पतिरधिपतिर्मर्मणां तच्चैकम् । तल्लक्षणम्,—"आन्तरो मस्तकस्योर्ध्वम्" इत्यादिनोक्तम् । एवं सर्वोत्तरं मर्मशत मांसादि-परिकल्पनया कल्पितम् ॥ ४१ ॥

मांसेति । अन्येषामाचार्याणां मतेन गुदो मांसमर्म न धमनीमर्म । स्नाव्नीत्यादि । तेषामेव मतेन कक्षाधरौ स्नाय्वाश्रितौ न तु सिराश्रयौ । विटपौ विधुराख्ये च स्नाय्वा-श्रितौ पूर्वमतेन तु विटपौ सिराश्रितौ । विधुरे च धमन्याश्रिते । शृङ्गाटकानि

विद्धेऽजस्रमसृक्स्रावो मांसधावनवत्तनुः ।
पाण्डुत्वमिन्द्रियाज्ञानं मरणं चाशु मांसजे ॥ ४३ ॥
मज्जान्वितोऽच्छो विच्छिन्न-स्रावो रुक् चास्थिमर्मणि ॥४४॥
आयामाक्षेपकस्तम्भाः स्नायुजेऽभ्यधिकं रुजा ।
यानस्थानासनाशक्तिर्वैकल्यमथवाऽन्तकः ॥ ४५ ॥
रक्तं सशब्दफेनोष्णं धमनीस्थे विचेतसः ॥ ४६ ॥
सिरामर्मव्यधे सान्द्रमजस्रं बह्वसृक् स्रवेत् ।
तत्क्षयात् तृड्-भ्रम-श्वास-मोह-हिक्काभिरन्तकः ॥४७॥
वस्तु शूकैरिवाकीर्णं रूढ़े च कुणिखञ्जता ।
बलचेष्टाक्षयः शोषः पर्वशोफश्च सन्धिजे ॥ ४८ ॥

---

चत्वार्यपि सिरास्वेव । तुरवधारणे, न तु धमनीष्वानि । अपस्तम्भौ तथा अपाङ्गौ च एतद्धमनीष्वमन्ये राचार्यैर्न स्मृतमपि तु स्नाय्वाश्रितमभिहितम् ॥ ४२ ॥

इदानीं मांसादिजानां मर्माणां व्यधलक्षणमाह,—विद्ध इति । मांसजे मर्मणि विद्धे सति अनवरतमसृक्स्रावो भवति । मांसधावनोदकेन तुल्यः, तथा तनुरच्छो भवति न बहुलः । पाण्डुत्वं पीताभता शरीरस्य ; इन्द्रियैश्चक्षुरादिभिश्च विषयाज्ञानमनवबोधः ; मरणञ्च आशु शीघ्रं भवति । तदेवमिन्द्रवस्त्यादिजमांसमर्मव्यधे निरन्तरस्रावादिसर्व्वलिङ्गदर्शनानुमानेन मरणमनुमीयमानं बुद्ध्वा वैद्यः प्रत्याख्याय चिकित्सां प्रयोजयेत्, नियतायुषां क्वचिन्मरणस्य व्यभिचारादिति ॥ ४३ ॥

मज्जेति । अस्थिमर्मणि शङ्खादिके विद्धे मज्जान्वितः स्रावः, तथा अच्छो न घनः, विच्छिन्नो न मांसमर्मव्यध इव निरन्तरो भवति । रुक् चेत्यनेनात्यन्तं पीड़ा भवतीति, प्रतिपादयति, रुङ्मात्रस्य सर्व्वमर्मस्वपि सद्भावात् ॥ ४४ ॥

आयामेति । स्नायुजे ऊर्व्वादिके मर्मणि विद्धे आयामादयो भवन्ति । आक्षेपकः स्तम्भो यथास्वमङ्गानामतिरुजा च, तथा यानस्थानासनाशक्तिः, यातुं स्थातुमासितुञ्च असामर्थ्यम्, वैकल्यञ्च अङ्गानाम्, अथवा अन्तको मरणं भवति ॥ ४५ ॥

रक्तमिति । धमनीस्थे अपस्तम्भादौ मर्मणि विद्धे सति विचेतसो मूर्च्छितस्य सतो रक्तं स्रवेत् । कीदृशम् ? सशब्दफेनोष्णम् । सशब्दस्याऽत्र प्रत्येकं सम्बन्धः ॥ ४६ ॥

सिरेति । सिरामर्मणो बृहत्यादेर्व्यधे सति असृक् सान्द्रं घनं अजस्रं निरन्तरं बहु प्रभूतं स्रवति । तत्क्षयात् तस्यास्रजः क्षयात् तृड्भ्रमादिभिरन्तको जीवितनाशः ॥४७॥

वस्त्विति । सन्धिजे मर्मण्यावर्त्तादौ विद्धे वस्तु शूकैरिवाकीर्णं भवति । वस्तुशब्देनाऽधिष्ठानं विद्धदेश उच्यते ; तच्छूकैः शालियवादिसम्बन्धिभिः किंशारुभिर्व्याप्तमिव भवति । रूढे च सति तस्मिन् मर्मव्यधे कुणिता खञ्जता वा भवति ; तथा बलचेष्टयोः क्षयः, तथा शोषोऽङ्गस्य, पर्वसु शोफः, अयमुत्र सन्धिजे भवति ॥ ४८ ॥

नाभि-शङ्खाऽधिपाऽपान-हृच्छृङ्गाटक-बस्तयः ।
अष्टौ च मातृकाः सद्यो निघ्नन्त्येकोनविंशतिः ।
सप्ताहः परमस्तेषां कालः कालस्य कर्षणे ॥ ४९ ॥
त्रयस्त्रिंशदपस्तम्भ-तलहृत्-पार्श्वसन्धयः ।
कटी-तरुण-सीमन्त-स्तनमूलेन्द्रबस्तयः ॥ ५० ॥
क्षिप्राऽपलाप-बृहती-नितम्ब-स्तनरोहिताः ।
कालान्तरप्राणहरा मासमासार्द्धजीविताः ॥ ५१ ॥
उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि तत्र हि ।
वायुर्मांस-वसा-मज्ज-मस्तुलुङ्गानि-शोषयन् ।
शल्यापाये विनिर्गच्छन् श्वासात् कासाच्च हन्त्यसून् ॥५२॥
फणावपाङ्गौ विधुरौ नीले मन्ये कृकाटिके ।
अंसाऽंसफलकावर्त्त-विटपोर्वी-कुकुन्दराः ॥ ५३ ॥

---

इदानीमेषामेव मर्मणां व्यधे जीवितनाशे कालं नियमयति,—नाभीति । नाभि-शङ्खादीनि मर्माणि एकोनविंशतिः सद्यो घ्नन्ति । नाभिरेकः ; शङ्खौ द्वौ ; अधिप एकः ; अपानोऽप्येकः ; हृदेकम् ; शृङ्गाटकानि चत्वारि ; बस्तिरेकः ; अष्टौ मातृकाः ; एकोनविंशतिरेतानि सद्यःप्राणहराणि । तेषां मर्मणां कालस्य मृत्योः कर्षणे आकर्षणे सप्ताहः परमः कालः प्रकृष्टोऽवधिः । न विंशतीति सुप्सुपेतिसमासः । तत एकोनविंशतिरिति तृतीयेऽतियोगविभागात् समासः । तत एकादिश्चैकस्येत्यादिना नञः प्रकृतिभाव एकस्याऽदुगागमश्च । ऊनार्थेऽत्र नञ् । एकोनविंशतिरित्यर्थः ॥ ४९ ॥

त्रयस्त्रिंशदिति । त्रयस्त्रिंशदपस्तम्भादयः कालान्तरप्राणहराः । मासं मासार्द्धं जीवितं येषु विद्धेष्विति मासमासार्द्धजीविताः । मासेन प्राणान् हरन्ति मासार्द्धेन वेत्यर्थः । संग्रहे चोक्तम्,—"सौम्याग्नेयत्वात्तेषां पचाभ्यन्तरं कालः" इति । त्रयस्त्रिंशदिति—त्रेस्त्रयसिति त्रयसादेशः । तत्रापस्तम्भौ द्वौ, तलहृन्ति चत्वारि, पार्श्वसन्धी द्वे, कटीक-तरुणे द्वे, सीमन्ताः पञ्च, स्तनमूले द्वे, इन्द्रबस्तयश्चत्वारः, जङ्घामध्ययोर्द्वे, बाहुमध्ययोर्द्वे, क्षिप्राणि चत्वारि, हस्तयोर्द्वे, पादयोर्द्वे, अपलाप-बृहती-नितम्ब-स्तनरोहिताः प्रत्येकं द्वौ द्वाविति, उत्क्षेपौ द्वौ, स्थपन्येका, इत्येतानि त्रीणि विशल्यघ्नानि । कोऽत्र हेतुरित्याह,—तत्र हीत्यादि । हि यस्मात् तत्र व्यधे शल्यापाये वायुर्विनिर्गच्छन् निर्यान् मांसादीन् शोषयन् श्वासकासाभ्यां प्राणान् हन्ति । तत्र च हेतौ शतृप्रत्ययः । निर्गमेन हि हेतुना मांसादीनां शोषणं भवति ॥ ५०—५२ ॥

फणाविति । फणादीनि विटपान्तानि प्रत्येकं द्वौ द्वौ, ऊर्व्यश्चतस्रः, कुकुन्दरौ द्वौ, जानुनी द्वे, लोहिताक्षाणि चत्वारि, आणयश्चत्वारः, कक्षाधरौ द्वौ, कूर्चाश्चत्वारः,

सजानुलोहिताख्याऽऽणि-कक्षाधृक्-कूर्च-कूर्पराः ।
वैकल्यमिति चत्वारि चत्वारिंशच्च कुर्वते ।
हरन्ति तान्यपि प्राणान् कदाचिदभिघाततः ॥ ५४ ॥
अष्टौ कूर्च-शिरो-गुल्फ-मणिबन्धा रुजाकराः ॥ ५५ ॥
तेषां विटप-कक्षाधृगूर्व्यः कूर्चसिरांसि च ।
द्वादशाङ्गुलमानानि द्व्यङ्गुले मणिबन्धने ।
गुल्फौ च स्तनमूले च त्र्यङ्गुलौ जानुकूर्परौ ॥ ५६॥
अपान-बस्ति-हृन्नाभि-नीलाः सीमन्तमातृकाः ।
कूर्च-शृङ्गाट-मन्याश्च त्रिंशदेकेन वर्जिताः ॥ ५७ ॥
आत्मपाणितलोन्मानाः शेषाण्यर्द्धाङ्गुलं वदेत् ।
पञ्चाशत् षट् च मर्माणि तिलव्रीहिसमान्यपि ॥ ५८ ॥
इष्टानि मर्माण्यन्येषां चतुर्धोक्ताः सिरास्तु याः ।
तर्पयन्ति वपुः कृत्स्नं ता मर्माण्याश्रितास्ततः ॥ ५९ ॥

---

हस्तयोर्द्वौ, पादयोर्द्वौ, कूर्परौ द्वौ, इत्येवं चत्वारि चत्वारिंशच्चेति चतुश्चत्वारिंशन्मर्माणि वैकल्यमङ्गस्य कुर्वते । कदाचित्तु अभिघाततस्तान्यपि चतुश्चत्वारिंशत् प्राणान् हरन्ति ॥ ५३ । ५४ ॥

अष्टाविति । अष्टौ कूर्चादयो मर्मविशेषा रुजाकराः, अग्निवायुसोमगुणबाहुल्यात् । अग्निवायू हि विशेषेण शूलकरौ । सोमस्तु प्राणावलम्बकः । इति नैतानि प्राणहन्तॄणि । तत्र कूर्चशिरांसि हस्तपादेषु चत्वारि, गुल्फौ द्वौ, मणिबन्धौ द्वावित्यष्टौ ॥ ५५ ॥

इदानीं मर्मणां यथायथं प्रमाणमभिधातुमाह,—तेषामिति । तेषां मर्मणां मध्ये विटपादीनि द्वादश मर्माणि अङ्गुलमानान्यङ्गुलप्रमाणानि । मणिबन्धने मणिबन्धौ द्वौ, द्व्यङ्गुलप्रमाणौ, गुल्फौ स्तनमूले च द्व्यङ्गुले प्रत्येकम् । एकश्चशब्दः समुच्चयार्थः, द्वितीयः पादपूरणे । त्र्यङ्गुलप्रमाणौ जानुकूर्परौ च ॥ ५६ ॥

अपानेति । अपानबस्त्यादयस्त्रिंशदेकेन वर्जिता एकोनत्रिंशदात्मपाणितलोन्मानाः स्वहस्ततलपरिमाणाः । शेषाणीति । शेषाणि षट्पञ्चाशन्मर्माणि स्वेनाङ्गुलपरिमाणेनार्द्धाङ्गुलप्रमाणान्यादिशेत् । अन्येषां तन्त्रकृतां तिलप्रमाणानि व्रीहिप्रमाणानि वा मर्माणि इष्टान्यभिमतानि । परमतमप्रतिषिद्धमनुमतमेवेत्यस्यापि ग्रन्थकृत एतदेव मतमिति बोध्यम् । इदानीं यथा मर्माभिघातमरणं सम्पद्यते तथा दर्शयति,—चतुर्धेति । याः सिराश्चतुर्धा उक्ताः प्राङ्निर्दिष्टा वात-पित्त-कफ-दुष्ट-शुद्ध-रक्तवाहिन्यः सप्तशतसङ्ख्याः कृत्स्नमशेषं शरीरं तर्पयन्ति प्रीणयन्ति ता मर्माण्याश्रिता गताः प्राप्ताः । ततश्चतादित्यादि । यत एवं सर्वाः सिराः मर्माणि प्राप्तास्ततः कारणान्मर्माश्रयलक्षणात्

तत्क्षतात् क्षतजात्यर्थ-प्रवृत्तेर्धातुसंक्षये ।
वृद्धश्चलो रुजस्तीव्राः प्रतनोति समीरयन् ॥ ६० ॥
तेजस्तदुद्धतं धत्ते तृष्णा-शोष-मद-भ्रमान् ।
स्विन्न-स्रस्त-श्लथ-तनुं हरत्येनं ततोऽन्तकः ॥ ६१ ॥
वर्द्धयेत् सन्धितो गात्रं मर्मण्यभिहते द्रुतम् ।
छेदनात् सन्धिदेशस्य सङ्कुचन्ति सिरा ह्यतः ।
जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठति ॥ ६२ ॥
सुविक्षतोऽप्यतो जीवेदमर्मणि न मर्मणि ।
प्राणघातिनि जीवेत्तु कश्चिद् वैद्यगुणेन चेत् ॥ ६३ ॥
असमग्राभिघाताच्च सोऽपि वैकल्यमश्नुते ।
तस्मात् क्षारविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत् ॥ ६४ ॥

---

तत्क्षतात्तेषां मर्मणां क्षतं तत्क्षतं तस्मान्मर्मक्षतात् कारणात् क्षतजस्य रक्तस्यातिप्रवृत्ति-कारणात् धातुसंक्षयः परम्पराक्रमाऽऽयातो मांसादिधात्वपचयः, तस्मिन् धातुक्षये सति यो वृद्धश्चलो वायुः स तीव्रा अत्यन्तं दुःखदायिनी रुजः शूलविशेषान् प्रतनोति करोति । किं कुर्वन् ? तेजः पित्तं समीरयन् दीरयन् वृद्धिं नयन् । तत्तेजः उद्धतं वृद्धिसम्पन्नं तृष्णादीन् धत्ते करोति । ततोऽनन्तरं तृष्णादिभिरेनं पुरुषं मर्मविक्षतमन्तको हरति । किम्भूतम् ? स्विन्ना स्रस्ता श्लथा तनुर्यस्य तम् । तदयमर्थः, मर्माभिघातेन रक्तवाहिनीनां सिराणां मुखविकासो जायते ; तद्विकासाज्जीविताधिष्ठानस्याऽस्रजोऽत्यर्थं या निःसृतिर्यावत्तस्य क्षयस्तत्क्षयात् जीवितनाश आश्रयाभावात् ॥ ५७—६१ ॥

अधुना मर्माभिघाते चिकित्सामाह,—वर्द्धयेदिति । मर्मण्यभिहते सति गात्रं शरीरमाशु च्छेदयेत् । कुतः ? सन्धितः सन्धिप्रदेशात् । हि यस्मात् सन्धिदेशस्य च्छेदनात् सिराः सङ्कुचन्ति संवृतमुखा भवन्ति । वर्द्धयेदिति वर्द्धच्छेदनादाविति चौरादिकः । अतः सिरासङ्कोचात् कारणात् रक्तं न बहिर्निःसरति तिष्ठति ; तस्मिं-स्तिष्ठति बहिरवहति सति जीवितं तिष्ठति ॥ ६२ ॥

तदनेन प्रकारेण मर्माभिघातक्षतान्मरणं न त्वमर्माभिघातक्षतात् ; अत इदमाह,—सुविक्षत इति । यतो मर्माभिघातक्षतात् प्राणी म्रियते नान्यथा क्षतमात्रात्, अतोऽस्मात् कारणात् सुष्ठु कृत्वा विशेषेण क्षतोऽपि शरशतैर्विद्धोऽप्यमर्मणि जीवेन्न तु मर्मणि विद्धो जीवेत् । किम्भूते ? प्राणघातिनि । द्विविधं हि मर्म, प्राणघात्येकमपरं वैकल्यकरम् । तत्र प्राणघातिनि मर्मणि कुशाग्रेणापि विद्धो न जीवति । अथ पुण्यवान् नियतायुश्च प्राणघातिन्यपि मर्मणि विद्धो वैद्यगुणेनाऽसमग्रस्याऽसकलस्य मर्मणोऽभिघाताच्च कश्चिद् यदि विद्धो जीवेदपि वैकल्यमश्नुते विकलतां प्राप्य जीवतीत्यर्थः । वैद्यशब्दः प्राधान्याद्द्रव्यादिपादत्रयमुपलक्षयति । वैद्यगुणेन पादचतुष्टयसम्पत्त्येत्यर्थः । यतश्चैवं

मर्माभिघात: स्वल्पोऽपि प्रायशो बाधतेतराम् ।
रोगा मर्माश्रितास्तद्वत् प्रक्रान्ता यततोऽपि च ॥ ६५ ॥

इत्यष्टाङ्गहृदये शारीरस्थाने चतुर्थोऽध्याय: ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातो विकृतिविज्ञानीयं शारीरं व्याख्यास्याम: ।
इति ह स्माहुरात्रेयादयो महर्षय: ॥ १ ॥

पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदय: ।
यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥ २ ॥

---

मर्माभिघात: सोऽपाय: प्राणोपरोधकृत्. तस्मात् कारणान्मर्मसु चारादीन् यत्नात् तात्पर्येण वर्जयेत् परिहरेत् । अग्न्यादीनित्यादिशब्देन भल्लातकरस-कपिकच्छु-शूकादीनां ग्रहणम् ॥ ६३।६४ ॥

मर्मेति । तस्मान्मर्माभिघातो रक्ष्य:, यस्मान्मर्माभिघात: सुष्ठ्वतिशयेन अल्पोऽपि प्रायशो बाधतेतरामतिशयेन पीडयति । न केवलं मर्माभिघातो यावद्रोगा अपि मर्माश्रयास्तद्वद् बाधन्ते यत्नतोऽप्यादरेणापि प्रक्रान्ता उपक्रान्ता इति ॥ ६५ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां शारीरेषु मर्म्मविभागो नाम चतुर्थोऽध्याय: ॥ ४ ॥

---

मर्मविभागादनन्तरं विकृतिविज्ञानीयं शारीरमारभ्यते ; यतो मर्मविभागे मर्म उपात्तं मरणकारित्वान्मर्मेत्युच्यते । विकृतेरनन्तरं मरणं दृश्यते इत्ययमुच्यते,—अथात इति । प्रकृतेरन्यथात्वं स्वभावप्रच्युतिर्विकृतिस्तस्या विज्ञानमवबोध:, स विद्यते यस्मिन्निति मतो छ: सूक्तसाम्नोरिति छ: । अध्यायानुवाकयोर्लुगिति तस्य पाक्षिकत्वान्न लुक् । विकृतिविज्ञानीयस्तं शारीरं व्याख्यास्याम: । शेषं पूर्ववत् । विकृति: पुनरत्र रिष्टमेव विज्ञेयम् ॥ १ ॥

अतएवाह,—पुष्पमिति । यथा फलस्य भाविनो भविष्यत: पुष्पमग्रे भाविनो धूमो वर्षस्य भाविनो जलदोदय:, तथा तेनैव दृष्टान्तेन मृत्योर्भविष्यतो रिष्टं लिङ्गं गमकं ध्रुवं निश्चितम् । ध्रुवशब्दनिर्देशादिदं द्योतयति, रिष्टच्छायानुकारि तदाभासरूपं मृत्योर्न लिङ्गमिति ॥ २ ॥

अरिष्टं नास्ति मरणं दृष्टरिष्टञ्च जीवितम् ॥ ३ ॥
अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥ ४ ॥
केचित्तु तद्द्विधेत्याहुः स्थाय्यस्थायिविभेदतः ॥ ५ ॥
दोषाणामपि बाहुल्याद् रिष्टाभासः समुद्भवेत् ।
स दोषाणां शमे शाम्येत् स्थाय्यवश्यन्तु मृत्यव ॥ ६ ॥
रूपेन्द्रिय-स्वर-च्छाया-प्रतिच्छाया-क्रियादिषु ।
अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।

---

अतएवाह,—अरिष्टमिति । न विद्यते पूर्वं रिष्टं यस्य मरणस्य तदरिष्टं तथाविधं मरणं नास्ति ; तथा दृष्टं रिष्टं यस्य जीवितस्य तदेवम्भूतं जीवितमपि नास्ति । यत्तु पुष्पादर्शनेऽपि वटब्रचादौ फलसद्भावो दृश्यते तत्तु क्वचिदेव न सर्वत्रेति नायं दोषोऽत्र चिन्त्यः ॥ ३ ॥

ननु दृष्टरिष्टं जीवितं नास्तीत्ययुक्तमेतद् व्यभिचारात् । तथा च वक्ष्यति,—"यं नरं सहसा रोगी दुर्बलं परिमुञ्चति । संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यते" । इत्याह,—अरिष्ट इति । परमार्थेन यदरिष्टत्वेन च निश्चयीकृतं तस्मिन्नरिष्टे रिष्टविज्ञानं रिष्टत्वावगमः ; न च रिष्टेऽपि रिष्टविज्ञानं केषाञ्चित् भवति । कुतो हेतोरित्याह,—अनैपुणात् । निपुणस्य भावो नपुणम् । हायनान्तयुवादिभ्योऽणित्यण्, न नैपुणमनैपुणं तस्मात् मिथ्याज्ञानादित्यर्थः । तदेवं यदभ्रान्तं रिष्टं तदव्यभिचारित्वान्मरणं निश्चितं सूचयति । यदन्यद्रिष्टच्छायानुकारि "यं नरं सहसा रोगः" इत्यादि लक्षणं तद्भ्रान्तमेव । यथा अधूमे वाष्पादौ धम इति ज्ञानम्, न च तस्मात् मिथ्याज्ञानादग्न्युपलब्धिर्निश्चिता भवति । तस्मात् युक्तमुक्तमरिष्टं नास्ति मरणमित्यादि । मुनिरप्याह,—"अरिष्टं नास्ति मरणं दृष्टरिष्टञ्च जीवितम् । अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात्" इति । सुश्रुतस्तु पठति,—"ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत्किलामलैः । रसायनतपोदानतत्परैर्वा निवार्यते" इति ॥ ४ ॥

कृष्णात्रेयस्तु द्विधा रिष्टमिच्छतीति तन्मतमाविष्कुर्वन्नाह,—केचिदिति । केचिदाचार्यास्तद्रिष्टं द्विधा वदन्ति । कथमित्याह,—स्थायीत्यादि । तृतीयार्थे तसिः । स्थाय्यस्थायिविभेदेन द्विप्रकारम् ॥ ५ ॥

तत्रास्थायिरिष्टभेदं दर्शयन्नाह,—दोषाणामिति । अपिशब्दः समुच्चये भिन्नक्रमः । रिष्टाभासश्च दोषाणां बाहुल्यात् समुद्भवेत् । दोषाणां शमे दोषाणां शान्तौ सत्यां स रिष्टाभासः शाम्येन्न तु मरणाय सम्पद्यते । स्थायि तु रिष्टमवश्यं मृत्यवे मरणाय जायते । नन्वरिष्टं नास्ति मरणमित्ययुक्तमिवाभाति, रिष्टमन्तरेणाप्यकालमृत्योरग्न्युदकादिभिर्दर्शनात् । अत्र सञ्चक्ष्महे, कालमृत्योरेव रिष्टपूर्वकत्वात् । तथा च वक्ष्यति,—"सर्वे ते कालनोदिताः । तथा च,—"वशगाः समवर्त्तिनः" इति । समवर्त्ती हि कालमृत्युरेव ॥ ६ ॥

विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ ७ ॥
केशरोम निरभ्यङ्गं यस्याऽभ्यक्तमिवेक्ष्यते ॥ ८ ॥
यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ।
जिह्मे विस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रुणी ॥ ९ ॥
उद्भ्रान्तदर्शने हीन-दर्शने नकुलोपमे ।
कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी ॥ १० ॥

---

किं तद्रिष्टमित्याह,—रूपेति। रूपं गौरादिवर्णविशेषो गौरो गौरश्यामः कृष्ण इति। (तद्भेदास्तु यमगौरादयः)। देहप्रकृतिवर्णास्तु नील-श्याम-ताम्र-हारिद्र-शुक्लादयः, तथा चक्षुषा यद्ग्राह्यं वस्तुजातं संस्थानादि तदपि रूपं; इन्द्रियाणि चक्षुरादीनि ; स्वरः शब्दः प्रतिपुरुषं विशिष्टो रवः ; छाया वर्णप्रभाश्रया वक्ष्यमाणलक्षणा ; प्रतिच्छाया प्रतिबिम्बम् ; क्रिया देहवाङ्मनोव्यापारः ; तत्र धावन-प्लवनाद्यनेकरूपो व्यायामः कायिको व्यापारः। गीताध्ययनादिर्वाचिको व्यापारः ; राग-द्वेष-भयेर्ष्यादिर्मानसः। आदिशब्दोऽन्येषामपि शरीरजानां भावानां ग्रहणार्थः। रूपञ्चेन्द्रियाणि च स्वरश्च च्छाया च प्रतिच्छाया च क्रियादयश्च तेषु रूपादिषु भावेषु। तथा अन्येष्वपि प्राकृतेषु भावेष्वनिमित्ततोऽकस्मान्निमित्तमन्तरेणैव या विकृतिः सा समासेन रिष्टमिति लक्षयेज्जानीयात्। प्रकृतौ भवा प्राकृताः। यथा वातादिप्रकृतौ चलधृतिस्मृत्यादयः। तदेवं रूपादिषु भावेषु क्रियादिपर्यन्तेष्वन्येषु च प्राकृतेषु भावेषु या विकृतिः सा संक्षेपेण रिष्टम्। विस्तरतस्त्वनेकधा वक्ष्यमाणम् ॥ ७ ॥

केशेति। केशाश्च रोमाणि च तत् केशरोम यस्य निरभ्यङ्गमभ्यङ्गरहितमभ्यक्तमिवेक्ष्यते दृश्यते स कालनोदित इति वचनविपरिणामेन सम्बन्धः। एवमुत्तरत्रापि। एतद्रूपविकृतेरुदाहरणम् ॥ ८ ॥

इन्द्रियाणामधिष्ठानस्य विकृतिरिन्द्रियविकृतिरित्याह,—यस्येति। नेत्रशब्देन नेत्राधिष्ठानमिष्टं नेन्द्रियम्। यस्य नेत्रे चले अत्यर्थमतिशयेनेतश्चेतश्च परिभ्रमतः, तथा यस्य नेत्रे स्तब्धे निश्चले, तथा यस्यान्तर्गते अन्तः प्रविष्टे, तथा यस्य निर्गते बहिर्याते, तथा यस्य जिह्मे कुटिले, तथा यस्य विस्तृते विस्तरं गते, तथा यस्य नेत्रे संक्षिप्ते सङ्कुचिते, तथा संक्षिप्ते विनते विशेषेण नते भ्रुवौ ययोस्ते संक्षिप्तविनतभ्रुणी, तथा उद्भ्रान्तदर्शने विभ्रान्तदृष्टिनी, तथा हीनदर्शने अल्पदर्शने नष्टदृष्टिनी वा, तथा नकुलोपमे नकुललोचनाभे। समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इति नकुलशब्दोऽत्र नकुललोचनविषयो बोध्यः। यथा च नागानन्दनाटके,—"चक्षुस्तामरसानुकारिहरिणा वक्षःस्थलं स्पर्द्धते" इति। अत्र हि हरिवक्षसा यस्य स्पर्द्धते वक्षःस्थलमित्ययमर्थो बोध्यः, अथवा नकुललोचने उपमा ययोस्ते नकुलोपमे इत्यत्र मध्यपदलोपी समासः। एवं कपोताभे, तथा अलाताभे उल्मुकसदृशे, तथा स्रुते निर्निमित्तमश्रु परिस्रवतः, तथा लुलिते वातोद्धत इव पक्ष्मणी ययोस्ते लुलितपक्ष्मणी। तथा यस्य

नासिकाऽत्यर्थविवृता संवृता पिटिकाचिता ।
उच्छूना स्फुटिता म्लाना यस्यौष्ठौ यात्यधोऽधरः ॥ ११ ॥
ऊर्द्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ।
दन्ताः सशर्कराः श्यावास्ताम्राः पुष्पितपङ्किताः ॥ १२ ॥
सहसैव पतेयुर्वा जिह्वा जिह्मा विसर्पिणी ।
श्वेता* शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका ॥१३॥
शिरः शिरोधरा वोढुं पृष्ठं वा भारमात्मनः ।
हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ॥ १४ ॥
यस्याऽनिमित्तमङ्गानि गुरूण्यतिलघूनि वा ।
विषदोषाद् विना यस्य खेभ्यो रक्तं प्रवर्तते ॥ १५ ॥
उत्क्षिप्तं मेहनं यस्य वृषणावतिनिःसृतौ ।
अतोऽन्यथा वा यस्य स्यात् सर्व्वे ते कालनोदिताः ॥१६॥

---

नासिका निर्निमित्तमत्यर्थमतिशयेन विवृता, अथवा संवृता सङ्कुचिता, तथा पिटिकाचिता पिटिकाभिर्व्याप्ता, तथा उच्छूना ऊर्द्ध्वं श्वयथुनाऽऽक्रान्ता, तथा स्फुटिता म्लाना च। यस्येति। यस्य ओष्ठौ दन्तच्छदोऽधरोऽनुत्तरोऽधो याति। द्वितीय उपरिष्टाद्भवो यो दन्तच्छदः स ऊर्द्ध्वं याति। यस्य च पक्वजम्बूफलनिभौ द्वावोष्ठौ भवतः, तथा यस्य दन्ताः सशर्कराः शर्कराभिराचितास्तथा श्यावास्तथा ताम्राश्च वर्णतस्तथा पुष्पिताः सञ्जातपुष्पास्तथा पङ्किताः सञ्जातपङ्काः कर्दमोपलिप्ता इव, तथा सहसैव कारणं विनैव यस्य वा द्विजाः पतेयुर्भ्रंशेयुः, तथा यस्य जिह्वा जिह्वेन्द्रियाधिष्ठानं जिह्मा कुटिला तथा श्यावा तथा लिप्ता तथा सुप्ता सुप्तवत्सुप्ता रसाज्ञानाद् विचेतनेत्यर्थः, तथा सकण्टका कण्टकैराचितेव ॥ ९—१३ ॥

शिर इति। यस्य पुंसः शिरोधरा ग्रीवा शिरो वोढुं न शक्नोति, तथा यस्य पृष्ठं वा आत्मनो भारं पृष्ठस्य वोढृत्वेनोपर्यारूढं ग्रीवादिकं वोढुं धारयितुं न शक्नोति, यस्य वा पुंसो हनू भक्तपिण्डं कवलमास्यस्थं वोढुं न शक्नुतः। एवं शिरोधरादीनि चैण्यङ्गानि स्वमात्मीयं कार्यं यस्य वोढुं न शक्नुवन्ति, स कालनोदित इति योज्यम्। यस्य अनिमित्तं कारणं विनाऽङ्गान्यतिगुरूणि कदाचिदतिलघूनि वा भवन्ति, तथा यस्य विषदोषमन्तरेण खेभ्यश्छिद्रेभ्यो रक्तं प्रवर्त्तते आयाति, यस्य मेहनं लिङ्गमुत्क्षिप्तमूर्द्ध्वं गतम्, तथा वृषणावतिनिःसृतौ प्रलम्बौ, अतोऽन्यथा वा उक्तप्रकारात् विपरीतः प्रकारो यः सोऽन्यथा। यथा वृषणावुत्क्षिप्तावतिनिःसृतं मेहनमिति। "केशरोमनिरभ्यङ्गम्" इत्यारभ्य यावत् "अतोऽन्यथा वा" इत्येतत् पर्यन्तग्रन्थोक्तं लक्षणं येषां जातं ते पुरुषाः सर्वे कालेन

---

* शूना इति वा पाठः ।

यस्याऽपूर्वाः शिरालेखा बालेन्द्वाकृतयोऽपि वा ।
ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ॥ १७ ॥
पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ।
प्लवते प्लवमानस्य षण्मासं तस्य जीवितम् ॥ १८ ॥
हरिताभाः शिरा यस्य रोमकूपाश्च संवृताः ।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ १९ ॥
यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ।
सस्नेहं मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम् ॥ २० ॥
मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः ।
मृत्युं स्वस्थस्य षड्रात्रात् त्रिरात्रादातुरस्य तु ॥ २१ ॥
जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ।

---

मृत्युना नोदिताः अन्तकेन स्वीकृता इत्यर्थः । नन्वत्र कालनियमो न कृतः, कियता कालेन मृत्युर्भवति मासेनार्द्धमासेन वेति सन्देहान्न युक्तमेतत् । अत्र ब्रूमः, अनिर्दिष्टकालानां सम्वत्सरोऽवधिरिति व्यवस्था वेद्या । तथा चाह,—"वर्षान्तं तस्य जीवितम्," तथा सोऽपि वर्षं न जीवतीत्यादिवचनात् नापि वर्षादूर्द्ध्वं जातरिष्टस्य जीवितमिति निश्चयः ॥ १४—१६ ॥

यस्येति । यस्य पुंसः स्वस्थस्य निर्निमित्तमेव ललाटे वस्तेर्वा शिरस्यपूर्वा अभिनवा न तु प्रागवस्थिताः शिरालेखाः सिराराजयो दृश्यन्ते, अथवा बालेन्द्वाकृतयो वक्राः स पुमान् षण्मासान्न जीवति, तथा यस्य पुंसः प्लवमानस्य स्नानं कुर्व्वतः शरीरे पद्मिनीपत्रवत् पद्मिनीपत्रस्थिततोयवत्तोयं प्लवतेऽनवस्थितस्थितिर्भवति तस्यापि षण्मासान्न जीवितम् । पद्मिनीपत्रवदिति सप्तम्यर्थे वतिर्न षष्ठ्यर्थे, शरीर इति सप्तम्या निर्दिष्टत्वात् । तथा चोक्तं भाष्यकृता;—"उपमाने यः संशयः स उपमेयाद् व्यावर्त्तते" इति ॥ १७ । १८ ॥

हरिताभा इति । यस्य शिरा हरिताभाः रोमकूपाश्च संवृताः स्युः स नरोऽम्लाभिलाषी सन् पित्तेन मृत्युं प्राप्नोति ॥ १९ ॥

यस्येति । यस्य पुरुषस्य गोमयस्य चूर्णं सस्नेहं मूर्ध्नि मुखे वा भवेत्, तथा मूर्ध्नि धूमो यस्य वा भवति तस्य मासान्तं जीवितं स्यात् ॥ २० ॥

मूर्द्धीति । सीमन्तानामावर्त्तका मण्डलानि सीमन्तावर्त्तकाः शिरसि भ्रुवोर्वा नवा अपूर्वाः स्वस्थस्य षड्रात्रान्मृत्युं कुर्व्वन्ति । आतुरस्य पुनस्त्रिरात्रात् कुर्व्वन्ति । अनेकार्थत्वाद्धातूनां सूचयन्तीत्यर्थः, न तु विषवन्मारणे तेषां कर्तृत्वम् । तर्हि सूचयन्तीत्येतदेव कस्मान्न कृतम् ? ब्रूमः, यदोत्पद्यन्ते सीमन्तावर्त्तकास्तदा निश्चितं स्थायि रिष्टं समुत्पन्नमित्यवगन्तव्यमिति प्रतिपादनाय कुर्व्वन्तीत्युक्तम् । तथा यस्य जिह्वा

खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ॥ २२ ॥
यस्य स्नातानुलिप्तस्य पूर्व्वं शुष्यत्युरो भृशम् ।
आर्द्रेषु सर्वगात्रेषु सोऽर्द्धमासं न जीवति ॥ २३ ॥
अकस्माद् युगपद्गात्रे वर्णौ प्राकृतवैकृतौ ।
तथैवोपचय-ग्लानि-रौक्ष्य-स्नेहादि मृत्यवे ॥ २४ ॥
यस्य स्फुटेयुरङ्गुल्यो नाऽऽकृष्टा न स जीवति ।
क्षवकासादिषु तथा यस्याऽपूर्वो ध्वनिर्भवेत् ॥ २५ ॥
ह्रस्वो दीर्घोऽतिवोच्छ्वासः पूतिः सुरभिरेव वा ।
आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।
मलवस्त्रव्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ २६ ॥

---

श्यावा भवति, तथा मुखं पूति दुर्गन्धि, तथा सव्यं वाममक्षि निमज्जति अन्तः प्रविशति, तथा यस्य खगाः पक्षिणश्च मूर्ध्नि लीयन्ते श्लिष्यन्ति तं परिवर्जयेद् वैद्य इति शेषः ॥ २१—२२ ॥

यस्येति । यस्य स्नातानुलिप्तस्य पूर्व्वं स्नातः पश्चादनुलिप्तस्तस्यार्द्रेषु सर्व्वगात्रेषु पूर्व्वमादौ भृशमुरः शुष्यति अतिशयेन वक्षः शोषमायाति, सोऽर्द्धमासं न जीवति । नन्वार्द्रेषु सर्वगात्रेष्विति न वक्तव्यं पुनरुक्तत्वात् । तथाहि, पूर्वं शुष्यत्युरो भृशमित्युक्ते आर्द्रेषु सर्वगात्रेष्वित्यर्थात् लभ्यत एव, अन्यथा पूर्वग्रहणमनर्थकं स्यात् । नैवम्, अत्र हि भृशग्रहणात् पूर्व्वमुरो भृशं शुष्यति न पुनरन्यान्यपि गात्राणि शुष्यन्तीत्यायाति । न चैतदिष्टं शास्त्रकृतः । अतएवार्द्रेष्वित्याह । तदयमर्थोऽत्राभिप्रेतः, यथैवोरसो भृशं शोषस्तथैव शेषाणामङ्गानां भृशार्द्रता स्यादित्येतत् प्रतिपादयितुमार्द्रेष्वित्युक्तम् । सर्वगात्रेष्वार्द्रेषु सत्सु पूर्वमुरो भृशं शुष्यतीत्येतदाश्चर्यत्वाद् रिष्टम् ॥ २३ ॥

अकस्मादिति । तत्र प्राकृतो वर्णो गौरादिः प्रागुक्तः, वैकृतस्तु वर्णो नीलादिः, तौ प्राकृतवैकृतौ वर्णौ यस्य निमित्तमन्तरेणापि तुल्यकालं देहे भवतस्तौ मृत्यवे; तथैवोपचयग्लान्यादयः परस्परं प्रतिपक्षभूता युगपत् यस्य जायन्ते ते तस्य मृत्यवे । आदिशब्देन शैत्यौष्णादीनि गृह्यन्ते । यस्य आकृष्टा अङ्गुल्यो न स्फुटेयुर्न त्रुटेयुः स न जीवति; यस्य क्षवादिष्वपूर्वो ध्वनिरलौकिकः शब्दः स्यात् स न जीवति; यस्योच्छ्वासोऽतिह्रस्वोऽतिदीर्घो वा भवेत्, अथवोच्छ्वासः पूतिगन्धिः सुरभिर्वा यस्य स न जीवति; तथा आप्लुतानाप्लुते स्नातास्नाते काये यस्य मानुषमतिक्रान्तोऽतिमानुषो गन्धः सुरभिरसुरभिर्वा भवति, यस्य मलवस्त्रव्रणादौ वाऽतिमानुषो गन्धः स्यात् । वर्षान्तं तस्य जीवितम् । तत्क्षणादारभ्य तावदसाववस्थितजीवितो यावद् वर्षं तदन्ते वत्सरान्ते मृत्युर्भवेत् जायेतेत्यर्थः ॥ २४—२६ ॥

भजन्तेऽत्यङ्गसौरस्याद् यं यूकामक्षिकादयः ।
त्यजन्ति वाऽतिवैरस्यात् सोऽपि वर्षं न जीवति ॥ २७ ॥
सततोष्णेषु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ २८ ॥
यो जातशीतपिटिकः शीताङ्गो वा विदह्यते ॥
उष्णद्वेषी च शीतार्त्तः स प्रेताधिपगोचरः ॥ २९ ॥
उरस्यूष्मा भवेद् यस्य जठरे चातिशीतता ।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ ३० ॥
मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाऽप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात् स नश्यति ॥ ३१ ॥
घनीभूतमिवाऽऽकाशमाकाशमिव यो घनम् ॥ ३२ ॥
अमूर्त्तमिव मूर्त्तञ्च मूर्त्तञ्चाऽमूर्त्तवत् स्थितम् ।

---

भजन्त इति। शोभनरसस्य भावः सौरस्यम्, अङ्गस्य सौरस्यमङ्गसौरस्यम्, अतिशयेनाऽङ्गसौरस्यमत्यङ्गसौरस्यं तस्मादितीर्यूकामक्षिकादयो यं भजन्ते, अथवा यमतिवैरस्यात् त्यजन्ति सोऽपि वर्षं न जीवति; तथा यस्य सन्ततोष्णेषु सदोष्णेषु गात्रेष्ववयवेषु भृशं शैत्यमुपलक्ष्यते उपलभ्यते, शीतेषु वा गात्रेषु भृशमौष्ण्यं यस्योपलभ्यते। भृशशब्दस्यात्र हि विषयद्वयेऽपि सम्बन्धः। यस्याहेतुको निर्निमित्तोऽङ्गेष्वतिस्वेदः, तथा स्वेदविषयो यः स्तम्भः सोऽपि यस्य स्यात्, सोऽपि वर्षं न जीवतीति योज्यम् ॥ २७। २८ ॥

य इति। जाताः शीताः पिटिका यस्य स जातशीतपिटिकः कफोद्भूतपिटिकाक्रान्तदेहो यो विदह्यते विदाहमनुभवति, शीताङ्गः सन् वा यो विदह्यते, तथोष्णं द्वेष्टि यः पुरुषः शीतार्त्तः सन्, स प्रेताधिपगोचरः स मृत्युनाऽऽत्मसात् क्रियत इत्यर्थः। उरसि यस्योष्मा औष्ण्यं भवेत्, जठरे उदरे चातिशैत्यम्, पुरीषं भिन्नं तृष्णा च भवति, स प्रेततुल्यः प्राप्तमरणत्वादिति भावः। यस्य मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वा अप्सु निमज्जति बुड़ति, यस्य वा निष्ठ्यूतं निष्ठीवनमनेकवर्णं भवति, असौ मासेन नश्यति ॥ २९—३१ ॥

घनीभूतमिति। मरणाभिमुखः पुरुषो विपर्यासकारिभिर्दोषैरघनादि घनादिरूपं मन्यते, घनादि त्वघनादि मन्यते तद्विपर्ययेण। अतएवोपमार्थमिवशब्दं प्रायुङ्क्त। अघनो घनः सम्पन्नो घनीभूतः। च्विप्रत्ययस्तस्यास्य च्वाविति ईत्वम्। घनीभूतमिवान्तरिक्षमन्तरिक्षमिव घनं मेदिनीधर्म्ममन्तरिक्ष मूर्द्धस्थं यत् तदधःस्थं पातालस्थमिव पश्यतीति वक्ष्यमाणेन सम्बन्धः ॥ ३२ ॥

तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ।
अनेत्ररोगश्चन्द्रञ्च बहुरूपमलाञ्छनम् ॥ २३ ॥
जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान् ।
रूपं व्याकृति तद्वच्च यः पश्यति स नश्यति ॥ २४ ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।
ध्रुवमाकाशगङ्गां वा स न पश्यति तां समाम् ॥ २५ ॥
मेघतोयौघ-निर्घोष-वीणा-पणव-वेणुजान् ।

---

अमूर्त्तमिति । चशब्दो भिन्नक्रम इवशब्दश्च । अमूर्त्तं च वातादिकं मूर्त्तमिव रूपवन्तमिव पश्यति, मूर्त्तञ्च वस्त्रादिकममूर्त्तमिव स्थितं यः पश्यति । भेड़ीऽप्यवोचत्,— "यस्य दर्शनमायाति वायुरम्बरगोचरः । वह्निर्नायाति दीप्तोऽपि तस्यायुः चयमादिशेत्" इति । तथा तेजस्वि यद् वस्त्वग्न्यादिकं भास्वरं तदतेजो निस्तेजः पश्यति । तेजस्वीत्यस्यायामिवेत्यादिना विनिः । तद्वच्चेति । तेजस्व्यतेजोदर्शनेन तुल्यं तद्वत् शुक्लञ्च कृष्णं यः पश्यत्यसच्च यद्वस्तु तत् सत् यः पश्यति स नश्यति । नेत्रेषु रोगो नेत्ररोगः स न विद्यते यस्य स नेत्ररोगी तिमिरादिकान्तरेण बहुरूपं चन्द्रं पश्यति, बहून् शशाङ्कानालोकयत इत्यर्थः । यो वा अलाञ्छनमकलङ्कं चन्द्रं पश्यति स नश्यति । एषु च घनीभूतमित्यादिषु विशिष्टेषु वस्तुविपर्यासदर्शनमात्रलक्षणस्यैकस्मिन्नेव उदाहरणत्वेन रिष्टे दर्शयितुं युक्ते यदनेकरिष्टप्रदर्शनं तत् प्रपञ्चार्थं वेद्यम् ॥ २३ ॥

जाग्रदिति । आसन्नमरणो नरो जाग्रदेव यथास्वरूपाणि रक्षःपिशाचादीनि यः पश्यति न विपर्ययवस्तुरूपाणि । यतस्तदानीं तैरेव स उपास्यते । तथा च वक्ष्यति,— "यमदूतपिशाचाद्यैर्यत् परासुरुपास्यते" इति । रक्षांसीति बहुवचननिर्देशो बहुराक्षसदर्शने सुतरामस्य रिष्टस्य परिपूर्णत्वमिति द्योतयितुम् । एकस्मिन्नपि हि राक्षसे दृष्टे रिष्टं भवत्येव, जातौ वा बहुवचनम् । अन्यांश्च तद्विधान् राक्षसादिप्रकारान् यः पश्यति, तथा विकृता द्रष्टुं दुःशक्या आकृतिर्यस्य रूपस्य तद्रूपं व्याकृति रक्षःपिशाचादिव्यतिरिक्तं तदनेकं यः पश्यति स नश्यति ॥ २४ ॥

सप्तर्षीणामिति । यो नरोऽरुन्धतीं सप्तर्षीणां समीपस्थां न पश्यति, स तां समां न पश्यति, स तस्य सम्वत्सरस्यान्तरे म्रियत इत्यर्थः । सप्तर्षीणां समीपस्थामित्यरुन्धत्या विशेषणं सप्तर्षिसमीपेऽरुन्धत्याः स्थितिर्भवतीति वेदयति । तथा चान्यैः सामान्येनवोक्तम् । यथा—"अरुन्धतीं ध्रुवञ्चैव सोमच्छायां महापथम् । यो न पश्येन्न पश्येत् स नरः सम्वत्सरात् परम्" इति । तथा यो ध्रुवं न पश्यति, तथा आकाशगङ्गां यो न पश्यति स तां समां न पश्यति ॥ २५ ॥

इदानीं श्रोत्रेन्द्रियस्य विकृतिमाचिख्यासुराह,—मेघेति । मेघादिजान् वेणुपर्यन्तान् शब्दान्, तथा अन्यांश्च शब्दान्, तथा रूपान् सहतोऽसतः परैरनुपलभ्यमानान्

शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ।
निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकस्वनम् ॥ ३६ ॥
तद्वद् गन्धरसस्पर्शान् मन्यते यो विपर्ययात् ।
सर्वशो वा न यो यश्च दीपगन्धं न जिघ्रति ॥ ३७ ॥
विधिना यस्य दोषाय स्वास्थ्यायाऽविधिना रसाः ।
यः पांशुनेव कीर्णाङ्गो योऽङ्गघातं न वेत्ति वा ॥ ३८ ॥
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।
जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत् ॥ ३९ ॥
हीनो दीनः स्वरोऽव्यक्तो यस्य स्याद् गद्गदोऽपि वा ।
सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ॥ ४० ॥

---

यः पुरुषः शृणोति, तथा मेघादिजान् तथा अन्यांश्च यः शब्दान् सतो विद्यमानान् न शृणोति, तेषां मरणमादिशेदिति वक्ष्यमाणस्य वचनविपरिणामेणात्र सम्बन्धः कार्यः । यो धुकधुकशब्दं कर्णावङ्गुल्या निष्पीड्य न शृणुयात् ॥ ३६ ॥

तद्वदिति । तर्मेघादिजैः शब्देस्तुल्यस्तद्वत् । यथा मेघादिजान् शब्दान् योऽसतः शृणोति सतश्च न शृणोति तद्वत् यो गन्धरसस्पर्शान् विपर्ययाद् वैपरीत्येन मन्यते न यथावस्तुजातान् । तत्र गन्धविपर्ययो यथा—सुगन्धं दुर्गन्धं मन्यते । रसविपर्ययो यथा—मधुरमम्लमम्लं मधुरमित्यादि । स्पर्शविपर्ययो यथा—मृदुस्पर्श खरस्पर्शं मन्यते, शीतमुष्णं स्निग्धं रूक्षमिति विपर्ययेण मन्यते । सर्वशो गन्धादीन् वा योऽपि न मन्यते, यश्च तत्कालनिर्वाणस्य दीपस्य गन्धं न जिघ्रति घ्राणेन्द्रियेण नानुभवति ॥ ३७ ॥

विधिनेति । विधिना शास्त्रप्रयुक्तेन प्रयुक्ता रसा यस्य दोषाय रोगाय अविधिना शास्त्रविधिव्यतिक्रमेण प्रयुक्ताः स्वास्थ्याय स्युः, तथा यः पांशुना रजसेव कीर्णाङ्गो धूलिधूसरितशरीरः । यश्चाङ्गे घातं हन्ति न वेत्ति ॥ ३८ ॥

अन्तरेणेति । तपस्तीव्रमन्तरेणेयं तपो विना यः पुरुषोऽतीन्द्रियमिन्द्रियेभ्योऽतिक्रान्तमिन्द्रियाणामगोचरं स्वर्गादि वेत्ति, तथा योगं वा विधिपूर्वकमन्तरेण योऽतीन्द्रियं जानाति, तेषां पूर्वोक्तानां सर्वेषां मरणमादिशेत् । योगश्चित्तवृत्तिनिरोधः ; विधिपूर्वको यथाशास्त्रं सम्यगुपदेशः । तथा अन्योऽपि योगो रसायनादिः । युज्यत इति योगो विधिविशेषः । शास्त्रोद्दिष्टरसायनाञ्जनादि विनापि ह्यतीन्द्रियं दृश्यते दूरव्यवहितादि ॥ ३९ ॥

अधुना स्वरविकृतिमाह,—हीन इति । यस्य पुरुषस्य स्वरः शब्दो निमित्तमन्तरेण हीनोऽथवा दीनो दन्ययुक्तो भवति, अव्यक्तोऽस्फुटो यस्य स्यात्, गद्गदो घर्घरो वा यस्य भवति, यो वा विवक्षुर्वक्तुमिच्छन् कारणमन्तरेण विमुह्येद् वक्तुं न शक्नोति स न जीवति ॥ ४० ॥

स्वरस्य दुर्बलीभावं हानिं वा बलवर्णयोः ।
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ॥ ४१ ॥
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ।
श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ॥ ४२ ॥
संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ।
छाया विवर्त्तते यस्य स्वप्नेऽपि प्रेत एव सः ॥ ४३ ॥
आतपादर्शतोयादौ या संस्थानप्रमाणतः ।
छायाऽङ्गात् सम्भवत्युक्ता प्रतिच्छायेति सा पुनः ।
वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥ ४४ ॥

---

स्वरस्येति। स्वरस्य शब्दस्य दौर्बल्यं दृष्ट्वा बलवर्णयोश्च हानिमयुक्त्या दृष्ट्वा मरणमादिशेत्। चशब्दः समुच्चये। रोगवृद्धिमयुक्त्या च दृष्ट्वा नरस्य मरणमादिशेत्। अयुक्त्या निर्निमित्तमेवेत्यर्थः ॥ ४१ ॥

अपस्वरमिति। स्वभावस्वरादपगतं भ्रष्टमपस्वरं हीनस्वरं कृत्वा यो नरः "अहं मरिष्यामि मरिष्यामि" इत्येवमात्मनो मरणं भाषते परस्परं, तथाभूतं दूरादेव वर्जयेत् वैद्यो न चिकित्सेत्; तथा अस्य शब्दस्य "अहं मरिष्यामि" इत्येवम्भूतस्य यो नरः श्रोता तमपि वैद्यो दूरतो वर्जयेत् ॥ ४२ ॥

स्वराश्रयं रिष्टमुक्त्वा छायाश्रयं रिष्टमभिधित्सुराह,—संस्थानेनेति। संस्थानं प्रतिपुरुषं विलक्षणं समविषमं रूपमाकृतिरित्यर्थः। अत्र यदि शरीरस्य समं संस्थानं भवति छाया तस्य विषमा दृश्यते तदा रिष्टम्, तथा यदि शरीरस्य विषमं संस्थानं छाया तु समा भवति तदपि रिष्टम्, तथा यदि दीर्घप्रमाणस्य सतो ह्रस्वाच्छाया भवति। ह्रस्वप्रमाणस्य वा दीर्घा भवति तदपि रिष्टम्, एवं संस्थानेन प्रमाणेन च छायाविवृतिं विद्यात्। तथा यस्य नाभसी छाया आग्नेयी छाया या वर्णतो दृश्यते सा वर्णविवृत्तिर्योज्या। तथा यस्य तथाभूता प्रभा साऽन्यथाभूता भवति सा प्रभाविवृत्तिः। एवं पृथिव्यादिमयीषु छायासु वर्णविवृत्तिः योज्या। एवं संस्थानाद्यन्यतमेन यस्य छाया विवर्त्ततेऽन्यथा भूताऽन्यथा सम्पद्यते स्वप्नेऽपि स पुमान् प्रेत एव किं पुनर्जाग्रदवस्थायां न प्रेत इति एवकारेणारिष्टस्याव्यभिचारित्वं सूचयति। उत्पन्नश्चेत् नरस्य छायाया अन्यथा भावस्तदानीं पुरुषो यमसात् सम्पन्नो मन्तव्य इत्यर्थः ॥ ४३ ॥

अस्याश्च छायाया द्वैरूप्यं दर्शयितुमाह,—आतपेति। या शरीरादातपादर्शतोयघृतादौ शरीरसंस्थानप्रमाणानुरूपा सम्भवति प्रतिबिम्बकरूपा सा प्रतिच्छायेत्युच्यते। तस्या हि न वर्णप्रभे आश्रयः। यस्याः पुनर्वर्णप्रभे आश्रयश्छायायाः सा शरीरस्यैव छाया न प्रतिच्छायावच्छरीरादन्यत्र आतपादर्शतोयादौ कुत्रचिदपि याति प्रतिबिम्बकरूपतया ॥ ४४ ॥

भवेद् यस्य प्रतिच्छाया च्छिन्ना भिन्नाऽधिकाऽऽकुला ।
विशिरा द्विशिरा जिह्मा विकृता यदि वाऽन्यथा ।
तं समाप्तायुषं विद्यात् नचेल्लक्ष्यनिमित्तजा ॥ ४५ ॥
प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्येत कन्यका ॥ ४६ ॥
खादीनां पञ्च पञ्चानां छाया विविधलक्षणा: ॥ ४७ ॥
नाभसी निर्मलाऽऽनीला सस्नेहा सप्रभेव च ॥ ४८ ॥
वाताद् रजोऽरुणा श्यावा भस्मरूक्षा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४९ ॥

---

भवेदिति । यस्य पुंस: प्रतिच्छाया च्छिन्ना द्विधा दृश्यते, अथवा भिन्ना किञ्चित् सच्छिद्रेव यस्य दृश्यते, तथा यस्याधिका दृश्यते न यथाप्रमाणा, यस्य वा आकुला चलस्वरूपा अनिश्चितप्रतिबिम्बा भवति, तथा यस्य विशिरा शिरोरहिता, तथा यस्य द्विशिरा, तथा यस्य जिह्मा कुटिला । विकृतेत्यादि । उक्तप्रकारादन्यथा अन्येन प्रकारेण यस्य विकृता दृश्यते आतपादर्शतोयादौ तं पूर्वोक्तञ्च सर्वमेव समाप्तायुषं क्षीणजीवितं विद्यात् । न चेदित्यादि । लक्षयितुं प्रत्यक्षादिभि: प्रमाणै: शक्यं लक्ष्यम् । शक्यार्थे कृत्य: । लक्ष्यञ्च तन्निमित्तञ्च तस्मात् तथाविधान्निमित्तात् विकृता च्छाया यदि न भवति तदा रिष्टं नान्यथा ॥ ४५ ॥

प्रतीति । प्रतिच्छायामयी कन्यका प्रतिबिम्बकुमारिकेति या लोके प्रसिद्धा, सा अक्षिणि नेत्रे यस्य नेक्ष्येत नोपलभ्येत तं समाप्तायुषं विद्यात् ॥ ४६ ॥

इदानीं कस्य महाभूतस्य कीदृशी च्छाया स्यात् तां कथयितुमाह,—खादीनामिति । खादीनां महाभूतानां पञ्चानां पञ्च च्छाया भवन्ति । ननु खादीनां पञ्चत्वं-मर्थाल्लब्धमेव, तत् किं पञ्चग्रहणेन ? अस्त्येवेतत्, किन्तु यथा खादिभ्य: पञ्चभ्यो द्रव्यमेकं भूतोत्कर्षापकर्षभेदेनासङ्ख्येयं द्रव्यं, तथा च्छायानामप्येकत्वं भूतोत्कर्षापकर्षभेदाच्चासङ्ख्येयत्वमाशङ्केत, तदाशङ्कानिवृत्त्यर्थं पञ्चग्रहणम् । पञ्चैव च्छाया भवन्ति नोनाधिका इति । किम्भूतास्छाया: ? विविधलक्षणा: । विविधं लक्षणं वक्ष्यमाणं यासां ता एवम् ॥ ४७ ॥

आकाशजा च्छाया निर्मला शुद्धा, तथा आनीला ईषन्नीलेत्याकारप्रश्लेषोऽत्र वेद्य: । शुद्धवैदूर्यविमला हि तोयजेति वक्ष्यति, तथा किञ्चित् स्निग्धा । सप्रभेत्यनेन शोभनत्वमुक्तम् । एतदेव स्फुटयितुमिवशब्दस्तत्त्वकृता प्रागुक्त:, अन्यथा छायाप्रभयोर्भिन्नविषयत्वादनुपपन्नमेतद्वाक्यं स्यात् । भेदश्चानयोरप्युनैव वक्ष्यति ॥ ४८ ॥

वातादिति । वाताद्रजोऽरुणादियुक्ता छाया भवति । आग्नेयी विशुद्धरक्तवर्णा दीप्ताभा, तथा दर्शनं प्रियं यस्या: सर्वविधा भवति । तोयजा छाया निर्मलवैदूर्यविमला सुस्निग्धा सुखा सुखावहा । पार्थिवी छाया स्थिरादिगुणयुक्ता । ननु चाग्निजलभुवां

शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा।
स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी ॥५०॥
वायवी रोगमरण-क्लेशायाऽन्याः सुखोदयाः।
प्रभोक्ता तैजसी सर्वा सा तु सप्तविधा स्मृता ॥ ५१ ॥
रक्ता पीता सिता श्यामा * हरिता पाण्डुरा सिता।
तासां याः सुप्रविकासिन्यः स्निग्धाश्च विमलाश्च याः।
ताः शुभा मलिना रूक्षाः संक्षिप्ताश्चाशुभोदयाः ॥ ५२ ॥
वर्णमाक्रामति च्छाया प्रभावर्णप्रकाशिनी।
आसन्ने लक्ष्यते च्छाया विकृष्टे भा प्रकाशते ॥ ५३ ॥
नाऽच्छायो नाऽप्रभः कश्चिद् विशेषाश्चिह्नयन्ति तु।
नृणां शुभाशुभोत्पत्तिं काले च्छायासमाश्रयाः ॥ ५४ ॥

---

स्वयं वर्णादियोगादाग्नेयादिकानां तद्वर्णकत्वमुपपन्नम्। नभोमारुतयोस्तु स्वयं वर्णाद्ययोगात् कथं तच्छायानां वर्णादियोगो युज्येतेति केचित्। तान् ब्रूमहे, अचिन्त्यत्वाद्धेतुफलस्यादोषः। तथा हि, मधुरादयो रसाः कालादमूर्त्ताद्भवन्ति ते दृश्यन्ते यथा तथा तच्छाये अप्येते भविष्यतः। तत्र यस्य नरस्य कर्मादिसहायं नभश्छायामुत्पादयति तस्य नाभसीऽतियुज्यत एव। एवं वायव्यामपि वाच्यम् ॥ ४९। ५०॥

इदानीमासां छायानां गुणनिर्देशमाह,—वायवीति। वायवी छाया रोगाद्यर्थ जायते; अन्याश्छायाः सुखोदयाः सुखावहाः। प्रभा सर्वा सप्तप्रकाराऽपि तैजस्याग्नेयी उक्ता तत्त्वज्ञैः स्मृता ॥ ५१॥

तदेव सप्तविधत्वमाह,—रक्तेति। तासामित्यादि। तासां पूर्वोक्तानां प्रभानां मध्यात् याः प्रभा विकासिन्यः प्रसृता इव, तथा स्निग्धा विमलाश्च स्मृताः शुभाः कल्याणकारिण्यः। याश्च मलिनादिगुणयुक्तास्ता अशुभोदया अमाङ्गल्यकारिण्यः। छायाप्रभयोरन्यत्वं दर्शयितुं लक्षणमाह,—वर्णमिति। छाया रक्तादिवर्णमाक्रामति परिभूयावतिष्ठते। प्रभा तु वर्णप्रकाशिनी वर्णं प्रकाशयितुं शीलमस्याः सा वर्णप्रकाशिनी। तथा इदमपि छायाप्रभयोरन्यत्वे लक्षणमाह,—आसन्न इति। निकटे छाया लक्ष्यते, प्रभा पुनर्विकृष्टे दूरप्रदेशे प्रकाशते। यथा पाषाणादिपरिपूर्णानामपि पर्वतादिप्रदेशानां दूराद् विलक्षणैव कान्तिः प्रकाशते ॥ ५२। ५३॥

एवं छायाप्रभयोरन्यत्वं प्रदर्श्य तयोरेव व्याप्तिं प्रदर्शयति,—नेति। कश्चिदपि पुरुषश्छायारहितः प्रभाहीनश्च नास्ति। विशेषास्तु नृणां शुभाशुभोत्पत्तिं काले विशिष्टे चिह्नयन्ति व्यञ्जयन्तीत्यर्थः। किम्भूता विशेषाः? छायासमाश्रयाश्छायाश्रिताः ॥ ५४॥

---

* श्यामा इति क्वचित् पाठः।

निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ५५ ॥
हीयते बलतः शश्वद् योऽन्नमश्नन् हितं बहु ।
योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट् ॥ ५६ ॥
योऽल्पाशी वा कफेनार्त्तो दीर्घं श्वसिति चेष्टते ।
दीर्घमुच्छ्वस्य यो ह्रस्वं निःश्वस्य परितास्यति ॥ ५७ ॥
ह्रस्वञ्च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।
शिरो विक्षिपते कृच्छ्राद् योऽञ्चयित्वा प्रपाणिकौ ॥५८॥
यो ललाटात् स्रुतस्वेदः श्लथसन्धानबन्धनः ।
उत्थाप्यमानः सम्मुह्येद् यो बली दुर्बलोऽपि वा ॥ ५९ ॥
उत्तान एव स्वपिति यः पादौ विकरोति च ।
शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥
अहास्यहासो संमुह्यन् यो लेढ़ि दशनच्छदौ ॥ ६० ॥
उत्तरोष्ठं परिलिहन् फूत्कारांश्च करोति यः ।
यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा ॥ ६१ ॥

---

निकषन्निति । निकषन् घर्षयन्निव यः पादौ च्युतांसः स्रस्तांसः सन् भूमौ परिसर्पति, तथा ये वक्ष्यमाणाश्च ते सर्वे समवर्त्तिनो यमस्य वशगा इति योज्यमन्तकालकारित्वादस्य ॥ ५५ ॥

हीयत इति । तथा योऽन्नमश्नन् भक्तं भक्षयन् बलान्नित्यं हीयते । किम्भूतमन्नम् ? हितं पथ्यम्, बहु भूरि । योऽल्पाशी बहुविण्मूत्रः, यश्च बह्वाशी बह्वश्नाति नित्यमल्पविण्मूत्रश्च, यश्चाऽल्पाशी कफेनार्त्तः पीड़ितो दीर्घं श्वसिति बहुश्वास मुञ्चति, तथा चेष्टते परिलुठति, तथा यो दीर्घमुच्छ्वस्य बहूर्ध्वं श्वासं मुक्त्वाऽनन्तरं ह्रस्वं निःश्वस्याल्पं श्वासं प्रवर्त्यावसमन्तः कृत्वा परितास्यति दुःखायते, यश्च ह्रस्व प्रश्वसिति, व्याविद्धं विषमं कृत्वा नाडीभिः स्पन्दते भृशमतिशयेन स्फुरति, यः प्रपाणिकौ पाण्योः पश्चाद्भागस्थितावयवविशेषौ अञ्चयित्वा कृच्छ्रेण शिरो मूर्द्धानं विक्षिपते, यो ललाटादलिकात् स्रुतस्वेदः सन् शिथिलसन्धिबन्धो भवति, य उत्थाप्यमानो बली दुर्बलो वा सम्मुह्येत् मोहमुपैति, य उत्तान एव वा जातुचित् पार्श्वे न स्वपिति, यश्च पादौ विकरोति विकृतिं नयति । यः शयनादावसदविद्यमानमेव वस्तु गृहीतुमिच्छति ; यः अहास्ये हास्यविषयाभावेऽप्यभीक्ष्णं हसन् संमुह्यन् दशनच्छदौ लेढ़ि जिह्वया परिमृशति ॥ ५६—६० ॥

उत्तरोष्ठमिति । यश्चोत्तरोष्ठं परिलिहन् फूत्कारान् नानाविधान् शब्दान् करोति ; यं मर्त्यं छाया अभिद्रवत्यभिभवति । कीदृशी ? कृष्णा पीताऽरुणाऽपि वा । ये च

भिषग्-भेषज-पानान्न-गुरु-मित्र-द्विषश्च ये ।
वशगाः सर्व एवैते विज्ञेयाः समवर्त्तिनः ॥ ६२ ॥
ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ।
उष्णोऽपरः प्रदेशश्च शरणं तस्य देवता ॥ ६३ ॥
योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्म्मनाः सदा ।
बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ॥ ६४ ॥
निर्निमित्तञ्च यो मेधां शोभामुपचयं श्रियम् ।
प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ॥ ६५ ॥
गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ।
यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ॥ ६६ ॥
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ।
षडेतानि निवर्त्तन्ते षड्भिर्मासैर्मरिष्यतः ।
मत्तवद्गतिवाकम्प-मोहा मासान् मरिष्यतः ॥ ६७ ॥

---

भिषगादिद्विषः । एते सर्वे समवर्त्तिनो वशगा विज्ञेयाः । समं वर्त्तते रागद्वेषौ हित्वा समवर्त्ती यमः । सर्वे एवेत्येतत्निकषन्निव यः पादावित्यत आरभ्य यावद्द भिषग्भेषजपानान्नगुरुमित्रपद्विष य इत्येतत्पर्यन्तस्य ग्रन्थस्य सम्बन्धार्थम् ॥ ६१ । ६२ ॥

ग्रीवेति । यस्य ग्रीवादिकं शीतलं सत् स्विद्यति स्वेदयुक्तं भवति, अपरः प्रदेशश्चोष्णः, तस्य शरणं रक्षणं देवता नान्यत् ॥ ६३ ॥

य इति । यः पुमान् अणुज्योतिस्तीकाट्टक्, केचित् स्वल्पतेजा इत्याहुः । तथा अनेकाग्रो व्याकुलचेताः । दुश्छायो विवर्णच्छायो निन्दितकान्तिर्वा । सदा दुर्म्मनाः सततमेव शोकाक्रान्तमानसः, तथा यस्य पुंसो बलिं प्रणीतं तन्नामोद्दिश्य प्रदत्तं बलिभृतो बलिभुजो वायसादयो नोपभुञ्जन्ते न खादन्ति, स यमक्षयं प्राप्नोतीति सम्बन्धः । बलिभृत इत्यतिशयार्थम् । किल काका अपि नादन्ति किंपुनरन्ये इत्यर्थः । तथा यो नरो निर्निमित्तं मेधादिजननरसायनादिकारणमन्तरेण मेधादीन् प्राप्नोति, अतो वा मेधादिभ्यो भ्रंशं प्राप्नोति सोऽन्तकगृहं प्राप्नोति । श्रीरत्न धनं राज्यं वा । उपचयः शरीरपुष्टिः ॥ ६४ । ६५ ॥

गुणेति । यस्य नरस्य गुणमयी सत्वादिमयी प्रकृतिर्दोषमयी वातादिमयी स्वस्थस्यातुरस्य वाऽन्यथात्वं याति स्वभावं हित्वा स षण्मासान्न जीवति ॥ ६६ ॥

भक्तिरिति । षड्भिर्मासैर्मरिष्यतो नरस्य भक्त्यादीनि षड्हेतुकं कारणमन्तरेण निवर्त्तन्ते । अहेतुकमिति निवर्त्तनक्रियाविशेषणम् । षडिति नियमार्थम्, यदा

नश्यत्यजानन् षड़हात् केशलुञ्चनवेदनाम्।
न याति यस्य चाहारः कण्ठं कण्ठामयादृते ॥ ६८ ॥
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते।
यस्य निद्रा भवेन्नित्यं नैव वा न स जीवति ॥ ६९ ॥
वक्त्रमापूर्यतेऽस्राणां स्विद्यतश्चरणौ भृशम्।
चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः।
यैः पुरा रमते भावैररतिस्तैर्न जीवति ॥ ७०
सहसा जायते यस्य विकारः सर्व्वलक्षणः।
निवर्त्तते वा सहसा सहसा स विनश्यति ॥ ७१ ॥
ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः।
सप्रलापभ्रमश्वास-क्षीणं शूनं हतानलम् ॥ ७२ ॥
अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम्।

---

षड़पि निवर्त्तन्ते नैकैकं तदा रिष्टमित्यर्थः। मासेन मरिष्यतो मत्तवन्मत्तस्येव गति-वाक्कम्पमोहा भवन्ति ॥ ६७ ॥

नश्यतीति। कचोत्पाटनपीडामविदन् षड़हान्नश्यति। यस्याहारः कण्ठामयं विना कण्ठं न याति स च षड़हान्तरे म्रियते। प्रेष्या भृत्या यस्य प्रतीपतां वैपरीत्यं यान्ति स नश्यति। यश्च प्रेताकार उपलक्ष्यते सोऽपि न जीवति। यस्य नरस्य नित्यं सततं निद्रा भवति, यस्य नैव वा न कदाचिदपि निद्रा भवति, स न जीवति। यस्य नरस्य अस्राणामसृक्स्रोतसां मुखं द्वारमापूर्यते स न जीवति। यस्य चरणौ भृशमत्यर्थं निर्निमित्तं स्विद्यतः स न जीवति। चक्षुरित्यादि। यमराज्यं यास्यतो नयनमाकुलत्वं याति। यैर्भावैः पदार्थैः पुरा पूर्वं रमते सुखायते तैः पदार्थैर्न रतिर्भवति यस्य स न जीवति ॥ ६८—७० ॥

सहसेति। यस्य पुंसो विकारो ज्वरादिः सहसा कारणं विना सर्वलक्षणः सकललिङ्गोपेतो जायते, अथवा तादृशो विकारः सहसा शीघ्रमेव निवर्त्तते नश्यति, स पुरुषः सहसा अचिरादेव विनश्यति ॥ ७१ ॥

अधुना प्रतिरोगं रिष्टं वक्तुं सर्वव्याधिप्रधानस्य ज्वरस्येव तावद् विज्ञप्तिं लिलक्षयिषुराह,—ज्वर इति। ज्वरो बलवानित्यादिलक्षणः क्षीणादिलक्षणं पुरुषं हन्ति। बलवान् हेत्वादिभिर्बलवद्भिर्युतो गम्भीरोऽशेषधात्वन्तर्गतः दैर्घरात्रिको दीर्घकालानुबन्धी। अन्ये तु रात्रिजागरकारीत्याहुः, दीर्घा हि जागरतो रात्रिः। तथा चोक्तम्,—"दीर्घं श्रान्तस्य योजनम्" इति। तथा प्रलापादियुक्तः। कीदृशमातुरम्? क्षीणं धातुक्षययुक्तम्, तथा अक्षामं सबलम्, तथा रक्तनेत्रम्, हृदयशूलान्वितं हन्तीति

संशुष्ककास: पूर्व्वाह्णे योऽपराह्णेऽपि वा भवेत्।
बलमांसविहीनस्य श्लेष्मकाससमन्वित: ॥ ७३ ॥
रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनु:प्रभम्।
ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत् ॥ ७४ ॥
रोमकूपप्रविसृतं कण्ठास्यहृदये सजत्।
वाससोऽरञ्जनं पूति वेगवच्चातिभूरि च।
वृद्धं पाण्डुज्वरच्छर्दि-कासशोफातिसारिणम् ॥ ७५ ॥
कासश्वासौ ज्वरच्छर्दि-तृष्णातीसारशोफिनम् ॥ ७६ ॥
यक्ष्मा पार्श्वरुजानाह-रक्तच्छर्द्यंसतापिनम् ॥ ७७ ॥

---

योज्यम्। यस्य ज्वर: संशुष्ककास: पूर्वाह्णेऽथवाऽपराह्णे भवेत् स द्विविधोऽपि हन्ति। तथा य: श्लेष्मकाससमन्वितो ज्वरी बलमांसविहीनस्य पुंस: स्यात् स तं निहन्तीति रिष्टद्वयमेतत्। ननु च "हेतुभिर्बहुभिर्युक्तो बहुभिर्बहुलक्षण:। ज्वर: प्राणान्तकृद् यश्च शीघ्रमिन्द्रियनाशन:" इत्येष ज्वरस्य रिष्टप्रकार: कस्मान्नोक्त: ? उच्यते, उक्तप्राय एवायं बलवानिति वचनात् ॥ ७२। ७३ ॥

रक्तपित्तविकृतिलक्षणं रिष्टमभिधात्याह। रक्तपित्तमिति। रक्तपित्तमीदृग्रूपं कर्तृभूतं नरं हन्ति। कीदृक्? भृशमत्यर्थं रक्तं लोहितम्, तथा अतिकृष्णञ्च; भृशशब्दो हि द्वयोरपि युज्यते। तथा इन्द्रधनु:प्रभं नानावर्णमित्यर्थ:। किल ईदृशे रक्तपित्ते रसमेदो-मज्जादिमिश्रस्य रक्तस्य स्रवणात् नानावर्णत्वं सम्पद्यते। यच्च रक्तपित्तं कर्तृ ताम्र-हारिद्रहरितं रक्तञ्च रूपं दृश्यमानं वा प्रदर्शयेत् तन्निहन्ति। यच्च रक्तपित्तं विनापि व्रणैः रोमकूपेभ्य: समस्तेभ्य: प्रकर्षेण विसृतं जातं प्रवृत्तं तच्च निहन्ति। तथा कण्ठे मुखे हृदये च तुल्यकालं सजत् संश्लिष्यत् सानुषङ्गं तच्च हन्ति। वासस इत्यादि। वासस: अरञ्जनमित्यकारप्रश्लेषोऽत्र बोध्य:। वस्त्रस्य हि जीवशोणितं शुद्धशोणितरूपत्वान्न रञ्जकम्, अतस्तेन रक्तं वस्त्रं समनन्तरं प्रक्षालितं शुद्धं सम्पद्यते न रागयुक्तम्। तथाहि —अस्मिन् व्याधौ रक्तपित्ताभ्यां परस्परमविभागापन्नत्वाद् वस्त्रस्य रञ्जनं प्राप्तम्। रक्तेन हि पित्तसहितेन वासो रज्यते नतद्धौतं शुद्धं सम्पद्यते। तथा चोक्तम्,—"शुद्धं वा भावितं वस्त्रसवानं कोष्णवारिणा। प्रक्षालितं विवर्णं स्यात् पित्तं शुद्धन्तु शोणितम्" इति। तथा पूति दुर्गन्धि, तद्धि धातूनुपक्लेदयति। उपक्लिन्नानां धातूनामत्यर्थं दुष्टत्वं चेति निहन्त्येव। तथा वेगवद् वेगेन निर्गत्य बद्धं पुनर्वेगेन प्रवर्त्तत इति, तथा भूरि प्रभूतम्, एवम्विधश्च रक्तपित्तं निहन्ति। वृद्धमुद्रिक्तं रक्तपित्तं सत् पाण्ड्वादियुतं नरं हन्ति ॥ ७४। ७५ ॥

कासेति। कासश्वासौ ज्वरादिपञ्चविधोपद्रवोपेतं निघ्नत इति वचनविपरिणामेन सम्बन्ध:। यक्ष्मेति। यक्ष्मा राजयक्ष्मा पार्श्वरुजादियुतं नरं हन्ति। छर्दिरिति।

छर्दिर्वेगवती मूत्र-शकृद्गन्धिः सचन्द्रिका ॥
सास्रविट्पूयरक्कास-श्वासवत्यनुषङ्गिणी ॥ ७८ ॥
तृष्णाऽन्यरोगक्षपितं बहिर्जिह्वं विचेतनम् ॥ ७९ ॥
मदात्ययोऽतिशीतार्त्तं क्षीणं तैलप्रभाननम् ॥ ८० ॥
अर्शांसि पाणिपन्नाभि-गुदमुष्कास्यशोफिनम् ।
हृत्पार्श्वाङ्गरुजा-छर्दि-पायुपाक-ज्वरातुरम् ॥ ८१ ॥
अतीसारो यकृत्पिण्ड-मांसधावनमेचकैः ।
तुल्यस्तैल-घृत-क्षीर-दधि-मज्ज-वसासवैः ।
मस्तुलुङ्ग-मषीपूय-वेसवाराम्बु-माक्षिकैः ॥ ८२ ॥
अतिरक्ताऽसितस्निग्ध-पूत्यच्छघनवेदनः ।
कर्बुरः प्रस्रवन् धातून् निष्पुरीषोऽथवाऽतिविट् ॥ ८३ ॥
तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः ।
शीर्णपायुबलिं मुक्तनालं पर्व्वास्थि * शूलिनम् ॥ ८४ ॥

छर्दिर्हन्तीति । कीदृक् ? वेगवती महता वेगेन प्रवर्त्तमाना मूत्रशकृतोरिव गन्धो यस्याः सा । उपमानाच्चेति गन्धस्येदादेशः । तथा सचन्द्रिका जलतैलबिन्दुसंस्थाना चन्द्रिकोच्यते । तथा सहास्रेण वर्त्तते विट् सास्रविट्, सास्रविट् च पूयञ्च रक्तञ्च कासश्च श्वासश्च ते विद्यन्ते यस्याः सैवम्, तथा अनुषङ्गिणी दीर्घकालानुबन्धिनी । तृष्णेति । तृष्णा ईदृशं नरं हन्ति । कीदृशम् ? अपररोगेण क्षपितं कर्षितम्, बहिर्जिह्वं बाह्यतो जिह्वां निःसारयन्तम्, तथा विचेतनम्; एतत् समुदितं रिष्टलक्षणम् । मदात्ययोऽतिशयेन शीतपीड़ितं क्षीणं तैलप्रभमुखञ्च नरं हन्ति । अर्शांसीति अर्शांसि पाण्यादिशोफयुक्तं हृदादिरुजाद्यातुरं नरं घ्नन्तीति वचनविपरिणामेन सम्बन्धः । हृदयादीनां रुजा सम्बन्धः । हृत्पार्श्वाङ्गरुजा च छर्दिश्च पायुपाकश्च ज्वरश्च तैरातुरं पीड़ितम् ॥ ७६—८१ ॥

अतीसारविकृतिमाह,—अतीसार इति । अतीसारो यकृत्पिण्डादिभिर्माक्षिकान्तैस्तुल्यो हन्ति । मेचको नीलवर्णः ॥ ८२ ॥

अतिरक्तेति । अतिरक्तासितस्निग्धपूत्यच्छश्चासौ घनवेदनश्चेति कर्म्मधारयः । कर्बुरो नानावर्णः । कस्मात् पुनरनेकवर्णः । यस्माद्धातून् रक्तमांसादीन् स्रवति । अतएवाह, —धातून् प्रस्रवन् । लक्षणे शतृप्रत्ययः । धातुप्रस्रवणेन हेतुना नानावर्णत्वं लक्ष्यते । तथा निष्पुरीषः पुरीषरहितः, अथवा अतिविट् बहुपुरीषः, तथा तन्तुमान् मक्षिकाक्रान्तो राजीमान् चन्द्रकैर्युतश्च । ईदृशोऽतीसारो वक्ष्यमाणं नरं हन्ति । शीर्णा गुदबलयो यस्य तम्, मुक्तो नालो नालक इव यस्य तं मुक्तनालं मुक्तबन्धनमित्यर्थः ।

* पर्व्वास्थीत्यत्र मर्म्मास्थीति वा पाठः ।

स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयेत् ।
सतृट्श्वासज्वरच्छर्दि-दाहानाहप्रवाहिकः ॥ ८५ ॥
अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ।
मेह-स्तृड्-दाह-पिटिका-मांसकोथातिसारिणम् ॥ ८६ ॥
पिटिका-मर्म-हृत्-पृष्ठ-स्तनांस-गुद-मूर्द्धगाः ।
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ॥ ८७ ॥
सर्वञ्च मांससङ्कोच-दाह-तृष्णा-मद-ज्वरैः ।
विसर्प-मर्म-संरोध-हिक्का-श्वास-भ्रम-क्लमैः ॥ ८८ ॥
गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ।
सिरानद्धो ज्वर-च्छर्दि-हिक्काध्मान-रुजान्वितः ।
कास-पीनस-हृल्लास-श्वासातीसार-शोफवान् ॥ ८९ ॥
विण्मूत्रसंग्रह-श्वास-शोफ-हिक्का-ज्वर-भ्रमैः ।
मूर्च्छा-छर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ॥ ९० ॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।
विरेचनहतानाहमानह्यन्तं पुनः पुनः ॥ ९१ ॥
पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ॥ ९२ ॥

---

तथा पर्वास्थिशूलो विद्यते यस्य तम्, तथा स्रस्तपायुं स्थानाच्च्युतगुदम्, तथा बलेन क्षीणम् । पुनः प्रक्रतत्वादतीसारी विशिष्यते । अन्नमेवापक्कमुपवेशयन् सह तृडादिभिः सप्तभिरुपद्रवैर्युक्तः पूर्वोक्तविशेषणमातुरं हन्ति ॥ ८३—८५ ॥

अश्मरीति । अश्मरी शूनवृषणादियुक्तं नरं हन्ति । मेह इति । मेहः प्रमेह-स्तृड़ाद्युपद्रवयुक्तं नरं हन्ति ॥ ८६ ॥

पिटिकेति । पिटिका मर्मादिगाः, अथवा पर्वादिस्थाः मन्दोत्साहं प्रमेहातुरं घ्नन्ति । सर्वञ्च नरं मांससङ्कोचादिभिः क्रमान्तैर्युक्तं पिटिका घ्नन्ति ॥ ८७ । ८८ ॥

गुल्मेति । गुल्मः पृथुपरीणाहो यावच्छोफवान् हन्ति नरम् ॥ ८९ ॥

इदानीमुदरव्याधिनिमित्तं रिष्टमाह,—विडिति । विण्मूत्रादिभिरतीसारान्तरुप-द्रवैर्हेतुभूतैर्जठरञ्च कर्तृभूतं आतुरं हन्ति । कीदृशम् ? दुर्बलं हीनबलम्, तथा शूने अक्षिणी यस्य तं । बहुव्रीहौ सक्थ्यक्ष्णोरिति टच । कुटिल उपस्थो बस्त-मेढ्र-वृषणादि-रूपो यस्य तम्, तथा उपक्लिन्नदेहत्वचौ यस्य तम् । विरेचनेन हत आनाहो यस्य तम् । मुहुर्मुहुरानह्यन्तम् ॥ ९० । ९१ ॥

पाण्डुरोगरिष्टमाह,—पाण्डुरिति । पाण्डुरोगः श्वयथुयुतः पीताक्षनखदर्शनमातुरं हन्ति ॥ ९२ ॥

तन्द्रा-दाह-ज्वर-* च्छर्दि-मूर्च्छाध्मानातिसारवान् ।
अनेकोपद्रवयुत: पादाभ्यां प्रसृतो नरम् ॥ ९३ ॥
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ।
राजीचित: स्रवंश्छर्दि-ज्वर-श्वासातिसारिणम् ॥ ९४ ॥
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयो: क्षये ।
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिन: ॥ ९५ ॥
श्वयथुर्यस्य पादस्थ: परिस्रस्ते च पिण्डिके ।
सोदत: सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥ ९६ ॥
आननं हस्तपादञ्च विशेषाद् यस्य शुष्यत: ।
शूयेते वा विना देहात् स मासाद् याति पञ्चताम् ॥९७॥
विसर्प: कास-वैवर्ण्य-ज्वर-मूर्च्छाङ्गभङ्गवान् ।
भ्रमास्यशोष-हृल्लास-देहसादातिसारवान् ॥ ९८ ॥
कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम् ।
मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ॥ ९९ ॥

---

शोफरिष्टं ब्रूते,—तन्द्रेति । तन्द्रादियुक्त: शोफोऽनेकरुपद्रवैर्ज्वरश्वासादिभिर्युत: पादत: प्रसृतो नरं हन्ति । मुखात् प्रसृत: शोफ: पूर्वोक्तविशेषणयुक्तो नारीं हन्ति । कुक्षिगुह्यात् प्रसृत उभावपि स्त्रीपुंसौ हन्ति । तथा राजीचितो यथास्वदोषवर्णाभी रेखाभिर्व्याप्त:, तथा स्रवन् यथादोषं स्रुतिं कुर्वन् छर्द्यादियुतं पुरुषं हन्ति ॥ ९३।९४ ॥

ज्वरेति । ज्वरातिसारौ स्वतन्त्रस्य शोफस्यान्तेऽवसाने जायेते ; अथवा श्वयथुस्तयोर्ज्वरातिसारयो: क्षये जायते । एवं ज्वरातिसारशोफा यस्य शरीरिणो जायन्ते तस्य तेऽन्ताय मृत्यवे जायन्ते, दुर्बलस्य विशेषेणान्ताय शीघ्रकारित्वात् ॥ ९५ ॥

श्वयथुरिति । श्वयथु: पादस्थो यस्य, पिण्डिके च परिस्रस्ते स्थानाच्युते, सक्थिनी च सोदत: सादं गच्छतस्तं तादृशं नरं वैद्यो वर्जयेत् ॥ ९६ ॥

आननमिति । मुखं हस्तचरणञ्च यस्यैते विशेषेण शुष्यन्ति देहं विना वा यस्य शूयन्ते, स आतुरो मासेन पञ्चतां पञ्चमहाभूतसमत्वं याति ॥ ९७ ॥

विसर्प इति । विसर्प: कासादिमान् हन्ति ॥ ९८ ॥

कुष्ठमिति । कुष्ठञ्च कर्तृ विशीर्यमाणाङ्गं रक्तनेत्रादियुक्तं नरं हन्ति । विशीर्यमाणाङ्गं कीर्यवच्छरीरम् ॥ ९९ ॥

---

* अरुचीति पाठान्तरं ।

वायुः सुप्तत्वचं भग्नं कफशोफरुजातुरम्।
वातास्रं मोह-मूर्च्छाय-मद-स्वप्न-ज्वरान्वितम्।
शिरोग्रहाऽरुचि-श्वास-सङ्कोच-स्फोटकोथवत् ॥ १०० ॥
शिरोग्रहोऽरुचि-श्वास-मोह-विड्भेद-तृड्भ्रमैः ॥ १०१ ॥
घ्नन्ति सर्वामयाः क्षीण-स्वरधातुबलानलम् ॥ १०२ ॥
वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी।
गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत्॥१०३
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः।
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति ॥ १०४ ॥
वाताष्ठीलाऽतिसंवृद्धा तिष्ठन्ती दारुणा हृदि।
तृष्णया तु परीतस्य सद्यो मुष्णाति जीवितम् ॥ १०५ ॥
शैथिल्यं पिण्डिके वायुर्नीत्वा नासाञ्च जिह्मताम्।
क्षीणस्यायस्य मन्ये वा सद्यो मुष्णाति जीवितम् ॥१०६॥
नाभीगुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन्।
गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ॥ १०७ ॥

---

वायुरिति। वायुः सुप्तत्वगादियुक्तं नरं हन्ति। वातास्रं मोहादियुतं हन्ति। कीदृशं शिरोग्रहादियुक्तम्। शिरोरोगोऽरुच्यादिभिर्युक्तं नरं हन्ति ॥ १०० । १०१ ॥

घ्नन्तीति। सर्वे च ते आमयाश्च ते क्षीणस्वरादिकं नरं घ्नन्ति ॥ १०२ ॥

वातव्याधिरिति। वाताख्यो व्याधिर्यस्य स नरः, तथा अपस्मारवान् कुष्ठवान् रक्तपित्ती जठरी क्षयवान् गुल्मवान् प्रमेही च तानेतान् पुरुषान् क्षीणान् सतोऽल्पेऽपि विकारे सति वर्जयेत् ॥ १०३ ॥

बलेति। बलमांसयोरत्यन्तं क्षयो, रोगस्य वृद्धिः, तथा अरोचकः एते यस्यातुरस्य लक्ष्यन्त उपलभ्यन्ते, स त्रीन् पक्षान् सार्द्धं मासं न जीवति ॥ १०४ ॥

वातेति। वाताष्ठीला अत्यन्तं प्रवृद्धा हृदि तिष्ठन्ती दारुणाऽतिरुक्करी तृषायुक्तस्य पुंसः शीघ्रमेव जीवितहारिणी भवति ॥ १०५ ॥

शैथिल्यमिति। वायुः पिण्डिके शैथिल्यं नीत्वा, तथा नासां जिह्मतां कुटिलतां नीत्वा, तथा क्षीणस्य नरस्य मन्ये आयम्याऽऽयासयित्वा द्राग् जीवितं मुष्णाति ॥ १०६ ॥

नाभीति। वायुर्वा नाभीगुदयोरन्तरं मध्यं गत्वा वङ्क्षणौ समाश्रयन् जीवितं मुष्णाति। बली वा पवनः पायुं हृदयञ्च गृहीत्वाऽवष्टभ्य क्षीणदेहस्य पुंसः सद्यो मुष्णाति जीवितम्। वायुर्मलान् विबद्ध्य संनिरुद्ध्य बस्तिशिरो नाभिञ्च विबध्य रुजं

मलान् बस्तिशिरो नाभिं विबद्ध्य जनयन् रुजम् ।
कुर्वन् वङ्क्षणयोः शूलं तृष्णां भिन्नपुरीषताम् ।
श्वासं वा जनयन् वायुर्गृहीत्वा गुदवङ्क्षणम् ॥ १०८ ॥
वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।
स्तिमितस्याततास्य सद्यो मुष्णाति जीवितम् ॥ १०९
सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणञ्च सन्धीनां मुमूर्षोरुपजायते ॥ ११० ॥
गोसर्गे वदनाद् यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ १११ ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः ।
उत्पद्याशु विनश्यन्ति न चिरात् स विनश्यति ॥ ११२ ॥
मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ।
अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ॥ ११३ ॥

---

जनयन् सद्यो मुष्णाति जीवितम् । वायुर्वङ्क्षणयोः शूलं, तथा तृष्णां कुर्वन् भिन्नपुरीषताञ्च विदधदथवा श्वासं जनयन् गुदं वङ्क्षणौ च गृहीत्वा सद्यो मुष्णाति जीवितम् ॥ १०७ । १०८ ॥

वितत्येति । मारुतः पर्शुकानां पार्श्वास्थ्नामग्राणि प्रान्तानि वितत्य प्रसार्य, तथा उरो वक्षो गृहीत्वा स्तिमितस्यार्द्रतां गतस्य सस्वेदस्य निश्चलस्य वा, तथा आयताक्षस्य प्रसारितनेत्रस्य सद्यो मुष्णाति जीवितम् ॥ १०९ ॥

सहसेति । सहसा झटित्येव ज्वरसन्तापः, तथा तृष्णामूर्च्छाबलक्षयः, सन्धिविश्लेषश्च इत्येतन्मुमूर्षोः सद्यो मरिष्यतो जायते ॥ ११० ॥

गोसर्ग इति । गोसर्गे गवां मोचकाले प्रत्यूषसि लेपज्वरेण श्लेष्मज्वरेणोपतप्तस्य वदनात् स्वेदः प्रच्यवति, तस्य दुर्लभं जीवितम् । दुर्लभमितीषद्दुःसुष्वित्यादिना खल्। न सुदुर्भ्यामिति नुम्निषेधः । ननु रिष्टानां निश्चितानामिहाभिधानप्रस्तावात् किमिदमनिश्चितमुक्तं दुर्लभमिति ? नैवम्, ऐकान्तिक एवार्थेऽयं हि दुर्लभशब्दः । तथा च वाल्मीकिना जगदे,—"पुत्र वीक्षस्व पितरं सहृष्टश्च कुरु प्रियम् । दुर्लभं जीवितं ह्यस्य पुनः पुत्रो भविष्यति" इति । तस्मात् दुर्लभशब्दस्य नास्ति जीवितमित्येष निश्चित एवाऽर्थः प्रसिद्धः ॥ १११ ॥

प्रवालेति । मसूरिका मसूरसंस्थानाः पिटिकाः प्रवालगुटिकासदृशा यस्य शरीरे उत्पद्य शीघ्रं विनश्यन्ति, स नरो द्रागेव विनश्यति ॥ ११२ ॥

मसूरेति । मसूरविदलाकाराः, तथा प्रवालसदृशाः, तथा अन्तर्मध्ये वक्त्रं मुखं येषां ते, तथा किणाभाः, एते चतुःप्रकारा अपि विस्फोटा देहस्य नाशनाः ॥ ११३ ॥

कामलाऽक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।
संत्रासश्चोष्णताङ्गे च यस्य तं परिवर्ज्जयेत् ॥ ११४ ॥
अकस्मादनुधावच्च विद्दष्टं त्वक्समाश्रयम् ॥ ११५ ॥
यो वातजो न शूलाय स्यान्न दाहाय पित्तजः ।
कफजो न च पूयाय मर्मजश्च रुजे न यः ॥
अचूर्णचूर्णकीर्णाभो यत्राकस्माच्च दृश्यते ।
रूपं शक्तिध्वजादीनां सर्वांस्तान् वर्जयेद्व्रणान् ॥ ११६ ॥
विण्मूत्रमारुतवहं कृमिणञ्च भगन्दरम् ॥ ११७ ॥
घट्टयन् जानुना जानुपादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ ११८ ॥
दन्तैश्छिन्दन्नखाग्राणि तैश्च केशांस्तृणानि च ।
भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥ ११९ ॥
हृष्टरोमा सान्द्रमूत्रः शुष्ककासो ज्वरी च यः ।
मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ।

---

कामलेति । यस्य अक्ष्णोः कामला मुखञ्च पूर्णं, तथा शङ्खयोर्मुक्तमांसता मांसशैथिल्यं, तथा सन्त्रासः शरीरे उष्णता च, तं नरं परिवर्जयेन्न चिकित्सेत् ॥ ११४ ॥

अकस्मादिति । अकस्मात् कारणं विना त्वक्समाश्रयं विद्दष्टं यस्यानुधावन्नश्यति तमपि वर्जयेत् ॥ ११५ ॥

य इति । यो व्रणो वातजो लिङ्गानुमितः शूलाय न भवति, पित्तजो न दाहाय, कफजश्च न पूयाय, मर्मजश्च न पीड़ायै, तथा यो व्रणोऽचूर्णश्चूर्णेनाकीर्णाभश्चूर्णव्याप्त इव दृश्यते, तथा यस्मिन् व्रणे कारणं विनाऽकस्माद्रूपं शक्तिध्वजादीनां दृश्यते । आदिशब्देन शल्यतोमरादिपरिग्रहः । तान् सर्वान् व्रणान् वर्जयेत् ॥ ११६ ॥

विड़िति । विण्मूत्रमारुता येन निःसरन्ति, क्रिमिजुष्टश्च यः तञ्च भगन्दरं वर्जयेत् । कृमिणमिति पामादित्वान्नप्रत्ययः ॥ ११७ ॥

घट्टयन्निति । यश्चातुरो जानुना जानु घट्टयन्, तथा पादावुद्यम्योत्क्षिप्य पातयन् संक्षिपन् मुहुर्मुहुरात्मीयवक्त्रं मुखमपास्यति कारणं विना अन्यत्र नयति स न जीवति ॥ ११८ ॥

दन्तैरिति । यश्चातुरो हृष्टरोमा सान्द्रमूत्रः, तथा शुष्ककासी, तथा ज्वरी स इदमिदं कुर्वन्न जीवति । किं तदित्याह,—दन्तैश्छिन्दन्नखाग्राणि, तथा तैरेव दन्तैः केशांश्छिन्दन्, तथा तृणानि छिन्दन् तथा भुवं काष्ठेन विलिखन् लोष्टमपरलोष्टेन ताडयन् मुहुर्मुहुः पुनः पुनर्हसन्, तथा मुहुः क्ष्वेडन् शब्दं कुर्वन् मुहुः शय्यां पादेन यो हन्ति,

मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ १२० ॥
मृत्यवे सहसार्त्तस्य तिलकव्यङ्गपिप्लवः ।
मुखे दन्तनखे पुष्पं जठरे विविधाः शिराः ॥ १२१ ॥
ऊर्द्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम् ।
शर्म वाऽनधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ॥ १२२ ॥
विकारा यस्य वर्द्धन्ते प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥ १२३ ॥
यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम् ।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥ १२४ ॥
विज्ञातं बहुशः सिद्धं विधिवच्चावतारितम् ।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ॥१२५॥
भवेद् यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ।
अकस्माद् वर्णगन्धादेः स्वस्थोऽपि न स जीवति ॥ १२६ ॥

---

तथा छिद्राण्यपरापराधान् विमृशन् घोषयन् । केचिद् व्याचक्षते, छिद्राणि नासिकादीनि विमृशन् संस्पृशन्निति ॥ ११९ । १२० ॥

मृत्यवे इति । आर्त्तस्यातुरस्य सहसा जातो मुखे वदने तिलकव्यङ्गपिप्लवो मृत्यवे मरणाय, तथा दन्ताश्च नखाश्च तस्मिन् दन्तनखे सहसा पुष्पं जातमातुरस्य मृत्यवे, तथा जठरे सहसा विविधा नानाविधा वर्णेन संस्थानेन च सिरा जाता आर्त्तस्य मृत्यवे मरणं सूचयन्तीत्यर्थः ॥ १२१ ॥

ऊर्द्ध्वमिति । ऊर्द्ध्वश्वासादिमन्तमातुरं सुमतिर्वर्जयेन्न चिकित्सेत् ॥ १२२ ॥

विकारा इति । विकारा ज्वरादयो यस्यातुरस्य अकस्माद् वर्द्धन्ते । प्रकृतिः स्वभावः परिहीयते—यथा शूरः कातरः स्यात् सद्रवो वा तृष्णावानित्यादिः । अथवा प्रकृतिर्वातादिः, तेन वातप्रकृतिः पित्तप्रकृतिर्भवेदित्यादि । तस्य सहसा शीघ्रमेव जीवितं मृत्युर्हरति ॥ १२३ ॥

यमिति । यमातुरमुद्दिश्य भिषक् यतमान औषधं सम्पादयितुं न शक्नोति, तस्य दुर्लभं जीवितम् ॥ १२४ ॥

विज्ञातमिति । यस्यातुरस्य औषधं विज्ञातं बहुशः सिद्धं विधानेन चोपयुक्तं न सिद्ध्यति तस्य चिकित्सितं नास्ति ॥ १२५ ॥

भवेदिति । यस्य औषधे कषाय-घृत-लेहादौ, तथाऽन्ने भक्तयूषादिके वा कल्प्यमाने विपर्ययोऽन्यथासम्पत्तिर्वर्णगन्धरूपादेरकस्मान्निमित्तं विनापि भवेत्, स स्वस्थोऽपि न जीवति ॥ १२६ ॥

निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति ।
आतुरस्य गृहे यस्य भिन्दते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ १२७ ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ।
संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ १२८ ॥
कथयेन्नैव पृष्टोऽपि दुःश्रवं मरणं भिषक् ।
गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् ॥ १२९ ॥
यमदूत-पिशाचाद्यैर्यत्परासुरुपास्यते ।
घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥ १३० ॥
आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ।
रिष्टज्ञानादृतस्तस्मात् सर्वदैव भवेद् भिषक् ॥ १३१ ॥

---

निवात इति । यस्य चातुरस्य गृहे निवाते इन्धनसहितं ज्योतिरग्न्यादिरूपं शाम्यति तस्य दुर्लभं जीवितम् । यस्य चातुरस्य गृहेऽमत्राणि भाजनान्यतिमात्रमत्यर्थं भिद्यन्तेऽथवा पतन्ति तस्य दुर्लभं जीवितम् ॥ १२७ ॥

यमिति । यं नरं दुर्बलं संशयं प्राप्तं सन्तं सहसा झटित्येव रोगी मुञ्चति, तस्य नरस्याऽऽत्रेयो ऋषिर्जीवितं संशयप्राप्तं मन्यते प्रतिपादयति ॥ १२८ ॥

कथयेदिति । गतासोर्बन्धुमित्राणि तेषां प्रकृतत्वाद्गतासुसम्बन्धि मरणं दुःश्रवं मरणं पृष्टोऽपि वैद्यो न कथयेत् किमुताऽपृष्टः । तथाहि । वैद्योक्ताद्दुःश्रवमरणशब्दश्रवणात् सन्ताप उत्पद्यते तत्सुहृदाम् । एवं च भिषजः परोपतापकरणान्यायेन योगः स्यात् । न च तं गतासुं चिकित्सितुं वैद्य इच्छेत् । तथाविधातुरचिकित्सनाद्वैद्यस्यायशःसंयोगः स्यात् । गतासुरिति भाविनि भूतवदुपचाराद्भविष्यति मृतो वैद्यः । यथा । वृष्टो देवः सम्पन्नाः शालय इति ॥ १२९ ॥

चिकित्साया निष्फलत्वाच्च तं नोपक्रमेदिति प्रतिपादयन्नाह,—यमदूतेति । यद्यस्मात् यमदूतपिशाचाद्यैः परासुर्गतासुरुपास्यते । किम्भूतैः ? औषधानां रसायनादीनां वीर्याणि शक्तीर्घ्नद्भिर्यथायथं व्याधिप्रशमनसामर्थ्यमन्यथा कुर्वद्भिः । तस्मात् तम्परिवर्जयेत् ॥ १३० ॥

आयुर्वेदेति । यद् यस्मात् आयुर्वेदज्ञे आयुर्वेदविदि वैद्ये आयुर्वेदफलं सकलं प्रतिष्ठितं, तस्माद् रिष्टज्ञानादृतो भिषग् भवेत् । आयुर्वेदस्य ह्येतत् फलम्, यदायुषः परिज्ञानं परिपालनञ्च ; तच्चोभयं रिष्टज्ञानात् जायते । तस्मादत्रादरः कार्यः ॥ १३१ ॥

मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।
तयोरप्यक्षयाद् दृष्टं विषमापरिहारिणाम् ॥ १४१ ॥
इत्यष्टाङ्गहृदये शारीरस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

मरणमिति । आयुश्च पुण्यञ्चोभयञ्च प्रकृतत्वादायुःपुण्ययोरुभयोस्तेषामायुःपुण्योभयानां क्षय आयुःपुण्योभयक्षयस्तस्मादायुःपुण्योभयक्षयात् मरणं प्राणिनां शरीरिणां दृष्टमुपलब्धं मुनीन्द्रैः । तत्र सर्वोपकरणसम्पन्नानामपि सन्यग्वाह्यमानरथवदुपभोगवशेन यथोचितप्रमाणायुःक्षयात् यन्मरणं जायते, तदायुःक्षयादिति बोध्यम् । ज्योतिःशास्त्रविद्भिर्जातकपरिकल्पितनियतायुषामन्येषां यदाहाराद्यभावेन मरणं तत् पुण्यक्षयाद्बोध्यम् । यत्रायुःक्षयो यथावल्लक्षितो दृश्यते तथैव च पुण्यक्षयः, तदुभयक्षयात् मरणं बोध्यम् । नचैतदेव हेतुत्रयमायुःपुण्योभयक्षयलक्षणं शरीरिणां मरणे कारणं । किन्तर्हि अन्यदपि विद्यत इत्याह,—तयोरित्यादि । नन्वायुःपुण्योभयक्षयात्मकं लक्षणत्रितयं प्रकृतं, ततश्च तेषामिति निर्देशः प्राप्तः । नैतदेवम्, इह ह्यायुःपुण्ययोरेव परामर्शः सर्वनाम्ना युक्तो नतु तृतीयस्य हेतोस्तदात्मकत्वादुभयस्य । अतस्तयोरप्यक्षयादिति युक्तो द्वयोर्निर्देशः । तयोरायुःपुण्ययोरक्षानितोऽपि मरणं दृष्टं यस्माद् दीर्घायुषोपेतानां तथा पुण्यवत्त्वलक्षणं यत् सर्वोपकरणत्वं तत् सम्पन्नानामस्तेव्योऽद्भूतम् । विषमं चण्डमातङ्गतुरङ्ग-गो-महिष-दुर्गन्ध-वेग-श्वभ्र-प्रपात-केशरी-सरीसृपादिसेवनं, तत्परिहरन्त्येवं शीलं येषां ते विषमापरिहारिणस्तेषां यन्मरणं तद्विषमापरिहरणाद् भवति । यद्यप्यायुःक्षयादेव सव मरणं तथापि पुण्यक्षयविषमापरिहरणाभ्यामायुःक्षयस्यैव कारणभूतत्वादेवमुक्तम् । तदेवं विद्यमानसर्वोपकरणसम्पन्नत्वे विषममपरिहरतां यन्मरणं तद्विषमापरिहारिणां बोध्यम् । वाह्यवाहकदोषादिकारणरथविनाशसदृशमिति ॥ १४१ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां शारीरेषु विकृतिविज्ञानीयः पञ्चमोऽध्यायः ॥ ५ ॥

---

विकृतिविज्ञानीयाध्यायादनन्तरं दूतादिविज्ञानीयाध्यायारम्भोऽयं सम्बन्धः । उक्तमायुःप्रमाणं स्वस्थातुराणां रूपेन्द्रियस्वरच्छायादिविकृतिलक्षणैः प्रतिनियतविशिष्टव्याधिलक्षणैरपि, अयं पुनरध्यायो दूताद्याश्रयैः शुभाशुभनिमित्तैः शुभाशुभं सूचयितुमारभ्यते,—अथात इत्यादि । दूतः स्त्रीपुरुषादिर्यं आतुरेण प्रेष्यते स कथ्यते । दूत आदिर्येषां ते

पाखण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ २ ॥
दीनं भीतं द्रुतं त्रस्तं रूक्षामङ्गलवादिनम् ।
शस्त्रिणं दण्डिनं षण्डं मुण्डश्मश्रुं जटाधरम् ॥ ३ ॥
अमङ्गलाह्वयं क्रूरकर्माणं मलिनं स्त्रियम् ।
अनेकव्याधितं व्यङ्गं रक्तमाल्यानुलेपनम् ॥ ४ ॥
तैलपङ्काङ्कितं जीर्ण-विवर्णार्द्रैकवाससम् ।
खरोष्ट्रमहिषारूढं काष्ठलोष्टादिमर्द्दिनम् ।
नानुगच्छेद्भिषग् दूतमाह्वयन्तञ्च दूरतः ॥ ५ ॥
अशस्तचिन्तावचने नग्ने छिन्दति भिन्दति ।

---

दूतादयः । आदिग्रहणात् वैद्यस्य गृहान्निर्गच्छतः पथि गच्छतो यावदातुरगृहे प्रवेशः प्रविष्टस्यापि यानि यानि शुभाशुभसूचकानि निमित्तानि दृश्यन्ते श्रूयन्ते च तेषां परिग्रहः । दूतादीनां विज्ञानं दूतादिविज्ञानम् । यथा, एते दूतादयः शुभा एतेऽशुभा इति विशिष्टं निश्चितं ज्ञानमवबोधः परिच्छेद इत्यर्थः । तस्मै हितो दूतादिविज्ञानीयः । शेषं पूर्ववद् व्याख्येयम् ॥ १ ॥

पाखण्डेति । पाखण्डः षण्णवतिभेदभिन्नो व्रात्यविशेषः । आश्रमा ब्रह्मचारि-गृहस्थ-भिक्षु-वैखानस-भेदेन चत्वारः ; वर्णा ब्राह्मण-क्षत्रिय-विट्-शूद्राश्चत्वारः । ते च प्रतिलोमानुलोमतो बहवः । तेषां पाखण्डादीनां ये सवर्णाः समानवर्णास्तुल्यजातयो दूतास्ते च कर्मसिद्धये कर्मसिद्ध्यर्थं भवन्ति, कर्मसिद्धिं सूचयन्तीत्यर्थः । यथा पाखण्डस्य पाखण्डी दूतः, ब्रह्मचारिणो ब्रह्मचारी, गृहस्थस्य गृहस्थः, वानप्रस्थस्य वानप्रस्थः, भिक्षोर्भिक्षुः, यावच्छूद्रस्य शूद्रः शुभ इति । त एव पाखण्डादयो विपरीता विजातीयाः सवर्णा ये न भवन्ति ते कर्म्मविपत्तये चिकित्सानैष्फल्याय भवन्ति ; चिकित्सानैष्फल्यं सूचयन्तीत्यर्थः ॥ २ ॥

दीनमिति । सवर्णमपि दूतं दीनभीतादिविशेषणविशिष्टं, यावत्काष्ठलोष्टादिमर्द्दिनं भिषग् दृष्ट्वा नानुगच्छेत् चिकित्सानैष्फल्यादिति । रूक्षवादिनं परुषभाषिणम् ; अमङ्गल-वादिनं मरिष्यत्यसौ पतिष्यति न जीवतीत्याद्यमङ्गलवादिनम् ; तथा षण्डं नपुंसकं, तथा मुण्डं कृतवपनं श्मश्रुमुखव्यञ्जनं यस्य स एवं, मुण्डश्मश्रुश्चासौ जटाधरश्च तम् ; तथा अमङ्गलोऽकल्याण आह्वयो यस्य तम् ; व्यङ्गं हीनाङ्गम् । तैलपङ्काभ्यामङ्कितं दिग्धम् ; तथा जीर्णादिकं वासो यस्य तम् ; तथा दूरादाह्वयन्तमाकारयन्तं नानुयायात् ॥ २—५ ॥

अशस्तेति । चिन्ता च वचनञ्च चिन्तावचने, अशस्ते चिन्तावचने यस्येति मत्वर्थे बहुव्रीहिः । वैद्योऽशस्तचिन्तां कुर्वति, अशस्तवचनञ्चोच्चारयति, मनुष्याणां मुमूर्षतामासन्न-

जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ॥ ६ ॥
सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते तथा ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ ७ ॥
विकारसामान्यगुणे देशे कालेऽथवा भिषक् ।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ ८ ॥
स्पृशन्तो नाभि-नासास्य-केश-रोम-नख-द्विजान् ।
गुह्य-पृष्ठ-स्तन-ग्रीवा-जठरानामिकाङ्गुलीः ॥ ९ ॥
कार्पासबुससोसास्थि-कपालमुशलोपलम् ।
मार्जनी-शूर्प-चैलान्त-भस्माङ्गार-दशातुषान् ॥ १० ॥
रज्जूपानत्तुलापाशमन्यद् वा भग्नविच्युतम् ।
तत्पूर्वदर्शने दूता व्याहरन्ति मरिष्यताम् ॥ ११ ॥
तथार्द्धरात्रे मध्याह्ने सन्ध्ययोः पर्ववासरे ।

---

मृत्यूनां सम्बन्धिनो दूता आयान्ति। मुमूर्षतामित्याशङ्कायामुपसङ्ख्यानमिति सन्। म्रियतेर्लुङ्लिङोश्चेति नियमादात्मनेपदाभावः। तथा च किम्भूते ? नग्ने विवस्त्रे छिन्दति भिन्दति किञ्चित्; तथा पावकमग्निं जुह्वाने पितृभ्यश्च पिण्डान्निर्वपत्यनुप्रयच्छति यावदप्रयतेऽशुचौ। मनुष्याणामित्युपलक्षणम्। स्त्र्यादयोऽपीह गृह्यन्त एव ॥ ६ / ७ ॥

विकारेति। विकारेण ज्वरादिना सामान्यस्तुल्यो गुणो यस्यासौ विकारसामान्यगुणस्तस्मिंस्तथाविधे देशे काले वा दूतमभ्यागतं सम्मुखमागच्छन्तं दृष्ट्वा भिषक् तमातुरं दूतस्य प्रेषकं नोपाचरेत्। यथा, कफजे ज्वरादावामये घृतोदकादिद्रवसमीपे देशेऽनूपे वा काले वा प्रत्यूषस्यागतो दूतोऽशुभः; पित्तालये वह्न्यादिना सन्तप्ते देशे काले मध्याह्ने दूतोऽशुभः; वातरोगे परुष-रूक्ष-सिकता-पाषाण-शर्करादिविशिष्टे देशे काले सायाह्ने दूतोऽशुभः; विपरीतस्तु शुभः। छर्दिमेहातीसारादिषु सेतुभङ्गोऽशुभः; एष्वेव सेतुबन्धः शुभः ॥ ८ ॥

स्पृशन्त इति। तदित्यनेन वैद्यः परामृश्यते। तस्य पूर्वदर्शनं प्रथमदर्शनं तस्मिन् सति तत्काल एव मरिष्यतामासन्नमरणानां सम्बन्धिनो दूता नाभ्यादि स्पृशन्तो व्याहरन्ति। लक्षणहेत्वोः क्रियाया इति हेतावत्र शतृप्रत्ययः। नाभ्यादिस्पर्शनं हि मुमूर्षुदूतव्याहरणस्य हेतुः, मुमूर्षोर्वयं दूता इति प्रतिपादयन्तीत्यर्थः। अनामिकाङ्गुलिः कनीयसी निकटस्थिता; दशा वस्त्रवर्त्तिः; उपानच्चर्मपादुका; तुला मानविशेषः। न केवलं नाभ्यादि स्पृशन्तोऽपरमपि च भग्नविच्युतञ्च स्पृशन्त इति योज्यम् ॥ ९—११ ॥

तथेति। नाभ्यादिकमस्पृशन्तोऽप्यर्द्धरात्रादिष्वागच्छन्तो मरिष्यतां दूता व्याहरन्ति। । अर्द्धरात्रे इति अर्द्धःसर्वैकदेशेत्यत्र चकारादच् समासान्तः। आगच्छन्त इत्यत्रापि योज्यम्

षष्ठी-चतुर्थी-नवमी-राहु-केतूदयादिषु।
भरणी-कृत्तिकाऽऽश्लेषा-पूर्वाऽऽर्द्रापैत्र्यनैरृते ॥ १२ ॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम्।
पश्येन्निमित्तमशुभं तञ्च नानुव्रजेद् भिषक् ॥ १३ ॥
तद् यथा विकलः प्रेतः प्रेतालङ्कार एव वा।
छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ १४ ॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान्।
स्पर्शो वा विपुलः क्रूरो यद्वान्यदपि तादृशम् ॥ १५ ॥
तत् सर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १६ ॥
हाहाक्रन्दितमुत्क्रुष्टमाक्रुष्टं स्खलनं क्षुतम्।

---

पैत्र्यनैरृते इति मघामूलाख्ये नक्षत्रे। आदिशब्देनोत्पातदर्शन-क्षणचतुर्दश्यादयो गृह्यन्ते। संग्रहेऽप्युक्तम्,—"मध्याह्नोभयसन्ध्याऽर्द्धरात्र-चतुर्थी-षष्ठी-नवमी-पर्व्वदिनेषु। ग्रहोपरागोत्पातदर्शन-भरणी-कृत्तिकाऽऽर्द्राऽश्लेषा-मघामूलपूर्व्वासु चाशुभाः" इति ॥ १२ ॥

यस्मिन्निति। यस्मिन् दूते आतुरसंश्रयमातुरप्रतिबद्धं वाक्यं ब्रुवति सति अशुभं निमित्तं भिषक् पश्येत्, तं दूतमातुरचिकित्सार्थमागतं नानुव्रजेत् ॥ १३ ॥

किं तदशुभं निमित्तमित्याह,—तदिति। तद्यथाशब्दोऽशुभनिमित्तसन्दर्शनसम्बन्धार्थः। विकलोऽङ्गहीनः काणकुण्ठादिकः; प्रेतो मृत एव; प्रेतालङ्कारो यो मृतस्यानुलेपनवस्त्रादिनाऽलङ्कारो विधीयते; छिन्नं रज्ज्वादिकम्; दग्धं वस्त्रादिकम्; विनष्टं वा भग्नघटभाजनादिकम्। तद्वादीनि छिन्न-दग्ध-विनष्ट-वाचकानि वचांसि वचनानि श्रोत्रेण श्रूयन्ते। रसो वा कटुकस्तीव्र इत्यनेन रसाधारद्रव्यमनाहारप्रतिबद्धमुपलक्ष्यते। रसो हि रसनेन्द्रियग्राह्य एव; तस्मात् कटुकरसाधिष्ठितं द्रव्यं मरिचादि कटुकरसशब्देनेह गृह्यते। लोकेऽपि रसेन द्रव्यं व्यपदिश्यत एव तथा, इदं मधुरं द्रव्यमिदमम्लमिति। तदेवं कटुकरसाधिष्ठितं द्रव्यं यदा चक्षुषा गृह्यते वैद्येन तदा न शुभम्। तीव्रग्रहणादतीव्रस्य कुठेरकादेर्निरासः। गन्धश्च कौणपो महान् दुर्गन्धोऽतिशयेन तत्काल एव घ्राणेन्द्रियेण गृह्यते। स्पर्शो वा विस्तीर्णक्रूरोऽतिदुःसहस्तत्काल एवाग्न्यादिसम्बन्धी स्पर्शनेन्द्रियेण गृह्यते सोऽशुभः। यद्वेति। अथवा अपरमपि यत् तादृशं विकलाद्यशुभनिमित्तसदृशमनिर्दिष्टमपि रक्तकरवीरकुसुमादिकं तत् सर्वं वाक्यमभित आतुराश्रयाद्वाक्यादग्रेऽथवा वाक्यकाल आतुराश्रयवाक्यमध्ये विकलाद्यशुभनिमित्तम्, तदानीमशुभसूचकत्वात्। तस्मिन् काले दूतमभ्यागतमाभिमुख्येन तत्कालमेवागतं दृष्ट्वा येनासौ प्रेषितो दूतस्तमातुरं नोपाचरेत् ॥ १४—१६ ॥

वस्त्रातपत्रपादत्र-व्यसनं व्यसनोत्तमम् ॥ १७ ॥
चैत्यध्वजानां पात्राणां पूर्णानाञ्च निमज्जनम् ।
हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः ॥ १८ ॥
पथश्छेदोऽहि-मार्जार-गोधा-सरठ-वानरैः ॥ १९ ॥
दीप्तां प्रतिदिशं वाचं क्रूराणां मृगपक्षिणाम् ।
कृष्णधान्य-गुड़ोदश्वित्लवणासव-चर्मणाम् ॥ २० ॥
सर्षपाणां वसा-तैल-तृण-पङ्केन्धनस्य च ।
क्लीब-क्रूर-श्वपाकानां जालवागुरयोरपि ॥ २१ ॥
छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ।
निःसारस्य व्यवायस्य कार्पासादेररेरपि ॥ २२ ॥
शयनासनयानानामुत्तानानां तु दर्शनम् ।
न्युब्जानामितरेषाञ्च पात्रादीनामशोभनम् ॥ २३ ॥

---

अथान्यदप्यशुभं निमित्तमाह,—हाहेति । हाहाक्रन्दितमित्यादिकमशोभनमिति वक्ष्यमाणेन सम्बन्धः । हाहेति क्रन्दितं रुदितं क्वणनम्, तथा उत्क्रुष्टमुच्चैः कृत्वा क्रुष्टमाक्रुष्टमाक्रोशः, स्खलनं पतनं वैद्यस्यान्यस्य वा वस्त्रादीनां वैद्यस्य सम्बन्धिनां व्यसनं विनाशः । व्यसनिनामापद्गतानामीक्षणमालोकनं न शोभनमिति सर्वत्र योज्यम् । चैत्यादीनां निमज्जनं पतनं बुड़नञ्च, तथा हत इत्येवं रूपाणामनिष्टानाममङ्गलानां प्रवादा उच्चैरुच्चरितानि वाक्यानि । दूषणं भस्मपांशुभिर्वैद्यस्यैव पथि गच्छतो भस्मना पांसुना च विकिरणमशोभनम्, कर्म्मसिद्ध्यभावादातुरस्यापि मरणसूचकत्वात् ॥१७।१८॥

पथश्छेद इति । पथश्छेदो मार्गस्य छेदः अशोभन इति योज्यम् । कः ? सर्पमार्जारादिभिः । सरठः सर्पसदृशी रक्तवर्णा द्विमुखी प्राणिजातिश्चक्रलण्ड इत्यपरपर्यायः ॥ १९ ॥

दीप्तामिति । यस्यां दिशि सूर्य्यः स्थितः सा दीप्ता भण्यते । तथा चोक्तम्,— "अङ्गारिण्यर्कनिर्मुक्ता दीप्ता यस्यां दिवाकरः । प्रधूमितेष्यत्सूर्य्या वै शान्ताः पञ्चेतरा दिशः" इति । दीप्तां दिशं प्रति या वाचो वाक्यानि क्रूराणां क्रव्यभुजां मृगाणां द्वीपिशृगालादीनां पक्षिणाञ्च श्येनादीनां ता अशोभना इति लिङ्गविपरिणामेन सम्बन्धः । कृष्णेत्यादि । कृष्णधान्यादीनां यद्द दर्शनं वैद्यस्य पथि गच्छत आतुरगृहे प्रविशतो वा तदशोभनमशुभसूचकत्वात् । उदश्वित् तक्रम्, सर्षपी रक्ताभासः ; क्रूरो निष्ठुरवादी ; श्वपाकश्चाण्डालः ; जालमानायः ; वागुरा मृगबन्धनी; पूतिर्दुर्गन्धिः ; दुर्द्दर्शनः करालाकृतिः ; निःसारस्य व्यपगतसारस्य वस्तुनः ; व्यवायस्य मैथुनस्य ; कार्पासादेरित्यादिशब्देन कार्पासबुससीसादेर्दंतचिन्तानिर्द्दिष्टस्य ग्रहणम् । कार्पासादेः पदार्थस्य दर्शनं पथि

पुंसंज्ञा: पक्षिणो वामा: स्त्रीसंज्ञा दक्षिणा: शुभा: ॥२४॥
प्रदक्षिणं खगमृगा यान्तो नैवं श्वजम्बुका: ।
अयुग्माश्च मृगा: शस्ता: शस्ता नित्यञ्च दर्शने ॥
चाष-भास-भरद्वाज-नकुल-च्छाग-बर्हिण: ॥ २५ ॥
अशुभं सर्वथोलूक-बिड़ाल-सरटेक्षणम् ॥ २६ ॥
प्रशस्ता: कीर्त्तने कोल-गोधाहि-शश-जाहका: * ।
न दर्शने न विरुते वानरर्क्षावतोऽन्यथा ॥ २७ ॥
धनुरैन्द्रञ्च लालाटमशुभं शुभमन्यत: ॥ २८ ॥
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ॥ २९ ॥
दध्यक्षतादि निर्गच्छन् वक्ष्यमाणञ्च मङ्गलम् ।

---

गच्छत आतुरगृहं प्रविशतो वा वैद्यस्याऽशोभनम् । अरेर्दर्शनमशोभनम्; प्रकृतत्वाद् वैद्यस्यात्मशत्रुदर्शनम्, तथा शय्यादीनामुत्तानानामूर्द्ध्वमुखस्थितपादानां दर्शनम्, तथा इतरेषां पात्रादीनां घटशरावोदञ्चनादीनामधोमुखानां दर्शनमशोभनम् ॥ २०—२३ ॥

पुंसंज्ञा इति । पुंसंज्ञा: पुन्नामान: पक्षिणो वर्त्तकादयो वामस्थिता: प्रशस्ता: । स्त्रीनामानो बलाका-सारिकादयो दक्षिणस्थिता: शुभा: ॥ २४ ॥

प्रदक्षिणमिति । वामाद्दक्षिणं गच्छन्त: खगमृगा: शुभा: । खगा: काक-पारावतादय:; मृगा हरिणादय: । यान्तो नैवं श्वजम्बुका:, किं तर्हि ? दक्षिणाद् वामं गच्छन्त: शुभा इत्यर्थ: । अयुग्मा अपि मृगा: शुभा: । चाषादयो मयूरान्ता नित्यदर्शने वामतो दक्षिणतो वा शस्ता: ॥ २५ ॥

अशुभमिति । सर्वथा सर्वेण प्रकारेण वामतो दक्षिणतो वा युग्मानामयुग्मानां वा उलूकादीनां दर्शनमशुभम् । कीर्त्तने तु प्रशस्ता इत्येके ॥ २६ ॥

प्रशस्ता इति । कोलादय: कीर्त्तने प्रशस्ता: । कोल: शूकर: । वानरश्च ऋक्षश्च तौ दर्शने विरुते शस्तौ । अत उक्तन्यायात् अन्यथा विपरीतौ प्रशस्तौ । कीर्त्तनं तयोरप्रशस्तमित्यर्थ: ॥ २७ ॥

धनुरिति । ऐन्द्रं धनुर्लालाटमभिमुखमशुभम् । अन्यत् पुर: स्थितं सम्मुखं वर्ज्जयित्वा तिर्यक् पृष्ठतो वा स्थितं शुभम् । लालाटमिति भवार्थे अण् । ललाटशब्देनेह ललाटसमीपो देशो लक्ष्यते, सम्मुखमित्यर्थ: ॥ २८ ॥

अग्नीति । पात्राण्यग्निपूर्णान्यशोभनानि, तथा भिन्नानि भग्नानि, तथा विशिखान्यन्त:शून्यानि न शुभानीति वचनविपरिणामेन सम्बन्ध: ॥ २९ ॥

---

* चातका इति पाठान्तरं ।

वैद्यो मरिष्यतां वेश्म प्रविशन्नेव पश्यति ॥ ३० ॥
दूताद्यसाधु दृष्ट्वैवं त्यजेदार्त्तमतोऽन्यथा ।
करुणाशुद्धसन्तानो यत्नतः समुपाचरेत् ॥ ३१ ॥
दध्यक्षतेक्षु-निष्पाव-प्रियङ्गु-मधु-सर्पिषाम् ।
यावकांजन-भृङ्गार-घण्टा-दीप-सरोरुहाम् ॥ ३२ ॥
दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्षयोः ।
रत्नेभपूर्णकुम्भानां कन्यायाः स्यन्दनस्य च ॥ ३३ ॥
नरस्य वर्द्धमानस्य देवतानां नृपस्य च ।
शुक्लानां सुमनोबाल-चामराम्बरवाजिनाम् ॥ ३४ ॥
शङ्ख-साधु-द्विजो*ष्णीष-तोरण-स्वस्तिकस्य च ।
भूमेः समुद्धृतायाश्च वह्नेः प्रज्ज्वलितस्य च ॥ ३५ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वड़वायाः स्त्रिया अपि ॥ ३६ ॥

---

वैद्यस्यातुरस्य गृहप्रवेशे शुभाशुभसूचकानि निमित्तान्याह,—दधीति। आदिशब्देनेक्षुनिष्पावादिपरिग्रहः। दध्यक्षतावादी यस्य मङ्गलस्य तदेवम्। वैद्यः प्रविशन्नेव तत्काल एवातुरगृहाद्द दध्यक्षतादि यच्च वक्ष्यमाणं तन्निर्गच्छन्निःसरन् मरिष्यतामासन्नमरणानां पश्यति ॥ ३० ॥

दूतेति। एवं पूर्वोक्तेन प्रकारेण दूताद्यसाध्वशुभं पूर्वनिर्द्दिष्टं दृष्ट्वा आर्त्तमातुरं त्यजेन्न चिकित्सेत्। आदिशब्देन शकुनादेर्ग्रहणम्। अतोऽन्यथेति। दूतादि शुभं दृष्ट्वा तमातुरं वैद्यो यत्नेन समुपाचरेत्। किम्भूतः? करुणया शुद्धं निर्म्मलं सन्तानं चेतो यस्य स एवम्भूतः सन् ॥ ३१ ॥

अथ तदेव दध्यक्षताद्याह,—दधीति। दध्यक्षतादीनां दर्शनं पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणमिति वक्ष्यमाणेन सम्बन्धः। अक्षता यवाः, अखण्डितास्तण्डुला इत्यन्ये, धान्यमित्राखण्डितमक्षतशब्दवाच्यमित्यपरे। यावकमलक्तकः; भृङ्गारः कनकालुका; आर्द्रमत्स्यार्द्रमांसम्। आर्द्रग्रहणमत्र शुष्कपरिहारार्थम्। भक्षं मोदकादि; पद्मरागादिकं रत्नम्; इभो हस्ती। नरस्येति। शौर्यत्यागप्रज्ञाराजसत्कारादिभिर्वर्द्धमानः प्रतिदिनमुपचयं गतस्तथाविधस्य पुरुषस्य दर्शनं शुभम्। शुक्लानां सुमनःप्रभृतीनां दर्शनं शुभम्। बालचामरं केशप्रकीर्णकम्; वाजी तुरङ्गः। उष्णीषं शिरोवेष्टनम्; मनोज्ञस्य हृदयहारिणोऽन्नपानस्य; शकटस्य रथस्य; नृभिर्नरैः पूर्णस्य सम्भृतस्य। धेन्वा इत्यादि। स्त्रिया अपीति-अपिशब्दः समुच्चये। यथा धेन्वाः सवत्साया दर्शनमेव

---

* ध्वज इति वा पाठः।

जीवंजीवक-सारङ्ग-सारस-प्रियवादिनाम् *।
रुचकादर्शसिद्धार्थ-रोचनानाञ्च दर्शनम् ॥ ३७ ॥
गन्धः सुसुरभिर्वर्णः सुशुक्लो मधुरो रसः।
गोपतेरनुकूलस्य स्वरस्तद्वद् गवामपि ॥ ३८ ॥
मृगपक्षिनराणाञ्च शोभिनां शोभना गिरः।
छत्र-ध्वज-पताकानामुत्क्षेपणमभिष्टुतिः ॥ ३९ ॥
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिःस्वनाः।
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ॥ ४० ॥
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥ ४१ ॥
इत्युक्तं दूतशकुन स्वप्नानूर्द्धं प्रचक्षते ॥ ४२ ॥
स्वप्न मद्यं सह प्रेतैर्यः पिबन् कृष्यते शुना।

वड़वायाः स्त्रियाश्च सवत्सायाः सापत्याया इति। रुचको वलय आभरणविशेषः। सिद्धार्थो गौरसर्षपः; गन्धः सुष्ठु सुरभिः; वर्णः सुष्ठु शुक्लः सितः; रसो मधुरः; गोपतेर्वृषभस्यानुकूलस्याकुपितस्य स्वनो न प्रतिकूलस्य कुपितस्य शब्दः। तद्वद्गोपतिना तुल्यो गवामप्यनुकूलानां शब्द इत्यर्थः। तथा शोभिनां प्रशस्तानां मृगादीनां प्रशस्ता गिरः। विद्यादारोग्यलक्षणमिति योज्यम्। मृग-पक्षि-नरा ह्यशोभिनोऽपि शृगालोलूक-पुल्कस-चाण्डालादयः सन्ति, तद्व्यवच्छेदनार्थं शोभिनामिति विशेषणम्। शोभिनामपि मृगादीनां चामरोगार्त्ताभिहतानामशोभना वाचः स्युस्तत्त्यागार्थं शोभना इति विशेषणम्। छत्रादीनामुत्क्षेपणमुपरि स्थापनम्; पताका वैजयन्ती; अभिष्टुतिः प्रयाणकाले जनेन स्तुतिर्जयजयेत्यादिशब्दपूर्व्वा अभिमुखमुच्चारिता। तथा भेर्यादीनां शब्दाः; पुण्याहनिःस्वनाः प्रशस्तशब्दा आरोग्याय; तत्प्रशस्तनिःस्वनाः प्रेतपटहादिजाः। वेदाध्ययनस्य वेदपाठस्य ये शब्दास्ते च शुभाः। प्रदक्षिणोऽनुकूलो वायुः सुखः सुखावहः; पथि वेश्मप्रवेशे चैतदारोग्यलक्षणं विद्यात् ॥ ३२—४१ ॥

इत्युक्तमिति। इत्येवमर्थे परिसमाप्तौ वा। दूतः स्त्रीपुरुषादि शुभाशुभं प्रागुक्तम्। तथा चेतनाचेतनरूपः शुभाशुभसूचको दूतवर्ज्जितो लोकप्रसिद्धः शकुन उक्तः। यथा—"हाहाक्रन्दितम्" इत्यादि। इत्येवमुक्तमभिहितम्। अतो दूतशकुनादूर्द्धमनन्तरं स्वप्नान् प्रचक्ष्यते सम्यग् भणिष्यते। तत्कार इति शेषः। स्वप्नलक्षणमष्टाङ्गसंग्रहे कथितम्। यथा—"सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा। विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति" इति। तथा "श्लेष्माहतेषु स्रोतःसु श्रमादुपरतेषु च। इन्द्रियेषु स्वकर्म्मभ्यो निद्रा विशति देहिनम्" इति निद्रालक्षणम् ॥ ४२ ॥

* हंसानां शतपत्राणां बहुस्यैकपशोस्तथा इत्यधिकः पाठः।

स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ॥ ४३ ॥
रक्तमाल्यवपुर्वस्त्रो यो हसन् क्रियते स्त्रिया ।
सोऽस्रपित्तेन महिष-श्व-वराहोष्ट्र-गर्दभैः ।
यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ॥ ४४ ॥
लता कण्टकिनी वंशस्तालो वा हृदि जायते ।
यस्य तस्याशु गुल्मेन यस्य वह्निमनर्चिषम् ॥ ४५ ॥
जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ।
पद्मं स नश्येत् कुष्ठेन चण्डालैः सह यः पिबेत् ।
स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ॥ ४६ ॥
उन्मादेन जले मज्जेद् यो नृत्यन् राक्षसैः सह ।
अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ॥ ४७ ॥
यानं खरोष्ट्र-मार्जार-कपि-शार्दूल-शूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्त्तते मुखे ॥ ४८ ॥

---

स्वप्न इति । यो मर्त्यः पुरुषः स्वप्ने स्वप्नावस्थायां प्रेतः सह मद्यं पिबन् शुना आक्रष्यते आक्रम्यते स मृत्युना ज्वररूपेण शीघ्रमचिरात् कतिपयैर्द्दिवसैर्नीयते लोकान्तरमिति शेषः ॥ ४३ ॥

रक्तेति । रक्तमाल्यो रक्तवपुः रक्तवस्त्रश्च यो मर्त्यो हसन् स्त्रिया स्वप्ने क्रियते आक्रष्यते आक्रम्यते सोऽस्रपित्तेन मृत्युना शीघ्रं नीयते । महिषेति । यो महिषादिभिः करणभूतैर्याम्यां दक्षिणां दिशं स्वप्ने प्रयाति तस्य यक्ष्मणा मरणं भवति ॥ ४४ ॥

लतेति । मर्त्य इति प्रथमान्तोऽपि इहार्थवशात् षष्ठ्यन्तः सम्बध्यते । यस्य मर्त्यस्य स्वप्ने कण्टकयुक्ता लता हृदये जायते वंशो वाऽथवा तालः, तस्य शीघ्रं गुल्मेन मरणं भवेत् । संग्रहे त्वेवमुक्तम्;—"यस्य त कण्टकिनी लता वंशस्तालो वा हृदि जायते, स गुल्मेन, यस्य मर्त्यस्य स शिरोरोगेण शस्त्रेण वा शिरश्छेदनेन" इति । यस्येति । यस्य मर्त्यस्य नग्नस्याज्याभ्यक्तस्य वह्निमनर्चिषं ज्वालारहितं जुह्वत उरसि पद्मं स्वप्ने जायते स नरः कुष्ठेन नश्येत् । चण्डालैरिति । चण्डालैः सह बहुविधमनेकप्रकारं स्नेहं घृततैलादिकं यो मर्त्यः स्वप्ने पिबेत् स प्रमेहेण नश्यति । स्वप्ने प्रक्रान्तेऽपि पुनः स्वप्नग्रहणं कृतं स्पष्टार्थम् ॥ ४५ । ४६ ॥

उन्मादेनेति । उन्मादेन स नश्यति यो राक्षसैः सह नृत्यन् जले मज्जेत् । स मर्त्योऽपस्मारेण नश्यति यो नृत्यन् प्रेतेन स्वप्ने नीयते ॥ ४७ ॥

यानमिति । यस्य नरस्य स्वप्ने खरादिभिर्यानं भवति स मृत्योर्मुखाभ्यन्तरे वर्त्तते प्रत्यासन्नविनाशवान् ॥ ४८ ॥

अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विधं वमन्।
न जीवत्यचिरोगाय सूर्येन्दुग्रहणेक्षणम्।
सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ॥ ४९ ॥
मूर्ध्नि वंशलतादीनां सम्भवो वयसां तथा।
निलयो मुण्डता काक-गृध्राद्यैः परिवारणम् ॥ ५० ॥
तथा प्रेत-पिशाच-स्त्री-द्रविड़ान्ध्र-गवाशनैः।
सङ्गो वेत्र-लता-वंश-तृण-कण्टक-सङ्कटे ॥ ५१ ॥
श्वभ्रश्मशानशयनं पतनं पांशुभस्मनोः।
मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसा हृतिः ॥ ५२ ॥
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम्।
वयोऽङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म च ॥ ५३ ॥
पक्वान्नस्नेहमद्याशः प्रच्छर्दनविरेचने।
हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ॥ ५४ ॥
उपानद्युगनाशश्च प्रपातः पादचर्मणोः।

---

अपूपेति। अपूपान् शष्कुलीर्वा जग्ध्वा भक्षयित्वैवं स्वप्ने दृष्ट्वा विबुद्धः संस्तद्विधमपूपशष्कुलिप्रायमेव वमेदुद्गिरेत् स न जीवति। अक्षीति। सूर्यचन्द्रयोर्ग्रहणदर्शनमचिरोगाय। सूर्येति। स्वप्ने सूर्याचन्द्रमसोः पतनदर्शनं मर्त्यस्य दृष्टिविनाशनम्। सूर्याचन्द्रमसोरिति देवताद्वन्द्वे चेत्यानङादेशः ॥ ४९ ॥

मूर्ध्नीति। जातु नेष्यत इति वक्ष्यमाणेन सम्बन्धः। वंशलतादीनां मूर्ध्नि शिरसि सम्भवो जन्म जातु नेष्यते। एवमग्रेऽपि योज्यम्। तथा वयसां पक्षिणां मूर्ध्नि निलयो निलयनम्, तथा मुण्डता कृतमुण्डनत्वम्, काकाद्यैः परिवारणं परिवृतत्वम्, न केवलं काकाद्यैः प्रेताद्यैश्चेति तथा-शब्दस्यार्थः। गवाशना गोमांसभक्षास्तैः। वेत्रादिसङ्कटे संवृते सङ्गो द्वारालाभस्तत्रैव निःसारमपश्यतः। श्वभ्रे श्मशाने च शयनं स्वपनम्, पांसौ भस्मनि च पतनम्; जलपङ्कादिके मज्जनं बुड़नम्; आदिशब्देन कूपकलुषोदकादि गृह्यते। स्रोतसा शीघ्रेण हृतिर्हरणम्; नृत्यञ्च वादित्रञ्च गीतञ्च तानि, तथा स्रक्च वस्त्रञ्च स्रग्वस्त्रे रक्ते च ते स्रग्वस्त्रे च तयोर्धारणम्, वयश्चाङ्गञ्च तयोर्वृद्धिः, अभ्यङ्गोऽभ्यञ्जनम्; विवाहः परिणयः; श्मश्रुकर्म मुखव्यञ्जनमुण्डनम्। पक्वान्नं मण्डकादिः, स्नेहस्तैलादिः, मद्यं सीध्वादि, तेषां पक्वान्नादीनामाशो भक्षणम्। प्रच्छर्दनं वमिः; विरेचनं विरेकः; हिरण्यस्य रुक्मादेर्लोहस्य च लाभः। संग्रहे तूक्तम्,—"लभते वा हिरण्यलोहलवणम्" इति। कलिरनर्थः; बन्धो बन्धनम्; पराजयः परिभवः; उपानद्युगस्य नाशः; पादस्य चर्मणः प्रकर्षेण पतनम्; भृशमतिशयेन हर्षः; पितृभिः प्रकुपित-

हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ॥ ५५ ॥
प्रदीप-ग्रह-नक्षत्र-दन्त-दैवत-चक्षुषाम् ।
पतनं वा विनाशो वा भेदनं पर्वतस्य च ॥ ५६ ॥
कानने रक्तकुसुमे पापकर्मनिवेशने ।
चितान्धकारसम्बाधे जनन्याञ्च प्रवेशनम् ॥ ५७ ॥
पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा ।
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
रक्ताक्षाणाञ्च कृष्णानां दर्शनं जातु नेष्यते ॥ ५८ ॥
कृष्णा पापाननाचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ ५९ ॥
मनोवहानां पूर्णत्वात् स्रोतसां प्रबलैर्मलैः ।
दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।
अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ॥ ६० ॥

---

रवभर्त्सनं सन्तर्जनम् ; प्रदीपादीनां पतनं, अथवा विनाशः ; पर्वतस्य च भेदनम् ;
कानने वने रक्तपुष्पे प्रवेशनमिति सम्बन्धः । पापकर्म्मणां पापिनां निवेशने गृहे प्रवे-
शनम् ; चितायामन्धकारसम्बाधे तमःसङ्कटे जनन्यां मातरि च प्रवेशनम् ; प्रासादात्
पर्वताद्वा पातः पतनम् ; आदिशब्देन वृक्षगृहादिर्ग्रहणम् ; मत्स्येन ग्रसनं निगरणम् ;
कषायेण रक्तं वस्त्रं काषायं, तद् विद्यते येषामिति इनिः, तेषां काषायिणां काषाय-
वस्त्रावृतानां, तथा असौम्यानां दुर्द्दर्शानां, तथा नग्नानां विवस्त्राणां, तथा दण्डधारिणां
दण्डिनां, तथा रक्तनयनानां कृष्णवर्णानाञ्च नृणां, जातु न कदाचित् दर्शनमिष्यते स्वप्ने,
अशुभहेतुत्वात् ॥ ५०—५८ ॥

कृष्णेति । एवम्विधा स्त्री स्वप्ने कालनिशा तद्विधा मता । कृष्णा कृष्णवर्णा, तथा
पापमाननमाचारश्च यस्याः सा तथा, दीर्घाः केशा नखाः स्तनौ च यस्याः सेवम् ।
स्वाङ्गाच्चोपसर्ज्जनादिति ङीप् । माल्यञ्च वसनञ्च माल्यवसनम्, विगतो रागो यस्य
माल्यवसनस्य तदेवम्भूतं माल्यवसनं यस्याः सेवम् । मनोवहानामित्यादि । मनश्चेतो
वहन्ति यानि विशेषेण हृदाश्रितानि स्रोतांसि तानि मनोवहानि, तेषां मनोवहानां
प्रबलैरतिबलवद्भिर्मलैर्मलिनीकरणस्वभावैर्वातपित्तश्लेष्मभिः पूर्णत्वात् दारुणा घोरा अप्र-
शस्ताः स्वप्ना दृश्यन्तेऽनुभूयन्ते, यैः स्वप्नैर्दृष्टैः रोगी आतुरः पञ्चतां याति मरणं प्राप्नोति,
तथास्वभावत्वादेषां स्वप्नानाम् । अरोग इत्यादि । स्वस्थो नरः संशयं जीवित-
सन्देहं प्राप्य कश्चिदेव बहूनां मध्यात् पुण्यवान् नियतायुरेव विमुच्यते मरणादिति
शेषः ॥ ५९ । ६० ॥

दृष्ट: श्रुतोऽनुभूतश्च प्रार्थित: कल्पितस्तथा।
भाविको दोषजश्चेति स्वप्न: सप्तविधो मत: ॥ ६१ ॥
तेष्वाद्या निष्फला: पञ्च यथास्वप्रकृतिर्दिवा।
विस्मृतो दीर्घह्रस्वोऽति पूर्वरात्रे चिरात् फलम् ॥ ६२ ॥
दृष्ट: करोति तुच्छञ्च गोसर्गे तदहर्महत्।
निद्रया चानुपहत: प्रतीपैर्वचनैस्तथा ॥ ६३ ॥

---

स्वप्नभेदानिदानीमाह,—दृष्ट इति। च: समुच्चये; इति: प्रकारे; दृष्टत्वादिना प्रकारेण स्वप्न: सप्तविधो मत:, सप्त स्वप्ना इत्यर्थ:। यश्चक्षुषा जाग्रदवस्थायां किञ्चिद् वस्तुजातं दृष्ट्वा तदानीं सुप्तावस्थायां तादृशं वस्तुजातं सम्वित्तिरूपतयाऽनुभूयते स दृष्ट उच्यते। यश्च शब्दमात्रेण वस्तुजातं श्रोत्रेन्द्रियेण गृह्यते तदिदानीं सुप्तावस्थायां तादृक् सम्वित्तिरूपतयाऽनुभूयते स श्रुत उच्यते। यस्तु जाग्रदवस्थायां यथायथमिन्द्रियैरनुभूयते सुप्तावस्थायां तादृगन्त:संवित्तिरूपतयाऽनुभूयते सोऽनुभूत उच्यते। यस्मिन् दृष्टे श्रुतेऽनुभूते वा यत् पूर्वं जाग्रदवस्थायां वस्तुजातं मनसाऽभ्यर्थ्यते, तथैव च सुप्तावस्थायामन्त:संवित्तिरूपतयाऽनुभूयते स प्रार्थित उच्यते। यस्तु षड्भि: प्रत्यक्षानुमानादिभिर्न दृष्टो नापि श्रुतो नाप्यनुभूतो दृष्टश्रुतानुभूतत्वाभावादेव न च प्रार्थित:, अपि तु केवलं मनसा यथेच्छमुत्प्रेक्ष्य यत्किञ्चनरूपाभि: कल्पनाभि: कल्पितो जाग्रदवस्थायां वस्तुजातान्त:सम्वित्तावुपारूढ:, तदानीं सुप्तावस्थायां तादृगनुभूयते स कल्पित:। यश्च दृष्टश्रुतादिभ्य: स्वप्नेभ्योऽन्यो विलक्षण: स्वप्नो यथा दृश्यते सुप्तावस्थायामुत्तरकालं तथैव स्वप्नदर्शिना नरेण तन्मुखावगततदर्थैरपि प्रत्यक्षतो दृश्यते स भाविक:। दोषज: स स्वप्नो यो वातज: पित्तज: कफजो वा यथायथं दोषाणामनुरूपोऽन्त:संवित्तावनुभूयत इति ॥ ६१ ॥

तेष्विति। तेषु स्वप्नेषु मध्यात् ये पञ्चाद्या आदौ पठिता दृष्टादयस्ते निष्फला:, न यथानुरूपं फलं शुभाशुभं ददति। यथास्वप्रकृतिर्यथादोषजो य: स्वप्न: सोऽपि निष्फल:; नासौ यथानुरूपं शुभाशुभलक्षणं फलं ददाति। वातप्रकृतेर्वातप्रकृत्यनुरूपत: स्वप्न: यावद्द्वन्द्वप्रकृतेर्द्वन्द्वप्रकृत्यनुरूपतोऽफल: तथा दिवा दृष्टो य: स्वप्न: तथा विस्मृत: तथा अतिदीर्घोऽतिह्रस्वो वा य: स्वप्न: स पञ्चविधव्यतिरिक्तोऽप्यफल: ॥ पूर्वेति, पूर्वरात्रे दृष्ट: स्वप्नश्चिराच्चिरेण कालेन फलं तुच्छमल्पं नतु यथा परिभाषितं विदधाति। केचित्त्वाहु:,—चेति विकल्पार्थे। चिरेण कालेन तुच्छ: वेत्यर्थ:। पूर्व्वरात्र इति अह:सर्वैकदेशेति समासान्त:। गोसर्ग इति। गोसर्गे गवां मोक्षकाले यो दृष्ट: स्वप्न: स तदहस्तस्मिन्नेवाहनि फलं महत् करोतीति योज्यम्। तदहरिति अह:शब्द: सप्तम्यर्थवृत्तिरव्यय:। तथा शुभ: स्वप्नो दृष्टो रात्रिशेषे निद्रया वा यद्यनुपहत:, यस्मिन् स्वप्ने दृष्टेऽनन्तरं न सुप्यते स स्वप्नो महत् फलं करोति, अन्यथा स्वल्पम्। प्रतीपैरननुकूलैर्वचनैश्चानुपहतोऽनभ्याहत: शुभ: स्वप्नो दृष्टो महत् फलं करोति ॥ ६२। ६३ ॥

याति पापोऽल्पफलतां दानहोमजपादिभिः ॥ ६४ ॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।
पश्येत् सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥ ६५ ॥
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ।
साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान् ॥६६॥
कन्यां कुमारकान् गौरान् शुक्लवस्त्रान् सुतेजसः ।
नरासनं दीप्ततनुं समन्ताद् रुधिरोक्षितः ॥ ६७ ॥
यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ।
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥ ६८ ॥
शैलप्रासादसफल-वृक्षसिंहनरद्विपान् ।
आरोहेद् गोऽश्वयानञ्च तरेन्नदह्रदोदधीन् ॥ ६९ ॥
पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ।

---

एवं शुभं स्वप्नं प्रत्युक्त्वाऽशुभं स्वप्नं प्रत्याह,—यातीति । पापीऽशुभः स्वप्नोऽल्पफलतां याति । कैः ? दानादिभिः । आदिग्रहणात् यमनियमादयो गृह्यन्ते ॥ ६४ ॥

अकल्याणमिति । अकल्याणमप्यशुभसूचकत्वादशुभं स्वप्नं दृष्ट्वा तत्रैव तस्मिन्नेवावसरेऽशुभस्वप्नदर्शनसमनन्तरे काले सौम्यकरं शुभसूचकत्वाच्छुभं स्वप्नं यः पश्येत्, तस्य शुभमेव फलं भवेत् । सौम्य शुभं स्वप्नं दृष्ट्वा यतस्तत्रैव स्वप्नमध्ये सुप्तोऽशुभञ्च स्वप्नं पश्येत् तस्याशुभमेव फलं भवेत्, न पूर्वदृष्ट शुभमिति बोध्यम् । नन्वेवं सति स्वप्नानामनिश्चितफलत्वं प्राप्नोति ; ततश्च स्वप्ने मद्यं सह प्रेतैरित्यादिना यदुक्तं तदन्यथाऽपि स्यात् यतोऽशुभलक्षणोऽप्येवं दानादिभिश्चान्यथा सम्पद्यते, ततश्चानिश्चितफलत्वान्मरणं प्रति नासौ निश्चितो हेतुः ; एवमन्येऽपि ये स्वप्नाः प्रतिनियता रक्तपित्तादीनां व्याधीनां हेतवो निर्दिष्टास्तेऽपि तथैव बोद्धव्याः । अत्राचक्ष्महे, निश्चितानिश्चितफलस्वभावत्वात् स्वप्नानामदोषः । तथाहि, केचित् स्वप्ना निश्चितफलस्वभावा निर्दिष्टाः । यथा "स्वप्ने मद्यं सह प्रेतैः" इत्यादयः । केचिदनिश्चितफलस्वभावाः । यथा "मूर्ध्नि वंशलतादीनाम्" इत्यारभ्य यावद् "रक्षाचाणाञ्च क्षणानां दर्शनं जातु नेष्यते" इत्येवमन्तेन ग्रन्थेन ये निर्दिष्टास्तत्र ये निश्चितफलस्वभावास्तेषां न कथञ्चिदप्यन्यथा कर्त्तुं पार्यते, ते प्राक्तनस्य कर्म्मणस्तथारूपस्य बलवत्वात् । ये त्वनिश्चितफलस्वभावाः "मूर्ध्नि वंशलतादीनाम्" इत्यादयस्तेषां स्वप्नान्तरदर्शनादिभिरन्यथासद्भावः सम्भाव्यत इति ॥ ६५ ॥

"पश्येत् सौम्यम्" इत्युक्तम् ; अतस्तानेव सौम्यान् स्वप्नान् दर्शयितुमाह,—देवानिति । कुमारका बालकाः ; विषं वत्सनाभः ; आमिषं मांसम्, सुमनसः पुष्पाणि । शुक्लशब्दो वस्त्रमित्यत्रापि सम्बध्यते । छन्दोवशाच्चास्य नपुंसकत्वमेकत्वञ्च बोध्यम् ।

सम्बाधान्निःसृतिर्देवैः पितृभिश्चाभिनन्दनम् ॥ ७० ॥
रोदनं पतितोत्थानं द्विषतां चावमर्दनम्।
यस्य स्यात्तदायुरारोग्यं वित्तं बहु च सोऽश्नुते ॥ ७१ ॥
मङ्गलाचारसम्पन्नः परिवारस्तथातुरः।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥ ७२ ॥
सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु।
चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ॥ ७३ ॥
इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम्।
शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ ७४ ॥

इत्यष्टाङ्गहृदये शारीरस्थाने षष्ठोऽध्यायः ॥ ६ ॥

इति श्रीनृपतिसिंहगुप्तसूनुवाग्भट्टविरचितेऽष्टाङ्गहृदयसंग्रहे द्वितीयं शारीरस्थानम् ॥ २ ॥

---

देवादीन् यः पश्येद, यो वा छत्रादीन् लभते, यश्च शैलादीन् समारोहेत्, यश्च नदादीं स्तरेत्, यस्य वा पूर्वोक्तगमनादिकं स्यात्, स पुरुष आयुरादीनश्नुते प्राप्नोति ॥ ६६—७१ ॥

"आरोग्यमश्नुते" इत्युक्तम्, अतस्तदेवारोग्यं लक्षयितुमाह,—मङ्गलेति। "प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः"। आचरणमाचारः सद्वृत्तानुष्ठानम्। मङ्गलाचाराभ्यां सम्पन्नो युक्तः परिवारः, तथा श्रद्दधानोऽवश्यं मे व्याधिरयमनेन भेषजेन नश्यतीत्येवमातुरो मन्यमानः, तथा च परिवारोऽनुकूलो दक्षिणः, तथा प्रभूतस्य द्रव्यस्य संग्रहः संग्रहणम्, तथा सत्त्वलक्षणयोः संयोगो वैद्यादिषु भक्तिः चिकित्सायामुपक्रमेऽनिर्वेदः सोत्साहता तदेतदारोग्यलक्षणम् ॥ ७२। ७३ ॥

कस्मादिदं स्थानं शारीरमुच्यत इत्यस्य निरुक्तिमाह,—इतीति इतिः परिसमाप्तौ। अत्रास्मिन् स्थाने यतो यस्मात् शरीरस्य जन्म सम्यगविपरीतं गर्भावक्रान्त्यादिभिश्चतुभिरध्यायैः प्रसक्तानुप्रसक्तिकया उदाहृतम्। मरणं विकृतिविज्ञानीयाख्येन तथा दूतादिविज्ञानीयाख्येनाध्यायेन च कथितम्। ततः शरीरस्य जन्ममरणोदाहरणादिदं स्थानं शारीरमुच्यते। यद्यपि सर्वं आयुर्वेदाख्यो ग्रन्थः शरीरमधिकृत्य प्रवृत्तम्, तथापीदं स्थानं साक्षाज्जन्ममरणचिन्तनात् शरीरस्य प्राधान्येन शारीरं स्थानमुच्यते इति ॥ ७४ ॥

इति श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां दूतादिविज्ञानीयो नाम षष्ठोऽध्यायः ॥ ६ ॥

# अष्टाङ्गहृदयम् ।

## निदानस्थानम् ।

### प्रथमोऽध्यायः ।

अथातः सर्वरोगनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

अथ निदानस्थानारम्भः । अस्य चायं सम्बन्धः,—हेतुलिङ्गौषधस्कन्धलक्षणोऽयमायुर्वेदः प्रणीतः । तानि च हेतुलिङ्गौषधानि सूत्रस्थाने सूचितानि । शरीरलक्षणञ्चाधारं समुत्पाद्य तानि विस्तरेणोपदेष्टुं शक्यन्ते, तस्मात् शारीरस्थानं पूर्वमारब्धवान् । तत्रैवं सति औषधस्कन्ध एव प्राक्प्राधान्यादुपदेष्टुं न्याय्यः ; नैवम्, हेतुलिङ्गाभ्यां ह्यामयं परीक्ष्य अनन्तरं यथायोगमामयप्रशमनार्थमौषधं दातुमुचितम् । तस्माद्धेतुलिङ्गयोरेवोपादानं प्राग्युक्तं नत्वौषधस्येति चिकित्सितस्थानात प्रागिदमेव स्थानमुपदेष्टुं युक्तम् । तथोक्तं मुनिना ;—"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्" इति । तस्मादौषधात् हेतुलिङ्गयोरेवामयं प्रति प्राधान्यम्, अतो निदानस्थानारम्भः । तत्र च पूर्वं सर्वरोग निदानमेवारब्धुं युक्तं प्राधान्यात् । प्राधान्यञ्च सर्वरोगकारणनिर्देशात् । तथाहि, वातादय एव प्रकुपिताः सर्वरोगकारणम् । वक्ष्यति हि ;—"सर्वेषामेव रोगाणां निदानं कुपिता मलाः" इति । तेषाञ्च कोपकारणमस्मिन् निर्दिश्यत इत्याह,—अथात इत्यादि । सर्वे च ते रोगाश्च सर्वरोगास्तेषां निदानं सर्वरोगनिदानम् । शेषमायुष्कामीयाध्यायवद् व्याख्येयम् । इतीत्यादिशब्दानामपि पूर्ववद्व्याख्या ॥ १ ॥

रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः।
यक्ष्मातङ्कगदाबाध-शब्दाः पर्यायवाचिनः॥ २॥
निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा।
सम्प्राप्तिश्चेति विज्ञान रोगाणां पञ्चधा स्मृतम्॥ ३॥

---

तत्र रोगाणां सामान्यं निदानं विभणिषुस्तावद्रोगाणामेव पर्यायान् वदति। रोग-पर्यायश्रवणेन हि शिष्याणां तत्र तत्र शास्त्रदेशेषु सम्मोहो न भवति। रोगादयः शब्दाः पर्यायवाचिन एकार्था इत्यर्थः। ननु चैषां रोगादिशब्दानां प्रवृत्तिनिमित्तं प्रति अर्थ-भेदोऽपि दृश्यते। यथा, रुजतीति रोगो दुःखस्य कर्तृत्वात् दुःखस्याभिधायकः। पाप्मेति—किल सर्वे रोगाः पापस्य कर्म्मणः फलमिति कृत्वा पाप्मेत्युच्यते। ज्वरः प्रधानो रोगाणामुक्तः। प्राधान्यञ्चास्य दुरुपक्रमत्वादतिदुःसहत्वाच्च। अतएव सर्वकायमनःसन्तापकत्वं ज्वरस्याहुः। तथा, ज्या वयोहानावित्यस्य धातो-रौणादिके वरप्रत्यये सति ज्वरशब्दस्यार्थान्तरत्वमप्यापतति। विविधमाधिं दुःखमादधाति शरीरे मनसि चेति व्याधिः। विकारो बुद्धीन्द्रियमनःशरी-राणां विकृतिमन्यथात्वं जनयतीत्यर्थः। दुःखमित्यनेनोपतापकत्वमनुभवं गमयति। आमय इत्यस्यार्थः किल आमसमुत्थाः सर्व्वे व्याधयः। प्रायेण हि लोकोऽखिल एव लौल्याद्देशकालापथ्यातिमात्राशी भवति तस्य चावश्यमामसम्भवात् बाहुल्येनामसमुत्था व्याधयः। बाहुल्यं चाङ्गीकृत्य शब्दप्रवृत्तिः। यक्ष्मेत्र यक्ष्मा; यथा यक्ष्मा रोगसमूहा-नामित्युक्तः, एवं सर्वोऽपि रोगो रोगसमूह इति अनेन द्योतयति। तथा च—सर्वो विकार उत्पद्यमानोऽनेकैर्व्याधिलक्षणभूतैरुपद्रवभूतैश्च युक्त उत्पद्यते। यथा ज्वरस्या-लस्यारोचकादयः। आतङ्क इति—तकि कृच्छ्रजीवन इत्यस्य धातोराङ्पूर्वस्य रूपम्। रोगोपतप्तत्वाद्धि स्त्रीपानभोजनादिभ्यो निवृत्ताः कृच्छ्रेण जीवन्ति। गद इव गदोऽनेक-कारणजन्यत्वात् यथा हि गदोऽनेककारणजस्तथा गदोऽपीति गदशब्दस्यार्थः। आबाध इति आसमन्तात् कायमनसोर्बाधनं पीड़ेत्यर्थः। एवं प्रवृत्तिनिमित्त प्रत्यर्थभेददर्शनात् कथमुक्तं पर्यायवाचिन इति? अत्राचक्ष्महे,—एवमेवैतत् किन्तु पीड़ाकारित्वात् सामान्यं प्रवृत्तिनिमित्तमुररीकृत्य पर्यायवाचिन इत्युक्तम्॥ २॥

निदानमिति। निदानादयः सम्प्राप्त्यन्ता रोगाणां विज्ञानं पञ्चधा स्मृतं मुनीन्द्रै-रिति शेषः। निदानादिविज्ञानेन सर्वे रोगा विशेषेण बुध्यन्त इत्यर्थः। उपशयस्तथेति—यथा निदानादयो रोगाणां विज्ञानं तथोपशयोऽपीति तुल्यकक्षतां द्योतयितुं तथाशब्दं तन्त्रकृत् प्रयुक्तवान्। एव सम्प्राप्तिश्चेत्यत्र चकारमपि। इति परिसमाप्तौ। एतावदेव रोगाणां विज्ञानम्। निदानं द्विधा, रोगाणामासन्नं विप्रकृष्टञ्च। तत्रासन्नं यथा—वातादयः प्रकुपिताः। विप्रकृष्टं कारणं यथा—वातादिचयप्रकोपकरमाहारविहारादि। तत्र निदानं कटुकाम्लदध्यादिकं ज्वरस्य। पूर्वरूपं यथा—ज्वरस्यैवालस्यादयः। रूपं यथा—"आगमापगमक्षोभमृदुताविदनोष्मणाम्। वैषम्यं तत्र तत्राङ्गे तास्ताः स्युर्वेद-नाश्चलाः" इत्यादि। उपशयो यथा—ज्वरं स्नेहमर्द्दनादिना उपशाम्यन्तमुपलभ्य स तु

निमित्तहेत्वायतन-प्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्य्यायैः प्रागरूपं येन लक्ष्यते ॥ ४ ॥
उत्पित्सुरामयो दोष-विशेषेणानधिष्ठितः ।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ५ ॥
तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ६ ॥

---

तस्योपशय इत्युच्यते । सम्प्राप्तिस्तु यथादुष्टेनेत्यादिलक्षणविनिश्चितज्ञानकारणत्वविज्ञानम्, कारणे कार्य्योपचारात् । निदानादीनामत्र नामनिर्देश एककत्रापि प्राधान्यमिति द्योतनाय एवमेकैकमप्येतस्मिकारणत्वं भवति । उपचारादेव संख्यायां लब्धायां पञ्चधेत्युक्तं नियमार्थम् । पञ्चैवतानि तत्वतो नान्ये रोगावबोधहेतव. सन्तीत्यर्थः ॥ ३ ॥

निमित्तेति । निमित्तादिभिः षड्भिः पर्य्यायैर्निदानमाहुर्वदन्ति मुनय इतिशेषः । तत्र तत्र शास्त्रप्रदेशे निदानमितः पर्य्यायैर्व्यपदिशन्त्यर्थः । प्रागरूपमिति—येनालस्यारुच्यादिना उत्पित्सुः इषुरामयी ज्वरादिर्लक्ष्यते ज्ञायते तत् प्रागरूपम् । दोषविशेषेण वातादिना अनधिष्ठितोऽनासादितः, व्यक्तश्चेत्यत्यचानुक्तमपि गम्यमानत्वादुक्तं बोध्यम् । तथाहि वातादिदोषेणानधिष्ठितत्वाद्व्याधेरुत्पित्सुत्व न घटते व्याधिकारणाभावात् नहि वातादीन् विमुच्य व्याधिः प्रायेणान्यतः सम्भवः सम्भाव्यते । वक्ष्यति हि,—“सर्वेषामेव रोगाणां निदानं कुपिता मलाः” इति । तस्माद्दोषविशेषानधिष्ठितत्वमुत्पित्सोरामयस्य यदुच्यते तद्व्यक्तरूपदोषापेक्षयावगन्तव्यम् । अतएवाह;—लिङ्गमिति । तदित्यनेन प्रागरूपं परामृश्यते । तत् प्रागरूपमुत्पित्सूनां ज्वरादीनामल्पत्वादनासादितबलत्वादव्यक्तं लिङ्गमस्पष्टं लक्षणं यथायथं यत् यस्य व्याधेर्ज्वराद्यन्यतमस्यात्मीयमात्मीयम् । अतश्च प्रागरूपं त्रिधा दृश्यते । किञ्चिच्छारीरं किञ्चिन्मानसं किञ्चिच्छारीरमानसञ्च । तत्र शारीरं यथा,—ज्वरस्यालस्यासुखवैरस्यगात्रगौरवजृम्भासास्राकुलाक्षतेत्येवं प्रायम् । मानसञ्च, अरतिर्हितोपदेशेष्वक्षान्तिरित्येवम्प्रायम् । किञ्चिच्छारीरमानसं यथा,—प्रीतिरम्ले पटूषणे द्वेषः स्वादुषु भक्ष्येष्वित्येवम्प्रायं शारीरमानसदोषजनितत्वात् ॥ ४ । ५ ॥

इदानीं रूपं लक्षयितुमाह,—तदेवेति । तदेव प्रागरूपं व्यक्ततां यातं व्यक्तदोषाधिष्ठितं सत् रूपमित्यभिधीयते । तदेवेत्येवशब्देनेतद् द्योतयति यदेव शारीरं प्रागरूपं पूर्वोपवर्णितं तदेवेहैव गृहीतव्यं स्थायित्वात् । तद्वामयानुबन्धि, मानसं शारीरमानसं वाऽस्थायित्वान्न गृहीतव्यम् । तद्धि द्वयमप्युत्पित्सुव्याधिसमनन्तरं प्रायेण नश्यतीति तदव्यक्तता नास्ति । अतः शारीरमेवोत्पित्सुव्याधिप्रागरूपमिह तदा परामृष्टुं युक्तम् संस्थानमिति । संस्थानादयः षड्रूपस्य पर्य्याया इत्यर्थः । इमे च पर्य्यायाः प्रायपस्यापि योज्याः । यथा पूर्वसंस्थानं पूर्वव्यञ्जनं पूर्वलिङ्गमित्यादि ॥ ६ ॥

हेतुव्याधिविपर्यस्त-विपर्यस्तार्थकारिणाम्।
औषधान्नविहाराणामुपयोगं सुखावहम्॥ ७॥
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः।

---

हेत्वित्यादि। उपयुज्यत इत्युपयोगः सेवनम्। सुखमावहत्युत्पादयतीति सुखावहः। देहस्य सुखं करोतीत्यर्थः। य उपयोगः सुखावहस्तमुपशयं विद्यात् मुनीन्द्र इतिशेषः। केषामुपयोगः? औषधान्नविहाराणाम्। औषधं हरीतक्यादि, अन्नं रक्तशाल्यादि, विहारो वाग्देहमनोनिर्वर्त्तितश्चेष्टाविशेषो व्यायामव्यवायजागरणाध्ययनगीतभाषण-ध्यानधारणादिरूपः। औषधञ्चान्नञ्च विहारश्चौषधान्नविहारास्तेषामौषधान्नविहाराणाम्। तेषां किम्भूतानाम्? हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम्। हेतुव्याधिविपर्यस्तानां, विपर्यस्तार्थकारिणाञ्च, विपर्यस्ता विपरीताः, हेतुव्याध्योर्विपर्यस्ताः, हेतुश्च व्याधिश्च हेतुव्याधी तयोर्विपर्यस्ता हेतुव्याधिविपर्यस्ताः निदानरोगयोर्विपरीता ये औषधान्न-विहारास्ते, तथा विपर्यस्तानामर्थौ विपर्यस्तार्थस्तं कुर्वन्तीति विपर्यस्तार्थकारिणः। हेतुव्याधिविपर्यस्ताश्च विपर्यस्तार्थकारिणश्च हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणस्तेषाम्। केषां विपर्यस्तानामर्थं कुर्वन्ति? अत्र प्रकृतत्वात् हेतुव्याधिविपर्यस्तानाम्। तदयमर्थः— हेतुव्याध्योरविपर्यस्ताः अविपरीता अपि हेतुरूपा इव भासमानाः व्याधिरूपा इव भासमानाः हेतुव्याधिविपर्यस्तानामर्थं व्याध्युपशमलक्षणं कुर्वन्ति। यथा—हेतुविपरीतै-र्व्याधिविपरीतैश्चौषधान्नविहारैर्व्याध्युपशमः क्रियते प्रतिपक्षत्वात्, तथा विपर्यस्तार्थकारिभि-रपीत्यर्थः। संग्रहे तु जगाद,—"उभयार्थकारि पुनर्दैवव्यपाश्रयं तथा छर्द्यां च्छर्द्दनम्" इत्यादि। एवंविधं ह्यविपरीतमेव भेषजं विपरीतमर्थं करोतीति। तत्र हेतुविपरीता औषधान्नविहारा यथा—गुरुस्निग्धशीतजे व्याधौ लघुरूक्षोष्णमौषधमन्नं वा, तथा सन्तर्पणोत्थेऽपतर्पणम्, अपतर्पणोत्थे सन्तर्पणम्। जागरणोत्थे व्याधौ स्वापः, स्वापोत्थे जागरणम्, व्यायामोत्थे आसनेत्यादि। तथा व्याधिविपर्यस्ता औषधान्नविहारा यथा,—वातजे ज्वरे सर्पिःपानमौषधम्, तस्मिन्नेव ज्वरेऽन्नं पेया, विहारश्च तस्मिन्नेव वातजे ज्वरे देहमनोव्यापारोपरमः, तथा कफोत्थे ज्वरे दोषानपेक्षमौषधं मुस्त-पर्पटकम्, अन्नं रक्तशाल्यादि। प्रमेहे रजनी-यवान्नञ्च। तथा च वक्ष्यति;— "रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः" इत्यादि। विहारश्च यथा,— "ज्वरकालस्मृतिश्चास्य हारिभिर्विषयैर्हरेत्।" तथा मुनिरप्यब्रवीचत्;—"ज्वरकालञ्च वेगञ्च चिन्तयन् ज्वर्यते तु यः। तस्येष्टैश्च विचित्रैश्च विषयैर्नाशयेत् स्मृतिम्" इति। विपर्यस्तार्थकारिणश्च द्विधा भवन्ति, व्याधिविपर्यस्तार्थकारिणो हेतुविपर्यस्तार्थकारिणश्च। तत्र व्याधिविपर्यस्तार्थकारिणो यथा,—छर्द्दिव्याधौ तदर्थकार्यौषधं मदनादि, अन्नञ्च तदुपसृष्टं शाल्यादि, अथवा यदहृद्यमसात्म्यमपरिशुष्कं गुरु च, विहारोऽङ्गुल्युत्पल-नालादिना तदुद्वमनम्। यथा वा अतिसारे विरेचनम्, वमनेन विरेचनेन च छर्दतीसारयोर्ह्रिरेव कर्त्तुं युक्ता तद्धेतुकत्वात् तस्य। हेतुविपर्यस्तार्थकारिणश्च यथा,— मद्योत्थे व्याधौ मद्यमेवोपयुक्तं व्याधिं शमयत्यौषधत्वेन एवमन्नविहारावप्युह्यौ। मद्येन

विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञित: ॥ ८ ॥
यथा दुष्टेन दोषेण यथा चानुविसर्पता ।
निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागति: ॥ ९ ॥
सङ्ख्या-विकल्प-प्राधान्य-बल-काल-विशेषत: ।
सा भिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ १० ॥
दोषाणां समवेतानां विकल्पोऽंशांशकल्पना ॥ ११ ॥

---

मदात्ययस्य वृद्धिरेव कर्तुं युक्ता तद्धेतुकत्वात् तस्य। इह तु शमनकरणाद् विपर्ययस्तार्थ-कारित्वम्। एतदेव च तदर्थकारीति वदन्ति। तच्च मात्राशितीये व्याख्यातमेव व्याधेरिति। हि यस्मात् स उपशयो व्याधेरामयस्य सात्म्यमिति स्मृत:, मुनीन्द्रैरिति वाक्यशेष:। एवं व्याधिगुणविपरीतो य आहारो विहारश्च प्रायेण निदानविपरीत: स व्याधिसात्म्यम्। मुनिस्त्ववोचत्;—"देशानामामयानाञ्च विपरीतगुणं गुणै:। सात्म्य-मिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाद्यमेव च" इति। उपशयलक्षणकथनप्रस्तावादनुपशयोऽपि लक्ष्य इत्याह,—विपरीत इति। अतो यथा निर्दिष्टलक्षणादुपशयाख्यात् यो विपरीत-लक्षण औषधान्नविहाराणामुपयोग: सेवनमसुखावह: सोऽनुपशय उच्यते। स एव व्याधेरसात्म्यमित्यभिसंज्ञित आभिमुख्येन सङ्केतित: ॥ ७। ८ ॥

निदान-प्राग्रूप-रूपोपशयानुक्त्वा सम्प्रति सम्प्राप्तिं लक्षयितुमाह,—यथेति। येन प्रकारेण दुष्ट: कुपितो वाताद्यन्यतमो दोषो यथादुष्ट:, तेन यथादुष्टेन दोषेण यथा चानुविसर्पता देहमनुधावता सन्निवेशविशेषेण गच्छता प्रत्यामयं या निर्वृत्तिर्निष्पत्ति-रुद्भव इति यावत् निर्दिष्टा सा सम्प्राप्ति:। सा च जातिरागतिश्च कथ्यते। यथा ज्वरस्य मलास्तवेत्यादिलक्षणलक्षिता:। तत्र मलानामामाशयप्रवेशनेन, तथा आमानु-गमनेन, तथा स्रोतोरोधेन, तथा पक्तिस्थानाज्ज्वलननिरसनेन, तथा तेनैव जाठरेण वह्निना तेषामभिसरणेन, तथा सकलदेहतापेन गात्रं चात्युष्णं कुर्वत्या एवंविधया सम्प्राप्त्या ज्वरोत्पत्तिरिति निश्चीयते। एवं रक्तपित्तादिष्वपि चिन्त्या सम्प्राप्ति: ॥ ९ ॥

सङ्ख्येति। सा च सम्प्राप्ति: सङ्ख्यादिविशेषेण भिद्यते। सङ्ख्या च विकल्पश्च प्राधान्यञ्च बलञ्च कालश्च त एवं, तेषां विशेष: सङ्ख्या-विकल्प-प्राधान्य-बल-काल-विशेष-स्तस्मात् सेयं सम्प्राप्तिर्बहुधा सम्पद्यते। तत्र सङ्ख्याविशेषा यथा इहैव;—"वक्ष्यन्तेऽष्टौ ज्वरा:" इति। एवमन्यत्र पञ्च कासा:, पञ्च श्वासा:, अष्टौ गुल्मा इत्येवमादय: सङ्ख्याविशेषा: सम्प्राप्तिभेदा: ॥ १० ॥

दोषाणामिति। दोषाणां वातादीनां समवेतानामेकस्मिन् व्याधौ सङ्घटितानां य। अंशांशकल्पना भागेन कार्यादनुमेयेन निरूपणा स विकल्प:। अंशश्चांशश्च अंशांशौ ताभ्यां कल्पना अनेकविधो विशेष:। यथा अस्मिन् व्याधौ वात: कुपित: कदाचिदेकेन गुणेनाधिकेन रूक्षेण कदाचिल्लघुना कदाचिच्छीतेन कदाचित् द्वाभ्यां त्रिभिर्वाऽधिव दूषयति। एवं पित्तं कट्वम्लादिना कुपितं कदाचिदेकेन गुणेन तीक्ष्णेण कदाचिदुष्णे

स्वातन्त्र्य-पारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥ १२ ॥
हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणम् ॥ १३ ॥
नक्तं-दिनर्तु-भुक्तांशैर्व्याधिकालो यथामलम् ॥ १४ ॥

---

कदाचित् द्वाभ्यां बहुभिर्वाऽपिकेर्दूष्यति । एवं कफोऽपि निरूप्यम् । तदेवंरूपो यो निश्चयः स विकल्प इति । यतश्च एवं ततः सर्वेषु रोगेषु तुल्याः कोपनप्रकारा न भवन्ति । तथाहि, रूक्षादयो गुणा वातस्य सदा कोपकाः ; किन्तु कदाचित् कस्यचिद् गुणस्य प्रकृष्टत्वं कोपने कस्यचित् न्यूनत्वमिति । अतो हेतोर्भेदानन्त्यं चिकित्सानन्त्यञ्च । दोषाणामिति बहुवचनोपादानादेव समवेतानामित्यर्थे लब्धे समवेतग्रहणं पृथग्द्वन्द्वसमस्तानामपि चांशकल्पना विकल्प उच्यत इति प्रतिपादनार्थम् ॥ ११ ॥

स्वातन्त्र्येति । स्वातन्त्र्यञ्च पारतन्त्र्यञ्च ताभ्यां व्याधेः प्राधान्यमादिशेत् जानीयात् । तत्र स्वतन्त्रस्य व्याधेः प्राधान्यं यथास्वनिर्दिष्टोपक्रमसाध्यत्वात् । अस्वतन्त्रस्य व्याधेरप्राधान्यं प्रधानव्याध्युपक्रमेण प्रायस्तस्याप्युपक्रमत्वात् । यद्यपि प्राधान्यविशेषादसौ सम्प्राप्तिर्भिद्यत इत्युक्तं तथाप्यप्राधान्यविशेषादप्यसौ सम्प्राप्तिर्भिद्यत इत्यर्थादुक्तं भवत्येव, प्राधान्याप्राधान्ययोः परस्परं सापेक्षत्वात् । तथाहि, अप्राधान्यं प्राधान्यमपेक्ष्य वक्तुं युज्यते अप्राधान्यञ्चापेक्ष्य प्राधान्यमिति ॥ १२ ॥

हेत्वादीति । कृत्स्नस्य भावः कार्त्स्न्यं कार्त्स्न्यञ्चावयवाश्च कार्त्स्न्यावयवाः । हेत्वादीनां कार्त्स्न्यावयवा हेत्वादिकार्त्स्न्यावयवाः । आदिशब्देन प्राग्रूपादयो गृह्यन्ते । बलञ्च अबलञ्च बलाबले व्याधेः सम्बन्धिनी तयोर्विशेषणं विशिष्टता बलाबलविशेषणम् । तद् यथासंख्येन हेत्वादिकार्त्स्न्यावयवैरादिशेत् । तत्र प्रतिरोगं यन्निदानत्वेनोपदिष्टं तत् किं कार्त्स्न्येन अस्य व्याधेरुत्पादकम्, उतावयवेन ? एवं प्राग्रूपमपि तथा लक्षणमपि किं समस्तस्य व्याधेर्लक्ष्यत उतावयवेन ? उपशयोऽप्यस्य व्याधेः सन्तर्पणापतर्पणरूपः, स किं कार्त्स्न्येन सुखानुबन्धं करोति, उतावयवेन ? तत्र कार्त्स्न्येन यथा,—रक्तशाल्यादि-मांस-घृत-क्षीर-दधि-वसा-मज्ज-तैलादिना । अवयवेन तु रक्तशाल्यादिना मांसाद्यन्यतमेन चैकैकेन । तथा अपतर्पणरूपोऽपि यव-श्यामाक-गवेधुक-कोरदूष-नीवार-तक्रारनालादिः, स किं कार्त्स्न्येन सुखानुबन्धं करोति, उतावयवेन ? यवादिनैकैकेन । एवमन्यदपि चिन्त्यम् । यथा च ज्वरस्यामाशयं प्रविश्य किं कार्त्स्न्येन सर्वांशेन ? तथा आममनुगम्य किं कार्त्स्न्येनाद्यंशेनेत्यादि । तदेवम्भूतमेलरयं ज्वरो निर्वर्त्तत इत्येवं बलाबलविशेषणमादिशेदिति ॥ १३ ॥

नक्तमिति । नक्तञ्च दिनञ्च ऋतुश्च भुक्तञ्च तानि नक्तं-दिनर्तु-भुक्तानि तेषामंशा अवयवाः नक्तं-दिनर्तु-भुक्तांशाः । व्याधेः कालो व्याधिकालः ; यथामलं यथादोषम् ; यो यस्य दोषस्यात्मीयः कालस्तं नक्तं-दिनर्तु-भुक्तांशैर्व्याधिकालमादिशेत् । यथा श्लेष्मज्वरस्य रात्रिमुखे पूर्वाह्णे वा वसन्ते ऋतावाहारे च भुक्तमात्रे बललाभो भवति । एवं मारुत-पित्तयोरपि बललाभो निरूप्यः ॥ १४ ॥

इति प्रोक्तो निदानार्थस्तं व्यासेनोपदेक्ष्यते ॥ १५ ॥
सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ १६ ॥
अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥ १७ ॥
तिक्तोषण-कषायाल्प-रूक्ष-प्रमित-भोजनैः ।
धारणोदीरणनिशा-जागरात्युच्चभाषणैः ॥ १८ ॥
क्रियातियोग-भी-शोक-चिन्ता-व्यायाम-मैथुनैः ।
ग्रीष्माहोरात्रिभुक्तान्ते प्रकुप्यति समीरणः ॥ १९ ॥

---

इतीति। इतिशब्दः प्रकारे; अनेन संक्षेपाख्येन प्रकारेण यथानिर्दिष्टेन निदानार्थो निदानाभिधेयः समासतः प्रकर्षेणोक्तो न तु व्यासतः। अतएवाह,—तमिति। य एव निदानार्थः समासेन प्रोक्तस्तमेव व्यासेनोपदेक्ष्यते तन्त्रकृदभिधास्यति ॥ १५ ॥

सर्वेषामिति। सर्वेषामपि रोगाणां कुपिता मलाः क्रुद्धा वात-पित्त-कफा निदानं हेतुः। तदिति। तदित्यनेन वातादयः परामृश्यन्ते। तस्य वातादिप्रकोपस्य निदानं विविधं नानाप्रकारमहितसेवनमहितानुष्ठानं प्रोक्तम् ॥ १६ ॥

किं तदित्याह,—अहितमिति। ततस्त्रयाणां कालार्थकर्म्मणां विविधो हीन-मिथ्यातिमात्रलक्षणो योगोऽहितमिति प्राक् सूत्रस्थान उदाहृत उक्तः। यथा;—"अर्थैरसात्म्यैः संयोगः कालः कर्म्म च दुष्कृतम्" इत्यादि ॥ १७ ॥

इदानीं वातादीनामन्न-पान-विहारमहितं कोपकारणमाह,—तिक्तेत्यादि। तिक्तादिभिः समीरणः कुप्यति। नन्वल्पप्रमितभोजनशब्दयोः पर्यायशब्दत्वाद् द्वयोरुपादानमयुक्तम्। नैतदस्ति, भिन्नार्थत्वादनयोः। तथा हि—अल्पभोजनं हीनभोजनमुच्यते। प्रमितभोजनन्तु तदुच्यते यदतिक्रान्तवेलं उक्तम्। तथाचागमः;—"धान्यं पुलाकनिष्पन्नं ज्ञेयं तत् प्रमिताशनम्" इति। अतीतकालं यद् भुक्तमित्यादि। धारणोदीरणे वातवेगादीनाम्। क्रियातियोगो वमन-विरेचनास्थापनादिक्रियाणामतिसेवनम्। नन्वास्थापनेन च वायोः कोपोऽनुपपन्नः; तथा हि, वाते बस्तिरिष्यत इत्युक्तम्। नवम्, आस्थापनातियोगो हि पित्त-श्लेष्मादीनां धातूनामुपचयकृत्। तदुपचयाच्च वायोः कोपः। तथाचोक्तम्;—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति। तस्माद् युक्तो वायोरास्थापनातियोगेन कोपः। तन्त्रकृताप्युक्तम्, "स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत्। उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयं" इति। ग्रीष्मान्त इत्यन्तशब्दः समीपवचनो वेद्यः; तेन ग्रीष्मसमीपे वर्षाख्ये काले प्रकोप इति युज्यते। अन्यथा चयप्रकोपप्रशमा वायोर्ग्रीष्मादिष्वित्येतद् व्याहन्यते ॥ १८। १९ ॥

पित्तं कट्वम्ल-तीक्ष्णोष्ण-पटु-क्रोध-विदाहिभिः ।
शरन्मध्याह्नरात्रर्द्ध-विदाहसमयेषु च ॥ २० ॥
स्वाद्वम्ल-लवण-स्निग्ध-गुर्वभिष्यन्दि-शीतलैः ।
आस्या * स्वप्नसुखाजीर्ण-दिवास्वप्नातिबृंहणैः ॥ २१ ॥
प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः ।
पूर्वाह्णे पूर्वरात्रे च श्लेष्मा द्वन्द्वन्तु सङ्करात् ॥ २२ ॥
मिश्रीभावात् समस्तानां सन्निपातस्तथा पुनः ।
सङ्कीर्णाजीर्ण-विषम-विरुद्धाद्यशनादिभिः ॥ २३ ॥
व्यापन्नमद्यपानीय-शुष्कशाकाममूलकैः ।
पिण्याक-मृद्यव-सुरा-पूतिशुष्ककृशामिषैः ॥ २४ ॥
दोषत्रयकरैस्तैस्तैस्तथान्न-परिवर्त्तनः † ।
ऋतोर्दुष्टात् पुरोवाताद्ग्रहावेशाद्विषाद्गरात् ॥ २५ ॥
दुष्टान्नात् पर्वताश्लेषाद्ग्रहैर्जन्मर्क्षपीड़नात् ।
मिथ्यायोगाच्च विविधात् पापानाञ्च निषेवणात् ।
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ॥ २६ ॥

---

पित्तमिति । पित्तं कट्वादिभिः कुप्यति । अर्द्धरात्रे पित्तस्य कालस्वभावात् कोपः । स्वादुरिति । स्वाद्वादिभिः कफः कुप्यति । द्वन्द्वमिति । द्वन्द्वं द्वयं वातपित्ते वातकफौ पित्तकफाविति । सङ्करात् मिश्रीभावात् तिक्तादीनां कुप्यति । एतदुक्तं भवति,—"येन तिक्तकट्वादिर्वातपित्तहेतुः सेवितस्तस्य वातपित्ते प्रकुप्यतः" । एवं शेषयोर्ज्ञेयम् ॥ २०—२२ ॥

मिश्रीभावादिति । समस्तानां तिक्तादीनां मिश्रीभावात् सन्निपातः कुप्यति । तथेति समुच्चये । सङ्कीर्णाशनादिभिश्च सन्निपातः कुप्यति । आदिशब्देन पर्य्युषितक्लिन्नादि-भोजनादयो गृह्यन्ते । सङ्कीर्णाशनादीनां लक्षणं प्रागुक्तम् । दोषत्रयकरैस्तैस्तैरिति पूर्वोक्तैर्मण्डक-दधि-फाणित-यवक-पाटल-व्रीहि-सर्षपशाकादिभिः । तथेति न केवल-मेतैरेव परिवर्त्तनादिभिश्चेति तथाशब्दस्यार्थः ॥ २३— २६ ॥

---

* अतीति क्वचित् पाठः ।

† त्वरितः इति वा पाठः ।

प्रतिरोगमिति क्रुद्धा,रोगाधिष्ठानगामिनीः ।
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ २७ ॥

इत्यष्टाङ्गहृदये निदानस्थाने प्रथमोऽध्यायः ॥ ४ ॥

---

## द्वितीयोऽध्यायः ।

अथातो ज्वरनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः ।
क्रोधो दक्षाध्वरध्वंसी रुद्रोर्द्ध्वनयनोद्भवः ॥ २ ॥

---

प्रतिरोगमिति । प्रत्यामयमित्यनेन प्रकारेण क्रुद्धाः कुपिता दोषा आशु द्रागेव देहे विकुर्वते शरीरे विकारं जनयन्ति । किं कृत्वा ? रसायनीर्नाड़ीः प्रपद्य प्राप्य । किम्भूताः ? रोगस्याधिष्ठानानि स्थानानि रसरुधिरादीनि तानि गन्तुं शीलं यासां ता रोगाधिष्ठानगामिन्यस्तास्तथाविधा नाड़ीः प्रपद्य प्राप्य विकृतिभाजो दोषाः सम्पद्यन्त इत्यर्थः ॥ २७ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तपुत्रविरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायां निदानस्थाने सर्व्वरोगनिदानं नाम
प्रथमोऽध्यायः ॥ १ ॥

---

सर्व्वरोगनिदानादनन्तरं ज्वरनिदानारम्भोऽयं सम्बन्धः । उक्तं सर्वरोगनिदानम् । अतोऽनन्तरमवश्यं कस्यचिद्द विशिष्टस्य रोगस्य निदानं वक्तुमुचितम् । रोगेषु च ज्वरः प्रधानः । तथा च मुनिः;—"ज्वरो रोगाणाम्" इति । स्वयमेव चास्य प्राधान्यं तन्त्रकृत् प्रतिपादयिष्यतीति ज्वरनिदानमेवारब्धुं युक्तम् । अथेति । अथादिशब्दानां पूर्ववद्द व्याख्या ॥ १ ॥

ज्वर इति । रोगाणां पति रोगपतिः सर्व्वरोगप्रधानः । पाप्मा पापस्वभावः । तथा मृत्युः । सर्वप्राणिनो हि मरणेनासाविव योजयति यथा न तथाऽन्ये रोगाः । सर्व्व-धात्वाप्यायकं यदोजस्तदशनं भोजनं यस्येत्योजोऽशनः । अन्तको मारणहेतुसामान्यात् । क्रोधो भगवतो महेश्वरस्य दक्षापमानितस्य ललाटान्निर्दिधक्षोर्ललाटान्निर्गतः । अतएवाह,—दक्षाध्वरध्वंसी रुद्रोर्द्ध्वनयनोद्भव इति । जन्मान्तयोर्मोहमय इति ज्वरस्य सन्तापात्मकत्वं लिङ्गम् । जन्मान्तयोश्च कश्चित् सन्तापानुपलम्भेर्मोहमय इत्युक्तम् । मोहस्व-

जन्मान्तयोर्मोहमयः सन्तापात्माऽपचारजः ।
विविधैर्नामभिः क्रूरो नानायोनिषु वर्त्तते ॥ ३ ॥
स जायतेऽष्टधा दोषैः पृथङ्मिश्रैः समागतैः ।
आगन्तुश्च मलास्तत्र स्वैः स्वैर्दुष्टाः प्रदूषणैः ॥ ४ ॥
आमाशयं प्रविश्यामममनुगम्य पिधाय च ।
स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ॥ ५ ॥

भावादेवान्यजन्मजं कर्म्म प्राणी न स्मरति । यश्चापचारजस्तथाविधादाहारादुद्भूतः स सन्तापस्वभावः स च क्रूरो दुश्चिकित्स्यः । नानायोनिषु हस्त्यश्वगोपक्ष्यादिषु च विविधैर्नामभिर्वर्त्तते । यथा,—"पाकलस्तु गजेन्द्राणामभितापो हयेषु च । गवां गोकर्णकश्च व पक्षिणां मकरस्तथा ॥ वान्तादानामलर्कः स्यादप्स्विन्द्रमदः स्मृतः । ओषधीषु तथा ज्योतिश्चूर्णको धान्यजातिषु ॥ जलेषु नीलिका भूमौ चूषो नृणां ज्वरो मतः । ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् ॥ शेषाः सर्वे विपद्यन्ते तिर्यग्योनौ ज्वरार्द्दिताः । कर्मणा लभते जन्तुर्देवत्वं मानुषादपि ॥ पुनश्चैव च्युतः स्वर्गान्मानुष्यमभिपद्यते । तस्मात् स देवभावाच्च सहते मानवो ज्वरम्" ॥ यथा—दन्तिशरीरे पाकलो नाम ज्वरः, अश्वशरीरेऽभितापकः, गोशरीरे गोकर्णकः, पक्षिशरीरे मकरः, श्वशरीरेऽलर्कः, मत्स्येष्विन्द्रमदः, ओषधीषु ज्योतिः, धान्येषु चूर्णकः, अप्सु नीलिका, भूमौ चषः, मानुषेषु ज्वर इति । ननु यदि रुद्रोर्द्धनयनोद्भवस्तर्हि अपचारज इति कथमुक्तम् ?, ब्रूमः,—पूर्वं कृतयुगे ललाटलोचनादुत्पन्नो ज्वरः । त्रेतायुगे तु सम्प्राप्ते परिग्रहदोषै-र्धर्मस्य पादेऽन्तर्हित इत्यपचारेणासौ प्रथमं प्राणिषूद्भूतोऽपचारज उच्यते । कलियुगेऽप्यन्नपानौषधाद्यपचारेण जात इत्यपचारज उच्यत इति न किञ्चिदनायुक्तम् ॥ २ । ३ ॥

सचापचारजो ज्वरः किमेको वाऽनेकविध इत्याह,—स इति । स सन्तापलक्षणो ज्वरोऽष्टधाऽष्टप्रकारः सम्पद्यते । कथम् ? पृथग्दोषैर्वातपित्तकफैस्तथा मिश्रैर्द्वाभ्यां द्वाभ्यां तथा समागतैः सन्निपतितैस्त्रिभिस्तथा आगन्तुकारणजनितो ज्वरः । एवं पृथग्दोषैस्त्रयो मिश्रैस्त्रयः सन्निपतितैरेक आगन्तुकश्चैक इत्यष्टौ । सम्प्राप्तिमस्याधुना वक्ति,—मला इति । तत्रेति निर्द्धारणे । तेष्वष्टसु ज्वरेषु मध्ये निजानां ज्वराणामुत्पत्तिर्निर्धार्यते । मला वातादयः स्वैः स्वैः प्रदूषणैः कोपनैर्दुष्टाः कुपिता ज्वरं निर्वर्त्तयन्ति उत्पादयन्ति । तत्र यथा,—वातस्तिक्तादिभिः, पित्तं कटुकादिभिः, कफः स्वाद्वादिभिः, एवं संसर्गे सन्निपाते च चिन्त्यम् । आगन्तुना च केनचित् प्रकुपिता दोषा ज्वरं निर्वर्त्तयन्ति । यद्यपि चागन्तुकज्वरस्तद्धेतुकस्तथापि तत्रापि वातादय एव हेतवः ; न हि वातादीन् विमुच्य व्याधेः समुद्भवः कथमपि सम्भाव्यते, एतावांस्तु विशेषः । दोषजे व्याधौ पूर्वं वातादयः कुप्यन्ति पश्चात् कायस्य पीड़ा भवति । आगन्तुके व्याधौ पूर्वं शरीरस्य व्यथा भवति पश्चाद् वातादिकोप इति । कथानुपूर्व्या ज्वरं निर्वर्त्तयन्तीत्याह,—आमाशयमित्यादि । आमाशयं प्रविश्य नाभिस्तनान्तरे स्थित्वा, तथा आमं पूर्वोक्तलक्षण-

सह तेनाभिसर्पन्तस्तपन्तः सकलं वपुः ।
कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्त्तयन्ति ते ।
स्रोतोविबन्धात् प्रायेण ततः स्वेदो न जायते ॥ ६ ॥
तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ।
आस्यवैरस्यमरुचिर्जृम्भा सास्राकुलाक्षता ॥ ७ ॥
अङ्गमर्दोऽविपाकोऽल्प-प्राणता बहुनिद्रता ।
रोमहर्षो विनमनं पिण्डिकोद्वेष्टनं क्लमः ॥ ८ ॥
हितोपदेशेष्वक्षान्तिः प्रीतिरम्लपटूषणे ।
द्वेषः स्वादुषु भक्ष्येषु तथा बालेषु तद्ग्रहम् ॥ ९ ॥

---

लक्षितमनुगम्य तेन चाग्निनानुगताः स्रोतांसि रसादिवाहीनि पिधाय च्छादयित्वा, तथा ज्वलनं पक्तिस्थानाद्‌ बहिर्निरस्य निष्कास्य। पक्तिग्रहणमत्र जाठराग्नेः निःसन्देहेन ग्रहणार्थमन्यथा त्रयोदशानामग्नीनां मध्यात् कतमं ज्वलनं स्थानाद्बहिर्निरस्येति सन्दिह्येतेति। तेन च निरस्तवह्निना सहैकलोलीभूताः सकलं वपुरभिसर्पन्तस्तपन्तो गात्रमत्युष्णं कुर्वन्तो ज्वरं निर्वर्त्तयन्ति। अत्युष्णग्रहणेन तत्प्रतिपादयति, अत्युष्णगात्रत्वे-नैव ज्वरसम्भवो नोष्णगात्रमात्रेण। तथा च निरामयस्यापि हि प्राणिनो जीवतो गात्रमुष्णं भवत्येव। ननु वायुकृते ज्वरे वायोर्योगवाहित्वात् पित्तकृतेऽपि ज्वरे पित्तस्य वह्निना समानगुणत्वात् सन्तापोपलब्धिर्युक्ता, श्लेष्मज्वरे तु श्लेष्मणो वह्निप्रतिपक्षत्वात् कथमिव सन्तापकत्वं युक्तं इति केचित्। अत्रोच्यते,—स्वभावादुपपन्नमेतत्, ज्वरस्य ह्ययमचिन्त्यः स्वभावो येनावश्यं सन्तापमुत्पादयति, एवं वातस्यामूर्त्तिमत्त्वेऽपि गुल्मादिषु श्यावारुणत्वोपलब्धिः, तस्माद्व्याधीनामेव स्वभावविशेषात् न्याय्यमेवेदम्। स्रोतोवि-बन्धादिति। यत एव स्रोतःपिधानं तत एव हेतोः स्वेदो न जायते। प्रायोग्रहणात् क्वचित् पित्तज्वरादौ स्वेदो जायत एवेत्यर्थः। तथाचानन्तरमेव तल्लक्षदधीते ;—स्वेद-निःश्वासवगन्ध्यम्" इत्यादि ॥ ४—६ ॥

पूर्व्वरूपं लक्षयितुमाह,—तस्येति। तस्य ज्वरस्य प्राग्रूपमालस्यं वाङ्मनःकाय-कर्म्मस्वनुद्यमः। सुश्रुते चोक्तम् यथा,—"सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता। शक्तस्य चाप्यनुत्साहः कर्म्मण्यालस्यमुच्यते" इति। अरतिरेकत्रानवस्थितिश्चेतसः ; तथाङ्गगुरुत्वम् ; आस्यवैरस्यं वक्त्रविरसता ; अरुचिरन्नाभिलाषाभावः ; जृम्भा जृम्भणम् ; सहास्रेण वर्त्तेत इति सास्रे आकुले अक्षिणी यस्य स एवं तस्य भावः सास्राकुलाक्षता ; अङ्गमर्दोऽङ्गभङ्गः ; अविपाको अन्नस्याविपत्तिः ; अल्पप्राणता स्तोकबलत्वम् ; तथा बहुनिद्रता ; त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्य इत्यत्र पुंवद्भावः। रोमहर्षो रोमाञ्चः ; विनमनमङ्गानां विनामः ; पिण्डिकयोरुद्वेष्टनमुद्वेष्टः ; क्लमो ग्लानिः हितस्य गुरुपित्रादे-रुपदेशास्तेष्वक्षान्तिरसहनत्वं तदुपदिष्टं न क्षमते। प्रीतिरित्यादि। अम्लादिषु द्रव्येषु

शब्दाग्निशीतवाताम्बु-च्छायोष्णेष्वनिमित्ततः ।
इच्छा द्वेषश्च तदनु ज्वरस्य व्यक्तता भवेत् ॥ १० ॥
आगमापगमक्षोभ-मृदुतावेदनोष्मणाम् ।
वैषम्यं तत्र तत्राङ्गे तास्तास्युश्च वेदनाश्चलाः ॥ ११ ॥
पादयोः सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं श्रमः ।
विश्लेष इव सन्धीनां साद ऊर्वोः कटीग्रहः ॥ १२ ॥
पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम् ।
छिद्यन्त* इव चास्थीनि पार्श्वगानि विशेषतः ॥ १३ ॥

---

प्रीतिर्भक्तिः ; स्वादुषु भक्ष्येषु मधुरेषु द्रव्येषु द्वेषो भवति ; तथा बालेषु शिशुषु सकललोकवल्लभेष्वपि ज्वरस्वभावाद् द्वेषो भवति, तथा तृड्भ्रंशं तृष्णात्यर्थम् ; शब्दादिष्वनिमित्ततः कारणं विना सज्वरस्य प्रीत्यप्रीती जायेते । कदाचिदप्रियमपि शब्दं न द्वेष्टि कदाचित् प्रियमपि वेणुवीणादिजनितं द्वेष्टि ; शीतार्तोऽपि कदाचिदग्निं द्वेष्टि कदाचिदशीतार्त्तोऽग्निमभिलषति । एवं शीतादिष्वपि योज्यम् । एवं प्राग्रूपमव्यक्तलिङ्गम् । एतस्य चानु प्राग्रूपाणां पश्चाज्ज्वरस्य व्यक्तता स्फुटता भवेत् स्पष्टलिङ्गोत्पत्तिः । वातज्वरोऽयं पित्तज्वरोऽयं श्लेष्मज्वरोऽयं संसर्गजोऽयं सन्निपातजोऽयमिति व्यक्तीभवति ॥ ७—१० ॥

आगमेति । आगमादीनां वैषम्यमनिलज्वरे लिङ्गमिति योज्यम् । ज्वरस्यागमः सन्तापारम्भस्तस्य वैषम्यं शिरःप्रभृतीनामङ्गानां न युगपत् सन्तापः अपितु कदाचिदस्य शिरसि पूर्वमागच्छति कदाचिदंसयोः पादयोर्वेति । अपगमो ज्वरस्य मोचस्तस्य वैषम्यं कदाचिदस्य पूर्वं पादयोः सन्तापमोचः कदाचित् त्रिके कदाचिच्छिरसि सन्तापस्य मुक्तिरिति, तथा क्षोभमृदुतयोर्वैषम्यं कदाचित्तीव्रः सन्तापः कदाचिन्मृदुरिति, वेदना ज्वरस्य तास्तास्तासां वैषम्यं न युगपत् सर्वाङ्गीणो वेदनोपलम्भः, अपितु क्वचित् कदाचित् कस्मिंश्चिदङ्ग इति, तथा ज्वरस्य उष्मा सन्तापस्तस्याऽपि वैषम्यात् कदाचिच्छिरसि अस्य सन्ताप उपलभ्यते कदाचित् पादाद्यन्यतमेऽङ्गे । तत्र तत्राङ्गे बाहुशिरःप्रभृतौ तास्ता वेदनाः । पादयोः सुप्ताद्या वक्ष्यमाणाश्चला अनवस्थिताः स्युर्वायोश्चलरूपत्वात् । ता एवाह,—पादयोरित्यादि । पादयोः सुप्तिर्निश्चेतनत्वम्, नखचतादिकमपि न चिन्तयेतां तावित्यर्थः । स्तम्भः स्तब्धता तयोरेव ; पिण्डिकयोरुद्वेष्टनमुद्वेष्टः ; श्रमः खेदः ; विश्लेष इव सन्धीनां विच्छेदनमिव ; ऊर्वोः सादः स्वक्रियायामसमर्थत्वम् ; कट्या ग्रहः स्तम्भ इव ; पृष्ठं क्षोदमिव संचूर्णतामिवाप्नोति संचूर्णशस्यादिवत् ; निष्पीड्यत इवोदरं पिण्याकादिवत् ; छिद्यन्त इवास्थीनि करपत्रादिना काष्ठवदतिशयेन पार्श्वगान्यस्थीनि

---

* भिद्यन्त इति क्वचित् पाठः ।

हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः ।
स्कन्धयोर्मथनं बाह्वोर्भेदपीडनमंशयोः ॥ १४ ॥
अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वनः ।
निस्तोदः शङ्खयोर्मूर्ध्नि वेदना विरसास्यता ॥ १५ ॥
कषायास्यत्वमथवा मलानामप्रवर्त्तनम् ।
रूक्षारुणत्वगास्याक्षि-नख-मूत्र-पुरीषता ॥ १६ ॥
प्रसेकारोचकाश्रद्धा-विपाकास्वेदजागराः ।
कण्ठौष्ठशोषस्तट् शुष्कौ च्छर्दिकासौ विषादिता ॥ १७ ॥
हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः ।
भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे ॥ १८ ॥
युगपद्व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता ।
नासास्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ॥१९॥
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ।
रक्तकोठोद्गमः पीत-हरितत्वं त्वगादिषु ।

---

च्छिद्यन्त इव, तथा हृदयस्य ग्रहणम्; वक्षस उरसः प्राजनेनेव प्रतोदेनेव तोदो व्यथनम्; स्कन्धयोर्मन्थनमरणेरिव । बाह्वोर्भेदो विदारणमिव । अंसयोः पीड़नं तैलादि-पीड़नकाष्ठैरिव ; हन्वोर्भक्षणेऽसामर्थ्यं तथा जृम्भणादीनि स्युः ; विरसास्यताऽव्यक्त-रसत्वं मुखेऽस्य भवति येन मधुराद्यन्यतमं रसं न निश्चिनोति ; अथवा कषायरसत्वं वक्त्रस्य ; मलानां मूत्रपुरीषादीनामप्रवर्त्तनमविसर्गः ; रूक्षत्वमरुणत्वं त्वगादीनां भवति रोगस्वभावात् ; तथा प्रसेकादयः स्युः ; अत्रारोचकाश्रद्धयोः को विशेषः ? ब्रूमः,— अरोचकेन वक्त्रस्थमपि न भुंक्ते, अश्रद्धया तु केवलं नाभिलषति मुखस्थन्तु भक्षयत्येवेति विशेषः ; विषादिता विषण्णत्वं दुःखितत्वम् रोमादीनां हर्षो वेपथ्वादयश्च वातज्वरे स्युः ॥ ११—१८ ॥

अथ पित्तज्वरलक्षणार्थमाह,—युगपदिति । पित्तज्वरे युगपत् तुल्यकालमङ्गानां व्याप्तिः शिरःप्रभृतीन्यङ्गानि सन्तापेनैककालं व्याप्यन्ते, नतु वातज्वर इवागमादीनां वैषम्यमिति व्याप्तिग्रहणेन द्योतयति ; प्रलापोऽसम्बद्धवचनस्योक्तिः ; कटुकरसत्वमास्ये ; तथा नासायामास्ये च पाकः ; तथा शीतेच्छादयोऽत्र भवन्ति ; मण्डलाकारा निर्मुखाः पिटिकाः कोठा इत्युच्यन्ते । ननु दोषास्त्रयोऽपि ज्वरं निवर्त्तयन्तीत्युक्तम् ; पित्तज्वरे च पित्तेन युक्तस्य कायाग्नेर्भूयो वृद्ध्या भाव्यं नाग्निमान्द्येन । "वृद्धिः समानः सर्वेषां" इति वचनात् । एवञ्चाग्निमान्द्याभावाज्ज्वरस्य सम्भवेऽप्युपपत्तिरयुक्ता । नैवम्,

स्वेदो निःश्वासवैगन्ध्यमतितृष्णा च पित्तजे ॥ २० ॥
विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता।
प्रसेको मुखमाधुर्य्यं हृल्लेपश्वासपीनसाः ॥ २१ ॥
हृल्लासच्छर्द्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु।
अङ्गेषु शीतपिटिकास्तन्द्रोदर्दः कफोद्भवे ॥ २२ ॥
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ॥ २३ ॥
निदानोक्तानुपशयो विपरीतोपशायिता ॥ २४ ॥

---

स्वस्थानाच्चालनेनाग्नेर्मान्द्यापत्तेः। स्थानवशादन्यथात्वस्याप्यग्नेः क्रियासामर्थ्यं दृष्टम्। तथा चाष्टाङ्गसंग्रहे शोषनिदाने वक्ष्यति। योऽग्निः शरीरसन्धीनाविशति तेन जृम्भा ज्वरश्चोपजायत इत्यादि। तस्मात् स एवाग्निः क्वचिदेव देशे भवति न सर्वत्र। उष्णगुणेन तु पित्तेन युक्तः पक्ता भवत्येवोष्णतरः। अतएव सन्तापादीनधिकतरान् करोतीति न किञ्चिदवानुपपन्नम् ॥ १९। २० ॥

कफज्वरलक्षणमाह,—विशेषादिति। सर्वज्वरेऽरुचिर्भवत्येव अतिशयेन तु कफजे; तथा जाड्यादयः स्युः। त्वगादिष्वित्यादिशब्द आस्यावचिनखादीनां ग्रहणाय। उदर्दस्य लक्षणं तवान्तर उक्तम्। "शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः। श्वयथुः शिशिरार्त्तानामुदर्दः कफसम्भवः" इति ॥ २१। २२ ॥

एवं त्रयाणां दोषाणां पृथग् लिङ्गान्यभिधाय सामान्यलिङ्गान्यधुना कथयति,—काल इति। कालः पूर्वाह्णादिको वर्षादिको वा यो वातादेस्तस्मिन् काले यथास्वं यथायथं वातादिज्वराणामप्रवृत्तानां प्रवृत्तिरुत्पत्तिरुत्पन्नानामाधिक्यं वा स्यात् तदा वातादिज्वरोऽयमित्यवबुध्येत ॥ २३ ॥

इदानीं सामान्येनान्यदपि लिङ्गद्वयमाह,—निदानेति। निदानानि च तान्युक्तानि च तिक्तोषणादीनि वातादिज्वरकारणानि तैरनुपशयो यस्मिन् ज्वरे स एवम्। रोगद्वारा हि रोगिणो दुःखावहत्वम्। ननु निदानानुपशय इत्येतावदस्तु, किमुक्तग्रहणेन? उच्यते,—उक्तग्रहणं स्वस्वनिदानग्रहणार्थम्; उक्तग्रहणमन्तरेण यानि कानिचिन्निदानानि रक्तपित्त-श्वासादीनि तेषामनुपशय इत्येवं प्राप्नुयात्। उक्तशब्दोच्चारणसामर्थ्यात्तु यान्येव वातज्वर उक्तानि तान्येव तत्र ज्वरे गृह्यन्ते नेतराणि; एवं पित्तकफादिज्वरादिषु; तस्मादुक्तग्रहणं कर्त्तव्यम्। विपरीतोपशायितेति। उपशेतेऽवश्यमित्युपशायि विपरीतैरुपशायि विपरीतोपशायि तस्य भावो विपरीतोपशायिता सुखानुबन्ध आरोग्यलक्षणः कस्यचिद्विपरीतैः प्रकृतत्वान्निदानस्यैव। एवं ज्वरनिदानप्रतिपक्षभूतैः सर्वेषां ज्वराणामुपशयः सुखानुबन्धो विपरीतोपशायितेति बोध्यम्। ननु निदानोक्तानुपशय इतीदमेवास्तु किं विपरीतोपशायितेत्यनेन? यस्य हि निदानोक्तानुपशयस्तस्यावश्यं विपरीतोपशायितया भाव्यम्। नैवमनैकान्तिकत्वात्। तथा ह्यतीसारादिषु निदानोक्तानुपशय उपलभ्यते न च सामावस्थायां विपरीतं संग्राह्युपशायिता। अपि च

यथास्वलिङ्गसंसर्गं ज्वरः संसर्गजोऽपि च ।
शिरोऽर्त्ति-मूर्च्छा-वमि-दाह-मोह-
कण्ठा-*-स्यशोषारति-पर्वभेदाः ।
उन्निद्रतातृड्भ्रमरोमहर्षा
जृम्भातिवाक्त्वञ्च चलात् सपित्तात् ॥ २५ ॥
तापहान्यरुचि-पर्वशिरोरुक्-
पीनस-श्वसन-कासविबन्धाः ।
शीतजाड्यतिमिरभ्रमतन्द्राः
श्लेष्मवातजनितज्वरलिङ्गम् ॥ २६ ॥
शीत-स्तम्भ-स्वेद-दाहाव्यवस्था-
स्तृष्णाकासः श्लेष्मपित्तप्रवृत्तिः ।

मद्योत्थानां विकाराणां मद्यमेव प्रबाधकमित्युक्तम् । नचैवं विपरीतोपशायितेति घटते ; तस्मान्न्याय्यमुभयोरुपादानम् । एवं हि लक्षणं सम्यगुक्तं भवति ॥ २४ ॥

यथेति । यद्यत् स्वं यथास्वं यानि यस्य ज्वरस्य स्वानि लिङ्गानि वातज्वरस्य पित्तज्वरस्य श्लेष्मज्वरस्य च तेषां संसर्गो लिङ्गसंसर्गः । संसृष्टलिङ्गत्वं तस्मिन् सति संसर्गजो ज्वरो वेद्यः । अत्रापि काले यथास्वमित्यादि सर्वं लक्षणं बोध्यम् । न चैतावदेव संसर्गलक्षणमित्याह,—अपिचेति । चलात् सपित्तात् वातपित्तसंसर्गजे शिरोऽर्त्यादयः स्युः । कण्ठास्ययोः शोषेण सम्बन्धः । वातज्वरे शिरोऽर्त्त्यादीनि प्रायो दृष्टानि कानिचित्तु पित्तज्वरे दृष्टानि तानिच वातपित्तज्वरे दृश्यन्ते, तथा अन्यान्यप्यधिकान्यत्र वातपित्तज्वरे दृष्टानि यानि न केवले वातज्वरे नापि पित्तज्वरे दृष्टानि । एवमन्ययोः संसर्गज्वरयोर्योज्यम् । उपजातिर्वृत्तम् ॥ २५ ॥

इदानीं कफानिलसंसर्गलक्षणमाह,—तापहानीति । तापहान्यादि श्लेष्मवातज्वरस्य लिङ्गम् । तापहानिस्तापाभावः ; विबन्धो मूत्रपुरीषादीनां । स्वागता वृत्तम् ॥ २६ ॥

अधुना कफपित्तसंसर्गज्वरं लक्षयति,—शीतेति । शीतादीनामव्यवस्था अनियमः, तथा तृष्णाप्रवृत्त्यादिकञ्च श्लेष्मपित्तज्वरस्य वेद्यम् । शालिनी वृत्तम् । अथ द्विदोषजानां ज्वराणां किमागमापगमवैषम्यादिना क्रमेणोत्पत्तिर्युगपत् सर्वशरीरप्राप्त्या वेत्यत्र संशयः । तत्र संसर्गजत्वादेककालं द्वयोरपि पक्षयोः सम्भवो युक्तः । किन्त्वेतयोः पक्षयोर्विरोधाद युगपदसम्भवः इति । अत्रोच्यते,—यदि संसर्गजे ज्वरे बलवान् वायुः स्यात् तदा आगमापगमवैषम्यादिना क्रमेण । अथ पित्तस्य बलीयस्त्वं तदा

* कम्प इति क्वचित् पाठः ।

मोहस्तन्द्रालिप्ततिक्तास्यता च
ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ २७ ॥
सर्व्वजो लक्षणैः सर्व्वैर्दाहोऽत्र च मुहुर्मुहुः।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ २८ ॥
सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा।
गीत-नर्त्तन-हास्यादि-विकृतेहा-प्रवर्त्तनम् ॥ २९ ॥
साश्रुणी क ुषे रक्ते भुग्ने लुलितपक्ष्मणी।
अक्षिणी पिण्डिका-पार्श्व-मूर्द्ध-पर्वास्थिरुग्-भ्रमः ॥ ३० ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवाचितः।
परिदग्धा खरा जिह्वा गुरुः स्रस्ताङ्गसन्धिता ॥ ३१ ॥
रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतिरुक् *।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥ ३२ ॥
हृद्व्यथा मलसंसर्गः प्रवृत्तिर्वाल्पशोऽति वा।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥ ३३ ॥

---

युगपत् सर्वशरीरव्याप्तिक्रमेण। समौ यदा द्वावपि भवतस्तदापि यस्य देशकालादिना बललाभस्तदा तस्यैवोत्पत्तिक्रमेण ज्वरो भवति। सन्निपाते तु युगपदेव शरीरव्याप्तिः ॥ २७ ॥

अथ सन्निपातज्वरस्य लक्षणमाह,—सर्व्वज इति। सर्व्वेभ्यो जातो वातपित्तकफसमुत्थः सर्व्वजः सर्व्वैर्लक्षणैर्युतो भवति। तथा तत्र च सन्निपातज्वरे दाहो मुहुर्मुहुः। तद्वद्दाहवत् पुनः पुनः शीतं भवति। अहनि महती निद्रा। रात्रौ तु जागरणम्। सदा वा दिवसे निशि च नैव चेति द्वयोरपि नक्तं दिवसयोर्निद्रा न भवति। तथा बहुस्वेदोऽतिशयेन नैव वा स्वेदः। तथा गीतादिकाया विकृताया ईहायाश्चेष्टायाः प्रवर्त्तनम्, तथा नयने सास्रे भवतः, तथा कलुषे रक्ते, तथा कुटिले, तथा लुलिते पक्ष्मणी ययोस्ते एवम्, तथा पिण्डिकादिरुक्, भ्रमो मोहः; कर्णौ सशब्दौ सरुजौ सपीड़ौ च; कण्ठः शूकैः किंशारुभिरिव व्याप्तः; जिह्वा परिदग्धा, तथा खरा अमृदुः; तथा गुरुः; तथा स्रस्ताङ्गसन्धित्वम्; रक्तादिष्ठीवनम्; मूर्द्ध्नो लोलनचलनम्; तथा अतिरुक्; कोठानां श्यावरक्तानां मण्डलानां च दर्शनम्। नैव चेत्यत्रापि योन्यम्; तथा हृदि पीड़ा; मलानां मूत्रपुरीषादीनामप्रवृत्तिः; अल्पशो

---

* अतितृड़िति वा पाठः।

दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम्।
सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम्॥ २४॥
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः।
असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा॥ २५॥
अन्यच्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम्।
त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा॥ २६॥
तद्वद् वातकफौ शीतं दाहादिर्दुस्तरस्तयोः॥ २७॥
शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते।

---

वा प्रवृत्तिरतिशयेनाथवा। तथा स्निग्धास्यतादि भवति। अथास्य सन्निपातस्य नामद्वयमाह,—तं सन्निपातमभिन्यासं हृतौजसञ्च ब्रूयात्। तत्रौजस्तु तेजोधातूनामित्याद्योजोलक्षणम्। हृतमोजो येन स हृतौजास्तं हृतौजसम्॥ २८—३४॥

दोष इति। दोषे विबद्ध इत्येकवचनमयुक्तम्। दोषाणां ह्यत्र च बहुत्वाद् बहुवचनं न्याय्यं स्यात्। अत्रोच्यते,—जात्यभिप्रायाद्दोषः। जात्याख्यायामेकस्य बहुत्वसिद्धेर्दोष इत्युक्ते बहुत्वं गम्यते। यथा निष्पन्नो यव इति। तस्माद् दोषे विबद्ध इति युक्तम्। नष्टेऽग्नावित्यसत्, सर्वज्वरेष्वेव ह्यग्निनाशस्य प्रागभिधानात्। तस्मादयुक्तमेतत्; उच्यते, विशेषाभिप्रायात्। कामं सर्व्वज्वरेष्वग्निनाशो युक्तः। अस्मिंस्तु सान्निपातिके विशेषेणाग्निनाश इत्यभिप्रायः। दोषे वातपित्तकफमूत्रपुरीषादिके विबद्धेऽप्रवृत्तिशीलेऽग्नौ नष्टे सति सर्वसम्पूर्णलक्षणः सन्निपातोऽसाध्यः साधयितुमशक्यः। अन्यथा असम्पूर्णलक्षणत्वेन स ज्वरः कृच्छ्रो भवेद् वैकल्यदो वा भवेत्॥ २५॥

किमेष एव सन्निपातज्वरप्रकारः सम्भवति, उतान्योऽपि सम्भवतीत्याह,—अन्यच्चेति। अन्यशब्दार्थोऽन्यदित्ययं निपातः। अपरोऽयं सन्निपातोत्थो ज्वरः यत्र सन्निपाते पित्तं वातकफाभ्यां पृथग् भिन्नं स्थितं सत् त्वचि अथवा कदाचित् कोष्ठे दाहं करोति। कथम्? पुरोऽनु वा पूर्वं पश्चाद्वा। अनु वेति स्थानविशेषाभिधायिपदसमीपे श्रूयमाणं स्थानविशेषे विकल्पं करोति। पुरोऽनु वेत्यत्र कालविशेषाभिधायिपदसमीपे श्रूयमाणं कालं विकल्पयति। तत्र चायं विशेषः, त्वचि स्थितं बहिरधिकं दाहं करोत्यन्तरल्पम्। कोष्ठे तु स्थितमन्तरधिकं बहिस्त्वल्पमिति॥ २६॥

तद्वदिति। तद्वदित्यनेन पित्तं परामृश्यते। पित्तेन तुल्यम्; यथा पित्तं पृथक् स्थितं त्वचि कोष्ठेऽथवा दाहं करोति पुरोऽनु वा, तथैव वातकफौ त्वचि कोष्ठेऽथवा पुरोऽनु वा शीतं विधत्त इति द्विविधोऽयं सन्निपातः। दाहादिरिति। शीतादिदाहाद्योः सन्निपातयोर्मध्ये यो दाहादिः सन्निपातः स दुस्तरः कृच्छ्रसाध्य इत्यर्थः। केचित्तु शीतादिः शीतान्तो दाहादिर्दाहान्त इति त्रिधा सन्निपातं समगिरन्॥ २७॥

नन्वस्मिन् शीतादौ दाहादौ च ज्वरे को विशेष इत्याह,—शीतादाविति। शीतादौ तत्र तस्मिन् सन्निपाते पित्तेन कर्त्रा कफे स्यन्दिते सान्द्रे शोषिते च ग्रीष्म इव

शीते शान्तेऽम्लको मूर्च्छा मदस्तृष्णा च जायते ॥ ३८ ॥
दाहादौ पुनरन्ते स्युस्तन्द्रा-ष्ठीव-वमि-क्लमाः ॥ ३९ ॥
आगन्तुरभिघाताभि-षङ्गशापाभिचारतः ।
चतुर्धाऽत्र क्षत-च्छेद-दाहाद्यैरभिघातजः ॥ ४० ॥
श्रमाच्च तस्मिन् पवनः प्रायो रक्तं प्रदूषयन् ।
सव्यथाशोथवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ ४१ ॥
ग्रहावेशौषधि-विष-क्रोध-भी-शोक-कामजः ।
अभिषङ्गात् ग्रहेणास्मिन्नकस्माद्धास-रोदने ॥ ४२ ॥
ओषधिगन्धजे मूर्च्छा शिरोरुग् वेपथुः * क्षवः ।
विषान्मूर्च्छातिसारास्य-श्यावता-दाह-हृद्गदाः ॥ ४३ ॥
क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकजे ।

---

खरदिनकरतापेन हिम इव, तथा शीते शान्ते चार्थाद्दाह उपजायते । अम्लकादयश्च चत्वारः स्युः । पित्तेनेति कर्तरि तृतीया । अतएव च बलवत्त्वेन प्राधान्यात् कफं स्रावयति शोषयति चेति । अम्लीद्गिरणमम्लकः ॥ ३८ ॥

दाहादाविति । दाह आदिर्यस्मिन् स दाहादिः । शीतावसान इत्यर्थाद् गम्यते । दाहादौ च सन्निपातेऽस्य दाहस्यान्तेऽवसाने तन्द्रादयो भवन्ति । दाहकारि पित्त-स्यन्दितेनैव कफेन शमिते पित्ते कफोद्रेकादेव कफजास्तन्द्रादयो भवन्ति ॥ ३९ ॥

आगन्तुरिति । आगन्तुज्वरश्चतुर्धा भवति । अभिघातजोऽभिषङ्गजोऽभिशापजो-ऽभिचारजश्च । अत्रेति । अत्रास्मिन् आगन्तौ ज्वरेऽभिघातजो यो ज्वरः स क्षतच्छेदाद्यैः शस्त्रप्रहाराद्यैर्जायते, तथा श्रमाच्चाऽध्वादिकृतादायासात् । तस्मिन्नभिघातजे ज्वरे प्रायो बाहुल्येन पवनो वायुर्ज्वरं कुरुते, किं कुर्वन् ? रक्तं प्रदूषयन् ? कीदृशं ज्वरम् । सव्यथेत्यादि । व्यथादियुक्तं तथा सरुजम् । प्रायोग्रहणं क्वचिदभिघातजेऽन्योऽपि दोषः कुर्य्यात बाहुल्येन तु वायुरिति द्योतयति ॥ ४० । ४१ ॥

ग्रहेति । ग्रहादिजो ज्वरोऽभिषङ्गाद् भवति । इदानीं ग्रहोत्पन्नस्य लिङ्गमाह,— ग्रहेणेति । ग्रहेण देवदानवादिनाष्टादशभेदभिन्नेन यो ज्वरो भवति, अस्मिंश्च ज्वरे-ऽकस्मात् निर्निमित्तमेव हासरोदने भवतः ॥ ४२ ॥

ओषधीति । विषौषधीपुष्पगन्धेन वायुनोपनीतेन यो ज्वरस्तस्मिन् मूर्च्छादयो जायन्ते । विषाज्जाते तस्मिन् ज्वरे मूर्च्छादयो जायन्ते । आस्यश्यावता कृष्णमुखत्वम् । हृद्गदो हृदये पीड़ा क्रोधात्कम्पो वेपथुर्जायते ; तथा शिरोऽर्त्तिश्च । भयशोकजे ज्वरे प्रलापः ।

---

* श्वयथुरिति वा पाठः ।

कामाद् भ्रमोऽरुचिर्दाहो ह्री-निद्रा-धीधृति-क्षयः ॥४४॥
ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ।
कोपः कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ ।
सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ॥ ४५ ॥
तत्राऽभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ।
पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ।
सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः ॥ ४६ ॥
इति ज्वरोऽष्टधा दृष्टः समासाद् द्विविधस्तु सः ।
शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ।
प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ॥ ४७ ॥
पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ ४८ ॥

---

कामादुद्भूते ज्वरे भ्रमादयो भवन्ति ; ह्रीर्लज्जा ; निद्रा स्वप्नः ; धीर्बुद्धिः ; धृतिर्धैर्यम् ; तेषां विघातः ॥ ४३ । ४४ ॥

ग्रहादाविति । ग्रहादौ ज्वरत्रये ग्रहावेशौषधिविषजे सन्निपातस्य कोपः, भयादौ ज्वरत्रये भीशोककामजे मारुतस्य कोपः । कोपेऽपि पित्तस्य ; अपिशब्दाद् वातस्यापि कोप इति । याविति । तमशब्देनैतद्दर्शयति, अन्येऽपि ये सन्निपातज्वरास्तेऽप्यसह्याः सोढुमशक्याः । एतौ पुनः शापाभिचारजावतिशयेन सोढुमशक्याविति ॥ ४५ ॥

तत्रेति । आभिचारिकैर्मन्त्रैरथर्ववेदाद्युपदिष्टैर्हूयमानस्य पुंसो यन्नामोद्देशेन हविःप्रक्षेपः स हूयमान उच्यते । अभिचारमधिकृत्य प्रणीत इति प्राग्वहतेष्ठगिति ठक् । हूयमानस्य पुंसः प्रथमं चेतस्तप्यते सदुःखं जायते, ततोऽनन्तरं देहः शरीरं तप्यते, सज्वरं सम्पद्यते, ततोऽनन्तरं विस्फोटतृड्भ्रमैर्दाहमूर्च्छायुतैर्ग्रस्तस्याक्रान्तस्य प्रत्यहं ज्वरो वर्द्धते ; ज्वरस्याधिक्यं भवति । तनुत्वचः स्फोटा एव विस्फोटा भण्यन्ते ॥ ४६ ॥

इतीति । इति पूर्वोक्तेन प्रकारेण निजः सप्तप्रकारः आगन्तुश्चेत्यष्टप्रकारो ज्वरो दृष्टो मुनीन्द्रैरिति शेषः । समासादिति । तुर्विशेषे ; समासात् संक्षेपतः पुनः स ज्वरो द्विविधः । तदेव द्वैविध्यमाह ;—शारीरो मानस इत्येकं द्विकम् । सौम्यस्तीक्ष्ण इति द्वितीयम् ; अन्तराश्रयो बहिराश्रय इति तृतीयम् । प्राकृतो वैकृत इति चतुर्थम् ; साध्योऽसाध्य इति पञ्चमम् ; सामो निराम इति षष्ठम् । इति द्वैविध्यमेषां द्विकानाम् ॥४७॥

सम्प्रत्येतानेव ज्वरान् व्याचष्टे,—पूर्वमिति । शारीरे ज्वरे प्रथमं शरीरे तापो भवति, पश्चान्मनसीति पूर्वशब्दस्य सम्बन्धिशब्दत्वाद् गम्यते । एवं मानसे ज्वरे पूर्वं मनसि तापो दुःखं पश्चाद्देहे तापः पीड़ा विशेषाज्जायते ॥ ४८ ॥

---

* मोह इति वा पाठः ।

पवने योगवाहित्वात् शीतं श्लेष्मयुते भवेत् ॥ ४९ ॥
दाहः पित्तयुते मिश्रं मिश्रेऽन्तः संश्रये पुनः ।
ज्वरेऽधिकं विकाराः स्युरन्तः क्षोभो मलग्रहः ॥ ५० ॥
बहिरेव बहिर्वेगे तापोऽपि च सुसाध्यता ॥ ५१ ॥
वर्षा-शरद्-वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात् ॥ ५२ ॥

---

इदानीं सौम्यतीक्ष्णौ व्याचष्टे,—पवन इति । पवने श्लेष्मयुते योगवाहित्वाद्धेतोः शीतं भवेत् । तस्माद् वातश्लेष्मज्वरः सौम्य इति बोध्यम् । श्लेष्मा हि सोम इति प्रागुक्तम् ॥ ४९ ॥

तीक्ष्णमिदानीं वक्ति,—दाह इति । दाहः पित्तसम्बन्धे पवने योगवाहित्वाद् भवेत् । इत्येवं मिश्रे पित्तश्लेष्मयुते पवने योगवाहित्वाच्च पवनस्य मिश्रं दाहशीतं भवेत्; मुहुर्दाहो मुहुः शीतमिति । तदयं सौम्यतीक्ष्णाभ्यामिश्रस्तृतीयो ज्वर इति वेद्यम् । सौम्यस्तीक्ष्ण इति द्वैविध्यकथनन्तु समासादिति मन्तव्यम् । योगं वहति गच्छतीति योगवाही; येन येन युक्तो भवति, तस्य तस्य स्वभावं भजत इत्यर्थः । एवञ्च सति स्वयं नोष्णो न च शीतो वायुरित्यभ्युपगतम्; तदेवमिह योगवाहित्वात् कफेन युक्ते वायौ शीतं भवेदित्युक्तमसौ वायुः शीतं करोतीत्यर्थः । पित्तयुक्तेऽस्मिन् दाहो भवेदसौ दाहं करोतीति; एवं स्वयं नोष्णो न शीत इत्येवावतिष्ठते । तत्र रूक्षो लघुः शीत इत्यत्र च शीत इत्युच्यते । तदिमे वचसी परस्परं व्याजघ्नाते । नैवम्, तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिल इत्यत्रैवायमर्थस्तथा व्याख्यातो यथा न पूर्वापरव्याहतत्वं भवेत् । तेनेह पुनर्न प्रतन्यते । इदानीमन्तराश्रयस्य लक्षणमाह,—अन्तरिति । अन्तराश्रये तु ज्वरेऽधिकं कृत्वाऽन्तर्विकाराः स्युः न बहिरेव । तथा क्षोभस्तीव्रदाहत्वम्; मलानां मूत्रपुरीषादीनां ग्रहो विबन्धः ॥ ५० ॥

बहिरिति । बहिर्वेगे तु बहिरेव तापो न त्वन्तरे । अपि चेत्यन्तःक्षोभमलग्रहावप्यत्र नस्त इति समुच्चिनोति । तत्र च बहिर्वेगेऽत एव सुसाध्यता सुखसाध्यत्वं भवति अन्तराश्रये तु दुःसाध्यतेत्यर्थादुक्तं भवति ॥ ५१ ॥

सम्प्रति प्राकृतवैकृतौ लक्षयति,—वर्षेति । वर्षादिषु त्रिषु ऋतुषु यथाक्रमं वातादैस्त्रिभिर्दोषैर्यो ज्वरो जायते स प्राकृतः, वर्षासु वातज्वरः प्राकृतः, शरदि पित्तज्वरो वसन्ते कफज्वर इति परिभाष्यते । अतएव वातप्रकृतेर्वातेन यो ज्वरः पित्तप्रकृतेः पित्तेन श्लेष्मप्रकृतेः श्लेष्मणा स न प्रकृतिभवत्वेन प्राकृत इत्युच्यते । वकृतोऽन्य इति । यो ज्वरो वर्षादिभ्य ऋतुभ्योऽन्यत्र काले जातो वर्षादिष्वपि वा न यथाक्रमं वाताद्यैर्जनितः स यथोक्तप्राकृतलक्षणादन्यः स वैकृत उच्यते । स च कृच्छ्रसाध्यः; प्राकृतस्तु सुसाध्य इत्यर्थाद् गम्यते । प्राय इत्यादि । प्रायो बाहुल्येन प्राकृतोऽपि यो ज्वरोऽनिलाज्जायते सोऽपि दुःसाध्यः । प्रायोग्रहणेनतद् द्योतयति, कदाचिद् दैवानुकूलत्वात् सुसाध्य एव

वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।
कुर्यात् पित्तञ्च शरदि तस्य चानुबलः कफः ।
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद् भयम् ॥ ५३ ॥
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ५४ ॥
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ ५५ ॥

---

भवति। ननु वर्षास्वपि प्राकृतोऽपि ज्वरो यथाविकृतिविज्ञानीये कथितस्तथाऽसाध्य एव। ज्वरो निहन्ति बलवानित्यादि। तदेतत् पूर्वापरव्याहतमिव दृश्यते। नैवम्, अनयोर्वचसोः सामान्यविशेषरूपत्वात्। तथा चेह सामान्येनोक्तं विकृतिविज्ञानीये तु विशेषेणेति। एतदेव च स्फुटीकर्तुं वक्ष्यति, "विकृतिविज्ञाने प्रागसाध्य उदाहृतः" इति ॥ ५२ ॥

सम्प्रति वर्षासु प्राकृतस्य ज्वरस्य स्वरूपं निरूपयति,—वर्षास्विति। प्रावृषि पवनः कुपितः पित्तश्लेष्मयुतो ज्वरं कुर्यात्। प्रावृषि प्राकृतो ज्वरो वातप्रधानः पित्तश्लेष्माणौ त्वनुबलत्वेन वातस्य स्थितौ न तु सन्निपात इव। स्वयं ज्वरकारकावित्यर्थः। साम्प्रतं शरदि प्राकृतस्य ज्वरस्य दोषबलाबलं लक्षयति,—पित्तमिति। पित्तं शरदि प्राकृतं ज्वरं कुर्यादित्यनुवर्त्तते। प्रावृट्सञ्चितस्य पित्तस्य तदा कोपसम्भवात् तस्य च पित्तस्यानुबलमनुबन्धि बलं कफः। अनुबलमिवानुबलम्। यथा कस्यचित् स्वतन्त्रस्य राज्ञो गज-तुरग-रथ-पुरुषादि-बलवतो वैरिभिः सह युध्यमानस्य पश्चादन्यद्बलं तच्छत्रोरनुबन्धरूपमागच्छति, एवं स्वतन्त्रस्य पित्तस्य ज्वरं कुर्वतो बलोपबृंहणं शरदि कफः करोति। तत्प्रकृतेरिति। तच्छब्देन वर्षाशरदुद्भूतौ मारुतज्वरपित्तज्वरौ परामृश्येते। तयोः प्रकृतिस्तत्प्रकृतिस्तया तत्प्रकृत्या तत्स्वभावेन तत्र प्राकृते ज्वरे अनशनाल्लङ्घनाद् भयं न भवतीति शेषः। विसर्गाच्च। वर्षाशरदुपलक्षितो हि कालो विसर्गः सौम्यस्वभावस्तस्माच्च कारणात् तस्मिन् काले ज्वर उत्पन्ने लङ्घनात् प्रत्यपायशङ्का न भवति। यथाऽन्यस्मिन् काले ज्वर आदानकालस्वभावाद् वातपित्तोल्बणत्वाच्चानशनात् भयं भवतीत्यर्थः ॥५३॥

कफ इति। वसन्ते काले कफो ज्वरं कुर्यादिति वर्त्तते। तञ्च कफमनु वातपित्तं भवेत्। वातपित्ते तस्यानुबले भवत इत्यर्थः। नन्वत्र साक्षात् कफस्य कर्त्तृत्वमुच्यते। कफस्य सौम्यस्वभावस्तस्मादत्र नानशनाद् भयमिति तच्चायुक्तम्। तथा हि, वर्षशरदोः श्लेष्मानुबलत्वं कालस्य विसर्गाख्य इति कारणद्वयसम्भवाद् धातुपचयो न सम्भाव्यत एव। वसन्ते तु कालस्याग्नेयत्वात् वातपित्तानुबलत्वाच्चावश्यम्भाविधातुप्रचय एव। तस्माद् वसन्तेऽनशनाद् भयं शङ्क्यते। केचित्तु ज्वरस्यामाशयसमुत्थत्वाद् वातकफोत्थत्वाच्च अत्रापि किञ्चिन्मात्रमनशनाद् भयं नाशङ्क्यत एवेत्याहुः ॥ ५४ ॥

अथ साध्यासाध्यज्वरलक्षणार्थमाह,—बलवदिति। बलवत्सु नरेषु यौवनादिसम्पत्त्या तथा अल्पदोषेषु यो ज्वरो जायते उपद्रवेण कासादिना रहितः स साध्यः साधयितुं शक्यः ॥ ५५ ॥

सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ५६ ॥
ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ।
न प्रवृत्तिर्न विड् जीर्णा न क्षुत्सामज्वराकृतिः ॥ ५७ ॥
ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५८ ॥
जीर्णतामविपर्यासात् सप्तरात्रञ्च लङ्घनात् ॥ ५९ ॥

---

सर्वथेति । यादृगातुरस्य यादृशो ज्वरोऽसाध्यो भवति, तादृशो विकृतिविज्ञानीये शारीरे ज्वरो निहन्ति । बलवानित्यादिना ग्रन्थेन प्राक् पूर्वमुक्तः ॥ ५६ ॥

अधुना सामनिरामौ ज्वरौ लक्षयति,—ज्वरेति । ज्वरस्योपद्रवाः प्रलापभ्रमादयस्तेषां तीक्ष्णत्व तीव्रता, तथा बहुमूत्रता, तथा न प्रवृत्तिर्न पुरीषस्य प्रवर्त्तनम् । विट्-प्रवृत्तावपि हि प्रवृत्तिशब्दः प्रसिद्धः ; यथाऽनन्तरमधुनैवाधीतं प्रवृत्तिर्वाल्पशोऽतिवेति । अथ चेत् विट् प्रवर्त्तते, सा जीर्णा पक्वा न भवति, तथा न क्षुत् न बुभुक्षा ; इयमशेषा लिङ्गसंहतिः सामज्वराकृतिः सामज्वरस्य लक्षणम् । सह आमेन वर्त्तते यो ज्वरः स सामज्वरस्तस्याकृतिः ; उग्मणोऽल्पबलत्वेनेत्याद्यामलक्षणम् ॥ ५७ ॥

सम्प्रति पच्यमानज्वरस्य लक्षणमाह,—ज्वरवेग इति । अतिशयेन ज्वरवेगस्तृष्णादयश्चेति पच्यमानज्वरस्य लक्षणम् । पच्यमानज्वरस्य च क्वचिदप्यनिर्द्दिष्टस्यापीह कथनं मतान्तरीयकत्वात् । तथा हि, यावत् पच्यमानावस्था न भवति तावत् कथं निरामावस्था स्यात् ? तस्माद युक्तः पच्यमानज्वरस्य निर्देशः ॥ ५८ ॥

इदानीं निरामज्वरलक्षणमाह,—जीर्णतेति । आमशब्देनात्र सामज्वरलक्षणमुपलक्ष्यते । तेन सामज्वरोक्तलक्षणविपर्यासाज्ज्वरस्य जीर्णता वेदितेति बोध्यम् । यथा,—ज्वरोपद्रवमृदुत्वं ग्लानिरल्पमूत्रतां पक्वविट्प्रवृत्तिः क्षुदुपगमनमित्येवं रूपो विपर्यासः, तथा ज्वरवेगोऽधिकमित्यादिः पच्यमानज्वराकृतेश्च विपर्यासात् जीर्णता पक्वता लक्षयितव्या । तथाहि, पच्यमानतायामपि सामता सम्भाव्यत एव, तथा सप्तरात्रञ्च लङ्घनात् । सप्तरात्रमिति सप्तानां रात्रीणां समाहार इत्यच् समासान्तः, अत्यन्तसंयोगे द्वितीया । तेनायमर्थः,—सप्तरात्रीर्लङ्घयित्वाऽतिवाह्य ततोऽनन्तरं यः कालोऽष्टमदिनादिस्तदा ज्वरस्य जीर्णता निरामतेति । यथा च मुनिः ;—"सप्ताहेन तु पच्यन्ते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" इति । नन्वेवं सति सप्तरात्रातिप्रवृत्तिरेव निरामज्वरलिङ्गमस्तु । जीर्णतामविपर्यासादित्यनेनार्थः । अस्त्येवैतत्, किन्तु सन्निपातज्वरे बहुना कालेन मलपाको भवति, तस्मात् तल्लक्षणार्थं जीर्णतामविपर्यासादित्युक्तम् । यद्येवं जीर्णतामविपर्यासादित्यस्तु किं सप्तरात्रञ्च लङ्घनादित्यनेन ? अपि च त्रिदोषजे ज्वरे सप्तरात्रातिक्रमलक्षणं लिङ्गं नोपयुज्यते । तत्र ह्येवमुच्यते,—वातपित्तकफैः सप्तदशद्वादश चेत्यारभ्य यावत् शुद्ध्यशुद्धोज्वरः कालं दीर्घमप्यनुवर्त्तत इति । तस्मात् सप्तरात्रञ्च लङ्घनादित्यवाच्यमापन्नमिति । उच्यते, मन्ददोषो यो ज्वरस्तस्यामवि-

ज्वरः पञ्चविधः प्रोक्तो मलकालबलाबलात्।
प्रायशः सन्निपातेन भूयसा तूपदिश्यते।

---

पर्यासात् सप्ताहादर्वागपि जीर्णतोच्यते। यस्तु बहुदोषो ज्वरस्तस्य तु क्रतसम्यलङ्घनस्य जीर्णतोच्यते। इति लक्षणद्वयेन प्रत्यपादि; अतएव च तत्र पथ्यमनुजज्ञे। वक्ष्यति हि—"इत्ययं षड़हो नेयो बलं दोषञ्च रक्षता।" तस्मादेतयोर्लक्षणयोर्द्वयोरप्युपादानं न्याय्यमिति स्थितम्। खरनादेनाप्येवमवादि;—"न च निःसप्तेनेह निरामज्वर-कारणम्। चिरादपि हि पच्यन्ते सन्निपातज्वरे मलाः। सप्तरात्रातिवृत्तिश्च चामतादि च लक्षणम्। तस्मात् तदुभयं दृष्ट्वा निरामं ज्वरमादिशेत्" इति। जीर्णः पक्वः पुराण इति पर्यायाः ॥ ५९ ॥

ज्वर इति पञ्चप्रकारो ज्वरो वक्ष्यमाणः सन्ततादिभिर्भेदैः प्रोक्तो मुनीन्द्ररिति शेषः। कुतः—मलेत्यादि। मलो वातादिः; कालः पूर्वाह्णादिः; बलञ्च बलञ्च बलमित्येकशेषः, बलञ्चाबलञ्च बलाबलं काले बलाबलं कालबलाबलम्, सप्तमीति योग-विभागात् समासः, मलानां कालबलाबलं मलकालबलाबलं तस्मात् द्विबलशब्दोऽत्र निर्दिष्टो द्विविधसम्बन्धाय:! कोऽसौ द्विविधः सम्बन्धः इति चेत्, ब्रूमः,—ज्वरः पञ्चविधः कथितो मलकालबलात् तथा मलकालबलाबलात्। तदयमत्रार्थः;—सन्ततो ज्वरो मलकालबलादुक्तः। तथाचानन्तरमेव सन्ततलक्षणं वक्ष्यति। मला बलिनो गुरवः स्रक्षाः सन्ततं निष्प्रतिद्वन्द्वा ज्वरं कुर्य्युरिति; तस्माद्‌ बलवन्त एव हि दोषाः सन्ततं ज्वरं कुर्वन्ति। विषमज्वराश्चत्वारो मलकालबलाबलाद्‌ भवन्ति। तथा च विषमज्वरलक्षण-ऽधुनवाभ्येष्यते। "अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम्। सविपक्षो ज्वरं कुर्याद्‌-विषमं चयवृद्धिभाक्" इति। तस्माच्चतुष्प्रकारोऽपि विषमज्वरो मलकालबलाबलाद्‌ भवति। खरनादेनाप्युक्तम्,—"बलिभिः सवगैः सामैरसस्रोतोऽविकारिभिः। निष्प्रत्य-नीकैर्दोषैर्यः सन्ततो जायते ज्वरः" इत्यादि। तथा तत्रैव विषमज्वरे गदितम् "व्याधिक्लिष्टस्य" इत्यारभ्य यावद्‌ "बलाबलविशेषस्तु दोषाणां सम्प्रवर्त्तते" इति। तथा तत्रव चोक्तम्,—"भुव्युत्क्रान्तस्य यथाकालं बीजं काले प्रसूयते। तथा कालक्रमाद्‌ दोषः काले ज्वरकरो भवेत्" इति। प्रायश इत्यादि। बाहुल्येनायं सन्ततादिज्वरः सन्निपाताद्‌ भवति। अत्र सन्निपातेनेत्यसाधुः। नह्यन्यः कश्चित् सन्ततादिव्यतिरिक्तो ज्वरोऽस्ति यमेक-दोषजं द्विदोषजं वा परिकल्पयेदिति। तस्मादसदेतत्। उच्यते,—समर्य्यादया दोषगत्या ये सन्ततादयो ज्वरा उत्पद्यन्ते त एकदोषजादय उपपद्यन्ते। ये पुनर्विषमसम्प्राप्ति-समुत्पन्नाः सन्ततादयस्ते सन्निपातेनेति प्रायशः सन्निपातेनेति न्याय्यमेतत्। नन्वेवं सति वातिकोऽयं पैत्तिकोऽयं श्लैष्मिकोयमयं द्वान्द्विक इति कथं व्यपदेश इत्याह,—भूयसेति। सन्निपातोद्भवेऽप्यस्मिन् सन्ततादौ भूयानधिको यो दोषस्तद्दोषोपलक्षितां संज्ञामासादय-तीत्यर्थः। वातज्वरोऽयं पित्तज्वरोऽयमित्यादि। तुरवधारणे, भूयसैव दोषेण व्यपदेशो नान्येनेति। ततश्चैवं सन्निपातोत्थः सन्ततादिज्वर इति स्थितम्। अतएव तन्त्रान्तरे एवं जगाद—"सन्ततो मारुतात् प्रायः पित्तात् प्रायस्तृतीयकः। अन्येद्युश्च कफात्

सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ६० ॥
धातुमूत्रशकृद्वाहि-स्रोतसां व्यापिनो मलाः ।
तापयन्तस्तनुं सर्वां तुल्यदूष्यादिवर्द्धिताः ॥ ६१ ॥
बलिनो गुरवः स्तब्धा विशेषेण रसाश्रिताः ।
सन्ततं निष्प्रतिद्वन्द्वा ज्वरं कुर्युः सुदुःसहम् ॥ ६२ ॥

---

प्रायः सन्निपाताच्चतुर्थकः"। सन्निपातकृतत्वात्तु दुश्चिकित्स्यश्चतुर्थकः" इति। तथा च ;—"पृष्ठेऽनिलकफोद्भूतः श्लेष्मपित्तोद्भवस्त्रिके। शिरस्यनिलसम्भूतो गृह्णातीह तृतीयकः। चतुर्थकस्तु श्लेष्मोत्थः प्रतिगृह्णाति जङ्घयोः। वातिकः शिरसोऽप्येति द्विधैवायं स्वभावतः। प्रस्कन्धतस्तु विज्ञेयो विपरीतश्चतुर्थकः" इति। अथ तदेव पञ्चविधत्वमाह,—सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकाविति। ननु पञ्चविधो ज्वर इत्यनुपपन्नं षष्ठस्य चतुर्थकविपर्ययस्य च वक्ष्यमाणत्वात्। अत्र ब्रूमः,—चतुर्थकान्तर्गतत्वाददोषः। प्लीहोदरे यकृदुदरवत्। तथा हि, अष्टावुदराणीति प्लीहोदरे च यथा यकृदुदरस्यान्तर्भावादष्टधात्वमेवं ज्वरे चतुर्थक एव, चतुर्थकविपर्ययस्यान्तर्भावात् पञ्चधात्वमेव ज्वरस्य साधु ॥ ६० ॥

अथ महारम्भत्वेन प्राधान्यात् सन्तत-सम्प्राप्तिमेव लक्षयति,—धात्विति। मला ज्वरं कुर्युरुत्पादयेयुः। कीदृशाः ? धात्वादिस्रोतसां व्यापिनः। धातवश्च मूत्रञ्च शकृच्च तानि वहन्ति नित्यं यानि स्रोतांसि तेषाम्। मला इत्यनेनैतद् द्योतयति। यदेव वातादयो मलिनीकरणस्वभावाः स्युस्तदा सन्ततं ज्वरं कुर्युर्न तु दोषरूपा धातुरूपा वा। तथा सर्वामशेषां तनुं तापयन्तः सन्तापादिना पीड़यन्तो न पुनः सन्तापमात्रमापादयन्तः, तथा तुल्यैः समानैर्दूष्यादिभिर्वर्द्धिता वृद्धिं नीताः। आदिशब्देन देशर्तु प्रकृतयो गृह्यन्ते। दूष्या रसादिधातवस्ते च त्रयाणामपि दोषाणां यथायथं तुल्यकालमलैः सर्वैरतुल्या अपि भवन्ति। प्रायेणैकैकस्य मलद्वयस्य चैकैको देशो वा ऋतुर्वा प्रकृतिर्वा तुल्या भवति। अतस्तुल्यदूष्यादिवर्द्धिता इत्युक्तम्। तथा च धन्वदेशो वातस्यैव वृद्धिहेतुस्तुल्यत्वात् कफस्य त्वतुल्यत्वात् क्षपणहेतुः। अनूपस्तुल्यत्वात् कफस्य वृद्धिहेतुर्वातस्य त्वसमानत्वात् क्षपणहेतुः। ऋतावप्येवं चिन्त्यम्। प्रकृतिस्त्रयाणां दोषाणां तुल्यकालं वृद्धिहेतुर्न सम्भवति विषमदोषजनितत्वात्। येऽप्येवमवोचन्,—"समाख्या प्रकृतिस्तुल्यत्वाद्देषां मलानामत्र ज्वरे वर्द्धनहेतुः" इति। तेऽपि मैवं वोचन्तेति वचनीयाः। यतो रोगजननोन्मुखानां दोषाणां नासौ वृद्धिहेतुरारोग्यलक्षणत्वात्। किम्भूता दोषाः ? बलिनः प्रतिपक्षैरखण्डितशक्तित्वात्। तथा गुरवः सामत्वात्। स्तब्धा निश्चला ऊर्द्ध्वमधश्चानिःसरणात्। विशेषेण रसाश्रिताः, विशेषग्रहणं मलानां सर्व्वधात्वाश्रितत्वं द्योतयति। सकलधातुसमाश्रिता अपि भवन्ति। अतिशयेन रसाख्यं धातुमाश्रित्यैते सन्ततं कुर्युः, तथा निष्प्रतिद्वन्द्वाः प्रत्यनीकरहिताः। कीदृशं ज्वरम् ? सुष्ठु, दुःखेन कृच्छ्रेण सोढुं शक्यत इति सुदुःसहम् ॥ ६१ । ६२ ॥

मलं ज्वरोष्मा धातून् वा स शीघ्रं क्षपयेत् ततः ।
सर्वाकारं रसादीनां शुद्ध्याऽशुद्ध्याऽपि वा क्रमात् ॥६३॥
वातपित्तकफैः सप्त-दशद्वादशवासरान् ।
प्रायोऽनुयाति मर्यादां मोक्षाय च बधाय च ॥ ६४ ॥
इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ।
द्विगुणा सप्तमी यावन्नवम्येकादशी तथा ।
एषा त्रिदोषमर्यादा मोक्षाय च बधाय च ॥ ६५ ॥

---

मलमिति । ज्वरस्योष्माऽनलधर्म्मः सकलवस्तुक्षपणस्वभावः स कदाचित् तथाभूतादद्दृष्टवशादस्मिन् ज्वरे धातुमलयोरेकलोलीभूतयोर्म्मलं विड़ादिकं क्षपयेत् । तथाभूतादद्दृष्टसामर्थ्याद्द धातून् वा रसादीन् क्षपयेत् शीघ्रमाश्वेव न तु चिरेण कालेन । अत्र च मलक्षपणोद्यतोऽयं ज्वरोष्मा न धातुक्षपणोद्यत इति निरामलक्षणेन विज्ञायते । तत्र चेतन्निरामलक्षणमसंरोधस्रोतस्त्वं सप्राणत्वमङ्गलाघवत्वं वातानुलोमनत्वं वाग्देहमनश्चेष्टाक्षनालस्यमग्निदीप्तत्वं विशदास्यत्वं मूत्रपुरीषादिमलप्रवर्त्तनत्वं क्षुदुपगमोनिर्ग्लानितेत्येकं किञ्चिदुत्पद्यमानमुपलभ्य निश्चीयते ज्वरोष्मणो मलक्षपणोद्यतत्वम् । एतल्लक्षणविपर्य्ययेण दोषोपक्रमणीयोक्तेन स्रोतोरोधेत्यादिना सामलक्षणमवगम्य निश्चीयते, यथाऽयं ज्वरोष्मा धातुक्षपणोद्यत इति । तत इति । स इत्यनुवर्त्तते । ततस्तस्मात् मलधातुक्षपणात् कारणाद्द रसादीनां धातुमूत्रशकृद्दोषाणां द्वादशानामप्येकलोलीभूतानां सर्वाकारं निःशेषं कृत्वा शुद्ध्या ज्वरोष्मणा निष्पादितया निर्मलतया वातपित्तकफभूयिष्ठैरेकैकश उत्पन्नः स सन्ततो ज्वरः प्रायो मोक्षाय ज्वरमुक्तये मर्य्यादामवधिं सप्त दश द्वादश वासराननुयात्यनुवर्त्तते । वासरानित्यत्यन्तसंयोगे द्वितीया । सर्व्वं आकारो यस्मिन् शोधने तत् सर्वाकारं निःशेषरूपम् । क्रियाविशेषणानां नपुंसकत्वं द्वितीया चेति द्वितीया । क्रमाद्यथाक्रमम्; तेन वातभूयिष्ठः संततो ज्वरः सप्त वासरान् पित्तभूयिष्ठो दश वासरान् कफभूयिष्ठो द्वादश वासरानित्यवतिष्ठते । तथा रसादीनामेकलोलीभूतानां केवलं ज्वरोष्मक्षपणमात्रमनुभवतामशुध्या समलतयैष ज्वरोष्मा वातपित्तकफैरेकैकश उत्पन्नः प्रायो बधाय मर्य्यादां सप्तदशद्वादशवासराननुयाति । प्रायो बाहुल्येनैषा मर्यादा कदाचिच्च वातज्वरादिरुक्तेभ्यः सप्तादिवासरेभ्योऽधिकानि दिनान्यनुवृत्त्या मोक्षाय बधाय वा भवति कदाचिन्न्यूनान्यपीति । तन्त्रान्तरे चोक्तम् । पित्तकफानिलवृध्या दशदिवसद्वादशाहसप्ताहात् हन्ति विमुञ्चति वाशु ज्वरोष्मणा धातुमलपाकादिति । इत्यग्निवेशस्य मतं ज्ञानम्, हारितस्य पुनरेवं स्मृतिः स्मरणम्, नित्यत्वादायुर्व्वेदस्य । द्विगुणा सप्तमी चतुर्दशदिनानि यावद्वातज्वरः सन्ततः पित्तज्वरो द्विगुणा नवमी अष्टादशदिनानि कफज्वरो द्विगुणैकादशी द्वाविंशतिर्दिवसान् । एषा त्रिदोषमर्य्यादा मोक्षाय च बधाय चेति । सर्वाकारं रसादीनां शुद्ध्याऽशुद्ध्याऽपि वा क्रमादित्यवाप्यनु-

शुद्ध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्त्तते ॥ ६६ ॥
कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनाम् ।
अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम् ।
सविपक्षो ज्वरं कुर्याद् विषमं क्षयवृद्धिभाक् ॥ ६७ ॥
दोषः प्रवर्त्तते तेषां स्वे काले ज्वरयन् बली ।
निवर्त्तते पुनश्चैष प्रत्यनीकबलाबलः ॥ ६८ ॥

---

वर्त्तनीयम् । क्षयश्च ते दोषाश्च त्रिदोषास्तेषांमर्य्यादाऽवधिस्त्रिदोषमर्यादा । इयमपि चतत्तल्लक्षणः प्रमाणम् । तथा दृष्टत्वात् ॥ ६३—६५ ॥

इदानीं यथापरिभाषिताद् द्विविधादपि मर्यादाप्रकारादधिकतरं कालं यथाऽस्य ज्वरस्यानुवृत्तिर्भवति तथा दर्शयितुमाह,—शुद्ध्यशुद्धाविति । शुद्धिसहिता अशुद्धिः शुद्ध्यशुद्धिः, शाकपार्थिवादित्वात् समासः । तस्यां सत्यां ज्वरः सन्तताख्यो दीर्घमपि कालमनुवर्त्ततेऽनुबध्नाति । कदाचिद्रसाख्यो धातुर्मलरहितो ज्वरोष्मणा क्षपितमलो भवति, कदाचित् रक्ताद्यन्यतमः, कदाचित् रक्तादयः सर्वे न रसः, कदाचित् रक्तादयः सर्वे किञ्चिन्मलरहिता न रसस्तथाभूतः, कदाचित् किञ्चिन्मलरहितो रक्ताद्यन्यतमः एवंप्रकारा शुद्धिसहिता अशुद्धिरुच्यते । तस्यां सत्यां सन्तताख्यो ज्वरो दीर्घकालमनुवर्त्तते ॥ ६६ ॥

एवं सन्ततस्य लक्षणमाख्याय सततकादीनां विषमज्वरसंज्ञानिमित्तं सामान्येन लक्षणमाह,—कृशानामिति । ईदृशानां पुंसामल्पोऽपि हीनबलोऽपि । अपिशब्दान्महाबलोऽपि दोषो वाताद्यन्यतमो ज्वरं विषमसंज्ञं कुर्यात् । किं कृत्वा ? दूष्यादेरन्यतमतो बलं लब्ध्वा । आदिशब्दो देशर्त्वोर्ग्रहणाय । अन्यतमग्रहणं चोपलक्षणार्थम् ; तेन कदाचित् दूष्यादेरेकस्माद्रसादेः कदाचित् द्वाभ्यां रसरक्ताद्यन्यतमाभ्यां कदाचित् दूष्यदेशर्तुभ्यो बलं लब्ध्वेति योज्यम् । किम्भूतो दोषः ? सविपक्षः सह विपक्षेण प्रत्यनीकेन दूष्याद्यन्यतमेन वर्त्तते सविपक्षः । तथा च किम्भूतः ? क्षयश्च वृद्धिश्च ते भजते सेवते क्षयवृद्धिभाक् । सततो हि ज्वरो निष्प्रत्यनीक इति सन्ततादस्य भेदः । मिथ्याहारादिसेविनामित्यत्रादिशब्देन विहारौषधादिपरिग्रहः ॥ ६७ ॥

दोष इति । तेषां कृशादीनां दोषो वाताद्यन्यतमः स्वे काले यो यस्यात्मीयः कालो वृद्धिहेतुर्वयोऽहोरात्रिभुक्तलक्षणस्तस्मिन् स्वे काले दोषः प्रवर्त्तते । स्वीयं कर्म्म दर्शयतीत्यर्थः । किं कुर्वन् ? ज्वरयन् सन्तापमुत्पादयन् । कीदृशो दोषः ? बली बलवान् सन् प्रवर्त्तते । पुनश्चैष विषमज्वरदोषः सततकादेरुत्पादको निवर्त्तते स्वव्यापाराद्विरमति । किम्भूतः ? प्रत्यनीकस्य बलं प्रत्यनीकबलं तेनाबलः । एतदुक्तं भवति यद्यसौ दोषो दूष्यादीनां सपक्षाणामन्यतमस्माद्बलं लभते तदाऽसौ स्वव्यापारे प्रवर्त्तते । यदा तु तस्य विपक्षा भवन्ति तदा तेषां विपक्षाणामन्यतमस्य बलेनास्य दोषस्य बलं हीयते । तदानीञ्च प्रत्यनीकबलाबलत्वादसौ दोषो निवर्त्तते वटादिबीजवत् । यथा

क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते ।
लीनत्वात् कार्श्यवैवर्ण्य-जाड्यादीनादधाति सः ॥ ६९ ॥
आसन्नविवृतास्यत्वात् स्रोतसां रसवाहिनाम् ।
आशु सर्वस्य वपुषो व्याप्तिर्दोषेण जायते ।
सन्ततः सततस्तेन विपरीतो विपर्ययात् ॥ ७० ॥

---

वटादिवीजं जलादिसामग्रीतो बलमासाद्य विशिष्टे काले रोहत्यङ्कुरादिकमुद्भावयति ततो जलादिविरहाद्भूमावेवावतिष्ठते न तु स्वकार्यमुद्भावयति तथैवैषोऽपि विषमज्वरस्य कर्त्ता दोषः स्वपचती दूष्यादिर्बलं लब्ध्वा स्वव्यापारं कुरुते । यदा तु विपचवलेनासौ प्रतिहतशक्तिस्तदा स्वव्यापारं न कुरुते देह एव निलीय तिष्ठति ॥ ६८ ॥

क्षीण इति । दोषे विषमज्वरकारिणि क्षीणे सति सततकादिज्वरः सूक्ष्मो भूत्वा रसादिष्वेव धातुषु लीयते लयं याति । कथं पुनरेतदवगम्यते यदसौ लीनो न पुनर्विनष्ट एवेत्यत्र हेतुमाह ;—लीनत्वादित्यादि । स तु लीनो ज्वरो लीनत्वात् कार्श्यादीन् करोति । अतएवासौ न विनष्ट एवेत्युच्यते, यतः कार्श्यादुद्गमवशादुपलभ्यते । निरन्वय-विनष्टाद्धि तद्धेतुकार्श्याद्यनुपलब्धिरेव । तस्माल्लीनो दोषो विषमज्वरेषु भवतीति स्थितम् ; ननु तुल्येऽपि वातादिदोषप्रकोपे सन्ततज्वर एवाऽऽशु सकलकायव्याप्तिः । सततकादिषु तु चिरेण विच्छिद्य भवतीति ॥ ६९ ॥

अत्र युक्तिः का इत्याह,—आसन्नेति । आसन्नं विवृतं चास्यं मुखं येषां रसवाहिनां स्रोतसां तान्येवम्, तेषां भाव आसन्नविवृतास्यत्वं तस्माद्द हेतोस्तत्र प्रविष्टेन दोषेण शीघ्रं सर्वस्य वपुषः शरीरस्य व्याप्तिर्जायते । तेन कारणेन दोषेणाशु सर्वशरीरव्याप्तिलक्षणेन सन्तताख्यो ज्वरः सततो निरन्तरो भवति । विपरीत इति । विपरीतः प्रकृतत्वात् सन्ततेन विषमो विषमसंज्ञः सततादिज्वरो विपरीतो भवति न निरन्तरं ज्वरयति । कस्माद्द विपरीतः ? विपर्ययात् ; एतदुक्तं भवति, स्थूलान्यासन्नानि विवृतास्यानि च रसवाहीनि स्रोतांसि दूरतराणि संवृतास्याानि सूक्ष्मतराणि च रक्तवाहीनि तैर्दोषैश्चिरेण तथा असाकल्येन कायं व्याप्नुवन् विच्छिन्नकालं ज्वरं करोति । अतएवाह,—अहो-रात्रस्य स द्विरित्यादि । ततो दूरतराणि संवृततरास्यानि च मांसवाहीनि स्रोतांसि तानि चिरतरेण प्राप्नोति दोषः, न चैतैः स्रोतोभि. साकल्येन युगपद्देहमनुव्याप्नोति । अतो अनेन कारणेनासावन्यस्मिन् दिने ज्वरं निर्वर्त्तयत्यनेद्युःसंज्ञम् । तेनासौ सततादपि विप्रकृष्टो भवति ततोऽपि सूक्ष्मतराणि संवृततरमुखानि च मेदोवहानि च तानि चिर-तरेण दोषः प्राप्नोति । न च तैरशेषदेहं व्याप्नोति अतोऽसावनेन कारणेन यथाक्रम-मन्यदिनमेकं हित्वा तृतीयेऽह्नि तृतीयको भवति । ततोऽप्यनेनैव विप्रकृष्टतमेन क्रमेण दिनद्वयं हित्वा चतुर्थको भवति । एवं चतुर्थकविपर्ययम् । संग्रहेऽप्याख्यत्, —"सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च । दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण च ।

विषमो विषमारम्भ-क्रियाकालोऽनुषङ्गवान् ॥ ७१ ॥
दोषो रक्ताश्रयः प्रायः करोति सततं ज्वरम् ।
अहोरात्रस्य स द्विः स्यात् सकृदन्येद्युराश्रितः ॥ ७२ ॥
तस्मिन्मांसवहा नाड़ी मेदोनाडीस्तृतीयके ।
ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः ।
सपृष्ठस्यानिलकफात् स चैकाहान्तरः स्मृतः ॥ ७३ ॥

---

याति देहश्च नाशेषं (१) भूयिष्ठं भेषजैऽपिच । क्रमीऽयं तेन विच्छिन्नसन्तती (२) लक्ष्यते ज्वरः" इति ॥ ७० ॥

अधुना विषमज्वरस्य स्वरूपं प्रतिपादयन्नाह,—विषम इति। विषमी विषमसंज्ञी ज्वरी विषमारम्भक्रियाकालो भवति । आरम्भश्च क्रिया च कालश्च आरम्भक्रियाकालाः विषमा आरम्भक्रियाकाला यस्य स एवम्। तत्र विषम आरम्भी यथा,—कश्चित् पूर्वं मूर्द्धानमारभ्यागच्छति, कश्चित् पृष्ठम्. कश्चित् जङ्घाभ्यामिति । विषमक्रियो यथा,—कश्चिच्छीतकृत्, कश्चिद्दाहकृदिति। विषमकालश्च यथा,—कश्चित् पूर्वाह्णे समागच्छति, कश्चित् मध्याह्ने, कश्चिदपराह्ने, कश्चिन्निशीथ इति । तथा अनुषङ्गवान् दीर्घकालानुबन्धी ॥७१॥

दोष इति । प्रायो बाहुल्येन रक्ताश्रयो दोषः सततं ज्वरं विदधाति । प्रायोग्रहणं षड्रसाद्याश्रयत्वमस्य सूचयति । तस्मात् सर्व्वो ज्वरः सर्व्वधातुव्यापी । भूयांस्तु धातुर्व्यपदिश्यते । अतएव सन्तते पपाठ विशेषेण रसाश्रित इति । तस्माद्द विशेषेण रक्ताश्रयः सतत इत्यवेहि । स सततोऽहोरात्रस्य मध्ये द्विः स्यात् द्वौ कालावनुवर्त्तते । अहश्च रात्रिरहोरात्रः, अहःसर्व्वैकदेशेत्यादिना अच् समासान्तः, रात्राह्नाहाः पुंसीति पुंस्त्वम् । द्वौ वारौ द्विः द्वित्रिचतुर्थ्यः सुजिति सुच् । अत्र च नायं नियमः, यदह्नेकवारं रात्रावेकवारमिति किं तर्हि कदाचिदह्न्येव वारद्वयं कदाचित् रात्रावेव वारद्वयं कदाचित् द्वयोरपि वारद्वयमिति प्रतीहि । सकृदिति । सकृदन्येद्युरहोरात्रसेऽत्यनुवर्त्तते । अहोरात्रस्य मध्येऽयमनेद्युर्नाम विषमज्वरः सकृदेकवारं भवेत् । कदाचिदह्नेकवारमुत्पद्यते कदाचित् रात्राविति। तस्मिन्ननेद्युर्ज्वरे सर्व्वधात्वाश्रयोपि दोषो विशेषेण मांसवहा नाड़ीराश्रितः । मेद इति। तृतीयके मेदोवहा नाड़ीर्विशेषेण दोष आश्रित इति योज्यम् । मेदवहा नाड़ीराश्रित्य दोषस्तृतीयकं कुरुत इत्यर्थः । स च त्रिविधः, पित्तवातादधिकात् कफपित्ताद्द वातकफाच्च । तत्र ग्राही मूर्ध्नः शिरसः पित्तानिलात् तृतीयको भवति, मूर्ध्नि वेदनास्तास्ता जनयतीत्यर्थः । यश्च कफपित्तादुत्पद्यते स त्रिकस्य ग्राही त्रिके पीड़ामुत्पादयति, यश्चानिलकफाज्जायते स पृष्ठसहितस्य त्रिकस्य ग्राही पृष्ठे त्रिके च पीड़ां जनयति ; एवमयं त्रिप्रकारस्वभावः । स च तृतीयक एकाहान्तर इति स्मृतो मुनिभिरिति शेषः । एकेनाह्नाऽन्तरं व्यवधानं यस्य स एवम् । एकस्मिन्नहनि तिरोभूय पुनरुदेतीत्यर्थः ॥ ७२ । ७३ ॥

---

(१) सन्ततादीन् करोत्यतः इति वा पाठः । (२) सन्ताप इति वा पाठः ।

चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते।
मज्जस्थ एवेत्यपरे प्रभावं स तु दर्शयेत्।
द्विधा कफेन जङ्घाभ्यां स पूर्वं शिरसोऽनिलात् ॥ ७४ ॥
अस्थिमज्जोभयगते चतुर्थकविपर्ययः।
त्रिधा द्व्यहं ज्वरयति दिनमेकन्तु मुञ्चति ॥ ७५ ॥
बलाबलेन दोषाणामन्नचेष्टादिजन्मना।
ज्वरः स्यान्मनसस्तद्वत् कर्मणश्च तदा तदा ॥ ७६ ॥

---

चतुर्थक इति। मेदश्च मज्जा च अस्थि च मेदोमज्जास्थीनि तेषामन्यतमस्मिन् स्थिते दोषे कदाचिन् मेदसि स्थिते दोषे कदाचिन्मज्जनि कदाचिदस्थिनि स्थिते दोषे चतुर्थको ज्वरो जायते। एकं दिनं ज्वरयित्वा द्व्यहं विमुच्य पुनर्ज्वरयति स चतुर्थको वेद्यः। मज्जस्थ एवेत्यपरे। अन्ये पुनराचार्या एवं स्मरन्ति। चतुर्थको ज्वरो मज्जस्थ एव दोषे जायते। स पुनश्चतुर्थकः प्रभावं द्विधा द्विप्रकारं दर्शयेत्। कफेनाधिकेन यो जायते स पूर्व्वं प्रथमं जङ्घाभ्यां ततोऽन्येभ्योऽङ्गेभ्यः। अनिलाद्यो भवति स पूर्व्वं शिरसो जायतेऽनन्तरमङ्गान्तरेभ्यः ॥ ७४ ॥

अस्थीति। अस्थि च मज्जा च अस्थिमज्जानौ। अस्थिमज्ज्ञोरुभयं द्वयं तत्र गतो यो मलो वाताद्यन्यतमस्तस्मिन् चतुर्थकविपर्ययस्तद्विपरीतलक्षणो विषमज्वरो भवति। स च त्रिधा त्रिप्रकारः; सन्निपातोद्भवत्वेऽपि कदाचित् वातेनाधिकेनाथवा पित्तेन श्लेष्मणा वा। तमेव च लक्षयितुमाह,—द्व्यहमिति। द्विधातुस्थितदोषोत्पन्नत्वाद्द्वे दिने ज्वरयित्वा दिनमेकं विमुच्य पुनर्द्व्यहं ज्वरयति स चतुर्थकविपर्ययः। अनेनैव लक्षणेन चतुर्थकस्यापि लक्षणमुक्तं भवति। स एकमहो ज्वरयित्वा द्व्यहं विमुच्य पुनर्ज्वरयति। द्वे अह्नि समाहृते द्व्यहः। राजाहःसखिभ्यष्टजिति टच् अह्नष्टखोरेवेति टिलोपः ॥ ७५ ॥

इदानीमेषां विषमज्वराणामिमं शेषभूतं ग्रन्थमाह,—बलाबलेनेति। बलञ्चाबलञ्च बलाबलं सामर्थ्यासामर्थ्यमासन्नव्याधिकारणानां दोषाणां वातादीनां तदा तदा बलाबलेन ज्वरः स्यात्। किम्भूतेन? अन्नचेष्टादिजन्मना। अद्यत इत्यन्नं रक्तशाल्यादि। अन्नग्रहणमुपलक्षणार्थम्, मांसरसाद्यपि हि पानं गृह्यते। चेष्ट्यत इति चेष्टा कायवाङ्मनोव्यापारो विहार इत्यर्थः। अन्नञ्च चेष्टा च अन्नचेष्टे, ते आदौ येषां कालदूष्यादीनां त एवं तेभ्यो जन्म यस्य बलाबलस्य तेनान्नचेष्टाद्युत्पन्नेन सततकादिर्ज्वरो भवति। मनसस्तद्वत्। तद्वदित्यनेन दोषाणां बलाबलमतिदिश्यते। यथा दोषाणां शारीराणां बलाबलेन सततकादिर्ज्वरः स्यात् तथा मनसोऽपि दोषाणां बलाबलेन ज्वरः स्यात्। चशब्दात् कर्म्मणोऽपि पूर्वोक्तस्य बलाबलेन। कस्य सम्बन्धिनः कर्म्मणः? प्रक्रतत्वात् मनस एव। तदेवं कर्म्मणो व्यापारस्य चित्तस्यार्थस्य बलाबलेन तद्वशाज्ज्वरोऽसौ भवेत्। अन्ये त्वाचक्षते,—"कर्म्मणः पुराकृतस्य बलाबलेन पुराकृतकर्म्मवशात्" इति। यत्तदो-

दोषदूष्यर्त्त्वहोरात्र-प्रकृतीनां बलाज्ज्वरः ।
मनसो विषयाणाञ्च कालं तं तं प्रपद्यते ॥ ७७ ॥
धातून् प्रक्षोभयन् दोषो मोक्षकाले विलीयते ।
ततो नरः श्वसन् स्विद्यन् कूजन् वमति चेष्टते ॥ ७८ ॥

---

नित्याभिसम्बन्धाद् यदेत्यनुक्तमपि लभ्यते। तेनायं सम्बन्धः, यदा यदाऽन्नचेष्टादि-जन्मदोषाणां बलाबलं स्यात्, तदा मनसो दोषाणां बलाबलं स्यात्, तथा कर्म्मणः पूर्वकृतस्य बलाबलं स्यात्, तदा तदा सततकादिज्वरः स्यादिति। अपिच दोषाणां वातादीनां बलेन। तथा दूष्याणां रसादीनां तथा ऋतूनां शिशिरादीनां, तथा-ऽहोरात्रस्य, तथा प्रकृतीनां बलेन मनसो बलेन, तथा विषयाणां शब्द-स्पर्श-रूप-रस-गन्धानां बलेन ज्वरस्तं तं विशिष्टं कालं प्रपद्यते। तेन कदाचित् सततकोऽन्येद्युः-स्तृतीयकश्चतुर्थको वा भवति, तथा कदाचिच्चतुर्थको भूत्वा तृतीयकोऽन्येद्युः सततको वा भवेत्। संग्रहे च रसादिधातुस्थज्वरलक्षणमुक्तम्। यथा,—"उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम्। अरोचको वमिः सादः सर्वस्मिन् रसगे ज्वरे॥ रक्तनिष्ठीवनं तृष्णा रक्तोष्णपिटिकोद्गमः। दाहरागभ्रममदाः प्रलापो रक्तसंस्थिते॥ तृड्ग्लानिः सृष्टवर्चस्त्वमन्तर्दाहो भ्रमस्तमः। दौर्गन्ध्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते॥ स्वेदोऽतितृष्णा वमनं स्वगन्धस्यासहिष्णुता। प्रलापो ग्लानिररुचिरस्थिस्थे त्वस्थिभेदनम्॥ दोषप्रवृत्तिरूर्द्ध्वाधः श्वासाङ्गाक्षेपकूजनम्। अन्तर्दाहो बहिः शैत्यं श्वासो हिक्का च मज्जगे॥ तमसो दर्शनं मर्म्मच्छेदनं स्तब्धमेढ्रता। शुक्र-प्रवृत्तिर्मृत्युश्च जायते शुक्रसंश्रये॥ उत्तरोत्तरदुःसाध्याः पञ्चात्यौ तु वर्ज्जयेदिति। प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च। मन्दज्वरप्रलेपस्तु सशीतः स्यात् प्रलेपकः॥ नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण गच्छति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो भवेद् वात-बलासकः॥ हरिद्राभिकवर्णाभस्तद्वर्णं यः प्रमेहति। स वै हारिद्रको नाम ज्वरभेदो-ऽन्तकः स्मृतः॥ कफवातौ समौ यस्य हीनपित्तस्य देहिनः। तीक्ष्णो वा यदि वा मन्दो जायते रात्रिको ज्वरः॥ दिवाकरात् पित्तबले व्यायामाच्च विशोषिते। शरीरे नीयते वाताज्ज्वरः स्यात् पूर्वरात्रिकः॥ आमाशये यदा दुष्टे श्लेष्मपित्ते व्यवस्थिते। तदार्द्धं शीतलं देहे लङ्घनोष्णं प्रजायते॥ काये पित्तं यदा दुष्टं श्लेष्मा चान्ते व्यव-स्थितः। उष्णत्वं तेन देहस्य शीतत्वं करपादयोः॥" खरनादेन तु शुक्रस्थ एव दोषे वर्ज्यता प्रत्यपादि। तथा च तद्ग्रन्थः,—"शुक्रस्थे शुक्रविमोक्षः श्वसन् प्राणान् विमोक्ष्यति" इति॥ ७६। ७७॥

धातूनिति। दोषो वाताद्यन्यतमो धातून् रसादीन् प्रक्षोभयन् चण्डपवनोद्धूत-महाजलाशयानिव कुर्वन् ज्वरमोक्षकाले विलीयते। विलीयमानदोषवशान्नरः श्वसन्, तथा स्विद्यन् रोमकूपेभ्यो जलं स्रवन्, तथा कूजन्नव्यक्तं शब्दं कुर्वन् वमति छर्द्दयति, तथा चेष्टते भूमिशय्यादौ परिलुण्ठति वेपते लतेव चलति प्रलपति असम्बन्धं ब्रूते, तथा

वेपते प्रलपत्युष्णैः शीतैश्चाङ्गैर्हतप्रभः।
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते।
सदोषशब्दञ्च शकृद्द्रवं सृजति वेगवत् ॥ ७९ ॥
देहो लघुर्व्यपगत-क्लम-मोह-तापः
पाको मुखे करणसौष्ठवमव्यथत्वम्।
स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ८० ॥

इत्यष्टाङ्गहृदये निदानस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

हतप्रभो नष्टकान्तिः उष्णैः शीतैश्चाङ्गैस्तुल्यकालमुपलक्षितो भवति। चशब्दोऽत्र तुल्यकालार्थः। तुल्यकालं तस्य कानिचिदुष्णान्यङ्गानि कानिचिच्छीतानि। विगता संज्ञा यस्यासौ विसंज्ञः, तथा ज्वरवेगार्त्तः। सक्रोध इव वीक्षते सरोष इवालोकनं करोति, तथा शकृत् पुरीषं विमुञ्चति। किम्भूतं शकृत्? दोषश्च शब्दश्च दोषशब्दौ सह ताभ्यां वर्त्तते सदोषशब्दम्। दोषशब्देनेह आमो विवक्षितः। द्रवमकठिनम्, सामं सस्वनञ्चेत्यर्थः। वेगोऽस्यास्तीति वेगवदिति ॥ ७८। ७९ ॥

सवेगं कृत्वा शकृत् सृजतीति ज्वरमोक्षकाललक्षणमुक्त्वा विगतज्वरलक्षणमभिधित्सुराह,—देह इति। तस्य विगतज्वरस्य नरस्यैतानि लक्षणानि। यथा,—देहो लघुर्भवति न तु गात्रगौरवम्, तथा व्यपगता नष्टाः क्लममोहतापा यस्यासौ व्यपगतक्लममोहतापस्तदा स सम्पद्यते, तथा अस्य मुखे वदने पाकः। करणानां चक्षुरादीनां सौष्ठवं पाटवं जायते, तथा अव्यथत्वादयोऽस्य भवन्ति। प्रकृत्या योगः प्रकृतियोगः स्वभावेन सम्बन्धः; प्रकृतियोगो यस्यास्ति मनसस्तत्प्रकृतियोगि। यादृग्यस्य चित्तं पूर्वं रजोबहुलं तमोबहुलं वा आसीत् तादृक् तस्य सम्पद्यत इत्यर्थः। तथा अन्नलिप्सा अन्नाभिलाषः। संग्रहे च नक्षत्रसमाश्रयेण च साध्यासाध्यज्वरलक्षणमुक्तम्। यथा,—"आधान-जन्म-निधन प्रत्यर्य्याख्यविपत्करे। नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा ॥ ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्त्तते। भरणीषु तु पञ्चाहात् सप्ताहात् कृत्तिकासु च ॥ त्रिःसप्तरात्रादथवा रोहिण्यामष्टरात्रतः। एकादशाद्‌ वा दिवसान्मृगे षण्णवरात्रयः ॥ पञ्चाहान्मृत्युरार्द्रायां विपत्ते संशयोऽथवा। पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात् ॥ दिवसात् सप्तविंशाद्वा द्व्यहात् सप्ताहतोऽथवा। पुष्याश्लेषासु मरणं चिरेणापि मघासु च ॥ अवश्यं स्वास्थ्यमाप्नोति द्वादशाहान्मृतो न चेत्। फाल्गुन्योः पूर्वयोर्मृत्युरन्ययोस्तु दिनेऽष्टमे ॥ नवमे चैकविंशे वा ज्वरः सौम्यत्वमृच्छति। हस्तेऽह्नि सप्तमे शान्तिश्चित्रायामष्टमे भवेत् ॥ पुनश्चिवागमे स्वातौ दशाहादथवा त्रिभिः। पक्षैर्मृत्युर्विशाखासु द्वाविंशेऽहनि निर्द्दिशेत् ॥ नवमेऽह्नि नचेच्छान्तिर्मैत्रे मृत्युस्ततः परम्। ज्येष्ठायां पञ्चमे मृत्युरूर्द्ध्वं वा द्वादशात् सुखम् ॥ स्वास्थ्यं दशाहान्मूलेन

# तृतीयोऽध्यायः ।

अथातो रक्तपित्तकासनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
भृशोष्ण-तीक्ष्ण-कट्वम्ल-लवणादि-विदाहिभिः ।

---

त्रिःसप्ताहे तथा गते । पूर्वाषाढ़ासु नवमे ततोऽन्यासु तु मासतः ॥ अष्टाभिरथवा मासैर्नवभिर्वा भवेच्छिवम् । आश्लेषाहाद् धनिष्ठासु दशाहाद्वारुणेषु तु ॥ षडहे द्वादशाहे वा मृत्युर्भाद्रपदासु च । उत्तरासु द्विसप्ताहात् प्रशमो रेवतीषु तु । चतूरात्रेऽष्टरात्रे वा क्षेम इत्याह हारितः" ॥ ज्वरः इत्युपलक्षणम् । प्रायः सर्वो व्याधिरनया दिशाऽनुस्मृतो बोध्यः क्षिप्रचिरमोक्षाय जीवितान्ताय वा । आधानं जन्मतो यद्दशमं नक्षत्रम्; विपत्करं तृतीया तारा; प्रत्यरिः पञ्चमी; निधनसंज्ञा सप्तमी तारा स्मृतेति। अथ किं नक्षत्रसमाश्रयणेन ज्वरस्य साध्यासाध्यविभागोऽङ्गीक्रियतां, उत यथानिदानं कुपितदोषलक्षणेन । ब्रूमः,—उभयथाऽपि यतो नक्षत्रं त्रिविधमपि प्राक्तनस्य कर्म्मणो दैवाख्यस्य शुभरूपस्याशुभस्य शुभाशुभरूपस्य च सौम्य-क्रूर-मध्य-स्वभाव-सूचकम् । तत्र सौम्येन नक्षत्रेण शुभं क्रूरे चाशुभं मध्यस्वभावेन च शुभाशुभम् । एतदुक्तं भवति, पुरातनकर्मवशान्नक्षत्रेण ज्वर उत्पद्यते । ऐहिककर्मवशान्मिथ्याहार-सेवनाख्यात् यथा निदानं वातादिकुपितदोषलक्षणेन च । तदनयोर्बलाबलेन ज्वरस्य साध्यासाध्यविभागो व्यवस्थाप्यः । प्रत्यपादि च मुनिभिः । यथा,—"कदाचित् कर्म्मणो बलवत्त्वं कदाचित् पुरुषकारस्येत्युभयथा ज्वरस्य साध्यासाध्यविभागो न्याय्यः ॥ ८० ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्ग-सुन्दराख्यायां ज्वरनिदानं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

ज्वरनिदानादनन्तरं रक्तपित्तनिदानमारभ्यते । यतो ज्वर उष्मणा विना न सम्भवति, पित्तेन विना न कदाचिदुष्मा । तस्माज्ज्वरनिदानादूर्ध्वं रक्तपित्तनिदानमिदानीमारब्धुं युक्तमित्याह,—अथात इति । व्याख्याऽस्य पूर्ववत् । भृशोष्णेति । भृशशब्दस्तीक्ष्णादिभिर्विदाह्यन्तैः सम्बन्धः । आदिशब्देनात्र क्षारादयो गृह्यन्ते । भृशोष्णादिभिरन्नैः पित्तलैरतिसेवितैर्द्रवं द्रवस्वभावं यत्पित्तं तत्कुपितं दुष्टं तथा रक्तं कुपितं तैरेवातिसेवितैः । अतिसेवनं चोभयथा भवति, चिरकालमभ्यवहृतैस्तथातिमात्राभ्यवहृतैः । न केवलमेतैर्यावत् कोद्रवोद्दालकैश्चान्नैः तदित्यनेन भृशोष्णादीनि परामृश्यन्ते । तैर्युक्तैर्मिश्रितैः कोद्रवोद्दालकैश्चान्नै रतिसेवितैः कुपितं पित्तं भवति रक्तञ्च । तथा ते द्वे अपि रक्तपित्ते मूर्च्छिते मिश्रतां गते मिथः परस्परं तुल्यरूपत्वं समवर्णत्वमागम्य प्राप्य सर्वां

कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः ॥ २ ॥
कुपितं पित्तलैः पित्तं द्रवं रक्तञ्च मूर्च्छितं।
ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम् ॥ ३ ॥
पित्तं रक्तस्य विकृतेः संसर्गाद्दूषणादपि।
गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते ॥ ४ ॥

---

तनुं देहं व्याप्नुतो व्याप्नुवाते। ननु भृशोष्णादीनां पित्तलत्वाव्यभिचारात्किमर्थं पित्तलैरित्युक्तम्? ब्रूमः,—दाडिमामलकसैन्धवेष्वम्ललवणादिषु व्यभिचारात्। तथाहि दाडिमामलकसैन्धवान्यम्ललवणान्यपि पित्तं न कुर्वते। अपि च न केवलं भृशोष्णादियुक्तैः कुपितं पित्तं रक्तञ्च यावदन्यैरपि पित्तलैरभृशोष्णादिस्वभावैर्व्रीहिप्रभृतिभिरतिसेवितैः कुपितं पित्तं रक्तञ्चेति प्रतिपादनार्थ पित्तलैरित्युक्तम्। नन्वेवं सति पित्तलैरित्येवं निर्देशः कथं युक्तः? उभयानुग्रहार्थः। तथाच,—भृशोष्णादीनि तथाऽन्यान्यप्यभृशोष्णादीनि व्रीहिप्रभृतीन्येवं गृहीतानि भवन्ति। अस्त्येवैतत्, किन्तु पित्तलत्वसामान्यात् गृहीतानामपि भृशोष्णादीनामुपादानं कृतमतिशयद्योतनार्थम्। यथा भृशोष्णादीन्यतिशयेन पित्तं रक्तञ्च कोपयन्ति न तथाऽन्यानि व्रीहिप्रभृतीनि। अतएव कोद्रवोद्दालकौ शीतवीर्यावपि भृशोष्णादिद्रव्ययुतौ पित्तस्य कर्त्तारौ भवतः, भृशोष्णादीनामतिपित्तलत्वात्। ननु पित्तस्य द्रवमिति विशेषणमयुक्तम्, व्यभिचाराभावात्। तथा च तन्त्रकृज्जगौ,—"पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम्" इति। अत्रोच्यते,—पित्तमद्रवमप्यस्ति। कथं ज्ञायते? ग्रन्थकारवचनात्। तथाचोवाच तन्त्रकृत्,—"पित्तं पञ्चात्मकं तत्तु पक्वामाशयमध्यगम्। पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात्। त्यक्तद्रवत्वम्" इत्यादि। तस्मात् यद्द्रवरूपं पित्तं तद्भृशोष्णादिभिः कुपितं रक्तपित्ते कारणं, न पुनर्यत्त्यक्तद्रवत्वं कठिनतां प्राप्तमिति प्रतिपादयितुं द्रवग्रहणम् ॥ २। ३ ॥

ननु यदि तुल्यरूपत्वं पित्तरक्ते प्राप्ते तत् कथमीदृशो निर्देश उपपद्यते? अधोगं यापयेद्रक्तमित्येवमादौ हि रक्तस्य पित्तसहितस्यैव निर्देशो युक्तो रक्तपित्तमधोगं यापयेदित्येवमाशंक्याह पित्तमिति। पित्तं रक्तेन व्यपदिश्यते। यस्मात्पित्तं रक्तस्य विकृतिर्विकारो रक्तादुत्पन्नमित्यर्थः। तथा चोक्तम्,—"कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च। स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः" इति। तथा संसर्गादन्योन्यमिश्रीभावात्तथा दूषणादपि यस्माद्रक्तं पित्तेनाश्वेव दूष्यते, तथा रक्तदूषणैः पित्तमपि दूष्यते, तात्स्थ्यात्। तथा च ग्रन्थः,—"यदेकस्य तदन्यस्य वर्धनक्षपणौषधम्"। अन्ये तु धातवो न तथा दूष्यन्ते यथा पित्तम्। तथा चोक्तम्,—"तत्रास्थनि स्थितो वायुः पित्तं तु स्वेदरक्तयोः" इति। तथा गन्धवर्णानुवृत्तेश्च। गन्धश्च वर्णश्च गन्धवर्णौ तयोरनुवृत्तिरनुकरणं गन्धवर्णानुवृत्तिः। कस्य गन्धवर्णौ? प्रकृतत्वाद्रक्तस्य यादृशौ गन्धवर्णौ तादृशावपि पित्तस्य। एवं च रक्तेन तद्व्यपदिश्यते। तस्मादधोगं यापयेद्रक्तमित्यादिनिर्देशो युक्त एव ॥ ४ ॥

प्रभवत्यसृजः स्थानात् प्लीहतो यकृतश्च तत् ॥ ५ ॥
शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ।
छर्दिश्छर्दितबैभत्स्यं कासः श्वासो भ्रमः क्लमः ॥ ६ ॥
लोहलोहितमत्स्याम-गन्धास्यत्वं स्वरक्षयः ।
रक्त-हारिद्र-हरित-वर्णता नयनादिषु ॥ ७ ॥
नीललोहितपीतानां वर्णानामविवेचनम् ।
स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन् भविष्यति ॥ ८ ॥
ऊर्द्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥ ९ ॥
ऊर्द्ध्वं साध्यं कफाद्यस्मात् तद्विरेचनसाधनम् ।
बह्वौषधञ्च पित्तस्य विरेको हि वरौषधम् ॥ १० ॥
अनुबन्धी कफो यस्य तत्र तस्यापि शुद्धिकृत् ।

---

ननु रक्तस्य शरीरे स्वाभाविकं प्रमाणमुक्तमष्टावेवाञ्जलयः। प्रकोपमापन्नत्वा-ढकादिसंख्यातमपि दृश्यते तत्कथमेतदित्याह,—प्रभवतीति। असृजः स्थानात्तत्पित्त-मुच्छ्रितं रक्तं प्रभवति प्रकर्षेण भवति वर्द्धते तस्माद्बहुत्वमस्य युक्तमेव। किं तदसृजः स्थानं यतस्तत्प्रभवतीत्याह,—प्लीहतो यकृतश्चेति ॥ ५ ॥

अथास्य पूर्वरूपाण्याह,—शिर इति। शिरोगुरुत्वादिकमस्मिन् रक्तपित्ते भविष्यति सति भवति। छर्दिते वमिते बैभत्स्यं जुगुप्सा स्वप्ने स्वप्नावस्थायां तद्वर्णदर्शित्वं रक्त-वर्णाकारं पश्यति ॥ ६—८ ॥

तच्च रक्तपित्तं त्रिविधमूर्द्ध्वगमधोगमुभयमार्गञ्च। तत्रोर्द्ध्वगमाह,—ऊर्द्ध्वमिति। ऊर्ध्व रक्तपित्तं कुपितं नासादिभिः सप्तभिर्द्वारैः प्रवर्त्तते। अधोगं रक्तपित्तं कुपितं मेढ्रयोनि-गुदैस्त्रिभिर्द्वारैः प्रवर्त्तते। प्राण्यङ्गानां द्वन्द्व एकवदित्यस्य प्रायिकत्वाद्बहुवचनमत्र न दुष्टम्। तथा रोमकूपैः समस्तैः। च शब्दान्नासाक्षिकर्णास्यमेढ्रयोनिगुदैरुभयमार्गमुभय-मार्गाभ्यां तद्रक्तपित्तं प्रवर्त्तते ॥ ९ ॥

ऊर्ध्वमिति। ऊर्ध्वमूर्ध्वगं रक्तपित्तं साध्यम्। यस्मात् कारणात् कफादधिका-ज्जायते; तच्च विरेचनसाधनम्; साध्यतेऽनेनेति साधनं चिकित्सितम्; तच्चोर्द्ध्वगं रक्तपित्तं बह्वौषधं वहु औषधं यस्य तद्बह्वौषधम्; अनेकसाधनं मधुर-कषाय-तिक्त-द्रव्य-साध्य-त्वात्। अपिच यस्माद्विरेकः पित्तस्य वरौषधम्। तथाचोक्तम्। "विरेचनं पित्तहराणाम्" इति। यस्य तस्मिन्नूर्ध्वगे रक्तपित्ताख्ये व्याधौ कफोऽनुबन्धी तस्यानुबन्धिनः कफस्य विरेचनं शुद्धिकृच्छोधनं करोति। अतो हेतोरूर्द्ध्वगं रक्तपित्तं साध्यम्। कषायाः स्वरस-कल्क-शृत-शीत-फाण्टाख्यास्ते स्वादवोऽपि हिताः; व्याधिप्रतिपक्षत्वात्; नतु दोषप्रति-

कषायाः स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिताः ॥
किमु तिक्ताः कषाया वा ये निसर्गात् कफापहाः ॥ ११ ॥
अधो याप्यं चला यस्मात् तत् प्रच्छर्द्दनसाधनम्।
अल्पौषधञ्च पित्तस्य वमनं न वरौषधम् ॥ १२ ॥
अनुबन्धो चलो यश्च शान्तयेऽपि न तस्य तत्।
कषायाश्च हितास्तस्य मधुरा एव केवलम् ॥ १३ ॥
कफ-मारुत-संसृष्टमसाध्यमुभयायनम्।
अशक्यप्रातिलोम्यत्वादभावादौषधस्य च ॥ १४ ॥
नहि संशोधनं किञ्चिदस्त्यस्य प्रतिलोमगम्।
शोधनं प्रतिलोमञ्च रक्तपित्ते भिषग्जितम् ॥ १५ ॥

---

पथ्यताहारिण, दोषसमानत्वात्तेषाम्। अथवा केवलमकुष्ठतण्डुलीयादिसम्बन्धिनो व्याधिप्रतिपच्चास्तथा रुच्यत्वाद्दोषप्रतिपच्चा इति श्लेष्मणोऽपि हिताः; अपि शब्दात्तिक्तादयोऽपि। विशुद्धो वाताद्यदूषितः श्लेष्मा यस्य स तस्य। किमु किं पुनस्तिक्ताः कषायाश्च ये स्वरसादयस्तेऽप्यस्योर्ध्वगस्य रक्तपित्ताख्यस्य व्याधेरथवा तद्वतो नरस्य विशुद्धश्लेष्मणो हिताः व्याधिप्रतिपच्चत्वाद्दोषप्रतिपच्चत्वाच्च। ये निसर्गात् स्वभावात्कफघ्नाः ॥ १० । ११ ॥

अध इति। अधो याप्यमधोगं रक्तपित्तं याप्यम्। कस्मात्? यस्माच्चलात् वाताधिक्यादुत्पद्यत इत्यध्याहार्यम्। तच्चाधोगं रक्तपित्त प्रच्छर्द्दनसाधनं प्रच्छर्द्दनं वमनं तत् साधनं चिकित्सितं यस्य तदेवम्। तथा स्वल्पमौषधं चिकित्सितं यस्य तदल्पौषधं नोर्ध्वगरक्तपित्तवद्बह्वौषधम्। कथमित्याह,—यस्मादयं रोगः पित्तप्रधानः। पित्ते वमनञ्च श्रेष्ठमौषधं न भवति। कफे हि वमनं प्रधानमुक्तम्। ऊर्ध्वमार्गे यद्वमनं दोषहरणं तत् पित्तस्य न वरौषधम्। अल्पौषधत्वे द्वितीयहेतुमाह;—कषायश्चेत्यादि। तस्याधोगस्य रक्तपित्तस्य मधुरा एव केवलं कषायाः हिताः पथ्या न तिक्ताः कषायाश्च। तेषां वातकोपकारणत्वात्। तथास्य चलो वायुर्योऽनुबन्ध्यनुबन्धत्वेन स्थितस्तस्यापि वायोर्न तद्वमनं शान्तये शान्त्यर्थम् ॥ १३ ॥

कफेति। उभयायनं मार्गद्वयप्रपन्नं कफमारुतसंसृष्टमसाध्यं साधयितुमशक्यम्। असाध्यत्वे हेतुद्वयमाह;—अशक्यप्रातिलोम्यत्वादित्यादि। अनुलोमविपरीतः प्रतिलोमस्तस्य भावः प्रातिलोम्यम्। अशक्यं कर्त्तुमशक्यं प्रातिलोम्यं यस्य रक्तस्य तदशक्यप्रातिलोम्यम्, तस्य भावोऽशक्यप्रातिलोम्यत्वं; तस्मादुभयायनं रक्तपित्तमसाध्यम्। अभावादौषधस्य च। एतद्योग्यौषधासम्पत्तेश्च तदसाध्यम् ॥ १४ ॥

ननु कथमेवमुच्यते इत्याह,—नेति। हि यस्मात्तस्य संशोधनं प्रतिलोमगं न किञ्चिदस्ति; यच्च प्रतिलोमगं संशोधनं तद्रक्तपित्ते भिषग्जितमौषधम्। तच्च तथाभूतमौषधं न सम्भवति यत्तद्रक्तसंशमनार्थं दीयते। यदधोमार्गापिच्चयां दीयते तदानीमूर्ध्व-

एवमेवोपशमनं सर्व्वशो नास्य विद्यते ।
संसृष्टेषु हि दोषेषु सर्व्वजिच्छमनं हितम् ॥ १६ ॥
तत्र दोषानुगमनं सिरास्र इव लक्षयेत् ।
उपद्रवांश्च विकृति-ज्ञानतस्तेषु चाधिकम् ॥
आशुकारी यतः कासस्तमेवातः प्रवक्ष्यते ॥ १७ ॥
पञ्च कासाः स्मृता वात-पित्त-श्लेष्म-क्षत-क्षयैः ॥ १८ ॥

---

मार्गप्रवृत्तं रक्तं प्रवृद्धं सम्पद्यते। अथोर्ध्वमार्गापेक्षया विरेचनमुपयुज्यते, तदाधोगं रक्तपित्तं वर्द्धते। एवमस्य प्रतिलोमगमौषधं शोधनं न सम्भवति। तस्मादौषधस्याभावः। भिषग्जितमिति भिषक्शब्दात् कण्ड्वादियगन्तान्निष्ठा इट् च। स्वभावाच्चायं भेषजवाची ॥ १५ ॥

ननूभयायनस्य रक्तपित्तस्य संशोधनरूपमौषधं मा भवतु। शमनरूपन्त्वौषधमस्य शमाय भविष्यतीत्यभावादौषधस्य चेत्ययुक्तमुदितमित्याशङ्क्याह,—एवमिति। यथा शोधनमस्योभयायनस्य शमनाय न सम्भवति तथा शमनमपि यदौषधं तदप्येतस्य शमनं न सम्भवति। कुतो हेतोरित्याह ;—संसृष्टेष्वित्यादि। हि यस्मात्संसृष्टेषु त्रिदोषेषु यत् सर्व्वजिच्छमनं तद्धितम्। तच्च सन्तर्पणापतर्पणरूपत्वाद् द्विविधम्। तत्र यदि सन्तर्पणं बृंहणं शमनमधोमार्गप्रवृत्तरक्तपित्तदोषापेक्षया मारुतशान्त्यर्थमुपयुज्यते, तदा तच्छान्तिं कुर्वती रक्तपित्तविकारकारणस्य श्लेष्मणो वृद्धये सम्पद्यते। अथापतर्पणमूर्ध्वभागप्रवृत्तदोषापेक्षया कफशान्त्यर्थमुपयुज्यते, तदानीं तस्य शान्तिं कुर्वतोऽधोगरक्तपित्तस्य कारणं वायुं प्रकोपयेत्। न चोभयात्मकमेकं नृसिंहरूपवत् शमनमस्ति यत् प्रयोजितमुभयायनस्य शमनाय स्यात्। तस्मादुभयायनमसाध्यम् ॥ १६ ॥

तत्रेति। तस्मिन् रक्तपित्ते दोषानुगमनं वात-पित्त-श्लेष्मणामनुबन्धं शिरास्र इव शिराव्यधविध्युक्तम्। वातात् श्यावारुणं रूक्षमित्यादिग्रन्थनिर्दिष्टेन लक्षणेन लक्षितं लक्षयेत्। उपद्रवांश्च विकृतिज्ञानतो लक्षयेदिति योज्यम्। विकृतिज्ञानशब्देन विकृतिविज्ञानीय उपलक्ष्यते। तेष्विति। तेषु चोपद्रवेषु मध्ये यः कासाख्य उपद्रवः स आशुकारी चिप्रं मारयति यतोऽतस्तमेव रक्तपित्तनिदानादनन्तरं प्रकर्षेण निदानप्राग्रूपादिभिर्वक्ष्यते भणिष्यति तन्त्रकृत् ॥ १७ ॥

पञ्चेति। पृथग्दोषस्त्रयः क्षतेनैकः क्षयेनैक इति कासाः पञ्चैव स्मृताः। ननु यदि पञ्चैव कासास्तत्कथं भणिष्यति केवलानिलजं कासं स्नेहैरादावुपाचरेदिति। नह्यन्यदोषयुक्तो वातिकः कासोऽभिहितोऽपि तु त्रिभिरेव दोषैः पृथगेवोक्ताः कासाः ; तथा "पित्तकासे तु सकफे वमनं सर्पिषा हितम्" ; तथा "पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्। युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः" इत्यादि। तथा अस्मिन्नेवाध्यायेऽध्येष्यते,—"साध्या दोषैः पृथक् त्रयः। मिश्रा याप्या द्वयात्" इति ; तदेतत् पूर्व्वापरव्याहतमिव। अत्रोच्यते। कासाः पञ्चैव वक्ष्यमाणया सम्प्राप्त्या जायन्ते ;

क्षयायोपेक्षिताः सर्व्वे बलिनश्चोत्तरोत्तरम् ॥ १९ ॥
तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ।
शूकपूर्णाभकण्ठत्वं तत्राधो विहतोऽनिलः ॥
ऊर्द्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संसजन् ॥ २० ॥
शिरःस्रोतांसि सम्पूर्य्य ततोऽङ्गान्युत्क्षिपन्निव ।
क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वे च पीड़यन् ॥
प्रवर्त्तते स वक्त्रेण भिन्नकांस्योपमध्वनिः ॥ २१ ॥
हेतुभेदात् प्रतीघातभेदो वायोः सरंहसः ।
यद्रुजाशब्दवैषम्यं कासानां जायते ततः ॥ २२ ॥
कुपितो वातलैर्वातः शुष्कोरःकण्ठवक्त्रताम् ।

---

वस्तुस्वाभाव्यात् । अनन्तरं वातिककासे कदाचिदाहारविहारवशात् पित्तेनानुबन्धः कदाचित् श्लेष्मणा जायते । पित्तकासे तथैव आहारविहारवशात् कदाचिद् वातेनानुबन्धः कदाचित् श्लेष्मणेति, कफकासेऽपि तद्दाहारविहारवशाद् वातेनानुबन्धः कदाचित् पित्तेन । इति न किञ्चिदत्र पूर्व्वापरव्याहतम् ॥ १८ ॥

क्षयायेति । सर्व्व एव कासा उपेक्षिताश्चिकित्सां विना क्षयाय सम्पद्यन्ते । उत्तरोत्तरक्रियावस्थाकर्षणात्, क्षयजोऽप्युपेक्षितः क्षयायैवेति बोध्यम् । उत्तरोत्तरञ्चते कासा बलिनः ॥ १९ ॥

तेषां कासानां पूर्व्वरूपमाह ;—तेषामिति । तेषां कासानां भविष्यतामुत्पित्सूनां गले कण्डूः खर्ज्जूस्तथाऽरोचकस्तथा शूकपूर्णसदृशकण्ठत्वञ्च भवति । अधुना सर्व्वकासानां सम्प्राप्तिं दर्शयति ;—तत्रेति । तत्र तेषु कासेष्वनिलोऽधोऽधस्ताद्विहतो विशेषेणात्यर्थं हत ऊर्ध्वं प्रवृत्तोऽनन्तरं क्रमेणोरो हृदयं प्राप्य तस्मिन्नुरसि संसजन्नभिष्वजमानस्तथा कण्ठेऽपि संसजन्ननन्तरं शिरःस्रोतांसि सम्पूर्य्य मस्तकशिरा आध्माप्य ततोऽनन्तरमङ्गानि सर्व्वानवयवानुत्क्षिपन्निवोर्द्ध्वं प्रेरयन्निव तथाऽक्षिणी क्षिपन्निव बहिरिव शरीरात्प्रेरयंस्तथा पृष्ठमुरश्च पार्श्वे च पीड़यन् स वायुर्वक्त्रेण प्रवर्त्तते । किम्भूतः ? भिन्नकांस्योपमध्वनिः भिन्नं भग्नं यत्कांस्यं तत्तुल्यशब्दः ॥ २० । २१ ॥

ननु कथमेकरूपायां काससंम्प्राप्तौ सत्यामनेकरूपता कासरुग्ध्वनीनां जायत इत्याह ;—हेत्विति । हेतुभेदान्निदानविशेषात् काससम्प्राप्तौ वर्त्तमानस्य वायोः प्रतिघातभेदः प्रत्याहारविशेषः । किम्भूतस्य वायोः ? सरंहसो वेगवतः । यत् यस्मात् तस्तस्माद्रुजाशब्दयोः शूलध्वन्योर्वैषम्यं न समता कासानां जायते । अन्यादृशौ रुक्शब्दौ वातकासे, अन्यादृशावेवान्येषु ॥ २२ ॥

अधुना तु वातकासस्य निदानादिनिर्देशार्थमाह ;—कुपित इति । वातलैर्वातः कुपितः शुष्कोरःकण्ठवक्त्रतां कृत्वाश्वोरःशिरःशूल-मोहक्षोभस्वरक्षयान् करोति । तथा-

हृत्पार्श्वोरःशिरःशूल-मोह-क्षोभ-स्वरक्षयान् ॥ २३ ॥
करोति शुष्कं कासञ्च महावेगरुजास्वनम् ।
सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ॥ २४ ॥
पित्तात् पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ॥ २५ ॥
पित्तासृग्वमनं तृष्णा वैस्वर्यं धमको मदः ।
प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥ २६ ॥
कफादुरोऽल्परुङ्मूर्द्ध-हृदयं स्तिमितं गुरु ।
कण्ठोपलेपः सदनं पीनसच्छर्द्यरोचकाः ॥
रोमहर्षो घनस्निग्ध-श्वेतश्लेष्मप्रवर्त्तनम् ॥ २७ ॥
युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ।
उरस्यन्तः क्षते वायुः पित्तेनानुगतो बली ॥ २८ ॥
कुपितः कुरुते कासं कफन्तेन सशोणितम् ।
पीतं श्यावञ्च शुष्कञ्च ग्रथितं कुथितं बहु ॥ २९ ॥
ष्ठीवेत् कण्ठेन रुजता विभिन्नेनेव चोरसा ।

ऽतिवेगपीड़ाशब्दयुतं शुष्कञ्च कासं करोति । वातलैरिति निर्देशोऽत्यन्तवातलैः कुपितो वायुरिति बोध्यम् । वातिके कासेऽन्येष्वपि हि कासेषु ईषद्वातलैः कुपितस्य वातस्यानुबन्धोऽस्त्येव, कुपितं वातमन्तरेण हि कासानां जन्मासम्भवः । कोपस्तु कोपकारणैर्विना यथायथं दोषाणां न जायते । तस्मादत्यतिवातलैः कुपित इति बोध्यम् । तथा स वायुरङ्गं हर्षयति । तथा कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ॥ २३ । २४ ॥

पित्तादिति । पित्तात् पित्तकासात् पीताक्षिकफतादिकं जायते । ज्योतींषि तारकास्तेषां दर्शनमिव ॥ २५ । २६ ॥

कफादिति । कफात् कफकासादुरोऽल्परुगित्यादि जायते । पित्तलैः कुपितात् पित्तात्तथा श्लेष्मलैः कुपितात् कफादित्यनिर्द्दिष्टमपि पित्तकफकासयोर्निर्द्दिष्टं बोध्यम् ॥२७

इदानीं क्षतकासस्य निदानादि निरूपयति ;—युद्धाद्यैरिति । युद्धं बाहुयुद्धमत्र । युद्धमाद्यं येषां साहसानां कठिनधनुराकर्षणादीनां तैः साहसैरयथाबलं शक्त्यतिक्रमेण सेवितैराचरितैरुरसोऽन्तर्मध्ये क्षते सति वायुः पित्तेनानुगतः कासं करोति । तैस्तैरिति सर्व्वनाम्ना दुःशङ्कं हस्त्यश्वादिसाधनं, तथोच्चभाषणं, गुरुभारोद्यमनं, वेगवन्नदीषु प्रतिस्रोतस्तरणादिकमुरःक्षतोत्पादनं गृह्यते । पित्तानुगतस्यावेण च वायोरतिकोपं प्रतिपादयति । अत एवाह ;—बलीति । पित्तानुगतत्वेनेव रक्तदूषणं कासं कुर्वन् वायुः कफं सशोणितं रक्तयुतं तथापीतं कुथितं पूतिगन्धिं बहु ष्ठीवेत् । तथा कुपितवायुवशात् कफं बहुश्यावं शुष्कं ग्रथितं पिण्डितञ्च ष्ठीवेत् । तथा कण्ठेन रुजता शूलवता

सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥ ३० ॥
पर्व्वभेद-ज्वर-श्वास-तृष्णा-वैस्वर्य्य-कम्पवान् ।
पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च ॥ ३१ ॥
क्रमाद्वीर्य्यं रुचिः पक्तिर्बलं वर्णश्च * हीयते ।
क्षीणस्य सास्रमूत्रत्वं स्याच्च पृष्ठकटिग्रहः ॥ ३२ ॥
वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः ।
कुर्वन्ति यक्ष्मायतनैः कासं ष्ठीवेत् कफं ततः ॥ ३३ ॥
पूतिपूयोपमं पीतं विस्रं हरितलोहितम् ।
लुञ्चेते इव पार्श्वे च हृदयं पततीव च ॥ ३४ ॥
अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ।
स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ।
ततोऽस्य क्षयरूपाणि सर्व्वाण्याविर्भवन्ति च ॥ ३५ ॥
इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।
याप्यो वा बलिनां तद्वत् क्षतजोऽभिनवौ तु तौ ॥ ३६ ॥

---

तथोरसा विभिन्नेनेव द्विधेव विदीर्णेन तथा सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना रुजायुक्तेन च वक्षसोपलक्षितः पर्व्वभेदादिमान् पुरुषस्तथा पारावत इवाकूजन्नव्यक्तं शब्दं कुर्वन् । तथाऽस्य कासिनः क्रमेण वीर्यादि हीयते । क्षीणस्य चास्य सास्रग्मूत्रता स्यात् ; पृष्ठकटीग्रहश्चेति ॥ २८—३२ ॥

इदानीं क्षयकासलक्षणं निरूपयति ;—वायुप्रधाना इति । राजयक्ष्मिणो राजयक्ष्मवतो नरस्य वायुः प्रधानो बली येषां ते वायुप्रधानाः, तथा कुपिताः क्रुद्धाः । के ते ? धातवो वातादयः कासं कुर्व्वन्ति । कैः कुपिता क्रुद्धाः ? यक्ष्मायतनैर्यक्ष्मनिदानोक्तैः साहसादिभिः । ततोऽनन्तरं पूतिपूयोपमं पीतं विस्रं, तथा हरितलोहितं ष्ठीवेत्, तथा पार्श्वे लुञ्चेते इव स्थानात् प्रच्याव्येते इव । हृदयञ्च पततीव भ्रश्यतीव ; तथा अस्य क्षयजकासिनोऽकस्मान्निमित्तमन्तरेणाप्युष्णशीतेच्छा भवति; कदाचित् शीतार्त्तोऽपि नोष्णमभिलषति ; कदाचिदत्युष्णक्लान्तोऽपि न शीतमभिलषति, तथा बह्वाशित्वादयः स्युः । ततोऽनन्तरं सर्व्वाणि क्षयरूपाणि पीनसश्वासादीन्यस्याविर्भवन्ति ॥ ३३—३५ ॥

इत्येष इति । इत्येष एवमादिरूपः क्षयजः कासः क्षीणानां देहनाशनः । बलिनामक्षीणानां याप्यो वा देहनाशनो वेति वाशब्दार्थः । तद्वत् क्षयजकासवत् क्षतजः कासः क्षीणानां देहनाशनो बलवतां याप्यो वा देहनाशनो वा भवति । अभिनवौ

---

* श्रोजश्चेति वा पाठः ।

सिध्येतामपि सानाथ्यात् साध्या दोषैः पृथक्‌त्रयः।
मिश्रा याप्या द्वयात् सर्व्वे जरसा स्थविरस्य च ॥ ३७ ॥
कासाच्छ्वास-क्षय-च्छर्दि-स्वरसादादयो गदाः।
भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत् ॥ ३८ ॥

इत्यष्टाङ्गहृदये निदानस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

# चतुर्थोऽध्यायः।

अथातः श्वास-हिक्का-निदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

तु तौ नवोत्थितौ पुनः क्षयक्षतजकासौ बलिनां सिध्येतामपि न केवलमसाध्य-याप्याविव्यपिशब्देन द्योत्यते। कुतः सिध्येताम्? सानाथ्याच्चतुष्पात्सम्पत्तेरित्यर्थः। इदानीं शेषाणामपि कासानां साध्ययाप्यविभागं निरूपयति;—साध्या इति। पृथग्दोषैर्वात-पित्त-श्लेष्मभिर्ये जातास्त्रयः कासास्ते साध्याः। ये पुनरुत्तरकाल-माहार-विहारादिना मिश्रा मिश्रलक्षणसम्पन्नास्ते याप्याः। किं सर्व्व एव मिश्र-दोषोत्पन्ना याप्या नेत्याह,—द्वयाद्दोषद्वयात् ये मिश्राः सम्पन्नास्ते याप्या न पुनर्दोष-त्रयात् ये मिश्रलक्षणास्तेऽपि याप्या इति द्वयग्रहणात् प्रतिपादयति। सर्व्वे कासा ये साध्या उक्ताः पृथग्दोषजास्तेऽपि जरसा जरया हेतुभूतया स्थविरस्योत्पन्ना याप्याः। वृद्धो हि निष्कास एव याप्यानाम्। तथा चोवाच संग्रहे,—"वृद्धो यापानाम्" इति ॥ ३६। ३७ ॥

कासादिति। यतः कारणात् कासादुपेक्षया सहकारिकारणभूतया श्वासादयो रोगाः सम्भवन्ति तस्मात् कासं त्वरया शीघ्रमेव जयेत्। आदिशब्देनात्र पीनसादयो वक्ष्यमाणनिदानोक्ता गृह्यन्त इति ॥ ३८ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-सुन्दराख्यायां,रक्तपित्तनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

कासनिदानानन्तरं श्वासनिदानारम्भेऽयं सम्बन्धः,—कासादुपेक्षया श्वासो भवति। तथाऽनन्तरमुक्तम्,—"कासाच्छ्वासक्षयच्छर्द्दिः" इत्यादि। तस्माच्छ्वासनिदानारम्भो युक्तः; श्वासेन तु सहैकीकृत्य हिक्कायाः कथने युक्त्या तल्लक्षत् कारणं वक्ष्यति श्वासकहेतुप्रागूपेत्यत्यादिना।—अथात इति। पूर्ववदेतद्व्याख्येयम् ॥ १ ॥

कासवृद्ध्या भवेच्छ्वासः पूर्ववा दोषकोपनैः ।
आमातिसार-वमथु-विष-पाण्डुज्वरैरपि ॥ २ ॥
रजोधूमानिलैर्मर्म-घातादतिहिमाम्बुना ।
क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पञ्चमः ॥ ३ ॥
कफोपरुद्धगमनः पवनो विष्वगास्थितः ।
प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन् ॥
उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥ ४ ॥
प्राग्रूपं तस्य हृत्पार्श्व-शूलं प्राणविलोमता ।
आनाहः शङ्खभेदश्च तत्रायासातिभोजनैः ।
प्रेरितः प्रेरयेत् क्षुद्रं स्वयं संशमनं मरुत् ॥ ५ ॥
प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम् ।

---

अथ श्वासस्य निदानादि लक्षयति ;—कासेति । कासाधिक्येन श्वासो जायत इत्येतदप्यप्रधानं निदानम्, तथा पूर्वैः सर्वरोगनिदानोक्तैर्वातादिदोषकोपनैस्तिक्तोषणादिभिः । नवैवलक्षैर्यावदामातिसारादिभिः । आमातिसारेण वमथुना विषेण पाण्डुरोगेण ज्वरेण च ; श्वासः क्षुद्रकादित्वेन पञ्चविधो भवेत् ॥ २ । ३ ॥

अधुना श्वासस्य पञ्चविधस्यापि सम्प्राप्तिमाह ;—कफेति । कफेनोपरुद्धं स्थगितं गमनं मार्गो यस्य स एवम्, तथा विष्वगास्थितः समन्ताद्देहं व्याप्यास्थितः श्वासं कुरुते । किं कुर्वन् ? प्राणाश्चोदकञ्चान्नञ्च तानि वोढुं शीलं येषां तानि स्रोतांसि दूषयन् दुष्टानि विदधत् । यतो दुष्टः कुपितः तथा उरसि तिष्ठतीत्युरःस्थः । किम्भूतं श्वासम् ? आमाशयसमुद्भवम् । आमाशयात् समुद्भवो जन्म यस्य तमामाशयसमुद्भवम् । शास्त्रकारश्चैवंविधां सम्प्राप्तिं दर्शयन् यदौषधं वातजित् पाचन-दीपनं तदत्र शस्तमिति द्योतयति । एवं सर्वरोगाणामपि सम्प्राप्त्यनुरूपमौषधं रोगोपशान्त्यै इति वेद्यम् । पवनो विष्वगास्थित इत्यनेनैवोरःस्थत्वे लब्धे उरःस्थग्रहणं प्रकर्षार्थम्, अतिशयेनोरःस्थितः श्वासं करोतीत्यर्थः ॥ ४ ॥

प्राग्रूपमिति । तस्य पञ्चविधस्यापि श्वासस्य पूर्वरूपं हृच्छूलादिकं शङ्खभेदावसानम् । तत्र पञ्चसु श्वासेषु मध्ये मरुत् पवन आयासातिभोजनैः क्षुद्राख्यं श्वासं करोति । आयासो व्यायामादिरूपस्तेन, तथा अतिभोजनेन प्रेरितः प्रकर्षेणेरित उन्मार्गगामीकृतः कोपित इत्यर्थः । किम्भूतं श्वासम् ? स्वयं संशमनं चिकित्सां विना किञ्चित्कालातिवाहनेन शाम्यतीत्यर्थः । अचिरकालावस्थायित्वात् स्वयं संशमनादल्पबलत्वाच्च क्षुद्रसंज्ञोऽयम् ॥ ५ ॥

अथ तमकं लक्षयति,—प्रतिलोममिति । पवनः प्रतिलोमं विपर्ययं कृत्वा शिरास्रोतांसि गच्छन् श्वासं करोति, तथा कफमुदीर्य्य ऊर्ध्वं प्रेर्य्य, तथा शिरोग्रीवां परिगृह्य

परिगृह्य शिरोग्रीवमुरः पार्श्वं च पीड़यन् ॥ ६ ॥
कासं घुघुरकं मोहमरुचिं पीनसं तृषम् ।
करोति तीव्रवेगञ्च श्वासं प्राणोपतापिनम् ॥ ७ ॥
प्रताम्येत्तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ।
कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति ॥ ८ ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान् ।
विशुष्कास्यो मुहुःश्वासी काङ्क्षत्युष्णं सवेपथुः ॥ ९ ॥
मेघाम्बु-शीत-प्राग्वातैः श्लेष्मलैश्च विवर्द्धते ।
स याप्यस्तमकः साध्यो नवो वा बलिनो भवेत् ॥ १० ॥
ज्वरमूर्च्छायुतः शीतैः शाम्येत् प्रतमकस्तु सः ॥ ११ ॥
छिन्नाच्छ्वसिति विच्छिन्नं मर्म्मच्छेदरुजार्दितः ।
सस्वेद-मूर्च्छः सानाहो बस्तिदाहनिरोधवान् ॥ १२ ॥

---

समन्ताद्गृहीत्वा, तथा उरः पार्श्वं च पीडयन् निर्मथयन् कासादीन् श्वासञ्च तीव्रवेगं तथा प्राणोपतापिनं करोति। प्राणाख्यो वायुरुपतप्यते येन तच्छीलत्वादसौ प्राणोपतापी श्वासः। तस्य तमकस्य वेगेन बलेन पुरुषः प्रताम्येत् दुःखी सम्पद्यते श्लेष्मणा रुद्धमार्गत्वात्। अतएवाह ;—निष्ठ्यूतान्ते क्षणं सुखीति। स च तमकश्वासी शयानः शय्यामासीनः कृच्छ्राद्दुःखेन श्वसिति श्वासं मुञ्चति। निषण्ण उपविष्टः सन् स्वास्थ्यमृच्छति नीरुक्त्वं प्राप्नोति। उच्छ्रिते अक्षिणी यस्य स उच्छ्रिताक्षः। बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्। उच्छ्रिताक्ष ऊर्द्ध्वदृक्; ललाटेन स्विद्यता स्वेदयुक्तेनोपलक्षितः; भृशमतिशयेनार्त्तिमान् पोड़ावान्, तथा विशुष्कमास्यं यस्य स एवम्। मुहुः पुनः पुनः श्वासी यस्य स मुहुःश्वासी ; उष्णं काङ्क्षत्यभिलषति; तथा सवेपथुः कम्पवान् ; स च तमको मेघादिभिः पृथक् तथा श्लेष्मलैर्गुड़ादिभिर्वर्द्धते वृद्धिं याति। मेघशब्देनात्रोभयं गृह्यते ; मेघोन्नमनं वर्षणञ्च तेन मेघोन्नमनेन वर्द्धते तदुपलक्षितेन कालेन वर्षाख्येन च वर्द्धते। एवं शीतशब्देनापि द्वयं गृह्यते। शीतलक्षणः कालो हेमन्तशिशिराख्यस्तथा शीतगुणयुक्तौषधाहारविहारादिस्तेनोभयेनापि विवर्द्धते। स तमकः श्वासी याप्यो नासौ सुखसाध्यः कृच्छ्रसाध्यो वा दुर्बलस्य पुंसः। स एवाभिनवोत्पन्नो बलवतः पुंसः साध्यो वा भवेत्। सम्भावनायां लिङ्, साध्यत्वेन सम्भाव्यत इत्यर्थः ॥ ९—१० ॥

ज्वर इति। स एव तमकाख्यो ज्वरमूर्च्छायुतो यदा भवति शीतश्चौषधाहारविहारैः शाम्येच्छमं याति न तमकवद्वर्द्धते तदा स च प्रतमक उच्यते। अयञ्च तमकस्यैव भेद इति षट्त्वं श्वासानां नाशङ्क्यम् ॥ ११ ॥

अथ छिन्नं लक्षयति,—छिन्नादिति। छिन्नाख्याच्छ्वासात् विच्छिन्नं कृत्वा नरः श्वसिति न निरन्तरम्। मर्मच्छेदतुल्यया रुजाऽर्दितः ; तथा सह स्वेद-मूर्च्छाभ्यां वर्त्तते

अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः ।
शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः ॥ १३ ॥
महता महतादीनो नादेन श्वसिति क्रथन् ।
उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ॥ १४ ॥
प्रणष्ट-ज्ञान-विज्ञानो विभ्रान्तनयनाननः ।
वक्षः समाक्षिपन् बद्ध-मूत्रवर्चा विशीर्णवाक् ।
शुष्ककण्ठो मुहुर्मुह्यन् कर्ण-शङ्ख-शिरोऽतिरुक् ॥ १५ ॥
दीर्घमूर्द्ध्वं श्वसित्यूर्द्ध्वान्न च प्रत्याहरत्यधः ।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ १६ ॥
ऊर्द्ध्वदृग् वीक्षते भ्रान्तमक्षिणी परितः क्षिपन् ।
मर्म्मसु छिद्यमानेषु परिदेवी निरुद्धवाक् ॥ १७ ॥
एते सिद्ध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम् ॥ १८ ॥

---

सस्वेदमूर्च्छः, तथा आध्मानवान् ; दाहश्च निरोधश्च दाहनिरोधौ वस्तौ दाहनिरोधौ वस्तिदाहनिरोधौ तौ विद्येते यस्य स एवम् । अधोऽधस्तात् दृग्दृष्टिर्यस्य स एवम्, तथा विप्लुते एकत्रानवस्थिते अक्षिणी यस्य स एवम्, तथा मुह्यन् मोहं गच्छन्, तथा रक्तमेकं लोचनं यस्य स एवम्, तथा शुष्कास्यः सन् प्रलपन्, तथा नष्टकान्तिर्विचेतनश्च ॥ १२ । १३ ॥

अधुना महदाख्यं श्वासं लक्षयति,—महतेति । महता श्वासेनार्त्तः पुरुषो महता नादेन शब्देन श्वसिति यावत् कर्णशङ्खशिरोऽतिरुगिति । ज्ञानं तत्त्वावबोधः ; विज्ञानं कर्मसु कौशलम् ; क्रथन् क्वणन् ; उद्धूयमान उत्कम्प्यमानः ; संरब्धः संक्षुभितः ॥ १४ । १५ ॥

अथोर्ध्वलक्षणार्थमाह,—दीर्घमिति । ऊर्ध्वाख्याच्छ्वासाद्दीर्घमूर्ध्वं श्वसिति । ऊर्ध्व श्वासं मुक्त्वा पुनरधोनिश्वासवन्न तं श्वासं प्रत्याहरति । यथा अन्येषु श्वासेषु नर ऊर्ध्व दीर्घं श्वासं मुक्त्वा पुनरधः प्रत्याहरति पुनरन्तः प्रवेशयितुं शक्नोति नवमस्मिन्नूर्ध्वश्वास इत्यर्थः । किम्भूतः नरोऽत्र स्यादित्याह ;—श्लेष्मेत्यादि । श्लेष्मणा आवृतानि मुखानि येषां तान्येवं श्लेष्मावृतमुखानि स्रोतांसि यस्य स एवम्, तथा क्रुद्धगन्धवहेन कुपितमरुताऽर्दितः पीड़ितः । तथा ऊर्द्ध्वा दृग् दृष्टिर्यस्य स ऊर्ध्वदृक्, तथा अक्षिणी परितः समन्तात् क्षिपन् भ्रान्तं कृत्वा वीक्ष्यते, तथा मर्मसु छिद्यमानेष्विव परिदेवी दुःखार्तः सम्पद्यते, तथा निरुद्धवागन्तःप्रविष्टवागित्यर्थः ॥ १६ । १७ ॥

एते इति । एते तमकादयः श्वासा अव्यक्ता अस्फुटरूपाः सिध्येयुश्चिकित्स्यमानाः । व्यक्ताः स्फुटलक्षणाः पुनर्ध्रुवं निश्चितं प्राणहराः स्युः ॥ १८ ॥

श्वासैकहेतुप्राग्रूप-सङ्ख्याप्रकृतिसंश्रयाः ।
हिक्का भक्तोद्भवा क्षुद्रा यमला महतीति च ॥ १९ ॥
गम्भीरा च मरुत्तत्र त्वरया युक्तिसेवितैः ।
रूक्ष-तीक्ष्ण-खरासात्म्यैरन्नपानैः प्रपीड़ितः ॥ २० ॥
करोति हिक्कामरुजां मन्दशब्दां क्षवानुगाम् ।
शमं सात्म्यान्नपानेन या प्रयाति च साऽन्नजा ॥ २१ ॥
आयासात् पवनः क्षुद्रः क्षुद्रां हिक्कां प्रवर्त्तयेत् ।
जत्रुमूलप्रविसृतामल्पवेगां मृदुश्च सा ।
वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवम् ॥ २२ ॥
चिरेण यमलैर्वेगैराहारे या प्रवर्त्तते ।

---

अथ हिक्कास्वरूपं दर्शयति,—श्वासैकेति । एकशब्दस्तुल्यार्थः । श्वासानां तुल्या हेत्वादयो यासां हिक्कानां ताः श्वासैकहेतुप्राग्रूपसङ्ख्याप्रकृतिसंश्रयाः । श्वासानां हेतुः कासवृद्ध्या भवेत् श्वास इत्यादिग्रन्थेन प्रतिपादितः ; स एव हिक्कानां हेतुः । श्वासानां प्राग्रूपं हृत्पार्श्वशूलमित्यादि तदेव हिक्कानाम् तथा श्वासाः पञ्च हिक्का अपि पञ्च । श्वासानां प्रकृतिरासन्नं कारणम् । कफोपरुद्धगमन इत्यादिविशेषणविशिष्टः पवनस्तादृश एव वातो हिक्कानां प्रकृतिः । श्वासानां संश्रय आश्रयो यमधिष्ठाय सम्भवन्ति श्वासा यथा आमाशयसमुद्भवमिति ; स एव हिक्कानाम् । प्रायिकत्वं वास्य बोध्यम् । जत्रुमूलादप्युत्पत्तेः क्षुद्रायाः । तदेवं श्वासानां तुल्या हेत्वादयो हिक्कानाम् । हिक्केत्यादि । भक्तोद्भवाद्याः पञ्च हिक्काः । इतिशब्दो व्यवच्छेदे च समुच्चये, एवं गम्भीरा चेत्यत्रापि । भक्तोद्भवां लक्षयितुमाह ;—मरुदिति । तत्र तासु हिक्कासु मध्येऽन्नजां हिक्कामेवंप्रकारां मरुत् करोति । किम्भूतो मरुत् ? अन्नपानैः प्रपीड़ितो बाधितः । किम्भूतैः ? रूक्ष-तीक्ष्ण-खरासात्म्यैः सामर्थ्यादभ्यवहृतैः, तथा त्वरया क्रममनपेक्ष्याऽयुक्त्या यथेच्छया सेवितैः । किम्भूतां हिक्काम् ? अरुजां पीड़या रहितां, तथा मन्दशब्दां, मन्दवेगां, तथा क्षवेन क्षुत्याऽनुगतामनुबद्धाम् । न केवलमेवं लक्षणोपेता या साऽन्नजा या च सात्म्यैरन्नपानेन शमं याति साप्यन्नजैव । अत्र चान्नपानैरिति हेतुनिर्द्देशः । अरुजां मन्दशब्दां क्षवानुगामिति लक्षणनिर्देशः । शमं सात्म्यान्नपानेनेत्युपशयनिर्द्देशः ॥ १९—२१ ॥

अथ क्षुद्राख्यां लिलक्षयिषुराह ;—आयासादिति । आयासाद्व्यायामात् पवनः स्वल्पप्रकोपात् क्षुद्रोऽल्पः क्षुद्रां हिक्कां प्रवर्त्तयेद् विदध्यात् । किम्भूताम् ? जत्रुमूलात् प्रकर्षेण विसृताम् प्रवृत्तां ; अतएव क्षुद्रत्वादल्पवेगां, तथा मृदुं नातिरुजाकरीम् । सा चायास्यत आयासं कुर्वती वृद्धिं याति । भुक्तमात्रे च सद्यो भुक्ते मार्द्दवं मृदुत्वं याति ॥ २२ ॥

परिणामोन्मुखे वृद्धिं परिणामे च गच्छति ॥ २३ ॥
कम्पयन्ती शिरोग्रीवामाध्मातस्यातितृष्यतः ।
प्रलापच्छर्य्यतीसार-नेत्रविप्लुत-जृम्भिणः ।
यमला वेगिनी हिक्का परिणामवती च सा ॥ २४ ॥
स्तब्धभ्रूशङ्खयुग्मस्य सास्त्रविप्लुतचक्षुषः ।
स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञाञ्च मुष्णती ॥ २५ ॥
रुन्धती मार्गमन्नस्य कुर्वती मर्मघट्टनम् ।
पृष्ठतो नमनं शोषं महाहिक्का प्रवर्त्तते ।
महामूला महाशब्दा महावेगा महाबला ॥ २६ ॥
पक्वाशयाद्वा नाभेर्वा पूर्ववद् या प्रवर्त्तते ।
तद्रूपा सा मुहुः कुर्य्याज्जृम्भामङ्गप्रसारणम् ॥ २७ ॥
गम्भीरेणानुनादेन गम्भीरा तासु साधयेत् ।

---

अधुना यमलां व्याचष्टे,—चिरेणेति । चिरेण कालेनाहारे परिणामोन्मुखे प्रत्यासन्नपरिणामे तथा परिणामे वाऽऽहारस्य या वृद्धिं गच्छति यमलैश्च वेगैर्न केवलैर्या प्रवर्त्तते सा यमलवेगप्रवर्त्तनाद् यमलाख्या हिक्का। किं कुर्वती सा प्रवर्त्तते ? शिरश्च ग्रीवाञ्च कम्पयन्ती। किम्भूतस्य नरस्य ? आध्मातस्य, तथाऽतितृष्यतस्तृडार्त्तस्य, तथा प्रलापादिमतः ; सैव च यमला वेगिनी सेव परिणामवतीत्येवं संज्ञात्रयमस्या बोध्यम् ॥ २३ । २४ ॥

महाहिक्कां व्याचिख्यासुराह,—स्तब्ध इति । स्तब्धं भ्रुयुगलं शङ्खयुग्मञ्च यस्य तस्य तथाविधस्य महाहिक्का प्रवर्त्तते, तथा सास्रे विप्लुते चले चक्षुषी यस्य तस्येदमिदं कुर्वाणा प्रवर्त्तते। तनुं देहं स्तम्भयन्ती निश्चलं कुर्वती, तथा वाचं स्तम्भयन्ती मूकत्वं वाचः कुर्वाणा ; स्मृतिं संज्ञांञ्च मुष्णती स्मृतिसंज्ञयोरपहरणं विदधती, तथा अन्नस्य चतुर्विधस्य मार्गं रुन्धती, तथा मर्म्मणां हृदयादीनां घट्टनं चालनं कुर्वती, तथा पृष्ठतो नमनं तथा शोषं शरीरस्य कुर्वती महाहिक्का प्रवर्त्तते इति योज्यम् ; तथा महन्मूलमुत्पत्तौ कारणं यस्याः सा महामूला, तथा महाशब्दा महावेगा महाबला चेयं भवति। एतैश्च विशेषणैरस्याः शीघ्रप्राणहारित्वं द्योत्यते ॥ २५ । २६ ॥

अथ गम्भीरां लक्षयति,—पक्वाशयादिति। पक्वाशयान्नाभेरधस्तादथवा नाभेर्नाभिदेशाद् या प्रवर्त्तते। पूर्ववदिति महाहिक्कावत् ; यथा महाहिक्का स्तब्धभ्रूशङ्खयुग्मास्येत्यादिविशेषणविशिष्टा प्रवर्त्तते तथैवेयं तथाभूतस्य पुरुषस्येत्यादि। तथा तद्रूपा तस्या महाहिक्कायाः सदृशं रूपं लक्षणं यस्याः सा तद्रूपा, महाहिक्कातोऽस्या इदमधिकं लक्षणं मुहुर्जृम्भां तथाङ्गप्रसरणं कुर्य्यात्। गम्भीरेणानुनादेनेति। अनुनादोऽनुरणनं घण्टादीनां

आद्ये द्वे वर्जयेदन्त्ये सर्व्वलिङ्गाञ्च वेगिनीम् ॥ २८ ॥
सर्वाश्च सञ्चितामस्य स्थविरस्य व्यवायिनः ।
व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य वा ॥ २९ ॥
सर्वेऽपि रोगा नाशाय नत्वेवं शीघ्रकारिणः ।
हिक्काश्वासौ यथा तौ हि मृत्युकाले कृतालयौ ॥ ३० ॥

इत्यष्टाङ्गहृदये निदानस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातो राजयक्ष्मादिनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

मिव ; गम्भीरेणानुनादिन हेतुना गम्भीराख्येयम् । तास्विति । तासु पञ्चसु हिक्कासु मध्ये आद्ये द्वे ये हिक्के भक्तोद्भवाक्षुद्राख्ये ते साधयेच्चिकित्सेत् साध्यत्वात् । अन्त्ये ये द्वे महाहिक्कागम्भीराख्ये ते वर्ज्जयेन्नोपक्रमेदसाध्यत्वात् । आदौ भवे आद्ये ; एवमन्त्ये ; दिगादित्वात् यत् । तथा वेगिनीञ्च यमलाख्यां सर्व्वलिङ्गां यथोक्तलक्षणां वर्ज्जयेत् । न केवलमेता एव वर्ज्जयेद् यावद् सर्वा अपि हिक्का एवम्भूतस्य पुरुषस्य जाता वर्ज्जयेत् । किम्भूतस्य ? चिरकालसम्भृतामस्य तथा स्थविरस्य वृद्धस्य तथा व्यवायिनः स्त्रीगमनशीलस्य तथा भक्तस्य छेदो भक्तच्छेदः भोजननिवृत्तिस्तेन क्षतः क्षीणो दुर्बलो भक्तच्छेदक्षतस्तस्य च वर्ज्जयेत् ॥ २७—२९ ॥

अधुना हिक्काश्वासयोरेकयोगक्षेमत्वादन्यरोगातिशयित्वं दर्शयितुमाह, सर्व्व इति— सर्व्वे रोगा नाशाय स्युः न केवलं हिक्काश्वासावित्युपदर्शनार्थोऽपिशब्दः । न पुनरेवं शीघ्रविकारिणः सर्वे यथा हिक्का-श्वासौ शीघ्रविनाशकारिणौ यस्मात्तौ मृत्युकाले मरणावसरे कृतालयौ विहितवसती ; तस्मिन् काले तयोरवश्यम्भावित्वाच्छीघ्रमारणस्वभावत्वाच्च तयोस्तच्चिकित्सायां सत्वरं यतितव्यमिति ॥ ३० ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने श्वासहिक्कानिदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

श्वास-हिक्का-निदानानन्तरं राजयक्ष्मादिनिदानारम्भोऽयं सम्बन्धः, "कासांदुपेक्षया श्वास-क्षय-च्छर्दिः" इत्युक्तम् । हिक्का-श्वासयोश्चैकयोगक्षेमत्वाच्छ्वासनिदानानन्तरं राजयक्ष्मनिदानमारभ्यते । पूर्ववदस्य व्याख्या । आदिशब्देन स्वरभेदादीनां ग्रहणम् ॥ १ ॥

अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजयक्ष्मा क्षयः शोषो रोगराड़िति च स्मृतः ॥ २ ॥
नक्षत्राणां द्विजानाञ्च राज्ञोऽभूद् यदयं पुरा ।
यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ ३ ॥
देहौषधक्षयकृतेः क्षयस्तत्सम्भवाच्च सः ।
रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ ४ ॥
साहसं वेगसंरोधः शुक्रौजः-स्नेह-संक्षयः ।
अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ ५ ॥

---

राजयक्ष्मा क उच्यते यस्येदं निदानमारभ्यत इत्याह,—अनेकेति। अनेकैर्ज्वरातिसारादिभिः परिवृतः, तथा बह्वनां रोगाणां गुल्मातीसारादीनां पुरोगमः प्रधानश्च, यथाहि राजा प्राक् पश्चाज्जनैरनुगम्यते तथाऽयं रोगो रोगैः। राजयक्ष्मेत्यादयश्चतस्रः संज्ञाः ॥ २ ॥

तत्राद्यां संज्ञां व्युत्पादयन्नाह,—नक्षत्राणामिति। नक्षत्राणामश्विन्यादीनां, तथा द्विजानां ब्राह्मणानाञ्च यो राजा चन्द्रस्तस्य पुरा पूर्वं अभवत्। पूर्वकल्पे हि रोहिण्यामतिसक्तस्य चन्द्रस्य श्वशुरं दक्षमनृतवादेन वञ्चयतोऽपमानितदुहितृस्नेहवशादुद्भूतक्रोधे प्रजापतौ दक्षे क्षयोऽस्याभवदिति श्रूयते। तस्माद् राज्ञो यक्ष्मा राजयक्ष्मा इत्युच्यते षष्ठीसमासव्युत्पत्त्या। यच्च राजा च यक्ष्मा च, राजा च रोगाणां मध्ये अनेकरोगानीकपरिवृतत्वेन यक्ष्मा ततो राजा चासौ यक्ष्मा च राजयक्ष्माऽभिमतो मुनीनामिति शेषः। तथा देहश्चौषधञ्च तयोर्यः क्षयस्तस्य कृतिः करणं ततो देहौषधक्षयकृतेः क्षय इत्युच्यते। अनेन चास्य व्याधेर्बहुकालस्थायित्वं द्योतयति। कियायं व्याधिर्बहुतरं कालमवतिष्ठते न च शान्तिमवगच्छति। यावत् देहः क्षीयते औषधान्यपि क्षीयन्ते न पुनरयं व्याधिरिति देहौषधक्षयकृतेः क्षय इत्युच्यते। तत्सम्भवाच्च सः, तदित्यनेन देहौषधक्षयः प्रत्यवमृश्यते। स सम्भवो जन्म यस्य असौ तत्सम्भवस्तस्मादपि क्षय इत्युच्यते। एवमन्योऽपि यो व्याधिर्देहौषधक्षयकारी सोऽपि क्षयाख्यस्य व्याधेः सम्भवः कारणं तस्माज्जायत इत्यर्थः। रसादीनां शोषणाच्छोष इति भण्यते। रोगेत्यादि। बहुषु रोगेषु मध्ये रोगत्वेनैष एव राजते तस्माद्रोगराड़ित्युच्यते ॥ ३। ४ ॥

साहसमिति। साहसं कायेन वाचा वाऽयथावलमारम्भः। वेगसंरोधो वातविण्-मूत्रादीनामुन्मुखीभूतानां लज्जया धारणम्। शुक्रञ्च ओजश्च स्नेहश्च तेषां संक्षयो विनाशः। अत्र स्नेहशब्देन देहस्नेहो ग्राह्यः, देहशब्दलोपं कृत्वाऽयं निर्दिष्टः। तथा च मुनिः ;—"देहस्नेहपरिक्षयात्" इति। तथाऽन्नपानयोर्यथाशास्त्रं यो विधिस्तस्य त्यागोऽन्यथासेवनमन्यथाव्यवहारः। तस्य राजयक्ष्मणश्चत्वारः साहसादयो हेतवः पाठादेव चतुःसंख्यात्वे लब्धे चतुर्ग्रहणं नियमार्थम्। यद्यपि साहसादय एते प्रत्येकमनेकप्रकारतया भिन्नास्तथापि साहसादिचतुष्टयं नातिक्रामन्तीत्यर्थः ॥ ५ ॥

तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ।
शरीरसन्धीनाविश्य तान् सिराश्च प्रपीड़यन् ॥ ६ ॥
मुखानि स्रोतसां रुद्ध्वा तथैवातिविवृत्य च ।
सर्पन्नूर्द्ध्वमधस्तिर्यग् यथास्वं जनयेद् गदान् ॥ ७ ॥
रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ।
प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ८ ॥
स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणम् ।
मक्षिका-तृण-केशादि-पातः प्रायोऽन्नपानयोः ॥ ९ ॥
हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ।
पाण्योरवेक्षा पादास्य-शोफोऽक्ष्णोरतिशुक्लता ॥ १० ॥
बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनम् ।
स्त्री-मद्य-मांस-प्रियता घृणित्वं मूर्ध्व-गुण्ठनम् ॥ ११ ॥
नख-केशादि-वृद्धिश्च स्वप्ने चाभिभवो भवेत् ।
पतङ्ग-कृकलासाहि-कपि-श्वापद-पक्षिभिः ॥ १२ ॥

---

अथास्मिन् राजयक्ष्माख्ये साहसजे वेगसंरोधजे शुक्रौजःस्नेहसंक्षयजेऽन्नपानविधित्यागजे वा चतुर्विधेऽपि विशेषेण पवनो हेतुरत एवाह,—तैरिति । तैः साहसादिभिरुदीर्णोऽनिल इदमिदं कुर्वन् यथास्वं गदान् जनयेत् । उदीर्ण उल्बणः पित्त-श्लेष्मभ्यामधिकः अतएव पित्तमुदीर्य स्वस्थानाच्च्यावयित्वा, तथा कफं सर्व्वतः सर्व्वस्मादुदीर्य्य, तथा शरीरसन्धीन् दशाधिकशतद्वयसंख्यातान् आत्रेयमतेन तु द्विसहस्रसंख्यातान् आविश्य तेषामन्तःप्रवेशं कृत्वा तांश्च सन्धीन् प्रपीड़यन् प्रकर्षेण संययन्, तथा सिरा अपि सकलशरीरगाः प्रपीड़यन्, तथा अन्येषां स्रोतसां मुखानि द्वाराणि रुद्ध्वा तथैव तानि वा कदाचिदतिविवृत्य प्रसार्य्य स्रोतोमुखानि । सर्पन्नित्यादि । ऊर्ध्वं सर्पन् वायुः पीनसादीन् व्याधीन् जनयेत् । अधः सर्पन् विड्भ्रंशं विट्शोषं वा कुर्यात् । तिर्यक् सर्पन् पार्श्वरुजं विदध्यात् इति यथास्वं शब्दस्यार्थः ॥ ६ । ७ ॥

रूपमिति । तस्य राजयक्ष्मणो भविष्यत उत्पित्सोः रूपमग्ररूपं प्रतिश्यायादि । वह्नेः सदनं पाकासामर्थ्यम् [illegible] ; स्थाल्यमत्रान्नपानादीनां शुद्धानामप्यशुचिदर्शनमिति । तदानीं पुरुषस्य मिथ्याज्ञानं जायत इत्यर्थः । पाण्योरवेक्षा भूयसा स्वपाणी पश्यति; बाह्वोः प्रमाणजिज्ञासा "कियत्प्रमाणौ मे बाहू" इति ज्ञातुमिच्छति । काये शरीरे शोभनेऽपि बैभत्स्यदर्शनमिति मिथ्याज्ञानं तदानीं रोगस्वभावादस्योत्पद्यते । मूर्ध्नो मस्तकस्य अवगुण्ठनं वस्त्रादिना संछादनम् ; स्वप्ने च तस्य यक्ष्मिणः पतङ्गादिभिर-

केशास्थि-तुष-भस्मादि-राशौ समधिरोहणम् ।
शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ।
ज्योतिर्गिरीणां पततां ज्वलताञ्च महीरुहाम् ॥ १३ ॥
पीनस-श्वास-कासांऽसं-मूर्द्ध-स्वररुजोऽरुचिः ।
ऊर्द्ध्वं विड्भ्रंशसंशोषावधश्छर्दिश्च कोष्ठगे ॥ १४ ॥
तिर्यक्स्थे पार्श्वरुग्दोषे सन्धिगे भवति ज्वरः ।
रूपाण्येकादशैतानि जायन्ते राजयक्ष्मिणः ॥ १५ ॥
तेषामुपद्रवान् विद्यात् कण्ठोध्वंसमुरोरुजम् ।
जृम्भाङ्गमर्द-निष्ठीव-वह्निसादास्यपूतिताः ॥ १६ ॥
तत्र वाताच्छिरःपार्श्व-शूलमंसाङ्ग-मर्दनम् ।
कण्ठोध्वंसः स्वरभ्रंशः पित्तात् पादांसपाणिषु ॥ १७ ॥
दाहोऽतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः ।
कफादरोचकश्छर्दिः कासो मूर्द्ध्वाङ्गगौरवम् ॥
प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता ॥ १८ ॥

---

भिभवो भवेत् पतङ्गाद्यैः पराभूयते । पतङ्गः कीटभेदः । तथा केशादिराशिषु अधिरोहणं, तथा शून्यग्रामदेशादीनां दर्शनं स्वप्ने भवेत् ॥ ८—१३ ॥

प्राग्रूपमुक्त्वा सम्प्रत्येकादशरूपमधिकृत्याह,—पीनसेति । अंसौ च मूर्द्धा च स्वरश्च तेषां रुजः अंसमूर्द्धस्वररुजः । पीनसश्च श्वासश्च कासश्च अंसमूर्द्धस्वररुजश्च ताः । अरुचिरित्यूर्ध्वमूर्ध्वस्थिते दोषे भवति । अरुचेः पृथगुपन्यासः प्राधान्यख्यापनार्थः ; यथा— अस्मिन् व्याधावतिभयावहोऽरुच्याख्य उपद्रवो न तथा पीनसादय इति । अधः स्थिते दोषे विशः पुरीषस्य भ्रंशसंशोषौ विड्भ्रंशसंशोषौ भवतः । विड्भ्रंशो भिन्नवर्चस्त्वं विट्शोषो बद्धविट्कत्वम् ; एतयोश्च परस्परं विरुद्धत्वात् न तुल्यकालं सम्भवस्तस्मात् कदाचित् विड्भ्रंशः कदाचिद्व विट्शोषो भवति । छर्दिस्तु कोष्ठस्थिते दोषे स्यात् तिर्यक्स्थे दोषे पार्श्वरुग्भवति ; सन्धिगे च ज्वरः ; रूपाण्येतानि पीनसादीन्येकादश शोषिण उत्पद्यन्ते । मुनिस्त्वेवमब्रवीत् ;—"प्रतिश्यायं ज्वरं कासमङ्गमर्द्दं शिरोरुजम् । श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् । कुरुते चांससन्तापमेकादश" इत्यादि ॥१४।१५ ॥

तेषामिति । तेषामेकादशसंख्यानां पीनसादीनां पूर्वोत्पन्नानां कण्ठोध्वंसादीन् पश्चादुत्थितान् सप्तोपद्रवान् जानीयात् । "व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः ; उपक्रमविघाती च स उपद्रव उच्यते" इत्युपद्रवलक्षणम् ॥ १६ ॥

तत्रेति । तस्मिन् राजयक्ष्माख्ये व्याधौ वातादधिकाच्छिरःशूलादयः स्युः । पित्तादधिकात् पादादिषु दाहोऽतीसारादयश्च भवन्ति । कफादधिकादरोचकादयो दश भवन्ति ॥ १७ । १८ ॥

दोषैर्मन्दानलत्वेन सोपलेपैः कफोल्वणैः ।
स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ १९ ॥
विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् ।
कुर्यादगच्छन्मांसादीनसृक्चोर्ध्वं प्रधावति ॥ २० ॥
पच्यते कोष्ठ एवान्नमन्नपक्त्रैव चाऽस्य यत् ।
प्रायोऽस्मान्मलतां यातं नैवालं धातुपुष्टये ॥ २१ ॥
रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु ॥ २२ ॥
उपस्तब्धः स शकृता केवलं वर्त्तते क्षयी ॥ २३ ॥

---

यक्ष्मिणो मांसाद्यभ्यवहारतोऽपि धातुक्षयो जायते न धातुपुष्टिरित्यत्र युक्तिमाह,—दोषैरिति । दोषैर्वातपित्तकफैः कफोल्वणत्वात् स्रोतोद्वारेषु रुद्धेषु पिहितेषु सत्सु रसः स्वस्थान एव विदह्यमानो न सम्यग् रक्ततां प्राप्नुवन् तांस्ताननेकान् कण्ठोध्वंसादीनुपद्रवान् कुर्यात् । किम्भूतैर्दोषैः ? कफोल्वणैः श्लेष्माधिकैः । अतश्च कफाधिकत्वात् सहोपलेपेन श्लेष्मलेपेन वर्त्तन्ते सोपलेपास्तैः तथाविधैर्दोषैस्तदानीं मन्दानलत्वेन हेतुना धातूष्मसु रसाद्यग्निष्वल्पकेषु अतिशयेनाल्पेषु । एवमनेककारणसद्भावाद् रसः स्वस्थान एव विदह्यमानः पित्तकारिणीं मध्यमां पाकावस्थामनुभवन् सम्यक् पाकमगच्छन् यथोचितान् विकारांस्तांस्तान् कुर्वन् मांसमेदःप्रभृतीन् धातून् अगच्छन्नप्राप्नुवन् विदह्यमानतया रक्ततामापन्नस्तदसृक् चोर्ध्वं प्रधावति ऊर्ध्वं प्रसर्पति केवलं निष्ठीवनसहितं वा । तस्मात् क्षयिणो न तन्मांसादि धातुपुष्टये। किञ्च अस्मादपि हेतोः स रसो न धातुपुष्टये। यस्मात् पच्यतेऽन्नं सारकिट्टत्वं नीयते अन्नस्य पक्त्रैव जाठराग्निना कोष्ठ एव आमपक्वाशयाख्ये। उभयत्र एवकारोऽवधारणे । कोष्ठ एव न धातुषु जाठराग्निनैव न धात्वग्निभिरिति । यत एवं ततोऽस्मात् प्राङ्निरूपितात् हेतु-कदम्बकात् प्रायो मलानामाधिक्येन मूत्रपुरीषतां प्राप्तमन्नं नैव धातुपुष्टये अलं समर्थम् । धातुपुष्टिग्रहणेनतत् सूचयति ;—अभिनवमृत्कुम्भजललवस्यन्दनन्यायेन सूक्ष्मस्रोतोऽनुप्रवेशितया सोऽन्नरसो धात्वाप्यायनमात्रं करोत्येव, अन्यथा वर्षगणानुबन्धि जीवितं क्षयिणो न सम्भाव्येत । तस्मात् धातुस्थितिमात्रं भवति न तु धातुपोषणमिति स्थितम् ॥ १९—२१ ॥

रस इति । रसस्तावदुभयरूपोऽन्नरसो धातुरसो वाऽस्य क्षयिणो निकटस्य रक्तधातोर्न पुष्टये मांसधातोर्विप्रकृष्टस्य तु कुत एव स्यात् ; एवं सम्भाव्यत इत्यपिशब्दार्थः ॥ २२ ॥

ननु यद्येवं तत् "पतनीयाभ्यां धातुभ्यां विशेषेण धारण-स्वभावाभ्यां रक्तमांसाभ्यां विना क्षयी जीवेदित्याशङ्क्याह,—उपस्तब्ध इति । क्षयी स शकृता पुरीषेण केवलमुपस्तब्धः कृतावष्टम्भो वर्त्तते प्राणिति पूर्वोक्तन्यायेन किञ्चिदाहाररसाप्यायितैर्धातुभिर्धारणस्वभावैर्ष्टतमात्रः । ननु "विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् । कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति" इत्यनेन रक्तस्य सत्ता प्रतिपादिता । रसोऽप्यस्य न

लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम्।
वर्जयेत् साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ २४ ॥
दोषैर्व्यस्तैः समस्तैश्च क्षयात् षष्ठश्च मेदसा ।
स्वरभेदो भवेत्तत्र क्षामो रूक्षश्चलः स्वरः ॥
शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात् ॥ २५ ॥
पित्तात् तालुगले दाहः शोष उक्तावसूयनम् ॥ २६ ॥
लिम्पन्निव कफात् कण्ठं मन्दः खुरखुरायते ।
स्वरो विबद्धः सर्वैस्तु सर्वलिङ्गः क्षयात् कषेत् ॥ २७ ॥

---

रक्तायेत्यनेन क्षयिणो रक्तस्याभावः प्रत्यपादि । तदिमे वाक्ये परस्परं व्याघाते । अत्रोच्यते, न अनयोर्वाक्ययोः परस्परं विरोधः । यतः अस्टक् चोर्ध्वं प्रधावति" इत्यनेन न तद्धातुरूपतां प्राप्तमुक्तं । किन्तर्हि ? रसस्य विदह्यमानतया स्वस्थानस्थितस्य रक्तधात्वाश्रयमागच्छतो रक्तोद्भूतिरुक्ता । अनेनैवाभिप्रायेण उत्तरत्र वाक्ये रसोऽप्यस्य न रक्तायेत्युवाच । अनेन हि रसो धातुरूपाय रक्ताय शोषिणो न सम्पद्यत इति प्रत्यपादि ॥२३॥

अथास्य क्षयिणः साध्यासाध्यतां निरूपयति,—लिङ्गेष्विति। क्षयिणं बलमांसाभ्यां क्षीणं लिङ्गेषु पीनसादिष्वल्पेष्वपि सत्सु न सर्व्वेषु उत्पन्नेषु वर्ज्जयेन्नोपक्रमेत् । किम्भूतम् ? व्याध्यौषधयोर्बलं व्याध्यौषधबलं तस्याक्षमम् । क्षयाख्यस्य व्याधेर्यद्बलं तथाऽस्य शमनोपायस्यौषधस्य यद्बलं तत्राक्षममसहं यतस्ततो वर्ज्जयेदित्यर्थः । साधयेदिति । अन्यथा अतोविपरीतलक्षणं यक्ष्मिणं बलमांसाभ्यामक्षीणमत एव व्याध्यौषधबलक्षमं सर्वेष्वपि पीनसादिषु लिङ्गेषु सत्सु साधयेदेव किं पुनः द्वित्रादिष्वेषु साधयेदित्यपिशब्दार्थः ॥ २४ ॥

अथास्य व्याधेरुपद्रवभूतानामादिशब्दगृहीतानां पञ्चानां स्वरभेदादीनां रोगाणां निदानान्याह,—दोषैरिति । दोषैः पृथग् वातपित्तकफः समस्तैः सन्निपतितैस्तथा क्षयात्तथा षष्ठः स्वरभेदो मेदसा स्यात् । तत्रेति । तत्र तेषु षट्सु स्वरभेदेषु मध्ये वातात् स्वरभेदे सति क्षामादिमान् स्वरः स्यात् ; तथा शूकपूर्णसदृशगलत्वं स्निग्धोष्णोपशयश्च भवति ॥ २५ ॥

पित्तादिति । पित्तात् स्वरभेदे सति तालुनि गले च दाहः, तथा शोषः प्रस्तुतत्वात् तालुगलयोरेव । तथा उक्तावसूयनं वाक्यविषयेऽसहनम् । पित्तस्वरभेदे वाक्यं वक्तुमसमर्थ इत्यर्थः ॥ २६ ॥

लिम्पन्निति । कफात् स्वरभेदे कण्ठं लिम्पन्निव उपलेपमिव गलस्य कुर्वन् खुरखुरायते प्रक्रतत्वात् कण्ठस्यैव खुरखुरमित्यव्यक्तं शब्दं करोति ; तथा सर्व्वेभ्यः स्वरभेदेभ्यो मन्दस्वरो नीचैः श्रूयते, तथा विबद्धो वदतो मध्ये स्खलनरूपः । सर्व्वैरिति । सर्वैस्त्रिभिर्दोषैः समुदितैः सर्वलिङ्गस्त्रिदोषलक्षणः स्वरभेदो भवति । क्षयादिति । क्षयात् स्वरभेदः कषेत् विध्वस्तः स्यात् । कण्ठमर्मघट्टनादित्यर्थः । अनुक्तमपि प्रक्रतत्वात्

धूमायतीव चात्यर्थम् मेदसा श्लेष्मलक्षणः ।
कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरन्त्यञ्च वर्जयेत् ॥ २८ ॥
अरोचको भवेद्दोषैर्जिह्वा-हृदय-संश्रयैः ।
सन्निपातेन मनसः सन्तापेन च पञ्चमः ॥ २९ ॥
कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ।
सर्वोत्थे विरसं शोक-क्रोधादिषु यथामलम् ॥ ३० ॥
छर्दिर्दोषैः पृथक् सर्वैर्द्विष्टैरर्थैश्च पञ्चमो ॥ ३१ ॥
उदानो विकृतो दोषान् सर्वानप्यूर्द्ध्वमस्यति ॥ ३२ ॥

---

कण्ठमिति लक्ष्यते। तथा चयस्वरभेदी धूमायतीवाऽतिशयेन। अत्यर्थशब्देन पित्तस्वरभेदेऽपि धूमायनं भवतीति गमयति। धूमायतीति धूमनिःसरणमिव नासिकादिदेशेष्वनुभवति। मेदसेति। मेदसा स्वरभेदः श्लेष्मस्वरभेदलक्षणः, तथा कृच्छ्रेण कथञ्चिल्लक्ष्याणि ज्ञेयान्यक्षराणि यत्र स एवम्। एतदेव कृच्छ्रलक्ष्याक्षरत्वं कफस्वरभेदादधिकम्। अत्रेति। सर्वैर्दोषैर्यः स्वरभेदः, तथा अन्ते पठितत्वात् मेदःस्वरभेदीऽन्त्यः, तच्च वर्ज्जयेत्। चतुरस्त्वन्यान् साधयेदित्यर्थाद्गम्यते ॥ २७ । २८ ॥

अरोचक इति। जिह्वा च हृदयञ्च जिह्वाहृदयं तत् संश्रय आश्रयो येषां तैस्तवस्थैः पृथग् वातपित्तकफैररोचकः स्यात्, तथा सन्निपातेनार्थाज्जिह्वाहृदयसंस्थेनारोचकः स्यादिति योज्यम्। तथा मनसः सन्तापेनानेकविधेन क्रोधशोकादिनोपतप्तेन पञ्चमोऽरोचक आगन्तुर्भवेत्। अत्रापि यथास्वं दोषाणां जिह्वाहृदयसंश्रितत्वमवश्यमाश्रयणीयम्। उपादानादेव पञ्चत्वे लब्धे मनःसन्तापजः पञ्चम एवेति नियमार्थं पञ्चमग्रहणम्। मन्युशोकाद्यनेकप्रकारमनःसन्तापजत्वेऽप्येक एव मनःसन्तापजोऽरोचक इत्यर्थः ॥ २९ ॥

कषायेति। वाताद्युद्भवेष्वरोचकेषु मुखमास्यं क्रमेण कषायतिक्तमधुरं भवति। व्याधिस्वभावात् पित्तारोचकेऽपि तिक्तवक्त्रता भवति न कटुकाम्लत्वम्। सर्वोत्थे सन्निपातजेऽरोचके विरसमास्यं भवति निश्चितरसाज्ञानात्। शोकक्रोधादिसमुत्थेष्वरोचकेषु यथामलं यथादोषं मुखं भवेत्। तत्र शोक-भय-काम-लोभेर्ष्यादि-सन्तप्त-मनःसमुत्थे वातप्रकोपात् कषायं क्रोधसन्तप्तमनःसमुत्थे पित्तप्रकोपात् तिक्तं ग्रहोपतप्तमनःसमुत्थे सन्निपातप्रकोपात् विरसास्यत्वमिति यथामलशब्दस्यार्थः ॥ ३० ॥

छर्द्दिर्दोषैरिति। पृथक् प्रत्येकं दोषैर्वातपित्तकफैश्छर्द्दिर्भवेत्। सन्निपतितस्त्रिभिरपि छर्द्दिः स्यात्। [illegible] विष्टैरर्थैरमनोमतैः शब्दादिभिश्च पञ्चमी छर्दिर्भवेत्। पूर्ववत् पञ्चमीत्वंतन्नियमार्थम्। द्विष्टानां ह्यर्थानां बहुत्वात् बह्व्यश्छर्दयो भवन्तीत्याशङ्क्येत, तथा शङ्कानिवृत्त्यै द्विष्टार्थयोगजा एकैव च्छर्द्दिरित्युक्तम् ॥ ३१ ॥

उदान इति। उदानाख्यो वायुर्विकृतः सर्वानपि दोषान् वातपित्तकफानूर्द्ध्वमस्यति क्षिपति। अपिशब्द एवार्थः। सर्वास्वेव छर्द्दिष्वित्यर्थः ॥ ३२ ॥

तासूत्क्लेशास्यलावण्य-प्रसेकारुचयोऽग्रगाः ॥ ३३ ॥
नाभिपृष्ठं रुजन् वायुः पार्श्वे चाहारमुत्क्षिपेत् ।
ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत् ॥ ३४ ॥
शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवत् ।
कासास्यशोषहृन्मूर्द्ध-स्वरपीड़ाक्लमान्वितः ॥ ३५ ॥
पित्तात् क्षारोदकनिभं धूम्रं हरितपीतकम् ।
सासृगम्लं कटूष्णञ्च तृण्मूर्च्छातापदाहवत् ॥ ३६ ॥
कफात् स्निग्धं घनं शीतं श्लेष्मतन्तुगवाक्षितम् ।
मधुरं लवणं भूरि प्रसक्तं लोमहर्षणम् ॥
मुखश्वयथुमाधुर्य्य-तन्द्रा-हृल्लास-कासवत् ॥ ३७ ॥
सर्वलिङ्गा मलैः सर्वैरिष्टोक्ता या च तां त्यजेत् ॥ ३८ ॥
पूत्यमेध्याशुचिद्विष्ट-दर्शनश्रवणादिभिः ।
तप्ते चित्ते हृदि क्लिष्टे च्छर्दिर्द्विष्टार्थयोगजा ॥ ३९ ॥

---

तास्विति । तासु छर्द्दिषु उत्क्लेशादयोऽग्रगाः । अग्रे गच्छन्ति प्राग्रूपतयोद्भवन्ति । उत्क्लेशः स्वस्थानत एव मूर्त्तस्य दोषस्योदयो बुद्बुदवदुत्थानम् ॥ ३३ ॥

नाभिपृष्ठमिति । वायुः कासादिमान् इदमिदं कुर्वन् वमेत् । छर्दिं करोति नाभि पृष्ठञ्च रुजन् पीड़यन् पार्श्वे च रुजन् आहारमुत्क्षिपेदूर्ध्वं नयेत् । ततस्तस्मादाहारस्योर्द्धगमनादनन्तरं विच्छिन्नं कृत्वा न निरन्तरमल्पाल्पमल्पं कृत्वा कषायं वमेन्न मधुराद्यन्यतमम् । तथा फेनिलं फेनयुक्तम् । फेनिलमिति फेनादिलजिति इलच् । तथा शब्दयुतमुद्गारयुतम् । तथा कृष्णं कृष्णवर्णम्, तथा अच्छम्, तथा कृच्छ्रेण कथञ्चिन्न यथासुखम्, तथा वेगवत् वेगयुतम् ॥ ३४ । ३५ ॥

पित्तादिति । पित्तात् क्षारोदकसदृशादिकं वमेत्, तथा तृण्मूर्च्छातापदाहा विद्यन्ते यस्मिंस्तदेवं तृष्णादियुक्तं यथा भवति तथा वमेत् ॥ ३६ ॥

कफादिति । कफात् स्निग्धादिकं वमेत्, तथा श्लेष्मणः सम्बन्धिना तन्तुजालेन गवाक्षितं तथा मधुरादिकं वमेत्, तथा मुखश्वयथ्वादिमत् ॥ ३७ ॥

सर्व्वलिङ्गा इति । छर्दिः सर्वैर्[illegible] सन्निपतितैर्भवेत् । न केवलं त्रिभिर्दोषैः सर्व्वलिङ्गा या च रिष्टोक्ता विकृतिविज्ञानीयाध्याये छर्दि[illegible]ना ग्रन्थोक्ता सापि सर्व्वलिङ्गा दोषत्रयलक्षणोपेता तां त्यजेत् न चिकित्सेत् । ननु रिष्टोक्ता या छर्दिस्तां त्यजेदिति व्याख्येयम् । तस्यारिष्टत्वेनैवासाध्यत्वस्य प्रतिपादितत्वात् ॥ ३८ ॥

पूतीति । पूत्यादिभिस्तप्ते, चित्ते उत्तप्ते मनसि तथा तैरेव पूत्यादिभिः क्लिष्टे

वातादीनेव विमृशेत् क्रिमितृष्णामदौहृदे ।
शूलवेपथुहृल्लासैर्विशेषात् क्रिमिजां वदेत् ॥ ४० ॥
क्रिमिहृद्रोगलिङ्गैश्च स्मृताः पञ्च तु हृद्गदाः ।
तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः ॥ ४१ ॥
वातेन शूल्यतेऽत्यर्थं तुद्यते स्फुटतीव च ।
भिद्यते शुष्यति स्तब्धं हृदयं शून्यता द्रवः ॥ ४२ ॥
अकस्माद् दीनता शोको भयं शब्दासहिष्णुता ।
वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता ॥ ४३ ॥
पित्तात् तृष्णा भ्रमो मूर्च्छा दाहः स्वेदोऽम्लकः क्लमः ।
छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः ॥ ४४ ॥
श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ।
कासाग्निसादनिष्ठीव-निद्रालस्यारुचिज्वराः ॥ ४५ ॥

---

पीड़िते हृदि या जायते च्छर्दिः सा द्विष्टार्थयोगजा च्छर्दिरुच्यते । आदिः प्रकारे यथा आकृतिगणेषु ॥ ३९ ॥

ननु क्रिम्यादिजान्यन्यानि च्छर्दींषि सम्भवन्त्येव तेषां लक्षणं कस्मान्नोक्तमित्याह,—वातादीनिति । कारणे कार्योपचारात् क्रिम्यादिशब्दैरेव च्छर्दय उच्यन्ते । क्रिमितृष्णाम-गर्भिणीदौहृदजे च्छर्दिषि वातादीनेव यथायथं स्वलक्षणैर्विमृशेद्विचारयेल्लक्षयेत् । नहि वातादीनन्तरेणैताश्छर्दयः कथञ्चिदपि सम्भवन्ति । अतएव एवकारोऽत्रावधारणार्थो व्यधायि । एवं क्रिमिजां कदाचिद्वायुच्छर्दिलक्षणोपेतामथवा पित्तच्छर्दिलक्षणोपेतां कफच्छर्दिलक्षणोपेतां वा यथायथं लक्षयेत् । एवं तृष्णामदौहृदच्छर्दिषि वातादीन् विमृशेत् । विशेषेण शूलवेपथुहृल्लासैः क्रिमिजां वदेत् । क्रिमिहृद्रोगलक्षणैश्चानन्तर-वक्ष्यमाणैः क्रिमिजां वदेत् । अधुना हृद्रोगं लिलक्षयिषुराह ;—स्मृता इति । हृद्गदाः पञ्च स्मृताः तन्त्रकृद्भिरिति शेषः । तेषां हृद्रोगाणां गुल्मनिदानोक्तैर्वक्ष्यमाणैः समुत्थानैः कारणैः सम्भव उत्पत्तिः ॥ ४० । ४१ ॥

वातेनेति । वातेन हृद्रोगेऽत्यर्थं हृदयं शूल्यते । अत्यर्थशब्देनेदं गमयति । अन्येष्वपि हृद्रोगेषु हृदयं शूल्यतेऽतिशयेन तु वातजे हृद्रोग इति । तथा तुद्यते प्राजनेनेव । शूलं सन्तता पीड़ा ; तोदो विच्छिन्नोऽतिशयेन रुग्द्रवः, तथा हृदयं स्फुटतीत्यादिक्रियायुतं भवति ... शून्यता द्रवश्च प्रकृतत्वात् हृदयस्यैव स्यादिति बोध्यम् ॥ ४२ । ४३ ॥

पित्तादिति । पित्तात् पित्तेन तृष्णादयः स्युः । श्लेष्मणेति । श्लेष्मणा हृद्रोगे हृदयं स्तब्धं तथा भारिकं गुरु भवति । कथम् ? साश्मगर्भवदन्तर्विद्यमानाश्मगर्भसदृशम्, तथा कासादयः स्युः ॥ ४४ । ४५ ॥

सर्वलिङ्गस्त्रिभिर्दोषैः क्रिमिभिः श्यावनेत्रता ।
तमःप्रवेशो हृल्लासः शोषः कण्डूकफस्रुतिः ॥ ४६ ॥
हृदयं प्रततश्चात्र क्रकचेनेव दार्यते ।
चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ॥ ४७ ॥
वातात् पित्तात् कफात् तृष्णा सन्निपातात् रसक्षयात् ।
षष्ठी स्यादुपसर्गाच्च वातपित्ते तु कारणम् ॥ ४८ ॥
सर्वासु तत्प्रकोपो हि सौम्यधातुप्रशोषणात् ।
सर्वदेह-भ्रमोत्कम्प-ताप-तृड्-दाह-मोह-कृत् ॥ ४९ ॥
जिह्वा-मूल-गल-क्लोम-तालु-तोयवहाः सिराः ।
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम् ॥ ५० ॥
मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ।
कण्ठोष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रमणं क्लमः ।
प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथाऽऽमयाः ॥ ५१ ॥
मारुतात् क्षामता दैन्यं शङ्खतोदः शिरोभ्रमः ।

---

सर्वलिङ्गो हृद्रोगस्त्रिभिर्दोषैः स्यात् । क्रिमिभिरिति । क्रिमिभिश्च हृद्रोगे श्यावास्यताद्याः सुरः । अत्र क्रिमिहृद्रोगे हृदयं क्रकचेनेव करपत्रेणेव सन्ततं दार्यते । तं क्रिमिहृद्रोगाख्यमामयं घोरमतिदुःसहं शीघ्रकारिणं आशुव्यापातकारिणं शीघ्रमेव चिकित्सेत् । महामर्मणो हृदयस्य क्रिमिभिर्भक्षणात् ॥ ४६ । ४७ ॥

उक्ता हृद्रोगाः शीघ्रकारित्वसामान्यात् तृष्णानन्तरं व्याख्यायते ;—वातादिति । वातादिभिः पञ्च तृष्णाः सुरः । षष्ठी स्यादुपसर्गाच्च । उपादानादेव षट्संख्यायालब्धत्वात् षष्ठीत्येतद्वचनं नियमार्थम् । आमोद्भवाद्या या वक्ष्यमाणास्तृष्णाः ताः सर्वास्तृष्णानां षट्त्वं नातिक्रामन्ति वातपित्तजत्वात् । प्रायेणाऽसावास्वेवान्तर्भावः । वातेति । पूर्वोक्तासु वक्ष्यमाणासु च तृष्णासु वातपित्ते कारणम् । ते एव वातपित्ते हेतू कुत एवमित्याह ;—तदिति । हि यस्मात् सौम्यस्य शरीरगतस्य रसादेर्धातोराहारादिना यत् प्रशोषणं तस्मात् तयोर्वातपित्तयोः प्रकोपो जायत इत्यध्याहार्यम् । किंभूतः प्रकोपः ? सर्वदेहभ्रमोत्कम्पतापतृड्दाह[illegible]सौम्यधातुप्रशोषणपूर्वकं तृष्णानां [illegible] यतो जन्म तस्मादिदमाह ॥ ४८ । ४९ ॥

जिह्वेति । जिह्वादिसिराः संशोष्य तृष्णा समुत्पद्यते । तासामिति । मुखशोषादिकं तृड्ग्रहोक्तामयपर्यन्तं निर्दिष्टं तासां तृष्णानां सामान्यलक्षणम् । तृड्ग्रहोक्ता रोगानुत्पादनीयोक्ताः शोषाङ्गसादबाधिर्यादयः ॥ ५०—५१ ॥

गन्धाज्ञानास्यवैरस्य-श्रुति-निद्रा-बलक्षयाः ॥ ५२ ॥
शीताम्बुपानाद् वृद्धिश्च पित्तान्मूर्च्छास्यतिक्तता ।
रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः ॥ ५३ ॥
कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम् ।
स्रोतःसु स कफस्तेन पङ्कवच्छोष्यते ततः ॥ ५४ ॥
शूकैरिवाचितः कण्ठो निद्रामधुरवक्त्रता ।
आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः ।
आलस्यमविपाकश्च सर्वैः स्यात् सर्वलक्षणा ॥ ५५ ॥
आमोद्भवा च भक्तस्य संरोधाद् वातपित्तजा ॥ ५६ ॥
उष्णक्लान्तस्य सहसा शीताम्बो भजतस्तृषम् ।
उष्मा रुद्धो गतः कोष्ठं यां कुर्यात् पित्तजैव सा ॥
या च पानातिपानोत्था तीक्ष्णाग्नेः स्नेहजा च या ॥५७॥
स्निग्धगुर्वम्ललवण-भोजनेन कफोद्भवा ॥ ५८ ॥
तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ।
शोषमोहज्वराद्यन्य-दीर्घरोगोपसर्गतः ।
या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृताः ॥ ५९ ॥
इत्यष्टाङ्गहृदये निदानस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

---

मारुतादिति । वातात् तृष्णायां चामतादैन्यादयः स्युः । पित्तादिति । पित्तात् तृष्णायां मूर्च्छादयः स्युः ॥ ५२ । ५३ ॥

कफतृष्णामाह ;—कफ इति । कफः कुपितो जलवाहिषु स्रोतःसु यदा मारुतं रुणद्धि । तदा स च कफस्तेन मरुता पङ्क इव शोष्यते । ततस्तस्मिन् कफे शुष्के सति कण्ठः शूकैरिव आचितो व्याप्तः स्यात् ; तथा निद्रादयश्च स्युः । सर्वैरिति । सर्वैः सन्निपतितैः सर्वलिङ्गा तृष्णा स्यात् ॥ ५४ । ५५ ॥

आमोद्भवेति । आमोद्भवा च तृष्णा भक्तस्याहारस्य संरोधात् स्यात् । सा च वातपित्तजा ॥ ५६ ॥

उष्णेति । उष्णेन [illegible] आटत्येव शीतं जलं सेवमानस्योष्मा रुद्धः [illegible]गतः । यां तृषं तृष्णां कुर्यात् सा [illegible]त्तजैव तृष्णा न [illegible]न्या बोध्या । या च तृट् पानम् मद्यस्यातिपानोद्भवा या च तीक्ष्णाग्नेः पुरुषस्य स्नेहजा तृट् सापि पित्तजैव ॥ ५७ ॥

स्निग्धेति । स्निग्धादिगुणयुक्तेन भोजनेन या तृट् स्यात् सा कफसम्भवा बोध्या । तृष्णेति । रसक्षयोक्तेन लक्षणेन रसे रौक्ष्यं श्रम इत्यादिग्रन्थनिर्दिष्टेन लक्षणेन क्षया-

# षष्ठोऽध्यायः ।

अथातो मदात्ययनिदान व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
तीक्ष्णोष्णरुक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।
विकाशि विशदं मद्यमोजसोऽस्माद् विपर्ययः ॥ २ ॥
तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः ।
जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः ॥ ३ ॥
तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ।
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥ ४ ॥

---

त्मिका तृष्णा बोध्या । शोषेति । शोषमोहाद्यपरदीर्घरोगोपसर्गात् दीर्घकालानुबन्धाया तृष्णा स्यात् सोपसर्गात्मिका स्मृता मुनीन्द्रैरिति ॥ ५८ । ५९ ॥

इति श्रीमृगाङ्कदत्तपुत्र श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्ग-
सुन्दराख्यायां राजयक्ष्मादिनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

राजयक्ष्मनिदानादनन्तरं मदात्ययनिदानारम्भो यथा राजयक्ष्मा दोषत्रयजस्तथा मदात्ययोऽपि । वक्ष्यति हि, तत्र "सर्व्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा" इति । तस्मान्मदात्ययनिदानमुच्यत इत्याह,—अथात इति । पूर्ववद्व्याख्या ॥ १ ॥

मदात्ययस्य निदानमुच्यत इत्याह,—तीक्ष्णेति । तीक्ष्णोष्णादिगुणं मद्यं अस्मान्मद्यादोजसो विपर्ययो वैपरीत्यम् । यथा मन्द-शीत-स्निग्ध-सान्द्र-स्थूल-मधुर-स्थिर-चिरकृद्-गुरु-श्लक्ष्ण-पिच्छिलत्वम् ॥ २ ॥

तीक्ष्णादय इति । एते च तीक्ष्णादयो दश गुणा विषेऽप्युक्ताः । चित्तमुपप्लावितुं शीलं येषां ते चित्तोपप्लाविनश्चित्तविभ्रमकारिणः । न केवलं मद्य इत्यपिशब्दार्थः । ननु यदि त एव तीक्ष्णादयो गुणा विषे त एव मद्ये तत् कथं विषस्था एव तीक्ष्णादयो मारयन्ति न मद्यस्था इत्यत्र युक्तिमाह, जीवितान्तायेत्यादि । विषस्थास्तीक्ष्णादयो ये गुणास्ते मारणाय सम्पद्यन्ते । उत्कर्षवृत्तित उत्कर्षवर्त्तनात् ॥ ३ ॥

कथं कृत्वा मद्यं चेतोविकारं नयतीत्याह,—तीक्ष्णादिभिरिति [illegible] हृदय-मोजसः स्थानं द्रव्यप्रभावादाविश्य तीक्ष्णादिभिर्गुणैर्मन्दादीनोजसः सम्बन्धिनो गुणान् संक्षोभ्य, समन्तात् दुष्टतामापाद्य चेतो विक्रियां विकारं नयत्याद्ये मदे तनु मदे । ननु तीक्ष्णादिभिर्मन्दादीनित्येतावदेवास्तु किं दशभिर्दशेत्यनेन ? पाठादेव हि दशसंख्या च

आद्ये मदे द्वितीये स प्रमादायतने स्थित: ।
दुर्विकल्पहतो मूढ़: सुखमित्यधिमुच्यते ॥ ५ ॥
मध्यमोत्तमयो: सन्धिं प्राप्य राजसतामस: ।
निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जड: ॥ ६ ॥
इयं भूमिरवद्यानां दौ:शील्यस्यैदमास्पदम् ।
एकोऽयं बहुमार्गाया दुर्गतेर्दैशिक: परम् ॥ ७ ॥

---

गमिष्यते । अस्त्येवैतत्, किन्तु सर्वैरेव तीक्ष्णादिभि: सर्वानपि मदादीन् संक्षोभ्य चेती विक्रियां मद्यं नयति न तु कियद्भिरपि तीक्ष्णादिभि: कियत एव मन्दादीनिति प्रतिपादनाय संख्याग्रहणम् । उत्कर्षतारतम्यकृतस्त्वस्यैव विशेष: ; तेन सर्व्वत्र मदेनैव तुल्य: क्षोभ इति बोध्यम् । आद्ये च मदे यथास्वं प्रबोधजनके पुमान् स्थितो मद्यपानात् तादात्मिकं सुखं समधिगच्छतीत्यनुक्तमपि सम्भाव्यते । तथा च मुनि:, “पञ्चवर्षेषु कान्तेषु या रति: प्रथमे मदे । यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवि” इति । द्वितीय इति । अनन्तरं द्वितीये मदे स्थित: प्राप्त: स्वार्थैर्दुष्टैस्तैस्तैर्विकल्पैर्हत: पुरुषार्थाद्विनष्टोऽतएव मूढ़: कार्य्याकार्य्यानभिज्ञ: सुखमित्यधिमुच्यते सुखमिति ज्ञानेन प्रथममदोत्पन्नेन तदानीमधिमुच्यतेऽधिकं कृत्वा तेन सुखेन परित्यज्यते । तादात्मिकमप्येकं तत्सुखं नानुभवति, ओजसो विहतत्वात् । अन्ये त्वाहु:, अधिमुच्यते निश्चिनोति सुखं मे भवेदित्यभिनिविशते । किम्भूते मदे स्थित: ? प्रमादायतने स्थित: प्रमादानां साहसानामिहामुत्र चाशुभहेतूनां स्थाने ॥ ४ । ५ ॥

मध्यमेति । मध्यमोत्तमयोर्द्वितीयतृतीययो: सन्धिं प्राप्य अन्तरं लब्ध्वा पुरुषो राजसतामसो न किञ्चिदशुभं नाचरेत् अपि तु सर्व्वमशुभमाचरेत् । राजससहितस्तामसो राजसतामस: । शाकपार्थिवादित्वान्मध्यमपदलोपी समास: । राजसो वा तामसो वेत्यर्थ:, राजसतामसग्रहणात् सात्त्विक: पुरुषो नेदृशीमवस्थामवाप्नोतीति गमयति । निरङ्कुश इव व्याल: । यथा व्यालो दुष्टो हस्ती जडो वधिरस्तथा निरङ्कुशो न किञ्चिदशुभं नाचरेत उन्मार्गप्रवृत्तत्वात् । तन्त्रान्तरे चैवमुक्तम्, “सात्त्विके शौचदाक्षिण्य-हर्ष-मण्डन-लालस: । गीताध्ययनसौभाग्यसुरतोत्साहकृन्मद: ॥ राजसे दु:खशीलत्वमात्मत्यागंससाहसम् । कलहं सानुबन्धञ्च करोति पुरुषे मद: ॥ अशौचनिद्रामात्सर्य्यागम्यागमनलोलता: । असत्यभाषणं चापि कुर्य्याद्‌ वै तामसे मद:” इति । व्यालग्रहणाद्‌ य: शुद्धस्वभावो हस्ती स सृणिरहितोऽपि कदाचित् हस्त्यारोहशब्दश्रवणात् कालोचितं [illegible] परिवर्त्तेत्यतो व्यालो निरङ्कुश इति द्वयमुपन्यस्तम् । तेजस: किञ्चिच्छेषत्वान्निन्द्यामिमामवस्थां प्राप्त: ॥ ६ ॥

अतएवाह,—इयमिति । अवद्यानां निन्द्यानामियं मदावस्था भूमिराकार:, तथा दौ:शील्यस्यासमाहितत्वस्य इदं मदावस्थान्तरमास्पदमावसथ: । एकोऽयं मदविशेषो बहुमार्गाया अनेकमुखाया दुर्गते: परं कृत्वा दैशिक आचार्य्य: ॥ ७ ॥

निश्चेष्टः शववच्छेते तृतीये तु मदे स्थितः।
मरणादपि पापात्मा गतः पापतरां दशाम् ॥ ८ ॥
धर्माधर्मसुखं दुःखमर्थानर्थं हिताहितम्।
यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ॥ ९ ॥
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः।
सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः।
यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत् ॥ १० ॥
अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा।
मद्यं त्रिवर्ग-धी-धैर्य-लज्जादेरपि नाशनम् ॥ ११ ॥
नातिमाद्यन्ति बलिनः कृताहारा महाशनाः।
स्निग्धाः सत्त्ववयोयुक्ता मद्यनित्यास्तदन्वयाः।

---

निश्चेष्ट इति। तृतीये उत्तमे मदे स्थितो नरस्तेजसो विहतत्वान्निश्चेष्टश्चेष्टया कायवाङ्मनोलक्षणया रहितः अतएव शववच्छेते मृतानुकल्पः स्वपिति। एवञ्च सत्यसौ पापात्मा मरणादपि पापतरामवस्थां प्राप्तः। यतो मृतो मरणात् समनन्तरमेव शरीरान्तरं प्राप्य सुखादीन् विन्दते। तृतीयां मदावस्थां प्राप्तस्तु पुरुषोऽपरशरीराप्राप्तेर्न कथञ्चित् सुखाद्यनुभवतीति मरणादप्यस्य निकृष्टत्वम् ॥ ८ ॥

धर्म्मेति। यस्मिन्नासक्तो यदासक्तो धर्म्मादीन् न जानाति, तत् तथाविधं मद्यं बुधो मतिमान् कथं शीलयेदभ्यसेत्। अत्र धर्म्मो दानाध्ययनदेवगुरुपूजादिकः; अधर्म्मो हिंसादिः; सुखमाह्लादकोऽनुभवः; दुःखमुपतापः। अर्थ उभयलोकहितम्; अनर्थोऽहितम्। शीलयेदित्यनेन तत्र सक्तिं निषेधति नतु मद्यपानमपि ॥ ९ ॥

मद्य इति। मद्येऽतिपीते मोहादयः संश्रिता आश्रिताः। मद्यातिपानादनन्तरं मोहादीनां सम्भवात्। अथवा किमत्र बहुनाऽभिहितेन यत्र यस्मिन् मद्ये स्मृतेर्विभ्रंशो लोपस्तत्र यत्किञ्चिद् विद्यते तत् सर्व्वमसाधु अशोभनम्। यत्र ओजसो न विहतिर्हृत्-प्रबोधश्च स प्रथमो मदः। यत्राल्पा विहतिरोजसः स मध्यमः। यत्र समस्ततेजोविहतिः स उत्तमः। तथा च मुनिः, "ओजस्यविहते पूर्व्वो हृदि च प्रतिबोधिते। मध्यमो विहतेऽल्पे तु विहते तूत्तमो मदः" इति ॥ १० ॥

अयुक्तीति। यस्मादयुक्त्या योजितमन्नमपि यत् प्राणकरं तदपि कर्म्मवशाद् व्याधये मरणाय वा सम्पद्यते। मद्यन्तु अयुक्तियोजितं त्रिवर्गादेरपि नाशनम्। युक्तिपीतं पुनस्तदेव त्रिवर्गादीनां साधनमित्यपिशब्देन द्योतयति ॥ ११ ॥

तामेव युक्तिं वक्ष्यमाणेन ग्रन्थेन प्रतिपादयन्नाह,—नातीति। यत एवंविधा नरा नातिमाद्यन्ति अतो बलवद्भिः पुरुषैः कृताहारैर्महाशनैः स्निग्धैः सत्त्वयुक्तैर्वयो-

मेदःकफाधिका मन्द-वातपित्ता दृढाग्नयः ॥ १२ ॥
विपर्ययेऽतिमाद्यन्ति विस्रब्धाः कुपिताश्च ये ।
मद्येन चाम्लरूक्षेण साजीर्णे बहु नाति च ॥ १३ ॥
वातात् पित्तात् कफात् सर्वैश्चत्वारः स्युर्मदात्ययाः ।
सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा ॥ १४ ॥
सामान्यं लक्षणं तेषां प्रमोहो हृदयव्यथा ।
विड्भेदः प्रततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचिः ॥ १५ ॥
शिरःपार्श्वास्थिहृत्कम्पो * मर्मभेदस्त्रिकग्रहः ।
उरोविबन्धस्तिमिरं कासः श्वासः प्रजागरः ॥ १६ ॥
स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः ।
प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम् ॥ १७ ॥
विशेषाज्जागरश्वास-कम्पमूर्द्धरुजोऽनिलात् ।
स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते ॥ १८ ॥

---

युक्तैर्मद्योचितैस्तदन्वयैर्मद्यपकुलप्रसूतैर्मेदोऽधिकैः कफाधिकैः स्वल्पवातपित्तैर्दृढाग्निभिर्मद्यं पेयं नातो विपर्यस्तैः । इत्यन्यतन्त्रकारकथिताया युक्तेरत्रैवान्तर्भावोऽनेन तन्त्रकृता कृतः ॥ १२ ॥

विपर्यय इति । यथानिर्दिष्टाद् वैपरीत्येन यथा अबलिनो यावददृढाग्नय इति । तथा विस्रब्धा अमृतमिवेदं स्पृहणीयं सुरेभ्योऽपि दीयतेऽस्माभिरिति तद्गतमनसो विस्रब्धास्तथा कुपिताः क्रुद्धा ये तेऽतिमाद्यन्ति । मद्येनेत्यादि । अम्लरूक्षेण च मद्येन पीतेन सर्व एवातिमाद्यन्ति । अत्र चात्यम्लेनेति वेद्यम्, मद्यस्य सर्वस्यैवाम्लप्रायत्वात् । रूक्षेण न त्वीषत् स्निग्धेन । तथा साजीर्णे, सशब्द ईषदर्थे ईषदजीर्णे । तस्मिन्नेव मद्ये पीतेऽतिमाद्यन्ति, तथा अतिबहुना पीतेन मद्येनातिमाद्यन्ति ॥ १३ ॥

वातादिति । वातपित्तादिभिः पृथक्स्थितैर्दोषैः सन्निपातेन चेति चत्वारो मदात्यया वस्तुस्वभावाज्जायन्ते । न्यूनाधिकाः सर्वेऽपि मदात्यया सर्वैरपि दोषैर्जायन्ते भूयसा बाहुल्येन तु व्यपदेशः संज्ञा भवत्ययं वातमदात्ययो यावत् सन्निपातमदात्ययोऽयमिति ॥ १४ ॥

सामान्यमिति । तेषां मदात्ययानां सामान्यं लक्षणमविभागेन प्रमोहादिदुःस्वप्नदर्शनपर्यन्तम् ॥ १५—१७ ॥

विशेषादिति । वातेन मदात्यये जागरादिकं प्रेतैः सह भाषत इतिपर्यन्तं स्यात् ।

---

* अंसरुगिति वा पाठः ।

पित्तात् दाहज्वरस्वेद-मोहातीसारतृड्भ्रमाः ।
देहो हरितहारिद्रो रक्तनेत्रकपोलता ॥ १९ ॥
श्लेष्मणश्छर्दिहृल्लास-निद्रोदर्द्वाङ्गगौरवम् ॥ २० ॥
सर्वजे सर्वलिङ्गत्वं मुक्त्वा मद्यं पिबेत्तु यः ।
सहसाऽनुचितं चान्यत्तस्य ध्वंसकविक्षयौ ।
भवेतां मारुतात् कष्टौ दुर्बलस्य विशेषतः ॥ २१ ॥
ध्वंसके श्लेष्मनिष्ठीव-कण्ठशोषोऽतिनिद्रता
शब्दासहत्वं तन्द्रा च विक्षयेऽङ्गशिरोऽतिरुक्
हृत्कण्ठरोगः सम्मोहः कासस्तृष्णा वमिर्ज्वरः ॥ २२ ॥
निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् ।
विकारैः स्पृश्यते जातु न स शारीरमानसैः ॥ २३ ॥
रजोमोहाहिताहार-परस्य स्युस्त्रयो गदाः ।
रसासृक्चेतनावाहि-स्रोतोरोधसमुद्भवाः ।
मद-मूर्च्छाय-संन्यासा यथोत्तरबलोत्तराः ॥ २४ ॥

---

पित्तादिति । पित्तेन मदात्यये दाहादिकं रक्तनेत्रकपोलतापर्यन्तं स्यात् । श्लेष्मण इति । श्लेष्ममदात्यये च्छर्द्यादिकमङ्गगौरवपर्यन्तं स्यात् ॥ १८—२० ॥

सर्व्वज इति । सर्व्वजे मदात्यये सर्व्वलिङ्गत्वं भवति । सम्प्रति ध्वंसकविक्षयौ लक्षयति, मुक्त्वेति । उचितं मद्यं चिरकालं परित्यज्य यः पुरुषस्तदेव सहसाऽतिमात्रया पिबेत्, अथवाऽन्यन्मद्यं यदनुचितमसात्म्यं मद्यं तत् सहसाऽतिमात्रं पिबेत्, तस्य पुरुषस्य ध्वंसकविक्षयौ व्याधी मारुताद् भवेतां जायेताम् । किम्भूतौ ? कष्टौ कृच्छ्रसाध्यत्वात् । दुर्बलस्य पुनः पुंसस्तौ विशेषेण भवेताम् ॥ २१ ॥

ध्वंसक इति । ध्वंसके श्लेष्मनिष्ठीवादयः स्युः । विक्षय इति । विक्षये अङ्गातिरुगाद्याः स्युः ॥ २२ ॥

निवृत्त इति । शारीरमानसानां रोगाणां मद्यं कारणमिति कृत्वा यः पुमान् जितात्मा मद्येभ्यो निवृत्तो बुद्धिपूर्वकृद् विमृश्यकारी स न कदाचिच्छारीरमानसैर्वा विकारैः स्पृश्यते ॥ २३ ॥

अथ मद्यवच्चेतोविहतिकारणसामान्यान् मदादीन् लक्षयति,—रज इति । रजःप्रधानस्य, मोहप्रधानस्य, तथाऽपथ्याहारपरस्य त्रयो गदाः स्युर्जायेरन् । किम्भूताः ? रसश्चासृक् च चेतना च ता वहन्ति यानि स्रोतांसि तेषां रोधः समुद्भवो हेतुर्येषां ते रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः । मद-मूर्च्छाय-संन्यासा एतत्संज्ञाः ते

मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ॥ २५ ॥
सक्तानल्पद्रुताभाषश्चलः स्खलितचेष्टितः ।
रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत् ॥ २६ ॥
पित्तेन क्रोधनो रक्त-पीताभः कलहप्रियः ॥ २७ ॥
स्वल्पासम्बद्धवाक् पाण्डुः कफात् ध्यानपरोऽलसः ।
सर्वात्मा सन्निपातेन रक्तात् स्तब्धाङ्गदृष्टिता ॥ २८ ॥
पित्तलिङ्गञ्च मद्येन विकृतेहास्वराङ्गता ।
विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकस्तु सः ॥ २९ ॥
लक्षयेल्लक्षणोत्कर्षाद् वातादीन् शोणितादिषु ॥ ३० ॥
अरुणं कृष्णनीलं वा खं पश्यन् प्रविशेत्तमः ।
शीघ्रञ्च प्रतिबुध्येत हृत्पीड़ा वेपथुर्भ्रमः ।
कार्श्यं श्यावारुणा च्छाया मूर्च्छाये मारुतात्मके ॥ ३१ ॥
पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत्तमः ।
विबुध्येत च सस्वेदो दाह-तृट्-ताप-पीड़ितः ॥
भिन्नविस्रीलपीताभो रक्तपीताकुलेक्षणः ॥ ३२ ॥

---

च यथोत्तरबलोत्तराः । यथा उत्तरो यथोत्तरम् । बलस्योत्तरमुत्कर्षः । यथोत्तरं बलोत्तरं येषां त एवम् । मदान् मूर्च्छायी बलवांस्तस्मादपि संन्यास इत्यर्थः ॥ २४ ॥

मद इति । अत्र एषु मदादिषु मध्ये मदः सप्तधा पृथग्दोषैः सन्निपातेन रक्तेन मद्येन विषेण च । सक्तेति । वातोद्भवे मदे सति पुमान् सक्तानल्पद्रुताभाषणादिलक्षणो भवति । पित्तेनेति । पित्तेन क्रोधनादिलक्षणः । स्वल्पेति । कफात् स्वल्पासम्बद्धवागादिलक्षणः । सर्वात्मेति । सर्वात्मा सर्वदोषलक्षणः सन्निपातेन । रक्तादिति । रक्ताद्रक्तमदात् स्तब्धाङ्गत्वं स्तब्धदृष्टिता, तथा पित्तमदलिङ्गञ्च स्यात् । मद्येन मदे विकृता चेष्टा, तथा स्वरस्य विकृतत्वमङ्गस्य च । विष इति । विषे विषोत्थे मदे कम्पोऽतिनिद्रा च स्यात् । स च विषमदः सर्वेभ्यो मदेभ्योऽधिकः । लक्षयेदिति । शोणितादुत्थेषु मदेषु वातादीन् लक्षयेत् । कुतः ? लक्षणोत्कर्षात् स्वस्वलक्षणोत्कर्षेण ॥ २५—३० ॥

अथ मूर्च्छायं लक्षयति,—अरुणमिति । मारुतोद्भवे मूर्च्छाये अरुणाद्यन्यतमवर्णमाकाशं पश्यन् पुमांस्तमः प्रविशेत् मूढ़ावस्थां प्राप्नोति । शीघ्रं प्रतिबुध्येत् संज्ञां लभेत् । हृत्पीडा वेपथुर्भ्रमस्तथा कार्श्यादि च स्यात् ॥ ३१ ॥

पित्तेनेति । पित्तेन मूर्च्छाये रक्तं पीतं वा नभः पश्यंस्तमः पुमान् विशेन्मूढ़ावस्थां प्राप्नुयात् । सह स्वेदेन विबुध्येत संज्ञां लभते, तथा दाहादिपीड़ितस्तथा भिन्नविडादिकः ॥ ३२ ॥

कफेन मेघसङ्काशं पश्यन्नाकाशमाविशेत् ।
तमश्चिराच्च बुध्येत सहृल्लासः प्रसेकवान् ।
गुरुभिः स्तिमितैरङ्गैरार्द्रचर्मावनद्धवत् ॥ ३३ ॥
सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः ।
पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ ३४ ॥
दोषेषु मदमूर्च्छाया हृतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥ ३५ ॥
वाग्देहमनसां चेष्टामाक्षिप्याऽतिबला मलाः ।
संन्यासं सन्निपतिताः प्राणायतनसंश्रयाः ॥ ३६ ॥
कुर्वन्ति तेन पुरुषः काष्ठभूतो मृतोपमः ।
म्रियते शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥ ३७ ॥
अगाधे ग्राहबहुले सलिलौघ इवातटे ।
संन्यासे विनिमज्जन्तं नरमाशु निवर्त्तयेत् ॥ ३८ ॥

---

कफेनेति । कफेन मूर्च्छायां मेघाभमाकाशं पश्यंस्तम आविशेच्चिरेण च बुध्येत संज्ञां लभते । हृल्लासादिमांस्तथाऽऽर्द्रेण चर्मणाऽवनद्धो वेष्टित इव ॥ ३३ ॥

सर्व्वाकृतिरिति । त्रिभिर्दोषैर्यो मूर्च्छायः सर्व्वाकारः सोऽपरोऽपस्मार इव आशु शीघ्रं पुरुषं निश्चेष्टं पातयति । विना बीभत्सचेष्टितैरपस्मारोत्थानि निन्द्यानि चेष्टितानि वर्जयित्वा । अन्यत् सर्वं समानम् ॥ ३४ ॥

इदानीं सन्न्यासं लक्षयितुमाह,—दोषेष्विति । मदाश्च मूर्च्छायाश्च मदमूर्च्छायाः हृतवेगेषु दोषेषु सत्सु स्वयमेवौषधं विनापि शाम्यन्ति । सन्न्यासः पुनरौषधैर्विना न शान्तिमेति ॥ ३५ ॥

वागिति । वाक् च देहश्च मनश्च तेषां चेष्टां यथास्वलक्षणामाक्षिप्य मला वातपित्तकफाः सन्निपतिताः सन्तस्त्रय एककार्योद्यताः सन्न्यासं कुर्वन्ति । किंभूताः । अतिबलास्तथा प्राणायतनसंश्रया विशेषेण हृदयाश्रयाः । तेन सन्न्यासेन पुरुषः काष्ठभूतः स्थाणुकुड्यकल्पः, तथा मृतोपमस्तत्सदृशो भूत्वाऽनन्तरं शीघ्रं म्रियते यदि शीघ्रं चिकित्सा न प्रयुज्यते । म्रियत इति सम्भावनायां लिङ् ॥ ३६ । ३७ ॥

शीघ्रं चिकित्सनाज्जीवेदित्यत्रैवोदाहरणार्थमाह,—अगाध इति । अगाधे अतलस्पर्शे सलिलौघे, तथा ग्राहबहुले मकरादिप्राणहरप्राणिभूयसि, तथा अतटेऽरोधसि यथा तस्मिन् निमज्जन्तं नरमाशु शीघ्रं निवर्त्तयेत्तस्मादुद्धरेत्, एवं सन्न्यासेऽपि निमज्जन्तं नरमाशु निवर्त्तयेत् । अनेनोदाहरणेन महात्ययत्वमस्य व्याधेः प्रदर्शयन् स्वल्पकालहापनमप्यत्र व्याधौ न कार्यमिति द्योतयति ॥ ३८ ॥

मद-मान-रोष-तोष-प्रभृतिभिररिभिर्निजैः परिष्वङ्गः ।
युक्तायुक्तञ्च समं युक्तिवियुक्तेन मद्येन ॥ ३९ ॥
बल-काल-देश-सात्म्य-प्रकृति-सहायामय-वयांसि ।
प्रविभज्य तदनुरूपं यदि पिबति ततः पिबत्यमृतम् ॥४०॥

इत्यष्टाङ्गहृदये निदानस्थाने षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अथातोऽर्शसां निदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
अरिवत् प्राणिनो मांस-कीलका विशसन्ति यत् ।
अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधतः ॥ २ ॥
दोषास्त्वङ्-मांस-मेदांसि संदूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ ३ ॥

---

इदानीं मदात्ययनिदानत्वान्मद्यस्य मद्येनैवोपसंहारं कुर्वन्नाह,—मदेति । युक्तिवियुक्तेन मद्येन मदादिभिर्निजैः शत्रुभिर्दृष्टादृष्टविनाशकारिभिः परिष्वङ्गोऽतिसंश्लेषो भवति । न केवलं मद्येन मदाद्यतिसङ्गो यावत् युक्तायुक्तं समं तुल्यं सम्पद्यते । युक्तमनुष्ठेयमयुक्तमननुष्ठेयम् । तदुभयं समानं जायते । यतश्चैवं ततो मद्यपाने युक्तिर्गरीयस्त्वम् । युक्तिश्च प्रागेव दर्शिता । आर्या । द्वितीयदलभवलक्ष्मप्रतिनियतमवगम्य । उभयत्राप्युपगीतिं वदन्ति यत्यंशकैर्गदितैः ॥ ३९ ॥

पुनरपि युक्तिं प्रदर्शयन्नाह,—बलेति । बलकालादीन् प्रविभज्य बुद्ध्या विमृश्य तदनुरूपं तद्योग्यं यदि पिबति ततोऽमृतं पिबति । मद्यव्याजेनामृतमास्वादयतीत्यर्थः ॥ आर्या ॥ ४० ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तपुत्रविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां मदात्ययनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

मदात्ययनिदानानन्तरमर्शोनिदानारम्भो युक्तः । यतोऽरिभिर्निजैः परिष्वङ्ग इत्युक्तम् । अर्शांसि रिपुसदृशानीति च वक्ष्यति । तस्मादर्शोनिदानं प्रक्रम्यते । व्याख्या पूर्ववत् ॥१॥

अरिवदिति । अनेन सर्व्वेषामप्यर्शसां गुदमेढ्रादिजानां सामान्येन सम्प्राप्तप्राकृती निरूपयति । दोषा वातादयः त्वङ्मांसमेदांसि दूषयित्वा अपानादौ यन्मांसाङ्कुरान्

सहजन्मोत्तरोत्थान-भेदाद् द्वेधा समासतः ।
शुष्क-स्रावि-विभेदाच्च गुदस्थूलान्त्रसंश्रयः ॥ ४ ॥
अर्द्धपञ्चाङ्गुलस्तस्मिंस्तिस्रोऽध्यर्द्धाङ्गुलाः स्थिताः ।
वल्यः प्रवाहिणी तासामन्तर्मध्ये विसर्जनी ॥ ५ ॥
बाह्या संवरणी तस्या गुदोष्ठो बहिरङ्गुले ।
यवाध्यर्द्धप्रमाणेन रोमाण्यत्र ततः परम् ॥ ६ ॥
तत्र हेतुः सहोत्थानां बलीबीजोपतप्तता ।
अर्शसां बीजतप्तिस्तु मातापित्रपचारतः ॥ ७ ॥
दैवाच्च ताभ्यां कोपो हि सन्निपातस्य नान्यतः ।

---

कुर्वन्ति तानर्शांसि जगुस्तल्लक्षत इति शेषः । आदिशब्देन कर्णनासादीनां ग्रहणम् । किम्भूतान् मांसाङ्कुरान् ? विविधाकृतीन् नानासंस्थानान् ॥ २ । ३ ॥

तानि च समासतः सङ्क्षेपतो द्विधा द्विप्रकाराणि । कथमित्याह,—सहेत्यादि । सह जन्मना सहजन्म च उत्तरञ्च सहजन्मोत्तरे तयोरुत्थानं सहजन्मोत्तरोत्थानं तेन भेदो विशेषस्तस्मात् । कानिचिच्छरीरेण सह जातानि कानिचित् जन्मोत्तरभावीनि, तथा शुष्क-स्रावि-विभेदाच्च द्विधा । कानिचित् शुष्काणि कानिचित् स्रावीणि । अपानादावित्युक्तं, अतस्तदेव गुदापरपर्यायं लक्षयति,—गुदेति । स्थूलान्त्रं संश्रय आश्रयो यस्य स एवंविधो गुदः । स्थूलं यदन्त्रं तत्र प्रतिबद्ध इत्यर्थः । किम्प्रमाणोऽसौ ? अर्द्धपञ्चाङ्गुलः । अर्द्धेनोनानि पञ्च अर्द्धपञ्च । शाकपार्थिवादित्वात् समासः । अर्द्धपञ्च अङ्गुलानि यस्य सोऽर्द्धपञ्चाङ्गुलः साद्धचतुरङ्गुलपरिमाणः । तस्मिन् गुदे तिस्रो वल्यस्त्रिसंख्याः स्थिताः । किंपरिमाणाः ? अध्यर्द्धाङ्गुलाः । अधिकमर्द्धमङ्गुलं प्रत्येकं परिमाणं यासां ता एवम् । अथ तासां तिसृणामर्थानुगतानि नामान्याह, तत्र मलप्रवाहणादन्तरन्ते स्थिता वली प्रवाहिणीति कथ्यते । मध्ये मध्यस्थिता वली मलस्य प्रवहतो बहिर्विसर्ज्जनाद् विसर्ज्जनीति भण्यते । गुदस्य बाह्ये स्थिता मलस्य सम्बरणात् सम्बरणीत्युच्यते । तस्याः सम्बरणीसंज्ञाया बलेरङ्गुले तत्परिमाणे वहिर्बाह्ये गुदौष्ठः स्थितः । प्रमाणेन परिमाणतो गुदौष्ठोऽध्यर्द्धो यवः सार्द्धयवप्रमाणः । ततो गुदौष्ठात् परं परतो रोमाण्यत्र गुदे जायन्ते ॥ ४—६ ॥

तत्र हेतुरिति । तत्रेति निर्द्धारणे । सहजोत्तरकालभाविष्वर्शःसु मध्ये सहोत्थानामर्शसां बलीबीजोपतप्तता । वल्याः सम्बन्धि बीजं शुक्रार्त्तवांशो यस्मात् सा बली उत्पद्यते । उपतप्तस्य भाव उपतप्तता । अर्शोविकारकरणसमर्थैर्वातपित्तकफैः पीड़नं बलीबीजस्योपतप्ततोच्यते । सा च बीजोपतप्तिर्बीजोपतापो मातापित्रपचारतः । माता च पिता च तौ, तयोरपचारोऽपराध आहारविहारादिकृतस्तस्मात् । तथा दैवात् प्राक्कृतादशुभकर्म्मणो बीजोपतप्तिः, ताभ्यां मातापित्रपचारदैवाभ्यां यस्मात् सन्नि-

असाध्यान्येवमाख्याताः सर्वे रोगाः कुलोद्भवाः ॥ ८ ॥
सहजानि विशेषेण रूक्षदुर्दर्शनानि च ।
अन्तर्मुखानि पाण्डूनि दारुणोपद्रवानि च ॥ ९ ॥
षोढान्यानि पृथग्-दोष-संसर्ग-निचयाऽस्रतः ॥ १० ॥
शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः ॥ ११ ॥
दोषप्रकोपहेतुस्तु प्रागुक्तस्तेन सादिते ।
अग्नौ मलेऽतिनिचिते पुनश्चातिव्यवायतः ॥ १२ ॥
यानसंक्षोभविषम-कठिनोत्कटकासनात् ।
बस्तिनेत्राश्मलोष्टोर्वी-तलचैलादिघट्टनात् ॥ १३ ॥
भृशं शीताम्बु संस्पर्शात् प्रततातिप्रवाहणात् ।
वातमूत्रशकृद्वेग-धारणात्तदुदीरणात् ॥ १४ ॥
ज्वरगुल्मातिसाराम-ग्रहणी-शोफ-पाण्डुभिः ।
कर्शनाद्विषमाभ्यस्य चेष्टाभ्यो योषितां पुनः ॥ १५ ॥

---

पातस्य कोपस्तस्मात् तान्यर्शांस्यसाध्यानि । एवमनेन पूर्वोक्तेन मार्गेण प्राणिनां सर्वे रोगाः कुलोद्भवा आख्याता बीजोपतप्तत्वादसाध्या इत्यर्थः ॥ ७ । ८ ॥

सहजानीति । सहजान्यर्शांसि विशेषेण रूक्षादिगुणयुतानि भवन्ति । विशेषेणेत्यनेनैतद् द्योतयति, उत्तरजातान्यप्येवम्भूतानि भवन्तीति ॥ ९ ॥

षोढेति । अन्यान्युत्तरजातान्यर्शांसि षट्प्रकाराणि पृथग्दोषैर्वातपित्तकफैस्त्रीणि, तथा संसर्गेणैकं, तथा निचयेन, तथा रक्तेनेति षट्कम् । षोढाशब्दः पृषोदरादिः ॥ १० ॥

शुष्कानीति । शुष्क-स्रावि-विभेदाच्च द्विधेत्युक्तं ; तत्र शुष्काणि प्रायेण वातकफाभ्यां व्यस्तसमस्ताभ्यां, यानि त्वार्द्राणि तान्यस्रपित्ततस्तथैव व्यस्तसमस्ताभ्यां भवन्ति ॥ ११ ॥

दोषेत्यादि । पूर्वं सर्वरोगनिदाने दोषप्रकोपहेतुर्दर्शितस्तेन दोषप्रकोपकारणेन वह्नौ सादिते मन्दत्वं गमिते । अग्निमान्द्यादाहारः सम्यक्पाकमगच्छन् भूयसा मलत्वेनैव सम्पद्यते । अत इदमाह, मलेऽतिनिचिते । मले पुरीषाख्ये अतिनिचिते प्रवृद्धे मांसाङ्कुरजननयोग्यवायुरपानाख्यः पायुसम्बन्धिनीषु वलीषु तं मलं निचितं धत्ते । तद्देशे मलस्यातिसम्पर्कात् ता वलयोऽभिष्यन्नमूर्त्तयः प्रक्लिन्नदेहाः सम्पद्यन्ते तासु चाभिष्यन्नमूर्त्तिष्वर्शांसि जायन्ते । इत्युत्तरकालजानामर्शसां सम्प्राप्तिः । तथा च केन वायुः कुपितो मलं धत्त इत्याह,—पुनश्चातिव्यवायत इत्यादि । पुनरितिनिर्देशात् पूर्वोक्तेन हेतुना वायुः कुपितः, तथा अतिव्यवायादिभिः कुपित इति गमयति । बस्त्यादीनां घट्टनेन सम्बन्धः । प्रततातिप्रवाहणेन दोषादिवेगानां प्रवर्त्तनम् । वातमूत्रशकृतामुदीरणमिहोक्तमिति प्रवाहोदीरणयोर्द्वयोरुपादानम् । ज्वरादिभिः कर्शणादिति

आमगर्भप्रपतनाद् गर्भवृद्धिप्रपीड़नात् ।
इत्थैश्चापरैर्वायुरपानः कुपितो मलम् ॥ १६ ॥
पायोर्वलीषु संधत्ते तास्वभिष्यन्नमूर्त्तिषु ।
जायन्तेऽर्शांसि तत्पूर्व-लक्षणं मन्दवह्निता ॥ १७ ॥
विष्टम्भः सक्थिसदनं पिण्डिकोद्वेष्टनं भ्रमः ।
सादोऽङ्गे नेत्रयोः शोफः शकृद्भेदोऽथवा ग्रहः ॥ १८ ॥
मारुतः प्रचुरो मूढ़ः प्रायो नाभेरधश्चरन् ।
सरुक् सपरिकर्त्तश्च कृच्छ्रान्निर्गच्छति स्वनन् ॥ १९ ॥
अन्त्रकूजनमाटोपः क्षामतोद्गारभूरिता ।
प्रभूतं मूत्रमल्पा विट् श्रद्धा वै धूमकोऽम्लकः ॥ २० ॥
शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्णता ।
तथेन्द्रियाणां दौर्बल्यं क्रोधो दुःखोपचारता ॥ २१ ॥
आशङ्का ग्रहणीदोष-पाण्डु-गुल्मोदरेषु च ।
एतान्येव विवर्द्धन्ते जातेषु हतनामसु ॥ २२ ॥
निवर्त्तमानोऽपानो हि तैरधोमार्गरोधतः ।
क्षोभयन्ननिलानन्यान् सर्वेन्द्रियशरीरगान् ॥ २३ ॥

---

योज्यम् । विषमाभ्यश्च चेष्टाभ्य इति । साहसादिपादचरणादिकाभ्यः । योषितां पुनरिति पुनःशब्देन पूर्वोक्तेभ्यः प्रकारेभ्य प्रकारान्तरमामगर्भप्रपतनादि गृह्यते । ईदृशैरपरैरप्यनिर्दिष्टैरिह तत्प्रकोपहेतुभिर्वायुः कुपित इति योज्यम् । तदिति । तेषामर्शसां पूर्वलक्षणं तत्पूर्वलक्षणं मन्दवह्नितेत्यादिकं शकृद्ग्रहपर्यन्तम् । अत्र पूर्वलक्षणमध्ये शकृद्भेदोऽथवा ग्रह इति निर्दिष्टम् । कस्यचित् पुरुषस्योत्पित्सुष्वर्शःसु भिन्नवर्चस्त्वं कस्यचिद् बद्धवर्चस्त्वमित्यथवाशब्दस्यार्थः । मारुत इति सामर्थ्यादपानाख्यः प्रायो भूयिष्ठं कृत्वा नाभेरधश्चरन् गच्छन् प्रचुरो भवति, तथा मूढ़ इव मूढ़ः क्रियात्मकतां हित्वैव वर्त्तमानः, तथा सरुक् सशूलः, तथा सह परिकर्त्तेन वर्त्तते सपरिकर्त्तश्छिंदन्निव कृच्छ्रान्निर्गच्छति स्वनन् शब्दायमानः, तथा अन्त्रकूजनादिकं भवति, तथा च ग्रहणीदोषादिष्वाशङ्का भवति ॥ १२—२१ ॥

एतान्येवेति । एतान्येव ग्रहणीदोषादीनि हतनामस्वर्शःसु जातेषु विवर्द्धते वृद्धिमाप्नुवन्ति ॥ २२ ॥

निवर्त्तमान इति । तैरर्शोभिरधोमार्गरोधादपानो निवर्त्तमान ऊर्ध्वं प्रवृत्तः सर्वाननिलान् समानोदान-व्यान-प्राणान् सर्वेन्द्रियशरीरगान् प्रत्याहरणरूपतया क्षोभयन्

तथा मूत्र-शकृत्-पित्त-कफान् धातूंश्च साशयान् ।
मृद्नात्यग्निं ततः सर्वो भवति प्रायशोऽर्शसः ॥ २४ ॥
कृशो भृशं हतोत्साहो दीनः क्षामोऽतिनिष्प्रभः * ।
असारो विगतच्छायो जन्तुजुष्ट इव द्रुमः ॥ २५ ॥
कृत्स्नैरुपद्रवैर्ग्रस्तो यथोक्तैर्मर्म्मपीड़नैः ।
तथा कासपिपासास्य-वैरस्य-श्वास-पीनसैः ॥ २६ ॥
क्लमाऽङ्गभङ्ग-वमथु-क्षवथु-श्वयथु-ज्वरैः ।
क्लैब्य-बाधिर्य-तैमिर्य-शर्कराश्मरि-पीड़ितः ॥ २७ ॥
क्षामभिन्नस्वरो ध्यायन् मुहुः ष्ठीवन्नरोचकी ।
सर्व्वपर्वास्थि-हृन्नाभि-पायु-वंक्षण-शूलवान् ॥ २८ ॥
गुदेन स्रवता पिच्छां पुलाकोदकसन्निभाम् ।
विबद्धमुक्तं शुष्कार्द्रं पक्वामं चान्तरान्तरा ॥
पाण्डु पीतं हरिद्रक्तं पिच्छिलं चोपवेश्यते ॥ २९ ॥
गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धा विषमाः परुषाः खराः ॥३०॥

---

संरंभान् कुर्वन्, तथा मूत्रादीन्, तथा धातून् रसादींश्च साशयान् सहाधारेण वर्त्तमानान् क्षोभयन् अग्निं मृद्नाति मन्दीकरोति । ततोऽग्निमर्दनादिकात् कारणात् प्रायेणाऽर्शसी दुर्नामवान् कृशादिकः स्यात । अर्शस इत्यत्रार्श आदित्वादच् । विगतच्छायो द्रुमो जन्तुजुष्टः पत्रौघविरहाद्यथा छायारहितस्तथैवार्शसः शोभारहित इति श्लेषोपमालङ्कारः । तथेति । न केवलं पूर्वोक्तैरुपद्रवैर्ग्रस्तः कासादिभिरपीत्यर्थः । क्लैब्येत्यादि । अश्मरि-पीडित इत्यत्र ङ्यापोरित्यादिना बहुलवचनात् ह्रस्वः । अथवा अश्मनिपीड़ित इति पाठः । क्षामो भिन्नश्च स्वरो यस्य स एवम्, तथा ध्यायंश्चिन्ताव्याप्तः, तथा निष्ठीवनादिभिर्युतः, तथा गुदेन पिच्छां पुलाकोदकसन्निभां स्रवता विबद्धादिकमुपवेश्यते । अप्राप्तपाकं धान्यं पुलाकशब्दवाच्यम् । आगमः । धान्यं पुलाको निष्पन्नमिति । अथवा पुलाकः कुत्सितं धान्यं तस्योदकेन तुल्यम् । अन्ये तु यवगोधूमादिस्वेदः पुलाकोदकमित्याहुः । तेन तुल्यम् । विबद्धमुक्तमिति कदाचिदुदावृत्तं कदाचिदनुवृत्तं भवति ॥ २३—२९ ॥

वातार्शसां लक्षणमाह,—गुदाङ्कुरा इति । वाताधिका गुदजाः शुष्कादिगुणयुक्ताः । विषमा विषमसंस्थाना ऊर्ध्वाधस्तिर्यगादिदुःसंस्थिताः । परुषाः शाकपत्रादि-

---

* अतिनिष्प्रह इति वा पाठः ।

मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ।
बिम्बी-कर्कन्धु-खर्जूर-कार्पासीफल-सन्निभाः ॥ ३१ ॥
केचित् कदम्बपुष्पाभाः केचित् सिद्धार्थकोपमाः ।
शिरःपार्श्वांसकट्यूरु-वंक्षणाभ्यधिकव्यथाः ॥ ३२ ॥
क्षवथूद्गार-विष्टम्भ-हृद्ग्रहाऽरोचकप्रदाः ।
कास-श्वासाग्नि-वैषम्य-कर्णनाद-भ्रमावहाः ॥ ३३ ॥
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेन-पिच्छानुगतं विबद्धमुपवेश्यते ॥ ३४ ॥
कृष्णत्वङ्-नख-विण्-मूत्र-नेत्र-वक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठीला-सम्भवस्तत एव च ॥ ३५ ॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ॥ ३६ ॥
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ।
शुकजिह्वा-यकृत्खण्ड-जलौका-वक्त्र-सन्निभाः ॥ ३७ ॥
दाह-पाक-ज्वर-स्वेद-तृण्-मूर्च्छारुचि-मोहदाः ।
सोष्माणो द्रवनीलोष्ण-पीतरक्तामवर्चसः ।
यवमध्या हरित्पीत-हारिद्रत्वङ्नखादयः ॥ ३८ ॥
श्लेष्मोल्बणा महामूला घना मन्दरुजाः सिताः ।

---

तुल्यस्पर्शाः । मिथो विसदृशाः परस्परमतुल्यसन्निवेशाः वक्राः धनुष्कोट्यादिवत् ; तथा तीक्ष्णा दर्भाङ्कुरवत् । विस्फुटितं केसरादिवदाननं येषां त एवम् । बिम्बाद्यनेकोपमानोपादानं तेषां विचित्ररूपदर्शनार्थम् । शिरादिष्वधिकव्यथाः, तथा क्षवथ्वादिप्रदाः, तथा कासादिकृतः, तैरार्त्तः पीड़ितो ग्रथितादिकमुपवेश्यते । कृष्णत्वगादिश्च स्यात् । तत एव गुदाङ्कुरेभ्यो गुल्मादिसम्भवः ॥ २०—३५ ॥

पित्तोत्तरेति । पित्तार्शसां नीलमुखा इत्यादिलक्षणं हारिद्रत्वङ्नखादय इतिपर्य्यन्तम् । तन्वच्छं अस्रं रक्तं नित्यं स्रवन्तीत्यभिप्रायिणः । तथा तनवो न घनाः श्लेष्मगुदाङ्कुरवत् ; मृदवः शिरीषपुष्पादिवत् ; श्लथाः स्विन्नमांसादिवत् । शुकजिह्वेत्यादि बहूपमानत्वं पूर्ववत् संस्थानवर्णवैचित्र्यार्थम् । द्रवादीनां वर्चसा सम्बन्धः । यवमध्या यवमध्यसंस्थानाः ; हरितो दूर्वावर्णाः । पीता हारिद्राश्च त्वगादयो येषु त एवं । आदिशब्देन नयनविण्मूत्रादयो गृह्यन्ते ॥ ३६—३८ ॥

उच्छूनोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥ ३९ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ ४० ॥
वंक्षणानाहिनः पायु-बस्ति-नाभि-विकर्त्तिनः ।
सकास-श्वास-हृल्लास-प्रसेकारुचि-पीनसाः ॥ ४१ ॥
मेहकृच्छ्रशिरोजाड्य-शिशिरज्वरकारिणः ।
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ॥ ४२ ॥
वसाभाः सकफप्राज्य-पुरीषाः सप्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥ ४३ ॥
संसृष्टलिङ्गाः संसर्गात् निचयात् सर्वलक्षणाः ॥ ४४ ॥
रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः ।
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ॥ ४५ ॥
तेऽत्यर्थं दुष्टमुष्णञ्च गाढविट्प्रतिपीड़िताः ।
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ४६ ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ।
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ ४७ ॥
मुद्ग-कोद्रव-जूर्णाह्व-करीर-चणकादिभिः ।

---

श्लेष्मोल्बणेति । श्लेष्मार्शसां महामूलादिकं लक्षणं पाण्डुस्निग्धत्वगाद्यन्तम् । वह्निनिला इत्यनेन पित्तोल्बणा इत्यनेन च निर्देशेन सर्वेषामर्शसां त्रिदोषजत्वं द्योतयति ; तेन सर्वाण्यर्शांसि त्रिदोषजानि भूयसा तु व्यपदेश इति वेद्यम् ॥ ३९—४३ ॥

संसर्गाद्गुदाङ्कुराः संसृष्टलिङ्गाः संसृष्टरूपाः स्युः । निचयादिति । निचयात् सन्निपातात् सर्वलक्षणा दोषत्रयलक्षणयुताः ॥ ४४ ॥

रक्तोल्बणेति । रक्तोल्बणा रक्ताधिका गुदे कीलाः पित्तस्याकृत्या लक्षणेन समन्विता इत्यादिकं कलुषेन्द्रिया इति यावदेषां लक्षणं बोध्यम् । गुदाङ्कुरा इति प्रकृतेऽपि गुदे कीला इत्युक्तं वैचित्र्यार्थम् । ते च गुदे कीला अतिदुष्टमुष्णञ्च सहसा अचिन्तितमेव शूलादिलिङ्गं रक्तं स्रवन्ति । गाढविट्प्रतिपीड़िताः सन्तोऽस्य च रक्तस्यातिप्रवृत्तितो भेकाभो भवति । चोऽवधारणे । तस्यैव रक्तस्यातिप्रवर्त्तनान्मण्डूकाभः स्यात् न कारणान्तरेणेत्यर्थः । शोणितक्षयसम्भवैर्दुःखं रोगैः पीड्यते । "रक्तेऽम्लशिशिरप्रीतिः सिराशैथिल्यरूक्षता" इति रक्तक्षयजा उक्ताः । तथा हीनवर्णबलोत्साहादि स्यात् ॥ ४५—४७ ॥

रूक्षः संग्राहिभिर्वायुः स्वस्थाने कुपितो बली ॥ ४८ ॥
अधोवहानि स्रोतांसि संरुध्याऽधः प्रशोषयन्।
पुरीषं वात-विण्-मूत्र-सङ्गं कुर्वीत दारुणम् ॥ ४९ ॥
तेन तीव्रा रुजा कोष्ठ-पृष्ठ-हृत्-पार्श्वगा भवेत्।
आध्मानमुदरावेष्टो हृल्लासः परिकर्त्तनम् ॥ ५० ॥
बस्तौ च सुतरां शूलं गण्डश्वयथुसम्भवः।
पवनस्योर्द्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः ॥ ५१ ॥
हृद्रोग-ग्रहणीदोष-मूत्रसङ्ग-प्रवाहिकाः।
बाधिर्यतिमिर-श्वास-शिरोरुक्-कास-पीनसाः ॥ ५२ ॥
मनोविकारस्तृष्णास्र-पित्तगुल्मोदरादयः।
ते ते च वातजा रोगा जायन्ते भृशदारुणाः ॥ ५३ ॥
दुर्नाम्नामित्युदावर्त्तः परमोऽयमुपद्रवः।
वाताभिभूतकोष्ठानां तैर्विनापि स जायते ॥ ५४ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ।
स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः ॥ ५५ ॥

---

मुद्गेति। आदिशब्देन मसूरादीनां ग्रहणम्। मुद्गादिभी रूक्षैः संग्राहिभिर्वायुरपानाख्यः स्वस्थाने बस्त्यादिलक्षणे कुपितोऽतएव बलवान् स्वस्थाने कुपितो बली स्यात्। बली पवनो वा वातादिसङ्गं कुर्व्वीत। किं कृत्वा? अधोवहानि स्रोतांसि संरुध्य। किं कुर्वन्? अधः पुरीषं प्रशोषयन्। तेन वातविण्मूत्रसङ्गेन हेतुना तेन वा तथाविधेन वायुकोपेन तीव्रा दारुणा पीड़ा कोष्ठादिगा भवेत्। तथा आध्मानादयः स्युः परिकर्त्तनञ्च। बस्तौ चेति चशब्दो भिन्नक्रमः, शूलञ्चेत्यर्थः। गण्डयोः श्वयथुर्गण्डश्वयथुस्तस्य सम्भवः। पवनस्य प्रकृतत्वादपानाख्यस्योर्ध्वगामित्वं स्यात्। तत ऊर्ध्वगमनात् छर्द्यादयः स्युः। तैरेव वातजा रोगा अनेके नखभेदादयो भृशदारुणा अतिदुःखावहा जायन्ते। दुर्नाम्नामित्येवं पूर्वोक्तेन प्रकारेणायं उदावर्त्तः परमो महानुपद्रवः स्मृतो मुनीन्द्रैरिति शेषः। वातेत्यादि। वातेनाभिभूतो व्याप्तः कोष्ठो येषां त एवं तेषां दुर्नामभिर्विनापि स उदावर्त्तो जायते न केवलमेतैरित्यपिशब्दार्थः ॥ ४८—५४ ॥

अधुना साध्यासाध्यविभागमेषामाह,—सहजानीति। सहजान्यर्शांसि तथा त्रिदोषजानि यथोत्तरकालजानि अभ्यन्तरे वलयो यानि स्थितानि एकदोषजद्विदोषजानि तान्यप्यसाध्यानि। वलिशब्दः पुंस्त्रीलिङ्गः। अर्शसामसाध्यानां किं कार्यमित्याह,—याप्यन्ते इत्यादि। अग्निबलमादि येषां त एवं तैर्याप्यन्ते। अग्निबलेऽक्षीणे आयुषि च पादसम्पदि चेत्यर्थः ॥ ५५ ॥

द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च॥ ५६ ॥
बाह्यायान्तु वलौ जातान्येकदोषोल्बणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च॥ ५७॥
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च॥ ५८॥
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः।
कीलोपमं स्थिरखरं चर्मकीलन्तु तं विदुः॥ ५९॥
वातेन तोदः पारुष्यं पित्तादसितरक्तता।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता॥ ६०॥
अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान्।
तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम्॥ ६१॥
इत्यष्टाङ्गहृदये निदानस्थाने सप्तमोऽध्यायः॥ ७॥

---

द्वन्द्वजानीति। द्वन्द्वजानि सङ्करोत्पन्नानि यानि च द्वितीयायां वली संश्रितानि तानि कृच्छ्रसाध्यान्याहुर्मुनय इति शेषः। तथा परिसंवत्सराणि परिगतानि संवत्सरं परिसंवत्सराणि। प्रादिसमासः। वर्षातिक्रान्तानीत्यर्थः॥ ५६॥

बाह्यायामिति। बाह्यायां वलौ जातानि यानि तथैकदोषोल्बणानि च तथा न चिरोत्पतितानि संवत्सरादर्वाग्जातानि च सुखसाध्यानि॥ ५७॥

मेढ्रादिष्विति। मेढ्रभगनासाकर्णादिषु चार्शांसि वक्ष्यन्ते। यथास्वं स्त्रीयेऽध्याये गुह्यरोगविज्ञाने नासारोगविज्ञाने कर्णरोगविज्ञानादौ चेति। नाभिजानि तु नाभौ जातानि। पुनर्गण्डूपदास्यरूपाणि गण्डूपदानां किंचुलुकानामास्यं तदिव रूपं येषां तान्येवम्। पिच्छिलानि पिच्छावन्ति तथा मृदूनि च भवन्ति॥ ५८॥

चर्मकीलान्याह,—व्यान इति। व्यानाख्यो वायुः श्लेष्माणं गृहीत्वाऽर्शः करोति। क्व? त्वचोबहिर्बाह्यप्रदेशे। किम्भूतम्? कीलोपमं तथा स्थिरं खरञ्च। तच्च श्लेष्माङ्कुरं चर्मकीलं विदुर्मुनय इति शेषः॥ ५९॥

वातेनेति। वातेनाधिकेन तोदपारुष्ये भवतः। पित्तादसितरक्तता भवति। श्लेष्मणा तस्य चर्मकीलस्य स्निग्धतादिकं स्यात्। ग्रथितत्वं ग्रन्थिसदृशत्वम्। सवर्णता प्रकृतशरीरतुल्यवर्णता॥ ६०॥

अर्शसामिति। अर्शसां प्रशमे शान्तौ सुमतिः शीघ्रं यत्नं कुर्वीत। किमितिचेत्याह,—तानीत्यादि। यस्मात्तान्यर्शांसि गुदं बद्ध्वा निरुद्ध्य बद्धगुदोदरं शीघ्रं कुर्युरिति॥६१॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थानेऽर्शसां निदानं नाम सप्तमोऽध्यायः॥ ७॥

## अष्टमोऽध्यायः ।

अथातोऽतीसार-ग्रहणीरोगयोर्निदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड् विधः ।
अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ।
कृश-शुष्कामिषासात्म्य-तिल-पिष्ट-विरूढ़कैः ॥ २ ॥
मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ।
कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ॥ ३ ॥
विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ।
व्यापद्यानुशकृत्कोष्ठं पुरीषं द्रवतां नयन् ॥ ४ ॥
प्रकल्पतेऽतिसाराय लक्षणं तस्य भाविनः ।
तोदो हृद्-गुद-कोष्ठेषु गात्रसादो मलग्रहः ॥ ५ ॥
आध्मानमविपाकश्च तत्र वातेन विज्जलम् ।
अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ॥ ६ ॥
रूक्षं सफेनमच्छञ्च ग्रथितं वा मुहुर्मुहुः ।
तथा दग्धगुड़ाभासं सपिच्छापरिकर्त्तिकम् ।

---

अर्शोनिदानानन्तरमतिसारग्रहणीरोगनिदानारम्भः । यतो वक्ष्यति,—"अर्शोऽतिसारग्रहणीविकाराः प्रायेण चान्योन्यनिदानभूता" इति । तस्मादतिसारग्रहणीरोगनिदानं प्रक्रम्यत इत्याह,—अथात इति । पूर्ववद्व्याख्या ॥ १ ॥

दोषैरिति । दोषैर्व्यस्तैः पृथग्वातपित्तकफैः समस्तैः सन्निपातेन तथा भयाच्छोकाच्चेति षड्विधोऽतीसारः । स च सुतरामत्यम्बुपानाज्जायते । कृशशुष्कामिषादिभिस्तथा स्नेहविभ्रमः स्नेहव्यापत्तिस्तद्विधैर्वातप्रकोपहेतुभिरिहानुक्तैरप्यनिलः कुपितोऽब्धातुं शरीरगतमधो विस्रंसयत्यधस्तान्नयति । तेनैवाऽब्धातुनाऽनलं जठराग्निं हत्वा मन्दत्वं नीत्वा तथा कोष्ठं व्यापद्य शून्यतां कोष्ठस्य कारयित्वाऽनुशकृच्छकृतः समीपे नतु सर्वं कोष्ठं पुरीषञ्च तेनैव धातुना द्रवतां नयन् प्रापयन्नतीसाराय कल्पते सम्पद्यते । अनिल इति योज्यम् । आध्मानमिति । तस्यातिसारस्य भाविनो भविष्यतो लक्षणं तोदो हृदादिषु गात्रसादादि च । [illegible] वातेनातिसारे विज्जलादिकं

शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन् * ॥ ७ ॥
पित्तेन पीतमसितं हारितं शाद्वलप्रभम् ।
सरक्तमतिदुर्गन्धं तृण्मूर्च्छास्वेददाहवान् ॥ ८ ॥
सशूलपायुसन्तापं पाकवान् श्लेष्मणा घनम् ।
पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥ ९ ॥
अभीक्ष्णं गुरु दुर्गन्धं विबद्धमनुबद्धरुक् ।
निद्रालुरलसोऽन्नद्विडल्पाल्पं सप्रवाहिकम् ॥ १० ॥
सरोमहर्षः सोत्क्लेशो गुरुबस्तिगुदोदरः ।
कृतेऽप्यकृतसंज्ञश्च सर्वात्मा सर्वलक्षणः ॥ ११ ॥
भयेन क्षोभिते चित्ते सपित्तो द्रावयेच्छकृत् ।
वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवम् ।
वातपित्तसमं लिङ्गैराहुस्तद्वच्च शोकतः ॥ १२ ॥
अतीसारः समासेन द्विधा सामो निरामकः ।
सासृग्निरस्रस्तत्राद्ये गौरवादप्सु मज्जति ।
शकृद्दुर्गन्धिसाटोप-विष्टम्भार्तिप्रसेकिनः ॥ १३ ॥

---

शुष्कमुखादिको नर उपवेश्यते । किं कुर्वन्? विनिष्टनन् । कोऽर्थः विकुर्वन्नुपवेश्यते ॥ २—७ ॥

पित्तेनेति । पित्तेन तृडादिमान्नरः पीतादिकमुपवेश्यते । श्लेष्मणेति । श्लेष्मणा घनादिगुणमनुबद्धरुगन्तं निद्रालुत्वादिविशेषणो नरोऽल्पादिगुणं च उपवेश्यते । निद्रालुस्तथालसोऽन्नद्वेषी च स्तोकं स्तोकं सहप्रवाहिकं चोपवेश्यते । तथा सरोमहर्षादिकः स्यात् । तथा कृतेऽप्यकृतसंज्ञश्च । कृतेऽपि पुरीषोत्सर्गेऽकृतसंज्ञः कृतपुरीषोत्सर्ग इति संवेदना न भवति । सर्वात्मेति । सन्निपातेन सर्वात्मा सर्वदोषलिङ्गः । भयेनेति । भयेन चित्ते क्षोभिते सति पित्तसहितो वायुः शकृद्द्रावयेत् । ततोऽनन्तरमतिसार्येत क्षिप्रादिगुणयुक्तं लिङ्गैर्वातपित्ततुल्यम् । तद्वच्च भयेन तुल्यलिङ्गं शोकादतिसार्यते ॥ ८—१२ ॥

अतिसार इति । अतीसारः पीड़ा भवन् द्विप्रकारः संक्षेपेण । एकः सामो द्वितीयो निरामकः । तथा एकः सरक्तो द्वितीयो निरस्रः । तत्रेति । तत्रास्मिन्नाद्ये सामेऽतीसारे गौरवादप्सु पतितं पुरीषं मज्जति ब्रुडति दुर्गन्धं च स्यात् । आटोपादि-

---

* विनदन्वाक् इति वा पाठः ।

विपरीतो निरामस्तु कफात् पक्कोऽपि मज्जति ॥ १४ ॥
अतिसारेषु यो नाति-यत्नवान् ग्रहणीगदः ।
तस्य स्यादग्निविध्वंस-करैरत्यर्थसेवितैः ॥ १५ ॥
सामं शकृन्निरामं वा जीर्णं येनातिसार्यते ।
सोऽतिसारोऽतिसरणादाशुकारी स्वभावतः ॥ १६ ॥
सामं सान्नमजीर्णेऽन्ने जीर्णे पक्वन्तु नैव वा ।
अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ।
चिरकृद् ग्रहणीदोषः सञ्चयाच्चोपवेशयेत् ॥ १७ ॥
स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते ॥ १८ ॥
प्राग्रूपं तस्य सदनं चिरात् पचनमम्लकः ।
प्रसेको वक्त्रवैरस्यमरुचिस्तृट् क्लमो भ्रमः ।

---

युतस्य पुंसः, विपरीत इति । निरामो अतीसारोऽतो विपरीतोऽप्सु प्लवति । आटोपादिरहितस्य पुंसः कफात् पुनः स्वभावगुरुत्वात् पक्कोऽपि मज्जति ॥ १३ । १४ ॥

अथ ग्रहणीरोगं लक्षयति,—अतिसारेष्विति । अतिसारेषु योऽतियत्नवान्न भवति तस्य ग्रहणीगदो भवेदिति ग्रहण्यांनिदानम् । अन्यस्यानतिसारिणोऽग्निविध्वंसकरैर्वह्निमांद्यहेतुभिरन्नपानैः शीलितैर्ग्रहणीरोगः स्यात् ॥ १५ ॥

अतिसारग्रहणीरोगयोः समानाभासत्वात् को विशेष इत्याह,—साममिति । सामं पुरीषमथवा निरामं जीर्णे आहारे सति येन व्याधिनाऽतिसार्यतेऽत्यर्थं बहिर्निःसार्यते स व्याधिरतीसारः । अतिसरणाद्धेतोः । अतिसरणशब्दनिर्देशेन चास्यान्वर्थत्वं द्योतितम् । तदेवमतिसरणादतीसार इत्युच्यते । नन्वेवं सति यदा ग्रहणीदोषेऽप्यतिसरणं कथञ्चित् स्यात् तदा तस्याप्यतीसारत्वं स्यादित्याशङ्क्याह,—आशुकारीत्यादि । भावप्रधानोऽयं निर्देशः । हेतौ प्रथमा । स्वभावेनाशुकारित्वादतीसारो ग्रहणीदोषादन्य इत्यर्थः । ग्रहणीदोषो हि नाशुकारी ; किन्तर्हि ? चिरकारी । तथा चाह,—"चिरकृद्ग्रहणीदोषः" इति ॥ १६ ॥

अथ ग्रहणीदोषस्य स्वरूपं वर्णयन्नतीसाराद्भूयो भेदमाह,—साममिति । ग्रहणीदोषोऽजीर्णे अन्ने सामं कदाचित् सान्नं कदाचिज्जीर्णेऽन्ने पक्वं, तथा नैव वा अतिसार्यते । अकस्मात् कदाचिन्निमित्तमन्तरेणापि मुहुर्मुहुः पुनः पुनर्बद्धं कदाचिन्निमित्तं विना मुहुः शिथिलं सञ्चयादुपवेशयेदिति योज्यम् । अयन्तु ग्रहणीदोषश्चिरकृत् ॥ १७ ॥

स इति । स ग्रहणीदोषः पृथग्दोषैर्वातपित्तकफैः सन्निपातेन चेति चतुःप्रकारो जायते

आनद्धोदरता छर्दिः कर्णच्क्ष्वेडोऽन्त्रकूजनम् ॥ १९ ॥
सामान्यं लक्षणं कार्श्यं धूमकस्तमको ज्वरः ।
मूर्च्छा शिरोरुग् विष्टम्भः श्वयथुः करपादयोः ॥ २० ॥
तत्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ।
पार्श्वोरु-वङ्क्षण-ग्रीवा-रुजाऽभीक्ष्णं विसूचिका ॥ २१ ॥
रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकर्त्तिका ।
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ २२ ॥
वात-हृद्रोग-गुल्मार्शः-प्लीह-पाण्डुत्व-शङ्किता ।
चिराद् दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥
पुनः पुनः सृजेद्वर्चः पायुरुक्श्वासकासवान् ॥ २३ ॥
पित्तेन नीलं पीताभं पीताभः सृजति द्रवम् ।
पूत्यम्लोद्गार-हृत्-कण्ठ-दाहारुचि-तृड़र्दितः ॥ २४ ॥
श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः ।
आस्योपदेह-निष्ठीव-कास-हृल्लास-पीनसाः ॥ २५ ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणम् ॥ २६ ॥
भिन्नाम-श्लेष्म-संसृष्ट-गुरु-वर्चः-प्रवर्त्तनम् ।
अकृशस्यापि दौर्बल्यं सर्वजे सर्वसङ्करः ॥ २७ ॥
विभागेऽङ्गस्य ये चोक्ता विषमाद्यास्त्रयोऽग्नयः ।

---

प्राग्रूपमिति । तस्य ग्रहणीदोषस्य प्राग्रूपं सदनं चिरात् पचनादि च ॥ १९ ॥
सामान्यमिति । चतुर्विधस्यास्य ग्रहणीगदस्य सामान्यं लक्षणं कार्श्यादिकम् ॥२०॥
तत्रेत्यादि । तत्र तेषु चतुर्षु गदेषु मध्ये वातात्तालुशोषादि स्यात् ॥ २१—२३ ॥
पित्तेनेति । पित्तेन पीताभः सन् तथा पूत्यम्लोद्गाराद्यर्दितो नीलवर्णादिकं वर्चः सृजति ॥ २४ ॥

श्लेष्मणेति । श्लेष्मणा दुःखं कृच्छ्रेण अन्नं पचते, छर्द्यादि च स्यात् । तथा हृदयं स्त्यानं पिण्डितमिव मन्यते, जठरं निश्चलं गुरु च । उद्गारश्च दुष्टमधुरः स्यात् । सदनं शरीरस्य, स्त्रीष्वहर्षादि च स्यात् । सर्व्वज इति । सर्व्वजे सन्निपातजे सर्वेषां लक्षणानां सङ्करो मिश्रत्वं भवति ॥ २५—२७ ॥

तेऽपि स्वग्निर्ग्रहणीदोषाः समस्तु स्वास्थ्यकारणम् ॥ २८ ॥
वातव्याध्यश्मरी-कुष्ठ-मेहोदर-भगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ २९ ॥

इत्यष्टाङ्गहृदये निदानस्थाने अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथातो मूत्राघातनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
बस्ति-बस्तिशिरो-मेढ्र-कटी-वृषण-पायवः ।
एकसम्बन्धनाः प्रोक्ता गुदास्थिविवराश्रयाः ॥ २ ॥
अधोमुखोऽपि बस्तिर्हि मूत्रवाहिसिरामुखैः ।
पार्श्वेभ्यः पूर्य्यते सूक्ष्मैः स्यन्दमानैरनारतम् ॥ ३ ॥

---

विभागे यति । अङ्गस्य विभागे च ये विषमाद्या विषम-तीक्ष्ण-मन्दास्त्रयोऽग्नय उक्तास्तेऽपि ग्रहणीदोषाः स्युः । नन्वेवं सति सप्त ग्रहणीदोषा इति प्राप्नोति । मैवम्, मुख्या सम्प्राप्तिपूर्वरूपरूपनिर्द्देशादियुक्ताश्चत्वार एव ग्रहणीगदा ये तु विषमाद्यास्त्रयस्ते ग्रहणीरोगाभासा इति बोध्यम् । सम इति । समः पुनरग्निः स्वास्थ्यस्यारोग्यस्य कारणम् ॥ २८ ॥

वातेति । वातव्याध्यादयोऽष्टौ महारोगाः सुदुस्तरा विषमास्तस्मात् तेषु यत्नः काय इति ॥ २९ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां निदानस्थाने अतीसार-ग्रहणीरोगयोर्निदानं नामाष्टमोऽध्यायः ॥ ८ ॥

---

अतीसारग्रहणीरोगनिदानादनन्तरं मूत्राघातनिदानमेकसम्बन्धनत्वादुच्यत इत्याह, —अथात इति । बस्तीति । बस्त्यादीनां द्वन्द्वः । बस्त्यादय एकसम्बन्धनाः प्रोक्ताः । एकं सम्बन्धनं ग्रन्थनं येषां त एवम् । तदेवैकसम्बन्धनत्वमेषां प्रकटयति,—गुदेत्यादि गुदास्थिविवरमाश्रयो येषां त एवम् तत्राश्रिता इत्यर्थः ॥ १ । २ ॥

नन्वेव मूत्राश्रिता दोषा अवश्यं बस्तिं प्राप्य विकुर्वते । बस्तेश्चाधोमुखत्वात् मूत्रान्तः-प्रवेशो बस्तिमुखेन न सम्भाव्यते तस्मान्मूत्राघातानुत्पत्तिरेवेत्याशङ्क्याह,—अधोमुख इति । [illegible] । यद्यप्यधोमुखो बस्तिस्तथापि जलमध्य-

यैस्तैरेव प्रविश्यैनं दोषाः कुर्व्वन्ति विंशतिम् ।
मूत्राघातान् प्रमेहांश्च कृच्छ्रान्मर्मसमाश्रयान् ॥ ४ ॥
बस्तिवङ्क्षणमेढ्रार्त्ति-युक्तोऽल्पाल्पं मुहुर्मुहुः ।
मूत्रयेद्वातजे कृच्छ्रे पैत्ते पीतं सदाहरुक् ॥ ५ ॥
रक्तं वा कफजे बस्ति-मेढ्रगौरवशोफवान् ।
सपिच्छं सविबन्धञ्च सर्वैः सर्वात्मकं मलैः ॥ ६ ॥
यदा वायुर्मुखं बस्तेरावृत्य परिशोषयेत् ।
मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ॥ ७ ॥
सञ्जायतेऽश्मरी घोरा पित्ताद् गोरिव रोचना ।
श्लेष्माश्रया च सर्वा स्यादथास्याः पूर्वलक्षणम् ॥ ८ ॥
बस्त्याध्मानं तदासन्न-देशेषु परितोऽतिरुक् ।
मूत्रे बस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ ९ ॥

---

स्थिताधोमुखनवस्त्र(?)कुम्भवत् हि यस्मात् पार्श्वेभ्यो मूत्रवाहिसिरामुखैः स्रोतोद्वारैः सूक्ष्मैः प्रकृतत्वान्मूत्रं स्यन्दमानैः स्रवद्भिः अनारतमनवरतं यैरेव मूत्रस्रोतोद्वारैर्बस्तिः पूर्य्यते तैरेव मूत्रस्रोतोद्वारैः दोषा एनं बस्तिं प्रविश्य विंशतिमूत्राघातान् कुर्व्वन्ति तावतश्च प्रमेहान्। किम्भूतान्? बस्त्याख्यमर्मसमाश्रयान्। हेतौ द्वितीया। मर्मसमाश्रितत्वात् कृच्छ्रान् कृच्छ्रसाध्यान् ॥ ३ । ४ ॥

बस्तिवङ्क्षणेति। अत्र चत्वारो मूत्राघाता वात-पित्त-कफ-सन्निपातात्मकाः, तत्र वातजे कृच्छ्रे मूत्राघाते बस्त्याद्यर्त्तियुक्तः पुमानल्पाल्पं कृत्वा मुहुर्मुहुर्मूत्रयेत्। पैत्त इति। पैत्ते कृच्छ्रे पुमान् मूत्रं पीतं सदाहरुक् मूत्रयेत्, अथवा रक्तम्। कफज इति। कफजे कृच्छ्रे बस्तिमेढ्रगौरवशोफयुक्तः सन् सपिच्छं सविबन्धञ्च रुद्ध्वा मूत्रं मूत्रयेत्। सर्वैरिति। सर्वैस्त्रिभिर्दोषैः सन्निपतितैः जाते कृच्छ्रे सर्व्वात्मकं दोषत्रयलक्षणालिङ्गितं मूत्रं मूत्रयेत् ॥ ५ । ६ ॥

इदानीमश्मरीं लक्षयति,—यदेति। यदा यस्मिन् काले वायुः कुपितो बस्तेर्मुखमावृत्य रुद्ध्वा परिशोषयेत् मूत्रं केवलं कदाचित् सपित्तं कदाचित् सकफमथवा सशुक्रं मूत्रं तदा सञ्जायतेऽश्मरी क्रमाद् यथोत्तरं घोरा। मूत्राश्मरी घोरा, ततोऽपि घोरतरा पित्ताश्मरी, घोरतमा श्लेष्माश्मरी। ततो घोरा घोरतमा शुक्राश्मरीति क्रमशब्दस्यार्थः। वायुना पित्तं संशोष्य गोर्यथा रोचना सञ्जायते तथाऽश्मरीति। सर्वा चाश्मरी श्लेष्माश्रया श्लेष्मा आश्रय आधारो यस्याः सैवम्। कफमाश्रित्य सर्वाऽश्मरी स्यादित्यर्थः। अथेति। अथाऽनन्तरमस्याः पूर्व्वलक्षणं प्रागुपंबस्त्याध्मानादि ॥ ७—९ ॥

सामान्यलिङ्गं रुङ् नाभि-सेवनो-बस्ति-मूर्द्धसु ।
विशीर्णधारं मूत्रं स्यात्तया मार्गनिरोधने ॥ १० ॥
तद् व्यपायात् सुखं मेहेदच्छं गोमेदकोपमम् ।
तत्सङ्क्षोभात् क्षते सास्रमायासाच्चातिरुग्भवेत् ॥ ११ ॥
तत्र वाताद् भृशार्त्त्यार्त्तो दन्तान् खादति वेपते ।
मृद्नाति मेहनं नाभिं पीड़यत्यनिशं क्वणन् ॥
सानिलं मुञ्चति शकृन्मुहुर्मेहति विन्दुशः ।
श्यावा रूक्षाऽश्मरी चास्य स्याच्चिता कण्टकैरिव ॥ १२ ॥
पित्तेन दह्यते वस्तिः पच्यमान इवोष्मवान् ।
भल्लातकास्थिसंस्थाना रक्तपीतासिताऽश्मरी ॥ १३ ॥
वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ।
अश्मरी महती श्लक्ष्णा मधुवर्णाथवा सिता ॥ १४ ॥

---

सामान्यलिङ्गमिति । सामान्यलक्षणं नाभ्यादिषु रुक् भवति । तथाऽश्मर्यां मार्गनिरोधे सति मूत्रं विशीर्णधारं विच्छिन्नधारं भवेत् । तद्व्यपायादश्मर्यपगमान्नरः सुखमकृच्छ्रेण मेहेत् मूत्रं मुञ्चेत् । कीदृशम् ? अच्छं निर्म्मलम्, गोमेदकोपमम् । गोमेदको रत्नविशेष उपमा यस्य तदेवम् । तस्याः संक्षोभस्तत्संक्षोभो हस्त्यश्वादिनाऽनेकवेदनाप्रादुर्भावस्तस्मात् तत्संक्षोभाद्द यत् क्षतं भवति तस्मिन् क्षते सति सास्रं सलोहितं मेहेत् । आयासादध्वादिकृतादतिरुग् भवेत् ॥ १० । ११ ॥

तत्रेति । तत्र तास्वश्मरीषु मध्ये वाताद्द याऽश्मरी तस्यामुत्पन्नायां सत्यां पुमान् भृशार्त्त्यार्त्तोऽत्यन्तं पीड़या पीड़ितो दन्तान् खादति, तथा वेपते, कम्पते, मेहनं मेढ्रं मृद्नाति मलयति, नाभिञ्च हस्ताभ्यां पीड़यति । किं कुर्वन् ? अनिशमनवरतं क्वणन् नानाविधदुःखोद्भावकं शब्दं विदधत्, तथा सहानिलेन वातसहितं शकृत् मुञ्चति, तथा मुहुर्मेहति मूत्रं पुनः पुनः सृजति विन्दुशो विन्दुं विन्दुं कृत्वा । अस्य च नरस्याऽश्मरी श्यावा वर्णतस्तथा रूक्षा कण्टकैश्चितेव व्याप्ता भवेत् ॥ १२ ॥

पित्तेति । पित्तेन याऽश्मरी तया वस्तिर्दह्यते । पच्यमान इव उष्मवान् सन्तापयुक्तो भवति । सा चाश्मरी भल्लातकास्थिसंस्थाना तदाकारा स्यात् । तथा वर्णतो रक्तपीता, तथा असिता कृष्णच्छाया ॥ १३ ॥

वस्तिरिति । श्लेष्मणा जातायामश्मर्यां वस्तिर्निस्तुद्यत इव शीतलो गुरुश्च स्यात् । अश्मरी च महती स्थूला वातपित्तोत्थाभ्यां सकाशात् । तथा श्लक्ष्णा कोमला । मधुवर्णा माक्षिक[illegible] ॥ १४ ॥

एता भवन्ति बालानां तेषामेव च भूयसा ।
आश्रयोपचयाल्पत्वाद् ग्रहणाहरणे सुखाः ॥ १५ ॥
शुक्राश्मरी तु महतां जायते शुक्रधारणात् ॥
स्थानात् च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥ १६ ॥
शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ।
बस्तिरुक्कृच्छ्रमूत्रत्व-मुष्कश्वयथुकारिणी ॥ १७ ॥
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ।
पीड़िते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा ॥ १८ ॥
अणुशो वायुना भिन्ना स्यादस्मिन्ननुलोमगे ।
निरेति सह मूत्रेण प्रतिलोमे विबध्यते ॥ १९ ॥

---

एतास्तिस्रोऽश्मर्यो बालानामेव भवन्ति। तथा च तन्त्रान्तरे,—"तिस्रोऽश्मर्यो दिवास्वप्न-शीलनाध्यशन-शीतस्निग्ध-मधुराहार-प्रियत्वाद्बालानामेव भवन्तीति। तेषाञ्च बालानां जातास्ता भूयसा ग्रहणाहरणे सुखाः। ग्रहणं वड़िशादिना, आहरणं शस्त्रादिना, तस्मिन् सुखाः सुखोपायाः। अत्रैव हेतुमाह,—आश्रयेत्यादि। आश्रय आधार उपचयो वृद्धिस्तयोरल्पत्वं यस्माद्धेतोर्बालानामश्मर्या आश्रयोऽल्पो भवति यत्रासावश्मरी जायते। अतएवाश्रयानुसारेणोपचयोऽप्यश्मर्या बालानामल्पो भवति। अतस्ता ग्रहणाहरणे सुखाः। महतान्तु यथोक्तहेत्वभावाद् ग्रहणाहरणे ता दुःखावहाः ॥१५॥

शुक्राश्मरीति। तुरवधारणे। महतामेव शुक्राश्मरी जायते न बालानाम्, तथाविधस्य तेषां शुक्रस्याभावात्। कुतो जायते? शुक्रधारणाद् हर्षादुपदीरणात् स्थानच्युतस्य शुक्रस्य धारणतः। अतएवाह,—स्थानादित्यादि। हि यस्मात् स्थानाच्युतं परिभ्रष्टं बहिरमुक्तं अत्यक्तं तदानीं वायुर्मुष्कयोर्वृषणयोरन्तरे मध्ये शोषयति। किं कृत्वा? उपसंगृह्य शुक्रं सर्वतो गृहीत्वा। तच्च शुष्कं सदश्मरीति भण्यते। सा च बस्तिरुगादिकारिणी। तस्यामुत्पन्नमात्रायां न चिरकालोत्पन्नायां पीड़ितेऽभिभूतेऽस्मिन्नवकाशे शुक्राश्मरीस्थाने शुक्रमेत्यागच्छति। तथा विलीयते चेति चशब्दो लुप्तनिर्दिष्टो बोध्यः। विशेषेण लीयते तत्रैव सुष्ठु श्लिष्यते कठिनत्वात्। अश्मर्य्येवेति। अश्मर्य्येव च पवनेनाणुशो भिन्ना सती शर्करा स्यात्, न तु तस्या अन्यदुपादानकारणमित्यर्थः। सा शर्करा वातेऽनुलोमगेऽनुलोमं कृत्वा स्थिते सति मूत्रेण सह निरेति बहिर्निष्क्रामति। प्रतिलोमे वायौ सा शर्करा विबध्यते न तु बहिर्निष्क्रामति। अश्मरी त्वनुलोमगेऽपि मरुति न निरेति मूत्रेण सह न निष्क्रामतीत्यनयोर्भेदः। अश्मरीणां भल्लातकादिसंस्थाननिर्देशस्तदनुसारेणाहरणार्थं बस्त्यवयवविपाटनमुपयुज्यते। श्यावादिवर्णनिर्देशश्च बहिर्निष्क्रान्तानां श्यावादिवर्णनिदर्शनेन वातादीननुमाय तत्कृतानां णानां चिकित्सार्थमुपक्रान्ते। [illegible] भवि-

मूत्रसन्धारिण: कुर्याद् रुद्ध्वा बस्तेर्मुखं मरुत् ।
मूत्रसङ्गं रुजं कण्डूं कदाचिच्च स्वधामत: ॥ २० ॥
प्रच्याव्य बस्तिमुद्वृत्तं गर्भाभं स्थूलविप्लुतम् ।
करोति तत्र रुग्-दाह-स्पन्दनोद्वेष्टनानि च ॥ २१ ॥
विन्दुशश्च प्रवर्त्तेत मूत्रं बस्तौ तु पीड़िते ।
धारया द्विविधोऽप्येष वातबस्तिरिति स्मृत: ।
दुस्तरो दुस्तरतरो द्वितीय: प्रबलानिल: ॥ २२ ॥
शकृन्मार्गस्य बस्तेश्च वायुरन्तरमाश्रित: ।
अष्ठीलाभं घनं ग्रन्थिं करोत्यचलमुन्नतम् ।
वाताष्ठीलेति साऽऽध्मानविण्मूत्रानिलसङ्गकृत् ॥ २३ ॥
विगुण: कुण्डलीभूतो बस्तौ तीव्रव्यथोऽनिल: ।
आविश्य मूत्रं भ्रमति सस्तम्भोद्वेष्टगौरव: ॥ २४ ॥
मूत्रमल्पाल्पमथवा विमुञ्चति शकृत् सृजन् ।

---

ध्यतीति वर्णनिर्देशोऽनर्थक: । नैवम्, संस्थानं प्रायिकमिति केचित् मन्यन्त, तस्माद् वर्णनिर्देशोऽपि वाच्य: । प्रायिकत्वं च द्वयोरुपादानं लिङ्गम् ॥ १६—१९ ॥

अथ वातबस्त्यादीनाह,—मूत्रेति । मूत्रसन्धारिण: पुरुषस्य बस्तेर्मूत्राधारस्य मुखं द्वारं रुद्ध्वा मारुतो मूत्रसङ्गं कुर्याद् रुजं कण्डूञ्च । स वातबस्तिर्मूत्राघातविशेष: कदाचिददृष्टवशाद् वायुस्तं बस्तिं स्वधामत: स्वस्थानात् प्रच्याव्य च्यावयित्वोद्वृत्तमूर्द्ध्वमुखं गर्भाभं गर्भसदृशं स्थूलं स्वप्रमाणात् प्रवृद्धं, तथा विप्लुतं चञ्चलं करोति । चशब्दान्न केवलं बस्तिभ्रंशमेवंविधं करोति यावत् तत्र रुगादीनपि । मूत्रञ्च विन्दुश: विन्दुर्विन्दु: प्रवर्त्तते । बस्तौ च पीड़िते हस्तादिना मूत्रं धारयाऽविच्छिन्नं प्रवर्त्तते । एष द्विविधो वातबस्तिरिति नाम्ना स्मृत: ; स च प्रथमो दुस्तरो दु:खेन कृच्छ्रेण तरितुं शक्यते द्वितीयो वातबस्तिर्दुस्तरतरो, यत: प्रबलानिल: अतएव चात्र प्रबलानिलत्वात् मूत्रस्य विन्दुश: प्रवर्त्तनम् ॥ २०—२२ ॥

शकृदिति । शकृन्मार्गस्य गुदस्य बस्तेश्चान्तरं मध्यं वायुराश्रित: सन् ग्रन्थिमष्ठीलाभं घनमचलमुन्नतं करोति । सा वाताष्ठीलेत्युच्यते । सा चाध्मानादिकृत् ॥ २३ ॥

विगुण इति । विगुण: कुपितो न त्वनुलोमग:, तथा दोषदेशादिसहकारिकारणवशात् कुण्डलाकारगति:, तथा तीव्रव्यथ: । कार्य्ये कारणोपचारादेवमुक्त: । तथा सह स्तम्भेन स्तब्धतया तथोद्वेष्टेन गौरवेण च वर्त्तते । स एवम्भूतो वायुर्मूत्रमाविश्य क्षोभयित्वा बस्तौ भ्रमति । अथवा मूत्रमाविश्य भ्रमति । किन्तर्हि शकृत्पुरीषं सृजन्

वातकुण्डलिकेत्येषा मूत्रन्तु विधृतं चिरम् ।
न निरेति विबद्धं वा मूत्रातीतं तदल्परुक् ॥ २५ ॥
विधारणात् प्रतिहतं वातोदावर्त्तितं यदा ।
नाभेरधस्तादुदरं मूत्रमापूरयेत्तदा ॥ २६ ॥
कुर्यात्तीव्ररुगाध्मानमपक्तिमलसंग्रहम् ।
तन्मूत्रजठरं छिद्र-वैगुण्येनानिलेन वा ॥ २७ ॥
आक्षिप्तमल्पमूत्रन्तु बस्तौ नालेऽथवा मणौ ।
स्थित्वा स्रवेच्छनैः पश्चात् सरुजं वाऽथवारुजम् ।
मूत्रोत्सङ्गः स विच्छिन्न-तच्छेषगुरुशेफसः ॥ २८ ॥
अन्तर्बस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ।
अश्मरीतुल्यरुग् ग्रन्थि-र्मूत्रग्रन्थिः स उच्यते ॥ २९ ॥
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ।
स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्त्तते ।
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ ३० ॥

---

उद्वमन् मूत्रमल्पाल्पं स्तोकं कृत्वा मुञ्चति । एवंरूपा वातकुण्डलिकोच्यते । मूत्रमिति मूत्रन्तु चिरं विधृतं न निरेति न प्रवर्त्तते । अथवा पवनवशात् विबद्धं निर्गच्छत्यल्परुक् तन्मूत्रातीतं कथ्यते ॥ २४ । २५ ॥

विधारणादिति । विधारणात् मूत्रवेगस्य रोधात्, प्रतिहतं मूत्रं कर्त्तृभूतं वातेनोदावर्त्तितं यदा नाभेरधस्तादुदरं कर्म्मभूतमापूरयेत् तदा तीव्ररुजादिकं कुर्यात् तन्मूत्रजठरमित्युच्यते । छिद्रेति । छिद्रवैगुण्येन मूत्रद्वारदोषेणानिलेन वा तथाभूतेन यदाक्षिप्तं मूत्रमल्पं किञ्चिच्छेषं मूत्रं तद्बस्तौ स्थितमथवा नाले मणिकन्दे वा स्थितं मणौ वा स्थितम् । तत्र स्थित्वा पश्चादनन्तरं शनैर्मन्दं कृत्वा सरुजमथवा नीरुजं स्रवेत् । पुंसः किम्भूतस्य ? विच्छिन्नतच्छेषगुरुशेफसः । तदिति प्रकृतं मूत्रं परामृश्यते । तस्य मुक्तमूत्रस्य शेषस्तच्छेषः, विच्छिन्नश्चासौ तच्छेषश्च विच्छिन्नतच्छेषस्तेन गुरुशेफो मेढ्रं यस्य स विच्छिन्नतच्छेषगुरुशेफास्तस्य विच्छिन्नतच्छेषगुरुशेफसः । य एवंविधः स मूत्रोत्सङ्ग उच्यते ॥ २६—२८ ॥

अन्तरिति बस्तेर्मुखस्य मध्ये ग्रन्थिर्वृत्तो वर्तुलस्तथा स्थिरोऽल्पश्च सहसा झटित्येव भवेत् । अश्मरीतुल्यरुक् ग्रन्थिः स मूत्रग्रन्थिरुच्यते ॥ २९ ॥

मूत्रितस्येति । सञ्जातमूत्रस्य पुंसः स्त्रियं गच्छतो मूत्रयतो मूत्रं कुर्वतः स्थानाच्च्युतं शुक्रं वायुनोद्धतं ध्मातं भस्मोदकेन प्रतीकाशं तुल्यं प्राङ्मूत्रणात् पश्चाद्वा यत् प्रवर्त्तते शुक्रं तन्मूत्रशुक्रमुच्यते ॥ ३० ॥

रूक्षदुर्बलयोर्वातादुदावृत्तं शकृद् यदा ।
मूत्रस्रोतोऽनुपर्येति संसृष्टं शकृता तदा ।
मूत्रं विट्तुल्यगन्धं स्याद् विड्विघातं तमादिशेत् ॥ २१ ॥
पित्तं व्यायामतीक्ष्णोष्ण-भोजनाध्वातपादिभिः ।
प्रवृद्धं वायुना क्षिप्तं बस्त्युपस्थार्तिदाहवत् ॥ २२ ॥
मूत्रं प्रवर्त्तयेत् पीतं सरक्तं रक्तमेव वा ।
उष्णं पुनः पुनः कृच्छ्रादुष्णवातं वदन्ति तम् ॥ २३ ॥
रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ २४ ॥
पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ।
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ २५ ॥
सदाहं रोचनाशङ्ख-चूर्णवर्णं भवेच्च तत् ।
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ २६ ॥
इति विस्तरतः प्रोक्ता रोगा मूत्राऽप्रवृत्तिजाः ।
निदानलक्षणैरूर्द्ध्वं वक्ष्यन्तेऽतिप्रवृत्तिजाः ॥ २७ ॥

इत्यष्टाङ्गहृदये निदानस्थाने नवमोऽध्यायः ॥ ९ ॥

---

रूक्षेति । रूक्षदुर्बलयोः पुंसोर्वातादुदावृत्तं पिण्डितं शकृद् यदा मूत्रस्रोतोऽनुपर्येति मूत्रस्रोतोऽभित आगच्छति तदा शकृता संसृष्टं मूत्रं पुरीषसदृशगन्धं स्यात् तं विड्विघातमित्यादिशेत् ॥ २१ ॥

पित्तमिति । पित्तं कर्तृ व्यायामादिभिः प्रवृद्धं वातेनाक्षिप्तं बस्त्युपस्थार्त्तिदाहयुक्तं मूत्रं कर्म्मभूतं प्रवर्त्तयेत् । किम्भूतम् ? पीतं तथा सह रक्तेन सरक्तं रक्तमेव वा केवलं तयोष्णं मुहुर्मुहुः कृच्छ्रेण मूत्रयेत् तमुष्णवातं वदन्ति ॥ २२ । २३ ॥

रूक्षस्येति । रूक्षस्य पुंसस्तथा क्लान्तदेहस्य ग्लानशरीरस्य बस्तिस्थौ पित्तमारुतौ सरुग् दाहं मूत्रस्य क्षयं जनयेतामुत्पादयेताम् । तदाह्वयं मूत्रक्षयसंज्ञमित्यर्थः ॥ २४ ॥

पित्तमिति । पित्तमथवा कफौ व्यस्तोऽनिलेन संहन्यते समन्तात् पीड्यते आक्रम्यते । अथवा द्वावपि संसर्गरूपौ तेन हन्येते यदि तदा कृच्छ्रेण मूत्रं पीतादिनैकैकेन वर्णेन श्वेतान्तेन युक्तं घनं सदाहं सृजेन्मुञ्चेत् । तच्च शुष्कं कालान्तरेण रोचनाशङ्खचूर्णवर्णं भवेत् । कदाचिद् रोचनाचूर्णवर्णं कदाचिच्छङ्खचूर्णवर्णं कदाचित् पीतादिसमस्तवर्णं वा स्यात्तं मूत्रसादं वदन्ति ॥ २५ । २६ ॥

इतीति । इत्येवं विस्तरेण मूत्राप्रवृत्तिजा मूत्रस्याप्रवृत्तिरप्रवर्त्तनं ततो जाता रोगा प्रकर्षेणोक्ताः ऊर्ध्वमित्यतोऽध्यायादनन्तरं तुल्यस्थाननिदानानि च लक्षणानि च तैः

# दशमोऽध्यायः ।

अथातः प्रमेहनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

प्रमेहा विंशतिस्तत्र श्लेष्मतो दश पित्ततः ।
षट् चत्वारोऽनिलात् तेषां मेदोमूत्रकफावहम् ॥ २ ॥
अन्नपानक्रियाजातं यत्प्रायस्तत्प्रवर्त्तकम् ।
स्वाद्वम्ल-लवण-स्निग्ध-गुरु-पिच्छिल-शीतलम् ॥ ३ ॥
नवधान्य-सुरानूप-मांसेक्षु-गुड़-गोरसम् ।
एकस्थानासनरतिः शयनं विधिवर्ज्जितम् ॥ ४ ॥
बस्तिमाश्रित्य कुरुते प्रमेहान् दूषितः कफः ।
दूषयित्वा वपुःक्लेद-स्वेदमेदोवसामिषम् ॥ ५ ॥
पित्तं रक्तमपि क्षीणे कफादौ मूत्रसंश्रयम् ।

---

संख्यादित्वात् मूत्रातिप्रवृत्तिजाः प्रमेहाख्या रोगा वक्ष्यन्ते वदिष्यन्ते । अनेनास्य ग्रन्थकृता युक्त्या सम्बन्धोऽभिहित इति ॥ ३७ ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां निदान-स्थाने मूत्राघातनिदानं नाम नवमोऽध्यायः ॥ ९ ॥

---

अश्मरीनिदानानन्तरं प्रमेहनिदानमारभ्यते अथात इति ॥ १ ॥

प्रमेहेति । प्रमेहा विंशतिर्भवंति । तत्र विंशतिप्रमेहेषु दश श्लेष्मतः प्रमेहाः, षट् पित्ततः, चत्वारो वातात् । तेषां प्रमेहाणां मेदोमूत्रकफकरं यदन्नपानक्रियाजातं प्रायो बाहुल्येन तत्प्रवर्त्तकमुत्पादकम् । जातशब्दः प्रकारे । क्रिया चेष्टा शय्यासन-निद्रालस्यादिका कफकरी । तदेवान्नादि दर्शयितुमाह,—स्वाद्वम्लेत्यादि । एकस्थानासने रतिः प्रीतिः । शयनं स्वप्नो विधिवर्ज्जितम् । यथोक्तम्—"अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता । सुखायुषी पराकुर्यात् कालरात्रिरिवापरा" इति ॥ २—४ ॥

बस्तिमिति । कफः प्रमेहकारणैर्दूषितो बस्तिमाश्रित्य प्रमेहान् कुरुते । किं कृत्वा ? वपुरादीन् दूषयित्वा ॥ ५ ॥

कफजप्रमेहाणां सम्प्राप्तिमुक्त्वा पित्तप्रमेहसम्प्राप्तिमाह,—पित्तमिति । पित्तं कर्त्तृ रक्तं मूत्रसंश्रयं दूषयित्वा प्रमेहान् कुरुते । अपिशब्दाद् वपुरादींश्च । कदा ? कफादौ

धातून् बस्तिमुपानीय तत्क्षयेऽपि च मारुतः ॥ ६ ॥
साध्ययाप्यपरित्याज्या मेहास्तेनैव तद्भवाः ।
समासमक्रियतया महात्ययतयापि च ॥ ७ ॥
सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ।
दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ।
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ॥ ८ ॥
अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ।
मेहत्युदकमेहेन किञ्चिच्चाविलपिच्छिलम् ॥ ९ ॥

---

सौम्यधातौ क्षीणे सति । मारुतश्च दूषितो धातून् वातप्रमेहसम्पादनयोग्यान् बस्तिमुपनीय समन्तात् मूत्राधारसमीपं नीत्वा तत् क्षयेऽपि च प्रमेहान् कुरुते। तेषां धातूनां क्षयस्तस्मिंश्च सति। न केवलं धातून् बस्तिमुपानीय यावदधःक्षरणत्वादिना तेषामपि क्षयं कृत्वेत्यपिचेत्यस्यार्थः ॥ ६ ॥

अथ साध्यासाध्यविभागमाह,—साध्येति। स श्लेष्मादिर्भवो जन्म येषां ते तद्भवाः कफादिसमुत्थास्तेनैव विशिष्टेन सम्प्राप्तिविशेषेण साध्ययाप्यपरित्याज्याः स्युः। तथा च कफप्रमेहा वपुरादिदूषणमात्रोत्थितत्वात् साध्याः। पित्तप्रमेहाणां सौम्यधातुक्षये वपुरादेरक्तस्य च दूषणेन समुत्थानाद्याप्यत्वम्। वातप्रमेहास्तु सर्वधातुक्षयीभूतत्वाद- साध्याः। अन्यदपि हेत्वन्तरं साध्ययाप्यासाध्यान् वक्ति,—समेत्यादि। समं चासमञ्च समासमे समानासमाने। समासमे क्रिये ययोस्तावेवम्, तयोर्भावः समासमक्रियता तया। तथा महात्ययतया। महांश्चासावत्ययो विनाशः शरीरविघट्टनरूपो महात्ययस्तस्य भावो महात्ययता तया। तत्र कफस्य तथा शरीरक्लेदादेः प्रमेहदूष्यस्याप्य- पतर्पणरूपया एकयैव क्रियया साध्यत्वात् कफप्रमेहाः साध्याः। पित्तस्य शीतमधु- रादिरूपा क्रिया प्रमेहाणां रूक्षतीक्ष्णादिका दूष्यप्रतिपक्षत्वादौपयिकीति तस्मात्ते पित्तमेहा याप्याः। वातप्रमेहाणां रूक्षतीक्ष्णादि पथ्यं वातस्य स्निग्धमधुरादिकं सन्तर्पणरूपं पथ्यम्। तदेवं विरुद्धक्रियत्वाद्द वातमेहा असाध्याः। अपिचेति समुच्चये ॥ ७ ॥

सामान्यमिति। तेषां मेहानां सामान्यलक्षणं प्रभूतमूत्रता आविलमूत्रता च।
ननु दोषस्य कफादेर्दूष्यस्य च वपुःक्लेदादेस्तुल्यत्वात् कथं प्रतिदोषं प्रमेहानेकत्वं स्यादित्याह,—दोषेति। दोषदूष्याविशेषेऽपि समानत्वेऽपि सति तत्संयोगविशेषतो मेहेषु भेदोऽनेकत्वं कल्प्यते। तयोर्दोषदूष्ययोः संयोगः संश्लेषः तत्संयोगस्तस्य विशेषः प्राक्कृतकर्म्मवशाद्द भेदो दोषदूष्ययोः संयोगानेकत्वमित्यर्थः। तस्मान् मूत्रस्य यो वर्णादिभेदो वर्णगन्धरसस्पर्शादिविशेषस्तेन भेदेन भेदो मेहेषु कल्प्यते निरूप्यते ॥ ८ ॥

अथोदकमेहादीन् लक्षयति,—अच्छमिति। उदकमेहेनाच्छादिगुणयुक्तं मेहति। किञ्चिच्चाविलपिच्छिलमिति। एतत् स्वच्छमूत्रादाविलं पिच्छिलं भवति ॥ ९ ॥

इक्षो रसमिवात्यर्थं मधुरञ्चेक्षुमेहतः ॥ १० ॥
सान्द्रो भवेत्पर्युषितं सान्द्रमेही प्रमेहति ॥ ११ ॥
सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ १२ ॥
संहृष्टरोमा पिष्टेन पिष्टवद् बहुलं सितम् ॥ १३ ॥
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ १४ ॥
मूत्राणून् सिकतामेही सिकतारूपिणो मलान् ॥ १५ ॥
शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ १६ ॥
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ॥ १७ ॥
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १८ ॥
गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥ १९ ॥
नीलमेहेन नीलाभं कालमेही मषीनिभम् ॥ २० ॥
हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ॥ २१ ॥

---

इक्षोरिति । इक्षोर्मेहादिक्षुरससदृशं मेहति । अत्यर्थ मधुरं चेतीक्षुरसाद् विशेषमाह ॥ १० ॥

सान्द्रेति । सान्द्रमेही यन्मेहति तत् पर्युषितं रात्रिस्थितं घनीभवेत् ॥ ११ ॥

सुरेति । सुरामेही सुरातुल्यं मेहति । तच्च मूत्रं पर्युषितमेवोपरिभागेऽच्छमधो-ऽधस्ताद् घनं भवेत् ॥ १२ ॥

संहृष्टेति । पिष्टेन पिष्टमेहेन संहृष्टरोमा सन् पिष्टवत् पिष्टसदृशं बहुलं शुक्लञ्च मेहति ॥ १३ ॥

शुक्राभमिति । शुक्रमेही शुक्राभं शुक्रमिश्रं वा प्रमेहति ॥ १४ ॥

मूत्रेति । सिकतामेही मूत्राणूनसंहतान् सूक्ष्मांश्च मलान् सिकतासदृशान् मेहति । मलानिति बहुवचनं जातौ ; कफाख्यो ह्येक एव मलोऽत्र गृह्यते ॥ १५ ॥

शीतेति । शीतमेही सुष्ठु बहुशो मधुरमतिशीतलञ्च मेहति ॥ १६ ॥

शनैरिति । शनैर्मेही शनैः शनैर्मेहतीत्युद्देशे मन्दं मन्दमिति निर्देश इत्यपि पौनरुक्त्यम् ॥ १७ ॥

लालेति । लालामेहेन लालातन्तुयुतं पिच्छिलञ्च मूत्रं प्रमेहति । इति कफ-प्रमेहा दश ॥ १८ ॥

पित्तजानाह,—गन्धेति । क्षारतोयमिव गन्धवर्णरसस्पर्शैः क्षारमेहेन मेहति ॥१९॥

नीलेति । नीलमेहेन नीलाभं गन्धादिभिर्मेहति । कालेति । कालमेही मसी-सदृशं मूत्रं मेहति ॥ २० ॥

हारिद्रेति । हारिद्रमेही हरिद्रासदृशं कटुकं दहद्दहदिव मूत्रं मेहति ॥ २१ ॥

विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ २२ ॥
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहत: ॥ २३ ॥
वसामेहो वसामिश्रं वसां वा मूत्रयेन्मुहु: ॥ २४ ॥
मज्जाभं मज्जमिश्रं वा मज्जमेहो मुहुर्मुहु: ॥ २५ ॥
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्ज्जितम् ।
सलसीकं विबद्धञ्च हस्तिमेही प्रमेहति ॥ २६ ॥
मधुमेही मधुसमञ्जायते स किल द्विधा ।
क्रुद्धे धातुक्षयाद् वायौ दोषावृतपथेऽथवा ॥ २७ ॥
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ।
क्षीण: क्षणात् क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ॥२८॥
कालेनोपेक्षिता: सर्व यद् यान्ति मधुमेहताम् ।
मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति ।
सर्वेऽपि मधमेहाख्या माधुर्य्याच्च तनोरत: ॥ २९ ॥

---

विस्रमिति । माञ्जिष्ठमेही मञ्जिष्ठाजलसदृशं विस्रञ्च मेहति ॥ २२ ॥

विस्रमुष्णमिति । रक्तमेहेन विस्रादिकं मेहति ॥ २३ ॥

अधुना वातजान् वक्ति,—वसेति । वसामेही वसामिश्रं वसां वा पुन: पुनर्मूत्रयेत् ॥ २४ ॥

मज्जाभमिति । मज्जमेही मज्जानं मज्जमिश्रं वा पुन: पुनर्मेहति ॥ २५ ॥

हस्तीति । हस्तिमेही मत्तगजइवानवरतं वेगरहितं लसीकया सह विबद्धञ्च मूत्रं प्रमेहति ॥ २६ ॥

मधुमेहीति । मधुमेही मधुसमं प्रमेहति । जायत इति । स तु मधुमेही वायौ धातुक्षयात् कुपिते सत्यथवा दोषावृतपथे मरुति किल द्विधा जायते । अत्र च केचिदेवाचार्या द्विधा आहु: । बहवस्त्वेकमेव । धातुक्षयवातकोपजमाहुर्न तु मार्गावृतवातकोपजमिति सूचनार्थ: किलशब्द: । वायोस्तु द्विधा कोप:, तथाचोक्तम्,—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति ॥ २७ ॥

आवृत इति । स वायुरावृतमार्गो लिङ्गानि वातावरकदोषलक्षणानि वातशोणितनिदानोक्तानि अनिमित्तमकस्मात् प्रदर्शयेच्चलस्वभावत्वाद्वायो: । अतएव च क्षणात् क्षीणो बस्तेरपूरणाद्रिक्त: । क्षणाच्च पूर्णो मूत्राशयपूरणात् पूर्णो न तु रिक्त: । अत एव दोषावृतमार्गवातकोपजत्वादसौ कृच्छ्रसाध्यतां भजते न तु धातुक्षयवातकोपजवदत्यन्तासाध्यताम् ॥ २८ ॥

कालेनेति । यद् यस्मात् सर्व्वे मेहा: कालेनोपेक्षिता: सन्तो मधुमेहतां यान्ति ।

अविपाकोऽरुचिश्छर्दिर्निद्राकासः सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ ३० ॥
बस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहस्तृष्णाम्लको मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥३१॥
वातिकानामुदावर्त्त-कण्ठहृद्ग्रहलोलताः ।
सुलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥ ३२ ॥
शराविका कच्छपिका जालिनी विनताऽलजी ।
मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ ३३ ॥
विद्रधिश्चेति पिटिकाः प्रमेहोपेक्षया दश ।
सन्धिमर्म्मसु जायन्ते मांसलेषु च धामसु ॥ ३४ ॥
अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ।
शरावमानसंस्थाना पिटिका स्याच्छराविका ॥ ३५ ॥
अवगाढाऽर्त्तिनिस्तोदा महावास्तुपरिग्रहा ।
श्लक्ष्णा कच्छपपृष्ठाभा पिटिका कच्छपो मता ॥ ३६ ॥
स्तब्धा सिराजालवती स्निग्धस्रावा * महाशया ।

---

यत्र यस्माच्च सर्वेषु मधुरं मक्षिव मधुसदृशं मेहति । तनोः शरीरस्य च स्वभावादेव माधुर्य्यमतोऽस्मात् कारणसन्दोहात् सर्वेऽपि मधुमेहसंज्ञाः ॥ २९ ॥

अविपाक इति । कफजानां मेहानामविपाकादय उपद्रवाः प्रजायन्ते ॥ ३० ॥

बस्तीति । पित्तजन्मनां बस्त्यादितोदादयो जायन्ते ॥ ३१ ॥

वातिकानामिति । वातिकानामुदावर्त्तादयः स्युः ॥ ३२ ॥

प्रमेहिणाञ्च पिटिकाः शराविकाद्याः प्रायेण भवन्तीति ता एवाह,—शराविकेति । शराविकादयो दश पिटिकाः प्रमेहाणामुपेक्षया जायन्ते । सन्धिमर्म्मसु मांसलेषु च बहुमांसेषु स्थानेषु ॥ ३३—३४ ॥

अन्तोन्नतेति । शराविकासंज्ञा पिटिका अन्तोन्नतत्वादिगुणयुक्ता भवति, तथा शरावस्येव प्रमाणं संस्थानमाकारश्च यस्या सैवम् ॥ ३५ ॥

अवगाढेति । अर्त्तिः पीड़ा, निस्तोदो विच्छिन्नव्यथनम्, अवगाढौ अर्त्तिनिस्तोदौ यस्याः सैवम् । तथा महावास्तुपरिग्रहा शरीरावयवविशेष आश्रयो यस्याः सैवम् । तथा श्लक्ष्णा कच्छपपृष्ठतुल्या च कच्छपीसंज्ञा पिटिका मता तत्त्वज्ञतामिति शेषः ॥ ३६ ॥

---

* स्निग्धा श्यावा इति वा पाठः ।

रुजा निस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ ३७ ॥
अवगाढ़रुजा क्लेदा पृष्ठे वा जठरेऽपि वा ।
महती पिटिका नीला विनता विनता स्मृता ॥ ३८ ॥
दहति त्वचमुत्थाने भृशं कष्टा विसर्पिणी ।
रक्तकृष्णातितृट्-स्फोट-दाह-मोह-ज्वराऽलजी ॥ ३९ ॥
मानसंस्थानयोस्तुल्या मसूरेण मसूरिका ॥ ४० ॥
सर्षपा मानसंस्थाना क्षिप्रपाका महारुजा ।
सर्षपा सर्षपातुल्य-पिटिकापरिवारिता ॥ ४१ ॥
पुत्रिणी महती भूरि-सुसूक्ष्मपिटिकावृता ॥ ४२ ॥
विदारिकन्दवद् वृत्ता कठिना च विदारिका ॥ ४३ ॥
विद्रधिर्वक्ष्यतेऽन्यत्र तत्राद्यं पिटिकात्रयम् ।
पुत्रिणी च विदारी च दुःसहा बहुमेदसः ॥ ४४ ॥
सह्याः पित्तोल्बणास्त्वन्याः सम्भवन्त्यल्पमेदसः ॥ ४५ ॥

---

रुजेति । रुजादिगुणयुक्ता जालिनीसंज्ञा । अवगाढ़रुजेति । अवगाढ़रुजादियुक्ता पिटिका महतीसंज्ञा नीला नीलवर्णा विनता न तून्नता । सा च विनतासंज्ञा पृष्ठे जठरे वा स्यात् ॥ ३७ । ३८ ॥

दहतीति । अलजीसंज्ञा उत्थाने सति त्वचं दहति । अतिदुःसहा विसर्पणशीला, तथा रक्तकृष्णा अतितृड़ादियुक्ता च ॥ ३९ ॥

मानेति । मसूरिकासंज्ञा मसूरेण प्रमाणाकृतिभ्यां तुल्या । सर्षपेति । सर्षपा-संज्ञा सर्षपतुल्यप्रमाणाकारा, तथा शीघ्रपाका महारुजा च, तथा सर्षपा-सदृशीभिः पिटकाभिः परिवारिता च ॥ ४० । ४१ ॥

पुत्रिणीति । पुत्रिणीसंज्ञा प्रमाणेनापरपिटिकापेक्षया महती तथा भूरिभिः सुसूक्ष्माभिः पिटिकाभिराचिता च । विदारीति । विदारिकासंज्ञा विदारिकन्द इव वर्तुला कठिना च स्यात् ॥ ४२ । ४३ ॥

विद्रधिरिति । विद्रधिरन्यत्रेत्यतोऽध्यायादन्यस्मिन् अनन्तराध्याये वक्ष्यते भणिष्यते नवति । तत्र तासु पिटिकासु मध्ये आद्यं शराविकाकच्छपिकाजालिनीत्येतत् पिटिकात्रयं, तथा पुत्रिणी विदारिका चेति पञ्च दुःसहाः कृच्छ्रसाध्यत्वात् । यतो बहुमेदस एताः सम्भवन्ति ॥ ४४ ॥

सह्या इति । अन्या एताभ्योऽपरास्तु पित्तोल्बणायतसः सह्याः सोढुं शक्याः । सुखसाध्यत्वात् । ताश्चाल्पमेदसः सम्भवन्ति ॥ ४५ ॥

तासु मेहवशाच्च स्याद् दोषोद्रेको यथायथम् ॥ ४६ ॥
प्रमेहेण विनाऽप्येता जायन्ते दुष्टमेदसः ।
तावच्च नोपलक्ष्यन्ते यावद् वास्तुपरिग्रहाः ॥ ४७ ॥
हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्ज्जितम् ।
यो मूत्रयेन्न तं मेहं रक्तपित्तन्तु तद् विदुः ॥ ४८ ॥
स्वेदोऽङ्गगन्धः शिथिलत्वमङ्गे शय्यासनस्वप्नसुखाभिषङ्गः ।
हृन्नेत्र-जिह्वा-श्रवणोपदेहो घनाङ्गताकेशनखातिवृद्धिः ॥ ४९ ॥
शीतप्रियत्वं गलतालुशोषो माधुर्य्यमास्ये कर-पाद-दाहः ।
भविष्यतो मेहगणस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥५०॥
दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद् द्विविधो विचारः ।
संपूरणाद्वा* कफसम्भवः स्यात् क्षीणेषु दोषेष्वनिलात्मको वा ॥५१

तास्विति। तासु पिटिकासु मेहानुरोधात् दोषोद्रेको यथायथं यथास्वं स्यात्। वातमेहजासु वाताधिक्यं पित्तमेहजासु पित्ताधिक्यं कफमेहजासु कफाधिक्यम् । उद्रेक-शब्देनैतत् द्योतयति,—त्रिदोषजाः सर्वा एता इति ॥ ४६ ॥

प्रमेहेणेति। एताः पूर्वोक्ताः पिटिकाः प्रमेहेण विनापि अप्रमेहिणोऽपि पुंसो दुष्टमेदसो जायन्ते । जाता अपि तास्तथाविधस्य नरस्य तावन्न लक्ष्यन्ते यथायथं लक्षणं नोत्पद्यते। यावद् यथास्वं पृष्ठोदरादिवस्तु आसां आधारत्वेन तन्त्रकृता यत् परिभाषितं तन्न परिगृहीतम्। एवं चिरेण कालेन चोत्पन्ना अपि ज्ञायन्त इत्यर्थः ॥ ४७ ॥

हारिद्रवर्णमिति। मेहस्य यत् प्राग्रूपं तेन वर्ज्जितं हारिद्रवर्णं रक्तं वा यो मूत्रयेत् तं मेहं न विदुः। किं तर्हि ? रक्तपित्तमित्याहुः ॥ ४८ ॥

स्वेद इति। एतद् भविष्यतो भाविनो मेहगणस्य विंशतिसंख्यस्य स्वेद इत्यादि-प्राग्रूपम्। न केवलमेतत् प्राग्रूपं, यावत् पिपीलिका मूत्रेऽभिधावन्ति मधुररसप्रियत्वात् तेषाम्। मुनिस्त्वत्र नखवृद्धिं न जगाद ॥ ४९ । ५० ॥

दृष्ट्वेति। मधूपमं माक्षिकतुल्यं मधुरं, तथा सह पिच्छया शाल्मलीनिर्य्यासेन तुल्यया वर्त्तत इति सपिच्छमेवंविधं प्रमेहं दृष्ट्वा तदानीं द्विविधो विचारः स्यात्। सम्पूरणात् कारणात् किमयं कफसम्भवो मेहोऽपतर्पणसाध्यः ? उत क्षीणेषु दोषेषु कदाचित् कफादिदोषक्षयात् तर्पणसाध्योऽनिलात्मकः स्यात् ? इति सन्दिहीत मन्दबुद्धिः। तीक्ष्णमतिस्तु कफमेहान् वातमेहांश्च लिङ्गान्तरैः सम्यग् वेत्त्येव ॥ ५१ ॥

* सन्तर्पणाद्वेति वा पाठः ।

सपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तु मेदो यदि नातिदुष्टम् ॥ ५२ ॥

इत्यष्टाङ्गहृदये निदानस्थाने दशमोऽध्यायः ॥१०॥

---

## एकादशोऽध्यायः ।

अथातो विद्रधि-वृद्धि-गुल्म-निदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
भुक्तैः पर्युषितात्युष्ण-रूक्ष-शुष्क-विदाहिभिः ।

---

अधुना यदुक्तं साध्ययाप्यपरित्याज्याः कफादिसम्भवा इत्यस्यापवादमाह,—सपूर्वरूपा इति । सह पूर्वरूपैः स्वेदोऽङ्गगन्ध इत्यादिभिर्वर्त्तन्तेऽनवरतं कृत्वा अनुबध्यन्ते ये ते सपूर्वरूपा असाध्याः । सर्वेषां पूर्वरूपाव्यभिचारेऽपि विशेषणं साकल्यप्रापणार्थम् । सर्वैः पूर्वरूपैः सह ये वर्त्तन्ते ते कफादिमेहाः पित्तमेहाश्चासाध्याः साधयितुमशक्यत्वात् । उपलक्षणं चेदम्, अपरेऽपि रोगाः सपूर्वरूपाः प्रायेणाऽसाध्या एव, तथा क्रमेण कफानुपूर्व्या ये वातकृता मेहास्ते असाध्याः । ननु वातकृता मेहा असाध्या इति प्रागुक्तमेव तत् किमनेन ग्रन्थेनेति, ब्रूमः, अक्रमेण प्रथममेव ये वातोत्पन्नास्ते त्याज्या इति पूर्वमुक्तम् । इह तु क्रमेण प्रथमं कफप्रमेहास्ततः पित्तप्रमेहास्ततः कालेन त एव ये वातप्रमेहाः सम्पन्नास्ते पूर्वं कफप्रमेहत्वात् साधयितुमपि शक्यन्त इत्याशङ्कायां क्रमेण ये वातकृतास्ते असाध्या इत्युक्तम् । पित्तकृतास्तु असपूर्वरूपा अपि याप्या असमक्रियत्वादिति प्राग् निर्दिष्टम् । तेषां यदि मेदो नातिदुष्टं भवेत् तदा तेऽपि याप्याः सन्तः साध्या भवन्ति । मेदो नातिदुष्टमित्यनेनेतज् ज्ञापयति, सर्वमेहेषु मेदोदुष्टिरवश्यम्भाविनीति मेहिनो राजयक्ष्मिणश्च केशनखातिवृद्धिः किट्टबाहुल्याद् भवति, रोगस्वभावादित्यन्ये । हस्तान्युपजाति-संज्ञानि ॥ ५२ ॥

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने प्रमेहनिदानं नाम दशमोऽध्यायः ॥ १० ॥

---

प्रमेहनिदानानन्तरं विद्रधिनिदानारम्भः । यतोऽनन्तरेऽध्याये पिटिकालक्षणावसरे विद्रधिर्वक्ष्यत इत्युक्तम्, अतस्तमेव विद्रधिं लक्षयितुमस्याऽध्यायस्य प्रसङ्ग इत्याह,—अथात इत्यादि । पर्युषितादिभिर्भुक्तैः तथा जिह्मशय्याविचेष्टाभिः । विविधार्थेष्टा

जिह्म-शय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः ॥ २ ॥
दुष्ट-त्वङ्मांस-मेदोऽस्थि-स्नायूसृक्कण्डराश्रयः ।
यः शोफो बहिरन्तर्वा महामूलो महारुजः ॥ ३ ॥
वृत्तः स्यादायतो यो वा स्मृतः षोढ़ा स विद्रधिः ।
दोषैः पृथक् समुदितैः शोणितेन क्षतेन च ॥ ४ ॥
बाह्योऽत्र तत्र तत्राऽङ्गे दारुणो ग्रथितोन्नतः ।
आन्तरो दारुणतरो गम्भीरो गुल्मवद् घनः ।
वल्मीकवत् समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत् ॥ ५ ॥
नाभि-बस्ति-यकृत्-प्लीह-क्लोम-हृत्-कुक्षि-वङ्क्षणे ।
स्याद् वृक्कयोरपाने च वातात्तत्रातितीव्ररुक् ॥ ६ ॥
श्यावारुणशिरोत्थान-पाको विषमसंस्थितिः ।
व्यध-च्छेद-भ्रमानाह-स्पन्द-सर्पण-शब्दवान् ॥ ७ ॥

---

विचेष्टाः, शय्या च विचेष्टाश्च शय्याविचेष्टाः जिह्माश्च ताः शय्याविचेष्टाश्च ताभिः, तथा तैस्तैस्तत्र-तत्राऽसृक्प्रदूषणैश्च निर्दिष्टैर्यः शोफो जायते दुष्टत्वगाद्याश्रयो बहिर्बहिर्भागेऽन्तरन्तर्भागे वा स शीघ्रविदाहित्वाच्छोफः षट्प्रकारो विद्रधिः स्मृतोऽभिहितः। शोफशब्दः पृषोदरादित्वात् साधुः । त्वक् च मांसञ्च मेदश्च अस्थि च स्नायुश्च असृक् च कण्डरा च ता एवम्। सुमहान् स्नायुसङ्घातः कण्डरेत्यभिधीयते। दुष्टा दोषैर्दूषितास्त्वङ्मांसादय आधारो यस्य शोफस्य स दुष्टत्वङ्मांसमेदोऽस्थिस्नायूसृक्कण्डराश्रयः। तथा महामूलस्तथा महारुजः। अनेनाऽस्य दुरुपक्रमत्वमुक्तम्। तथा वृत्तः स्यादथवा आयतो न वर्तुलः। इत्यनेनाऽस्य संस्थानमुक्तम्। षोढेत्युक्तम्; अथ तदेव षोढ़ात्वं प्रतिपादयितुमाह,—दोषैरित्यादि। पृथग् दोषैर्वातपित्तकफैस्त्रयः। समुदितैः सान्निपातिकः, तथा शोणितेन दोषाधिष्ठितेन क्षतेन शस्त्रादिघातादिना ॥ १—४ ॥

षड्विधस्यापि शोफस्य विद्रध्याख्यस्यान्तर्बहीरूपतया द्विधात्वमित्याह,—बाह्य इति। अत्राऽनयोर्बाह्याभ्यन्तरभेदभिन्नयोर्विद्रध्योर्बाह्यो विद्रधिस्तत्र तत्र नाभ्यादावङ्गे जायते, तथा दारुणो ग्रथितोन्नतः। ग्रथित इव ग्रथितः। उन्नत उत्तुण्डितः। शोफस्य स्वभावोन्नतत्वादुन्नतग्रहणमतिशयार्थम्। आन्तरो दारुणतरः, तथा गम्भीरोऽन्तर्निगूढः, तथा गुल्मवद्घनो गुल्मेन तुल्यः, तथा समुच्छ्रायी उन्नतो वल्मीकशिखरवत्, तथा शीघ्रघाती बाह्यविद्रधितः शीघ्रव्यापादकः। अग्निशस्त्रवदग्निशस्त्रतुल्यः ॥ ५ ॥

नाभीति। नाभ्याद्यन्यतमे देशे चायं स्यात्। वातादिति। तत्र तेषु विद्रधिषु मध्ये वातात् तीव्ररुगादिः शब्दवानित्येतदन्तलक्षणः स्यात् ॥ ६ । ७ ॥

रक्त-ताम्रासित: पित्तात् तृण्मोह-ज्वर-दाहवान् ।
चिप्रोत्थानप्रपाकश्च पाण्डु: कण्डूयुत: कफात् ॥ ८ ॥
सोत्क्लेश-शीतक-स्तम्भ-जृम्भारोचक-गौरव: ।
चिरोत्थानविदाहश्च सङ्कीर्ण: सन्निपातत: ॥ ९ ॥
सामर्थ्याच्चात्र विभजेद् वाह्याभ्यन्तरलक्षणम् ॥ १० ॥
कृष्णस्फोटावृत: श्यावस्तीव्रदाहरुजाज्वर: ।
पित्तलिङ्गोऽसृजा वाह्य: स्त्रीणामेव तथाऽन्तर: ॥ ११ ॥
शस्त्राद्यैरभिघातेन क्षते वाऽपथ्यकारिण: ।
क्षतोष्मा वायुविक्षिप्त: सरक्तं पित्तमीरयन् ।
पित्तासृग्लक्षणं कुर्याद्विद्रधिं भूर्युपद्रवम् ॥ १२ ॥
तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदत: ॥ १३ ॥
नाभ्यां हिक्का भवेद्वस्तौ मूत्रं कृच्छ्रेण पूति च ।
श्वासो यकृति रोधस्तु प्लीह्नुरुच्छ्वासस्य तृट् पुन: ॥ १४ ॥

---

रक्तेति। रक्ताद् रक्तताम्रासितादिक: चिप्रोत्थानप्रपाकश्चेत्यन्तलक्षण: । पाण्डुरिति । कफात् पाण्डुवर्णेन, तथा कण्डूयुत इत्यादिचिरोत्थानविदाहश्चेत्यन्तलक्षण: स्यात् । सङ्कीर्ण इति । सन्निपातजो विद्रधि: सङ्कीर्णो वातादिदोषत्रयामिश्रलक्षण: ॥ ८ । ९ ॥

सामर्थ्यादिति । अत्र विद्रधौ पूर्वोक्ताद्दारुणतरत्वादिलक्षणात् सामर्थ्याद् वाह्याभ्यन्तरस्य लक्षणं विभजेत् । वाह्यस्य विद्रधेस्तथाऽभ्यन्तरस्य लक्षणं वदेत् ॥ १० ॥

कृष्णेति । रक्तेन विद्रधि: कृष्णस्फोटैरावृतश्चितो यावत्तीव्रदाहरुजाज्वर:, तथा पित्तलिङ्गो रक्तताम्रासित इत्यादिलक्षण: स च वाह्यो वाह्य एव नान्तरो नराणां वस्तुस्वभावात् । आन्तरो यो विद्रधिरसृजा जायते स स्त्रीणामेव न नराणां वस्तुस्वभावात् ॥ ११ ॥

क्षतविद्रधिं लक्षयति,—शस्त्राद्यैरिति । शस्त्रलोष्ट्राद्यै र्योऽभिघातस्तेन हेतुना य: क्षतोष्मा अथवा योऽभिघातमन्तरेणापि व्रणादुद्भवात् क्षते जाते सत्यपथ्यकारिण: पुंसो य: क्षतोष्माऽग्नि: स वायुना विक्षिप्त: पित्तमीरयन् कोपयन् । किम्भूतं पित्तम् ? सरक्तम् । पित्तासृग्भ्यामुत्पन्नयो वि द्रध्योर्यल्लक्षणं तत् समानलक्षणं विद्रधिं कुर्यात्, तथा भूर्युपद्रवम् । इयानेव चास्य विशेष: पित्तासृग्विद्रध्यो: सकाशात् ॥ १२ ॥

तेष्विति । तेषु विद्रधिषूपद्रवविशेषोऽधिष्ठानविशेषाद् भवति ॥ १३ ॥

तमेवोपद्रवभेदं दर्शयति नाभ्यामिति । नाभ्यां जाते विद्रधौ हिक्का विशेषेण भवेत् । वस्तौ जाते मूत्रं पूति कृच्छ्रेण भवेत् । यकृति जाते श्वास: स्यात् । प्लीह्नि

गलग्रहश्च क्लोम्नि स्यात् सर्वाङ्गप्रग्रहो हृदि।
प्रमोहस्तमकः कासो हृदये घट्टनं व्यथा ॥ १५ ॥
कुक्षिपार्श्वान्तरांसार्तिः कुक्षावाटोपजन्म च।
सक्थ्नोर्ग्रहो वंक्षणयोर्वृक्कयोः कटिपृष्ठयोः
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ॥ १६ ॥
आमपक्वविदग्धत्वन्तेषां शोफवदादिशेत् ॥ १७ ॥
नाभेरूर्द्ध्वं मुखात् पक्वाः प्रस्रवन्त्यधरे गुदात्।
उभाभ्यां नाभिजो विद्याद् दोषं क्लेदाच्च विद्रधौ ॥ १८ ॥
यथास्वं व्रणवत् तत्र विवर्ज्यः सन्निपातजः।
पक्वो हृन्नाभिबस्तिस्थो भिन्नोऽन्तर्वहिरेव वा।
पक्वश्चान्तः स्रवन् वक्त्रात् क्षीणस्योपद्रवान्वितः ॥ १९ ॥

---

जाते उच्छ्वासस्य रोधः। क्लोम्नि जाते गलग्रह इव गलग्रहो व्याधिविशेषः स्यात् तृष्णा च। हृदि जाते सर्वस्याऽङ्गस्य प्रकर्षेण ग्रहः स्यात्, तथा प्रमोहादयः स्युः। तमकः श्वासविशेषः हृदये घट्टनं व्यथा च। कुक्षौ जाते सति कुक्षिपार्श्वयोरन्तरे अंसयोश्च पीड़ा भवति, तथा कुक्षावाटोपसम्भवः। वङ्क्षणयोर्जाते सक्थ्नोर्ग्रहो निश्चले इव सक्थिनी जायेते। वृक्कयोर्जाते कट्याः पृष्ठस्य च ग्रहः पीड़ा च पार्श्वयोः स्यात्। पायौ गुदे जाते पवनस्यापानाख्यस्य वायोर्निरोधः स्यात् ॥ १४—१६ ॥

आमेति। तेषां विद्रधीनामामत्वं पक्वत्वं विदग्धत्वं पाकातिक्रान्तत्वं शोफवदादिशेत्। शोफानामिव शोफवत्। षष्ठ्यन्ताद् वतिः। तत्र शोफस्य शस्त्रकर्म्मविधौ शोफोऽल्पोऽल्पोष्मरुगित्यादिना ग्रन्थेनामादिलक्षणमुक्तं तथैव विद्रधिषु बोध्यम् ॥ १७ ॥

नाभेरिति। नाभेरूर्ध्वमूर्ध्वप्रदेशेषूत्पन्नाः पक्वाः सन्तो मुखादास्यात् स्रावं स्रवन्ति। नाभेरधरेऽधस्तात् पक्वाः सन्तो गुदात् स्रावं स्रवन्ति। नाभिजः पुनर्विद्रधिरुत्पन्नो गुदास्यादुभयतः स्रावं स्रवन्ति। गुदश्चास्यञ्च गुदास्यं तस्मात्। विद्यादिति। विद्रधौ व्रण इव यथास्वं वातादिदोषं क्लेदाद् विद्यात्। व्रणप्रतिषेधोक्तया रीत्यामस्तुलुङ्गपुलाकाम्बुतुल्यतन्वल्पसंस्रुत्यादिकया वातिकं विद्रधिं विद्यात्। मूत्रकिंशुकभस्माम्बुतैलाभोष्णबहुस्रुतेत्यादिकया च पित्तविद्रधिं विद्यात्। बहुश्वेतघनस्रुत्यादिकया च कफजविद्रधिं विद्यात्। च शब्दान्न केवलं पूर्वोक्ताद् वातात् तत्रातितीव्ररुगित्याद्वैर्वातादिलक्षणाद् वातादिदोषविद्रधिं जानीयात् क्लेदाच्चेत्यर्थः। व्रणवदिति सप्तम्यन्ताद् वतिः। विद्रधाविति सप्तम्यन्तनिर्देशात्। तथाचोक्तं भाष्ये। उपमाने यः संशयः स उपमेयाद् व्यावर्त्तत इति। अथैषां साध्यासाध्यविभागार्थमाह,—तत्रेति। सन्निपातजो यो विद्रधिः स विवर्ज्योऽसाध्यत्वात्। तथा पक्वोऽन्तर्वहिरेव वा भिन्नोऽन्तरन्तर्भिन्नो

एवमेव स्तनसिरा-विवृताः प्राप्य योषिताम् ।
सूतानां गर्भिणीनां वा सम्भवेच्छ्वयथुर्घनः ॥ २० ॥
स्तने सदुग्धेऽदुग्धे वा बाह्यविद्रधिलक्षणः ।
नाड़ीनां सूक्ष्मवक्त्रत्वात् कन्यानान्तु न जायते ॥ २१ ॥
क्रुद्धो रुद्धगतिर्वायुः शोफशूलकरश्चरन् ।
मुष्कौ वङ्क्षणतः प्राप्य फलकोशाभिवाहिनीः ।
प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ॥ २२ ॥
दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ।
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ॥ २३ ॥

---

बहिर्जाश्च भिन्नो हृन्नाभिवस्तिस्थो वर्ज्य एव । पक्वश्चान्तरो हृदादिभ्योऽन्यत्रापि जातो वक्त्रेन स्रवन् क्षीणस्योपद्रवैर्हिक्कादिभिर्युक्तो वर्ज्य एव ॥ १८ । १९ ॥

इदानीं स्तनविद्रधिर्योषितो यथा स्यात् तथा वक्ति,—एवमिति । यथैव विद्रध्याख्यः श्वयथुविशेषो भुक्तैः पर्युषितादिभिस्तैस्तैश्चासृक्प्रदूषणैः । दुष्टत्वङ्मांसमेदोऽस्थिस्नायूसृक्कण्डराश्रयस्तथैव सूतानां गर्भिणीनां वा स्त्रीणां स्तने सदुग्धेऽथवाऽदुग्धे स्तनसिराः विवृताः प्राप्य आक्रम्य बाह्यविद्रधिलक्षणः । बाह्योऽत्र "तत्र तत्राङ्गः" इत्यादिलक्षणो घनो निविड़ो यः श्वयथुः सम्भवेत् स स्तनविद्रधिसंज्ञः । नाड़ीनां स्तनसिराणां सूक्ष्मवक्त्रत्वात् स कन्यानां न जायते ॥ २० । २१ ॥

अथ श्वयथुसामान्यादिदानीं वृद्धिब्रध्नापरनामानं व्याधिं वक्तुमुपक्रमते,—क्रुद्ध इति । वायुः कुपितो वृद्धिं करोति । किं धातुक्षयात् कुपितो नेत्याह,—रुद्धगतिः । रुद्धा गतिर्यस्येति रुद्धगतिः आवृतमार्ग इत्यर्थः । किम्भूतः ? शोफशूलकरः, तथा चरन् देशाद्देशान्तरं गच्छन् । वंक्षणतस्ततोदेशात् मुष्कौ वृषणौ प्राप्य, तथा फलकोशाभिवाहिनीः सिराः प्रकर्षेण पीड़यित्वा । कस्य वृद्धिं करोतीत्याह,—फलकोशयोर्वृषणयोः ॥ २२ ॥

अधुना अस्य व्याधेः संख्यां कुर्वन्नाह,—दोषेति । पृथग् वातपित्तकफैर्दोषैस्तथाऽस्रेण मेदसा मूत्रेण वा तथाऽन्त्रेण वा । एवं दोषास्रमेदोमूत्रान्त्रैः स वृद्ध्याख्यो गदः सप्तधा सप्तप्रकारो मतः । न केवलं वृद्ध्याख्यो यो गदः स एवानिलजो यावन्मूत्रान्त्रजावपि यौ वृद्ध्याख्यौ गदौ तावप्यनिलजौ । नन्वेवं पृथग्निर्देशो मूत्रान्त्रजयोः कर्तुमयुक्तोऽनिलजत्वादित्याह,—हेतुभेदस्तु केवलम् । सत्यम्, मूत्रान्त्रजावपि अनिलाज्जायेते । किन्तु कारणभेदात् मूत्रान्त्रजाविति निर्दिष्टौ । यतो मूत्रान्त्रे अधिष्ठाय वायुर्मूत्रान्त्रजगदौ वृद्ध्याख्यौ करोति । एवं तौ परमार्थतो वातजावपि मूत्रान्त्रजावुच्येते । तथारूपाद्धेतुभूतादुत्पन्नत्वात् । एतच्चोपलक्षणमात्रम्; मेदोरक्तजावपि वृद्धिगदौ दोषजावेव । कफपित्ताभ्यां दूष्यसंज्ञकौ मेदोरक्तौ अधिष्ठाय जातत्वात् । तस्मात् मेदोरक्तहेतुवशात् मेदोरक्तजाविति संज्ञया तावुक्तौ । एवमन्येऽप्येवंरूपा व्याधयो वाच्याः ॥२३॥

वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक्।
पक्वोडुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ॥ २४ ॥
कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक्।
कृष्णस्फोटावृतः पित्त-वृद्धिलिङ्गश्च रक्ततः।
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥ २५ ॥
मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः।
मूत्रकृच्छ्रमधस्ताच्च वलयं फलकोशयोः ॥ २६ ॥
वातकोपिभिराहारैः शीततोयावगाहनैः।
धारणेरणभाराध्व-विषमाङ्गप्रवर्त्तनैः ॥ २७ ॥
क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा।
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्।
कुर्याद् वंक्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ २८ ॥
उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मान-रुक्-स्तम्भवतीं स वायुः।
प्रपीड़ितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः ॥२९॥

---

वातेति। तत्र वाताद वृद्धिर्वातेन पूरिता या दृतिर्भस्त्रा तस्या इव स्पर्शो यस्य स एवम्भूतो भवति। तथा रूक्षस्तथा अहेतुर्निमित्तं विना रुक् पीड़ा यस्मिन् स एवम्। पक्वेति। पित्ताद वृद्धिः पक्वोडुम्बरफलतुल्यो दाहादिमांश्च स्यात्। कफादिति। कफाद वृद्धिः शीतादियुक्तः स्यात्। कृष्णेति। रक्ताद वृद्धिः कृष्णस्फोटैश्चितः पित्तवृद्धिलिङ्गश्च। पित्तवृद्धिलिङ्गानीव लिङ्गानि यस्य स एवम्। सप्तम्युपमानपूर्वस्येत्यादिनोत्तरपदलोपी समासः। कफेति। मेदसा वृद्धिः कफवदिति कार्ये कारणोपचारात् कफकार्यो रोगः कफ उक्तः। विशेषमत्राह,—मृदुस्तालफलोपम इति ॥ २४। २५ ॥

मूत्रेति। मूत्रजो वृद्धिर्मूत्रधारणशीलस्य जलपूर्णभस्त्रेव स्यात्। स तु मूत्रजो वृद्धिर्गच्छतो व्रजतः क्षोभं याति सरुक् मृदुश्च स्यात्, तथा मूत्रकृच्छ्रं स्यात्। फलकोशयोरधस्ताच्च वलयं कटकं स्यात् ॥ २६ ॥

वातकोपिभिरिति। वातकोप्याहारादिभिरन्यैश्च पूर्वोक्तैः क्षोभणैः कोपनैः क्षुभितः कुपितो यदा अल्पस्यान्त्रस्यावयव एकदेशस्तं स्वनिवेशात् स्वस्थानाद विगुणीकृत्य अधो नयेत्तदा पवनो वंक्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं कुर्यात्। उपेक्ष्यमाणस्येत्यादि। उपेक्ष्यमाणस्याचिकित्स्यमानस्य वृद्ध्याख्यस्य गदस्य स पूर्वनिर्दिष्टो वायुर्मुष्कयोर्वृद्धिं वर्द्धनं कुर्यात्। किम्भूताम्? साध्मान-रुक्-स्तम्भवतीम्। तथा प्रपीडितो वाह्यादन्तः

अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृति: ॥ ३० ॥
रूक्षकृष्णारुण-शिरा-तन्तु-जाल-गवाक्षित:।
गुल्मोऽष्टधा पृथग्दोषै: संसृष्टैर्निचयं गतै:।
आर्त्तवस्य च दोषेण नारीणां जायतेऽष्टम: ॥ ३१ ॥
ज्वरच्छर्द्यतिसाराद्यैर्वमनाद्यैश्च कर्म्मभि:।
कर्शितो वातलान्यत्ति शीतं वाम्बु बुभुक्षित: ॥ ३२ ॥
य: पिबत्यनु चान्नानि लङ्घनं प्लवनादिकम्।
सेवते देहसंक्षोभि च्छर्दिं वा समुदीरयेत् ॥ ३३ ॥
अनुदीर्णानुदीर्णान् वा वातादीन्न विमुञ्चति।
स्नेहस्वेदावनभ्यस्य शोधनं वा निषेवते ॥ ३४ ॥
शुद्धो वाऽऽशु विदाहीनि भजते स्यन्दनानि वा।

---

स्वनवान् सशब्द: प्रयाति। मुक्तोऽप्रपीड़ित: प्रध्मापयन् पुन: एति आगच्छति। उपजातिर्वृत्तम्। अयमेवंलक्षणोऽन्त्रवृद्धिरसाध्यो न पुन: सर्व्व एवेति अयं शब्देन द्योतयति। किमस्य लक्षणमित्याह,—वातवृद्धिसमाकृति:। वातपूर्णदृतिस्पर्श इत्यादि-लक्षणलक्षित: ॥ २७—३० ॥

व्रध्नाख्यव्याधेरनन्तरं शोफसामान्याद् गुल्मस्यावसर इति तं लक्षयितुमाह,—रूक्षेति। सर्व्वगुल्मानां सामान्यलक्षणं रूक्षकृष्णेत्यादिग्रन्थनिर्द्दिष्टम्। गवाक्षितो निरन्तराक्रान्त:। गुल्मोऽष्टधेति संख्यारूपा सम्प्राप्ति:। तदेवाऽष्टधात्वं प्रतिपादयितुमाह,—पृथग् दोषै-र्वातपित्तकफैस्त्रय:। तथा संसृष्टै: संसर्गेण त्रय:। निचयं गतै: सन्निपातेनैक:। तथा अष्टमो नारीणां चार्त्तवस्य दोषेण दुष्टतया स्यात् ॥ ३१ ॥

ज्वर इति। ज्वरच्छर्द्दीत्यादि यावद् भजते स्यन्दनानिवेति निदानम्। अतीसारा-द्यैरित्यादिशब्देन ग्रहण्यादयो गृह्यन्ते। वमनाद्यैरित्यत्र च विरेचनास्थापनादय:। ज्वरादिभिर्व्याधिभिर्वमनादिभिश्च कर्शितो यो वातलान्यन्नानि भुङ्क्ते, अथवा बुभुक्षितो भोजनं विनैव शीतमपक्वमम्बु य: पिबति। तथा चोक्तम्,—"अनवस्थितदोषाग्ने-र्व्याधिक्षीणबलस्य च। नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत्" इति। अनु चान्नानि भोजनादनन्तरं लङ्घनादिकं यत् कर्म्म देहसंक्षोभि शरीरसंक्षोभोत्पादकं तत् सेवते। छर्द्दिं वा योऽनुदीर्णामनुत्क्लिष्टां समुदीरयेत् समन्तादूर्द्ध्वं नयेत्। उदीर्णान् वातादीन् वातमूत्रपुरीषादीनागतान् न विमुञ्चति। तथा य: कश्चित् स्नेहस्वेदावनभ्यस्य पुन: पुनरकृत्वा शोधन-वमन-विरेचनादि निषेवते, अथवा शुद्ध: कृतवमनविरेचन आशु समनन्तरमेव विदाहीन्यन्नपानानि भजते सन्तापनान्यन्नपानानि भुङ्क्ते। पच्यमाना-न्यन्नपानानि विदाहावस्थां प्राप्य यान्यामाशय एव चिरमवतिष्ठन्ते तानि विदाही-न्युच्यन्ते, अथवा कृतवमनविरेचनोऽनन्तरमेव स्यन्दनानि स्रुतिरूपप्रक्षेपकारीण्यन्नपानानि

वातोल्बणास्तस्य मला: पृथक् क्रुद्धा द्विशोऽथवा ॥ ३५ ॥
सर्वे वा रक्तयुक्ता वा महास्रोतोऽनुशायिन: ।
ऊर्ध्वाधोमार्गमावृत्य कुर्वते शूलपूर्वकम् ।
स्पर्शोपलभ्यं गुल्माख्यमुत्प्लुतं ग्रन्थिरूपिणम् ॥ ३६ ॥
कर्शनात् कफविट्पित्तैर्मार्गस्यावरणेन वा ।
वायु: कृताश्रय: कोष्ठे रौक्ष्यात् काठिन्यमागत: ॥ ३७ ॥
स्वतन्त्र: स्वाश्रये दुष्ट: परतन्त्र: पराश्रये ।
पिण्डितत्वादमूर्त्तोऽपि मूर्त्तत्वमिव संश्रित: ।
गुल्म इत्युच्यते बस्ति-नाभि-हृत्-पार्श्व-संश्रय: ॥ ३८ ॥

---

भजते । तस्य मला वातादयो गुल्मसंज्ञं व्याधिं कुर्व्वते । कीदृशा:, वातोल्बणा वातकारणा: । नहि पवनकारणमन्तरेण श्लेष्मपित्तरक्तानां सङ्घट्टनं घटते । तस्मात्पित्तादीनामुत्पत्तिकारणानां वातस्य च पित्तादिगुल्मेषु गुल्मनिष्पादनं प्रति तुल्यकच्चतामनेन विशेषणेन प्रतिपादयत्याचार्य्य: । यदि पुनरुल्बणोऽधिक इति व्याख्यायते, तदानीं पित्तगुल्मेऽप्यधिकत्वं वातस्येति वातगुल्मपित्तगुल्मादीनां विषयविभागो न स्यात् । तस्माद वातकारणत्वं वातोल्बणा इत्यनेन विवक्षितमिति वेद्यम् । किम्भूता दोषा:? क्रुद्धा: कुपिता: । कथम् ? पृथक् प्रत्येकं कृत्वा । अथवा द्विशो द्वौ कृत्वा संसर्गस्था इत्यर्थ: । सर्वे वा समस्ता रक्तयुक्ता वेति । वाशब्द: समुच्चये । रक्तयुक्ताश्चेत्यर्थ: । तथा च खरणादेऽभिहितम्,—"वायु: क्रुद्ध: कफं रक्तं पित्तं चादाय पिण्डितम् । गुल्मं कुर्यात्" इत्यादि । यावद रक्तपित्तकफा वातपिण्डिता गुल्म उच्यत इति, तथा महास्रोतोऽनुशायिन: । महास्रोत आमपक्वाशयस्थानं तदनुशेरते महास्रोतोऽनुशायिन: । किं कृत्वा गुल्मं निष्पादयन्तीत्याह,—ऊर्ध्वाऽधोमार्गमावृत्यापूर्य्य । अनेनास्य सम्प्राप्तिरुक्ता । शूलं पूर्वं यस्मिन् स एवं तं शूलपूर्वकम् । पूर्वं शूलं कृत्वा पश्चाद्दोषा गुल्मं कुर्वन्ति । अनेनास्य प्राग्रूपमुक्तम् । तथा स्पर्शोपलभ्यमस्पृश्यादिसदृशम् । तथा उत्प्लुतमूर्द्धं गतम् । तथा ग्रन्थिरूपिणं ग्रन्थ्याकारमित्यनेनास्य संस्थानमुक्तम् ॥ ३२—३६ ॥

अधुना वातगुल्मं लक्षयति,—कर्शनादिति । कर्शनाद्धातुक्षयाद्वायुर्दुष्ट: कदाचित् कफविट्पित्तै: कृतेन मार्गस्यावरणेन रोधेन कोष्ठे आमपक्वाशयाख्ये कृताश्रयो गृहीतास्पदस्तथा रौक्ष्यात् कारणात् काठिन्यमागत: । पिण्डितत्वं प्राप्त: स्वाश्रये पक्वाशयस्थाने दुष्ट: स्वतन्त्र: पराश्रय आमाशयस्थाने दुष्ट: परतन्त्र: पित्तकफयोरायत्त: पिण्डितत्वात् कारणात् स्पर्शोपलभ्यमान: सन्नमूर्त्तोऽप्यकठिनोऽपि मूर्त्तत्वमिव काठिन्यमिव संश्रित: सम्पन्नो गुल्म इत्यभिधीयते तन्त्रकृद्भिरिति शेष: । बस्तिनाभिहृत्पार्श्वसंश्रय: । बस्त्यादि संश्रय आधारो यस्य स तथा ॥ ३७ ॥

वातान्मन्या-शिरः-शूलं ज्वरप्लीहान्त्रकूजनम् ।
व्यधः सूच्येव विट्सङ्गः कृच्छ्रादुच्छ्वसनं मुहुः ॥ ३९ ॥
स्तम्भो गात्रे मुखे शोषः कार्श्यं विषमवह्निता ।
रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्य च ॥ ४० ॥
अनिरूपितसंस्थान-स्थानवृद्धि-क्षयव्ययः ।
पिपीलिकाव्याप्त इव गुल्मः स्फुरति तुद्यते ॥ ४१ ॥
पित्ताद्दाहोऽम्लको मूर्छा-विड्भेद-स्वेद-तृड्-ज्वराः ।
हारिद्रत्वं त्वगाद्येषु गुल्मश्च स्पर्शनासहः ।
दूयते दीप्यते सोष्मा स्वस्थानं दहतीव च ॥ ४२ ॥
कफात् स्तैमित्यमरुचिः सदनं शिशिरज्वरः ।
पीनसालस्य-हृल्लास-कास-शुक्लत्वगादयः ।
गुल्मोऽवगाढः कठिनो गुरुः सुप्तः स्थिरोऽल्परुक् ॥ ४३ ॥
स्वदोषस्थानधामानः स्वे स्वे काले च रुक्कराः ।
प्रायस्त्रयस्तु द्वन्द्वोत्था गुल्माः संसृष्टलक्षणाः ॥ ४४ ॥
सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ।

---

वातादिति । वाताद् गुल्मे सति मन्याशूलादयो भवन्ति, तथा चलत्वाच्च वायोर्गुल्मोऽनिरूपितसंस्थानस्थानवृद्धिक्षयव्ययः स्यात् । अनिरूपिताः संस्थानादयो यस्य स एवम् । संस्थानमाकारः ; स्थानमाश्रयः ; तथा पिपीलिकाभिर्व्याप्तश्चित इव गुल्मः स्फुरति तुद्यते च । तुद्यत इति कर्म्मकर्त्तरि ॥ ३९—४१ ॥

पित्तादिति । पित्ताद् गुल्मे दाहादयः स्युः, तथा त्वङ्नखादिषु हारिद्रो वर्णः स्यात् । गुल्मश्च स्पर्शनं न सहते स्पर्शनासहः स्यात्, तथा दूयते उपतप्यते ; दीप्यते ज्वलतीव । सोष्मा च ; स्वस्थानं गुल्माश्रितमास्पदं दहतीव तप्तायःपिण्ड इव । दूयत इति दूङ्परितापे दिवादि ॥ ४२ ॥

कफादिति । कफाद् गुल्मे सति स्तैमित्यादयः स्युः । गुल्मोऽवगाढादियुक्तः स्यात् ॥ ४३ ॥

स्वेति । ते च गुल्माः स्वदोषस्थानधामानो दोषस्य वातादेः स्थानं पक्वाशयादि स्वमात्मीयमात्मीयं दोषस्थानं तद्धाम स्थानं येषां वातपित्तकफगुल्मानां ते प्रायो बाहुल्येन स्वदोषस्थानधामानः । तथा स्वकाल आत्मीये वयोऽहोरात्रिभुक्तानामन्तमध्यादिलक्षणे यथासंख्यं वातपित्तकफगुल्मा रुक्कराः शूलकरा भवन्ति । त्रय इति । द्वन्द्वोत्थाः संसर्गजाः गुल्मास्त्रयः संसृष्टलक्षणाः स्युः ॥ ४४ ॥

सोऽसाध्यो रक्तगुल्मस्तु स्त्रिया एव प्रजायते ॥ ४५ ॥
ऋतौ वा नवसूता वा यदि वा योनिरोगिणी ।
सेवते वातलानि स्त्री क्रुद्धस्तस्याः समीरणः ॥ ४६ ॥
निरुणद्ध्यार्त्तवं योन्यां प्रतिमासमवस्थितम् ।
कुक्षिं करोति तद्गर्भ-लिङ्गमाविष्करोति च ।
हृल्लास-दौहृद-स्तन्य-दर्शनं क्षामतादिकम् ॥ ४७ ॥
क्रमेण वायुसंसर्गात् पित्तयोनितया च तत् ।
शोणितं कुरुते तस्या वातपित्तोत्थगुल्मजान् ॥ ४८ ॥
रुक्-स्तम्भ-दाहातीसार-तृड्-ज्वरादीनुपद्रवान् ।
गर्भाशये च सुतरां शूलं दुष्टासृगाश्रये ।
योन्याश्च स्राव-दौर्गन्ध्य-तोद-स्फुरण-वेदनाः ॥ ४९ ॥
न चाङ्गैर्गर्भवद् गुल्मः स्फुरत्यपि तु शूलवान् ।
पिण्डीभूतः स एवास्याः कदाचित् स्पन्दतेऽचिरात् ।
न चास्या वर्द्धते कुक्षिर्गुल्म एव तु वर्द्धते ॥ ५० ॥

---

सर्व्वंज इति । सर्वजस्त्रिदोषजो गुल्मस्तीव्ररुगादियुक्तः सोऽसाध्यः । रक्तगुल्म इति । रक्तगुल्मः पुनः स्त्रिया एव प्रजायते ॥ ४५ ॥

तत्रैवोपपत्तिमाह,—ऋताविति । ऋतावार्त्तवकाले नवप्रसूता वा योनिरोगिणी च स्त्री वातलान्यन्नपानानि यदि सेवते तस्याः स्त्रियाः समीरणः कुपितो योन्यां प्रतिमासं यदवस्थितमार्त्तवं तदुपरुणद्धि । तदार्त्तवं कुक्षिं करोति गर्भलिङ्गञ्चाविष्करोति प्रकटयति । गर्भलिङ्गमिव लिङ्गं यस्येति सप्तम्युपमानपूर्व्वस्येति बहुव्रीहिरुत्तरपदलोपश्च । अथ तदेव गर्भलिङ्गमाह,—हृल्लासेत्यादि । मुनिस्तु रक्तगुल्मे पादयोः श्वयथुर्भवतीत्युचे । आदिशब्देन मूर्च्छादीनां ग्रहणम् ॥ ४६ । ४७ ॥

क्रमेणेति । क्रमेणानन्तरं वायुसंसर्गात् मरुत्संश्लेषात्तथा पित्तयोनितया च पित्तस्य कारणत्वेन तच्छोणितं वातपित्तोत्थगुल्मजानुपद्रवान् कुरुते रुक्-स्तम्भ-दाहातीसार-तृड्-ज्वरादीन् । अनया च भङ्ग्या वातपित्तगुल्मयोरुपद्रवा अप्युक्ता भवन्ति । गर्भाशय-इत्यादि । गुल्मश्च गर्भाशये सुतरां शूलं करोति । किम्भूते ? दुष्टस्यासृज आश्रये आधारभूते । योन्याः च स्रावादीन् कुरुते ॥ ४८ । ४९ ॥

गर्भलक्षणाद् रक्तगुल्मस्य विलक्षणं लक्षणमाह,—नेति । न च गर्भ इवाङ्गैः पाण्यादिभिरवयवैः स्फुरति निःस्पन्दते गुल्मोऽङ्गाभावादपि तु शूलवान् । स एव गुल्मः पिण्डीभूतः कदाचिच्चिरेणास्याः स्पन्दते न गर्भवच्छीघ्रम्, तथा गर्भेऽन्तस्थिते कुक्षिरस्या वर्द्धते । गुल्मे त्वन्तःस्थिते स एव वर्द्धते गुल्मो न कुक्षिः । इति गर्भरक्तगुल्मयोर्लक्षणभेदः ॥ ५० ॥

स्वदोषसंश्रयो गुल्मः सर्वो भवति तेन सः।
पाकं चिरेण भजते नैव वा विद्रधिः पुनः ॥ ५१ ॥
पच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयत्वतः।
अतः शीघ्रविदाहित्वाद् विद्रधिः सोऽभिधीयते ॥ ५२ ॥
गुल्मेऽन्तराश्रये बस्ति-कुक्षि-हृत्-प्लीह-वेदनाः।
अग्नि-वर्ण-बल-भ्रंशो वेगानां चाप्रवर्त्तनम् ॥ ५३ ॥
अतो विपर्ययो बाह्ये कोष्ठाङ्गेषु तु नातिरुक्।
वैवर्ण्यमवकाशस्य बहिरुन्नतताधिकम् ॥ ५४ ॥
साटोपमत्युग्ररुजमाध्मानमुदरे भृशम्।
ऊर्द्ध्वाधो वातरोधेन तमानाहं प्रचक्षते ॥ ५५ ॥

---

अथ गुल्मविद्रध्योर्लक्षणमिदं कथयति,—स्वेति। सर्वो गुल्मः स्वदोषः संश्रया यस्य स एवम्। येन येन दोषेण वाताद्यन्यतमेन अथवा द्वन्द्वस्वरूपेण सन्निपातेन अन्येन वा गुल्मो जन्यते स दोषस्तस्य गुल्मस्याश्रयः। तदेवं वातगुल्मस्य वात एवाश्रयो न तस्य पित्तादयः। पित्तादिकृतानां त एवाश्रया न पवन आश्रयः। एवं स्वदोषसंश्रयो गुल्मः सर्वो भवति। तेन स्वदोषसंश्रयाख्येन कारणेन गुल्मश्चिरेण कालेन पाकं भजते, एतच्च पित्तगुल्मं प्रति प्रायेण तथैकीयमतेनोक्तम्। अतएवाह,—नैव वेति। अथवा गुल्मः पाकं न भजत एव। विद्रधिस्तु शीघ्रमचिरेणैव कालेन पाकं भजतेऽत्यर्थं दुष्टरक्ताश्रयत्वात्। अतः शीघ्रविदाहित्वात् कारणादसौ विद्रधिरभिधीयते। तथा चागमः,—"मांसशोणितभूयस्त्वात् पाकं गच्छति विद्रधिः। मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति" ॥ तथा प्रायेण वातात्मकः सर्वो गुल्मो जायते। वात एवामूर्त्तोऽपि मूर्त्तत्वमिव संश्रितो गुल्म इत्युच्यते। अत एव वातस्यैव सर्वगुल्मकारणं प्रति प्राधान्यम्, तस्माद् गुल्मस्य पाकानुपपत्तिः। अथ गुल्मस्य बाह्याभ्यन्तरलक्षणमाह,—गुल्मेऽन्तराश्रयेऽभ्यन्तरे बस्त्यादिवेदनादयः स्युः, तथा अग्न्यादिभ्रंशो विनाशो वेगानाञ्च प्रवर्त्तनं न भवति। अतोऽस्माद् बाह्ये विपर्ययो वैपरीत्यं। यथाऽग्न्यादिभ्रंशाभावो वेगानाञ्च प्रवर्त्तनं भवति, तथा बस्तिहृदादिषु कोष्ठाङ्गेष्वतिरुक् न भवति तथा अवकाशस्य गुल्मप्रदेशस्य वैवर्ण्यं शरीरादन्यवर्णत्वम्, बहिर्बाह्यभागे उन्नतत्वमधिकं भवति ॥ ५१—५४ ॥

गुल्मानामानाहभूयिष्ठत्वादानाहलक्षणमाह,—साटोपमिति। ऊर्ध्वाधो वातरोधेन कारणभूतेनोदरे भृशमाध्मानं यत् तमानाहं प्रचक्षते मुनय इति शेषः। किम्भूतम्? साटोपं सशब्दं तथा अत्युग्रा रुक् पीड़ा यत्र तदेवम्। सुश्रुतेन प्रत्याध्मानस्यापि लक्षणमभ्यधायि,—"विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्। प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम्" इति ॥ ५५ ॥

घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्द्ध्वं समुन्नतः।
आनाहलिङ्गस्तिर्यक् तु प्रत्यष्ठीला तदाकृतिः॥ ५६॥
पक्वाशयाद् गुदोपस्थं वायुस्तीव्ररुजः प्रयान्।
तूनी प्रतूनी तु भवेत् स एवातो विपर्यये॥ ५७॥
उद्गारबाहुल्य-पुरीषबन्ध-तृप्त्यक्षमत्वान्त्रविकूजनानि।
आटोपमाध्मानमपक्तिशक्तिमासन्नगुल्मस्य वदन्ति चिह्नम्॥५८

इत्यष्टाङ्गहृदये निदानस्थाने एकादशोऽध्यायः॥ ११॥

---

## द्वादशोऽध्यायः।

अथात उदरनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥
रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि तु।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात्॥ १॥

---

घन इति। निबिड़ो यो ग्रन्थिरष्ठीलयोपमीयते तथोर्द्ध्वं समुन्नतस्तथा आनाहलिङ्गो यः स ग्रन्थिरानाहलिङ्गोऽष्ठीला भण्यते। तिर्य्यक् च यो ग्रन्थिरूर्द्ध्वं समुन्नतस्तदाकृतिरष्ठीलासदृशः स ग्रन्थिः प्रत्यष्ठीलोच्यते॥ ५६॥

तूनीप्रतून्यौ लक्षयति, पक्वाशयादिति। गुदं चोपस्थश्च गुदोपस्थम्। पक्वाशयात्ततो देशाद् वायुस्तीव्ररुजः सन् गुदोपस्थं प्रयान् गच्छन् तूनीत्युच्यते। स एव वायुरतो विपर्य्यये गुदोपस्थात् पक्वाशयं गच्छन् तीव्ररुजः सन् प्रतूनीति गद्यते॥ ५७॥

उद्गारेति। उद्गारबाहुल्यादीनासन्नगुल्मस्य चिह्नं प्राग्रूपञ्च वदन्ति॥ ५८॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्गसुन्दराख्यायां विद्रधिवृद्धिगुल्मनिदानं नामैकादशोऽध्यायः॥ ११॥

---

अथोदरनिदानमारभ्यते। यतोऽनन्तरेऽध्याये आनाहलक्षणमुक्तम्, उदरञ्च कुक्षिमाध्माप्याऽनह्य दोषाः कुर्वते, तस्मादतोऽनन्तरमुदरनिदानमुच्यत इत्याह,—अथात इति। रोगा इति। सर्व्वेऽपि ज्वरातीसारादयो रोगा मन्देऽग्नौ सति जायन्तेऽतिशयेन पुनरुदराणि। अन्येभ्यश्चोदरहेतुभ्यो मन्दाग्नित्वं प्रधानमुदराणां कारणमिति मन्देऽग्नावित्यनेन प्रागुद्दिष्टेन द्योतयति,—अजीर्णादित्यादि। चतुर्विधादजीर्णादामविष्टब्ध-विदग्ध-रसशेषाख्यात् तथा मलिनैश्चान्नैः पूतिपर्य्युषितसङ्कीर्णादि-लक्षणैस्तथा मलसञ्चयाच्चिरकालसम्भृताद् दोषाणां प्रचयादुदराणि जायन्ते॥ १॥

ऊर्द्ध्वाधो धातवो रुद्ध्वा वाहिनीरम्बुवाहिनीः ।
प्राणाग्न्यपानान् संदूष्य कुर्युस्त्वङ्मांससन्धिगाः ॥ २ ॥
आध्माप्य कुक्षिमुदरमष्टधा तच्च भिद्यते ।
पृथग् दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ ३ ॥
तेनार्त्ताः शुष्कताल्वोष्ठाः शूनपादकराननाः ।
नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः ॥ ४ ॥
स्युः प्रेतरूपाः पुरुषा भाविनस्तस्य लक्षणम् ।
क्षुन्नाशोऽन्नं चिरात् सर्वं सविदाहञ्च पच्यते ॥ ५ ॥
जीर्णाजीर्णं न जानाति सौहित्यं सहते न च ।
क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते ॥ ६ ॥
वृद्धिर्विशोऽप्रवृत्तिश्च किञ्चिच्छोफश्च पादयोः ।
रुग् बस्तिसन्धौ ततता लघ्वल्पाभोजनैरपि ॥ ७ ॥
राजीजन्म बलीनाशो जठरे जठरेषु तु ।
सर्वेषु तन्द्रा सदनं मलसङ्गोऽल्पवह्निता ।
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवः ॥ ८ ॥

---

अधुना सम्प्राप्तिमेषामाह,—ऊर्द्ध्वाध इति । अम्बु वाहिनीर्वाहिनीर्जलवाहीनि स्रोतांसि ऊर्द्ध्वाधो रुद्ध्वा धातवो वातादय उदरं कुर्युः । कीदृशाः ? त्वक् च मांसञ्च त्वङ्मांसे तयोः सन्धिरन्तरं तत्र गच्छन्तीति त्वङ्मांससन्धिगास्तत्रस्था इत्यर्थः । किं कृत्वा ? कुक्षिमाध्माप्याऽऽनह्य, तथा प्राणश्चाग्निश्चापानश्च तान् प्राणाग्न्यपानान् सन्दूष्य दूषयित्वा । प्रकृत्या मन्दोऽग्निः पुनर्वातादिभिः सन्दूषितो जठरं करोतीत्यर्थः । अष्टधेति । तच्चोदरमष्टधा स्यात् । पृथग् दोषैर्वातपित्तकफैस्त्रयः । समस्तैः सन्निपातेन चैकः । प्लीहोदरं बद्धोदरं क्षतोदरं जलोदरमिति । वातादिकृतान्यपि प्लीहाद्युदराणि प्लीहादिनिमित्तसंज्ञयोक्तानि । यथा वृद्ध्राख्यो रोगः संज्ञाविशेषश्च चिकित्साविशेषप्रतिपत्त्यर्थः ॥ २।३॥
तेनेति । तेनोदरेणार्त्ताः पीड़िताः पुरुषाः शुष्कताल्वोष्ठा शूनपादादयो नष्टचेष्टादयः कृशादयश्च स्युः । भाविन इति । तस्य भाविनो भविष्यतो लक्षणं क्षुन्नाशादिकं स्यात्, तथा बस्तिसन्धौ रुक् शूलं, तथा लघुभोजनैरल्पभोजनैरभोजनैरपि बस्तिसन्धौ ततता विस्तीर्णता अध्माततेत्यर्थः । तथा राजीनां जन्म सम्भवो बलीनाञ्च नाशो जठरे स्यात् । जठरेष्विति । जठरेषु जठराख्येषु सर्वेषु तु रोगेषु तन्द्रा आलस्यं तथा सदनं देहस्य भवति । तथा मलस्य सङ्गः पुरीषस्याप्रवृत्तिः, तथाऽल्पवह्नित्वम्, तथा दाहः श्वयथुराध्मानञ्च अन्तेऽवसाने सलिलसम्भवः ॥ ४—८॥

सर्वं त्वतोयमरुणमशोफं नातिभारिकम्।
गवाक्षितं सिराजालैः सदा गुड़गुड़ायते ॥ ९ ॥
नाभिमन्त्रञ्च विष्टभ्य वेगं कृत्वा प्रणश्यति।
मारुतो हृत्-कटी-नाभि-पायु-वङ्क्षण-वेदनः ॥ १० ॥
सशब्दो निश्चरेद् वायुर्विड् बन्धो मूत्रमल्पकम्।
नातिमन्दोऽनलो लौल्यं नच स्याद् विरसं मुखम् ॥ ११ ॥
तत्र वातोदरे शोफः पाणि-पान्मुष्क-कुक्षिषु।
कुक्षि-पार्श्वोदर-कटी-पृष्ठ-रुक्-पर्वभेदनम् ॥ १२ ॥
शुष्ककासाङ्गमर्दोऽधोगुरुता मलसंग्रहः।
श्यावारुणत्वगादित्वमकस्माद् वृद्धिह्रासवत् ॥ १३ ॥
सतोदभेदमुदरं तनु-कृष्ण-सिरा-ततम्।
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च।
वायुश्चात्र सरुक्शब्दो विचरेत् सर्वतो गतिः ॥ १४ ॥
पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता।
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ १५ ॥

---

अतोयमुदरं किं लक्षणमित्याह,—सर्वमिति। सर्वमुदरमतोयं जलोदरतामप्राप्तं वर्णतोऽरुणं तथाऽशोफं शोफेनानाक्रान्तं तथा नातिभारिकं नातिशयेन गुरु तथा शिराजालैः शिरासमूहैर्जालाकृतिभिर्गवाक्षितं निरन्तरमाक्रान्तं सदा सर्वकालं गुड़गुड़ायते गुड़गुड़ ईदृशमव्यक्तं शब्दमाचरति। तथा मारुतो नाभिं विष्टभ्य स्तब्धतां नीत्वा तथा अन्त्रञ्च विष्टभ्य वेगं कृत्वा हृत्-कटी-नाभि-पायु-वङ्क्षण-वेदनेत्येवंरूपमात्मीयं संरम्भं प्रदर्श्यानन्तरं प्रणश्यति नोपलभ्यते, तथा सशब्दो वायुरन्तर्निश्चरेत् निर्याति। तथा विड्बन्धस्तथा मूत्रमतिशयेनाल्पं स्यान्नातिमन्दोऽग्निस्तथा लौल्यं गर्द्धिश्च विरसं मुखं स्याद् यत्र तत् अतोयसम्भवं वेद्यम्। अस्माच्च विपरीतलक्षणं सामर्थ्यात् सतोयम् ॥ ९—११ ॥

तत्रेति। तत्र तेषूदरेषु मध्ये वातोदरे शोफः पाण्यादिषु तथा कुक्ष्यादिरुक् पर्व्वभेदनं तथा शुष्ककासादयः स्युः। अकस्मान्निमित्तं विना उदरं वृद्धिह्रासयुतं स्यात् तथा सतोदभेदं तथा तनुकृष्णसिराभिस्ततं व्याप्तमाहतञ्च तदुदरमाध्मातदृतिरिव शब्दं करोति। अत्र च वातोदरे वायुः सरुक् सशब्दः सर्वतोगतिश्च सन् विचरेत् भ्रमति ॥ १२—१४ ॥

पित्तोदरे इति। पित्तोदरे ज्वरादयः स्युः, तथा त्वगादौ पीतत्वं भवति। जठरं हरिद्वर्णं तथा पीतताम्राभिः सिराभिर्नद्धं [illegible] सस्वेदं सोष्म च स्यात्। दह्यते तप्यते

पीत-ताम्र-सिराऽऽनद्धं सस्वेदं सोष्म दह्यते ।
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १६ ॥
श्लेष्मोदरेऽङ्गसदनं स्वाप-श्वयथु-गौरवम् ।
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ॥ १७ ॥
उदरं स्तिमितं श्लक्ष्णं शुक्लराजीततं महत् ।
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १८ ॥
त्रिदोषकोपनैस्तैस्तैः स्त्रीदत्तैश्च रजोमलैः ।
गरदूषीविषाद्यैश्च सरक्ताः सञ्चिता मलाः ॥ १९ ॥
कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्च्छाभ्रमान्वितम् ।
कुर्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ।
बाधते तच्च सुतरां शीतवाताभ्रदर्शने ॥ २० ॥
अत्याशितस्य संक्षोभात् यानयानादिचेष्टितैः ।
अतिव्यवाय-भाराध्व-वमन-व्याधि-कर्शनैः ॥ २१ ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद्विवर्द्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत् ॥ २२ ॥

---

च, तथा धूमायात, तथा मृदुरकठिनः स्पर्शो यस्य तदेवम्, तथा क्षिप्रपाकं स्यात् । प्रदूयते उपतप्यते च ॥ १५ । १६ ॥

श्लेष्मोदरेति । श्लेष्मोदरेऽङ्गसादादयः सुः । तथा उदरं स्तिमितं निश्चलं तथा श्लक्ष्णं कोमलस्पर्शं तथा शुक्लराजीभिस्ततं व्याप्तं तथा वृहत् तथा चिराभिवृद्धि कठिनञ्च तथा शीतस्पर्शम् तथा गुरु तथा स्थिरं न तु चलम् ॥ १७ । १८ ॥

अधुना सन्निपातोदरं लक्षयितुमाह,—त्रिदोषेति । मला वातादयः सरक्ताः सञ्चितास्त्रिलिङ्गं त्रिदोषलक्षणं तथा शोषादियुक्तं तथा शीघ्रपाकमाशुजरणमुदरं कुर्युः । किम्भूतैः सञ्चिताः ? त्रिदोषकोपनैः सङ्कीर्णादिभोजनैस्तैस्तैः सर्वरोगनिदानोक्तैस्तथा स्त्रिया दत्तैः रजोमलैः तथा गरेण दूषीविषाद्यैश्च । आदिशब्देन विरुद्धाभ्यवहारादेर्ग्रहणम् । अनेनास्य हेतुविशेषकथनम् । कीदृशा दोषाः ? कोष्ठं प्राप्याश्रित्य विकुर्वाणा विक्रियां याताः तच्च जठरं सुतरां शीतवाताभ्रदर्शने बाधते । इत्यनेनास्य विशेषलक्षणं कथितम् ॥ १९ । २० ॥

प्लीहोदरादीन्यधुना लक्षयति,—अत्याशितस्येति । अतिदग्धस्य नरस्य यानगमनादिचेष्टितैर्यः संक्षोभस्तस्मात् तथाऽतिव्यवायादिभिः कर्शनैः प्लीहा स्थानात् स्वाशयाच्च्युतो विवर्द्धते विशेषेण वृद्धिं गच्छति । किम्भूतः प्लीहा ? वामपार्श्वाश्रितः । अथवा रसादिभ्यो धातुभ्यः शोणितं विवृद्धं वृद्धिहेतुभिरधिकं मत्वा वृद्धिं प्रापितं समनन्तरं तं

सोऽष्ठीलेवातिकठिनः प्राक्ततः कूर्म्मपृष्ठवत् *।
क्रमेण वर्द्धमानश्च कुक्षावुदरमावहेत्॥ २३॥
श्वास-कास-पिपासास्य-वैरस्याध्मान-रुग्-ज्वरैः।
पाण्डुत्व-छर्दि-मूर्च्छार्त्ति-दाह-मोहैश्च संयुतम्।
अरुणाभं विवर्णं वा नीलहारिद्रराजिमत्॥ २४॥
उदावर्त्तरुगानाहैर्मोह-तृड्-दहन-ज्वरैः।
गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात्॥ २५॥
प्लीहवद्दक्षिणात् पार्श्वात् कुर्याद् यकृदपि च्युतम्॥ २६॥
पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे।
दुर्नामभिरुदावर्त्तैरन्यैर्वान्त्रोपलेपिभिः॥ २७॥
वर्च्चःपित्तकफान् रुद्ध्वा करोति कुपितोऽनिलः।
अपानो जठरं तेन स्युर्दाह-तृड्-ज्वर-क्षवाः॥ २८॥

---

प्लीहानं स्वस्थानच्युतमच्युतं वा विशेषेण वर्द्धयेत् स्वप्रमाणादाधिक्यं जनयेत्। स प्लीहाऽष्ठीलेवातिकठिनः प्रागभूत्वा ततोऽनन्तरं कच्छपपृष्ठाकृतिः क्रमेण सहसैव वर्द्धमान आधिक्यं गच्छन् कुक्षौ स्वीये स्थाने उदरं विदध्यात्। कीदृशम्? श्वासादिभिर्दाहमोहपर्यन्तैः संयुतम्। तथाऽरुणाभमरुणवर्णं अथवा विवर्णमनिश्चितवर्णं, तथा नीलहारिद्रराजिमत्। एवंविधा राजयो विद्यन्ते यस्मिन् तदेवम्॥ २१—२४॥

उदावर्त्तेति। तत्र प्लीहोदरे पृथग् लक्षणलक्षितान्मलान् वातादीन् क्रमेणोदावर्त्तादिना विद्यात्। तत्रोदावर्त्तरुगानाहैर्वातं विद्यात्। मोह-तृड्-दहन-ज्वरैः पित्तं विद्यात्। गौरवारुचिकाठिन्यैः कफं विद्यात्॥ २५॥

अथ यकृल्लक्षयति,—प्लीहवदिति। यथापूर्वोक्तैर्हेतुभिः प्लीहा वामपार्श्वाच्च्युतो वर्द्धते। विवृद्धो भूत्वाऽनन्तरमुदरमावहेत् तद्वद् यकृदपि दक्षिणपार्श्वाच्च्युतं सद् विवर्द्धते वृद्धं सदुदरं कुरुते। अथवा शोणितं स्वहेतुतो विवृद्धं यकृद् विवर्द्धयेत्। तच्च विवृद्धमुदरमावहेत्। इति प्लीहोदरयकृदुदरयोः सादृश्यम्॥ २६॥

अथ बद्धोदरं लक्षयति,—पक्ष्मवालैरिति। पक्ष्माणि च वालाश्च पक्ष्मावालास्तैरन्नेन सह भुक्तैर्बद्धायने गुदे सत्यपानो वायुर्विगुणः कुपितो जठरं करोति। बद्धमयनं द्वारं पुरीषानिलवाहि यस्य तदेवंविधे गुदे। तथा दुर्नामभिर्गुदे बद्धायने तथोदावर्त्तैर्बद्धायने तथाऽन्यैर्वान्त्रोपलेपिभिरुपदेहिभिर्दध्योदनमाषोसादिभिर्गुदे बद्धायनेऽपानो जठरं करोति। किं कृत्वा? वर्च्चःपित्तकफान् रुद्ध्वा आवृत्य। तद् बद्धोदरमुच्यते।

---

* प्रोन्नत इति वा पाठः।

कास-श्वासोरु-सदनं शिरोहृन्नाभि-पायुरुक्।
मलसङ्गोऽरुचिच्छर्द्दिरुदरं मूढ़मारुतम् ॥ २९ ॥
स्थिरं नीलारुणशिरा-राजिवद्ध मराजि वा।
नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ ३० ॥
अस्थ्यादिशल्यैः सान्नैश्चेद् भुक्तैरत्यशनेन वा।
भिद्यते पच्यते वान्त्रं तच्छिद्रैश्च स्रवन् बहिः ॥ ३१ ॥
आम एव गुदादेति ततोऽल्पाल्पं सविड्रसः।
तुल्यः कुणपगन्धेन पिच्छिलः पीतलोहितः ॥ ३२ ॥
शेषश्चापूर्य्य जठरं जठरं घोरमावहेत्।
वर्द्धते तदधो नाभेराशु चैति जलात्मताम् ॥ ३३ ॥
उद्रिक्तदोषरूपञ्च व्याप्तञ्च श्वास-तृड्भ्रमैः।
छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे ॥ ३४ ॥
प्रवृत्तस्नेहपानादेः सहसामाम्बुपायिनः।

---

तेन बद्धोदरेण दाह-ज्वर-तृट्-चवाः स्युः, तथा कास-श्वासावूरुसदनं शिरोहृन्नाभि-पायुरुक् स्यात्। तथा मलानां मूत्रपुरीषादीनां सङ्गोऽप्रवर्त्तनम्। अरुचिस्तथा छर्दिः स्यात्। तथोदरं मूढ़मारुतं भवेत्। मूढ़ो बहिरनिःसरणरूपो मारुतो यस्मिंस्तदेवम्। मूढ़मारुतत्वस्य सामान्यलक्षणेनैव गृहीतत्वात् पुनर्ग्रहणमतिशयार्थम्। तथा स्थिरमचलम्, तथा नीलारुणसिराराजिभिर्नद्धं व्याप्तम्, अथवा अराजि स्यात्। तथोदरं प्रायो नाभेरुपरिष्टाद् गोपुच्छाकृति जायते। यथायथाधस्तथा तथा सूक्ष्ममित्यर्थः। अनेनास्य संस्थानमुक्तम् ॥ २७—३० ॥

अधुना छिद्रोदरं लक्षयति,—अस्थ्यादीति। अस्थि-तृण-कण्टक-पाषाण-धातु-शस्त्र-दार्वादि-शल्यैः सान्नैः सह भोजनेन भुक्तैरथवाऽत्यशनेनातिमात्रभोजनेन यदन्त्रं भिद्यते सच्छिद्रं सम्पद्यतेऽथवा पच्यते पाकं याति तच्छिद्रैश्चान्त्रच्छिद्रैर्भेदोत्पन्नैः पाकतो वा बहिराम एवापरिपक्व एव सविड्रसः स्रवन्नल्पाल्प एव गुदात् एति आयाति। तुल्यः सदृशः कुणपगन्धेन शवगन्धेन तथा पिच्छिलः पीतलोहितश्च वर्णेन। शेषश्च रसो यो गुदान्नागच्छति स जठरमापूर्य्य पूरयित्वा घोरं कष्टतरं जठराख्यं व्याधिं कुर्यात्। तदुदरमधो नाभेर्वर्द्धयेत् वृद्धिं गच्छेत्। वर्द्धिश्च रादिः। तथा आशु शीघ्रमेव जलात्मतां जलोदरत्वमेति उद्रिक्तदोषरूपञ्च। उद्रिक्तमधिकं दोषाणां वातपित्तकफानां रूपमाकृतिर्यस्य तदेवम्। तथा श्वासतृड्-भ्रमैर्व्याप्तमिदमुदरं छिद्रोदरं प्राहुराचार्य्याः। अपरे त्वाचार्य्याः परिस्रावीत्याहुः ॥ ३१—३४ ॥

अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य वा ॥ ३५ ॥
रुद्ध्वाऽम्बुमार्गाननिलः कफश्च जलमूर्च्छितः ।
वर्धयेतां तदेवाम्बु तत्स्थानादुदराश्रितौ ॥ ३६ ॥
ततः स्यादुदरं तृष्णा-गुदस्रुति-रुजा-युतम् ।
कास-श्वासारुचि-युतं नानावर्णसिराततम् ॥ ३७ ॥
तोयपूर्णदृतिस्पर्श-शब्दप्रक्षोभ-वेपथु ।
दकोदरं महत् स्निग्धं स्थिरमावृत्तनाभि तत् ॥ ३८ ॥
उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः ।
पाकाद् द्रवाद् द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि ॥ ३९ ॥
स्वेदश्च बाह्यस्रोतःसु विहतस्तिर्यगास्थितः ।
तदेवोदकमाप्याय्य पिच्छां कुर्यात्तदा भवेत् ॥ ४० ॥

---

अथोदकोदरदर्शनार्थमाह, प्रवृत्तेति—प्रवृत्तमारब्धं स्नेहपानादि येन स प्रवृत्तस्नेहपानादिः । आदिग्रहणाद् वमनादिकं कर्म्म पञ्चविधं गृह्यते । तस्य तथाभूतस्य नरस्य सहसाऽऽमाम्बुपायिनः सहसैवापक्वपानीयपस्य, तथा मन्दाग्नेर्नष्टवह्नेः, तथा क्षीणस्य विशिष्टव्याध्याक्रान्ततया धात्वपचयवतः, तथा अतिकृशस्यानशनादिना क्षीणमेदोमांसस्य, एवंविधस्य पुरुषस्य अम्बुपानादम्बुमार्गांस्तोयवाहीनि स्रोतांसि रुद्ध्वाऽनिलः कफश्च । किम्भूतौ जलमूर्च्छितस्तोयमिश्रितः । तावुभौ वातकफौ जलमूर्च्छितावुदराश्रितौ तदेवाम्बु तत्स्थानादुदकस्थानात् क्लोमतो वर्द्धयेताम् । ततोऽनन्तरमुदरं तृष्णादियुक्तं स्यात्, तथा कासादियुतं, तथा नानावर्णाभिरनेकवर्णाभिः सिराभिस्ततं व्याप्तम् । तोयेत्यादि । शब्दस्य प्रक्षोभः संरम्भः, वेपथुः कम्पः ; स्पर्शश्च शब्दप्रक्षोभश्च वेपथुश्च त एवम् । तोयेन पूर्णा तोयपूर्णा, सा चासौ दृतिश्च तोयपूर्णदृतिः ; तोयपूर्णदृतिवत् स्पर्शशब्दप्रक्षोभवेपथवो यस्मिन् दरे तत् तोयपूर्णदृतिस्पर्श-शब्द-प्रक्षोभ-वेपथु दकोदरं स्यात् । तच्च महदन्येभ्यो उदरेभ्यो विस्तीर्णं, तथा स्निग्धं, तथा स्थिरमचलम् । आवृत्तनाभि तत् । आ समन्ताद् वृत्ता वर्तुला नाभिर्यस्य तदेवम् ॥ ३५—३८ ॥

अधुना जठरेऽप्यवसाने यथा जलसम्भवः स्यात् तथाह,—उपेक्षयेति । उपेक्षयाऽचिकित्सनात् सर्वेषूदरेषु दोषा वातपित्तकफाः स्वस्थानत आत्मीयात् स्थानाच्च्युताः स्थानान्तरं गतास्तथा पाकात् हेतोस्ते दोषा द्रवा अधिकं द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि । सन्धयश्च स्रोतोमुखानि च सन्धिस्रोतोमुखानि द्वाराणि । न केवलं स्वयं दोषा द्रवत्वं गता यावत् सन्धिस्रोतोमुखान्यपि द्रवीकुर्युरित्यपिशब्दार्थः । स्वेदश्च बाह्यस्रोतःसु संवृतेषु विहतो निरुद्धस्तिर्यगास्थितस्तिर्यक्प्रवृत्तश्च तदेवोदकं प्राक् कुक्षौ वृद्धिं गतमाप्याय्य वृद्धिं गमयित्वा पिच्छां कुर्यात् तदा भवेत् गुरूदरं स्थिरमचलं वृत्तं

गुरूदरं स्थिरं वृत्तमाहतञ्च न शब्दवत्।
मृदु व्यपेतराजीकं नाभ्यां स्पृष्टञ्च सर्पति॥ ४१॥
तदनूदकजन्मास्मिन् कुक्षिवृद्धिस्ततोऽधिकम्।
सिरान्तर्धानमुदक-जठरोक्तञ्च लक्षणम्॥ ४२॥
वात-पित्त-कफ-प्लीह-सन्निपातोदकोदरम्।
कृच्छ्रं यथोत्तरं पक्षात् परं प्रायोऽपरे हतः॥ ४३॥
सर्वञ्च जातसलिलं रिष्टोक्तोपद्रवान्वितम्॥ ४४॥
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्॥ ४५॥

इत्यष्टाङ्गहृदये निदानस्थाने द्वादशोऽध्यायः॥ १२॥

---

वर्तुलञ्च, तथा आहतञ्च पाण्यादिना न शब्दवत् न शब्दयुक्तं, तथा मृदकठिनं, तथा व्यपेता राज्यो यस्माद् व्यपेतराजीकं स्यात्। नाभ्याञ्च स्पृष्टं सत् सर्पति प्रसारि सम्पद्यते। तदनु ततोऽनन्तरमस्मिन् उदराख्ये व्याधावुदकजन्म जलसम्भवः। ततोऽनन्तरमधिकं कृत्वा कुक्षिवृद्धिर्भवेत्, तथा सिरान्तर्धानं सिराणामदर्शनम्। किमेतावदेव लक्षणम्, नेत्याह,—उदकजठरोक्तञ्च लक्षणमिति। न केवलं यदधुनोक्तं लक्षणं यावज्जलोदरोक्तं चेति च शब्दस्यार्थः॥ ३९—४२॥

इदानीमुदराणां सुखसाध्यत्वाभावात् कृच्छ्रसाध्यासाध्यत्वे वेदयति,—वातेति। वाताद्युद्भवमुदरं यथोत्तरं कृच्छ्रम्। तेन वातोदरात् पित्तोदरं यावदुदकोदरमत्यन्तं कृच्छ्रं कृच्छ्रसाध्यं स्यात्। पक्षादिति। पाठापेक्षया ये द्वे अपरे बद्धक्षतोदरे ते प्रायः पक्षात् परमनन्तरं हतौ मारयतः। प्रायोग्रहणात् कदाचित् नियतायुष्युत्पन्ने नैव मारयतः॥४३॥

सर्वमिति। किल उपेक्षया सर्वेषूदरेष्वन्ते सलिलसम्भव इत्युक्तम्। सर्वञ्च जठरं जातोदकं यद् वातादिसमुत्थं कृच्छ्रमुक्तं तदपि हन्त्येव। अत्रापि प्रायोग्रहणमनुवर्त्तनीयम्। कदाचिज्जातोदकमपि न मारयेत् अपितु यापयत्येव। तथा रिष्टोक्तोपद्रवान्वितं रिष्टाध्यायोक्तैरुपद्रवैर्युक्तं जठरं हन्ति। शूनाक्षं कुटिलोपस्थमित्यादिभिश्च तदपि हन्ति॥ ४४॥

जन्मनेति। जन्मनैव जात्यैव स्वभावेनैव उदरं सर्वं प्रायः कृच्छ्रतमं मतं व्याधिस्वभावात्। प्रायोग्रहणात् किञ्चिदुदरं कृच्छ्रमेव भवति न कृच्छ्रतमम्। अतएवाह,—बलिन इत्यादि। बलिनो बलवतस्तदुदरमुत्थितं नवमजातोदकं सत् यत्नसाध्यमिति॥४५॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने उदरनिदानं नाम द्वादशोऽध्यायः॥ १२॥

---

# त्रयोदशोऽध्यायः ।

अथातः पाण्डुरोग-शोफ-विसर्प-निदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ।
तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥
धमनीर्दश संप्राप्य व्याप्नुवत् सकलां तनुम् ।
श्लेष्म-त्वग्-रक्त-मांसानि प्रदूष्यान्तरमाश्रितम् ॥ २ ॥
त्वङ्मांसयोस्तत् कुरुते त्वचि वर्णान् पृथग्विधान् ।
पाण्डु-हारिद्र-हरितान् पाण्डुत्वं तेषु चाधिकम् ॥ ३ ॥
यतोऽतः पाण्डुरित्युक्तः स रोगस्तेन गौरवम् ।

---

उदरनिदानादनन्तरं पाण्डु-शोफ-विसर्प-निदानमारभ्यते । यतो यथैवोदरं दोष-सङ्घातजं तथैतेऽपीत्याह,—अथेत्यादि ॥ १ ॥

पित्तप्रधाना इति । यत्र मला वातादयः पित्तप्रधाना यथोक्तैः सर्वरोग-निदानादुक्तैः कोपनैः कुपिताः क्रुद्धाः पाण्डुरोगहेतवः । कथमित्याह,—तत्रेत्यादि । तेषु तथाभूतेषु सत्सु वातेन बलिना बलवता क्षिप्तं पित्तं हृदि स्थितमनन्तरं तत् पित्तं धमनीर्दश हृदाश्रिताः सम्प्राप्याऽऽश्रित्य सकलां तनुं व्याप्नुवत् । सकलशब्दोपादानं मूत्रपुरीषादीनामपि ग्रहणार्थम् । अतएव व्याख्यास्यति,—"कृष्णरूचारुणसिरोनख-विण्मूत्रनेत्रता" इति । तथा श्लेष्मत्वग्रक्तमांसानि प्रदूष्य । किम्भूतं पित्तम्? त्वङ्मांसयोरन्तरं मध्यमाश्रितम् । तत् पित्तं त्वचि वर्णान् पृथग्विधान् नानाप्रकारान् पाण्डु-हारिद्र-हरितान् कुरुते । एतेषु वर्णेषु मध्ये यतो यस्मादतिशयेन पाण्डुत्व-मधिकमतोऽस्मात् स रोगः पाण्डुरित्युक्तः संज्ञितः । ननु पित्तप्रधाना इति कथमुक्तम् । यावता वायोर्बलीयस्त्वाद् वातप्रधाना इति वक्तुं युक्तं स्यात् । बलीयस्त्वं चानन्तर-मेव प्रतिपादितं "तत्रानिलेन बलिना क्षिप्तम्" इति । असदेतत्, यतो नात्र बलीयस्त्वाबलीयस्त्वकृते प्राधान्याप्राधान्ये विवक्षिते, किं तर्हि पाण्डुरोगकरणं प्रति कर्तृत्वाकर्तृत्वे । पित्तस्य च पाण्डुरोगकरणं प्रति मुख्यं कर्तृत्वम्, अतः पित्तप्रधाना इति युक्तमुक्तम् । ननु यदि त्रयो दोषाः पाण्डुरोगहेतवः कथं तर्हि वक्ष्यति "स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात्" इति उच्यते ? सर्वः पाण्डुरोगस्त्रिदोषज एव किन्तु दोषहेतुविशेषैर्यो रूपभेदस्तेन पञ्चात्मकः शोफवदिति न किञ्चिदत्रायुक्तम् । तेनेति । तेन पाण्डुरोगेण धातूनां रसरुधिरादीनां गौरवं शैथिल्यञ्च स्यात् । तथा ओजसो गुणक्षयो माधुर्यश्लक्ष्णत्वादीनामोजोगुणानां विनाशः । तत एवौजःक्षयात्

धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ॥ ४ ॥
ततोऽल्परक्त-मेदस्को निःसारः स्याच्छ्लथेन्द्रियः ।
मृद्यमानरिवाङ्गैर्ना द्रवता हृदयेन च ॥ ५ ॥
शूनाक्षिकूटः सदनः कोपनः ष्ठीवनोऽल्पवाक् ।
अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः ।
सन्नसक्थिर्ज्वरी श्वासी कर्णक्ष्वेड़ी भ्रमी श्रमी ॥ ६ ॥
स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ॥ ७ ॥
प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि ।
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता ॥ ८ ॥
सादः श्रमोऽनिलात्तत्र गात्ररुक्तोदकम्पनम् ।
कृष्ण-रूक्षारुणसिरा-नखविण्मूत्रनेत्रता ।
शोफानाहास्यवैरस्य-विट्शोषाः पार्श्व-मूर्ध-रुक् ॥ ९ ॥

---

पाण्ड्वामयी नरोऽल्परक्तमेदस्कः । अल्पे रक्तमेदसी यस्य स एवम्, तथा निःसारो निर्बलः स्यात्, तथा श्लथेन्द्रियः शिथिलानीन्द्रियाणि वाक्-पाणि-पाद-पायूपस्थरूपाणि यस्यासौ श्लथेन्द्रियः । तत्रेन्द्रियशब्देन बुद्धीन्द्रियाणां चक्षुरादीन्यधिष्ठानान्युपलक्ष्यन्ते । "ननु पित्तप्रधानाः कुपिताः" इति पित्तवृद्धिरुक्ता, पित्तवृद्ध्या च रक्तवृद्ध्या भवितव्यम् । तत् कथमुक्तमल्परक्ततेति ? अत्रोच्यते, दोषाणामन्योऽन्यदूषणाद् दूष्यस्य च दोषैर्दूषितत्वात् प्रसादपरम्परयाऽपुष्टौ सत्यां किट्टबाहुल्यात् पित्ताधिक्यं न रक्तस्य प्रसादात्मकस्येति पित्ताधिक्यमल्परक्तता चेत्युपपन्नम् । तथा अङ्गैरवयवैर्मृद्यमानैरिव असौ नर उपलक्षितः, तथा हृदयेन द्रवता च, तथा शूनाक्षिकूटो यस्य स एवम्, तथा सदनोऽङ्गसादवान्, तथा कोपनादिकः स्यात् ॥ २—६ ॥

स इति । स पाण्डुरोगः पञ्चधा स्यात् । कथमित्याह,—पृथग्दोषैः सन्निपातेन मृद्भक्षणाच्च । ननु मृत्तिकादनात् पाण्डुरोगः पृथग् न वाच्यः, पृथग् वातादिदोषजे पाण्डुरोगेऽन्तर्भूतत्वात् । मृदा हि वातादिप्रकोपो विधीयते तिक्तोषणादिभिरिव वातादिप्रकोपश्च पाण्डुरोगकृत् । तस्मात् पृथङ्मृदो न युक्तो निर्देशः । अत्र ब्रूमः, मृदोऽन्ये ये वातादिप्रकोपहेतवः पाण्डुरोगसम्पादने सम्भावनयोग्यास्ते पाण्डुरोगं सम्पाद्य हेतुस्वरूपसत्तया विनिवर्त्तन्ते । मृत्तिका तु तीक्ष्णैः संशोधनैर्विना पाण्डुरोगं यावत् काये वेभिद्यते । इत्ययं वातादिकोपहेतुभ्योऽन्येभ्यो मृदः पाण्डुरोगं प्रति विशेषः । तस्मात् पृथक् पृथक् पाण्डुरोगो वक्तुं न्याय्यः ॥ ७ ॥

प्राग्रूपमिति । अस्य पाण्डुरोगस्य हृदयस्पन्दनादि प्राग्रूपम् । अनिलादिति । तत्र तेषु पाण्डुरोगेषु मध्ये वातात् पाण्डुरोगे गात्ररुगादयः स्युः ॥ ८ । ९ ॥

पित्ताद्धरितपीताभ-सिरादित्वं ज्वरस्तमः ।
तृट्-स्वेद-मूर्च्छा-शीतेच्छा दौर्गन्ध्यं कटुवक्त्रता ॥ १० ॥
वर्चोभेदोऽम्लको दाहः कफात् शुक्लशिरादिता ।
तन्द्रालवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ।
कासश्छर्दिश्च निचयात् मिश्रलिङ्गोऽतिदुःसहः ॥ ११ ॥
मृत् कषायानिलं पित्तमूषरा मधुरा कफम् ।
दूषयित्वा रसादींश्च रौक्ष्याद् भुक्तं विरूक्ष्य च ॥ १२ ॥
स्रोतांस्यपक्वैवापूर्य कुर्याद्रुद्ध्वा च पूर्ववत् ।
पाण्डुरोगं ततः शून-नाभि-पादास्य-मेहनः ॥
पुरीषं क्रिमिमन्मुञ्चेद्भिन्नं सासृक् कफं नरः ॥ १३ ॥
यः पाण्डुरोगी सेवेत पित्तलं तस्य कामलाम् ।
कोष्ठशाखाश्रयं पित्तं दग्ध्वासृङ्मांसमावहेत् ॥ १४ ॥
हारिद्रनेत्र-मूत्र-त्वङ्-नख-वक्त्र-शकृत्तया ॥
दाहाविपाकस्तृष्णावान् भेकाभो दुर्बलेन्द्रियः ॥ १५ ॥

---

पित्तादिति । पित्तात् हरितपीताभसिरादित्वं स्यात् । कफादिति । कफात् शुक्लसिरादिता च स्यात् । निचयादिति । निचयात् सन्निपातात् मिश्रलिङ्गः पाण्डुरोगः सोऽतिदुःसहो घोरतमः ॥ १० । ११ ॥

मृदिति । मृद्भक्षिता कषायरसा वातं दूषयित्वा पाण्डुरोगं कुर्यात् । ऊषरा सक्षारा मृत्तिका पित्तं दूषयित्वा पाण्डुरोगं कुर्यात् । मधुरा मृत्तिका कफं दूषयित्वा पाण्डुरोगं कुर्यात् । तथा रसादींश्च धातून् दूषयित्वा रौक्ष्याच्च हेतोर्भुक्तं विरूक्षयति । यतः स्वभावत एव मृत्तिका रूक्षा तस्माद् भुक्तं विरूक्षति । स्रोतांसि चाऽऽपूर्य रुद्ध्वाऽपक्वैव सती पाण्डुरोगं पूर्ववत् पित्तप्रधाना कुपिता इत्यादिना न्यायेन कुर्यात् । मृत्तिकाया दुष्पाकत्वात् पाकाभावः । अथवा अशब्दोऽत्र ईषदर्थे । अलोमिका एलाकृतिर्यथा । तेन किञ्चित् पक्वेति गम्यते । ततस्तेन पाण्डुरोगेण शूननाभ्यादिकः सन् क्रम्यादियुतं पुरीषं मुञ्चेत् ॥ १२ । १३ ॥

अथ प्रतिज्ञावाक्येऽनुक्तामपि कामलां तुल्यहेत्वादिकत्वात् प्रदर्शयन्नाह,—य इति । यो नरः पाण्डुरोगी सन् पित्तलं मरिचिकादिद्रव्यमत्यर्थं सेवेत उपयुङ्क्ते तस्य पाण्डुरोगिणः पित्तं कर्तृ कामलामावहेत् । कीदृशाम् ? कोष्ठशाखाश्रयाम् । कोष्ठो महास्रोतः, शाखा रक्तादयस्त्वक्चेत्येतदुभयमाश्रयो यस्यास्ताम् । किङ्कृत्वा ? रक्तं मांसञ्च दग्ध्वा । कथम् ? हारिद्रनेत्र-मूत्र-त्वङ्-नख-वक्त्र-शकृत्तया । तदा च पुरुषो

भवेत् पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च ॥ १६ ॥
उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामला ॥ १७ ॥
हरितश्यावपीतत्वं पाण्डुरोगे यदा भवेत्।
वातपित्ताद् भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुर्ज्वरः ॥ १८ ॥
तन्द्राबलानलभ्रंशो लोढरं तं हलीमकम्।
अलसञ्चेति शंसन्ति तेषां पूर्वमुपद्रवाः।
शोफप्रधानाः कथिताः स एवातो निगद्यते ॥ १९ ॥
पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् बहिःशिराः।
नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥ २० ॥
उत्सेधं संहतं शोफं तमाहुर्निचयादतः।

---

दाहादिमान्मण्डूकच्छायो दुर्बलेन्द्रियश्च स्यात्। दुर्बलानि स्वविषयेष्वशक्तानि इन्द्रियाणि यस्य स एवम् ॥ १४ । १५ ॥

किं पाण्डुरोगिण एव पित्तलान्यासेवमानस्य कामला भवेदुतापाण्डुरोगिणोऽपीत्याह,—भवेदिति। पाण्डुरोगमन्तरेणापि पित्ताधिकस्य नरस्य पित्तलान्यासेवमानस्यासौ कोष्ठशाखाश्रया कामला स्यात् न केवलं पाण्डुरोगिणः ॥ १६ ॥

उपेक्षयेति। उपेक्षया चिकित्सां विना सैव कामला यदा शोफाढ्या श्वयथुबाहुल्या स्यात् तदा कुम्भकामलेत्युच्यते। सा कृच्छ्रा कृच्छ्रसाध्या ॥ १७ ॥

हलीमकं लक्षयति,—हरितेति। पाण्डुरोगे सति यदा हरित-श्याव-पीतता-भ्रमादयश्च वातपित्तात् स्युः। अतश्च तं हलीमकं शंसन्ति मुनय इति शेषः। तच्च हलीमकं लोढरं तथा अलसं वाऽऽचक्षते। तेषामिति। तेषां पाण्डुरोगप्रकाराणां पूर्वमुपद्रवा यतः शोफप्रधानाः कथिताः, अतोऽस्माद्धेतोः पाण्डुरोगनिदानादनन्तरं शोफ एव भण्यते न विसर्पः। शोफः प्रधानः प्रथमो येषां त एवं कथिताः। क? इहैव; यथोक्तम्,—"शूनाक्षिकूटः" इत्यादि। तथा "शूननाभिपादास्यमेहनः" इति ॥ १८ । १९ ॥

पित्तेति। बहिर्भूताः शिरा बहिःशिरा बाह्याः शिराः। वायुः पित्तरक्तकफान् कर्म्मभूतान् बहिःशिराः कर्म्मभूता नीत्वा उत्सेधं कुर्यात्। नयतेर्द्विकर्म्मकत्वात् पित्तादयो बहिःसिराश्च कर्म्म। यथा अजां नयति ग्राममिति। तेनायमर्थोऽवतिष्ठते। बहिःसिराः पित्तादीन् नीत्वेति। किम्भूतो वायुः? दुष्टः सन् कोपनैः कुपितः। किम्भूतमुत्सेधम्? त्वक् च मांसञ्च त्वङ्मांसे ते संश्रय आश्रयो यस्य तमेवम्। तैर्हीति हिशब्दोऽवधारणे। तैरेव बहिःसिराः प्राप्तैः पित्तरक्त-कफैरुद्धगतिः। अतएव संहतं समन्ताद्धतं निश्चलमिव सम्पन्नमुत्सेधम्। यतश्चैवं वातपित्तकफैः शोफः सञ्जायते

सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २१ ॥
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।
द्विधा वा निजमागन्तु सर्वाङ्गैकाङ्गजञ्च तम् ॥
पृथून्नत-ग्रथितता-विशेषैश्च त्रिधा विदुः ॥ २२ ॥
सामान्यहेतुः शोफानां दोषजानां विशेषतः ॥ २३ ॥
व्याधि-कर्मोपवासादि-क्षीणस्य भजतो द्रुतम् ।
अतिमात्रमथान्यस्य गुर्वम्ल-स्निग्ध-शीतलम् ॥ २४ ॥
लवण-क्षार-तीक्ष्णोष्णं शाकाम्बु-स्वप्न-जागरम् ।
मृद-ग्राम्यमांस-वल्लूरमजीर्ण-श्रम-मैथुनम् ॥ २५ ॥

---

तस्मात् सव शोफं निचयाद दोषत्रयादाहुः । नन्वेवं सतीदं विरुध्यते दोषैः पृथग् द्वयैः सर्वैरित्यत आह,—हेतुविशेषैरिति । तुशब्दो विशेषार्थे । यद्यपि सर्वस्त्रिदोषजः शोफस्तथापि हेतुविशेषैर्योऽरूपभेदस्तस्मान्नवात्मकं शोफमाहुः । तथा हि, योऽयं सन्निपातः शोफहेतुरेष कदाचित् समं कृत्वा कुप्यति कदाचिद विषमं कृत्वैकदोष-द्विदोष-त्रिदोषस्वरूपतया । एवञ्च हेतुविशेषैर्यो लक्षणभेदस्तस्मान्नवप्रकारत्वं शोफस्य न्याय्यमेव । लक्षणभेदश्चैषां स्पष्ट एव । तथा चाभिघाताद्धेतोश्च यथावदन्यल्लक्षणं विषाद्धेतोरन्यं लक्षणं तद्वत् पृथग् वातजैश्च यथावदन्यद द्वन्द्वजे चान्यत् सन्निपातजे चान्यदिति । एवं लक्षणविशेषान्नवात्मकमाहुः । उपलक्षणञ्चेदम् । चिकित्साविशेषादपि हि नवात्मक एव शोफः अथवा निजागन्तुभेदेन द्विधा श्वयथुमाहुः । तथा तं शोफं सर्वाङ्गजं सर्वशरीरजमेकाङ्गजमेकावयवजञ्चेति पुनर्द्विःप्रकारमाहुः । पृथुश्चोन्नतश्च ग्रथितश्च तेषां भावः पृथून्नतग्रथितता, तथा विशेषास्तैस्त्रिधा त्रिप्रकारं शोफं विदुः । विदुरिति "विद ज्ञाने" इत्यस्मादुसादेशः । पृथुत्वेन विस्तीर्णकृतत्वेन विशेषेण तथोन्नतत्वेन विशेषेण, तथा ग्रथितत्वेन ग्रथितविशेषेण स्वरूपत्वेनेति योज्यम् ॥ २०—२२ ॥

सामान्यहेतुरिति । वक्ष्यमाणो गुर्वम्लस्निग्धादिको वर्गः श्वयथूनां निजानामागन्तूनाञ्च सामान्यहेतुरुत्पत्तौ कारणम् । दोषजानां श्वयथूनां पुनरतिशयेन हेतुर्न तथा आगन्तूनामिति विशेषशब्देन द्योतयति ॥ २३ ॥

व्याधीति । व्याधिकर्मोपवासादिभिः क्षीणस्य व्याधिना ज्वरादिना क्षीणस्य, तथा कर्म्मणा पञ्चविधेन वमन-विरेचन-निरूहानुवासनाख्येन, तथा उपवासेन । आदिग्रहणादन्येन च मार्गादिना क्षीणस्य द्रुतं कृत्वा सहसैव गुर्वादिकं भजतः । अथेति समुच्चये । व्याध्यादिक्षीणलक्षणेभ्यः सकाशादन्यस्य स्वस्थादेरप्यतिमात्रं मात्रामतिक्रम्य भजतो दोषा वक्षसि स्थिता ऊर्ध्वं शोफं कुर्वन्ति । प्रकृतत्वाद वक्षस ऊर्द्ध्वम् । वस्तौ स्थिता अधः शोफं कुर्वन्ति ; मध्ये स्थिता दोषा मध्ये शोफं कुर्वन्ति । ग्राम्याणां चटककुक्कुटादीनां मांसं ग्राम्यमांसम् ; वल्लूरं शुष्कमांसम् । स्वप्नोऽत्र अहःस्वप्नो

पदातिमार्गगमनं यानेन क्षोभिणापि वा।
श्वासकासातिसारार्शोजठरप्रदरज्वराः ॥ २६ ॥
विसूच्यलसक-च्छर्दि-गर्भ-वीसर्प-पाण्डुताः।
अन्ये च मिथ्योपक्रान्तास्तैर्दोषा वक्षसि स्थिताः ॥ २७ ॥
ऊर्द्ध्वं शोफमधो बस्तौ मध्ये कुर्वन्ति मध्यगाः।
सर्वाङ्गगाः सर्वगतं प्रत्यङ्गेषु तदाश्रयाः ॥ २८ ॥
तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम् ॥ २९ ॥
वाताच्छोफश्चलो रूक्षः खररोमारुणासितः।
सङ्कोच-स्पन्द-हर्षार्त्ति-तोद-भेद-प्रसुप्तिमान् ॥ ३० ॥
क्षिप्रोत्थानशमः शोघ्रमुन्नमेत् पोड़ितस्तनुः।
स्निग्धोष्णमर्दनैः शाम्येद् रात्रावल्पो दिवा महान् ॥ ३१ ॥
त्वक् च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते।
पोतरक्तासिताभासः पित्तादाताम्ररोमकृत् ॥ ३२ ॥
शोघ्रानुसारप्रशमो मध्ये प्राग्जायते तनुः।
सतृड्-दाह-ज्वर-स्वेद-दव-क्लेद-मद-भ्रमः।
शीताभिलाषी विड्भेदी गन्धी स्पर्शासहो मृदुः ॥ ३३ ॥
कण्डूमान् पाण्डुरोमत्वक् कठिनः शीतलो गुरुः।

---

नागरस्य रात्रिजागरो बोध्यः। यानेन तुरगादिना क्षोभिणा शरीरसंरम्भजनकेन, तथा श्वासादयः पाण्डुपर्य्यन्ता रोगाः प्राधान्येन तथान्येऽपि श्वासकासादिव्यतिरिक्ता रोगा मिथ्योपक्रान्ता मिथ्योपचरिता अयथाशास्त्रमुपक्रान्ताः शोफहेतवः। एतैरपि दोषा वक्षसि स्थिता ऊर्ध्वं शोफं कुर्वन्ति। बस्तौ स्थिता अधो मध्यगा मध्ये सर्वाङ्गगाः सर्वगतं प्रत्यङ्गेषु तदाश्रया दोषाः शोफं कुर्वन्ति ॥ २४—२८ ॥

तदिति। तस्य श्वयथोः पूर्वरूपं तत्पूर्वरूपम्। दवथुश्चक्षुरादिषु यस्तीव्र उष्मा स भण्यते। यदुक्तम्,—"दवथुश्चक्षुरादिभ्यस्तीव्रमुष्मप्रवर्त्तनम्" इति। तथा सिरायामो यत्र प्रदेशे श्वयथुरुद्भूतस्तत्र सिराणां दैर्घ्यमिव, तथा अङ्गगौरवं स्यात् ॥ २९ ॥

वातादिति। वाताच्छोफश्चलादिलक्षणः। पित्तादिति। पित्ताच्छोफः पीतरक्तासिताभासादिलक्षणः। स च मध्ये मध्यप्रदेशे प्राक् पूर्वं जायते। प्राग्ग्रहणं पश्चात् सकलेऽपि देहदेशे स्यादिति द्योतयति ॥ ३०—३३ ॥

कण्डूमानिति। कफाच्छोफः कण्डूयुतादिलक्षणः स्यात् तथा आक्रान्तः पीड़ितः सन् वातिक इव नोन्नमेत्, तथा कृच्छ्रेण शमजन्मनी यस्य स एवम्, तथा निशायां

स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्राच्छर्द्यग्निसादकृत् ॥ ३४ ॥
आक्रान्तो नोन्नमेत् कृच्छ्र-शम-जन्मा निशाबलः।
स्रवेन्नासृक् चिरात् पिच्छां कुशशस्त्रादिविक्षतः ॥ ३५ ॥
स्पर्शोष्णकाङ्क्षी च कफात् यथास्वं द्वन्द्वजास्त्रयः।
सङ्करात् हेतुलिङ्गानां निचयान्निचयात्मकः ॥ ३६ ॥
अभिघातेन शस्त्रादि-च्छेद-भेद-क्षतादिभिः।
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥ ३७ ॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद् विसर्पवान्।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ ३८ ॥
विषजः सविषप्राणि-परिसर्पणमूत्रणात्।
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ ३९ ॥
विण्मूत्रशुक्रोपहत-मलवद्वस्त्रसङ्करात्।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥
मृदुश्चलोऽवलम्बी च शीघ्रदाहरुजाकरः ॥ ४० ॥

---

रावावधिक इत्यर्थः, तथा कुशशस्त्रादिभिर्विक्षतः स शोफो न रक्तं स्रवेत्; किन्तर्हि? चिरेण पिच्छां लसीकाऽपरपर्यायां स्रवेत्। तथा स्पर्शोष्माभिलाषी च स्यात्। यथास्वमिति। हेतवश्च लिङ्गानि च तेषां सङ्करात् सङ्कीर्णत्वेन यथास्वं द्वन्द्वजास्त्रयः शोफाः स्युरिति शेषः। निचयादिति। निचयात्मको दोषत्रयजः शोफो निचयात् हेतुलिङ्गनिचयात् स्यात् ॥ ३४—३६ ॥

अभिघातेनेति। तथा शस्त्रादिच्छेदभेदक्षतादिभिर्यः शोफः सोऽभिघातेन वेद्य इति शेषः। तथा हिमश्च हिमानिलयोदध्यनिलश्च तैस्तथा रसैः शूकैश्च भल्लात-कपिकच्छुजैः संस्पर्शाच्छ्वयथुर्विसर्पवान् भवेत्, स च भृशोष्मा लोहिताभासश्च बाहुल्येन च पित्तलक्षणः स्यात्। पित्तशोफस्य लक्षणं पित्तशोफलक्षणमिव लक्षणं यस्य स पित्तलक्षणः। सप्तम्युपमानपूर्वस्येति बहुव्रीहिरुत्तरपदलोपश्च ॥ ३७। ३८ ॥

विषज इति। विषजः शोफः सविषाणां प्राणिनामङ्गे परिसर्पणाद्द गमनात्, तथा तेषामेव मूत्रणात्, तथा दंष्ट्रादन्तनखानामाघातात् अविषप्राणिनामपि शोफः स्यात्। अपिशब्दान्न केवलं सविषप्राणिनां तथा विण्मूत्रशुक्रैरुपहतं तत्स्पर्शदूषितमप्रशस्तम्। विण्मूत्रशुक्रोपहतञ्च तन्मलञ्च विण्मूत्रशुक्रोपहतमलवत् तथाविधञ्च तद्वस्त्रञ्च तस्य सङ्करः संस्पर्शस्तस्मादपि शोफः स्यात्। तथा विषवृक्षाणामनिलस्तस्य संस्पर्शात्, तथा गरयोगस्यावचूर्णनमवध्वंसनं तस्माच्च मृद्वादिगुणयुक्तः श्वयथुः स्यात ॥ ३९—४० ॥

नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः ॥ ४१ ॥
स्याद्विसर्पोऽभिघातान्तैर्दोषैर्दूष्यैश्च शोफवत् ॥ ४२ ॥
त्र्यधिष्ठानञ्च तं प्राहुर्बाह्यान्तरुभयाश्रयात् ।
यथोत्तरञ्च दुःसाध्यास्तत्र दोषा यथायथम् ॥ ४३ ॥
प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः ।
देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तः स्थिता बहिः ॥ ४४ ॥
बहिस्था द्वितये द्विस्थाः विद्यात्तत्रान्तराश्रयम् ।
मर्मोपतापात् सम्मोहादयनानां विघट्टनात् ॥ ४५ ॥
तृष्णातियोगाद् वेगानां विषमञ्च प्रवर्त्तनात् ।
आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात् ॥ ४६ ॥
तत्र वातात् परीसर्पो वातज्वरसमव्यथः ।

---

नव इति । नवोऽचिरोत्पन्नः, तथाऽनुपद्रव उपद्रवरहितः शोफः साध्यः । असाध्यः पुरा विकृतिविज्ञानीयेऽभिहितः । यथोक्तम्,—"अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् । नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि" इति ॥ ४१ ॥

श्वयथुवद् दोषैर्दूष्यैश्च यतो विसर्पो भवत्यतस्तन्निदानं प्रक्रम्यते,—स्यादिति । विसर्पः सर्व एव शोफवद्दोषैः पृथग्वातपित्तकफैर्द्वयैः समस्तैस्तथा अभिघातादेवमभिघातोत्पन्नैर्दोषैः शोफवद् विसर्पसम्भवः । दूष्यैरपि शोफवत् । एवं पित्तरक्तकफान् वायुरित्यादिरपि ग्रन्थोऽत्र योज्यः ॥ ४२ ॥

त्र्यधिष्ठानमिति । तञ्च विसर्प त्र्यधिष्ठानं प्राहुरात्रेयादय इति शेषः । बाह्यान्तरुभयाश्रयात् पूर्वार्ज्जितकर्मवशात् कदाचिद् बाह्याश्रयो विसर्पो जायते । बाह्य आश्रयो यस्य स तथा । एवं कदाचिदन्तराश्रयः, कदाचिदुभयाश्रयः । ते च बाह्यान्तरुभयाश्रया विसर्पा यथोत्तरं दुःसाध्या दुःखेन साध्यत इति दुःसाध्याः । तत्रेति । तस्मिन् विसर्पे यथायथं प्रकोपणैस्तिक्तोषणादिभिः प्रकुपिता विशेषेण पुनर्विदाहिभिरत्यर्थ कृत्वा प्रकुपिता देहे शीघ्रमाश्वेव विसर्पन्ति, तेऽन्तःस्थिता अन्तर्विसर्पन्ति, बहिस्था दोषा बहिः सर्पन्ति । द्वितये द्वयेऽन्तर्बहीरूपे द्विस्था उभयस्थाः सन्तो विसर्पन्ति । विद्यादिति । तत्र तेषु विसर्पेषु मध्येऽन्तराश्रयं विसर्पं मर्मोपतापादिभिर्विद्यात् । मर्म्मणां हृदयादीनामुपतापो दुःखं तस्मात् तथा सम्मोहात् मूर्च्छोद्भवात् । अयनानां कर्णनासादीनां विघट्टनाद् विशेषेण चलनादतिशयेन परिस्फुरणादित्यर्थः । तथा तृष्णाया अतियोगात्, तथा वेगानां नानारूपाणां विषमं कृत्वा विच्छिद्य विच्छिद्य कृत्वा प्रवर्त्तनात् । आशु च शीघ्रमेवाग्निबलयोर्भ्रंशाद् विनाशात् । अतो लक्षणविपर्ययाद् बाह्यं बाह्याश्रयं विसर्प विद्यात् ॥ ४२—४६ ॥

शोफ-स्फुरण-निस्तोद-भेदायामार्त्तिहर्षवान् ॥ ४७ ॥
पित्ताद् द्रुतगतिः पित्त-ज्वरलिङ्गोऽतिलोहितः ॥ ४८ ॥
कफात् कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥ ४९ ॥
स्वदोषलिङ्गैश्चीयन्ते सर्वे स्फोटैरुपेक्षिताः ।
ते पक्वभिन्नाः स्वं स्वञ्च बिभ्रति व्रणलक्षणम् ॥ ५० ॥
वातपित्ताज्ज्वर-च्छर्दि-मूर्च्छातीसार-तृड्-भ्रमैः ।
अस्थिभेदाऽग्निसदन-तमकारोचकैर्युतः ॥ ५१ ॥
करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ।
यं यं देशं विसर्पश्च विसर्पति भवेत् स सः ॥ ५२ ॥
शान्ताङ्गारासितो नीलो रक्तो वाऽऽशु च चीयते ।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतश्च सः ॥ ५३ ॥
मर्म्मानुसारी वीसर्पः स्याद् वातोऽतिबलस्ततः ।
व्यथेताङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत् ॥ ५४ ॥

---

तत्रेति । तेषु विसर्पेषु मध्ये वातादेरः विसर्पः स वातज्वरतुल्यव्यथः स्याच्छोफादियुतश्च ॥ ४७ ॥

पित्तादिति । पित्ताद् विसर्पो द्रुतगतिः सर्वव्यापी, तथा पित्तज्वरलिङ्गोऽतिलोहितश्च स्यात् । पित्तज्वरलिङ्गानीव लिङ्गानि यस्येति सप्तम्युपमानपूर्व्वस्येत्यादिना बहुव्रीहिरुत्तरपदलोपश्च ॥ ४८ ॥

कफादिति । कफाद्विसर्पः कण्डूमान् स्निग्धः कफज्वरतुल्यरुक् । वातादिज्वरलक्षणं यथोक्तम् । तत्र तत्राङ्गे तास्ताः सर्व्ववेदनाश्चला इत्यादि ॥ ४९ ॥

स्वेति । सर्वे च विसर्पा उपेक्षिता उपक्रमरहिताः स्फोटैश्चीयन्ते व्याप्यन्ते । किम्भूतैः ? स्वदोषलिङ्गैर्यथायथं स्वदोषलक्षणैः । तथा पक्वभिन्नाः स्वं स्वमात्मीयमात्मीयं दोषं व्रणलक्षणं बिभ्रति धारयन्ति । पूर्वं पक्वाः पश्चाद्भिन्नाः पक्वभिन्नाः । पूर्वकालेत्यादिना समासः । तत्र मारुताच्छ्यावरुक्षणारुणेत्यादिग्रन्थनिर्दिष्टं व्रणलक्षणम् । पित्तेन क्षिप्रजरुज इत्यादिग्रन्थनिर्दिष्टम् । एवं कफादिलक्षणमपि बोध्यम् ॥ ५० ॥

अधुना द्वन्द्वजं लक्षयति—वातपित्तादिति । वातपित्ताद्विसर्पो ज्वरादिभिर्युतः सकलमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ज्वलिताङ्गारव्याप्तसदृशं करोति । यं यञ्च शरीरदेशं विसर्पो विसर्पति प्रसरति स स शान्ताङ्गारासितो नीलो रक्तो वा भवेत् । तथा स विसर्पो द्रागेवाग्निदग्ध इव स्फोटैः चीयते व्याप्यते । स च विसर्पः शीघ्रगत्वात् तत्स्वभाववशात् मर्म्मानुसारी द्रुतं त्वरितं कृत्वा स्यात् । तत एव च वातोऽतिबलो बलीयान् अङ्गं शरीरं व्यथेत पीड़येत् । संज्ञां सम्विदं हरेन्नाशयेत् । निद्राञ्च हरेत् ।

हिक्काञ्च स गतोऽवस्थामीदृशीं लभते न ना।
क्वचिच्छर्म्मारतिग्रस्तो भूमिशय्यासनादिषु ॥ ५५ ॥
चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम्।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ ५६ ॥
कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम्।
रक्तं वा वृद्धरक्तस्य त्वक्-सिरास्नायु-मांसगम् ॥ ५७ ॥
दूषयित्वा च दीर्घाणु-वृत्त-स्थूल-खरात्मनाम्।
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ॥ ५८ ॥
श्वास-कासाऽतीसारास्य-शोष-हिक्का-वमि-भ्रमैः।
मोह-वैवर्ण्य-मूर्च्छाऽङ्ग-भङ्गाऽग्निसदनैर्युतम्।
इत्ययं ग्रन्थिवीसर्पः कफ-मारुतकोपजः ॥ ५९ ॥
कफपित्ताज्ज्वरः स्तम्भो निद्रा-तन्द्रा-शिरोरुजाः।
अङ्गावसाद-विक्षेप-प्रलापाऽरोचक-भ्रमाः ॥ ६० ॥
मूर्च्छाऽग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम्।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ ६१ ॥
प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक्।

---

श्वासमीरयेत् कुर्य्यात्, तथा हिक्काञ्च। स विसर्पी पुरुष ईदृशीमवस्थां गतः प्राप्तः चेतोऽनवस्थालक्षणयाऽरत्या ग्रस्तोऽभिभूतो न क्वचिद्भूमिशय्यासनादिषु शर्म्म सुखं लभते। अरतिग्रस्त इति हेतौ प्रथमा, अरतिग्रस्तत्वादित्यर्थः। एवं क्वचिदपि सुखालाभाद्भूम्यादिषु चेष्टमानः परिलुठन् ततः क्लिष्टो मनसा कायेन च मनोदेहश्रमोद्भवां तदुत्थां निद्रामश्नुते। किम्भूतः ? दुष्प्रबोधः। दुःखेन प्रबोधो निद्रापगमो यस्य स एवम्। एष चाग्न्याख्यो विसर्प उच्यते ॥ ५१—५६ ॥

कफेनेति। कफेन पवनो रुद्धस्तमिव कफं बहुधा भित्त्वा ग्रन्थीनां मालां कुरुते। रक्तञ्च वृद्धरक्तस्य नरस्य दूषयित्वा ग्रन्थीनां मालां कुरुते। किम्भूतं रक्तम् ? त्वक्-सिरा-स्नायु-मांसगम्। किम्भूतानां ग्रन्थीनाम् ? दीर्घाणु-वृत्त-स्थूल-खर-स्वभावानां तथा रक्तवर्णानाम्। किम्भूतां मालाम् ? तीव्ररुग्ज्वराम्। तीव्रौ रुग्ज्वरौ यस्यास्तां तथा श्वासादिभिर्युताम्। इत्ययमनन्तरोक्तो ग्रन्थिविसर्प उच्यते। कफवातकोपजश्चायं वेद्यः ॥ ५७—५९ ॥

कफपित्तादिति। कफपित्तात् कर्द्दमाख्यो जायते। तत्र च ज्वरादयः स्युः। स च विसर्पः प्रायेण बाहुल्येनामाशये नाभिस्तनान्तरमध्ये एकदेशं गृह्णन्नाक्रामन् अनन्तरं

पिटकैरवकीर्णोऽति-पीतलोहितपाण्डुरैः ॥ ६२ ॥
मेचकाभोऽसितस्निग्धो मलिनः शोफवान् गुरुः ।
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ॥ ६३ ॥
पङ्कवच्छीर्णमांसश्च स्पष्ट-स्नायु-सिरा-गणः ।
शवगन्धिश्च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ ६४ ॥
सर्वजो लक्षणैः सर्वैः सर्वधात्वतिसर्पणः ॥ ६५ ॥
बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ।
विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम् ॥ ६६ ॥
स्फोटैः शोफ-ज्वर-रुजा-दाहाढ्यं श्यावलोहितम् ।
पृथग् दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः ।
असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मकाः ।
शीर्णस्नायु-सिरा-मांसाः प्रक्लिन्नाः शवगन्धयः ॥ ६७ ॥

इत्यष्टाङ्गहृदये निदानस्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

---

सर्पति व्याप्नोति, न चातिरुक् स्यात् । तथा पिटकैरवकीर्णो व्याप्तः स्यात् । किम्भूतैः ? अतिपीत-लोहित-पाण्डुरैः, तथा मेचकाभादिकः स्यात् । मेचको मयूरकण्ठसदृशो वर्णः । तं तादृशं विसर्पं कर्दमाख्यं कर्दमसंज्ञमुशन्ति, मुनय इति शेषः ॥ ६०—६४ ॥

सर्व्वज इति । सर्व्वैस्त्रिभिर्दोषैर्जातः सर्व्वजः सन्निपातोद्भवो विसर्पः सर्वैर्लक्षणै-रुपलक्षितः । स च सर्व्वान् धातूनतिशयेन सर्पति सर्वधात्वतिसर्पणः स्यात् ॥ ६५ ॥

बाह्यहेतोरिति । मारुतो वातः क्षताद्द बाह्यकारणात् क्रुद्धः सन् विसर्पं कुर्य्यात् । किं कुर्वन् ? पित्तं सह रक्तेन प्रेरयन्, तथा स्फोटैः पिटकैश्चितं व्याप्तम् । किम्भूतः ? कुलत्थसदृशैः, तथा शोफादिभिराढ्यमतिशयेन युतम्, तथा श्यावलोहितं वर्णेन ॥ ६६ ॥

पृथगिति । पृथग् दोषैर्वातपित्तकफैः केवलस्त्रयो विसर्पाः साधयितुं शक्याः । द्वन्द्वजाश्चानुपद्रवाः कास-वैवर्ण्य-ज्वरादिभिरुपद्रवै रहितास्त्रयः साध्याः । क्षतसर्वोत्थौ द्वौ विसर्पावसाध्यौ, तथास्वभावत्वात् सर्वे विसर्पाश्चाक्रान्तमर्म्मकाश्चासाध्याः, तथा शीर्णानि स्नायु-सिरा-मांसानि यैस्तेऽप्यसाध्याः, तथा प्रकर्षेणातिशयेन क्लिन्नास्तथा शवगन्धयः कुणपगन्धतुल्या ये तेऽप्यसाध्याः । शवस्येव गन्धो येषामित्युपमानाद्येति मन्वर्थोदादेशः ॥ ६७ ॥

इति श्रीवैद्यगाङ्गदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां पाण्डु-कामला-शोफ-विसर्पनिदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः।

अथातः कुष्ठ-श्वित्र-क्रिमि-निदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।
मिथ्याहारविहारेण विशेषेण विरोधिना।
साधुनिन्दावधाऽन्यस्व-हरणाद्यैश्च सेवितैः॥ १॥
पाप्मभिः कर्म्मभिः सद्यः प्राक्तनैः प्रेरिता मलाः।
सिराः प्रपद्य तिर्य्यगास्त्वग्लसीकासृगामिषम्॥ २॥
दूषयन्ति श्लथीकृत्य निश्चरन्तस्ततो बहिः।
त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत्॥ ३॥
कालेनोपेक्षितं यस्मात् सर्वं कुष्णाति तद् वपुः।
प्रपद्य धातून् व्याप्यान्तः सर्वान् संक्लेद्य चावहेत्॥ ४॥
सस्वेद-क्लेद-सङ्कोथान् क्रिमीन् सूक्ष्मान् सुदारुणान्।
रोम-त्वक्-स्नायु-धमनी-तरुणास्थीनि यैः क्रमात्॥
भक्षयेच्छ्वित्रमस्माच्च कुष्ठबाह्य*मुदाहृतम्॥ ५॥

---

विसर्पनिदानानन्तरं तुल्यहेत्वादित्वात् कुष्ठनिदानमारभ्यते,—अथात इति। मिथ्येति। मिथ्याहारादिना, तथा साधुनिन्दावधादिभिः पाप्मभिः कर्म्मभिः सद्यः सेवितैरनुष्ठितैः प्राक्तनैर्वाऽन्यजन्माचरितैः। सेवित-ग्रहणेन सातत्यानुष्ठानं द्योतयति; तेन कदाचित् करणत्वमेषां न कुष्ठहेतुत्वमिति गम्यते। तैस्तथाभूतैः कर्म्मभिर्मिथ्याहारादिना च प्रेरिता दुष्टा मला वातपित्तकफाः शिरास्तिर्य्यग्गामिनीः प्रपद्याऽऽश्रित्य त्वग्लसीका-सृगामिषं दूषयन्ति। तदेव च त्वगादिकं शिथिलीकृत्य ततोऽनन्तरं बहिर्निःसरन्तो बाह्यदेशे प्रसरन्तस्त्वचो वैवर्ण्यं कुर्वन्ति। तत् कुष्ठमुशन्ति मुनय इति शेषः॥ १—३॥

कुतोऽस्य रोगस्य कुष्ठमिति संज्ञेत्याह,—कालेनेति। यतोऽस्माद्धेतोः उपेक्षित-मनुपक्रान्तं सत् कालेन सर्वं वपुः शरीरं कुष्णाति तस्मात् तत् कुष्ठमित्युच्यते। तच्च कुष्ठं धातून् सर्वान् प्रपद्य प्राप्य अनन्तरमन्तर्व्याप्य प्रकृतत्वात् तेषामेवाऽन्तरं व्याप्य, तथा सर्वांस्तानेव धातून् संक्लेद्य संक्लेदयित्वा क्रिमीनावहेत् कुर्यात्। किम्भूतान्, स्वेदादिभिर्युतान् तथा सुदारुणान् दुश्चिकित्स्यान्। यैः क्रिमिभिस्तत् कुष्ठं लोमादीन् भक्षयेत्। श्वित्रसंग्रहरूपता न विद्यते या कुष्ठस्योक्ता। अस्माच्च कारणात् श्वित्रं कुष्ठ-बाह्यमुदाहृतम्। कुष्ठबाह्यं त्वग्गतमात्रमेवोक्तमित्यर्थः॥ ४। ५॥

---

* बाह्यकुष्ठं इति वा पाठः।

कुष्ठानि सप्तधा दोषैः पृथग्मिश्रैः समागतैः ॥ ६ ॥
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ॥ ७ ॥
वातेन कुष्ठं कापालं पित्तादौडुम्बरं कफात् ।
मण्डलाख्यं विचर्चीं च ऋक्षाख्यं वातपित्तजम् ॥ ८ ॥
चर्मैककुष्ठं किटिभ-सिध्माऽलस-विपादिकाः ।
वातश्लेष्मोद्भवाः श्लेष्म-पित्ताद् दद्रु शतारुषी ॥ ९ ॥
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ।
सर्वैः स्यात् काकणं पूर्वं त्रिकं दद्रु सकाकणम् ॥
पुण्डरीकर्क्षजिह्वे च महाकुष्ठानि सप्त तु ॥ १० ॥
अतिश्लक्ष्ण-खरस्पर्श-स्वेदास्वेद-विवर्णताः ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिर्भ्रमः * ॥ ११ ॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽतिकोपनम् ।
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ॥ १२ ॥

---

कुष्ठानीति । कुष्ठानि सप्तधा सप्तप्रकाराणि । कथमित्याह,—पृथग्वातपित्तकफैः । तैरेव च मिश्रैर्वातपित्ताभ्यां वातकफाभ्यां पित्तकफाभ्याम् तैरेव दोषैः समागतैः सन्निपतितैः ॥ ६ ॥

नन्वेवं सति एकदोषजं द्विदोषजं कुष्ठं न, सर्व्वं त्रिदोषजं स्यादित्याशङ्क्याह,—सर्व्वेष्वपीति । सर्वेष्वपि कुष्ठेषु त्रिदोषेषु सन्निपातजेष्वपि अधिकत्वेन व्यपदेशः सन्निपातस्य समविषमात्मकत्वात् ॥ ७ ॥

अत आह,—वातेनेति । वातोल्बणेन सन्निपातेन कापालं नाम कुष्ठं भवति । पित्तात् पित्ताधिकात् सन्निपातादौडुम्बरं नाम कुष्ठं जायते । कफात् कफाधिकात् सन्निपातात् मण्डलाख्यं कुष्ठं जायते, तथा विचर्चीं च कफादेवेति चार्थः । ऋक्षाख्यं कुष्ठं वातपित्तजम् । ऋक्षजिह्वेव प्रकाशखरा आकृतिर्यस्य ऋक्षजिह्वस्य तथैवम्, वातपित्तोल्बणात् सन्निपाताज्जातम् । एवमग्रेऽपि योज्यम् । चर्मैककुष्ठं किटिभ-सिध्मालस-विपादिका वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्द दद्रुशतारुषी द्वे कुष्ठे । न केवलं दद्रुः शतारुच श्लेष्मपित्तात्, यावत् पुण्डरीकं तथा विस्फोटस्तथा पामा तथा चर्मदलं जायते । सर्वैस्त्रिभिरेव समैर्दोषैः काकणं नाम कुष्ठमुत्पद्यते । एवमेतान्यष्टादश कुष्ठानि भवन्ति । पूर्वं त्रिकं कपालोडुम्बरमण्डलाख्यं तथा दद्रुः काकणं पुण्डरीकं ऋक्षजिह्वञ्चेति महाकुष्ठानि सप्त स्युः ॥ ८—१० ॥

अतीति । अतिश्लक्ष्णादिकं कुष्ठलक्षणमग्रजं प्राग्रूपमित्यर्थः ॥ ११ । १२ ॥

---

* भ्रम इत्यत्र श्रुतिरिति श्रम इति च वा पाठः ।

कृष्णाऽरुणकपालाभं रूक्षं सुप्तं खरं तनु ।
विस्तृताऽसमपर्यन्तं दूषितैः * लोमभिश्चितम् ॥
तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च ॥ १३ ॥
पक्वोडुम्बरताम्रत्वग् रोमगौरसिराऽऽचितम् ।
बहलं बहुलक्लेदं रक्तं दाहरुजाधिकम् ।
आशूत्थानावदरण-क्रिमिं विद्यादुडुम्बरम् ॥ १४ ॥
स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम् ।
अन्योन्यसक्तमुत्सन्नं बहुकण्डूस्रुतिक्रिमि ॥
श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम् ॥ १५ ॥
सकण्डूपिटिका श्यावा लसीकाढ्या विचर्चिका ॥ १६ ॥
परुषं तनु रक्तान्तमन्तःश्यावं समुन्नतम् ।
सतोद-दाह-रुक्क्लेदं कर्कशैः पिटिकैश्चितम् ।
ऋक्षजिह्वाकृति प्रोक्तमृक्षजिह्वं बहुक्रिमि ॥ १७ ॥
हस्तिचर्मखरस्पर्शं चर्मैकाख्यं महाश्रयम् ।
अस्वेदं मत्स्यशकल-सन्निभं किटिमं पुनः ।
रूक्षं किणखरस्पर्शं कण्डूमत् परुषासितम् ॥ १८ ॥
सिध्मं रूक्षं बहिःस्निग्धमन्तर्घृष्टं रजः किरेत् ।

अधुना तेषां लक्षणान्याह,—कृष्णेति । कृष्णारुणकपालाभमित्यादिकं कापालस्य लक्षणम् ॥ १३ ॥

पक्वेति । पक्वोडुम्बरताम्रेत्यादिकमुडुम्बरस्य लक्षणम् ॥ १४ ॥

स्थिरमिति । स्थिरं स्त्यानमित्यादिकं मण्डलस्य लक्षणम् ॥ १५ ॥

सकण्ड्विति । सकण्डूपिटिकेत्यादिकं विचर्चिकाया लक्षणम् ॥ १६ ॥

परुषमिति । परुषमित्यादिकमृक्षजिह्वस्य लक्षणम् ॥ १७ ॥

हस्तीति । हस्तिचर्मखरस्पर्शं चर्माख्यं कुष्ठम् । एकेति । एकसंज्ञं कुष्ठं महाश्रयं विस्तीर्णाशयम्, तथा अस्वेदं स्वेदरहितम्, तथा मत्स्यशकलसन्निभं मत्स्यत्वक्खण्डसदृशम् । सुश्रुते त्वेककुष्ठस्यैव लक्षणमभ्यधायि,—"कृष्णो देहो यस्य रक्तोऽरुणो वा तदेकाख्यं कुष्ठमाहुः सकुष्ठम्" इति । खरनादेऽप्युक्तम्,—"महदस्वेदनं मत्स्यशकलाकारमेकजम्" इति । किटिममिति । किटिमन्तु रूक्षं किणखरस्पर्शं कण्डूमत् परुषासितम् ॥ १८ ॥

* हर्षितैरिति वा पाठः ।

श्लक्ष्णस्पर्शं तनु श्वेत-ताम्रं दौग्धिकपुष्पवत् ॥ १९ ॥
प्रायेण चोर्ध्वे काये स्यात् गण्डैः कण्डूयुतैश्चितम् ।
रक्तैरलसकं पाणि-पाददार्यो विपादिकाः ।
तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटिकाचिताः ॥ २० ॥
दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः ।
उत्सन्नमण्डला दद्रुः कण्डूमत्यनुषङ्गिणी ॥ २१ ॥
स्थूलमूलं सदाहार्त्ति रक्तश्यावं बहुव्रणम् ।
शतारुः क्लेदजं त्वाध्य प्रायशः पर्वजन्म च ॥ २२ ॥
रक्तान्तमन्तरा पाण्डु कण्डू-दाह-रुजान्वितम् ।
सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः ॥ २३ ॥
घनभूरिलसीकासृक्-प्रायमाशु विभेदि च ।
पुण्डरीकं तनुत्वग्भिश्चितं स्फोटैः सितारुणैः ॥ २४ ॥
विस्फोटं पिटिकाः पामा कण्डूक्लेदरुजाऽधिकाः ।

---

सिध्ममिति । सिध्मं नाम कुष्ठं बहीरूक्षं, अन्तःस्निग्धं, घृष्टं सत् रजःकिरेत् क्षिपेत्, तथा श्लक्ष्णस्पर्शम्, तथा तनु, वर्णेन श्वेतताम्रं दौग्धिकपुष्पवदलाबुकुसुमाभम्; तच्च प्रायेण बाहुल्येनोर्द्ध्वे काये स्यात् । खरनादेऽप्युक्तम्,—"अलाबुपुष्पवत् सिध्म घृष्टं यच्चोद्वमेत् रजः" इति । गण्डैरिति । अलसकं नाम कुष्ठं गण्डैः रक्तवर्णैः कण्डुयुतैश्च व्याप्तं भवेत् । पाण्यीति । विपादिकाः पाणिपाददार्य्यः स्युः । तथा तीव्रार्त्त्योऽत्यन्तपीड़या युताः, तथा अपरं मन्दकण्डूरल्पखर्जूकाः, तथा सरागपिटिकाचिताश्च । पाणिपादौ दारयन्तीति कर्म्मण्यखन्तात् ङीप् ॥ १९ । २० ॥

दीर्घप्रतानेति । दूर्वावद्दीर्घप्रताना दद्रुः, तथा अतसीपुष्पाभा, तथा उत्सन्नमण्डला च, तथा कण्डूमती, तथा अनुषङ्गिणी प्रसक्तानुप्रसक्त्या संश्लेषवती शरीरमनुधावती ॥ २१ ॥

स्थूलमूलमिति । शतारुर्नाम कुष्ठं स्थूलमूलादि लक्षणमिति यावत् । प्रायशः पर्वजन्म चेति ॥ २२ ॥

रक्तान्तमिति । पुण्डरीकं नाम कुष्ठम् रक्तपर्य्यन्तम्, तथा अन्तरा मध्ये पाण्डु, तथा कण्डु-दाह-रुजा-युतं तथोत्सेधयुक्तम्, तथा रक्तैरंशुभिः सूक्ष्मरेखाभिरिवाचितं व्याप्तम् पद्मपत्रमिव, तथा घनभूरिलसीकासृक्प्रायम्, आशु च विभेदि । तनुत्वग्भिरिति । विस्फोटं नाम कुष्ठं तनुत्वग्भिः स्फोटैश्चितं व्याप्तम् । किम्भूतैः ? सितारुणैः, श्वेत-लोहितैः । पिटिका इति । पिटिकाः कण्डु क्लेदरुजाधिकाः, पामेत्युच्यते ।

सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्-पाणि-कूर्परे ॥२५॥
सस्फोटमस्पर्शसहं कण्डूषातोददाहवत्।
रक्तं दलच्चर्मदलं काकणं तीव्रदाहरुक्॥ २६ ॥
पूर्व्वं रक्तञ्च कृष्णञ्च काकणन्तीफलोपमम्।
कुष्ठलिङ्गैर्युतं सर्व्वैर्नैकवर्ण ततो भवेत् ॥ २७ ॥
दोषभेदीय-विहितैरादिशेल्लिङ्गकर्म्मभिः।
कुष्ठेषु दोषोल्बणतां सर्व्वदोषोल्बणं त्यजेत्।
रिष्टोक्तं यच्च यच्चास्थि-मज्जशुक्रसमाश्रयम् ॥ २८ ॥

---

किम्भूताः ? सूक्ष्माः श्यावारुणा बह्व्यश्च प्रायो बाहुल्येन, सा च पामा स्फिजोः पाण्योः कूर्परयोश्च स्यात् ॥ २३—२५ ॥

सस्फोटमिति। चर्म्मदलं नाम कुष्ठं स्फोटवत् स्पर्शाक्षमम्। तथा कण्ड्वादियुतम्। तथा रक्तं वर्णेन। तथा दलत् स्फुटत्। काकणमिति। काकणं नाम कुष्ठं तीव्रदाहरुक्। तथा पूर्व्व प्रथमं रक्तं तथा कृष्णं काकणन्तीफलोपमं गुञ्जाफलसदृशम्। ततोऽनन्तरं सर्व्वैः कुष्ठलिङ्गैर्युतम्। नैकवर्णमपि तु श्वेतपीतादिवर्णमपि स्यादित्यर्थः। सुश्रुते तु मण्डल-शतारुर्व्विपादिकाऽलसक-चर्म्मदल-विस्फोटाख्यानि प्रोदितानि। स्थूलारुष्क-महाकुष्ठ-परीसर्प-विसर्पराकसारुणाख्यानि तत्रोक्तानि। एषाञ्च लक्षणम्,—"यच्च स्थूलमूलान्यरूंषि जायन्ते सन्धिषूग्राणि तत् स्थूलारुष्कं कुष्ठम्। उत्पद्यन्ते सर्व्वदेहे महाख्ये त्वक्सङ्कोच स्वाप-तोदाङ्ग-सादाः। यस्मिन् दीर्घाः स्फोटिकाः स्राववत्यः संसर्पेयुस्तं परीसर्पमाहुः। तुल्यः सर्पेद्यो विसर्पेच्च शीघ्रं त्वङ्मांसादीन् व्याप्य स स्याद्विसर्पः। कृत्स्ने देहे स्फोटिकाः स्रावहीनाः कण्डूप्राया राकसाख्याः प्रदिष्टाः। चरणानि तनूनि विसर्पीणि तापयुक्तान्यरुणानि" इति। तदेतेषु कुष्ठभेदेषु यथा नामविपर्य्ययस्तथा लक्षणविपर्य्ययोऽपि किं त्वेतेऽपि कुष्ठभेदा इष्यन्त एवेत्येतदपि लक्षणमादरणीयमेवेति मन्यामहे ॥ २६ । २७ ॥

कुष्ठेष्वित्यादि। कुष्ठेषु दोषजेषु सप्तसु इदं वाताधिकं कुष्ठमिदं पित्ताधिकं कुष्ठमिदं कफाधिकं कुष्ठमिति कथं ज्ञातव्यमित्याह,—दोषेति। कुष्ठेषु दोषोल्बणतां दोषाधिक्यं दोषभेदीयविहितैर्यथायथं लिङ्गकर्म्मभिरादिशेत्। लिङ्गानि च तानि कर्म्माणि च लिङ्गकर्म्माणि। यथा—वायोः संसादीनि, पित्तस्य रागदाहादीनि, श्लेष्मणः स्नेहकाठिन्यादीनि, यथायथमात्मीयैरेव कर्म्मभिर्यतस्ते लिङ्ग्यन्ते लक्ष्यन्त ततस्तेषां दोषाणां कर्म्माण्येव लिङ्गान्युच्यन्ते। अत एव च स्रंसादीनि कर्म्माणि दोषाणामुक्त्वा इदमनन्तरमुवाच,—"इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम्। दर्शना-द्यैरवहितस्तत् सम्यगुपलक्षयेत्" इति। सर्व्वेति। सर्व्वदोषोल्बणं सन्निपातजं कुष्ठं त्यजेत् न चिकित्सेत्। रिष्टोक्तमिति। यच्च विकृतिविज्ञानीये कथितं कुष्ठं विशीर्य्यमाणाङ्ग-मित्यादि तच्च नोपक्रमेत्। यच्च कुष्ठमस्थि-मज्जशुक्र-समाश्रयं तच्च त्यजेत् ॥ २८ ॥

याप्यं मेदोगतं कृच्छ्रं पित्तद्वन्द्वास्रमांसगम् ।
अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलञ्च यत् ॥ २९ ॥
तत्र त्वचि स्थिते कुष्ठे तोद वैवर्ण्य-रूक्षताः ।
स्वेद-स्वाप-श्वयथवः शोणिते पिशिते पुनः ॥ ३० ॥
पाणिपादाश्रिताः स्फोटाः क्लेदः सन्धिषु चाधिकम् ।
कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि ॥ ३१ ॥
नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ।
क्षते च क्रिमयः शुक्रे स्वदारापत्यबाधनम् ॥ ३२ ॥
यथापूर्वञ्च सर्व्वाणि स्फुलिङ्गान्यसृगादिषु ॥ ३३ ॥
कुष्ठैकसम्भवं श्वित्रं किलासं दारुणञ्च तत् ।
निर्दिष्टमपरिस्राावि त्रिधातूद्भवसंश्रयम् ॥ ३४

---

याप्यमिति । मेदोगतं कुष्ठं याप्यं पथ्यादिना यापयितुं शक्यम् । कृच्छ्रमिति । पित्तस्य द्वन्द्वं पित्तद्वन्द्वम् । पित्तद्वन्द्वजं तथा रक्तगं मांसगञ्च कुष्टं कृच्छ्रं कृच्छ्रसाध्यम् । अकृच्छ्रमिति । कफवाताढ्यमकृच्छ्रं सुखसाध्यम् । तथा त्वक्स्थं तथा एकदोषाधिकञ्च यत् कुष्ठं तच्च सुखसाध्यम् ॥ २९ ॥

तत्रेति । तत्र तेषु कुष्ठेषु मध्ये त्वचि प्राप्ते कुष्ठे तोदादयः स्युः । रक्तस्थे कुष्ठे स्वेदाद्याः स्युः । मांसस्थे कुष्ठे पाणिपादाश्रिताः स्फोटाः स्युः सन्धिषु चातिशयेन क्लेदो भवति । मेदसि स्थिते कुष्ठे कौण्यं कुणिता तथा गतिक्षयः, अङ्गानां दलनं छेदनमिव स्यात् । अस्थिमज्जस्थे कुष्ठे नासाया घ्राणस्य भङ्गस्तथा नेत्रयो रागः स्वरस्य च क्षयः स्यात्, क्षते च क्रिमयः स्युः । शुक्रस्थे कुष्ठे दाराणामपत्यानाञ्च बाधनमुपद्रवैः स्वेदादिभिः पीड़नं स्यात् ॥ ३०—३२ ॥

यथापूर्व्वमिति । असृगादिषु धातुषु कुष्ठाक्रान्तदेहानां नराणां यानि लिङ्गान्युक्तानि तानि यथापूर्वं स्युः । यथा—स्वेदादीनि रक्तस्थे कथितानि, पाण्याद्याश्रिताः स्फोटादयश्च मांसस्थे स्युः । एवं मेदःप्रभृतिषु योज्यम् । एवञ्च स्वेदस्वापादीनि सर्व्वाण्यपि शुक्रस्थे कुष्ठे दाराणामपत्यानाञ्च स्युरिति यथापूर्वं शब्दस्यार्थः ॥ ३३ ॥

कुष्ठनिदानानन्तरं श्वित्रमुच्यते कुष्ठश्वित्रयोरेककारणत्वात्; अत एवाह,—कुष्ठैकसम्भवमिति । कुष्ठानामेकः समानः सम्भवो यस्य तत् श्वित्रं कुष्ठैकसम्भवं किलासं दारुणञ्च तन्निर्दिष्टं न केवलं श्वित्रमिति । तच्च अपरिस्रावि न कुष्ठवत् स्रवति । उद्भवो जन्म, संश्रय आश्रयः, उद्भवश्च संश्रयश्च उद्भवसंश्रयौ । धातुशब्देनोभयं परिगृह्यते, वातादयस्त्रयो दोषाख्या रक्तादयस्त्रयो धातवः । धातवश्च धातवश्च धातवः, त्रयो धातवो यथाक्रममुद्भव-संश्रयौ यस्य तत् त्रिधातूद्भवसंश्रयम् ॥ ३४ ॥

वाताद् रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ।
सकण्डू च क्रमाद् रक्त-मांस-मेदःसु चादिशेत् ॥ ३५ ॥
वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३६ ॥
अशुक्लरोमाऽबहुलमसंसृष्टं मिथो नवम् ।
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥
गुह्य-पाणितलोष्ठेषु जातमप्यचिरन्तनम् ॥ ३७ ॥
स्पर्शैकाऽऽहार-शय्यादि-सेवनात् प्रायशो गदाः ।
सर्वे सञ्चारिणो नेत्र-त्वग्विकारा विशेषतः ॥ ३८ ॥
क्रिमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥ ३९ ॥

---

वातादिति । वाताद् रूक्षारुणं श्वित्रं स्यात् । पित्तात् कमलपत्रमिव ताम्रं वर्णेन, तथा सदाहम्, तथा रोमविध्वंसि रोमशातनस्वभावम् । कफात् श्वेतम्, तथा घनम्, तथा गुरु स्पर्शेनानुभूयते, तथा सह कण्ड्वा वर्त्तत इति सकण्डू । क्रमाद यथाक्रमं वातादुद्भवं श्वित्रं रक्तमांसमेदःसु चादिशेत् । तत्र वातोद्भवं श्वित्रं रक्ताश्रयम्, पित्तोद्भवं मांसाश्रयम्, मेदोधात्वाश्रयं कफोद्भवमिति क्रम-शब्दस्यार्थः ॥ ३५ ॥

वर्णेनेति । एवेति चार्थे । उभयं दोषोद्भवं रक्ताद्याश्रयं श्वित्रं वर्णेन चेदृक् अरुणं ताम्रं श्वेतं यथाक्रमम्, न पुनर्वातादुद्भवत्वादन्यवर्णं ; रक्तादिसंश्रयत्वादन्यवर्णमित्यर्थः । तच्च श्वित्रं वातोद्भवं रक्तसंश्रयं चोत्तरोत्तरं कृच्छ्रसाध्यमादिशेदिति प्रकृतम् । रक्ताश्रयाद् वातजात् कृच्छ्रात् मांसाश्रयं पित्तजं कृच्छ्रतरं, ततोऽपि मेदःसंश्रितं कफजं कृच्छ्रतममिति ॥ ३६ ॥

अधुना साध्यासाध्यविभागार्थमाह,—अशुक्लेति । अशुक्लरोम यच्छ्वित्रं, तथा अबहुलमघनं, तथा मिथः परस्परमसंसृष्टममिलितं तथा नवमवर्षातिक्रान्तं, तथा अनग्निदग्धजं, अग्निदग्धजं यन्न भवति तच्च साध्यम् । वर्ज्यमतोऽन्यथा शुक्लरोम श्वित्रं बहुलं, तथा परस्परसंसृष्टं, तथा चिरकालोत्पन्नमग्निदग्धजञ्च तच्चासाध्यम् । गुह्यपाणितलोष्ठेषु जातमचिरन्तनमपि अचिन्त्यभावत्वेन वर्ज्यम् ॥ ३७ ॥

स्पर्शैकाऽऽहारेति । सर्वे रोगाः प्रायशो बाहुल्येन सञ्चारिणः सञ्चरणशीलाः । कुतः ? एके च ते आहारशय्यादयश्च एकाहारशय्यादयः । आदिशब्देनाऽऽसनादीनां ग्रहणम् । स्पर्शः संश्लेषः, स्पर्शश्च एकाहारशय्यादयश्च तेषां सेवनं भजनं तस्मात् । नेत्रे च त्वक् च नेत्रत्वक् तत्र विकारा गदास्ते विशेषेण सञ्चारिणः ॥ ३८ ॥

अधुना क्रमप्राप्तान् क्रिमीनधिकृत्याह,—क्रिमयस्त्विति । क्रिमयो द्विधा प्रोक्ताः, मुनिभिरिति शेषः । तुरवधारणे, द्विधैवेत्यर्थः । कथमित्याह,—बाह्याभ्यन्तरभेदतः । एके बाह्या ये केशवस्त्रादिजा यूकालिक्षादयः, अन्येऽन्तरा यथान्त्रादादयः ॥ ३९ ॥

बहिर्मल-कफासृग्-विड्-जन्मभेदाच्चतुर्विधाः ।
नामतो विंशतिविधा बाह्यास्तत्रासृगुद्भवाः ॥ ४० ॥
तिलप्रमाणसंस्थान-वर्णाः केशाम्बराश्रयाः ।
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥
द्विधा ते कोठ-पिटिका-कण्डू-गण्डान् प्रकुर्वते ॥ ४१ ॥
कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम् ।
मधुरान्न-गुड़-क्षीर-दधि-सक्तु-नवौदनैः ॥ ४२ ॥
शकृज्जा बहुविड्धान्य-पर्णशाकोलकादिभिः ॥ ४३ ॥
कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ।
पृथुब्रध्ननिभाः केचित् केचिद् गण्डूपदोपमाः ॥ ४४ ॥
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः ।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥ ४५ ॥

---

जन्मभेदेन चतुःप्रकाराः । कथमित्याह,—बहिरिति बहिर्मलजन्मानः केशपक्ष्मादयः शरीरबाह्येभ्य उत्पन्नत्वात् तथा कफजन्मानो रक्तजन्मानो विड्जन्मानश्चेति चतुर्धा, विट् पुरीषं नामतो नामभेदात् क्रिमयो विंशतिप्रकाराः बाह्या इति । तत्र तेषु बाह्याभ्यन्तरेषु क्रिमिषु मध्येऽसृगुद्भवा असृजा रक्तेन बाह्यमलरूपेणोत्पन्ना बाह्याः । ते च तिलानामिव प्रमाणसंस्थानवर्णा येषां त एवम् । केशा वस्त्रं वा आश्रयो येषां त एवम्, तथा बहुपादाः सूक्ष्माश्च । नामतो नाम्ना यूका लिक्षाश्चेति द्विधा । ते च कोठादीन् विदधति ॥ ४० । ४१ ॥

कुष्ठैकेति । अन्तर्जा आन्तराः क्रिमयः कुष्ठैकहेतवः कुष्ठेन सहैकस्तुल्यः हेतुर्निदानं मिथ्याहारविरुद्धभोजनादिकं येषां त एवम् । तेष्वेव अन्तर्जेषु क्रिमिषु मध्ये श्लेष्मजा अधिकमतिशयेन मधुरान्नादिभिः स्युः ॥ ४२ ॥

रक्तजानां निदानविशेषो वक्ष्यमाण इति पुरीषोत्थांस्तावदाह,—शकृज्जा इति । शकृज्जाः शकृदुद्भूतास्ते कुष्ठैकहेतुसामान्येऽप्यधिकं बहुविड्धान्यैर्यवमाषादिभिर्बहुविड्भिरेव पर्णशाकैः पालक्यादिभिस्तथा उलकादिभिः । उलकाः स्वेदपर्यायः । अपरे तु उलूकादिभिरिति जगुः । उलूकं हरितावस्थं शिम्बीधान्यमिति व्याचक्ष्यते ॥ ४३ ॥

कफादिति । कफादामाशये जाता न पक्वाशये । तत्र हि पृथग्वक्ष्यते । पक्वाशये पुरीषोत्था इति । ते वृद्धाः सन्तः सर्वतः सर्वस्मिन् शरीरे सर्पन्ति प्रसरन्ति । सर्वत इत्याद्यादित्वात्तसिः । पृथुब्रध्ननिभा इत्यादिना संस्थानकथनम् । श्वेता इत्यादिना वर्णकथनम् । नामतो नाम्ना च ते सप्तधा सप्तप्रकाराः । तुश्चार्थे ।

अन्त्रादा उदरावेष्टा हृदयादा महागुहाः * ।
कुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥ ४६ ॥
हृल्लासमास्यस्रवणमविपाकमरोचकम् ।
मूर्च्छा-च्छर्दि-ज्वरानाह-कार्श्य-क्षवथु-पीनसान् ॥ ४७ ॥
रक्तवाहिशिरोत्थाना रक्तजा जन्तवोऽणवः ।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः ॥ ४८ ॥
केशादा लोमविध्वंसा लोमद्वीपा उडुम्बराः ।
षट् ते कुष्ठककर्माणः सहसौरसमातरः ॥ ४९ ॥
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।
वृद्धास्ते स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः ॥ ५० ॥
तदास्योद्गारनिःश्वासा विड्गन्धानुविधायिनः ।
पृथु-वृत्त-तनु-स्थूलाः श्याव-पीत-सिताऽसिताः ॥ ५१ ॥
ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः ।

---

तान्येव सप्त नामान्याह,—अन्त्रादा इत्यादि। अन्त्राण्यदन्तीति अन्त्रादाः, इत्यादी-न्यर्थानुगतानि नामानि। कानिचिच्च याहच्छिकानि कुरव इत्यादीनि। ते च कफजाः क्रिमयो हृल्लासादिकं कुर्वन्ति ॥ ४४—४७ ॥

अधुना रक्तजानाह,—रक्तेति। रक्तजाः क्रिमयो रक्तवाहिसिरोत्थानाः स्युः, तथा अपादा वृत्तास्ताम्रवर्णाश्च। सौक्ष्म्यात् सूक्ष्मत्वात् कारणात् केचिददर्शनाः प्रत्यक्ष-प्रमाणाऽसमधिगम्याः कार्येणैवानुमीयन्ते तेषां नामान्याह, केशादा लोमविध्वंसा लोमद्वीपा उडुम्बरा इति, तथा सहसौरसमातरः। सह सौरसमातृभ्यां वर्त्तन्त इति सहसौरसमातरः। सौरसमातृसंज्ञं नामद्वयम्। एवं षड़ेते रक्तजाः क्रिमयः। अनेकेत्वेवं पठन्ति, सहजा रसमातर इति। सह शरीरेण जायन्त इति सहजाः। रसो माता जननी येषां तत्प्रभवत्वात् ते रसमातर इति। कुष्ठेन सहैकं कर्म्म रोम-ध्वंसकण्डूतोदादिकं केशलोमध्वंसादिकं त्वक्-सिरा-स्नायु-मांस-तरुणास्थिभक्षणं वा येषां त एवम् ॥ ४८। ४९ ॥

पक्वाशयेति। पुरीषोत्थाः पक्वाशय एव जायन्ते। पुरीषस्य पक्वाशयस्थत्वात्। ते चाधोविसर्पिणः स्युर्नीड्गाः। वृद्धाः सन्तो वृद्धिं गता यदा चामाशयोन्मुखास्ते स्युस्तदाऽस्य क्रिमिमतो रोगिण उद्गारनिःश्वासा विड्गन्धानुविधायिनः पुरीषगन्धानु-कारिणो भवेयुः, तथा ते पृथु-वृत्त-तनु-स्थूलाः संस्थानेन श्यावपीतसिताऽसितवर्णेन,

---

* महागुदा इति वा पाठः।

सासुरादाः ससूनाख्या लेलिहा जनयन्ति च ॥ ५२ ॥
विड्भेद-शूल-विष्टम्भ-कार्श्य-पारुष्य-पाण्डुताः ।
रोमहर्षाऽग्निसदन-गुदकण्डूर्विनिर्गमात् ॥ ५३ ॥

इत्यष्टाङ्गहृदये निदानस्थाने चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथातो वातव्याधिनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम् ।
अदुष्टदुष्टः पवनः शरीरस्य विशेषतः ॥ १ ॥
स विश्वकर्म्मा विश्वात्मा विश्वरूपः प्रजापतिः ।

---

तथा नाम्ना पञ्चसंख्यया । तान्येव नामान्याह,—ककेरुकेत्यादि । ते च विनिर्गमाद्वेतो विड्भेदादीन् जनयन्ति ॥ ५०—५२ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने कुष्ठ-श्वित्र-क्रिमि-निदानं नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

कुष्ठनिदानानन्तरं वातव्याधिनिदानमारभ्यते । वातरोगाणां कुष्ठवद्बहुप्रकारत्वाद् विविधदुःखदायित्वाच्चेत्यत आह,—अथात इति । सर्वेति । अर्थाश्चाऽनर्थाश्च अर्थानर्थाः शुभाशुभाः । सर्वे च तेऽर्थानर्थाश्च सर्वार्थानर्थास्तेषां करणं निर्वृत्तिस्तस्मिन्, विश्वस्य जगत एकं प्रधानं कारणं वातः । किम्भूतः ? अदुष्टो यथाक्रमं सर्वार्थकरणे जगतः स्थितिलक्षणे वायुः प्रधानं कारणम् । सर्वानर्थकरणे जगदुत्पत्तिविनाशकरणलक्षणे दुष्टः पवनः प्रधानो हेतुः । शरीरस्य पुनर्विशेषतोऽतिशयेन अर्थानर्थकरणे प्रधानं कारणमिति शेषः । पञ्चधात्वं गतेन प्राणादितया शरीरजननात् धारणाच्च । अतस्तददुष्टौ यतितव्यमिति सम्बन्धः ॥ १ ॥

कथं वायुः कारणमित्यवगम्यत इत्याह.—स इति । यतोऽसौ वायुः विश्वकर्म्मा विश्वानि शरीरजनन-वर्द्धन-धारण-भञ्जन-शोषणादीन्यर्थानर्थकरणानि कर्म्माणि यस्य स विश्वकर्म्मा । कस्माद्द विश्वकर्मेत्याह,—विश्वात्मा विश्वेषां शुभानामात्मा हेतुः । हेत्वर्थोऽत्र आत्म-शब्दः । ननु विश्वात्मेति कथं ज्ञायत इत्याह,—विश्वरूप इति । यतो विश्वं रूपं [illegible] यथा प्रजापतिः प्रजानां

स्रष्टा धाता विभुर्विष्णुः संहर्त्ता मृत्युरन्तकः॥
तददुष्टौ प्रयत्नेन यतितव्यमतः सदा ॥ २ ॥
तस्योक्तं दोषविज्ञाने कर्म्म प्राकृतवैकृतम्।
समासाद् व्यासतो दोष-भेदीये नाम धाम च ॥ ३ ॥
प्रत्येकं पञ्चधा चारो व्यापारश्चेह वैकृतम्।
तस्योच्यते विभागेन सनिदानं सलक्षणम् * ॥ ४ ॥
धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः।

---

पालकः, तथा स्रष्टा प्रकृतत्वाद् विश्वस्य, तथा धाता विश्वस्य धारकः, तथा हि वाह्यो लोको वायुमण्डलेन धार्य्यते। सत्यलोकोऽपि प्राणापानादिभिः। कस्माद् विश्वरूपः? यस्माद् विभुः। अतस्तदर्थानर्थकरणे प्रभुरित्यर्थः। कस्मात् प्रजापतिः? यस्माद् विष्णुर्व्यापी। विषॢव्याप्तावित्यस्यौणादिके क्नु-प्रत्यये विष्णु-शब्दः। संहर्त्ता वाह्याध्यात्मिकसर्गसंहरणात्। मृत्युर्यमरूपत्वात्कार्य्यकरणात्, तथा अन्तको यमो मारक एव साक्षात्। यतश्चैवमतस्तददुष्टौ तस्याप्रकोपे सदा सर्वकालं यतितव्यम्॥ २॥

तस्येति। तस्य पवनस्य कर्म्मोक्तम्। क्व? दोषविज्ञाने दोषविज्ञानीयाध्याये। किम्भूतं कर्म्म? प्राकृतवैकृतम्। प्रकृतौ भवं प्राकृतं स्वाभाविकमुत्साहोच्छासादिलक्षणम्। वैकृतन्तु वृद्धस्तु कुरुतेऽनिलः। कार्श्यकार्ण्यौष्ण्येत्यादिग्रन्थनिर्दिष्टम्। एतत् समासात् संक्षेपतो वायोः कर्म्म। व्यासतो विस्तरतः पुनर्दोषभेदीये नाम धाम चोक्तमित्यनुवर्त्तनीयम्। प्रत्येकं पञ्चधा। एकमेकं प्रति प्रत्येकं नाम धाम च। प्राणादिभेदेन नाम पञ्चधा, धाम स्थानमपि पञ्चधा मूर्द्धादिभेदेन। प्राणस्य मूर्द्धा स्थानम्, "प्राणोऽत्र मूर्द्धगः" इति वचनात्। तथा उरः स्थानमुदानस्येति, तथा व्यानो हृदि स्थित इति, तथा समानोऽग्निसमीपस्थ इति, तथाऽपानोऽपानग इति। तथा चारोऽपि पञ्चधा। चरणं चारो गतिः। तथा चोक्तम्,—"प्राण उरःकण्ठचरः, उदानो नासानाभिगलचरः, व्यानः कृत्स्नदेहचरः, समानः कोष्ठचरः, अपानो वस्तिमेढ्रोरुगोचरः" इति। व्यापारोऽपि वायोः प्राणादिभेदेन पञ्चधा। तत्र प्राणस्य व्यापारो बुद्धि-हृदयेन्द्रिय-चित्त-धृगित्यादिः, उदानस्य व्यापारो वाक्प्रवृत्तिरित्यादिः, व्यानस्य व्यापारो गत्यपक्षेपणोत्क्षेपणादिकः, समानस्य व्यापारोऽन्नग्रहणादिकः, अपानस्य व्यापारः शुक्रार्त्तवादीनां निष्क्रमणरूपः, एवं विस्तरेण दोषभेदीये वातः प्राणादिभेदेन पञ्चधा नामभिरुक्तः। इहेति। इहास्मिन्नध्याये तस्य वातस्य वैकृतं कर्म्म विभागेन पृथग्रूपतयोच्यते। किम्भूतम्? सनिदानं सलक्षणं सहनिदानेन सनिदानं तथा सह लक्षणेन सलक्षणम्॥ ३—४॥

वायोर्य्योभयथाऽपि कोपः सम्भवति; तन्निदानौ दर्शयन्नाह,—धातुक्षयकरैरिति। धातुक्षयकरैराहारविहारादिभिरतिनिषेवितैरतिमात्रसेवितैश्चिरकालसेवितैश्च पवनः

---

* असंख्यमपि संख्याय यथाशैत्यपरैरितमिति वा पाठः।

चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन् ।
तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वाऽऽवरणं बली ॥ ५ ॥
तत्र पक्वाशये क्रुद्धः शूलाऽऽनाहाऽन्त्रकूजनम् ।
मलरोधाऽश्मवर्ध्माऽर्शस्त्रिकपृष्ठकटीग्रहम् ।
करोत्यधरकायेषु तांस्तान् कृच्छ्रानुपद्रवान् ॥ ६ ॥
आमाशये तृड्-वमथु-श्वास-कास-विसूचिकाः ।
कण्ठोपरोधमुद्गारान् व्याधीनूर्द्ध्वं च नाभितः ॥ ७ ॥
श्रोत्रादिष्विन्द्रियवधं त्वचि स्फुटनरूक्षणम् ।
रक्ते तीव्रा रुजः स्वापं तापं रागं विवर्णताम् ।
अरूंष्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम् ॥ ८ ॥
मांसमेदोगतो ग्रन्थींस्तोदाढ्यान् कर्कशान् भ्रमम् * ।
गुर्वङ्गं चातिरुक् स्तब्ध-मुष्टिदण्डहतोपमम् ॥ ९ ॥
अस्थिस्थः सक्थिसन्ध्यस्थि-शूलं तीव्रं बलक्षयम् ।

कुप्यति । किं कुर्व्वन् ? स्रोतःसु रिक्तेषु चरन् । धातुक्षयकरातिसेवनात् यतस्तदानीं स्रोतसां शून्यता भवति तथाभूतेषु स्रोतःसु प्रभञ्जनस्तदन्तःप्रवेशात् तान्येव स्रोतांसि रिक्तानि भृशं पूरयन् एवं धातुक्षयात् कुप्यति मरुत्, तथा तेभ्यः स्रोतोभ्योऽन्यदोषपूर्णेभ्य आवरणं प्राप्य बली वायुरेवं वा कुप्यति ॥ ५ ॥

तत्रेति । एवमुभयथा वायुः पक्वाशये क्रुद्धः शूलानाहौ अन्त्रकूजनादींश्च करोति, तथा अधरकाये च शरीरस्याधस्तात् नानाविधानुपद्रवान् व्याधीन् कृच्छ्रान् कृच्छ्रसाध्यान् करोति । कायस्याधर इति पूर्व्वापरेत्यादिना समासः ॥ ६ ॥

आमाशय इति । आमाशये क्रुद्धस्तृड़ादीन्, तथाऽन्यानप्यनुक्तान् व्याधीन् नाभेरूर्द्ध्वं काये करोति ॥ ७ ॥

श्रोत्रादिष्विति । श्रोत्रादिष्विन्द्रियाधारेषु क्रुद्ध इन्द्रियाणां वधं विनाशं करोति । त्वचीति । त्वचि क्रुद्धस्तस्यास्त्वचः स्फुटनं रूक्षताञ्च करोति । रक्तेति । रक्ते क्रुद्धस्तीव्रा रुजः, तथा स्वापादीन् करोति ॥ ८ ॥

मांसेति । मांसमेदोगतस्तत्स्थः क्रुद्धो ग्रन्थींस्तोदादियुतान्, तथा भ्रमादींश्च करोति । सुश्रुते चात्र विशेष उक्तः, तथा च तद्ग्रन्थः,—"कर्कशांस्तोदबहुलान् ग्रन्थीन् मांससमाश्रितः । वायुर्मेदोयुतः कुर्य्यात् ग्रन्थीन् मन्दरुजो नृणाम्" इति ॥ ९ ॥

* भृशमिति वा पाठः ।

मज्जस्थोऽस्थिषु सौषिर्य्यमस्वप्नं स्तब्धतां रुजम् ॥ १० ॥
शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव च ।
तद्वद् गर्भस्य शुक्रस्थः सिरास्वाध्मानरिक्तते ॥ ११ ॥
तत्स्थः स्नायुस्थितः कुर्याद् गृध्रस्यायामकुब्जताः ।
वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः ।
प्रसारणाऽऽकुञ्चनयोः प्रवृत्तिञ्च सवेदनाम् ॥ १२ ॥
सर्वाङ्गसंश्रयस्तोद-भेद-स्फुरण-भञ्जनम् ।
स्तम्भमाक्षेपणं स्वापं सन्ध्याकुञ्चनकम्पनम् ॥ १३ ॥
यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ।
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः ॥ १४ ॥
अधः प्रतिहतो वायुर्व्रजत्यूर्द्ध्वं हृदाश्रयाः ।
नाड़ीः प्रविश्य हृदयं शिरःशङ्खौ च पीड़यन् ॥ १५ ॥
आक्षिपेत् परितो गात्रं धनुर्वच्चास्य नामयेत् ।
कृच्छ्रादुच्छ्वसिति स्तब्ध-स्रस्तमीलितदृक् ततः ॥ १६ ॥

---

अस्थिस्थ इति । अस्थिस्थः क्रुद्धः सक्थिमस्थ्यस्थिशूलं तीव्रं दारुणं बलक्षयञ्च करोति । मज्जस्थ इति । मज्जस्थः क्रुद्धोऽस्थिसौषिर्य्यादीन् करोति ॥ १० ॥

शुक्रस्थेति । शुक्रस्थः क्रुद्धः शुक्रस्य शीघ्रमुत्सर्गं सङ्गादीन् वा करोति, तद्वत् तथैव गर्भस्यापि तथाभूतवीजोत्पन्नत्वात् शीघ्रोत्सर्गादीन् करोति । सिरास्विति । तत्स्थः सिरास्थितः क्रुद्धः तास्वेव सिरासु आध्मानरिक्तते करोति । स्नायुिति । स्नायुस्थितः क्रुद्धो गृध्रस्यादीन् करोति । वातेति । सन्धिगतोऽनिलः क्रुद्धः शोफं कुर्य्यात् । किम्भूतम् ? वातपूर्णदृतिस्पर्शं तत्तुल्यम् । तथा प्रसारणे आकुञ्चने च सवेदनां प्रवृत्तिं करोति ॥ ११ । १२ ॥

सर्व्वाङ्गसंश्रय इति । सर्व्वाङ्गसंश्रयोऽनिलस्तत्रस्थः क्रुद्धस्तोदादीन् करोति ॥ १३ ॥

यदेति । यदा तु सर्व्वा धमनीर्वायुः क्रुद्धोऽभ्येति आभिमुख्येनागच्छति । पुनः पुनस्तदाऽङ्गं शरीरमाक्षिपत्याक्रामति । एष वातव्याधिराक्षेपकः स्मृतः ॥ १४ ॥

अथाऽपतन्त्रकं लक्षयति,—अध इति । अधः प्रतिहत ऊर्द्ध्वं व्रजन् मारुतो हृदाश्रिता हृदयस्थिता नाड़ीरन्तः प्रविश्य हृदयं तथा शिरश्च शङ्खौ च पीड़येत् आक्षिपेत् परितो गात्रं समन्तात् कायमाक्षिपेत् संहरेत्, तथा धनुर्वच्चास्य नामयेत् । प्रकृतत्वात् गात्रमेवास्य अपतन्त्रकवतो नरस्य नामयेत्, तथा स पुमान् कृच्छ्रादुच्छ्वसिति । दृक् चक्षुरिन्द्रियाधिष्ठानं दृक्शब्देनेह गृह्यते । स्तब्धा स्रस्ता मीलिता च दृक् यस्यासौ

कपोत इव कूजेत् स निःसंज्ञः सोऽपतन्त्रकः ।
स एव चाऽपतानाख्यो मुक्ते तु मरुता हृदि ।
अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥ १७ ॥
गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥ १८ ॥
मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा ।
व्याप्नोति सकलं देहं जत्रुरायम्यते तदा ॥ १९ ॥
अन्तर्धनुरिवाऽङ्गञ्च वेगैः स्तम्भश्च नेत्रयोः ॥
करोति जृम्भां दशनं दशनानां कफोद्वमम् ॥ २० ॥
पार्श्वयोर्वेदनां वाक्य-हनु-पृष्ठ-शिरोग्रहम् ।
अन्तरायाम इत्येष बाह्यायामश्च तद्विधः ॥ २१ ॥
देहस्य बहिरायामात् पृष्ठतो नीयते शिरः ।

---

स्तब्धस्तमीलितदृक् । ततोऽनन्तरं कपोत इव कूजेदव्यक्तं शब्दं विदध्यात्, तथा निःसंज्ञो विचेतनः सम्पद्यते । स एवंरूपो वातव्याधिरपतन्त्रको भण्यते, स एव चापतानकसंज्ञो निगद्यते । मुक्ते त्वित्यादि । वायुनाऽनाक्रान्ते हृदये क्षणं स्वास्थ्यमाप्नुयात् मुहुरस्वास्थ्यं तेनावृते हृदि अस्वास्थ्यमाप्नुयात् ॥ १५—१७ ॥

गर्भेति । स चाकालगर्भपातात् समनन्तरं योषितां प्रायो जायते । कदाचित् शोणितातिस्रवात् स्त्रीणां पुरुषाणां चाभिघातात् स्यात् । सोऽपतन्त्रको गर्भपातनिमित्तोत्पन्नो दुश्चिकित्स्यः स्यात् । शोणितातिस्रवोत्थितो दुश्चिकित्स्यतरः । अभिघातसमुत्थो दुश्चिकित्स्यतमः ॥ १८ ॥

मन्ये इति । मन्ये द्वे ग्रीवापार्श्वाश्रिते नाड्यौ वायुः संस्तभ्य अन्तरा यच्छन् धमनीर्यदा गच्छन् सकलं देहं व्याप्नोति तदा जत्रुरायम्यते वक्रीक्रियते । जत्रु-शब्दस्य पुंस्त्वं लोकाश्रयत्वाल्लिङ्गस्येति । यथा अन्तर्मुखतो भागादङ्गं शरीरञ्च धनुरिवाऽऽयम्यत इति चार्थः । वेगैरुच्छिद्य पुनरङ्गैर्भज्यत इव तुद्यत इव नानाव्यथारूपैः, तथा स्तम्भञ्च नेत्रयोः करोति, तथा जृम्भाम्, तथा दशनानां दन्तानां दशनं खादनम् । दशनमित्यत्र दाम्नीशसयुजेत्यादौ दंशेरनुनासिकलोपनिर्देशो ज्ञापनार्थः क्वतोऽन्यस्मिन्नपि प्रत्यये लोपो भवतीति ; तेन ल्युट्यपि भवति दशनमिति वचनादत्र न लोपः । प्रायिकं चैतज् ज्ञापकमिति हितं कीटैश्च दंशनमित्यपि भवति, तथा कफस्योद्गमम्, तथा पार्श्वयोर्द्वयोर्वेदनां शूलम्, तथा वाक्यादीनां ग्रहं स्तम्भम् । इत्येष वातव्याधिरन्तरायामसंज्ञोऽङ्गस्यान्तरायमनाद् वक्रीकरणात् उच्यत इति शेषः । बाह्यायाम इति । बाह्यायामश्च तद्विधस्तादृशो देहस्य बहिरायामादङ्गस्य धनुवद् बहिर्वक्रीकरणाद् बहिरायामः उच्यत इति शेषः । तमेव प्रदर्शयितुमाह,—पृष्ठत इत्यादि ।

उरश्चोत्क्षिप्यते तत्र कन्धरा चावसृद्यते ॥ २२ ॥
दन्तेष्वास्ये * च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता ।
बाह्यायामं धनुष्कम्भं ब्रुवते वेगिनश्च तम् ॥ २३ ॥
व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात् ।
व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम् ।
तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्ज्जितः ॥ २४ ॥
गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकेषु च ॥ २५ ॥
जिह्वातिलेखनात् शुष्क-भक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू ॥ २६ ॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुस्रंसः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम् ॥ २७ ॥
वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ।
जिह्वास्तम्भः स तेनान्न-पानवाक्येष्वनीशता ॥ २८ ॥
शिरसा भारहरणादतिहास्यप्रभाषणात् ।

---

शिरः पृष्ठाभिमुखं नीयते, तथा तत्र बाह्यायाम उरो वक्ष उत्क्षिप्यते उन्नतिं नीयते, तथा कन्धरा ग्रीवा चावसृद्यते च्युयते, तथा दन्तेषु वक्त्रे च वैवर्ण्यं प्रकृताद्द वर्णाद्द वर्णान्तरापत्तिः, तथा प्रकर्षेण स्वेदः, तथा स्रस्तगात्रता श्लथाङ्गता। तं तथाभूतं वातव्याधिं बाह्यायामं धनुष्कम्भञ्च ब्रुवते। तमेव केचिद्द वेगिनमित्याचक्षते ॥ १९—२३ ॥

अधुना व्रणायाममाह,—व्रणमिति। दोषा व्रणं मर्म्माश्रितं प्राप्य अनन्तरं समीरणस्य समीरणात् प्रेरणात् सर्वां तनुं सकलं देहमापादमस्तकं व्यायच्छन्ति विशेषेणाक्रामन्ति। एष व्रणायामस्तृष्यतस्तथा पाण्डुगात्रस्य नरस्य वर्ज्जितोऽसाध्यत्वात् ॥ २४ ॥

· गते इति। सर्वेष्वाक्षेपकेषु यदा धमनीः सर्वा इत्यादिग्रन्थनिर्दिष्टेषु व्रणायामपर्य्यन्तेषु वेगे गते वेगानां शान्तौ सत्यां स्वास्थ्यं भवेत् नाऽन्यदा ॥ २५ ॥

जिह्वेति। जिह्वातिलेखनादिभिः कुपितो हन्वोर्मूले स्थितो वायुर्हनू संसयित्वा स्थानाच्चालयित्वा विवृतास्यत्वं प्रसारितमुखत्व अथवा संवृतास्यत्वं करोति। स एवम्भूतो हनुस्रंस उच्यते। तेन च हनुस्रंसेन कृच्छ्रात् कथमपि चर्व्वणं भाषणञ्च स्यात् ॥ २६ । २७ ॥

वाग्वाहिनीति। वाग्वाहिनीशिरासंस्थो वायुर्जिह्वां स्तम्भयते। स एव जिह्वास्तम्भ उच्यते। तेन जिह्वास्तम्भेन अन्नपानवाक्येषु अनीशताऽसमर्थता भवति ॥ २८ ॥

---

* दन्तौष्ठास्ये चेति वा पाठः।

उच्चास-वक्त्रच्चवथु-खरकार्म्मुक-कर्षणात् ॥ २९ ॥
विषमादुपधानाच्च कठिनानाञ्च चर्वणात्।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्द्ध माश्रितः ॥ ३० ॥
वक्रीकरोति वक्त्रार्द्धमुक्तं हसितमीचितम्।
ततोऽस्य कम्पते मूर्द्धा वाक्सङ्गः स्तब्धनेत्रता ॥ ३१ ॥
दन्तचालः स्वरभ्रंशः श्रुतिहानिः च्चवग्रहः।
गन्धाज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते ॥ ३२ ॥
निष्ठीवः पार्श्वतो यायादेकस्याच्णो निमीलनम्।
जत्रोरूर्द्ध्वं रुजा तीव्रा शरीरार्द्धेऽधरेऽपि वा।
तमाहुरर्द्दितं केचिदेकायाममथाऽपरे ॥ ३३ ॥
रक्तमाश्रित्य पवनः कुर्य्यान्मूर्द्धधराः सिराः।
रुचाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात् सिराग्रहः ॥३४॥
गृहीत्वाऽर्द्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च।
पच्चमन्यतरं हन्ति सन्धिबन्धान् विमोच्चयन् ॥ ३५ ॥
कृत्स्नोऽर्द्धकायस्तस्य स्यादकर्म्मण्यो विचेतनः।
एकाङ्गरोगं तं केचिदन्ये पच्चबधं विदुः ॥ ३६ ॥

---

शिरसेति। शिरसा भारहरणादिभिर्वायुर्विवृद्धो विशेषेण वृद्धिं गतस्तथा तैस्तैश्च वातलैः सर्वरोगनिदानादुक्तैरूर्द्ध्वमाश्रितः शरीरस्योपरिभागे आ समन्तात् स्थितो वक्त्रार्द्धं वक्रीकरोति, तथा उक्तं हसितमीचितञ्च वक्रीकरोति। ततोऽनन्तरमस्य नरस्य मूर्द्धा कम्पते, तथा वाक्सङ्गो जायते, तथा स्तब्धनेत्रतादयश्च, तथा निष्ठीवो निष्ठीवनं पार्श्वं गच्छेत्। एकस्य चाच्णो निमीलनं स्यात्। जत्रोरूर्द्ध्वं तीव्रा रुजा दारुणा पीड़ा भवति। शरीरार्द्धेऽधरेऽपि वाऽधस्तादृ वा तमीदृशं वातव्याधिं केचिदर्द्दितमाहुः, अपरे तन्त्रकृत एकायामं वदन्ति ॥ २९—३३ ॥

रक्तमिति। पवनो रक्तमाश्रित्य अश्रित्वा मूर्द्धाश्रिताः सिरा रुचादिगुणयुक्ताः कुर्य्यात्। स शिराग्रह उच्यते, स चासाध्यः ॥ ३४ ॥

गृहीत्वेति। वायुस्तनोः शरीरस्यार्द्धं गृहीत्वा सिराः स्नायूंश्च विशोष्य ततोऽन्यतरं वामं दच्चिणं वा पच्चं हन्ति। किं कुर्वन्? सन्धीनां बन्धान् विमोच्चयन् विघट्टयन्। तस्यैव च व्याधिमतः कृत्स्नः सर्वोऽर्द्धकायो वा अकर्म्मण्यः क्रियायामशक्तो विचेतनश्च स्यात्। तमीदृशं वातव्याधिं केचिदेकाङ्गरोगं वदन्ति, अन्ये पच्चबधमाहुः। अर्द्धकायस्त्वर्द्धं नपुंसकमिति समासः ॥ ३५। ३६

सर्व्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले ॥ ३७ ॥
शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः।
कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः ॥ ३८ ॥
आमबद्धायनः कुर्य्यात् संस्तभ्याङ्गं कफान्वितः।
असाध्यं हतसर्वेहं दण्डवद्दण्डकं मरुत् ॥ ३९ ॥
अंसमूलस्थितो वायुः सिराः सङ्कोच्य तत्रगाः।
बाहुप्रस्पन्दितहरं जनयत्यवबाहुकम् ॥ ४० ॥
तलं प्रत्यङ्गलीनां या कण्डरा बाहुपृष्ठतः।
बाहुचेष्टापहरणी विश्वाची नाम सा स्मृता ॥ ४१ ॥
वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद् यदा।
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि ॥ ४२ ॥
कम्पते गमनारम्भे खञ्जन्निव च याति यः।

---

सर्व्वाङ्गरोगमिति। सर्वकायाश्रिते वायौ तेन पूर्वोक्तेनैकाङ्गरोगोक्तेन लक्षणेन तुल्यं वर्त्तते तद्वत् सर्व्वाङ्गरोगमप्याहुः ॥ ३७ ॥

शुद्धेति। शुद्धवातेन हतः पक्षः एकाङ्गरोगः कृच्छ्रसाध्यतमो मतोऽतिशयेन कृच्छ्रसाध्यः। अन्येन संयुक्तो वातः कृच्छ्रसाध्यः। क्षयहेतुकः पक्षो विवर्ज्यः स नोपक्रम्योऽसाध्यत्वात् ॥ ३८ ॥

आमेति। आमेन बद्धानि स्थगितान्ययनानि द्वाराणि प्रकृतत्वात् स्रोतसां येन स आमबद्धायनः कफान्वितो मारुतोऽङ्गं संस्तभ्य स्तम्भयित्वा दण्डवत् दण्डकाख्यं वातव्याधिविशेषं कुर्य्यात्, तमसाध्यं तथा हताः सर्वा ईहाश्चेष्टा यस्मिंस्तमेवम्भूतम् ॥ ३९ ॥

अंसमूलेति। वायुरंसमूले स्थितः तत्रगा अंसमूलस्थिताः सिराः सङ्कोच्य अववाहुकाख्यं वातव्याधिं जनयति। किम्भूतम् ? बाहुप्रस्पन्दितं हरतीति बाहुप्रस्पन्दितहरम्। हरतेरनुद्यमनेजित्यच् ॥ ४० ॥

तलमिति। तलं हस्ततलं प्रति तल्लक्षणं कृत्वा या कण्डरा सुमहान् स्नायुसङ्घातः सा बाहुपृष्ठतो गता, तथा मारुतार्दिता वातेन पीड़िता सती बाहुचेष्टां भुजव्यापारमपहरति बाहुचेष्टापहरणी। बाहुलकादत्र कर्त्तरि ल्युट् स्त्रीत्वञ्च। एवम्भूता विश्वाची-संज्ञा स्मृता मुनिभिरिति शेषः ॥ ४१ ॥

वायुरिति। कट्यां स्थितो मारुतो यदा सक्थ्न ऊरोः सम्बन्धिनीं कण्डरामाक्षिपेदाकर्षेत् तदा प्राणी खञ्जो भवेत्। द्वयोरपि सक्थ्नोः सम्बन्धिनीं कण्डरां यदाऽक्षिपेत् तदा पङ्गुः स्यात् ॥ ४२ ॥

कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४३ ॥
शीतोष्ण-द्रव-संशुष्क-गुरु-स्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथाऽऽयास-संक्षोभ-स्वप्न-जागरैः ॥ ४४ ॥
सश्लेष्ममेदःपवनमाममत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥ ४५ ॥
सक्थ्यस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तिमितेन तत् ।
तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ४६ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्द-स्तैमित्य-तन्द्रा-च्छर्द्यरुचि-ज्वरैः ॥ ४७ ॥
संयुतौ पादसदन-कृच्छ्रोद्धरण-सुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथाऽपरे ॥ ४८ ॥
वातशोणितजः शोफो जानुमध्ये महारुजः ।

---

कम्पत इति । तथा यो गमनारम्भे कम्पते वेपते खञ्जन्निव च याति । कलायखञ्जाख्यं तमेवम्भूतं व्याधिं विद्यात् । किम्भूतम् ? मुक्तं सन्धिप्रबन्धनं यत्र तं तथाभूतम् ॥ ४३ ॥

शीतोष्णेति । जीर्णेन सहितमजीर्णं जीर्णाजीर्णं पक्वापक्वमाहारकादम्बकं केनचिन्निमित्तेन जाठराग्निसंयोगादाहारराशिः कश्चिद्भागः पक्वः कश्चिद् विदग्ध इति जीर्णाजीर्णं, तस्मिन् सति शीतोष्णादिभिस्तथाऽऽयास-संक्षोभादिभिर्निषेवितैश्चिरमभ्यस्तैरामममत्यर्थं सञ्चितं बहुसंभृतं ऊरू यदि प्रतिपद्यते उभावाश्रित्याऽऽस्ते, तदा तस्मिन् काले तेन यथोक्तेन हेतुना तावूरू स्कभ्नाति स्तम्भयति । किम्भूतमामम् ? सश्लेष्ममेदःपवनम्, सह श्लेष्मणा मेदसा पवनेन च वर्तत इति सश्लेष्ममेदःपवनं न तु केवलमेव । तथा इतरं दोषं वातश्लेष्मापेक्षया पित्ताख्यमभिभूयाऽऽक्रम्य वातं कफं वा । तेन हि तयोरभिभवो न युक्तस्तत्सहवर्तमानत्वात्, तथा तेन सह वर्तमानेनापि श्लेष्मणा च स्तिमितेन स्त्यानेन सक्थिसम्बन्धीन्यस्थीनि अन्तः प्रपूर्य तानि निर्भराणि कृत्वा तदा 'आममूरू स्कभ्नातीति' योज्यम् । तेन हेतुना तदा तस्मिन् काले तावूरू स्तब्धौ निश्चलौ तथा स्पर्शतः शीतौ तथाऽचेतनौ सूच्यादिभिस्तुद्यमानावपि पीडां न वेदयेताम्, अत एव परकीयाविव गुरू स्याताम्, तथा अतिभृशव्यथावत्यन्तशूलान्वितौ । परकीयाविति । जनस्य परस्य चेति ईयः कुगागमश्च । तथा ध्यानादिभिः संयुतौ, ध्यानं चिन्ता दौर्मनस्यमित्यर्थः । तथा पादसदनादिभिः संयुतौ । एवंलक्षणो यो व्याधिविशेषस्तमूरुस्तम्भमाहुः तन्त्रकृत इति शेषः । अपरे आचार्या आढ्यवातमिति तमाहुः । आमशब्दस्य नपुंसकत्वं लोकाश्रयत्वाल्लिङ्गस्येति बोध्यम् ॥ ४४—४८ ॥

ज्ञेयः क्रोष्टुकशीर्षश्च स्थूलः क्रोष्टुकशीर्षवत् ॥ ४९ ॥
रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा ।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ ५० ॥
पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता ।
सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ ५१ ॥
विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता ॥ ५२ ॥
हृष्येते चरणौ यस्य भवेताञ्च प्रसुप्तवत् ।
पादहर्षः स विज्ञेयः कफमारुतकोपजः ॥ ५३ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ।
विशेषतश्चंक्रमिते पाददाहं तमादिशेत् ॥ ५४ ॥

इत्यष्टाङ्गहृदये निदानस्थाने पञ्चदशोऽध्यायः ॥ १५ ॥

---

वातेति । जानुमध्ये महारुजः शोफो वातशोणिताज्जातः क्रोष्टुकशीर्षाख्यो वातव्याधिभेदः, स च स्थूलशृगालशिरःसदृशो भवति ॥ ४९ ॥

रुगिति । पादे चरणे विषमन्यस्ते सति अथवा श्रमेण यदा गुल्फमाश्रित्य वातेन रुग् जायते, तं वातकण्टकाख्यं वातव्याधिमाहुः ॥ ५० ॥

पार्ष्णिमिति । पार्ष्णिं प्रति पार्ष्ण्यभिमुखं या अङ्गुलीनां कण्डरा सा मारुतेन वायुनाऽर्दिता व्यथिता चरणोद्धरणावसरे यः सक्थ्युत्क्षेप ऊर्द्ध्वं प्रेरणं तं निगृह्णात्यवगृह्णाति सक्थ्नोर्निश्चलत्वमिवोत्पादयति । तां कण्डरां व्याधिविशेषसंज्ञां गृध्रसीं प्रचक्षते तन्त्रज्ञा इति शेषः ॥ ५१ ॥

विश्वाचीति । विश्वाची चोक्ता बाहुचेष्टापहरणीत्यादिना ग्रन्थेन । गृध्रसी चाधुनैवोक्ता । ते द्वे तीव्ररुजान्विते सत्यौ खल्ली भण्येते ॥ ५२ ॥

हृष्येत इति । यस्य पुंसश्चरणौ हृष्येते प्रसुप्ताविव च स्यातां, स एवम्भूतो वातव्याधिः पादहर्षाख्यः, स च वातश्लेष्मकोपजो वेद्यः ॥ ५३ ॥

पादयोरिति । अनिलः पित्तरक्तसहितः पादयोर्दाहं कुरुते विशेषेण तु चंक्रमिते सति तमेवम्भूतं पाददाहमादिशेद् ब्रूयाद् भिषगिति शेषः ॥ ५४ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने वातव्याधिनिदानं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

# षोड़शोऽध्यायः ।

अथातो वातशोणित-निदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
विदाह्यन्नं विरुद्धञ्च तत्तच्चासृक्प्रदूषणम् ।
भजतां विधिहीनञ्च स्वप्नजागरमैथुनम् ॥ २ ॥
प्रायेण सुकुमाराणामचंक्रमणशीलिनाम् ।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥ ३ ॥
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।
तादृशेनासृजा रुद्धः प्राक् तदेव प्रदूषयेत् ॥ ४ ॥
आढ्यरोगं खुड़ं वात-बलासं वातशोणितम् ।
तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति ॥ ५ ॥
विशेषाद् यानयानाद्यैः प्रलम्बौ तस्य लक्षणम् ।
भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥ ६ ॥

---

वातशोणितनिदानं वातव्याधिनिदानात् पृथगारभ्यते, बहुवक्तव्यत्वात् । अन्यथा वातव्याधिविशेष एव वातशोणिताख्यो व्याधिरिति तत्रैव वक्तुं युक्तः स्यात् । तस्माद् वातशोणितनिदानं प्रक्रम्यत इत्याह,—अथात इति ॥ १ ॥

विदाह्यन्नमिति । मद्याऽम्ल-तक्र-दधि-निष्पाव-व्रीहि-वारिचरमांस-कुलत्थकुठेरादिकं विदाह्यन्नं, तथा विरुद्धमन्नं संयोगमात्रादिवशात् यथाऽऽनूपमांसिषं माषक्षीरेत्यादिकं प्रागुक्तं तत् तच्चासृक्प्रदूषणं, अन्यदप्याहारविहारजातं यत् तत्र तत्रोक्तं तत्भजतां शीलयतां नृणां पुरुषाणां, तथा विधिहीनमयथाशास्त्रं स्वप्नजागरमैथुनं भजतां प्रायेण सुकुमाराणाम् । प्रायोग्रहणमन्येषामपि रक्तहेत्वाहारसेविनां, तथा अचंक्रमणशीलिनां अत्यन्तमास्यादिसुखसेविनां अभिघातादनेकविधात् प्रहारविशेषात्, तथा अशुद्धेरशोधनात् मलानिर्हरणात् तेषामसृजि दूषिते तद्दूषणहेतुभिर्यथोक्तैर्दुष्टे सम्पन्ने ततो वातलैस्तिक्तोषणादिभिः सर्वरोगनिदानोक्तैस्तथाऽतिशयेन शीतलैर्वायुर्वृद्धोऽत्यन्तमुपचयं प्राप्य पश्चात् क्रुद्धः कुपितोऽतएव विमार्गगो विशेषेणोन्मार्गगामी तादृशेन तथाभूतेनैव असृजा दुष्टेन क्रुद्धेन रुद्धो विहतगतिः कृता अत्यन्तसंश्लेषात् तत एव शोणितं प्राक् पूर्व्वं प्रदूषयेत् । प्राग्ग्रहणादनन्तरं सर्वान् धातून् मांसादीन् प्रदूषयेत् । तच्च तथाविधं रक्तमत्युपचितं प्रदुष्टमाढ्यरोगं, खुड़ं वातबलासं वातशोणितमिति नामभिराचार्या आहुः । तच्च रोगस्वभावात् पूर्वं पादौ प्रधावति समुत्पद्यते, तौ च पादौ विशेषादतिशयेन

जानु-जङ्घोरु-कट्यंस-हस्त-पादाङ्ग-सन्धिषु ।
कण्डू-स्फुरण-निस्तोद-भेद-गौरव-सुप्तता: ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च ॥ ७ ॥
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति ॥ ८ ॥
त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते तत: ।
कालान्तरेण गम्भीरं सर्व्वान् धातूनभिद्रवत् ॥ ९ ॥
कण्ड्वादिसंयुतोत्ताने त्वक् ताम्र-श्याव-लोहिता ।
सायामा भृशदाहोषा गम्भीरेऽधिकपूर्वरुक् ॥ १० ॥
श्वयथुर्ग्रथित: पाकी वायु: सन्ध्यस्थि-मज्जसु ।
छिन्दन्निव चरत्यन्तर्वक्रीकुर्व्वंश्च वेगवान् ॥
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ॥ ११ ॥

---

यानयानाद्यै: प्रलम्बावुच्छूनौ सन्तौ प्रधावति । यानेन हस्त्यश्वादिना, यानं गमनम् । आदिग्रहणादन्यैरपि पादप्रलम्बितापादकैर्गजतुरगादि-सदृशै: । तस्येति । तस्य वात-शोणितस्य भविष्यतो भाविनो लक्षणं प्राग्रूपं कुष्ठसमं कुष्ठेन तुल्यम् । कुष्ठस्य यत् प्राग्रूपं अतिश्लक्ष्णखरस्पर्शेत्यादिना कुष्ठनिदानोक्तं तदस्यापि । न केवलमेतदेव यावत् तथा साद: श्लथाङ्गतेत्यादि च यावन्मुहुराविर्भवन्ति चेत्येतदपि भविष्यतो लक्षणम् ॥ २—७ ॥

पादयोरिति । तद्वातशोणितं पादयोर्मूलमास्थाय तत्र पूर्वं स्थितिं कृत्वा कदाचित् हस्तयोरपि प्रतिष्ठां कृत्वा आखोर्मूषिकस्य सम्बन्धि यथा विषं क्रुद्धं देहैकदेशे पूर्वं स्थितिं कृत्वाऽनन्तरं कृत्स्नं देहं विधावति विशेषेण प्रसरति ॥ ८ ॥

तच्च वातशोणितमुत्तान-गम्भीर-भेदेन द्विधा स्यादित्याह,—त्वगिति । त्वक् च मांसञ्च ते आश्रयो यस्य वातरक्तस्य तदेवम्भूतं तत् वातशोणितमुत्तानं पूर्वं प्राक् जायते, तत: पश्चात् कालान्तरेण पुन: सर्व्वान् धातून् अपरानपि मेद:प्रभृतीनभिद्रवद् गम्भीरं जायते ॥ ९ ॥

कण्ड्वादीति । उत्ताने वातशोणिते त्वक् कण्ड्वादिसंयुता भवति । कण्डू-स्फुरण-निस्तोदादियुक्ता, तथा ताम्र-श्याव-लोहिता व्यामिश्रवर्णा भवति, तथा सह आयामेन वर्त्तते इति सायामा, तथा भृशदाहोष्मा अत्यर्थं दाहरुग्युक्ता । गम्भीर इति । गम्भीरे वातशोणितेऽधिकपूर्वरुक् श्वयथु: स्यात् । अधिकं कृत्वा पूर्व्वा रुग् यस्य श्वयथो: असावधिकपूर्व्वरुक् । कुतोऽधिकपूर्वरुक् ? प्रकृतत्वादुत्तानवातशोणितात् । तथा श्वयथुर्ग्रथितस्तथा पाकी पाकयुक्त: स्यात्, तथा तस्मिन् गम्भीरे वायुर्वेगवान् बलवान्

वातेऽधिकेऽधिकं तत्र शूल-स्फुरण-तोदनम्।
शोफस्य रौक्ष्य-कृष्णत्व-श्यावता-वृद्धि-हानयः ॥ १२ ॥
धमन्यङ्गुलि-सन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्।
शीतद्वेषानुपशयौ स्तम्भ-वेपथु-सुप्तयः ॥ १३ ॥
रक्ते शोफोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते।
स्निग्धरुक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १४ ॥
पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदः सतृट्।
स्पर्शाक्षमत्वं रुग् रागः शोफपाको भृशोष्मता ॥ १५ ॥
कफे स्तैमित्य-गुरुता-सुप्ति-स्निग्धत्वशीतताः।
कण्डूर्मन्दा च रुग् द्वन्द्व-सर्व-लिङ्गञ्च सङ्करे ॥ १६ ॥

---

शरीरे सर्वतश्चरन् गच्छन् वक्रीकुर्वन् स्वसामर्थ्यात् तदेव शरीरं खञ्जं पङ्गुं वा करोति, तथा असौ सन्ध्यस्थिमज्जसु छिन्दन्निव अन्तश्चरति ॥ १० । ११ ॥

वात इति। तत्र वातशोणिते वाताधिकेऽधिकं शूल-स्फुरण-तोदनं भवति। शूलं सन्तता रुक्; तोदनन्तु व्युच्छिन्ना रुक् प्रतोदेनेव; तथा शोफस्य रौक्ष्य-कृष्णत्व-श्यावता-वृद्धि-हानयः स्युः, वातस्य चलस्वभावत्वात्। तथा धमनीनां सिराविशेषाणां अङ्गुलि-सन्धीनाञ्च सङ्कोचः स्यात्। तथाऽङ्गग्रहोऽङ्गान्यवबद्धानि च स्युः, तथा अतिरुक् शीतद्वेषानुपशयौ च भवतः। शीतद्वेषः शीतासहिष्णुत्वम्, तथा तेन च शीतेनोपशयः सुखानुबन्धो जायते। अनुपशयोऽसुखानुबन्धः। केनाऽनुपशयः? प्रकृतत्वात् शीतद्वेषे-णोष्णकामितया उष्णसेवनेन भवति। तथा स्तम्भवेपथु-सुप्तयः स्युः। स्तम्भ इव स्तम्भो देहस्तब्धता; वेपथुः कम्पम्; देहसुप्तिमङ्गानामचैतन्यम् ॥ १२ । १३ ॥

वातोत्तरस्य लक्षणमुक्त्वा रक्तोत्तरं वक्तुमाह,—रक्त इति। अधिक इत्यत्रानुवर्त्तते। रक्तेऽधिके शोफोऽतिरुक् तोद इति। वातेऽप्यधिके शोफः सरुक् भवति, किन्तु रक्ते-ऽधिकेऽतिरुक् तोदः शोफः स्यादिति विशेषः। तथा ताम्रो वर्णेन भवति, चिमिचिमा-मिवाऽऽचरति चिमिचिमायते, तथा स्निग्धरुक्षैरसौ शोफः शमं नैति न याति कण्डू-क्लेद-युक्तः सन् ॥ १४ ॥

पित्त इति। पित्ते पित्तानुविद्धे वातशोणिते विदाहादयः स्युः। कफ इति। कफानुविद्धे वातशोणिते स्तैमित्यादयः स्युः। द्वन्द्वेति। द्वन्द्वशब्देन वात-पित्त-कफ-रक्तानां द्वन्द्वानीति प्रायेण गृह्यन्ते। इह सर्व-शब्देन च वात-पित्त-कफ-रक्ता गृह्यन्ते। द्वन्द्वञ्च सर्वञ्च द्वन्द्वसर्वे तयोर्लिङ्गं लक्षणं द्वन्द्वसर्वलिङ्गम्। सङ्करे व्यामिश्रत्वे सति द्वन्द्वसर्वलिङ्गं वातशोणितं भवति। कस्य सङ्करे? प्रकृतत्वाद् वात-पित्त-कफ-रक्तानां द्वन्द्वसङ्करे द्वन्द्वलिङ्गं वातशोणितं भवति। सर्वसङ्करे सर्वेषां वातादीनां सङ्करे सर्वलिङ्गं वातशोणितं भवति ॥ १५ । १६ ॥

एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजं त्यजेत् स्रावि स्तब्धमर्बुदकारि च ॥ १७ ॥
रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः ।
निविश्यान्योऽन्यमावार्य्य वेदनाभिर्हरत्यसून् ॥ १८ ॥
वायौ पञ्चात्मके प्राणे रौक्ष्य-व्यायाम-लङ्घनैः ।
अत्याहाराऽभिघाताऽध्व-वेगोदीरधारणैः ॥ १९ ॥
कुपितश्चक्षुरादीनामुपघातं प्रवर्त्तयेत् ।
पीनसार्द्दित-तृट्-कास-श्वासादींश्चामयान् बहून् ॥ २०
उदानः क्षवथूद्गार-च्छर्दि-निद्राऽवधारणैः ।
गुरुभाराऽतिरुदित-हास्याद्यैर्विकृतो गदान् ॥ २१ ॥
कण्ठरोध-मनोभ्रंश-च्छर्द्यरोचक-पीनसान् ।
कुर्य्याच्च गलगण्डादींस्तांस्तान् जत्रूर्द्ध्व संश्रयान् ॥ २२ ॥
व्यानोऽतिगमन-ध्यान-क्रीड़ा-विषम-चेष्टितैः ।
विरोधि-रूक्ष-भी-चिन्ता-विषादाद्यैश्च दूषितः ॥ २३ ॥
पुंस्त्वोत्साह-बल-भ्रंश-शोक-चित्तोत्प्लव-ज्वरान् ।
सर्व्वाङ्गरोग-निस्तोद-रोमहर्षाऽङ्गसुप्तताः ॥
कुष्ठं विसर्पमन्यांश्च कुर्य्यात् सर्व्वाङ्गगान् गदान् ॥ २४ ॥

---

एकेति । एकदोषानुगं वातशोणितं नवं साध्यं साधयितुं शक्यम् । द्विदोषोद्भवं
याप्यं यापनार्हम् । त्रिदोषजं वातशोणितं त्यजेत् तदसाध्यत्वान्नोपक्रमेत्, तथा स्रावि
यद्वातरक्तमर्बुदकारि च तच्चाऽसाध्यम् ॥ १७ ॥
यद्वातरक्तमर्बुदकारि च तच्चाऽसाध्यम् ॥ १७ ॥ ... तत्र स्थितिं कृत्वा तथा रक्तमार्ग-
रक्तमार्गमिति । शाखासन्धिषु मारुतो निविश्य तत्र स्थितिं कृत्वा तथा रक्तमार्ग-
माशु शीघ्रं निहत्य अनन्तरमन्योऽन्यं आवार्य्य सक्ततत्वाद्द रक्तं कटं वातमावार्य्य वातोऽपि
रक्तम् । ततो वेदनाभिर्वातरक्तोचिताभिः पीड़ाभिरसून् प्राणान् हरति ॥ १८ ॥
वायाविति । पञ्चात्मके प्राणादिभेदात् पञ्चस्वभावे वाते सति प्राणो नाम वातो
रौक्ष्यादिभिः कुपितश्चक्षुरादीनामुपघातं प्रवर्त्तयेद्द विदधाति, तथा पीनसादींश्च बहून्
रोगान् कुर्य्यात् । आदि-शब्देन हिक्कादयो गृह्यन्ते ॥ १९ । २० ॥
उदान इति । उदानः क्षवथुविधारणादिभिर्विकृतः कुपितः कण्ठरोधादीन्
गदान् कुर्य्यात् । च-शब्दोऽत्र भिन्नक्रमः, गलगण्डादींश्च गदान् तांस्ताननेकविधान्
जत्रूर्द्ध्वं संश्रयान् कुर्य्यात् ॥ २१ । २२ ॥
व्यान इति । व्यानोऽतिगमनादिभिर्विरोध्यादिभिश्च दूषितो दुष्टिं प्राप्तः पुंस्त्वो-
त्साहादीन् भ्रंशादीन् अपरानपि सर्व्वाङ्गगान् गदान् कुर्य्यात् ॥ २३ । २४ ॥

समानो विषमाऽजीर्ण-शीत-सङ्कीर्ण-भोजनैः ।
करोत्यकाल-शयन-जागराद्यैश्च दूषितः ।
शूल-गुल्म ग्रहण्यादीन् पक्वामाशयजान् गदान् ॥ २५ ॥
अपानो रूक्ष-गुर्व्वन्न-वेगघाताऽतिवाहनैः ।
यानयानाऽऽसन-स्थान-चंक्रमैश्चातिसेवितैः ॥ २६ ॥
कुपितः कुरुते रोगान् कृच्छ्रान् पक्वाशयाश्रयान् ।
मूत्र-शुक्र-प्रदोषार्शो-गुदभ्रंशादिकान् बहून् ॥ २७ ॥
सर्वञ्च मारुतं सामं तन्द्रा-स्तैमित्य-गौरवैः ।
स्निग्धत्वारोचकालस्य-शैत्यशोफाग्निहानिभिः ॥ २८ ॥
कटु-रूक्षाभिलाषेण तद्विधोपशयेन च ।
युक्तं विद्यान्निरामन्तु तन्द्रादीनां विपर्य्ययात् ॥ २९ ॥
वायोरावरणं चातो बहुभेदं प्रवक्ष्यते ॥ ३० ॥
लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ।
कटकोष्णाऽम्ललवणैर्विदाहः शीतकामता ॥ ३१ ॥
शैत्य-गौरव-शूलानि कट्वाद्युपशयोऽधिकम् ।
लङ्घनाऽऽयास-रूक्षोष्ण-कामता च कफावृते ॥ ३२ ॥
रक्तावृते सदाहार्त्तिस्त्वङ्मांसान्तरजा भृशम् ।
भवेच्च रागी श्वयथुर्जायते मण्डलानि च ॥ ३३ ॥

---

समान इति । समानो विषमादिभोजनादिभिः अकालशयनादिभिश्च दूषितः शूलादीन् पक्वामाशयजान् गदान् करोति ॥ २५ ॥

अपान इति । अपानो रूक्षान्नादिभिरतिसेवितैर्वेगघातादिभिश्चातिसेवितैः कुपितः कृच्छ्रान् दारुणान् पक्वाशयाश्रयान् मूत्र-शुक्र-प्रदोषादीन् बहून् गदान् कुर्य्यात् ॥२६।२७॥

सर्व्वमिति । सर्व्वमपि मारुतं तन्द्रादिभिर्लक्षणैर्युतं सामं विद्यात् । तन्द्रादिलक्षणविपर्य्ययेण तु निरामं जानीयात् ॥ २८ । २९ ॥

वायोरिति । अतः सामादिलक्षणादनन्तरं वातस्यावरणं बहुभेदमनेकप्रकारं प्रकर्षेण वक्ष्यते । किल नाऽस्य आम एवावरणमपि तु अन्यदप्यस्तीति द्योतयति ॥३०॥

लिङ्गमिति । पित्तेनावृते भवति दाहादिकं लिङ्गम् ॥ ३१ ॥

शैत्येति । कफावृते वायौ शैत्यादिकं लिङ्गं लङ्घनादिकामता च ॥ ३२ ॥

रक्तावृत इति । रक्तावृते पवने अर्त्तिः पीड़ा, भृशं त्वङ्मांसान्तरजा दाहयुक्ता स्यात् । रागवांश्च श्वयथुः स्यात्, तथा मण्डलानि च जायन्ते ॥ ३३ ॥

मांसेन कठिनः शोफो विवर्णः पिटिकास्तथा।
हर्षः पिपीलिकानाञ्च सञ्चार इव जायते ॥ ३४ ॥
चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः।
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसाऽऽवृते ॥ ३५ ॥
स्पर्शमस्थ्यावृतेऽत्युष्णं पीड़नञ्चाभिनन्दति।
सूच्येव तुद्यतेऽत्यर्थमङ्गं सीदति शूल्यते ॥ ३६ ॥
मज्जावृते विनमनं जृम्भणं परिवेष्टनम्।
शूलञ्च पीड्यमानेन पाणिभ्यां लभते सुखम् ॥ ३७ ॥
शुक्रावृतेऽतिवेगो वा न वा निस्फलताऽपि वा ॥ ३८ ॥
भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले।
मूत्राप्रवृत्तिराध्मानं बस्तौ मूत्रावृते भवेत् ॥ ३९ ॥
विड़ावृते विबन्धोऽधः स्वस्थाने परिकृन्तति।
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः।
शकृत्पीड़ितमन्नेन दुःखं शुष्कं चिरोत्सृजत् ॥ ४० ॥

---

मांसेनेति। मांसेनावृते वायौ कठिनो विवर्णश्च शोफस्तथा पिटिकाः स्युः हर्षश्च,
तथा पिपीलिकानां गात्रेषु सञ्चार इव जायते ॥ ३४ ॥
चल इति। मेदसा आवृते वायौ अङ्गे शोफश्चलस्तथा स्निग्धस्तथा शीतो मृदुश्च
स्यात्, तथाऽरोचकः। स एवंविध आढ्यवात इति वेद्यः। स च कृच्छ्र कृच्छ्र-
साध्यः ॥ ३५ ॥
स्पर्शमिति। अस्थ्यावृते समीरणे स्पर्शमत्युष्णं पीड़नञ्चाभिनन्दति अभिलषति।
तथा अङ्गमतिशयेन सूच्येव तुद्यते, तथा सीदति शूल्यते च ॥ ३६ ॥
मज्जावृत इति। मज्जावृते समीरे विनमनादिकं स्यात्। विनमनमङ्गानाम्,
तथा पाणिभ्यां पीड्यमानेन च मर्दनादिना सुखं लभते ॥ ३७ ॥
शुक्रावृत इति। शुक्रावृते प्रभञ्जनेऽतिवेगो वा प्रसक्तत्वात् शुक्रस्य, न वा वेगो
निष्फलता तस्य स्यात् ॥ ३८ ॥
भुक्त इति। अन्नावृते वाते भुक्ते सति रुजा कुक्षौ भवति। जीर्णेऽन्ने सति रुजा
शाम्यति। मूत्राप्रवृत्तिरिति। मूत्रावृते वायौ मूत्रस्याप्रवृत्तिराध्मानञ्च बस्तेः स्यात् ॥ ३९ ॥
विड़ावृत इति। विड़ावृते मातरिश्वनि स्वे स्थानेऽपानाख्येऽधो विबन्धो जातविबन्ध-
त्वात् परिकृन्तति, स्नेहश्च आशु जरां याति। भुक्ते च सति नर आनह्यते आध्माप्यते।
शकृदन्नेन पीड़ितं चिरेण शुष्कं दुःखं कृच्छ्रेण सृजेत् ॥ ४० ॥

सर्व्वधात्वावृते वायौ श्रोणि-वङ्क्षण-पृष्ठ-रुक् *।
विलोमो मारुतः स्वस्थं हृदयं पीड्यतेऽति च ॥ ४१ ॥
भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राण आवृते।
विदग्धेऽन्ने च वमनमुदानेऽपि भ्रमादयः ॥ ४२ ॥
दाहोऽन्तरूर्जाभ्रंशश्च दाहो व्याने च सर्व्वगः।
क्लमोऽङ्गचेष्टासङ्गश्च ससन्तापः सवेदनः ॥ ४३ ॥
समान उष्मोपहतिरतिस्वेदोऽरतिः सतृट् ॥ ४४ ॥
दाहश्च स्यादपाने तु मले हारिद्रवर्णता।
रजोऽतिवृद्धिस्तापश्च योनि-मेहन-पायुषु ॥ ४५ ॥
श्लेष्मणा त्वावृते प्राणे सादस्तन्द्रारुचिर्वमिः।
ष्ठीवन-क्षवथूद्गार-निःश्वासोच्छ्वास-संग्रहः ॥ ४६ ॥
उदाने गुरुगात्रत्वमरुचिर्वाक्-स्वर-ग्रहः।
बल-वर्णप्रणाशश्च व्याने पर्वास्थि-वाग्ग्रहः ॥
गुरुताऽङ्गेषु सर्वेषु स्खलितञ्च गतौ भृशम् ॥ ४७ ॥
समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता ॥ ४८ ॥
अपाने सकफं मूत्र-शकृतः स्यात् प्रवर्त्तनम् ॥ ४९ ॥

---

सर्व्वधात्विति। सर्व्वधात्वावृतेऽनिले श्रोण्यादिरुक् स्यात्, तथा पवनो विगुणो भवति, हृदयञ्च व्याकुलं पीड्यते च ॥ ४१ ॥

भ्रम इति। प्राणे पित्तेनावृते भ्रमाद्याः स्युः। अन्ने च विदाहावस्थां प्राप्ते सति वमनं स्यात्। उदान इति। उदाने च पित्तेनावृते सति भ्रमाद्याः पूर्वोक्ताः स्युः, तथा अन्तर्दाह ऊर्ज्जाया बलस्य च विनाशः। व्याने च पित्तेनावृते सर्व्वशोऽन्तर्बहिश्च दाहः क्लमादयश्च स्युः ॥ ४२—४३ ॥

समान इति। समाने पित्तेनावृते उष्मणोऽग्ने रुपहतिरुपघातोऽतिस्वेदादयश्च स्युः ॥४४॥

दाहश्चेति। अपाने पुनः पित्तेनावृते सति मलेषु पुरीषादौ हारिद्रवर्णता स्यात्। योन्यादिषु रुजः पीड़ाया अतिवृद्धिस्तापश्च स्यात् ॥ ४५ ॥

श्लेष्मणेति। प्राणे च श्लेष्मावृते सादादयः स्युः ॥ ४६ ॥

उदान इति। उदाने च श्लेष्मावृते गुरुगात्रत्वादयः स्युः। व्यान इति। व्याने कफावृते पर्व्वास्थि-वाग्ग्रहस्तथा अङ्गेषु गौरवं गतौ च स्खलनं स्यात् ॥ ४७ ॥

समान इति। समाने कफावृतेऽतिशीताङ्गत्वमस्वेदो मन्दाग्नित्वञ्च स्यात् ॥ ४८ ॥

अपान इति। अपाने कफावृते मूत्रशकृतः प्रवर्त्तनं सकफं स्यात् ॥ ४९ ॥

---

* पार्श्व इति वा पाठः।

इति द्वाविंशतिविधं वायोरावरणं विदुः ॥ ५० ॥
प्राणादयस्तथाऽन्योऽन्यमावृखन्ति यथाक्रमम्।
सर्वेऽपि विंशतिविधं विद्यादावरणञ्च तत् ॥ ५१
निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः।
हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥ ५२ ॥
उदानेनाऽऽवृते प्राणे वर्णौजोबलसंक्षयः ॥ ५३ ॥
दिशाऽनया च विभजेत् सर्वमावरणं भिषक्।
स्थानान्यवेक्ष्य वातानां वृद्धिं हानिञ्च कर्मणाम् ॥ ५४ ॥

---

इतीति। इति अनेन प्रकारेण वायोरावरणं द्वाविंशतिप्रकारं जानन्ति तत्त्वज्ञा इति शेषः ॥ ५० ॥

प्राणादय इति। प्राणादयः पञ्च वायवोऽन्योऽन्यं परस्परमावृखन्ति यथाक्रमं यथासंख्यं, तथा तेनोक्तेन प्रकारेण। यथा पित्तकफाभ्यां प्राणादय आवृतास्तथा प्राणादयोऽन्योऽन्यमावृखन्तीति तथा-शब्दस्यार्थः। तत्र यथा प्राणेनोदानादयश्चत्वार आव्रियन्ते तथैव उदानादिभिरपि प्राण आव्रियते। एवमुदानेन व्यानादयस्त्रय आव्रियन्ते। व्यानादिभिश्च, त्रिभिरुदानः, तथा व्यानेन समानापानौ, तथा समानापानाभ्यां व्यानः, समानेनापानः, अपानेनापि समान आव्रियते इत्येक-द्वि-त्रादिक्रमेणापि एवमावरणं निरूप्यम्। एवञ्च सर्वेऽपि परस्परमावृखन्ति। तच्चावरणं विंशतिविधं विद्यात् ॥ ५१ ॥

अथ अस्यावरणस्य लिङ्गान्याह,—निःश्वासेति। प्राणेनोदाने आवृते निःश्वासोच्छ्वाससंरोधादयः स्युः ॥ ५२ ॥

उदानेनेति। उदानेन प्राण आवृते सति वर्णौजोबलसंक्षयः स्यात्। ननु च पित्तादिभिः प्राणादीनामावरणं युक्तम्। परस्परन्तु प्राणादीनां यदावरणं तदमूर्त्तत्वादनुपपन्नमिव मन्यामहे। ब्रूमः, द्वयोर्वातयोरन्योन्यमुपसर्पतोर्बलवता दुर्बलस्याभिघातेन गतिभङ्गात् स तेनावृतमार्ग इत्युच्यते। तस्माद् वातानामपि परस्परमावरणं युक्तमेव ॥ ५३ ॥

दिशेति। अनया दिशा दिङ्मात्रप्रदर्शनेन सर्वमावरणं विभजेत् भिषक्। इयञ्चात्र दिक्—उदानेनावृतेऽपाने च्छर्द्दि-श्वास-कासादयः स्युः, तथा अल्पोऽग्निरतिसारश्च। अपाने व्याने-उदानेऽपानेनावृते बस्त्याध्मानोदावर्त्त-गुल्माल्पाग्नि-परिकर्त्तिताः स्युः। व्याने समानेनावृते मूर्च्छा-तन्द्रा-प्रलापाङ्गसादनावृते विण्मूत्र-रेतसामतिप्रवृत्तिः। व्याने उदानेनावृते च श्यावास्यता स्तब्धताऽल्पाग्निता स्वेदश्चेष्टावङ्गत्रौजो-बलक्षयः। व्याने उदानेनावृते च श्यावास्यता ... एवमन्यदप्यावरणं भिषक् स्वमनीषया शास्त्रसंस्कारवत्या हानिर्निमीलनमिति। एवमन्यदप्यावरणं भिषक् ... कथं विभजेदित्यत्र युक्तिं दर्शयति,—विभजेत्। ग्रन्थकृता तु ग्रन्थगौरवभयान्नोक्तम्। कथं विभजेदित्यत्र युक्तिं दर्शयति,— ... वातानां प्राणादीनामस्थानानीत्यादि। स्थानानि पक्वाशयादीनि दोषभेदीयोक्तानि वातानां प्राणादीनाम-

प्राणादीनाञ्च पञ्चानां मिश्रमावरणं मिथः।
पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः॥ ५५॥
मिश्रैः पित्तादिभिस्तद्वत् प्राणादिभिरनेकधा।
तारतम्यविकल्पाच्च यात्यावृत्तिरसंख्यताम्॥ ५६॥
तां लक्षयेदवहितो यथास्वं लक्षणोदयात्।
शनैः शनैश्चोपशयाद् गूढ़ामपि मुहुर्मुहुः॥ ५७॥

---

वेत्य, तथा वृद्धिमावरकवायुसम्बन्धिनां वैकृतकर्म्मणामवेत्य ज्ञात्वा, तथा आवार्य्यमरुतां हानिमवेत्य ज्ञात्वा, सर्वमावरणमनुक्तमपि विभजेत्। यथा उत्साहोच्छ्वासचेष्टादीनि कर्म्माणि प्राणादिसम्बन्धीनि यदा हीनानि दृश्यन्ते उदानादीनां कर्म्माणि वाक्प्रवृत्त्यादीनि वृद्धानि तदेवं ज्ञातव्यम्। यथा—प्राण उदानादीनामेकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा आवृत इति। एवमुदानादिष्वपि प्राणादिभिरावरणं विभागीकार्य्यम्॥ ५४॥

अधुना अस्या आवृतेरसंख्येयत्वमपि दर्शयन्नाह,—प्राणादीनामिति। प्राणादीनां पञ्चानां वायूनां परस्परमावार्य्यावरकत्वेन स्थितानां मिश्रं द्वयेन त्रयेण चतुष्टयेन च मिथः परस्परमावरणमवेत्य याति आवृत्तिरसंख्यतामिति सम्बन्धः। तथा पित्तादिभिर्द्वादशभिर्धात्ववसानैर्मिश्राणां प्राणादीनां मिश्रं मिथ आवरणमवेत्य याति आवृत्तिरसंख्यतामिति योज्यम्। अत्र चैषामुदाहरणदिग् द्रष्टव्या। प्राणेन द्वादशविधेन पित्तादिभिर्म्मिश्रितत्वात् चतुर्णामुदानादीनामावरणं विभजेत्, तथा चतुर्भिरुदानादिभिः पित्तस्यावरणं प्रत्येकं द्वादशविधैर्द्वादशविधस्यैकस्य प्राणस्यावरणमिति। तैरित्यनेन प्राणादयः परामृश्यन्ते, तैः पित्ताद्यावरणमिश्रितैः प्राणादिभिः परस्परमावार्य्यावरकस्थितैः मिश्रमावरणमवेत्य याति आवृत्तिरसंख्यतामिति योज्यम्। चः समुच्चये॥ ५५॥

मिश्रैरिति। तैस्तुल्यं तद्वत्। यथा प्राणादीनां पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रमावरणं मिथस्तथा मिश्रैश्च तैः प्राणादिभिर्यथा मिश्रमावरणं मिथस्तथैव मिश्रैः संयुक्तैरेतैः पित्तादिभिर्न केवलैः प्राणादीनां मिश्रमावरणं मिथस्तथा मिश्रैः पित्तादिभिर्ये प्राणादयो मिश्रितास्तैस्तथाभूतैः प्राणादीनामावरणम्। एवमनेकधामिश्रणाभिर्बहुभिः योजनैर्याति आवृत्तिरसंख्यताम्। तथा तारतम्यविकल्पाच्च प्राणादीनामावृत्तिरसंख्यतां याति संख्यामतिक्रम्य गच्छति। तामावृत्तिं तेषां प्राणादीनां गूढ़ां दुर्लक्ष्यामप्यवहितः तज्ज्ञानाय तत्परः सन् लक्षयेज्जानीयात्। कथम्? यथास्वं लक्षणोदयात्। तेषां प्राणादीनां यथायथं लक्षणोदयादात्मीयाल्लिङ्गोद्भवात् शनैः शनैन झटित्येव तथा मुहुर्मुहुः क्षणे क्षणे लक्षयेन्न तु सकृदेव यथास्वं प्राणादीनां लक्षणोदयाज्जानीयादिति। न केवलं केवलाद् यथास्वं लक्षणोदयात् प्राणादीनामावृत्तिं लक्षयेत् यावदुपशयादप्येषां गूढ़ामप्यावृत्तिमन्तर्लक्षयेत्। तत्र प्राणादीनामेकेकेन अन्योऽन्यावरणात् विंशतिर्भेदा उक्ता एव भवन्ति। एवमेकेन द्वयोर्द्वाभ्याञ्च एकस्यावरणे निरूप्यमाणे त्रिंशो भेदाः। प्राणस्योदानव्यानाभ्यामन्योऽन्यावरणाद् द्वौ भेदौ। एवमुदानसमानाभ्यां व्यानापानाभ्यां उदाना-

विशेषाज्जीवितं प्राण उदानो बलमुच्यते।
स्यात्तयोः पीड़नाद्धानिरायुषश्च बलस्य च ॥ ५८ ॥
आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः।
प्रयत्नेनापि दुःसाध्या भवेयुर्वाऽनुपक्रमाः ॥ ५९ ॥
विद्रधि-प्लीह-हृद्रोग-गुल्माऽग्निसदनादयः।
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥ ६० ॥

इत्यष्टाङ्गहृदये निदानस्थाने षोड़शोऽध्यायः ॥ १६ ॥

इति श्रीसिंहगुप्तसूनु-वाग्भट-विरचितायामष्टाङ्गहृदयसंहितायां
तृतीयं निदानस्थानम् ॥

---

पानाभ्याञ्च सह अन्योऽन्यावरणपराणि पञ्च हिक्कादीनि प्राणस्य द्वादशभेदा भवन्ति।
उदानस्य षट्, व्यानस्य द्वौ, एवं व्यानस्योदानादिभिस्त्रिभिरन्योन्यावरणेन षट्, उदानस्य
द्वौ, प्राणस्योदानादिभिश्चतुर्भिर्द्वौ वाऽन्योन्यावरणाद्द्वौ भवतः। तथा प्राणादीनां
पित्तादिभिर्द्वादशभिरावृतत्वाद् द्वादशप्रकाराः। अन्योऽन्यमिश्रणाच्च चत्वारि शतानि
विंशत्युत्तराणि भवन्ति। एवमन्यदप्यावरणं निरूप्यम् ॥ ५६। ५७ ॥
विशेषादिति। प्राणादयः सर्व एव वाता जीवितं विशेषेण तु प्राणाख्यो वायु-
र्जीवितमुच्यते, तथा उदानाख्यो वायुर्विशेषेण बलमुच्यते। यतश्चैवं अतस्तयोः प्राणो-
दानयोः पीड़नात् क्षोभणात् यथाक्रममायुषो बलस्य च हानिर्भवेत्। तस्मादेतौ प्राणो-
दानाख्यौ पवनौ आहारादिना यत्नेन भिषजा रक्ष्यौ। तथा च वक्ष्यति—"प्राणो
रक्ष्यश्चतुर्भ्योऽपि तत् स्थितौ देहसंस्थितिः" इति ॥ ५८ ॥
आवृतेति। वातादीनामन्यतमेनावृता इत्येवमज्ञाता असम्यग्विनिश्चिता वर्षोषिताः
प्रयत्नेनापि दुःसाध्याः कृच्छ्रसाध्या भवेयुः। ज्ञाता वा पित्तादिना आवृता यथावत्
सम्यङ् निश्चयं गता वत्सरं स्थिताः। वा-शब्द एवार्थः, अनुपक्रमा एव भवेयुः। ततो
वाता आवृताः प्रयत्नेन रक्षणीयाः ॥ ५९ ॥
विद्रधीति। तेषां वायूनामन्यतमेनावृतानां उपेक्षणादचिकित्सनात् विद्रध्यादय
उपद्रवा जायन्ते। तस्मात् तदुपक्रमे यतितव्यमिति ॥ ६० ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्ग-सुन्दरा-
ख्यायां निदानस्थाने वातशोणितनिदानं नाम षोड़शोऽध्यायः ॥ १६ ॥

---